# अष्टाध्या...

॥ श्रीः ॥

(महर्षिपाणिनिप्रोक्ताष्टध्यायीमधिकृत्य विरा... टिका




ग्रन्थकारः, सम्पादकश्च

**डॉ. सुरेश्वर झा**

कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयः, दरभङ्गा (बिहारः)

।। श्रीः ।।

# अष्टाध्यायीसूत्रार्थप्रकाशिका

(महर्षिपाणिनिप्रणीताष्टाध्यायीमधिकृत्य विरचितो वृत्तिग्रन्थः)

ग्रन्थकारः,सम्पादकश्च

**डॉ० सुरेश्वर झा**

**कामेश्वरसिंहदरभङ्गा-संस्कृतविश्वविद्यालयः**
**दरभङ्गा (बिहारः)**

।। श्रीः ।।

# अष्टाध्यायीसूत्रार्थप्रकाशिका

(महर्षिपाणिनिप्रणीताष्टाध्यायीमधिकृत्य विरचितो वृत्तिग्रन्थः)

प्रवर्त्तकः

**आचार्य किशोर कुणालः**

कुलपतिः

कामेश्वरसिंहदरभङ्गा-संस्कृतविश्वविद्यालयः

दरभङ्गा (विहारः)

ग्रन्थकारः, सम्पादकश्च

**डॉ० सुरेश्वर झा**

व्याकरणविभागाध्यक्षः

कामेश्वरसिंहदरभङ्गा-संस्कृतविश्वविद्यालयः

दरभङ्गा (विहारः)

संयोजकः

**डा० कृष्णानन्द झा**

भूतपूर्व व्याकरणविभागाध्यक्षः

कामेश्वरसिंहदरभङ्गा-संस्कृतविश्वविद्यालयः

दरभङ्गा (विहारः)

**कामेश्वरसिंहदरभङ्गा-संस्कृतविश्वविद्यालयः**

**दरभङ्गा (विहारः)**

( विश्वविद्यालयानुदानायोगप्रदत्तेन वित्तेन निर्मितः, प्रकाशितश्चायं ग्रन्थः)


प्रारूपसंशोधनम् (प्रूफ-रीडिंग)

**डॉ० ब्रह्मानन्द चतुर्वेदी**

प्रधानाचार्यः

सेठ राम निरंजन दास मुरारका संस्कृतमहाविद्यालयः

चौक पटना सिटी



प्रकाशकः

**स्नातकोत्तर-व्याकरण-विभागः**

**कामेश्वरसिंहदरभङ्गा-संस्कृतविश्वविद्यालयः**

**कामेश्वरनगरम्**

**दरभङ्गा - ८४६००८ (बिहारः)**





प्रथमसंस्करणम् - २००४ ई०

मुद्रितपुस्तकानां संख्या - ५०० प्रति

मूल्यम् - २५० रुप्यकाणि

मुद्रकः

शुभम् प्रींटर्स १/१५०, अस्सी,

वाराणसी

(उत्तरप्रदेशः)

विश्वविद्यालय–संस्थापक :



महाराजाधिराजः डॉ० सर कामेश्वरसिंहः
मिथिलादेशे राज्यकालः– १९२९–१९६२ ई०

# प्रास्ताविकम्

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।।
(पा.शि. ५७)

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम्।।
(नन्दिकेश्वरकृतकाशिका -१)

अथेयं प्रकाशमानीता 'अष्टाध्यायीसूत्रार्थप्रकाशिका' विपश्चिदपश्चिमानां पाणिनीयशब्दानुशासनानुशीलनपराणां पुरस्तात् प्रस्तूयते। सुविदितमेतद् विदुषां यद् यथा भाषाणां सर्वासां जननी सुरभारती प्रसिद्ध्यति, तथैव वैदिकलौकिकोभयविध-संस्कृतशब्दसाधुत्वस्य महता लाघवेन, वैज्ञानिकपद्धत्या च बोधकं पाणिनीयं व्याकरणं समेषां व्याकरणानां शिरोमणित्वं भजते। अस्य च मूलम् 'अष्टाध्यायी' ग्रन्थः। पाणिनीयव्याकरणस्यास्य वास्तविकं स्वरूपं च अष्टाध्यायीसूत्रमेवेति सूत्रमेव व्याकरणम्, वार्त्तिक-महाभाष्य-वृत्त्यादिकन्तु सूत्रलब्धार्थबोधकं व्याख्यानमात्रमिति पतञ्जलिना महाभाष्ये निर्णीतम्-

''सूत्रत एव हि शब्दान् प्रतिपद्यन्ते। आतश्च सूत्रत एव, यो ह्युत्सूत्रं कथयेन्नादो गृह्येत।'' (महाभा.,पस्पशा.)

महाभाष्यमिदं व्याकुर्वता नागेशेन उद्योते उक्तम् -

''एतन्मूलकमेव पठ्यते- सूत्रेष्वेव हि
तत्सर्वं, यद् वृत्तौ यच्च वार्त्तिके।''
(म.भा., पस्पशा.)

किंचात्र सूत्रस्वरूपे पाणिनीयव्याकरणे, महता तपोबलेन मनोयोगेन च महर्षिपाणिनिना विनिर्मिते सूत्रस्वरूपभेदः, सूत्रक्रमभेदो वा शब्दसाधुत्वसिद्धये नोचितः। तत्त्वमिदं पतञ्जलिना महाभाष्ये बहुधा विवेचितम् -

''प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्।'' (महाभा० १.१.१)

''इको यणचि'' (६.१.७६) इति सूत्रेऽपि महाभाष्ये -
''सामर्थ्ययोगान्नहि किञ्चिदस्मिन्, पश्यामि शास्त्रे यदनर्थकं स्यात्''।

।। श्रीः ।।

# आमुखम्

शब्दः प्रकाशरूपः, संस्कृतशब्दः सुसंस्कृतं ज्योतिः।
सम्यग्ज्ञातः शास्त्रान्वितः प्रयुक्तश्च सुष्ठु शन्तनुते। ।१।।

कल्पतरोरिव संस्कृतशब्दादित्थं सुसाधिताल्लोकः ।
अधिकारी सकलार्थान्, स्वर्गे लोके च साधु सँल्लभते ।।२।।

शब्दः सुसंस्कृतोऽपि भाषाबद्धः प्रकाशयत्यर्थान् ।
भाषा च व्याकरणात् परिष्कृताऽर्थप्रकाशमातनुते । ।३।।

भाषाणां सर्वासां जननी सिद्धा यथा विबुधवाणी ।
पाणिन्युक्तं शास्त्रं, व्याकरणानां तथोपजीव्यं स्यात्। ।४।।

ज्ञानेश्वरान्महेशात् पाणिनिना सत्तपस्यया लब्धः ।
अक्षरवेदः, प्रत्याहाराद्यैः शब्दशास्त्रमातनुते ।।५।।

अष्टाध्यायीसूत्रं व्याकरणस्य प्रकाशते मूलम् ।
वार्त्तिकभाष्योपेतं काशिकया च प्रकाशितं वृत्त्या ।।६।।

उपबृंहितं परस्तान् न्यासाद्यैरपि सविस्तरं ह्येतत् ।
संस्कृतभाषाजालं साङ्गोपाङ्गं प्रकाशयत्यखिलम् ।।७।।

इदमेव पाणिनीयं व्याकरणं वस्तुतो विभातीह ।
वेदाङ्गेषु प्रमुखं श्रुतिमूलत्वात् प्रशंसितं प्राज्ञैः ।।८।।

अत्र प्रवेशमिच्छन् सच्छिष्यः सद्गुरोर्नियतसमयम् ।
वर्णविचारं सन्धिं ज्ञात्वा क्रमशः पठेत् सदाचारी ।।९।।

अनया सत्पद्धत्याऽधीत्य सुधीरा बभूवुरिह सिद्धाः ।
शब्दब्रह्मणि सम्यग् भर्तृहरिप्रभृतयो जगद्विदिताः ।।१०।।

गच्छति काले केचित् सुधियोऽधीत्यानयैव पद्धत्या ।
पद्धतिमेतद्भिन्नां पाणिनिशास्त्रे व्यधुर्धिया नव्याम् ।।११।।

सन्धिसुबन्तादीनां लौकिकसंस्कृतपदेषु बोधाय ।
प्रसङ्गतः सूत्राणां क्रमभेदेन प्रवर्तनं चक्रुः ॥१२॥
साधुत्वं बोधयितुं वैदिकशब्दे पुरातनीमेव ।
पद्धितिमङ्गीचक्रुः समानदृष्ट्या तथार्थसिद्धान्तान् ॥१३॥
नव्यन्यायदिशाऽपि प्रयोगसूत्रार्थबोधने जटिलाम् ।
शैलीमङ्गीचक्रुस्तया निगीर्णं च मौलिकं तत्त्वम् ॥१४॥
संस्थाभिः पाठ्यक्रमपरीक्षणादौ दिशाद्वयं दृष्ट्वा ।
प्राचीननव्यभेदात्पाणिनिशास्त्रे द्विधा कृतो भागः ॥१५॥
कामेश्वरसंस्कृतगीर्विश्वसुविद्यालयस्य विद्वांसः ।
सूत्रक्रमेण पाणिनिशास्त्रज्ञानं विधातुमानद्धाः ॥१६॥
कुलपतिराचार्यश्रीकुणालपादोऽत्र धन्यवादार्हः ।
यस्य प्रेरणयाऽर्थसाहाय्येनाप्यनुष्ठितं कार्यम् ॥१७॥
अध्यक्षो व्याकरणे झोपाख्यः श्रीसुरेश्वराचार्यः ।
अष्टाध्यायीसूत्रार्थानां वृत्तिं प्रकाशिकां कृतवान् ॥१८॥
कुलपतिना संयोजनकार्ये चाहं नियोजितः समये ।
कार्यस्यास्य समाप्तौ प्रयासशीलोऽभवं यथाशक्ति ॥१९॥
अतिलाघवयुतशैल्या पार्श्वे सूत्रस्य चानुवृत्तानाम् ।
निर्देशोऽत्र पदानां विहितः स्थानेषु वृत्तिकारेण ॥२०॥
पूर्वैरपि विद्वद्भिर्विहितो यत्नोऽत्र पद्धतौ भूयान् ।
किन्त्वत्र सद्विशेषः कश्चिद् गम्योऽस्ति साधु विज्ञानाम् ॥२१॥

विदुषाँव्वशँव्वदः
कृष्णानन्द झाः
भूतपूर्वव्याकरणविभागाध्यक्षः
कामेश्वरसिंहदरभङ्गा-संस्कृतविश्वविद्यालयः
दरभङ्गा

।। श्रीः ।।

# भूमिका

संस्कृतवाङ्मये व्याकरणशास्त्रस्य महत्त्वं सर्वातिशायि वर्तते इति नाविदितं विदुषाम्। सर्वशास्त्रेषु प्रवेशाय द्वारभूतं व्याकरणशास्त्रं षट्स्वङ्गेषु मुखस्थानत्वं भजते। तथा ह्युक्तम्- 'मुखं व्याकरणं स्मृतम्' इति (पाणिनीयशिक्षा-४२)। महाभाष्यकारेणापि महाभाष्यस्य पस्पशाह्निके व्याकरणाध्ययनस्य प्रयोजनविषये विस्तृतं विवेचनं विधाय स्वाभिप्रायः निष्कर्षतः एवमुक्तम्- 'षट्स्वङ्गेषु व्याकरणं प्रधानम् , प्रधाने च कृतो यत्नः फलवान् भवति' इति, 'तस्मादध्येयं व्याकरणम्' इति च। व्याकरणशास्त्रस्याध्ययनान्तरमेव शास्त्रान्तरे प्रवेशस्य अधिकारो लभ्यते।

**तथा ह्युक्तम् -**

यो वेद वेदवदनं सदनं हि सम्यग्
ब्राह्म्याः स वेदमपि वेद किमन्यशास्त्रम्।
यस्मादतः प्रथममेतदधीत्य धीमान्
शास्त्रान्तरस्य भवति श्रवणेऽधिकारी।।

**किं च -**

यद्यपि बहु नाधीषे तथापि पठ पुत्र ! व्याकरणम्।
स्वजनः श्वजनो मा भूत् सकलं शकलं सकृच्छकृत् ।।

**अपरं च -**

शब्दशास्त्रमनधीत्य यः पुमान्
वक्तुमिच्छति वचः सभान्तरे।
बन्धुमिच्छति वने मदोत्कटं
हस्तिनं कमलनालतन्तुना ।।

शब्दस्य वास्तविकार्थबोधाय व्याकरणशास्त्रस्याध्ययनमावश्यकं भवति। व्याकरणशास्त्रेणैव शब्दानां साधुत्वासाधुत्वज्ञानं भवति। यथा कर्त्तव्याकर्त्तव्ययोः ज्ञानाय स्मृतिग्रन्थाः भवन्ति तथैव शब्दानां साधुत्वासाधुत्वज्ञानाय व्याकरणशास्त्रम्। अतः वाक्यपदीयकारेण भर्तृहरिणा स्मृतिग्रन्थरूपेण व्याकरणशास्त्रमनुवर्णितम् -

साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।
अविच्छेदेन शब्दानामिदं स्मृतिनिबन्धनम्।।
(वाक्यपदीयम् -१/१४२)

अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते।।
(वाक्यपदीयम् -१/१३)

वाल्मीकिरामायणेऽपि व्याकरणाध्ययनस्य परम्परा निम्नलिखितश्लोकेन सूचिता भवति-

नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।
बहु व्याहरताऽनेन न किञ्चिदपभाषितम्।।
(वा० रामायणम्-किष्किन्धाकाण्डम्-३/२६)

**यद्यपि -**

बहुभिराचार्यैः अनेकानि व्याकरणानि प्रणीतानि । व्याकरणकारान्, व्याकरणानि चाधिकृत्य निम्नलिखितश्लोकद्वयमतीव प्रसिद्धमस्ति-

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः।।
ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्।।

स्वयं महर्षिपाणिनिनाऽपि अष्टाध्याय्यां नामोल्लेखपूर्वकं निम्नलिखितव्याकरणशास्त्रकर्तॄणां मतान्युद्धृतानि -

१. आपिशलिः -
वा सुप्यापिशलेः (६.१.९१)
इत्येकस्मिन् सूत्रे।

२. काश्यपः
१. तृषिमृषिकृषेः काश्यपस्य (१.२.२५)
२. नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्(८.४.६७)
इति सूत्रद्वये।

३. गार्ग्यः -
(१) अड् गार्ग्यगालवयोः (७.३.९९),
(२) ओतो गार्ग्यस्य (८.३.२०),
(३) नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् (८.४.६७)
इति सूत्रत्रये।

४. गालवः -
(१) इको ह्रस्वोऽङ्यो गालवस्य (६.३.६१),
(२) तृतीयादिषु भाषितपुंस्कस्य पुंवद् गालवस्य (७.१.७४)
(३) अड् गार्ग्यगालवयोः (७.३.९९)
(४) नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् (८.४.६७)
इति सूत्रचतुष्टये।

५. चाक्रवर्मणः -
ई३ चाक्रवर्मणस्य (६.१.१२८)
इत्येकस्मिन् सूत्रे।

६. भारद्वाजः -
ऋतो भारद्वाजस्य (७.२.६३)
इत्येकस्मिन् सूत्रे।

७. शाकटायनः -
(१) लङः शाकटायनस्यैव (३.४.१११)।
(२) व्योर्लघुप्रयत्नतरः शाकटायनस्य (८.३.१८)।
(३) त्रिप्रभृतिषु शाकटायनस्य (८.४.५०)
इति सूत्रत्रये।

८. शाकल्यः -
(१) सम्बुद्धौ शाकल्यस्येतावनार्षे (१.१.१६)
(२) इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च (६.१.१२७)
(३) लोपः शाकल्यस्य (८.३.१९)
(४) सर्वत्र शाकल्यस्य (८.४.५१)
इति सूत्रचतुष्टये।

९. सेनकः -
गिरेश्च सेनकस्य (५.४.११२)
इत्येकस्मिन् सूत्रे।

१०. स्फोटायनः -
अवङ् स्फोटायनस्य (६.१.१२१)
इत्येकस्मिन् सूत्रे।

**तथापि -**

कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः।
द्वापरे शङ्खलिखिताः, कलौ पाराशराः स्मृताः।।
(पाराशरस्मृतिः १-२४)

इति व्यवस्थावत् शब्दसाधुत्वासाधुत्वव्यवस्थापि युगानुसारिणी भवति। अद्यत्वे तु पाणिनीयव्याकरणानुसारेणैव शब्दानां साधुत्वासाधुत्वव्यवस्था सर्वमान्याऽस्ति।
तदुक्तं पराशरोपपुराणे -

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन।।

'शताच्च ठन्यतावशते' (५.१.२१) इति सूत्रे कैयटेनाऽपि 'शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः' इति भाष्यवार्तिकमुपादायोक्तम् 'एवं हि सति शतं गावः परिमाणमस्य गोसङ्घस्य - शतको गोसङ्घः इत्यत्रापि प्रतिषेधो भवति। 'आपिशलकाशकृत्स्नयोस्त्वग्रन्थे' इति वचनादन्यत्र प्रतिषेधाभावः। नियतकालाश्च स्मृतयो व्यवस्थाहेतवः इति मुनित्रयमतेनाद्यत्वे साध्वसाधुप्रविभागः' इति।

एवमेव 'सर्वादीनि सर्वनामानि'(१.१.२७) इति सूत्रे शब्दकौस्तुभे भट्टोजिदीक्षितेनाप्युक्तम्– 'मुनित्रयमतेनेदानीं साध्वसाधुविभागस्तस्यैवेदानींतनशिष्टैर्वेदाङ्गतया परिगृहीतत्वात्। दृश्यन्ते हि नियतकालाः स्मृतयः। यथा कलौ पाराशरस्मृतिरित्यादीति 'शताच्च ठन्यतावशते'(५.१.२१) इति सूत्रे सर्वैकवाक्यतया सिद्धान्तितत्वात्।' इति।

किं च पाणिनीयव्याकरणेनैव साधुत्वासाधुत्वनिर्णयः कर्त्तव्यः इति महर्षिपतञ्जलिप्रणीतमहाभाष्येणापि ध्वनितम्। तथाहि पस्पशाह्निके महाभाष्ये उक्तम्–

'कथन्तर्हीमे शब्दाः प्रतिपत्तव्याः। किंचित् सामान्यविशेषवल्लक्षणं प्रवर्त्त्यम्। येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्। कश्चिदुत्सर्गः कर्त्तव्यः। कश्चिदपवादः' इति। अद्यत्वे व्याकरणान्तरस्य साधुत्वनिर्णायकत्वे शब्दानां प्रतिपत्तये यत्नस्य कृतत्वेन भाष्योक्त-प्रश्नाख्यानयोरसङ्गतिर्दुर्वारैव स्यात्। अतः शब्दसाधुत्वासाधुत्वज्ञानाय अद्यत्वे पाणिनीयव्याकरणमेव सर्वैरैव विद्वद्भिः निर्विवादम् समादृतमस्ति।

पाणिनीयव्याकरणं 'त्रिमुनि व्याकरणम्' इति कथ्यते। मुनित्रये महर्षिपाणिनिः सूत्रकाररूपेण, महर्षिकात्यायनः वार्तिककाररूपेण, महर्षिपतञ्जलिश्च महाभाष्यकाररूपेण प्रसिद्धाः सन्ति। तत्र महर्षिकात्यायनस्य वार्तिकस्य, महर्षि- पतञ्जलेः महाभाष्यस्य च मूलं महर्षिपाणिनेः सूत्रमस्तीति व्याकरणमिदं पाणिनीयव्याकरणनाम्ना विश्रुतमस्ति।

महर्षिपाणिनिना विरचिते सूत्रग्रन्थे अष्टौ अध्यायाः सन्तीति ग्रन्थस्यास्य नाम 'अष्टाध्यायी' इति प्रसिद्धमस्ति। महर्षिपतञ्जलिनापि 'पृषोदरादीनि यथोपदिष्टम्' (६.३.१०८) इति सूत्रस्थमहाभाष्ये महर्षिपाणिनिविरचितस्य सूत्रग्रन्थस्य नाम 'अष्टाध्यायी' इत्यभिहितम्। एवं हि तत्रत्यं भाष्यम्–

'यदि तर्हि शिष्टाः शब्देषु प्रमाणम्, किमष्टाध्याय्या क्रियते? शिष्टपरिज्ञानार्था अष्टाध्यायी' इति।

लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः।
(ब्रह्मसूत्रम् १:१:१, भामती) इति।

अल्पाक्षरमसन्दिग्धं
सारवद् विश्वतोमुखम्।
अस्तोभमनवद्यं च
सूत्रं सूत्रविदो विदुः ।।
(विष्णुधर्मोत्तरपुराणम्- ५.५.१)

इत्याद्यनेकाभियुक्तोक्तलक्षणानुसारेण सूत्रे सारभूतानामर्थानां बोधनाय स्वल्पाक्षराणि पदानि भवन्ति।

अतः सूत्राणामर्थबोधाय वृत्तिग्रन्थः आवश्यको भवति। 'सूत्रार्थप्रधानो ग्रन्थो वृत्तिः' इति प्रत्याहारप्रकरणस्थपदमञ्जर्यनुसारेण प्रधानतया सूत्राणामर्थबोधनाय यो ग्रन्थो विरच्यते स वृत्तिग्रन्थः कथ्यते - यथा काशिकावृत्तिः।

महाभाष्यकारेणापि सूत्राणां व्याख्यानाय वृत्तिग्रन्थानाम् आवश्यकताविषये एवमुक्तम् महाभाष्यस्य पस्पशाह्निके-

'न केवलानि चर्चापदानि व्याख्यानम्- वृद्धिः, आत्, ऐच् इति। किं तर्हि ? उदाहरणम्,. प्रत्युदाहरणम्, वाक्याध्याहारः - इत्येतत्समुदितं व्याख्यानं भवति।' इति।

महाभाष्यकारानुसारेण सूत्राणामर्थबोधः केवलं पदच्छेदेनैव न भवति, अपि तु उदाहरणेन, प्रत्युदाहरणेन, सूत्रान्तरे दृष्टानां पदानाम्, समुचितक्रियायाश्च तत्रानयनेन भवति।

महाभाष्यकारस्य प्रदर्शितवचनमनुसृत्य अष्टाध्याय्याः तादृश्याः वृत्त्या आवश्यकता अनुभूता यस्यां सूत्रेण सह उदाहरणं, प्रत्युदाहरणं, वाक्याध्याहारः इत्येत्सर्वं भवेदिति धिया महर्षिपाणिनिप्रणीताम् अष्टाध्यायीमधिकृत्य 'अष्टाध्यायीसूत्रार्थप्रकाशिका' इतिनाम्ना वृत्तिग्रन्थो विरचितो मया। अस्मिन् वृत्तिग्रन्थे मध्यभागे मूलसूत्रम्, तस्या वृत्तिः, उदाहरणं च विद्यते, सूत्रार्थबोधनाय अपेक्षामनुसृत्य सूत्रस्थपदानाम्, उदाहरणानां च विवरणमपि प्रस्तुतमस्ति। यत्र प्रत्युदाहरणेन सूत्रस्यार्थः स्फुटतरः भवति, तत्र प्रत्युदाहरणमपि प्रदर्शितम्। सहैव सूत्रार्थकरणे सहायकानाम् , प्रसिद्धप्रयोगसाधकानां च वार्तिकानामपि समावेशः कृतो विद्यते।

दक्षिणभागे मूलसूत्रात् कस्य कस्य पदस्य अनुवृत्तिर्भवति, इत्यस्य निर्देशो विद्यते। अनुवृत्तेरवधिश्च तत्र सूत्रसंख्यारूपेण निर्दिष्टोऽस्ति।

वामभागे अनुवृत्तानां पदानां निर्देशेन सह यस्मात् सूत्रात् तानि पदानि अनुवर्त्यन्ते तेषां सूत्रसंख्याऽपि निर्दिष्टा विद्यते।

दीर्घावधिकाधिकृतपदानां सर्वत्र निर्देशो न विहितः, यथा ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च, धातोः, तद्धिताः, असिद्धवदत्राभात्, पूर्वत्रासिद्धम्- इत्यादीनाम्, सम्बद्धप्रकरणवशादेव एषामनुवृत्तानां पदानां ज्ञानं सुलभं भवतीति मत्वा।

काशिकादिग्रन्थेषु कतिपयानि वार्तिकानि, गणसूत्राणि च मूलसूत्ररूपेण प्रक्षिप्तानि सन्ति, प्रकृतग्रन्थे तेषां समावेशः वार्तिकरूपेण, गणपाठस्य सूत्ररूपेण वा कृतोऽस्ति।

काशिकावृत्तेः यानि सूत्राणि अस्याम् अष्टाध्यायीसूत्रार्थप्रकाशिकायां मूलसूत्ररूपेण न समावेशितानि तानि निम्नलिखितानि सन्ति –

| | सूत्राणि | काशिकावृत्तौ निर्दिष्टा सूत्रसंख्या |
|---|---|---|
| १. | वृद्धश्च पूजायाम् | ४.१.१६६ |
| २. | यूनश्च कुत्सायाम् | ४.१.१६७ |
| ३. | कौपिञ्जल-हस्तिपदादण् | ४.३.१३२ |
| ४. | आथर्वणिकस्येक लोपश्च | ४.३.१३३ |
| ५. | अचि शीर्षः | ६.१.६२ |
| ६. | नित्यमाम्रेडिते डाचि | ६.१.१०० |
| ७. | अडभ्यासव्यवायेऽपि | ६.१.१३६ |
| ८. | कारस्करो वृक्षः | ६.१.१५६ |
| ९. | आत्मनश्च पूरणे | ६.३.६ |
| १०. | एति संज्ञायामगात् | ८.३.९९ |
| ११. | नक्षत्राद्वा | ८.३.१०० |

एषु 'कारस्करो वृक्षः'(६.१.१५६) इति वचनं पारस्करादिगणे (सूत्रसंख्या-६.१.१५३) पठितं विद्यते, 'एति संज्ञायामगात्' (८.३.९९) 'नक्षत्राद्वा' (८.३.१००) इति वचनद्वयं च सुषामादिगणे (सूत्रसंख्या-८.३९८) पठितं विद्यते। अन्यानि च वार्तिककारीयाणि वचनानि सन्तीति तत्तत्सूत्राणां प्रदीपेन, पदमञ्जर्या, महाभाष्येण, अन्यैश्च प्रामाणिकैः ग्रन्थैः स्पष्टीभवति। एतद्विषये विस्तृतं विवेचनं श्रीनारायणमिश्रमहाशयैः सम्पादितायाः काशिकावृत्तेः (श्री काशी संस्कृत ग्रन्थमाला-३७) प्रस्तावनायां द्रष्टुं शक्यते।

अष्टाध्यायीसूत्रार्थप्रकाशिकायां सूत्रार्थप्रकाशनेऽपेक्षितानां काशिका-पदमञ्जरी-न्यासादिग्रन्थेषूपलब्धानां वचनानामपि यथास्थलं संग्रहः कृतोऽस्ति, क्वचित् तत्तद्ग्रन्थानां नामोल्लेखपुरस्सरम्, क्वचिच्च तत्तद्ग्रन्थानामुल्लेखं विनापि।

अस्या वृत्त्याः साहाय्येन अल्पेन कालेन अष्टाध्याय्याः आदितः अन्तं यावद् सरलतया अर्थज्ञानपूर्वकं गन्तुं शक्ष्यन्ति जिज्ञासवः, इति मे दृढो विश्वासः। किं च अस्य ग्रन्थस्य साहाय्येन सूत्रस्यार्थः कथं सम्पन्नो भवतीति विषयस्यापि ज्ञानं सुलभं भविष्यति, तत्र तत्र अनुवृत्तानां पदानाम्, उदाहरणानां, यथापेक्षं प्रत्युदाहरणानां च निर्देशेन, सूत्रस्थदुर्बोधपदानां, यथापेक्षम् उदाहरणानां विवरणेन च।

एतादृशग्रन्थस्य प्रणयने प्रेरणा कामेश्वरसिंहदरभङ्गा-संस्कृतविश्वविद्यालयस्य कुलपतिपदे विराजमानानां भारतीयसंस्कृतेः, संस्कृतस्य च संरक्षणे, संवर्धने च तत्पराणां, भारतीयाऽऽरक्षिसेवातः स्वेच्छया सेवानिवृत्तिप्राप्तानाम् आचार्यकिशोरकुणाल-महोदयानामासीत्। एते महानुभावाः सूत्राणामार्थबोधनाय अपेक्षितपद्धतिविषये समये-समये स्वकीयविचारप्रदानेन अस्य ग्रन्थस्य निर्माणे महान्तमुपकारं कृतवन्तः, किं च ग्रन्थस्य प्रकाशनकार्येऽपि पर्याप्तप्रशासनिकसहयोगं विहितवन्तः इति तान् महानुभावान् प्रति स्वकीयां कृतज्ञतां प्रकटयामि।

तदनु प्रतिकुलपतिपदे समासीनानां, संस्कृतस्य प्रचाराय, प्रसाराय च कृतसङ्कल्पानां डॉ० चन्द्रकान्तशुक्ल-महाभागानाम् अपि अस्य ग्रन्थस्य निर्माणकार्ये अतीव सहयोगः प्राप्तः। एते महानुभावाः ग्रन्थलेखने मार्गप्रदर्शनेन सह अष्टाध्यायी-काशिकावृत्त्याश्रितैः कतिपयैः दुर्लभैः ग्रन्थैरपि सहयोगं कृतवन्तः, सहैव प्रशासनिकसहयोगमपि कृतवन्तः इति तान् प्रत्यपि कृतज्ञतां प्रकटयामि।

अस्य ग्रन्थस्य निर्माणं विश्वविद्यालयानुदानायोगस्य शास्त्रसंरक्षणयोजनायां प्रदत्तवित्तेन सम्पन्नमभूदिति, विश्वविद्यालयानुदानायोगं प्रत्यप्याभारं प्रकटयामि।

अस्य ग्रन्थस्य प्रणयने या योजनाऽऽसीत् तस्याः योजनायाः संयोजकरूपेण परमादरणीयाः भूतपूर्वव्याकरणविभागाध्यक्षाः डॉ० कृष्णानन्दझामहोदयाः अधिकृता अभूवन्। तेऽपि शास्त्रीयविचारप्रदानेन, स्वकीयाशीर्वचोभिश्च सततं प्रोत्साहितवन्तः इति तान् प्रत्यपि सादरमाभारं प्रकटयामि।

ग्रन्थस्य सम्पादनकाले प्रारूपसंशोधनकार्ये पटनास्थित-मुरारकासंस्कृतमहाविद्यालयस्य प्रधानाचार्यपदे समासीनानां डॉ० ब्रह्मानन्दचतुर्वेदि-महाशयानामपि प्रारूपसंशोधनेन, यथास्थलं ग्रन्थस्य सामग्रीविषयेऽपि स्वकीयविचारप्रदानेन महान् सहयोगः प्राप्तः इति तान् प्रति धन्यवादान् प्रकटयामि।

संगणक (कम्प्यूटर) यन्त्रे प्रारूपाङ्कणकार्ये केन्द्रीयपुस्तकालये सूचनावैज्ञानिकपदे कार्यभाजां श्रीनरोत्तममिश्र-महाशयानामपि पर्याप्तं सहयोगं प्राप्तवानिति तेऽपि धन्यवादार्हाः। सहैव संगणकयन्त्रे टङ्कणकार्ये, प्रारूपाङ्कणे च श्री नीरज कुमार सिन्हा, श्री अमरेन्द्र कुमारः, श्री कालीकान्त झा, श्री सोमनाथ झा - इत्येतेषां सर्वेषां सहयोगः प्राप्तः इति तेऽपि धन्यवादभाजः। मदन्तेवासी गवेषकः श्री त्रिलोक झा अपि प्रारूपसंशोधने सहयोगं कृतवानिति तस्मै आशीर्वादं प्रयच्छामि।

अस्य ग्रन्थस्य लेखनकार्ये, सम्पादनकार्ये च पारिवारिकसहयोगोऽपि पर्याप्तरूपेण प्राप्तः इति स्वकीयां धर्मपत्नीं श्रीमतीम् ईलादेवीं प्रति कृतज्ञतां प्रकटयामि, आयुष्मतीभ्यः स्मिता, श्वेता, सुप्रीता, दिव्या, नन्दिनी इति पुत्रीभ्यः, आयुष्मते श्रीगणेश्वराय पुत्राय च शुभाशीर्वादान् प्रयच्छामि, यद् एते सर्वे मङ्गलभाजो भूयासुः।

ग्रन्थोऽयं निर्दुष्टो भवेदिति बद्धपरिकरो भूत्वा प्रयासमकार्षम्, तथापि

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ।।

इति प्रसिद्धं सुभाषितमनुसृत्य बुद्धिप्रमादात्, टङ्कणजन्यदोषाद् वा संजातास्त्रुटयः क्षन्तव्याः गुणग्रहैकपक्षपातिभिः विद्वद्भिः, तद्विषये स्वकीयाभिमतिभिश्च संसूचयितव्योऽयं जनः, येनेश्वरकृपया सम्भाविते ऽपरे संस्करणे तेषां दोषाणां परिष्करणं सम्भवेत्।

विदुषां वशंवदः

सुरेश्वर झाः
व्याकरणविभागाध्यक्षः,
कामेश्वरसिंहदरभङ्गा-संस्कृतविश्वविद्यालयः,
दरभङ्गा (विहारः)

।। श्रीः ।।

# अष्टाध्यायीसूत्रार्थप्रकाशिका

विषयसूची | पृष्ठसंख्या



***

।। श्रीः ।।

## ।। अथ ।।

# ।। अष्टाध्यायीसूत्रार्थप्रकाशिका ।।

गणेशं कार्तिकेयं च निधायाङ्के मुदाऽन्वितम् ।
साम्बं शिवं नमस्कृत्य पाणिन्यादीन् गुरूँस्तथा ।। १।।
वृत्तीः पाणिनिसूत्राणामधीत्य सूरिभिः कृताः ।
नूतनेयं मया वृत्तिः काचिदारभ्यते परा ।। २।।
महाभाष्यन्तथा न्यासमञ्जरीयुत-काशिकाम् ।
शब्देन्दुशेखरं भाषावृत्तिं प्रौढमनोरमाम् ।। ३।।
वैयाकरणसिद्धान्तकौमुदीन्तत्त्वबोधिनीम् ।
शब्दकौस्तुभरत्नादीन् तथा बालमनोरमाम् ।। ४।।
ग्रन्थानिमान् समाश्रित्य व्याख्येयं निर्मिता मया ।
समूलं लिखितं सर्वं नानपेक्षितमीरितम् ।। ५।।
सूत्राणां साधुबोधाय वामदक्षिणयोरिह ।
पदानामनुवृत्तानां निर्देशो विहितो मया ।। ६।।
एनां वृत्तितरिं छात्रः सद्गुरोः कृपयाश्रितः ।
अष्टाध्यायीनदीं नूनं सुखेन सन्तरिष्यति ।। ७।।
सुरेश्वराभिधानेन मयेयं प्रस्तुता कृतिः ।
विदुषां परितोषेण श्रमः स्यात् सफलो मम ।। ८।।
सूत्रेष्वेव हि वार्तिकभाष्यादीनां विभाति तात्पर्यम् ।
व्याकरणशरीरं , सूत्रं तत्स्वीकृतं पतञ्जलिना ।। ९।।
अष्टाध्यायीसूत्रार्थानां तस्मात्प्रकाशिका सेयम् ।
संक्षेपात् सूत्रार्थप्रकाशनाय प्रयासशीला स्यात् ।। १०।।

# अथ माहेश्वरसूत्राणि

येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।।
नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम्।।

अइउण्।।१।। ऋलृक्।।२।। एओङ्।।३।।
ऐऔच्।।४।। हयवरट्।।५।। लण्।।६।।
ञमङणनम्।।७।। झभञ्।।८।। घढधष्।।९।।
जबगडदश्।।१०।। खफछठथचटतव्।।११।।
कपय्।।१२।। शषसर्।।१३।। हल्।।१४।।

अकारादीनेतान् वर्णान् क्रमेणोपदिश्य अन्ते णकारादीनित्संज्ञकान् अनुबध्नाति अणादिप्रत्याहारार्थम्। हकारादिष्वकार उच्चारणार्थः, लण्मध्ये ऽकारस्तु इत्संज्ञकः। तत्र णकाराद्यैश्चतुर्दशभिरनुबन्धैः यथाक्रममूः-

एकं त्रीणि पुनश्चैकं चत्वार्येकं त्रयं त्रयम्।
एकं द्वे षट् तथैवैकं चतुः पञ्च षडेव च।। इति।।

णकारेण - अण् (१)
ककारेण - अक्, इक्, उक् (३)
ङकारेण - एङ् (१)
चकारेण - अच्, इच्, एच्, ऐच् (४)
टकारेण - अट् (१)
णकारेण - अण्, इण्, यण् (३)
मकारेण - अम्, यम्, ङम् (३)
ञकारेण - यञ् (१)
षकारेण - झष्, भष् (२)
शकारेण - अश्, हश्, वश्, झश्, जश्, बश् (६)
वकारेण - छव् (१)
यकारेण - यय्, मय्, झय्, खय् (४)
रेफेण - यर्, झर्, खर्, चर्, शर् (५)
लकारेण - अल्, हल्, वल्, रल्, झल्, शल् (६)

इत्येकचत्वारिंशत् प्रत्याहाराः अष्टाध्याय्यां व्यवहृताः सन्ति। एताननतिरिच्य 'उरण्रपरः'(१.१.५१), 'चयो द्वितीया शरि पौष्करसादेः'(८.४.४८, वा०), 'ञमन्ताड्डः' (उणादि १.१११) इत्येतैश्चतुश्चत्वारिंशत् प्रत्याहाराः एभिः सूत्रैः निष्पन्नाः प्रयुज्यन्ते पाणिनीयव्याकरणे।

## ।। अथ प्रथमाध्यायस्य प्रथमः पादः ।।

| | | |
|---|---|---|
| | १. वृद्धिरादैच्<br>आत्, ऐच्च वृद्धिसंज्ञो भवति।<br>आश्वलायनः। ऐतिकायनः। औपगवः। शालीयः। | वृद्धिः ३ |
| | २. अदेङ् गुणः<br>अदेङ् च गुणसंज्ञो भवति।<br>कर्ता। चेता। स्तोता। पठन्ति। पचे। | गुणः ३ |
| वृद्धिः १<br>गुणः २ | ३. इको गुणवृद्धी<br>यत्र गुणः, वृद्धिश्च श्रूयते तत्र इकः स्थाने गुणवृद्धी भवतः।<br>'मिदेर्गुणः'- मेद्यति । 'मृजेर्वृद्धिः'- मार्ष्टि। | इकः ६<br>गुणवृद्धी ६ |
| इकः ३<br>गुणवृद्धी ३ | ४. न धातुलोप आर्धधातुके<br>धातुलोपे आर्धधातुके परे इकः स्थाने गुणवृद्धी न भवतः ।<br>धातुशब्दोऽत्र धात्ववयवपरः ।<br>लोलुवः । पोपुवः । मरीमृजः । | न ६ |
| न ४ इकः ३<br>गुणवृद्धी ३ | ५. क्ङिति च<br>क्ङिति च इको गुणवृद्धी न भवतः ।<br>क् च ङ् च इति क्ङौ, क्ङौ इतौ यस्य स क्ङित् , तस्मिन् क्ङिति, किति, ङिति परे इत्यर्थः।<br>किति- चि+क्त = चितः। स्तुतः। भिन्नः।<br>ङिति- चि+तस् = चिनुतः। मृज्+तस्-मृष्टः। | |
| इकः ३ न ४<br>गुणवृद्धी ३ | ६. दीधीवेवीटाम्<br>दीधीवेवीटाम् इको गुणवृद्धी न भवतः।<br>दीधी च वेवी च इट् चेति विग्रहे द्वन्द्वे कृते आम्विभक्तौ दीधीवेवीटाम्<br>इति,दीधी-वेवीधात्वोः,इडागमस्य च इत्यर्थः।<br>आदीध्यनम्। आदीध्यकः।<br>आवेव्यनम्। आवेव्यकः।<br>भविता, पठिता। | |

| | | |
|---|---|---|
| | ७. हलोऽनन्तराः संयोगः<br>अनन्तराः हलः संयोगसंज्ञकाः भवन्ति। बहुवचनमत्राविवक्षितम्। अनन्तरा इत्यस्य व्यवधानशून्या इत्यर्थः। कैः व्यवधानशून्याः? विजातीयैः हल्भिरिति। शिक्षा। अत्र 'गुरोश्च हलः' इति सूत्रेण अप्रत्ययः। | |
| | ८. मुखनासिकावचनोऽनुनासिकः<br>मुखनासिकावचनो वर्णोऽनुनासिकसंज्ञो भवति। अभ्र आँ अपः। एतन्मुरारिः। | |

| | | |
|---|---|---|
| | ९. तुल्यास्यप्रयत्नं सवर्णम्<br>तुल्यास्यप्रयत्नं (वर्णजालम्) सवर्णसंज्ञं भवति।<br>आस्यपदेन ताल्वादीनामुच्चारणस्थानानां ग्रहणम्,<br>प्रयत्नशब्देन च आभ्यन्तरप्रयत्नानाम्।<br>दैत्य+अरिः = दैत्यारिः।<br>वाक्+हरिः -= वाग्घरिः<br>(वा०). ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्।<br>होतृ लृकारः - होत्लृकारः, होतॄकारः।<br>स्थानप्रयत्नविवेकः<br>अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु।<br>ऋटुरषाणां मूर्धा। लृतुलसानां दन्ताः।<br>उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च।<br>एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्।<br>वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य<br>जिह्वामूलम्। नासिकाऽनुस्वारस्य। इति<br>स्थानानि।<br>यत्नो द्विधा - आभ्यन्तरो,बाह्यश्च। आद्यश्चतुर्धा<br>- स्पृष्टेषत्स्पृष्टसंवृतविवृतभेदात्। तत्र स्पृष्टं<br>प्रयतनं स्पर्शानाम्। ईषत्स्पृष्टमन्तःस्थानाम्।<br>विवृतमूष्मणां,स्वराणां च। ह्रस्वस्यावर्णस्य प्रयोगे<br>संवृतम्। प्रक्रियादशायां तु विवृतमेव।<br>कादयो मावसानाः स्पर्शाः। यणोऽन्तःस्थाः। शल<br>ऊष्माणः। अचः स्वराः। कखाभ्यां<br>प्रागर्धविसर्गसदृशो जिह्वामूलीयः। पफाभ्यां<br>प्रागर्धविसर्गसदृश उपध्मानीयः। अं अः इत्यचः<br>परावनुस्वारविसर्गौ।<br>बाह्यप्रयत्नस्त्वेकादशधा -विवारः, संवारः,श्वासो,<br>नादो, घोषोऽघोषोऽल्पप्राणो महाप्राण<br>उदात्तोऽनुदात्तः स्वरितश्चेति।<br>खरो विवाराः,श्वासाः,अघोषाश्च। हशः संवाराः,<br>नादाः, घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमाः,<br>यणश्चाल्पप्राणाः। वर्गाणां द्वितीयचतुर्थौ, शलश्च<br>महाप्राणाः। | सवर्णम् १० |
| सवर्णम् ९ | १०. नाऽऽज्झलौ<br>तुल्यास्यप्रयत्नावपि अच्, हल्- इत्येतौ<br>सवर्णसंज्ञौ न भवतः।<br>दण्डहस्तः। दधि शीतम्। | |

| | | |
|---|---|---|
| | ११. ईदूदेद्द्विवचनं प्रगृह्यम्<br>ईदूदेद्द्विवचनं प्रगृह्यसंज्ञं भवति।<br>अग्नी इति। वायू इति। खट्वे इति।<br>पचेते इति। | ईदूत् १२<br>प्रगृह्यम् १६ |
| ईदूत् ११<br>प्रगृह्यम् ११ | १२. अदसो मात्<br>अदसो मात् ईदूतौ प्रगृह्यसंज्ञौ न<br>भवतः।<br>अदस्शब्दे एकारस्य मात्परत्वं नास्ति,<br>अतः एकारोऽत्र नानुवर्तते।<br>अमू आसाते। अमी आसते। | |
| प्रगृह्यम् ११ | १३. शे<br>'शे' इत्येतत् प्रगृह्यसंज्ञं भवति।<br>अस्मे इन्द्राबृहस्पती। भ्यसः 'शे' इत्यादेशः<br>'सुपां सुलुक्०' इति सूत्रेण। | |
| प्रगृह्यम् ११ | १४. निपात एकाजनाङ्<br>अनाङ् एकाज् निपातः प्रगृह्यसंज्ञो भवति।<br>अ अपेहि। इ इन्द्रं पश्य।<br>एकाच् इत्यत्र कर्मधारयः, तेन 'प्रेदं ब्रह्म' इत्यत्र<br>'प्र' इत्यस्य प्रगृह्यसंज्ञा न भवति।<br>अनाङ् इति कथनेन आ+उदकान्तात्= ओदकान्तात्<br>इत्यत्र आङ् इत्यस्य प्रगृह्यसंज्ञा न भवति। | निपातः १५ |
| प्रगृह्यम् ११<br>निपातः १४ | १५. ओत्<br>ओदन्तो निपातः प्रगृह्यसंज्ञो भवति।<br>आहो इति। उताहो इति। | ओत् १६ |
| ओत् १५<br>प्रगृह्यम् ११ | १६. सम्बुद्धौ शाकल्यस्येतावनार्षे<br>सम्बुद्धौ यः ओत् तदन्तः शब्दः<br>प्रगृह्यसंज्ञो भवति, अनार्षे इतिशब्दे परे,<br>शाकल्याचार्यस्य मतेन।<br>अनार्षे इत्यस्य अवैदिके इत्यर्थः।<br>वायो इति, वायविति इति वा। | शाक-र्षे १८ |
| प्रगृह्यम् ११<br>शाकल्यस्येतावनार्षे १६ | १७. उञः<br>उञः प्रगृह्यसंज्ञा भवति शाकल्यस्येतावनार्षे।<br>उ इति, विति। | उञः १८ |
| उञः१७ प्रगृह्यम् ११<br>शाकल्यस्येतावनार्षे १६ | १८. ऊँ<br>उञः ऊँ इत्यादेशो भवति, तस्य प्रगृह्यसंज्ञा<br>च अनार्षे (अवैदिके) इतौ परतः, शाकल्याचार्यस्य<br>मतेन।<br>एवं हि उ+इतिच्छेदे ऊँ इति, उ इति,<br>विति इति रूपत्रयं भवति। | |

| | | |
|---|---|---|
| प्रगृह्यम् ११ | **१९. ईदूतौ च सप्तम्यर्थे**<br>सप्तम्यर्थे वर्तमानौ ईदूतौ(ईदूदन्तौ) प्रगृह्यसंज्ञौ भवतः।<br>सोमो गौरी अधिश्रितः। मामकी तनू इति। अत्र 'सुपां सुलुक्०' इत्यादिना ङेः लुक्। | |
| | **२०. दाधा घ्वदाप्**<br>दा , धा इत्येतच्छब्दस्वरूपं घुसंज्ञं भवति, दाप् तु घुसंज्ञो न भवति।<br>दाण् दाने- प्रणिददाति।<br>दो अवखण्डने- प्रणिद्यति।<br>देङ् रक्षणे- प्रणिदयते।<br>डुधाञ् धारणपोषणयोः- प्रणिदधाति।<br>'धेट् पाने'- प्रणिधयति वत्सो मातरम्।<br>सर्वत्र 'नेर्गद०' इति सूत्रेण नेर्नस्य णत्वम्।<br>अदाप् इति किम्? दाप् लवने- दातं बर्हिः।<br>अत्र 'दो दद् घोः' इत्यनेन दा इत्यस्य दद् इत्यादेशो न , अघुत्वात्।<br>'दैप् शोधने'- अवदातं मुखम्। अत्र 'अच उपसर्गात्तः' इति सूत्रेण तकारादेशो न। | |
| | **२१. आद्यन्तवदेकस्मिन्**<br>एकस्मिन् (असहायेऽपि) आद्यन्तवत्कार्यं भवति।<br>औपगवम्। अत्र 'आद्युदात्तश्च' इति सूत्रेण असहायस्यापि अकारस्य (अण्प्रत्ययस्य) आद्युदात्तत्वं भवति।<br>आभ्याम्। अत्र असहायस्यापि अकारस्य 'सुपि च' इत्यनेन अदन्तत्वप्रयुक्तो दीर्घो भवति। | |
| | **२२. तरप्तमपौ घः**<br>तरप्तमपौ(प्रत्ययौ) घसंज्ञौ भवतः।<br>कुमारितरा। ब्राह्मणितमा।<br>'घरूप०' इति सूत्रेण ह्रस्वः। | |
| | **२३. बहुगणवतुडति संख्या**<br>बहुगणवतुडति-इत्येते संख्यासंज्ञाः भवन्ति।<br>वतुडतिशब्देन वतुप्रत्ययान्तः, डति-प्रत्ययान्तश्च शब्दो गृह्यते।<br>बहुकृत्वः। गणकृत्वः। तावत्कृत्वः। कतिकृत्वः। | संख्या २५ |
| संख्या २३ | **२४. ष्णान्ता षट्**<br>ष्णान्ताः(षकारान्ताः, नकारान्ताश्च) संख्याः षट्संज्ञकाः भवन्ति।<br>षट् तिष्ठन्ति। पञ्च, सप्त इत्यादि। | षट् २५ |

| | | |
|---|---|---|
| संख्या २३ षट् २४ | २५. डति च<br>डत्यन्ता संख्या षट्संज्ञा भवति।<br>कति तिष्ठन्ति। कति पश्य। | |
| | २६. क्त-क्तवतू निष्ठा<br>क्त-क्तवतू (प्रत्ययौ) निष्ठासंज्ञकौ भवतः।<br>कृतः। कृतवान्। भुक्तः। भुक्तवान्। | |
| | २७. सर्वादीनि सर्वनामानि<br>सर्वादीनि सर्वनामसंज्ञकानि भवन्ति।<br>सर्वे, सर्वस्मै, सर्वस्मात्, सर्वेषाम्,<br>सर्वस्मिन्। | सर्वादीनि ३२<br>सर्वनामानि ३६ |
| सर्वादीनि २७<br>सर्वनामानि २७ | २८. विभाषा दिक्समासे बहुव्रीहौ<br>बहुव्रीहौ दिक्समासे सर्वादीनि विभाषा सर्वनामसंज्ञानि भवन्ति।<br>दिक्समासशब्देन 'दिङ्नामान्यन्तराले'<br>इति सूत्रेण यः समासस्तस्य ग्रहणम्।<br>उत्तरपूर्वस्यै, उत्तरपूर्वायै। | बहुव्रीहौ २९ |
| सर्वादीनि २७<br>सर्वनामानि २७ | २९. न बहुव्रीहौ<br>बहुव्रीहौ सर्वादीनि सर्वनामसंज्ञकानि न भवन्ति।<br>प्रियविश्वाय। त्वत्कपितृकः,मत्कपितृकः-इत्यत्र<br>'अव्ययसर्वनाम्नामकच् प्राक्टेः' इति सूत्रेण अकज् न भवति। | न ३२ |
| सर्वादीनि २७<br>सर्वनामानि २७<br>न २९ | ३०. तृतीयासमासे<br>तृतीया समासे सर्वादीनिसर्वनामसंज्ञकानि न भवन्ति।<br>मासपूर्वाय।<br>'समासे इति वर्त्तमाने पुनः समासग्रहणं<br>तृतीयासमासार्थवाक्येऽपि प्रतिषेधो यथा स्यात्।<br>तेनेहापि सर्वनामसंज्ञा न भवति-मासेन पूर्वाय देहि। | |
| सर्वादीनि २७<br>सर्वनामानि २७<br>न २९<br>समासे ३० | ३१. द्वन्द्वे च<br>द्वन्द्वे च सर्वादीनि सर्वनामसंज्ञकानि न भवन्ति।<br>पूर्वापराणाम्। वर्णाश्रमेतराणाम्। | द्वन्द्वे ३२ |
| द्वन्द्वे ३१ न २९<br>सर्वादीनि २७<br>सर्वनामानि २७<br>समासे ३० | ३२. विभाषा जसि<br>द्वन्द्वे सर्वादीनि जसि सर्वनामसंज्ञकानि विभाषा न भवन्ति।<br>पूर्वापरे,पूर्वापराः। वर्णाश्रमेतरे, वर्णाश्रमेतराः। | सम्पूर्णसूत्रम् ३६ |

| | | |
|---|---|---|
| सर्वनामानि २७<br>विभाषा३२ जसि ३२ | ३३. प्रथमचरमतयाल्पार्धकतिपयनेमाश्च<br>प्रथमचरमतयाल्पार्धकतिपयनेमाश्च विभाषा जसि सर्वनामसंज्ञकाः भवन्ति।<br>प्रथमे,प्रथमाः। चरमे,चरमाः। द्वितये, द्वितयाः। अल्पे,अल्पाः। अर्धे,अर्धाः। कतिपये,कतिपयाः। नेमे, नेमाः। नेम इत्यस्य अर्ध इत्यर्थः। | |
| सर्वनामानि २७<br>विभाषा३२ जसि ३२ | ३४. पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्<br>पूर्वपरावरदक्षिणोत्तरापराधराणि विभाषा जसि सर्वनामसंज्ञकानि भवन्ति व्यवस्थायामसंज्ञायाम्।<br>पूर्वे,पूर्वाः। परे,पराः। अवरे,अवराः। दक्षिणे, दक्षिणाः। उत्तरे,उत्तराः। अपरे, अपराः। अधरे, अधराः।<br>सूत्रे व्यवस्थायामिति कथनेन यत्र पूर्वादयः श्ब्दाः दिग्देशकालवाचिनः तत्रैव एतेषां सर्वनामसंज्ञा भवति। तेन-'दक्षिणा इमे गाथकाः' अत्र दक्षिणशब्दस्य सर्वनामसंज्ञा न भवति। अत्र दक्षिणब्दस्य प्रवीण इत्यर्थः।<br>असंज्ञायामिति किम् ? उत्तराः कुरवः। | |
| सर्वनामानि २७<br>विभाषा३२ जसि ३२ | ३५. स्वमज्ञातिधनाख्यायाम्<br>अज्ञातिधनाख्यायां स्वशब्दः विभाषा जसि सर्वनामसंज्ञो भवति।<br>स्वे, स्वाः वा पुत्राः। आत्मीया इत्यर्थः।<br>ज्ञातिप्रतिषेधः किम् ?<br>धूमायन्त इवाश्लिष्टाः प्रज्वलन्तीव संहताः।<br>उल्मुकानीव मेऽमी स्वा ज्ञातयो भरतर्षभ !<br>अधनाख्यायामिति किम् ? प्रभूताः स्वा न भुज्यन्ते। प्रभूतानि धनानि इत्यर्थः।<br>स्वशब्दस्य चत्वारोऽर्थाः-आत्मा, आत्मीयः, ज्ञातिः, धनं चेति। तत्र आद्ययोरर्थयोः स्वशब्दस्य सर्वनामसंज्ञा भवति, अन्त्ययोरर्थयोश्च न। | |

| | | |
|---|---|---|
| सर्वनामानि २७<br>विभाषा३२ जसि ३२ | ३६. अन्तरं बहिर्योगोपसंव्यानयोः<br>बहिर्योगोपसंव्यानयोः अन्तरशब्दः विभाषा जसि सर्वनामसंज्ञो भवति।<br>बहिर्योगे-अन्तरे, अन्तराः वा गृहाः। नगरबाह्याः चाण्डालादिगृहा इत्यर्थः।<br>उपसंव्यानम्= अन्तर्वस्त्रम्।<br>अन्तरे अन्तरा वा शाटकाः। परिधानीया इत्यर्थः।<br>बहिर्योगोपसंव्यानयोरिति किम् ? अनयोरग्रिमयोरन्तरे तापसः प्रतिवसति। तस्मिन्नन्तरे शीतान्युदकानि।<br>मध्यप्रदेशवचनोऽत्र अन्तरशब्दः, गणसूत्रस्य चेदं प्रत्युदाहरणम्, गणसूत्रेऽपि एवमेव पाठः।<br>(वा०) विभाषाप्रकरणे तीयस्य ङित्सु सर्वनामसंज्ञेत्युपसंख्यानम्।<br>द्वितीयस्मै, द्वितीयाय। तृतीयस्मै,तृतीयाय। | |
| | ३७. स्वरादिनिपातमव्ययम्<br>स्वरादयः, निपातसंज्ञकाश्च शब्दाः अव्ययसंज्ञकाः भवन्ति।<br>स्वरादि-स्वः पश्य। नीचैर्गच्छति।<br>निपात-स चागतः। स एव वक्ति। | अव्ययम् ४१ |
| अव्ययम् ३७ | ३८. तद्धितश्चाऽसर्वविभक्तिः<br>असर्वविभक्तिकः तद्धितान्तः शब्दः अव्ययसंज्ञको भवति।<br>ततः। यतः। तत्र। यत्र। तदा। यदा। सर्वदा। सदा। | |
| अव्ययम् ३७ | ३९. कृन्मेजन्तः<br>मकारान्तः, एजन्तश्च यः कृत्संज्ञकः प्रत्ययः, तदन्तं शब्दस्वरूपमव्ययसंज्ञं भवति।<br>मान्त-स्मारं, स्मारम्।<br>एजन्त-जीवसे, पिबध्यै। | |
| अव्ययम् ३७ | ४०. क्त्वा-तोसुन्कसुनः<br>क्त्वा-तोसुन्-कसुन्-इत्येवमन्तं शब्दस्वरूपम् अव्ययसंज्ञं भवति।<br>क्त्वा-कृत्वा, हृत्वा।<br>तोसुन्-पुरा सूर्यस्योदेतोराधेयः।<br>कसुन्-पुरा क्रूरस्य विसृपो विरप्शिन्। | |
| अव्ययम् ३७ | ४१. अव्ययीभावश्च<br>अव्ययीभावश्चाव्ययसंज्ञको भवति।<br>अधिहरि। प्रत्यग्नि, उपाग्नि शलभाः पतन्ति। | |
| | ४२. शि सर्वनामस्थानम्<br>शि सर्वनामस्थानसंज्ञं भवति।<br>कुण्डानि तिष्ठन्ति, कुण्डानि पश्य। | सर्व-स्थानम् ४३ |

| | | |
|---|---|---|
| सर्वनामस्थानम् ४२ | ४३. सुडनपुंसकस्य<br>अनपुंसकस्य (प्रातिपदिकस्य) सुट् (सु, औ, जस्, अम्, औट् ) सर्वनामस्थानसंज्ञको भवति।<br>राजा, राजानौ, राजानः। राजानम्, राजानौ। | |
| | ४४. नवेति विभाषा<br>निषेध-विकल्पयोर्विभाषासंज्ञा भवति।<br>'विभाषा श्वेः'-शुशाव, शिश्वाय।<br>शुशुवतुः, शिश्वियतुः। | |
| | ४५. इग्यणः सम्प्रसारणम्<br>यणः स्थाने भूतो, भावी वा इक् संप्रसारणसंज्ञो भवति।<br>यज्-इंष्टम्। वप्-उप्तम्, ग्रह-गृहीतम्। | |
| षष्ठी ४६ | ४६. आद्यन्तौ टकितौ<br>षष्ठीनिर्दिष्टस्य विधीयमानः टित्<br>आद्यवयवो भवति, किच्चान्तावयवो भवति।<br>टित्- 'आर्धधातुकस्येड् वलादेः'- लविता।<br>कित्- 'भियो हेतुभये षुक्'- मुण्डो भीषयते। | अन्तः४७ |
| षष्ठी ४६ अन्तः४६ | ४७. मिदचोऽन्त्यात्परः<br>षष्ठीनिर्दिष्टस्य विधीयमानो यो मित् स<br>अन्त्यात् अचः परोऽन्तावयवो भवति।<br>'नपुंसकस्य झलचः'- पयांसि, ज्ञानानि।<br>'शे मुचादीनाम्'- मुञ्चति। | |
| | ४८. एच इग्घ्रस्वादेशे<br>ह्रस्वादेशे कर्त्तव्ये एचः स्थाने इगेव भवति नान्यः।<br>'ह्रस्वो नपुंसके प्रातिपदिकस्य'- रै- अतिरि। नौ- अतिनु। गो- उपगु। | आदेशे ५५ |
| आदेशे ४८ | ४६. षष्ठी स्थानेयोगा<br>आदेशस्य प्रसङ्गे इह शास्त्रे या षष्ठी सा स्थानेयोगा बोध्या, अर्थात् तत्र स्थाने इत्युपतिष्ठते।<br>स्थानं च प्रसङ्गः।<br>'अस्तेर्भूः'-भविता, भवितुम्।<br>'ब्रुवो वचिः'-वक्तुम्, वक्तव्यम्।<br>अत्र 'आदशे' इत्यस्यानुवृत्त्या प्रत्ययविधौ अस्याः परिभाषायाः प्रवृत्तिर्न भवति। यथा- युष्मदस्मदोरन्यतरस्यां खञ् च' इत्यादौ। | षष्ठी<br>४६,४७,५५<br>स्थाने ५५ |

| | | |
|---|---|---|
| आदेशः ४८ | ५०. स्थानेऽन्तरतमः<br>एकस्य अनेकादेशानां प्रसङ्गे अन्तरतमः आदेशः भवति।<br>अन्तरतमः इत्यस्य सदृशतम इत्यर्थः।<br>शब्दस्यान्तर्यं चतुर्विधम्- १. स्थानकृतम् २.अर्थकृतम् ३.गुणकृतम् ४.प्रमाणकृतं च।<br>क्रमेणोदाहरणम्-<br>१. स्थानकृतम्-दध्यत्र।<br>२. अर्थकृतम्-'तृज्वत्क्रोष्टुः'-क्रोष्टा, क्रोष्टारौ।<br>३. गुणकृतम्-पाकः, त्यागः।<br>४. प्रमाणकृतम्-अमुष्मै, अमूभ्याम्।<br>(परिभाषा) यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः।<br>चेता। स्तोता। स्थानकृतान्तर्याद् इकारस्य गुणः एकारः, उकारस्य च ओकारः, न तु प्रमाणकृतान्तर्याद् ह्रस्वाकारः। | स्थाने ६१ |
| स्थाने४९<br>आदेशः ४८ | ५१. उरण् रपरः<br>ऋकारस्य स्थाने अण् रपरः सन्नेव प्रवर्तते।<br>सावर्ण्याद् ऋकारेण लृकारस्यापि ग्रहणम्। 'र' इति प्रत्याहारः, तेन रपदेन रेफ-लकारयोरुभयोर्ग्रहणं भवति।<br>कर्त्ता, हर्त्ता। कारकः, हारकः।<br>तवल्कारः। उपाल्कारीयति। | |
| स्थाने४९<br>आदेशः ४८<br>: | ५२. अलोऽन्त्यस्य<br>षष्ठीनिर्दिष्टस्य य आदेशः सः अन्त्यस्यालः स्थाने वेदितव्यः।<br>'त्यदादीनामः'-यः , सः।<br>'इद् गोण्याः'- पञ्चगोणिः, दशगोणिः। | अलः ५४<br>अन्त्यस्य ५३ |
| अन्त्यस्य ५२<br>अलः५२ स्थाने४९<br>आदेशः ४८ | ५३. ङिच्च<br>षष्ठीनिर्दिष्टस्य यो ङिदादेशः सोऽप्यन्त्यस्यालः स्थाने वेदितव्यः।<br>'अवङ् स्फोटायनस्य'-गवाग्रम्। | |
| अलः ५२<br>आदेशः ४८<br>स्थाने४९ | ५४. आदेः परस्य<br>षष्ठीनिर्दिष्टस्य परस्य विधीयमान आदेशः परस्यादेः वेदितव्यः।<br>'ईदासः'-आसीनः। | |

| | | |
|---|---|---|
| स्थाने ४९<br>आदेशः ४८ | ५५. अनेकाल्शित्सर्वस्य<br>षष्ठीनिर्दिष्टस्य योऽनेकालादेशः,<br>शिदादेशश्च स सर्वस्य (सम्पूर्णस्य) स्थाने भवति।<br>अनेकाल् आदेशः - 'अस्तेर्भूः' - भविता। भवितुम्।<br>भवितव्यम्।<br>शिदादेशः - 'इदम इश्' - इतः। इह। | |
| | ५६. स्थानिवदादेशोऽनल्विधौ<br>आदेशः स्थानिवद् भवति, न त्वल्विधौ।<br>'अस्तेर्भूः' - भविता।<br>'किमः कः' - केन।<br>'समासेऽनञ्पूर्वे क्त्वो ल्यप्' -प्रकृत्य । प्रहृत्य।<br>ङेर्यः'- वृक्षाय।<br>अनल्विधौ किम् ? द्यौः,पन्थाः,सः। अत्र<br>स्थानिवद्भावाभावेन स्थानिभूताद् हलः परस्य सोर्लोपः<br>हल्ङ्यादिसूत्रेण न भवति। | स्थानिवत् ५९<br>आदेशः ५९ |
| स्थानिवत् ५६<br>आदेशः ५६ | ५७. अचः परस्मिन् पूर्वविधौ<br>परनिमित्तकोऽजादेशः स्थानिवद् भवति, पूर्वविधौ<br>कर्त्तव्ये।<br>अल्विध्यर्थमिदम्।<br>निगाल्यते।<br>अत्र णेर्लोपस्य स्थानिवद्भावेन<br>'अचि विभाषा' इति सूत्रेण अचि परे रेफस्य लकारः।<br>पटयति।<br>अत्र टिलोपस्य स्थानिवत्त्वेन 'अत उपधायाः' इति<br>सूत्रेण उपधावृद्धिर्न। | अचः ५९<br>परस्मिन् ५९ |

| | | |
|---|---|---|
| परस्मिन् ५७<br>अचः ५७<br>स्थानिवत् ५६<br>आदेशः ५६ | ५८ नपदान्तद्विर्वचनवरेयलोपस्वर-<br>सवर्णानुस्वारदीर्घजश्चर्विधिषु<br>पदान्त, द्विर्वचन, वरे, यलोप, स्वर, सवर्ण, अनुस्वार, दीर्घ, जश्, चर्- इत्येतेषु विधिषु परनिमित्तकोऽजादेशः स्थानिवद् न भवति।<br>'वरे' इत्यनेन वरे योऽजादेशः स विवक्षितः।<br>पदान्तविधौ- कानि सन्ति। कौ स्तः।<br>द्विर्वचनविधौ- दध्यत्र। मध्वत्र। सुद्ध्युपास्यः।<br>वरे योऽजादेशः तद्विधौ- यायावरः। यातेर्यङन्ताद् 'यश्च यङः'इति सूत्रेण वरच्प्रत्यये कृते 'अतो लोपः' इति सूत्रेण कृतस्य अलोपस्य स्थानिवत्त्वाद् 'आतो लोप इटि च' इति सूत्रेण आकारस्य लोपः प्राप्नोति। अस्माद् वचनान्न भवति।<br>यलोपविधौ- कण्डूतिः।<br>स्वरविधौ- चिकीर्षकः।<br>सवर्णविधौ- शिण्ढि।<br>अनुस्वारविधौ- शिंषन्ति।<br>दीर्घविधौ- प्रतिदीव्ना।<br>जश्विधौ- सग्धिश्च मे।<br>चर्विधौ- जक्षतुः। | |
| अचः ५७<br>परस्मिन् ५७<br>स्थानिवत् ५६<br>आदेशः ५६ | ५९. द्विर्वचनेऽचि<br>द्विर्वचननिमित्तेऽचि परे योऽजादेशः स स्थानिवद् भवति, द्विर्वचन एव कर्त्तव्ये।<br>रूपातिदेशश्चायं नियतकालः, तेन कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते।<br>पपतुः, पपुः। 'आतो लोप इटि च'- इत्याकारस्य लोपेऽपि तस्य स्थानिवद्भावाद् एकाच्त्वेन द्विर्वचनं भवति। | |
| स्थाने ५० | ६०. अदर्शनं लोपः<br>स्थाने=प्रसङ्गे सत्यपि यददर्शनं तल्लोपसंज्ञं भवति<br>'गोधाया ढ्रक्'-गौधेरः।<br>अत्र 'लोपो व्योर्वलि'इति सूत्रेण यकारस्य लोपः।<br>राजा।<br>अत्र हल्ङ्यादिसूत्रेण सोर्लोपः, 'नलोपः प्रातिपदिकान्तस्य' इति सूत्रेण च नकारस्य लोपः। | अदर्शनम् ६१ |

| | | |
|---|---|---|
| अदर्शनम् ६० | ६१. प्रत्ययस्य लुक्श्लुलुपः<br>स्थाने=प्रसङ्गे सत्यपि प्रत्ययस्य यददर्शनं तल्लुक्संज्ञं, श्लुसंज्ञं, लुप्संज्ञं वा भवति।<br>अनेकसंज्ञाविधानाच्च तद्भवितग्रहणमिह विज्ञायते।<br>अत्ति। जुहोति। अङ्गा, बङ्गाः।<br>उदाहणेषु यथाक्रमम् 'अदिप्रभृतिभ्यः शपः' इत्यनेन शपः लुक्, 'जुहोत्यादिभ्यः श्लुः' इत्यनेन श्लुः, अङ्गा, बङ्गाः इत्यत्र 'तस्य निवासे' इत्यर्थे विहितस्याणः 'जनपदे लुप्' इत्यनेन लुप्। | |
| | ६२. प्रत्ययलोपे प्रत्ययलक्षणम्<br>प्रत्ययलोपे प्रत्ययलक्षणं (कार्यं) भवति।<br>अग्निचित्। अहन्। अधोक्। राजपुरुषः।<br>सुप्तिङोर्लुप्तत्वेऽपि 'सुप्तिङन्तं पदम्' इत्यनेन पदसंज्ञा भवत्येव। | प्रत्ययलक्षणम् ६३ |
| प्रत्ययलक्षणम् ६२ | ६३. न लुमताङ्गस्य<br>लुमता(लुक्-श्लु-लुप् इति शब्दैः) प्रत्ययलोपे ( प्रत्ययस्यादर्शने सति) अङ्गस्य प्रत्ययलक्षणं कार्यं न भवति।<br>गर्गस्यापत्यानि पुमांसः इति गर्गाः। मृष्टः, जुहुतः।<br>एषु यञ्शपोर्लुमता शब्देन लुप्तत्वेन अङ्गस्य गुणवृद्धी न भवतः। | |
| | ६४. अचोऽन्त्यादि टि<br>अचां मध्ये योऽन्त्यः (अच्) सः , सः च आदिर्यस्य तच्छब्दस्वरूपं च टिसंज्ञं भवति।<br>पचते। पचेते। पचन्ते। पचेथे।<br>'टित आत्मनेपदानां टेरे' इत्यनेन त, आताम्, आथाम् इत्येतेषां टेरेत्वम्। | |
| | ६५. अलोऽन्त्यात् पूर्व उपधा<br>अन्त्यादलः पूर्वो वर्णः उपधासंज्ञो भवति।<br>पाठः। भेदः। बोधः।<br>अत्र 'अत उपधायाः' इति सूत्रेण, 'पुगन्तलघूपधस्य च' इति सूत्रेण च उपधानां गुणवृद्धी। | |
| | ६६. तस्मिन्निति निर्दिष्टे पूर्वस्य<br>तस्मिन्निति=सप्तम्या निर्दिष्टे पदे तदुपश्लिष्टस्य अव्यवहितपूर्वस्य कार्यं भवति।<br>'इको यणचि' - दध्युदकम्। मध्विदम्। | निर्दिष्टे ६७ |

| | | |
|---|---|---|
| निर्दिष्टे ६६ | ६७. तस्मदित्युत्तरस्य<br>तस्मादिति=पञ्चम्या निर्दिष्टे सति ततः अव्यवहितोत्तरस्य कार्यं भवति।<br>पदात् परस्य भवति – ग्रामो वः।<br>ग्रामो नः। पदात् पूर्वस्य न भवति – युष्माकं ग्रामः।<br>अस्माकं ग्रामात्। | |
| | ६८. स्वं रूपं शब्दस्याऽशब्दसंज्ञा<br>इह शास्त्रे शब्दस्य स्वं रूपं ग्राह्यं भवति, शब्दशास्त्रे या संज्ञा तां विना।<br>'अग्नेर्ढक्' – आग्नेयः।<br>'उदश्वितोऽन्यतरस्याम्' – औदश्वित्कम्।<br>अशब्दसंज्ञेति किम् ? 'दाधा घ्वदाप्','तरप्तमपौ घः' घुग्रहणेषु, घग्रहणेषु च संज्ञिनां ग्रहणम्, न संज्ञायाः। | स्वम् ७२<br>रूपम् ७२ |
| स्वम् ६८<br>रूपम् ६८ | ६९. अणुदित्सवर्णस्य चाऽप्रत्ययः<br>अप्रत्ययः=अविधीयमानोऽण्, उदिंच्च सवर्णस्य ग्राहको भवति,स्वस्य च रूपस्य।<br>कु, चु, टु, तु, पु–एते उदितः। अत्रैवाण् परणकारेण।<br>अण्–'इको यणचि' – सुधी+उपास्यः = सुध्युपास्यः।<br>आद् गुणः – गङ्गा+उदकम् = गङ्गोदकम्।<br>उदित्– 'चुटू', 'लशक्वतद्धिते', 'चोः कुः', 'कुहोश्चुः'।<br>अप्रत्यय इति किम्? 'सनाशंसभिक्ष उः' 'अ सांप्रतिके'– दीर्घो न भवति। | सवर्णस्य ७० |
| सवर्णस्य ६९<br>स्वम्६८ रूपम् ६८ | ७०. तपरस्तत्कालस्य<br>तपरस्तत्कालस्य=स्वोच्चारणसमकालस्य एव ग्राहको भवति, स्वस्य च रूपस्य।<br>'अतो भिस ऐस्' – रामैः, वृक्षैः।<br>तत्कालस्येति किम्? रमाभिः, खट्वाभिः। | |
| स्वम्६८ रूपम् ६८ | ७१. आदिरन्त्येन सहेता<br>अन्त्येनेता सहित आदिः आक्षेपेण लभ्यस्य समुदायस्य ग्राहको भवति, स्वस्य च रूपस्य।<br>अण्। अक्। अच्। हल्। सुप्। तिङ्। | |

| | | |
|---|---|---|
| स्वमृ६८ रूपम् ६८ | ७२. येन विधिस्तदन्तस्य<br>येन-यत्करणको विधिः=विधानं भवति, तत् तदन्तस्य=स्वान्तसमुदायस्य, स्वरूपस्य च ग्राहको भवति।<br>'एरच्' - इवर्णान्ताद् धातोरच् प्रत्ययो भवति - चयः। जयः। अयः।<br>'ओरावश्यके' - उवर्णान्ताद् धातोर्ण्यद् भवति - अवश्यलाव्यम्। अवश्यपाव्यम्।<br>(वा०) समास-प्रत्ययविधौ प्रतिषेधो वक्तव्यः।<br>कष्टं श्रितः कष्टश्रित इत्यत्र समासो भवति, कष्टं परमश्रित इत्यत्र समासो न भवति।<br>प्रत्ययविधौ - 'नडादिभ्यः फक्'- नडस्यापत्यं नाडायनः इत्यत्र फक् प्रत्ययो भवति। इह न भवति - सूत्रनडस्यापत्यं सौत्रनाडिः।<br>(वा०) उगिद्वर्णग्रहणवर्जम्<br>उगिद्ग्रहणे- 'उगितश्च' इति सूत्रेण ङीप् प्रत्ययः 'भवती' इत्यत्रापि भवति, अतिभवती इत्यत्रापि।<br>वर्णग्रहणे - 'अत इञ्' - दाक्षिः, प्लाक्षिः।<br>(वा०) यस्मिन्विधिस्तदादावल्ग्रहणे।<br>सप्तम्यन्ते अल्ग्रहणे विशेषणीभूते यो विधिरारभ्यते स तदादौ ज्ञेयः। येन विधिरित्यस्यापवादोऽयम्।<br>तेन 'वान्तो यि प्रत्यये' इत्यस्यार्थो भवति - यकारादौ प्रत्यये परे वान्त आदेशो भवति इति।<br>गव्यम्, नाव्यम्। | |
| | ७३. वृद्धिर्यस्याचामादिस्तद्वृद्धम<br>यस्याचामादिर्वृद्धिस्तद् वृद्धसंज्ञं भवति।<br>शालीयः। मालीयः। औपगवीयः।<br>(वा०) वा नामधेयस्य वृद्धसंज्ञा वक्तंव्या।<br>देवदत्तीयाः, दैवदत्ताः।<br>वृद्धसंज्ञापक्षे 'वृद्धाच्छः' इति सूत्रेण छप्रत्ययः,तदभावे 'तस्येदम्' इति सूत्रेण अण्।<br>(वा०) गोत्रान्तादसमस्तवत्प्रत्ययो भवतीति वक्तव्यम्।<br>घृतप्रधानो रौढिः = घृतरौढिः, तस्य छात्राः घृतरौढीयाः।<br>ओदनप्रधानः पाणिनिः = ओदनपाणिनिः, तस्य छात्राः ओदनपाणिनीयाः। | यस्याचामादिः७५<br>वृद्धम् ७५<br>यस्यादिः१.२.३ |

## ।। अथ प्रथमाध्यायस्य द्वितीयः पादः ।।

| | | |
|---|---|---|
| | १. गाङ्कुटादिभ्यो ऽञ्णिन्ङित्<br>गाङ्-कुटादिभ्यो ऽञ्णित् प्रत्ययः ङिद्वद् भवति।<br>गाङ्शब्देनात्र इङो गाङादेशो गृह्यते न तु 'गाङ् गतौ' इति धातुः।<br>गाङः - अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत्।<br>कुटादिभ्यः - कुटिता, कुटितुम्, कुटितव्यम्।<br>अञ्णिदिति किम्? उत्कोटो वर्तते। उत्कोटयतिं, उच्चुकोट, उत्कोटकः।<br>(वा०) व्यचेः कुटादित्वमनसीति वक्तव्यम्।<br>विचिता, विचितुम्, विचितव्यम्।<br>अनसीति किम्? उरुव्यचाः। | ङित् ४ |
| ङित्१<br>यस्यादिः१.१.७३ | २. विज इट्<br>विजः परस्य यस्यादिरिट् स ङिद्वद् भवति।<br>उद्विजिता, उद्विजितुम्, उद्विजितव्यम्। | इट् ३ |
| ङित् १ इट् २<br>यस्यादिः१.१.७३ | ३. विभाषोर्णोः<br>ऊर्णोः परस्य यस्यादिरिट् स विभाषा ङिद्वद् भवति।<br>प्रोर्णुविता, प्रोर्णविता।<br>इडित्येव - प्रोर्णवनम्, प्रोर्णवनीयम्। | |
| ङित् १ | ४. सार्वधातुकमपित्<br>अपित् सार्वधातुकं ङिद्वद् भवति।<br>कुरुतः, कुर्वन्ति। चिनुतः, चिन्वन्ति। | अपित् ५ |
| अपित् ४ | ५. असंयोगाल्लिट् कित्<br>असंयोगान्ताद् धातोः परोऽपिल्लिट् किद्वद् भवति।<br>धातोरेव लिड् विधीयते, नान्यस्मादिति लिटा धातुराक्षिप्यते।<br>बिभिदतुः, बिभिदुः।<br>ईजतुः, ईजतुः।<br>असंयोगादिति किम्? सस्रंसे, दध्वंसे। | लिट् ६<br>कित् २६ |
| लिट् ५<br>कित् ५ | ६. इन्धिभवतिभ्यां च<br>इन्धिभवतिभ्यां च परो लिट् किद् भवति।<br>इन्धेः संयोगार्थं ग्रहणम्, भवतेः पिदर्थम्।<br>समीधे दस्यु हन्तमम्, पुत्र ईधे, अथर्वणः।<br>बभूव। बभूविथ। कित्त्वाद् यथाक्रमं गुणवृद्धी न भवतः।<br>(इष्टि०) श्रन्थि-ग्रन्थि-दम्भि-स्वञ्जीनामिति वक्तव्यम्।<br>श्रेथतुः, श्रेथुः। ग्रेथतुः, ग्रेथुः। देभतुः, देभुः। परिषस्वजे, परिषस्वजाते। | |

| | | |
|---|---|---|
| वृद्धम् ७३ | ७४. त्यदादीनि च<br>त्यदादीनि च वृद्धसंज्ञकानि भवन्ति।<br>त्यदीयम्। तदीयम्। यदीयम्।<br>एतदीयम्। इदमीयम्। अदसीयम्। त्वदीयम्। मदीयम्।<br>भवदीयम्। किमीयम्।<br>वृद्धत्वाद् एषु 'वृद्धाच्छः' इति सूत्रेण छप्रत्ययो भवति। | |
| यस्याचामादिः ७३<br>वृद्धम् ७३ | ७५. एङ् प्राचां देशे<br>प्राचाम् = प्राग्देशवासिनां देशे = देशाभिधाने सति यस्याचामादिः एङ् तद् वृद्धसंज्ञं भवति।<br>एणीपचने भवः एणीपचनीयः। भोजकटे भवः भोजकटीयः। गोनर्दे भवः गोनर्दीयः।<br>एणीपचनेत्यादयः शब्दाः प्राग्देशवासिनां देशस्य संज्ञाः।<br>प्राचामिति किम्? देवदत्तो नाम वाहीकेषु ग्रामः, तत्र भवो दैवदत्तः।<br>देशे इति किम्? गोमत्यां भवा इति गौमताः मत्स्याः। गोमती नाम नदी प्राग्देशे न तु देशः।<br>पाणिनीयाष्टके प्राक्, उदक् चेति देशानां द्वौ विभागौ श्रूयेते। तद्यथा 'एङ् प्राचां देशे' इति प्रकृतसूत्रे प्राक् इति, 'उदीचां वृद्धादगोत्रात्' (४.१.१५७) इति सूत्रे उदक् इति। कस्तावत् प्राग्देशः? कश्च उदग्देश? इति परिज्ञानाय काशिकावृत्तौ अयं श्लोकः पठितोऽस्मिन् सूत्रे-<br>प्रागुदञ्चौ विभजते हंसो क्षीरोदके यथा।<br>विदुषां शब्दसिद्ध्यर्थं, सा नः पातु शरावती।।<br>अस्यायमर्थः - हंसो यथा क्षीरोदके विभजते तथैव शरावती नाम नदी प्राक्, उदक् इत्येवं देशविभागं करोति। अर्थात् शरावत्या उत्तरो भागः उदग्देशः,तस्याश्च पूर्वो भागः प्राग्देश इति। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां प्रथमाध्यायस्य प्रथमपादः।।

# ।। अथ प्रथमाध्यायस्य द्वितीयः पादः ।।

| | | |
|---|---|---|
| | १. गाङ्कुटादिभ्योऽञ्णिन्ङित्<br>गाङ्-कुटादिभ्योऽञ्णित् प्रत्ययः ङिद्वद् भवति।<br>गाङ्शब्देनात्र इङो गाङादेशो गृह्यते न तु 'गाङ् गतौ' इति धातुः।<br>गाङः - अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत्।<br>कुटादिभ्यः - कुटिता, कुटितुम्, कुटितव्यम्।<br>अञ्णिदिति किम्? उत्कोटो वर्तते। उत्कोटयति, उच्चुकोट, उत्कोटकः।<br>(वा०) व्यचेः कुटादित्वमनसीति वक्तव्यम्।<br>विचिता, विचितुम्, विचितव्यम्।<br>अनसीति किम्? उरुव्यचाः। | ङित् ४ |
| ङित्१<br>यस्यादिः१.१.७३ | २. विज इट्<br>विजः परस्य यस्यादिरिट् स ङिद्वद् भवति।<br>उद्विजिता, उद्विजितुम्, उद्विजितव्यम्। | इट् ३ |
| ङित् १ इट् २<br>यस्यादिः१.१.७३ | ३. विभाषोर्णोः<br>ऊर्णोः परस्य यस्यादिरिट् स विभाषा ङिद्वद् भवति।<br>प्रोर्णुविता, प्रोर्णविता।<br>इडित्येव - प्रोर्णवनम्, प्रोर्णवनीयम्। | |
| ङित् १ | ४. सार्वधातुकमपित्<br>अपित् सार्वधातुकं ङिद्वद् भवति।<br>कुरुतः, कुर्वन्ति। चिनुतः, चिन्वन्ति। | अपित् ५ |
| अपित् ४ | ५. असंयोगाल्लिट् कित्<br>असंयोगान्ताद् धातोः परोऽपिल्लिट् किद्वद् भवति।<br>धातोरेव लिड् विधीयते, नान्यस्मादिति लिटा धातुराक्षिप्यते।<br>बिभिदतुः, बिभिदुः।<br>ईजतुः, ईजतुः।<br>असंयोगादिति किम्? सस्रंसे, दध्वंसे। | लिट् ६<br>कित् २६ |
| लिट् ५<br>कित् ५ | ६. इन्धिभवतिभ्यां च<br>इन्धिभवतिभ्यां च परो लिट् किद् भवति।<br>इन्धेः संयोगार्थं ग्रहणम्, भवतेः पिदर्थम्।<br>समीधे दस्यु हन्तमम्, पुत्र ईधे अथर्वणः।<br>बभूव। बभूविथ। कित्त्वाद् यथाक्रमं गुणवृद्धी न भवतः।<br>(इष्टि०) श्रन्थि-ग्रन्थि-दम्भि-स्वञ्जीनामिति वक्तव्यम्।<br>श्रेथतुः, श्रेथुः। ग्रेथतुः, ग्रेथुः। देभतुः, देभुः। परिषस्वजे, परिषस्वजाते। | |

| | | |
|---|---|---|
| कित् ५ | ७. मृड-मृद-गुध-कुष-क्लिश-वद-वसः क्त्वा<br>मृड-मृद-गुध-कुष-क्लिश-वद-वसः क्त्वा किद् भवति।<br>'न क्त्वा सेट्' इति कित्त्वप्रतिषेधस्यायं पुरस्तादपवादः।<br>गुध-कुष-क्लिशीनां तु 'रलो व्युपधाद्' इति विकल्पे प्राप्ते नित्यार्थं वचनम्। मृडित्वा। मृदित्वा। गुधित्वा। कुषित्वा। क्लिशित्वा। उदित्वा। उषित्वा। | क्त्वा ८ |
| क्त्वा ७ कित् ५ | ८. रुद-विद-मुष-ग्रहि-स्वपि-प्रच्छः संश्च<br>रुद-विद-मुष-ग्रहि-स्वपि-प्रच्छः सन्, चकारात् क्त्वा च किद् भवतः।<br>स्वपिप्रच्छ्योः सन्नर्थं ग्रहणम्, किदेव हि क्त्वा।<br>रुदित्वा, रुरुदिषति। विदित्वा, विविदिषति। मुषित्वा, मुमुषिषति। गृहीत्वा, जिघृक्षति। सुप्त्वा,, सुषुप्सति। पृष्ट्वा, पिपृच्छिषति। | सन् १० |
| सन् ८ कित् ५ | ९. इको झल्<br>इकः (इगन्ताद् धातोः) झल् (झलादिः) सन् किद् भवति।<br>सना धातुराक्षिप्यते, आक्षिप्तस्य धातोः इकः इति विशेषणमतः इक इत्यस्य इगन्ताद्धातोरित्यर्थः। झल्, सन् इति सामानाधिकरण्यमनुपपन्नमिति सामर्थ्यात्तदादिविधिर्विज्ञायते। चिचीषति। तुष्टूषति। चिकीर्षति। | इकः ११ झल् १३ |
| इकः ९ सन् ८<br>झल् ९ कित् ५ | १०. हलन्ताच्च<br>इकः परो यो हल् तदन्तात्परः झल् (झलादिः) सन् किद् भवति।<br>बिभित्सति। बुभुत्सते।<br>इकः इत्येव - यियक्षति।<br>झलित्येव - विवर्त्तिषते। | हलन्तात् ११ |
| झल्९ हलन्तात् १०<br>इकः ९ कित् ५ | ११. लिङ्सिचावात्मनेपदेषु<br>इकः परो यो हल् तदन्तात्परौ झलादी लिङ्सिचावात्मनेपदेषु कितौ भवतः।<br>लिङ् - भित्सीष्ट। भुत्सीष्ट।<br>सिच् - अभित्त। अबुद्ध।<br>इक इत्येव - यक्षीष्ट, अयष्ट।<br>आत्मनेपदेष्विति किम्? अस्राक्षीत्, अद्राक्षीत्।<br>'सृजिदृशोर्झल्यमकिति' इत्यमागमो न स्यात्। | लिङ् सिचौ १३<br>आत्मनेपदेषु १७ |
| लिङ्सिचौ ११<br>आत्मनेपदेषु ११<br>झल् ९ कित् ५ | १२. उश्च<br>उः (ऋवर्णान्ताद् धातोः) परौ झलादी लिङ्सिचौ किद्वद् भवतः, आत्मनेपदेषु।<br>लिङ् - कृषीष्ट, हृषीष्ट। सिच् - अकृत, अहृत। | |

| | | |
|---|---|---|
| लिङ्सिचौ ११<br>आत्मनेपदेषु ११<br>झल् ६ कित् ५ | १३. वा गमः<br>गमः परौ झलादी लिङ्सिचौ किद्वद् वा भवतः, आत्मनेपदेषु।<br>संगसीष्ट, संगंसीष्ट।<br>समगत, समगंस्त। 'ह्रस्वादङ्गात्' इति सिज्लोपः। | |
| आत्मनेपदेषु ११<br>कित् ५ | १४. हनःसिच्<br>हनः सिच् किद्भवति।<br>सिज्ग्रहणं लिङ्निवृत्त्यर्थम्, उत्तरत्रानुवृत्तिर्माभूत्।<br>आहत, आहसाताम्, आहसत।<br>'आङो यमहनः' इति सूत्रेण आत्मनेपदम्। | सिच् १७ |
| आत्मनेपदेषु ११<br>कित् ५ सिच् १४ | १५. यमो गन्धने<br>गन्धने (वर्तमानाद्) यमः सिच् किद् भवति, आत्मनेपदेषु।<br>गन्धनम् = सूचनम्।<br>उदायत, उदायसाताम्, उदायसत। सूचितवानित्यर्थः। | यमः १६ |
| यमः १५ सिच् १४<br>आत्मनेपदेषु ११<br>कित् ५ | १६. विभाषोपयमने<br>उपयमने (वर्तमानाद्) यमः सिच् विभाषा किद् भवति, आत्मनेपदेषु।<br>उपयमनम् = स्वीकरणम्, विवाहः, दारकर्म, पाणिग्रहणमित्यर्थः।<br>उपायत, उपायंस्त वा कन्याम्। उपायत, उपायंस्त वा भार्याम्। | |
| सिच् १४<br>आत्मनेपदेषु ११<br>कित् ५ | १७. स्थाघ्वोरिच्च<br>स्थाघ्वोः इद् (इकार आदेशः) भवति, सिच्च किद् भवति, आत्मनेपदेषु परतः।<br>स्था – उपास्थित, उपास्थिषाताम्, उपास्थिषत।<br>घु – अदित, अधित। | |
| कित् ५ | १८. न क्त्वा सेट्<br>सेट् क्त्वा किद् न भवति।<br>शयितः, शयितवान्। प्रस्वेदितः, प्रस्वेदितवान्। प्रमेदितः, प्रमेदितवान्। प्रक्ष्वेदितः, प्रक्ष्वेदितवान्। प्रधर्षितः, प्रधर्षितवान्। | सेट् २६ न २५ |
| कित् ५ न १८<br>सेट् १८ | १९. निष्ठा शीङ-स्विदि-मिदि-क्ष्विदि-धृषः<br>शीङ-स्विदि-मिदि-क्ष्विदि- धृषः सेण्निष्ठा किद् न भवति।<br>शयितः, शयितवान्। प्रस्वेदितः, प्रस्वेदितवान्। प्रमेदितः, प्रमेदितवान्। प्रक्ष्वेदितः, प्रक्ष्वेदितवान्। प्रधर्षितः, प्रधर्षितवान्। | निष्ठा २२ |
| कित् ५ न १८<br>सेट् १८ निष्ठा १९ | २०. मृषस्तितिक्षायाम्<br>तितिक्षायाम् (वर्तमानाद्) मृषः सेण्निष्ठा किद् न भवति।<br>तितिक्षा = क्षमा।<br>मर्षितः, मर्षितवान्। | |

| | | |
|---|---|---|
| कित् ५ न १८ सेट् १८ निष्ठा १६ | २१. उदुपधाद् भावादिकर्मणोरन्यतरस्याम्<br>उदुपधाद् (धातोः) भावादिकर्मणोः (वर्तमाना) सेण्निष्ठा अन्यतरस्यां किद् न भवति।<br>आदिभूतक्रियाक्षण आदिकर्म, तस्मिन् भूतत्वेन विवक्षिते यः क्तः भवति स आदिकर्मणि विहितः क्तः इत्युच्यते।<br>भावे - द्युतितमनेन, द्योतितमनेन। मुदितमनेन, मोदितमनेन।<br>आदिकर्मणि - प्रद्युतितः, प्रद्योतितः। प्रमुदितः, प्रमोदितः। | |
| कित् ५ न १८ सेट् १८ निष्ठा १६ | २२. पूङः क्त्वा च<br>पूङः क्त्वा, सेण्निष्ठा च किद् न भवति।<br>पवितः, पवितवान्।<br>क्त्वा प्रत्ययस्य 'न क्त्वा सेट्' इति सिद्ध एव प्रतिषेधः। अतोऽत्र क्त्वाग्रहणमुत्तरार्थम्। | क्त्वा २६ |
| कित् ५ न १८ सेट् १८ क्त्वा २२ | २३. नोपधात्थफान्ताद्वा<br>नोपधात्, थ-फन्तात् सेट् क्त्वा न वा किद् भवति।<br>ग्रन्थ् - ग्रथित्वा, ग्रन्थित्वा।<br>गुम्फ्- गुफित्वा, गुम्फित्वा। | वा २६ |
| कित् ५ न १८ सेट् १८ क्त्वा २२ वा २३ | २४. वञ्चि-लुञ्च्यृतश्च<br>वञ्च-लुञ्च्यृतश्च सेट् क्त्वा न वा किद् भवति। 'ऋत' इति सौत्रो धातुः।<br>वचित्वा, वञ्चित्वा। लुचित्वा, लुञ्चित्वा। ऋतित्वा, अर्तित्वा। | |
| कित् ५ न १८ सेट् १८ क्त्वा २२ वा २३ | २५. तृषि-मृषि-कृशेः काश्यपस्य<br>तृषि-मृषि-कृशेः सेट् क्त्वा न वा किद् भवति, काश्यपाचार्यस्य मतेन।<br>तृषित्वा, तर्षित्वा। मृषित्वा,मर्षित्वा। कृशित्वा,कर्शित्वा।<br>काश्यपग्रहणं पूजार्थम्, वेत्येव हि वर्तते। | |
| कित् ५ सेट् १८ क्त्वा २२ वा २३ | २६. रलो व्युपधाद्धलादेः संश्च<br>व्युपधाद् हलादेः रलः (रलन्ताद् धातोः) परः सेट् सन्प्रत्ययः, चकारात् सेट् क्त्वा च वा किद्वद् भवति।<br>द्युतित्वा, द्योतित्वा। दिद्युतिषते, दिद्योतिषते।<br>लिखित्वा, लेखित्वा। लिलिखिषति, लिलेखिषति। | |

| | | |
|---|---|---|
| | २७. ऊकालोऽज्झ्रस्व-दीर्घ-प्लुतः<br>'ऊ' इति त्रयाणाम् = मात्रिक-द्विमात्रिक-त्रिमात्रिकाणामुकाराणां कृतसन्धिनिर्देशः। ऊकाल इत्यत्र उश्च, ऊश्च,उ३श्च इति विग्रहे द्वन्द्वे कृते जसि वः इति, वां कालः इति उकालः, ऊकाल इव कालो यस्येति विग्रहे बहुव्रीहिसमासः। अतः अत्र वाक्यत्रयं सम्पद्यते -<br>१. उकालोऽज् ह्रस्वसंज्ञो भवति।<br>२. ऊकालोऽज् दीर्घसंज्ञो भवति।<br>३. उ३कालोऽच् प्लुतसंज्ञो भवति।<br>क्रमेणोदाहरणम् - अग्निचित्। लक्ष्मीच्छाया। आगच्छ कृष्ण ३ अत्र गौश्चरति। | अच् ३१<br>ह्रस्वदीर्घप्लुतः२८ |
| अच् २७<br>ह्रस्वदीर्घप्लुताः २७ | २८. अचश्च<br>ह्रस्व-दीर्घ-प्लुतशब्दैर्विधीयमानोऽच् अचः एव स्थाने भवति।<br>परिभाषेयं स्थानिनियमार्था।<br>'ह्रस्वो नपुंसके प्रातिपदिकस्य'-अतिरि, अतिनु।<br>'अचः' इति किम्? सुवाग् ब्राह्मण्कुलम्।<br>'अकृत्सार्वधातुकयोर्दीर्घः' - चीयते, श्रूयते।<br>'अचः' इति किम्? भिद्यते, छिद्यते।<br>वाक्यस्य टेः प्लुत उदात्तः - देवदत्त३। यज्ञदत्त३।<br>अच इति किम्? अग्निचि३त्। सोमसु३त्। तकारस्य न भवति।<br>'दिव औत्' - द्यौः, 'दिव उत्' - द्युभ्याम्, 'पथिमथ्यृभुक्षामात्' पन्थाः, 'त्यदादीनामः' - सः ; एषु ह्रस्वादिशब्दैरचो विधानाभावाद् हलः स्थाने भवन्ति औदित्यादय आदेशाः। | |
| अच् २७ | २९. उच्चैरुदात्तः<br>उच्चैः (उच्चैः स्थानाद् उच्चार्यमाणः) अच् उदात्तसंज्ञो भवति।<br>ये, ते, के। | |
| अच् २७ | ३०. नीचैरनुदात्तः<br>नीचैः (नीचैः स्थानादुच्चार्यमाणः) अच् अनुदात्तसंज्ञो भवति।<br>अर्वाङ्। अकारोऽत्रानुदात्तः। | |
| अच् २७ | ३१. समाहारः स्वरितः<br>उदात्तत्वानुदात्तत्वयोर्वर्णधर्मयोर्यस्मिन्नचि समाहारो भवति सोऽच् स्वरितसंज्ञको भवति।<br>क्व। | |

| | | |
|---|---|---|
| | ३२. तस्यादित उदात्तमर्धह्रस्वम्<br>स्वरितस्यादितोऽर्धह्रस्वम् (अर्धमात्रा) उदात्तं भवति, परिशिष्टा मात्राः अनुदात्ता भवन्ति।<br>सूत्रे अर्धह्रस्व शब्दस्य अर्धमात्रा-इत्यर्थः। तेनास्य प्रवृत्तिः दीर्घप्लुतयोरपि भवति।<br>तत्रानुदात्तभागस्य श्रवणम् उदात्तस्वरितपरत्वे, उदात्तभागस्य च श्रवणम् अनुदात्तपरत्वे भवति इति प्रातिशाख्ये प्रसिद्धम्।<br>क्व वोऽश्वाः, रथानां न येऽराः, शतचक्रं योऽह्यः इत्यादिषु क्व, ये, यो इति स्वरितत्वयुक्ते पदे अनुदात्तस्य श्रवणं भवति।<br>अग्निमीले इत्यत्र मकारोत्तरेकारः स्वरितः, तत्रोदात्तस्य श्रवणं भवति। | |
| | ३३. एकश्रुति दूरात्सम्बुद्धौ<br>दूरात् सम्बुद्धौ (सम्बोधने, आह्वाने च) एकश्रुतिः भवति।<br>उदात्तादीनां स्वराणामविभागेन अवस्थानम् एकश्रुतिः कथ्यते।<br>आगच्छ भो माणवक देवदत्त३! | एकश्रुति ३६ |
| एकश्रुति ३३ | ३४. यज्ञकर्मण्यजपन्यूङ्खसामसु<br>जपं, न्यूङ्खान्, सामानि च वर्जयित्वा यज्ञकर्मणि प्रयुक्तो मन्त्र एकश्रुतिर्भवति।<br>अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्।<br>यज्ञकर्मणीति किम्? संपाठे मा भूत्। | यज्ञकर्मणि ३५ |
| यज्ञकर्मणि ३४ | ३५. उच्चैस्तरां वा वषट्कारः<br>यज्ञकर्मणि वौषट्कारः उच्चैस्तरां वा भवति, एकश्रुतिर्वा।<br>उच्चैतराम् = उदात्ततरः।<br>'वषट्' शब्देनात्र 'बौषट्' शब्दो लक्ष्यते, 'वौषट्' इत्यस्यैवेदं स्वरविधानम्। यद्येवम्, वौषड्ग्रहणमेव कस्मान्न कृतम्? वैचित्र्यार्थम्। विचित्रा हि सूत्रस्य कृतिः पाणिनेः।<br>सोमस्याग्ने वीही३ वौ३षट्।<br>सोमस्याग्ने वीही३ वौ३षट्। | |
| एकश्रुति ३३ | ३६. विभाषा छन्दसि<br>छन्दसि विभाषा एकश्रुतिर्भवति, पक्षान्तरे त्रैस्वर्यमेव।<br>वेति प्रकृते विभाषाग्रहणं 'यज्ञकर्मणि' इत्यस्य निवृत्त्यर्थम्।<br>तेनायं स्वध्यायकालेऽपि पाक्षिक ऐकश्रुत्यविधिर्भवति।<br>इषे त्वोर्जे त्वा, इषे त्वोर्जे त्वा। अग्न आयाहि वीतये, अग्न आयाहि वीतये। | |

| | | |
|---|---|---|
| एकश्रुति ३३ | ३७. न सुब्रह्मण्यायां स्वरितस्य तूदात्तः<br>सुब्रह्मण्यायामेकश्रुतिर्नभवति, स्वरितस्य तूदात्तो भवति।<br>सुब्रह्मण्यो३म्। सुब्रह्मणि साधुरित्यर्थे यत् प्रत्ययः।<br>निपातेन ओम् शब्देनैकादेशे कृते निष्पनने सुब्रह्मण्योम्<br>इति शब्दे ओकारः स्वरितः, तस्योदात्तो विधीयतेऽनेन। | सुब्रह्मण्यायां ३८<br>स्वरितस्य ३८ |
| सुब्रह्मण्यायां ३७<br>स्वरितस्य ३७ | ३८. देवब्रह्मणोरनुदात्तः<br>सुब्रह्मण्यायां देवब्रह्मणोः स्वरितस्यानुदात्तो भवति।<br>देवा ब्राह्मणा आगच्छत। द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे<br>शेषनिघाते चोदात्तादनुदात्तस्य स्वरितः कृतः, तस्यानुदात्तो<br>भवति। | |
| एकश्रुति ३३ | ३९. स्वरितात्संहितायामनुदात्तानाम्<br>स्वरितात्संहितायामनुदात्तानाम् एकश्रुतिर्भवति।<br>इमं मे गङ्गे यमुने सरस्वति शुतुद्रि।<br>इममित्यन्तोदात्तम्, मे इति अनुदात्तम्, तत्पुनः<br>'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितं सम्पद्यते। तस्मात्<br>स्वरितात्परेषामनुदात्तानां गङ्गे- प्रभृतीनामेकश्रुतिर्भवति।<br>संहिताग्रहणं किम्? अवग्रहे मा भूत्। इमं मे गङ्गे यमुने<br>सरस्वति। अवग्रहः = असंहिता- पाठः। | अनुदात्तानाम् ४० |
| अनुदात्तस्य ३९ | ४०. उदात्तस्वरितपरस्य सन्नतरः<br>उदात्तस्वरितपरस्यानुदात्तस्य सन्नतरः (आदेशः) भवति।<br>सन्नतरः = अनुदात्ततरः।<br>उदात्तपरस्य - देवा मरुतः पृश्निमातरोऽपः। 'मातरोऽपः'<br>इत्यत्र पकाराकार उदात्तः, ओकारश्चानुदात्तः,<br>तस्यानुदात्तस्य सन्नतर आदेशो भवति।<br>माणवक जटिलाध्यापक क्व गमिष्यसि। 'क्व' इति<br>स्वरितः, तस्मिन् परभूते 'क' इत्यनुदात्तस्य सन्नतर<br>आदेशो भवति। | |
| | ४१. अपृक्त एकाल् प्रत्ययः<br>एकाल् प्रत्ययः अपृक्तसंज्ञो भवति।<br>स्पृशोऽनुदके क्विन् - घृतस्पृक्। भजो ण्विः - अर्धभाक्,<br>पादभाक्। | |
| | ४२. तत्पुरुषः समानाधिकरणः कर्मधारयः<br>समानाधिकरणः तत्पुरुषः कर्मधारयसंज्ञको<br>भवति।<br>अत्राधिकरणशब्दोऽभिधेयवाची समानाधिकरण इत्यस्य<br>समानाभिधेय इत्यर्थः।<br>महती चासौ नवमी महानवमी। | |

| | | |
|---|---|---|
| | ४३. प्रथमानिर्दिष्टं समास उपसर्जनम्<br>समासे = समासविधायकसूत्रे यत् प्रथमा (प्रथमान्तं पदम्) तेन निर्दिष्टम् (पदम्) उपसर्जनसंज्ञं भवति।<br>यथा – 'द्वितीया-श्रितातीत-पतितगतात्यस्त- प्राप्तापन्नैः' इति समासविधायके सूत्रे द्वितीयेति प्रथमान्तं पदम्, तेन निर्दिष्टस्य कष्टं श्रितः, कष्टश्रित इत्यादौ कष्टमित्यस्य उपसर्जनसंज्ञा भवति। | समासे ४४<br>उपसर्जनम् ४४ |
| समासे ४३<br>उपसर्जनम् ४३ | ४४. एकविभक्ति चाऽपूर्वनिपाते<br>समासार्थविग्रहवाक्ये यद् एकविभक्ति = नियविभक्तिकं पदम्, तदपि उपसर्जनसंज्ञं भवति,<br>पूर्वनिपाते = पूर्वप्रयोगविषये तु तदुपसर्जनसंज्ञं न भवति।<br>मालाम् अतिक्रान्तः, अतिक्रान्तम्, अतिक्रान्तेन, अतिक्रान्ताय, अतिक्रान्तात्, अतिक्रान्तस्य, अतिक्रान्ते वा<br>अतिमालः, अतिमालम्, अतिमालेन, अतिमालाय, अतिमालात्, अतिमालस्य, अतिमाले वा।<br>एषु 'गोस्त्रियोरुपसर्जनस्य' इति सूत्रेण ह्रस्वार्थम् उपसर्जनसंज्ञा न तु पूर्वनिपातार्थम्। | |
| | ४५. अर्थवदधातुरप्रत्ययः प्रातिपदिकम्<br>अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं भवति, धातुप्रत्ययौ वर्जयित्वा।<br>डित्थः। कपित्थः। कुण्डम्। पीठम्।<br>अधातुरिति किम्? अहन्। हन्तेर्लङ्, तिप्।<br>अप्रातिपदिकत्वेन नलोपो न भवति।<br>अप्रत्यय इति किम्? काण्डे, कुड्ये।<br>अप्रातिपदिकत्वेन 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्यनेन ह्रस्वो न भवति। | प्रातिपदिकम्<br>४६ |
| प्रातिपदिकम् ४५ | ४६. कृत्तद्धितसमासाश्च<br>कृदन्ताः, तद्धितान्ताः, समासाश्च प्रातिपदिकसंज्ञका भवन्ति।<br>कृत् – कारकः, हारकः, कर्त्ता, हर्त्ता।<br>तद्धित – औपगवः, दाशरथिः।<br>समासः – राजपुरुषः, ब्रह्मणकम्बलः। | |
| | ४७. ह्रस्वो नपुंसके प्रातिपदिकस्य<br>नपुंसके प्रातिपदिकस्य ह्रस्वो भवति।<br>अतिरि कुलम्। अतिनु कुलम्। | ह्रस्वः ४८<br>प्रातिपदिकस्य ४८ |

| | | |
|---|---|---|
| ह्रस्वः ४७<br>प्रातिपदिकस्य ४७ | ४८. गोस्त्रियोरुपसर्जनस्य<br>उपसर्जनस्य इत्यत्र प्रत्येकं सम्बन्धाद् एकवचनम्।<br>उपसर्जनगोशब्दान्तस्य, उपसर्जनस्त्रीप्रत्यान्तस्य च प्रातिपदिकस्य ह्रस्वो भवति।<br>चित्रगुः। निष्कौशाम्बिः।<br>(वा०) ईयसो बहुव्रीहेः प्रतिषेधो वक्तव्यः।<br>बहुश्रेयसी। विद्यमानश्रेयसी। | स्त्रियाः ४९<br>उसर्जनस्य ४९ |
| स्त्रियाः ४८<br>उसर्जनस्य ४८ | ४९. लुक्तद्धितलुकि<br>तद्धितलुकि सति उपसर्जनस्य स्त्रीप्रत्ययस्य लुग्भवति।<br>पञ्च इन्द्राण्यो देवता अस्य इति पञ्चेन्द्रः। अत्र 'द्विगोर्लुगनपत्ये' इति तद्धितस्याणो लुगिति प्रकृतसूत्रेण स्त्रीप्रत्ययस्यापि लुक्। | तद्धितलुकि ५० |
| तद्धितलुकि ४९ | ५०. इद् गोण्याः<br>तद्धितलुकि सति गोण्या इद् (इकारः) भवति।<br>पूर्वेण लुकि प्राप्ते इकारोऽनेन विधीयते।<br>पञ्चभिः गोणीभिः इति पञ्चगोणिः। | |
| | ५१. लुपि युक्तवद्व्यक्तिवचने<br>लुपि सति युक्तवत् (प्रकृतिवत्) व्यक्ति-वचने (लिङ्गसंख्ये) भवतः।<br>पञ्चालाः क्षत्रियाः पुँल्लिङ्गाः बहुवचनविषयाः, तेषां निवासो जनपदोऽपि पञ्चालाः। एवमेव बङ्गाः, मगधाः, मत्स्याः, अङ्गाः इत्येतेष्वपि।<br>सर्वत्र 'तस्य निवासः' इत्यनेन विहितस्याणः 'जनपदे लुप्' इति सूत्रेण लुब्भवति।<br>प्रकृतिभूतः शब्दः= युक्तः, व्यक्तिः = लिङ्गम्, वचनम् = संख्येति पूर्वाचार्यसङ्केतः। | संपूर्णसूत्रम् ५२ |
| लुपि ५१<br>युक्तवत् ५१<br>व्यक्तिवचने ५१ | ५२. विशेषणानां चाजातेः<br>लुपि सति लुबन्तस्य विशेषणानां चापि लुबन्तवल्लिङ्गवचने भवतः, जातिं वर्जयित्वा।<br>पञ्चालाः रमणीयाः, बह्नन्नाः, बहुक्षीरघृताः बहुमाल्यफलाः।<br>अजातेरिति किम्? पञ्चालाः जनपदः। | |
| | ५३. तदशिष्यं संज्ञाप्रमाणत्वात्<br>तद् = युक्तवद्वचनं न कर्त्तव्यम्। कुत्र किं लिङ्गं, किं च वचनं कर्त्तव्यमिति विषये संज्ञानामेव = लोकव्यवहाराणामेव प्रमाणत्वात्। | अशिष्यम् ५७ |

| | | |
|---|---|---|
| अशिष्यः ५३ | ५४. लुब्योगाप्रख्यानात्<br>लुबप्यशिष्यः, योगस्य = अवयवार्थस्य,<br>अप्रख्यानात् = अप्रतीतेः।<br>पञ्चालादयः शब्दाः क्षत्रियेषु यथा<br>रूढास्तथा जनपदेऽपीति तेषु 'तस्य<br>निवासः' 'अदूरभवश्च' इति तद्धितप्रत्यय<br>एव नोत्पत्स्यते, अतः लुपो<br>विधानमनर्थकमित्याशयः। | |
| | ५५. योगप्रमाणे च तदभावेऽदर्शनं स्यात्<br>पञ्चालादयः संज्ञाशब्दाः, न योगनिमित्ताः।<br>तच्चावश्यमेवाभ्युपगन्तव्यम्, योगप्रमाणे हि<br>तदभावेऽदर्शनं स्यात्। अयमाशयः - यदि<br>पञ्चालादिशब्दो योगस्य प्रमाणं = योगस्य वाचकः स्यात्,<br>तर्हि ततस्तदभावे= क्षत्रियादिभिः योगाभावे<br>देशविशेषाणां कृते पञ्चलादिशब्दानाम् अदर्शनम् =<br>अप्रयोगः स्यात्। दृश्यते च सम्प्रति विनैव क्षत्रियसम्बन्धेन<br>जनपदेषु पञ्चालादिशब्दानां प्रयोगः। अतोऽवसीयते यद्<br>नायं योगनिमित्तकः, अपि तु रूढिरूपेणैव तत्र प्रवर्तते<br>इति। | |
| अशिष्यम् ५३ | ५६. प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्<br>यत्पूर्वाचार्यैः 'प्रधानोपसर्जने प्रधानार्थं सह<br>ब्रूतः' प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इत्येवं रूपं वचनं कृतं<br>तदप्यशिष्यम्, अर्थस्यान्य- प्रमाणत्वात्। शब्दैरर्थाभिधानं<br>स्वाभाविकम्, न पारिभाषिकम्, अशक्यत्वात्, लोकत<br>एवार्थगतेरिति सूत्राशयः। | अर्थस्य अन्य<br>प्रमाणत्वात् ५७ |
| अर्थस्य ५६<br>अन्यप्रमाणत्वात्<br>५६ | ५७. कालोपसर्जने च तुल्यम्<br>कालोपसर्जने चाऽपि प्रधानप्रत्ययार्थवचनमिव अशिष्ये,<br>अर्थस्यान्यप्रमाणत्वात्।<br>अयमाशयः - पूर्वचार्यैः कालस्य, उपसर्जनस्य चापि<br>परिभाषा कृता, तद्यथा -''एषोऽद्यतनः कालः'',<br>'अप्रधानमुपसर्जनम्' इति, सा परिभाषा न कर्त्तव्या,<br>लोकत एव कोऽद्यतनः, कोऽनद्यतनः, किमुपसर्जनम्<br>इत्यादीनामर्थानां बोधो भविष्यति। अतः तदर्थं शास्त्रीयं<br>वचनं नापेक्षते इति। | |
| | ५८. जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्<br>जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यां भवति।<br>संपन्ना यवाः, संपन्नोः यवो वा।<br>जातिग्रहणं किम्? देवदत्तः, यज्ञदत्तः।<br>(वा०) संख्याप्रयोगे प्रतिषेधो वक्तव्यः।<br>एको व्रीहिः सम्पन्नः। | एकस्मिन् ५६<br>बहुवचनम् ६०<br>अन्यतरस्याम् ६२ |

| | | |
|---|---|---|
| एकस्मिन् ५८<br>बहुवचनम् ५८<br>अन्यतरस्याम् ५८ | ५९. अस्मदो द्वयोश्च<br>एकस्मिन्, द्वयोश्च बहुवचनमन्यतरस्यां भवति।<br>अहं ब्रवीमि, वयं ब्रूमः।<br>आवां ब्रूवः, वयं ब्रूमः।<br>(वा०) सविशेषणस्य प्रतिषेधो वक्तव्यः।<br>अहं देवदत्तो ब्रवीमि।<br>(वा०) युष्मदि गुरावेकेषाम्।<br>त्वं मे गुरुः, यूयं मे गुरवः। | द्वयोः ६१ |
| द्वयोः ५९<br>बहुवचनम् ५८<br>अन्यतरस्याम् ५८ | ६०. फल्गुनी-प्रोष्ठपदानां च नक्षत्रे<br>द्वयोरर्थयोः वर्तमानानां फल्गुनी-प्रोष्ठपदानां बहुवचनमन्यतरस्यां भवति, नक्षत्रेऽभिधेये।<br>कदा पूर्वे फल्गुन्यौ, कदा पूर्वाः फल्गुन्यः।<br>कदा पूर्वे प्रोष्ठपदे। कदा पूर्वाः प्रोष्ठपदाः।<br>नक्षत्रे इति किम? फल्गुन्ये माणविके। फल्गुन्योर्जाते इत्यर्थः। | नक्षत्रे ६३ |
| अन्यतरस्याम् ५८<br>नक्षत्रे ६० | ६१. छन्दसि पुनर्वस्वोरेकवचनम्<br>द्वयोरर्थयोर्वाचकात् पुनर्वसुशब्दाद् एकवचनमन्यतरस्यां छन्दसि विषये।<br>पुनर्वसु नक्षत्रमदितिर्देवता। पुनर्वसू नक्षत्रमदितिर्देवता। | छन्दसि ६२<br>एकवचनम् ६२ |
| छन्दसि ६१<br>एकवचनम् ६१<br>अन्यतरस्याम् ५८ | ६२. विशाखयोश्च<br>द्वयोरर्थयोः वाचकाद् विशाखाशब्दात् एकवचनमन्यतरस्यां भवति छन्दसि विषये।<br>विशाखा नक्षत्रमिन्द्राग्नी देवता।<br>विशाखे नक्षत्रमिन्द्राग्नी देवता। | |
| | ६३. तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्<br>तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यं भवति।<br>तिष्यः एकः, पुनर्वसू द्वौ, तेषां द्वन्द्वे बहुवचनप्रसङ्गे नित्यं द्विवचनमनेन विधीयते।<br>उदितौ तिष्यपुनर्वसू दृश्येते। सूत्रे नित्यग्रहणं विकल्पनिवृत्त्यर्थम्। | |
| | ६४. सरूपाणामेकशेष एकविभक्तौ<br>एकविभक्तौ सरूपाणां शब्दानां मध्ये एकस्य शेषो भवति।<br>वृक्षश्च, वृक्षश्च इति वृक्षौ।<br>वृक्षश्च, वृक्षश्च, वृक्षश्च इति वृक्षाः।<br>एकशेष इत्यत्रैकग्रहणं किम्?<br>द्विबह्वोः शेषो मा भूत्।<br>एकविभक्ताविति किम्? पयः पयो जरयति। ब्राह्मणाभ्यां कृतं ब्राह्मणाभ्यां देहि। | शेषः ७३ |

| | | |
|---|---|---|
| शेषः ६४ | ६५. वृद्धो यूना तल्लक्षणश्चेदेव विशेषः<br>वृद्धो यूना सहवचने शिष्यते तल्लक्षणश्चेदेव विशेषः।<br>वृद्धशब्दः पूर्वचार्यसंज्ञा गोत्रस्य। 'अपत्यमन्तर्हितं वृद्धम्' इति पूर्वाचार्याणां परिभाषा।<br>गार्ग्यश्च गार्ग्यायणश्च इति गार्ग्यौ। वात्स्यश्च वात्स्यायनश्च इति वात्स्यौ।<br>तल्लक्षण इति किम्? गार्ग्यवात्स्यायनौ।<br>वृद्ध इति किम्? गर्गश्च गार्ग्यायणश्च गर्गगार्ग्यायणौ।<br>यूनेति किम्? गार्ग्यश्च गर्गश्च गार्ग्यगार्गौ। | वृद्धोयूना ६६<br>तल्लक्षणश्चेदेव<br>विशेषः ६९ |
| वृद्धोयूना ६५<br>तल्लक्षणश्चेदेव<br>६५<br>विशेषः ६५<br>शेषः ६४ | ६६. स्त्री पुंवच्च<br>स्त्री वृद्धा यूना सहवचने शिष्यते,<br>तल्लक्षणश्चेदेवं विशेषः, सा पुंवच्च भवति।<br>गार्गी च गार्ग्यायणश्चेति गार्ग्यौ।<br>वात्सीच वात्स्यायनश्चेति वात्स्यौ।<br>दाक्षी च दाक्षायणश्चेति दाक्षी। | |
| तल्लक्षणश्चेदेव<br>६५<br>विशेषः ६५<br>शेषः ६४ | ६७. पुमान् स्त्रिया<br>पुमान् स्त्रिया सहवचने शिष्यते,<br>तल्लक्षणश्चेदेव विशेषः।<br>ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ। कुक्कुटश्च कुक्कुटी च कुक्कुटौ। | |
| शेषः ६४ | ६८. भ्रातृपुत्रौ स्वसृ-दुहितृभ्याम्<br>भ्रातृपुत्रौ स्वसृ-दुहितृभ्यां सहवचने यथासंख्यं शिष्येते।<br>भ्राता च स्वसा च भ्रातरौ।<br>पुत्रश्च दुहिता च पुत्रौ। | |
| तल्लक्षणश्चेदेव<br>६५<br>विशेषः ६५<br>शेषः ६४ | ६९. नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्<br>नपुंसकमनपुंसकेन सहवचने शिष्यते, एकवच्चास्य कार्यं भवति अन्यतरस्याम्।<br>शुक्लश्च पटः, शुक्ला च शाटी, शुक्लंच<br>वस्त्रम् तदिदं शुक्लम्, तानीमानि शुक्लानि। | अन्यतरस्याम्७१ |
| अन्यतरस्याम् ६९<br>शेषः ६४ | ७०. पिता मात्रा<br>पिता मात्रा सहवचने शिष्यतेऽन्यतरस्याम्।<br>माता च पिता पितरौ। पक्षे मातापितरौ। | |
| अन्यतरस्याम् ६९<br>शेषः ६४ | ७१. श्वशुरः श्वश्र्वा<br>श्वशुरः श्वश्र्वा सहवचने शिष्यतेऽन्यतरस्याम्।<br>श्वशुरश्च श्वश्रूश्च श्वशुरौ, श्वश्रूश्वशुरौ। | |
| शेषः ६४ | ७२. त्यदादीनि सर्वैर्नित्यम्<br>त्यादादीनि शब्दस्वरूपाणि सर्वैः सहवचने नित्यं शिष्यन्ते।<br>सूत्रे नित्यग्रहणं विकल्पनिवृत्यर्थम्।<br>स च देवदत्तश्च तौ। यश्च देवदत्तश्च यौ।<br>(वा०) त्यदादीनां मिथो यद्यत्परं तत्तच्छिष्यते।<br>स च यश्च यौ। यश्च कश्च कौ। | |

| शेषः ६४ | ७३. ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री<br>ग्राम्याणां पशुसंघेषु सहविवक्षायां स्त्री शिष्यते, न तु तरुणेषु।<br>गाव इमाः। अजा इमाः।<br>ग्राम्यग्रहणं किम्? रुरव इमे। पृषता इमे।<br>संघेष्विति किम्? एतौ गावौ चरतः। अतरुणोष्विति किम् ? वत्सा इमे। वर्करा इमे। | |
|---|---|---|

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां प्रथमाध्यायस्य द्वितीयः पादः।।

## ।। अथ प्रथमाध्यायस्य तृतीयःपादः ।।

| | | |
|---|---|---|
| | १. भूवादयो धातवः<br>भूप्रभृतयो, वासदृशाः शब्दाः अर्थात्<br>क्रियावाचिनो 'भू' इत्येवमादयः शब्दाः धातुसंज्ञा भवन्ति।<br>भू सत्तायाम् - भवति। एध वृद्धौ - एधते। | |
| | २. उपदेशेऽजनुनासिक इत्<br>उपदेशेऽनुनासिकोऽजित्संज्ञको भवति।<br>प्रतिज्ञासमधिगम्या अनुनासिकाः। 'इदमेवम्' इति कथनम्, तत्त्वज्ञापको व्यवहारश्च प्रतिज्ञा।<br>उपदेशः = आद्योच्चारणम्।<br>एध। स्पर्द्ध। | इत् ८<br>उपदेशे ५ |
| इत् २<br>उपदेशे २ | ३. हलन्त्यम्<br>उपदेशेऽन्त्यं हल् इत्संज्ञं भवति।<br>अइउण् - णकारः। ऋलृक् - ककारः। | हलन्त्यम् ४ |
| हलन्त्यम् ३<br>इत् २ | ४. न विभक्तौ तुस्माः<br>विभक्तौ अन्त्यास्तुस्माः (तवर्ग-सकार-मकाराश्च) इत्संज्ञका न भवन्ति।<br>तु- वृक्षात्। स् - जस् - ब्राह्मणाः। तस्, थस्- पचतः, पचथः। मकारः - अपचताम्, अपचतम्। | |
| इत् २ उपदेशे २ | ५. आदिर्ञिटुडवः<br>उपदेशे आदिभूता ञि, टु, डु - इत्येते इत्संज्ञका भवन्ति।<br>आदिशब्दः प्रत्येकमभिसंबध्यते, तेन सूत्रे 'आदिः' इत्यत्रैकवचनम्।<br>ञिमिदा - मिन्नः। टुवेपृ - वेपथुः। डुपचष् - पक्त्रिमम्। | आदिः ८ |
| आदिः ५ इत् २ | ६. षः प्रत्ययस्य<br>प्रत्ययस्यादिः ष इत्संज्ञो भवति।<br>'शिल्पिनि ष्वुन्' - नर्त्तकी, रजकी। | प्रत्ययस्य ८ |

| | | |
|---|---|---|
| प्रत्ययस्य ६<br>आदिः ५ इत् २ | **७. चुटू**<br>प्रत्ययस्यादी चुटू (चवर्ग-टवर्गौ) इत्संज्ञौ भवतः।<br>चु - गोत्रे कुञ्जादिभ्यश्च्फञ्- कौञ्जायन्यः।<br>'व्रातच्फञोरस्त्रियाम्' इति स्वार्थे ञ्यः। छस्य ईयादेशविधानाद् इत्त्वं न भवति। जस् - ब्राह्मणाः। झस्यान्तादेशविधानादित्त्वं न भवति। 'शण्डिकादिभ्यो ञ्यः' - शाण्डिक्यः।<br>टु - चरेष्टः - कुरुचरी। ठस्येकादेश-विधानादित्त्वं न भवति। 'सप्तम्यां जनेर्डः' - उपसरजः। ढस्यैयादेशविधानादित्त्वं न भवति।<br>'अन्नाण्णः' - आन्नः।<br>पृथग्योगकरणमस्य विधेयस्यानित्यत्वज्ञापनार्थम्।<br>अतः चुञ्चुप्चणपादीनां चकारादीनामित्संज्ञा न भवति। | |
| प्रत्ययस्य ६<br>आदिः ५ इत् २ | **८. लशक्वतद्धिते**<br>प्रत्ययस्यादिभूतं लशकु (लकार-शकार-तवर्गाः) इत्संज्ञं भवति, न तु तद्धिते।<br>ल - 'ल्युट् च' - चयनम्। जयनम्।<br>श - 'कर्तरिशप्' - भवति, पचति।<br>कु - 'क्त-क्तवतू निष्ठा' - भुक्तः, भुक्तवान्।<br>'प्रियवशे वदः खच्' - प्रियंवदः, वशंवदः।<br>'ग्लाजिस्थश्च क्स्नुः' - ग्लास्नुः, जिष्णुः भूष्णुः।<br>'भञ्जभासमिदो घुरच्' - भङ्गुरम्।<br>ङसि, ङस् - वृक्षात्, वृक्षस्य।<br>अतद्धित इति किम्? 'प्राणिस्थादातो लजन्यतरस्याम्' - चूडालः। अत्र लच्प्रत्ययस्यादिभूतस्य लकारस्य न इत्संज्ञा, तद्धितत्वात्। | |
| | **९. तस्य लोपः**<br>तस्य = इत्संज्ञकस्य लोपो भवति।<br>तथा चैवोदाहृतम्।<br>तस्य ग्रहणं सर्वलोपार्थम् अलोऽन्त्यस्य मा भूत् - 'आदिर्ञिटुडवः' इति। | |
| स्वरितेन ११ | **१०. यथासंख्यमनुदेशः समानाम्**<br>समानाम् = समसंख्यानाम् स्थान्यादेशादीनाम् अनुदेशः = सम्बन्धः, यथासंख्यम् = यथाक्रमं भवति।<br>संख्याशब्दोऽत्र क्रमविशिष्टज्ञानवाचकः।<br>'एचोऽयवायावः' -हरये, विष्णवे, नायकः, पावकः।<br>'तुदी-शलातुर-वर्मती-कूचवाराड्ढक्-छण्-ढञ्-यकः' - तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः। | |

| | | |
|---|---|---|
| | ११. स्वरितेनाधिकारः<br>स्वरितेन = चिह्नविशेषेण अधिकारो वेदितव्यः।<br>प्रतिज्ञासमधिगम्याः स्वरिताः। 'प्रत्ययः' धातोः' 'ङ्याप्रातिपदिकात्' 'अङ्गस्य' 'भस्य' 'पदस्य'। | स्वरितेन १० |
| | १२. अनुदात्त-ङित आत्मनेपदम्<br>अनुदात्तेतो, ङितश्च धातोर्विहितस्य लस्य स्थाने आत्मनेपदं भवति।<br>अनुदात्तेत्- आस-आस्ते। एध- एधते।<br>ङिद् - षूङ् - सूते। शीङ् - शेते।<br>लस्य स्थाने विहितानां तिबादीनां विषये नियमो ऽयमिति धातोः, लस्य स्थाने इति लभ्यते। | आत्मनेपदम् ७७ |
| आत्मनेपदम् १२ | १३. भावकर्मणोः<br>भावे, कर्मणि च विहितस्य लस्य स्थाने आत्मनेपदं भवति।<br>भावे - ग्लायते भवता। सुप्यते भवता।<br>कर्मणि - क्रियते कटः। पच्यते ओदनः। | |
| आत्मनेपदम् १२ | १४. कर्तरि कर्मव्यतिहारे<br>कर्मव्यतिहारे कर्तरि आत्मनेपदं भवति।<br>व्यतिलुनते। व्यतिपुनते। कंर्मशब्दो ऽत्र क्रियावाचकः। व्यतिहारो विनिमयः।<br>यत्रान्यसम्बन्धिनीं क्रियामन्यः करोति, इतरसम्बन्धिनीं चेतरः, स कर्मव्यतिहारः। | कर्तरि ६३<br>कर्मव्यतिहारे १६ |
| कर्मव्यतिहारे १४<br>आत्मनेपदम् १२ | १५. न गतिहिंसार्थेभ्यः<br>गतिहिंसार्थेभ्यः कर्मव्यतिहारे कर्तरि आत्मनेपदं न भवति।<br>गत्यर्थेभ्यः - व्यतिगच्छन्ति। व्यतिसर्पन्ति।<br>हिंसार्थेभ्यः - व्यतिहिंसन्ति। व्यतिघ्नन्ति। | न १६ |
| कर्मव्यतिहारे १४<br>आत्मनेपदम् १२<br>न १५ | १६. इतरेतरान्यो ऽन्योपपदाच्च<br>इतरेतरान्यो ऽन्योपपदाच्च कर्मव्यतिहारे कर्तरि आत्मनेपदं न भवति।<br>इतरेतरस्य व्यतिलुनन्ति।<br>अन्योन्यस्य व्यतिलुनन्ति। | |
| आत्मनेपदम् १२ | १७. नेर्विशः<br>नेर्विशः आत्मनेपदं भवति।<br>निविशते। | |
| आत्मनेपदम् १२ | १८. परिव्यवेभ्यः क्रियः<br>परिव्यवेभ्यः क्रियः आत्मनेपदं भवति।<br>परिक्रीणीते, विक्रीणीते। अवक्रीणीते। | |

| | | |
|---|---|---|
| आत्मनेपदम् १२ | १९. विपराभ्यां जेः<br>विपराभ्यां जेरात्मनेपदं भवति।<br>विजयते। पराजयते। | |
| आत्मनेपदम् १२ | २०. आङो दोऽनास्यविहरणे<br>आङो दोऽनास्यविहरणे आत्मनेपदं भवति।<br>विद्यामादत्ते।<br>अनास्यविहरणे इति किम्? आस्यं व्याददाति। | आङः २१ |
| आत्मनेपदम् १२<br>आङः २१ | २१. क्रीडोऽनुसंपरिभ्यश्च<br>क्रीडोऽनुसंपरिभ्यः, चकाराद् आङश्च आत्मनेपदं भवति।<br>अनुक्रीडते। संक्रीडते। परिक्रीडते। आक्रीडते।<br>(वा०) शिक्षेर्जिज्ञासायाम्।<br>विद्यासु शिक्षते। विद्यां जिज्ञासितुं घटते इत्यर्थः।<br>(वा०) आशिषि नाथः।<br>सर्पिषो नाथते। सर्पिर्मे भूयादित्याशास्ते इत्यर्थः।<br>(वा०) हरतेर्गतिताच्छील्ये।<br>पैतृकमश्वा अनुहरन्ते।<br>मातृकं गावोऽनुहरन्ते।<br>(वा०) शप उपलम्भन इति वक्तव्यम्।<br>वाचा शरीरस्पर्शनम् उपलम्भनम्।<br>देवदत्ताय शपते। यज्ञदत्ताय शपते।<br>उपलम्भन इति किम्? शपति। | |
| आत्मनेपदम् १२ | २२. समव-प्र-विभ्यः स्थः<br>समवप्रविभ्यः स्थः (स्थाधातोः) आत्मनेपदं भवति।<br>सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते।<br>(वा०) आङः स्थः प्रतिज्ञाने इति वक्तव्यम्।<br>अस्ति सकारमात्रमातिष्ठते। | स्थः २६ |
| आत्मनेपदम् १२<br>स्थः २२ | २३. प्रकाशन-स्थेयाख्ययोश्च<br>प्रकाशन-स्थेयाख्ययोश्च स्थः आत्मनेपदं भवति।<br>स्वाभिप्रायकथनं प्रकाशनम्। विवादपदनिर्णेता स्थेयः।<br>प्रकाशने - तिष्ठते कन्या छात्रेभ्यः। तिष्ठते वृषली ग्रामपुत्रेभ्यः। प्रकाशयत्यात्मानमित्यर्थः।<br>स्थेयाख्यायाम् - त्वयि तिष्ठते। मयि तिष्ठते।<br>"संशय्य कर्णादिषु तिष्ठते यः।" | |
| आत्मनेपदम् १२<br>स्थः २२ | २४. उदोऽनूर्ध्वकर्मणि<br>अनूर्ध्वकर्मणि स्थः आत्मनेपदं भवति।<br>गेहे उत्तिष्ठते। कुटुम्बे उत्तिष्ठते। तदर्थं यतते इत्यर्थः।<br>अनूर्ध्वकर्मणीति किम्? आसनादुत्तिष्ठति। | |

| | | |
|---|---|---|
| आत्मनेपदम् १२<br>स्थः २२ | २५. उपान्मन्त्रकरणे<br>उपान्मन्त्रकरणे स्थः आत्मनेपदं भवति।<br>मन्त्रः करणम् = साधनभूतं यस्यार्थस्य स मन्त्रकरणः।<br>आग्नेय्याऽग्नीध्रमुपतिष्ठते।<br>मन्त्रकरणे इति किम्? भर्तारमुपतिष्ठति यौवनेन। | उपात् २६ |
| आत्मनेपदम् १२<br>स्थः २२<br>उपात् २५ | २६. अकर्मकाच्च<br>उपादकर्मकाच्च स्थः आत्मनेपदं भवति।<br>यावद् भुक्तमुपतिष्ठते। भुक्तमिति भोजने भोजने सन्निधीयते इत्यर्थः। भावे क्तप्रत्ययः।<br>अकर्मकादिति किम्? राजानमुपतिष्ठति। | अकर्मकात् २८ |
| आत्मनेपदम् १२<br>अकर्मकात् २६ | २७. उद्विभ्यां तपः<br>उद्विभ्याम् अकर्मकात् तपः आत्मनेपदं भवति।<br>उत्तपते, वितपते।<br>दीप्यते इत्यर्थः।<br>अकर्मकादित्येव - उत्तपति सुवर्णं सुवर्णकारः।<br>उत्तपते पृष्ठं सविता।<br>(वा०) स्वाङ्गकर्मकाच्चेति वक्तव्यम्।<br>उत्तपते पाणिम्। वितपते पाणिम्। | |
| आत्मनेपदम् १२<br>अकर्मकात् २६ | २८. आङो यमहनः<br>आङो यम-हनः अकर्मकादात्मनेपदं भवति।<br>आयच्छते। आहते, आहनाते, आहनते।<br>अकर्मकादित्येव - आयच्छति कूपाद् रज्जुम्।<br>आहन्ति वृषलं पादेन।<br>(वा०) स्वाङ्गकर्मकाच्चेति वक्तव्यम्।<br>आयच्छते पाणिम्। आहते शिरः। | |
| आत्मनेपदम् १२<br>अकर्मकात् २६ | २९. समो गम्यृच्छि-प्रच्छि-स्वरत्यर्ति-श्रु-विदिभ्यः<br>समो गम्यृच्छि-प्रच्छि-स्वरत्यर्ति-श्रु-विदिभ्यः अकर्मकेभ्यः आत्मनेपदं भवति।<br>गमि - संगच्छते। ऋच्छि-समृच्छते।<br>प्रच्छि-संपृच्छते। स्वरति-संस्वरते।<br>अर्ति-संकल्पा अस्य समरन्त; अर्तेर्लुङि च्लेरङ्, गुणः।<br>श्रु- संशृणुते। विदि- संवित्ते।<br>विदेर्ज्ञानार्थस्य ग्रहणमु, परस्मैपदिभिर्गमादिभिः साहचर्यान्न लाभार्थस्य स्वरितेत्त्वादुभयतोभाषस्य। | |

| | | |
|---|---|---|
| आत्मनेपदम् १२ | ३०. नि-समुप-विभ्यो ह्वः<br>अकर्मकादिति निवृत्तम्। नि-समुप-विभ्यो ह्वः आत्मनेपदं भवति।<br>निह्वयते। संह्वयते। उपह्वयते। विह्वयते।<br>(वा०) उपसर्गादस्यत्यूह्योर्वेति वाच्यम्।<br>निरस्यति, निरस्यते। समूहति, समूहते। | ह्वः ३१ |
| आत्मनेपदम् १२<br>ह्वः ३० | ३१. स्पर्धायामाङः<br>स्पर्धायामाङो ह्वः आत्मनेपदं भवति।<br>स्पर्द्धा = संघर्षः, परभिभवेच्छा, स विषयो धात्वर्थस्य। धातुस्तु शब्दक्रिय एव।<br>मल्लो मल्लमाह्वयते। छात्रश्छात्रमाह्वयते।<br>स्पर्द्धायामिति? गामाह्वयति गोपालः। | |
| आत्मनेपदम् १२ | ३२. गन्धनावक्षेपण-सेवन-साहसिक्य-प्रतियत्न-प्रकथनोपयोगेषु कृञः<br>गन्धनावक्षेपण-सेवन-साहसिक्य-प्रतियत्न-प्रकथनोपयोगेषु कृञ आत्मनेपदं भवति।<br>गन्धनम् = अपकारप्रयुक्तं हिंसात्मकं सूचनम्।<br>अवक्षेपणम् = भर्त्सनम्। सेवनम् = अनुवृत्तिः।<br>साहसिक्यम् = साहसिकं कर्म। प्रकथनम् = प्रकर्षेण कथनम्। प्रतियत्नः = धर्मादिप्रयोजनो विनियोगः।<br>क्रमेणोदाहरणम् - उत्कुरुते। श्येनो वर्तिकामुदाकुरुते। गणकानुपकुरुते। परदारान् प्रकुरुते। एधो दकस्योपस्कुरुते।<br>गाथाः प्रकुरुते। शतं प्रकुरुते। | कृञः ३५ |
| आत्मनेपदम् १२<br>कृञः ३५ | ३३. अधेः प्रसहने<br>अधेः कृञः आत्मनेपदं भवति प्रसहनेऽर्थे।<br>प्रसहनम् = अभिभवः, अपराजयो वा।<br>तमधिचक्रे।<br>तमभिबभूव इत्यर्थः, न तेन पराजित इत्यर्थो वा।<br>प्रसहने इति किम्? अर्थमधिकरोति। | |
| आत्मनेपदम् १२<br>कृञः ३५ | ३४. वेः शब्दकर्मणः<br>शब्दकर्मणः वेः कृञः आत्मनेपदं भवति।<br>कर्मशब्द इह कारकाभिधायी, न क्रियावचनः।<br>क्रोष्टा विकुरुते स्वरान्।<br>शब्दकर्मणः इति किम्? विकरोति पयः। | वेः ३५ |
| आत्मनेपदम् १२<br>वेः३४ कृञः ३५ | ३५. अकर्मकाच्च<br>वेः अकर्मकाच्च कृञः आत्मनेपदं भवति।<br>छात्राः विकुर्वते। विकारं लभन्ते इत्यर्थः।<br>धात्वर्थसंगृहीतकर्मत्वेनाकर्मकत्वमत्र कृञ्धातोः। | |

| | | |
|---|---|---|
| आत्मनेपदम् १२ | ३६.संमाननोत्सञ्जनाचार्यकरण-ज्ञान-भृति-विगणन-व्ययेषु नियः<br>संमाननोत्सञ्जनाचार्यकरण -ज्ञान-भृति-विगणन-व्ययेषु नियः आत्मनेपदं भवति।<br>सम्माननम् = पूजनम्। उत्सञ्जनम् = उत्क्षेपणम्।<br>आचार्यकरणम् = आचार्यक्रिया। ज्ञानम् = प्रमेयनिश्चयः। भृतिः = वेतनम्। विगणनम् = ऋणादेर्निर्यातनम्। व्ययः = धर्मादिषु विनियोगः।<br>सम्मानने- शास्त्रार्थं नयते। उपपत्तिभिः सम्मानयतीत्यर्थः।<br>उत्सञ्जने-माणवकमुपनयते। उत्क्षिपतीत्यर्थः।<br>आचार्यकरणे - माणवकमुपनयते। आत्मानमाचार्यीकुर्वन् माणवकमात्मसमीपं प्रापयतीर्त्थः।<br>ज्ञाने - नयतेऽर्थान् धीरः।ज्ञानविषयीकरोतीत्यर्थः।<br>भृतौ - कर्मकरानुपनयते। भृतिदानेन समीपं करोतीत्यर्थः।<br>विगणने - मद्राः करं विनयन्ते।निर्यातयन्तीत्यर्थः।<br>व्यये - शतं विनयते। धर्माद्यर्थं शतं विनियुङ्क्ते इत्यर्थः। | नियः ३७ |
| आत्मनेपदम् १२<br>नियः ३६ | ३७. कर्तृस्थे चाशरीरे कर्मणि<br>कर्तृस्थे कर्मण्यशरीरे सति नियः आत्मनेपदं भवति।<br>क्रोधं विनयते। अपगमयतीत्यर्थः।<br>कर्तृस्थे इति किम्? देवदत्तो यज्ञदत्तस्य क्रोधं विनयति।<br>अशरीर इति किम्? गडुं विनयति। | |
| आत्मनेपदम् १२ | ३८. वृत्ति-सर्ग-तायनेषु क्रमः<br>वृत्ति-सर्ग-तायनेषु क्रमः आत्मनेपदं भवति।<br>वृत्तिः = अप्रतिबन्धः। सर्गः = उत्साहः।<br>तायनम् = स्फीतता।<br>वृत्तौ - ऋक्षु अस्य बुद्धिः क्रमते। न प्रतिहन्यते इत्यर्थः।<br>सर्गे - व्याकरणाध्ययनाय क्रमते। उत्सहते इत्यर्थः।<br>तायने - अस्मिन् शास्त्राणि क्रमन्ते। स्फीतानि भवन्तीत्यर्थः। | क्रमः ४३<br>वृ-नेषु ३९ |

| | | |
|---|---|---|
| आत्मनेपदम् १२<br>क्रमः ३८<br>वृ-नेषु ३८ | ३९. उप-पराभ्याम्<br>उपपराभ्यां क्रमः आत्मनेपदं भवति वृत्त्यादिष्वर्थेषु।<br>उपक्रमते। पराक्रमते।<br>उपपराभ्यामिति किम्? वृत्त्यादिष्वर्थेष्वपि अन्योपसर्गाद् न भवति - संक्रामति।<br>वृत्त्यादिष्वेव - उपक्रामति। पराक्रामति। | |
| आत्मनेपदम् १२<br>क्रमः ३८ | ४०. आङ उद्गमने<br>आङः क्रमः उद्गमने आत्मनेपदं भवति।<br>आक्रमते चन्द्रमाः। आक्रमन्ते ज्योतींषि।<br>उद्गमने इति किम्? आक्रामति माणवकः कुतुपम्।<br>(वा०) ज्योतिरुद्गमन इति वक्तव्यम्।<br>इह मा भूत् - आक्रामति धूमो हर्म्यतलात्। | |
| आत्मनेपदम् १२<br>क्रमः ३८ | ४१. वेः पादविहरणे<br>वेः क्रमः पादविहरणे आत्मनेपदं भवति।<br>पादविहरणम् = पादविक्षेपः।<br>सुष्ठु विक्रमते। साधु विक्रमते। | |
| आत्मनेपदम् १२<br>क्रमः ३८ | ४२. प्रोपाभ्यां समर्थाभ्याम्<br>प्रोपाभ्यां समर्थाभ्यां क्रमः आत्मनेपदं भवति।<br>प्रारम्भेत्यर्थे प्रपूर्वस्य क्रमतेः, उपपूर्वस्य च क्रमतेस्तुल्यार्थता।<br>प्रकमते, उपक्रमते वा भोक्तुम्।<br>समर्थाभ्यामिति किम्? पूर्वेद्युः प्रक्रामति। गच्छतीत्यर्थः। अपरेद्युः उपक्रामति। आगच्छतीत्यर्थः। | |
| आत्मनेपदम् १२<br>क्रमः ३८ | ४३. अनुपसर्गाद् वा<br>अनुपसर्गात्क्रमः आत्मनेपदं वा भवति।<br>क्रमते। क्रामति।<br>अनुपसर्गादिति किम्? संक्रामति। | |
| आत्मनेपदम् १२ | ४४. अपह्नवे ज्ञः<br>अपह्नवे ज्ञः(ज्ञाधातोः) आत्मनेपदं भवति।<br>अपह्नवः = अपह्नुतिः, अपलापो वा।<br>सोपसर्गश्चायमपह्नवे वर्तते, न केवलः।<br>शतमपजानीते। अपलपतीत्यर्थः।<br>अपह्नवे इति किम्? न त्वं किञ्चिदपि जानासि। | ज्ञः ४६ |

| | | |
|---|---|---|
| आत्मनेपदम् १२<br>ज्ञः ४४ | ४५. अकर्मकाच्च<br>अकर्मकाच्च ज्ञः आत्मनेपदं भवति।<br>सर्पिषो जानीते। सर्पिषोपायेन प्रवर्तते इत्यर्थः।<br>प्रवर्त्तनमित्यस्य क्रियाशीलभवनम् इत्यर्थः।<br>अकर्मकादिति किम्? स्वरेण पुत्रं जानाति। | |
| आत्मनेपदम् १२<br>ज्ञः ४४ | ४६. संप्रतिभ्यामनाध्याने<br>संप्रतिभ्यां ज्ञः आत्मनेपदं भवति अनाध्याने।<br>आध्यानम् = उत्कण्ठापूर्वकं स्मरणम्, तदन्यत्<br>अनाध्यानम्।<br>शतं संजानीते, प्रतिजानीते वा।<br>अनाध्याने इति किम्? मातुः संजानाति।<br>उत्कण्ठते इत्यर्थः। | |
| आत्मनेपदम् १२ | ४७. भासनोपसंभाषा-ज्ञान-यत्न-विमत्युपमन्त्रणेषु वदः<br>भासनोपसंभाषा-ज्ञान-यत्न-विमत्युपमन्त्रणेषु वदः आत्मनेपदं भवति।<br>भासनम् = दीप्तिः, शोभा। शास्त्रे वदते।<br>भासमानः सन् शास्त्रस्थान् पदार्थान्<br>व्यक्तीकरोति इत्यर्थः।<br>उपसंभाषा = उपसान्त्वनम्। बालकमुपवदते।<br>उपसान्त्वयतीत्यर्थः।<br>ज्ञानम् = सम्यगवबोधः। शास्त्रे वदते। वदितुं<br>जानातीत्यर्थः।<br>यत्नः = उत्साहः। क्षेत्रे वदते।<br>तद्विषयकमुत्साहमाविष्करोतीत्यर्थः।<br>विमतिः = नानामतिः। क्षेत्रे विवदन्ते।<br>विमतिपतिता विचित्रं भाषन्ते इत्यर्थः।<br>उपमन्त्रणम् = रहस्युपच्छन्दनम्।<br>कुलभार्यामुपवदते - उपच्छन्दयतीत्यर्थः, 'भद्रे<br>भजस्व माम्, इदं ते दास्यामि' इति स्वाभिलषिते<br>प्रवर्तयतीत्यर्थः। | वदः ५० |
| आत्मनेपदम् १२<br>वदः ४७ | ४८. व्यक्तवाचां समुच्चारणे<br>व्यक्तवाचां समुच्चारणे वदः आत्मनेपदं भवति।<br>समुच्चारणम् = सहोच्चारणम्। संप्रवदन्ते<br>ब्राह्मणाः। संप्रवदन्ते क्षत्रियाः।<br>व्यक्तवाचामिति किम्? संप्रवदन्ति कुक्कुटाः।<br>समुच्चारण इति किम्? ब्राह्मणो वदति। क्षत्रियो<br>वदति। | व्यक्तवाचां समुच्चारणे ५० |

| | | |
|---|---|---|
| आत्मनेपदम् १२<br>वदः ४७<br>व्यक्तवाचां ४८<br>समुच्चारणे ४८ | ४९. अनोरकर्मकात्<br>अनोः परस्माद् व्यक्तवाचां समुच्चारणे वर्तमानाद् अकर्मकाद् वदः आत्मनेपदं भवति।<br>अनुवदते कठः कलापस्य। अनुरत्र सादृश्ये, यथा कलापोऽधीयानो वदति तथा कठ इति उदाहरणवाक्यस्यार्थः।<br>अकर्मकादिति किम्? पूर्वमेव यजुरुदितमनुवदति। | |
| आत्मनेपदम् १२<br>वदः ४७<br>व्यक्तवाचां ४८<br>समुच्चारणे ४८ | ५०. विभाषा विप्रलापे<br>विप्रलापे वदः विभाषा आत्मनेपदं भवति।<br>विरुद्धः प्रलापः विप्रलापः।<br>विप्रवदन्ते सांवत्सराः, विप्रवदन्ति वा।<br>युगपत्परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः। | |
| आत्मनेपदम् १२ | ५१. अवाद् ग्रः<br>अवाद् ग्रः आत्मनेपदं भवति।<br>गॄ निगरणे अवपूर्वः - अवगिरते, अवगिरेते, अवगिरन्ते।<br>अवादिति किम्? गिरति। | ग्रः ५२ |
| आत्मनेपदम् १२<br>ग्रः ५१ | ५२. समः प्रतिज्ञाने<br>समः प्रतिज्ञाने वदः आत्मनेपदं भवति।<br>प्रतिज्ञानम् = प्रतिज्ञा, इदमेवमिति कथनम्, परेण प्रार्थितस्यार्थस्य दानाय स्वीकृतिप्रदानं वा।<br>नित्यं शब्दं संगिरते। शतं संगिरते।<br>प्रतिज्ञाने इति किम्? संगिरति ग्रासम्। | |
| आत्मनेपदम् १२ | ५३. उदश्चरः सकर्मकात्<br>उदश्चरः सकर्मकाद् आत्मनेपदं भवति।<br>गेहमुच्चरते, कुटुम्बमुच्चरते, गुरुवचनमुच्चरते।<br>उत्क्रम्य गच्छतीत्यर्थः।<br>सकर्मकादिति किम्? वाष्पमुच्चरति। | चरः ५४ |
| आत्मनेपदम् १२<br>चरः ५३ | ५४. समस्तृतीयायुक्तात्<br>तृतीयायुक्तात् समश्चर आत्मनेपदं भवति।<br>अश्वेन संचरते। | संपूर्णसूत्रम् ५५ |
| आत्मनेपदम् १२<br>समस्तृतीया-<br>युक्तात् ५४ | ५५. दाणश्चेच्चतुर्थ्यर्थे<br>तृतीयायुक्तात् समः दाणः आत्मनेपदं भवति, सा तृतीया चेच्चतुर्थ्यर्थे।<br>दास्या मालां संप्रयच्छते।<br>कामुकः सन् दास्यै मालां ददातीत्यर्थः।<br>चतुर्थ्यर्थे इति किम्? पाणिना संप्रयच्छति। | |

| | | |
|---|---|---|
| आत्मनेपदम् १२ | ५६. उपाद्यमः स्वकरणे<br>उपाद्यमः स्वकरणे आत्मनेपदं भवति।<br>पाणिग्रहणविशिष्टमिह स्वकरणं गृह्यते, न तु स्वकरणमात्रम्।<br>भार्यामुपयच्छते।<br>स्वकरण इति किम्? देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति। | |
| आत्मनेपदम् १२ | ५७. ज्ञा-श्रु-स्मृ-दृशां सनः<br>ज्ञा-श्रु-स्मृ-दृशां सनः आत्मनेपदं भवति।<br>धर्मं जिज्ञासते। गुरुं शुश्रूषते। नष्टं सुस्मूर्षते। नृपं दिदृक्षते।<br>सन इति किम्? जानाति, शृणोति, स्मरति, पश्यति। | सनः ५९ |
| आत्मनेपदम् १२<br>सनः ५७ | ५८. नानोर्ज्ञः<br>अनोर्ज्ञः सनः आत्मनेपदं न भवति।<br>पुत्रमनुजिज्ञासति। | न ५९ |
| आत्मनेपदम् १२<br>सनः ५७ न ५८ | ५९. प्रत्याङ्भ्यां श्रुवः<br>प्रत्याङ्भ्यां श्रुवः सनः आत्मनेपदं भवति।<br>प्रतिशुश्रूषति। आशुश्रूषति। | |
| आत्मनेपदम् १२ | ६०. शदेः शितः<br>शितः (शित्सम्बन्धिनः) शदेरात्मनेपदं भवति।<br>शीयते, शीयेते, शीयन्ते।<br>शित इति किम्? अशत्स्यत्, शत्स्यति। शिशत्सति। | शितः ६१ |
| आत्मनेपदम् १२<br>शितः | ६१. म्रियतेर्लुङ्लिङोश्च<br>लुङ् लिङोः, शितश्च म्रियतेरात्मनेपदं भवति।<br>'मृङ् प्राणत्यागे', ङित्त्वादात्मनेपदमत्र सिद्धमेवेतिनियमार्थमिदं वचनम् - म्रियतेर्लुङि, लिङि, शिति एव आत्मनेपदम्, नान्यत्र। लुङः - अमृत। लिङः - मृषीष्ट शितः - म्रियते, म्रियेते, मियन्ते।<br>नियमः किमर्थः - मरिष्यति, अमरिष्यत्। | |
| आत्मनेपदम् १२ | ६२. पूर्ववत्सनः<br>पूर्ववत्सनोऽप्यात्मनेपदं भवति।<br>आस्ते - आसिसिषते। शेते - शिशयिषते।<br>निविशते-निविविक्षते। | |

| | | |
|---|---|---|
| आत्मनेपदम् १२ | ६३. आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य<br>आम्प्रत्ययवत् अनुप्रयोगस्य कृञोऽप्यात्मनेपदं भवति।<br>'आम्प्रत्यय' इति आम्प्रत्ययो यस्माद् धातोः स आम्प्रत्यय इति बहुव्रीहिसमासः।<br>ईक्षते- ईक्षाञ्चक्रे। ईहते- ईहाञ्चक्रे। | |
| आत्मनेपदम् १२ | ६४. प्रोपाभ्यां युजेरयज्ञपात्रेषु<br>प्रोपाभ्यां युजेरात्मनेपदं भवति अयज्ञपात्रेषु।<br>प्रयुङ्क्ते। उपयुङ्क्ते।<br>अयज्ञपात्रेष्विति किम्? द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति। | |
| आत्मनेपदम् १२ | ६५. समः क्ष्णुवः<br>समः क्ष्णुवः आत्मनेपदं भवति।<br>संक्ष्णुते शस्त्रम्। | |
| आत्मनेपदम् १२ | ६६. भुजोऽनवने<br>भुजोऽनवने आत्मनेपदं भवति।<br>अवनम् = रक्षणं, पालनं वा तदन्यत् अनवनम्।<br>भुङ्क्ते। भक्षयतीत्यर्थः।<br>अनवन इति किम्? भुनक्त्येनमग्निराहितः।<br>पालयति, रक्षति वेत्यर्थः। | |
| आत्मनेपदम् १२ | ६७. णेरणौ यत्कर्म णौ चेत्स कर्त्ताऽनाध्याने<br>ण्यन्तादात्मनेपदं भवति अणौ यत्कर्म णौ चेत्स कर्त्ताऽनाध्याने।<br>आरोहति करेणुं निषादी-''करेणुरारोहयते निषादिनम्।'' (शिशुपालवधम् - १२.५)।।<br>पश्यन्ति भृत्या नृपम् - दर्शयते भृत्यान् नृपः।<br>अनाध्याने किम्? उत्कण्ठापूर्वकस्मरणे मा भूत् - स्मरति वनगुल्मं कोकिलः; स्मरयत्येनं वनगुल्मः स्वयमेव। | णेः ७१ |
| आत्मनेपदम् १२<br>णेः ६७ | ६८. भीस्म्योर्हेतुभये<br>भी-स्म्योर्णेरात्मनेपदं भवति, हेतोः = प्रयोजककर्त्तुश्चेद् भयं भवति।<br>मुण्डो भीषयते। जटिलो विस्मापयते।<br>हेतुभये इति किम्? कुञ्चिकयैनं भाययति। रूपेण विस्मापयति। | |
| आत्मनेपदम् १२<br>णेः ६७ | ६९. गृधिवञ्च्योः प्रलम्भने<br>'गृधिं-वञ्च्योः णेरात्मनेपदं भवति प्रलम्भने।<br>प्रलम्भनम् = विसंवादनम्, मिथ्याफलाख्यानम्।<br>माणवकं गर्धयते। माणवकं वञ्चयते। | प्रलम्भने ७० |

| | | |
|---|---|---|
| आत्मनेपदम् १२<br>प्रलम्भने ६९<br>णेः ६७ | **७०. लियः संमानन-शालीनीकरणयोश्च**<br>लियः णेरात्मनेपदं भवति सम्मान - शालीनीकरणयोः, चकारात्प्रलम्भने च।<br>सम्माननम् = पूजनम्। शालीनीकरणम् = न्यग्भावनम्, अभिभवनं वेत्यर्थः।<br>जटाभिरालापयते। जटाभिः पूजां समधिगच्छतीत्यर्थः।<br>श्येनो वर्तिकामुल्लापयते। न्यक्करोतीत्यर्थः।<br>प्रलम्भने - कस्त्वामुल्लापयते।<br>विसंवादयतीत्यर्थः। | |
| आत्मनेपदम् १२<br>णेः ६७ | **७१. मिथ्योपपदात्कृञोऽभ्यासे**<br>मिथ्योपपदात् कृञो णेरात्मनेपदं भवति, अभ्यासे।<br>अभ्यासः = पुनः पुनः करणम्, आवृत्तिः।<br>पदं मिथ्या कारयते।<br>सापचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः। | |
| आत्मनेपदम् १२ | **७२. स्वरितञितः कर्त्रभिप्राये क्रियाफले**<br>कर्त्रभिप्राये क्रियाफले स्वरितेतो, ञितश्च धातोर्लस्यात्मनेपदं भवति।<br>स्वरितेत् - यजते, पचते।<br>ञित् - कुरुते, कण्डूयते। | कर्त्रभिप्राये क्रियाफले ७७ |
| आत्मनेपदम् १२<br>कर्त्रभिप्राये ७२<br>क्रियाफले ७२ | **७३. अपाद् वदः**<br>कर्त्रभिप्राये क्रियाफले अपाद् वदः आत्मनेपदं भवति।<br>धनकामो न्यायमपवदते। | |
| आत्मनेपदम् १२<br>कर्त्रभिप्राये ७२<br>क्रियाफले ७२ | **७४. णिचश्च**<br>णिचः (णिजन्ताद् धातोः) कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति।<br>कटं कारयते। ओदनं पाचयते। | |
| आत्मनेपदम् १२<br>कर्त्रभिप्राये ७२<br>क्रियाफले ७२ | **७५. समुदाङ्भ्यो यमोऽग्रन्थे**<br>कर्त्रभिप्राये क्रियाफले समुदाङ्भ्यो यमः आत्मनेपदं भवति, अग्रन्थे। व्रीहीन् संयच्छते।<br>भारमुद्यच्छते। वस्त्रमायच्छते।<br>अग्रन्थे इति किम्? उद्यच्छति चिकित्सां वैद्यः।<br>चिकित्साशास्त्रमधिगन्तुम् उद्यमं करोतीत्यर्थः। | |

| | | |
|---|---|---|
| आत्मनेपदम् १२<br>कर्त्रभिप्राये ७२<br>क्रियाफले ७२ | ७६. अनुपसर्गाज्ज्ञः<br>कर्त्रभिप्राये क्रियाफलेऽनुपसर्गाज्ज्ञः आत्मनेपदं भवति।<br>गां जानीते। अश्वं जानीते।<br>अनुपसर्गादिति किम्? स्वर्गं लोकं न प्रजानाति मूढः।<br>कर्त्रभिप्राय इत्येव - देवदत्तस्य गां जानाति। | |
| आत्मनेपदम् १२<br>कर्त्रभिप्राये ७२<br>क्रियाफले ७२ | ७७. विभाषोपपदेन प्रतीयमाने<br>उपपदेन कर्त्रभिप्राये क्रियाफले प्रतीयमाने विभाषा आत्मनेपदं भवति।<br>समीपे श्रूयमाणं शब्दान्तरम् उपपदम्।<br>स्वं यज्ञं यजति, यजते वा।<br>स्वं कटं करोति, कुरुते वा।<br>स्वं पुत्रम् अपवदति, अपवदते वा।<br>स्वं कटं कारयति, कारयते वा।<br>स्वान् व्रीहीन् संयच्छति, संयच्छते वा।<br>स्वं गां जानाति, जानीते वा। | |
| | ७८. शेषात्कर्तरि परस्मैपदम्<br>शेषात् = आत्मनेपदनिमित्तहीनाद् धातोः कर्तरि लस्य स्थाने परस्मैपदं भवति।<br>याति। वाति। आविशति। प्रविशति।<br>कर्तरीति किम्? पच्यते, गम्यते। | कर्तरि ९३<br>परस्मैपदम् ९३ |
| कर्तरि ७८<br>परस्मैपदम् ७८ | ७९. अनुपराभ्यां कृञः<br>अनुपराभ्यां कृञः परस्मैपदं भवति कर्तरि।<br>अनुकरोति। पराकरोति। | |
| कर्तरि ७८<br>परस्मैपदम् ७८ | ८०. अभि-प्रत्यतिभ्यः क्षिपः<br>अभिप्रत्यतिभ्यः क्षिपः परस्मैपदं भवति कर्तरि।<br>अभिक्षिपति, प्रतिक्षिपति, अतिक्षिपति। | |
| कर्तरि ७८<br>परस्मैपदम् ७८ | ८१. प्राद्वहः<br>प्राद्वहः परस्मैपदं भवति कर्तरि।<br>प्रवहति, प्रवहतः, प्रवहन्ति। | वहः ८२ |
| कर्तरि ७८<br>परस्मैपदम् ७८<br>वहः ८१ | ८२. परेर्मृषः<br>परेर्मृषः परस्मैपदं भवति कर्तरि।<br>परिमृष्यति, परिमृष्यतः, परिमृष्यन्ति।<br>'वहतिमपि केचिदत्रानुवर्तयन्ति परिवहति' इति काशिका। | |
| कर्तरि ७८ | ८३. व्याङ्परिभ्यो रमः<br>व्याङ्परिभ्यो रमः परस्मैपदं भवति कर्तरि।<br>विरमति। आरमति। परिरमति। | रमः ८५ |

| | | |
|---|---|---|
| कर्तरि ७८<br>परस्मैपदम् ७८<br>रमः ८४ | ८४. उपाच्च<br>उपाच्च रमः परस्मैपदं भवति कर्तरि।<br>देवदत्तमुपरमति। उपरमयतीति यावत्,<br>अन्तर्भावितण्यर्थोऽत्र रमिः।<br>पृथग्योगकरणमुत्तरार्थम्। अकर्मकाद् विभाषां<br>वक्ष्यति, सा उपपूर्वादेव यथा स्यात्। | उपात् ८५ |
| कर्तरि ७८<br>परस्मैपदम् ७८<br>उपात् ८४<br>रमः ८३ | ८५. विभाषाऽकर्मकात्<br>उपादकर्मकाद् रमः परस्मैपदं भवति कर्तरि।<br>यावद्भुक्तमुपरमति।<br>निवर्तते इत्यर्थः। | |
| कर्तरि ७८<br>परस्मैपदम् ७८ | ८६. बुध-युध-नश-जनेङ्-प्रु- द्रु-स्रुभ्यो णेः<br>बुध-युध-नश-जनेङ्-प्रु-द्रु-स्रुभ्यो णेः परस्मैपदं<br>भवति कर्तरि।<br>बोधयति। योधयति। नाशयति। जनयति।<br>अध्यापयति। प्रावयति। द्रावयति। स्रावयति। | णेः ८६ |
| कर्तरि ७८<br>परस्मैपदम् ७८<br>णेः ८६ | ८७. निगरणचलनार्थेभ्यश्च<br>निगरणचलनार्थेभ्यश्च णेः परस्मैपदं भवति कर्तरि।<br>निगरणार्थेभ्यः - निगारयति। आशयति।<br>भोजयति।<br>चलनार्थेभ्यः - चलयति;घटादित्त्वान्मित्त्वम्।<br>चोपयति। कम्पयति।<br>(वा०) अत्तेः प्रतिषेधो वक्तव्यः।<br>आदयते देवदत्तेन। | |
| कर्तरि ७८<br>परस्मैपदम् ७८<br>णेः ८६ | ८८. अणावकर्मकाच्चित्तवत्कर्तृकात्<br>अणावकर्मकाच्चित्तवत्कर्तृकाद् णेः परस्मैपदं<br>भवति कर्तरि।<br>आस्ते देवदत्तः - आसयति देवदत्तम्।<br>शेते देवदत्तः - शाययति देवदत्तम्।<br>चित्तवत्कर्तृकादिति किम्? शुष्यन्ति व्रीहयः,<br>शोषयते व्रीहीनातपः। | |
| कर्तरि ७८<br>परस्मैपदम् ७८<br>णेः ८६ | ८९. न पा-दम्याङ्यमाङ्यस-परिमुह-<br>रुचि-नृति-वद-वसः<br>पा-दम्याङ्यमाङ्यस-परिमुह-रुचि-नृति-<br>वद-वसः णेः परस्मैपदं न भवति कर्तरि।<br>पा - पाययते। दमि - दमयते। आङ्यमि -<br>आयामयते। आङ्यस - आयासयते। परिमुह -<br>परिमोहयते। रुचि - रोचयते। नृति - नर्तयते।<br>वद - वादयते। वस - वासयते।<br>पूर्वेण योगद्वयेन विहितस्य परस्मैपदस्य प्रतिषेधः<br>प्रकृतसूत्रेण क्रियते। | |

| | | |
|---|---|---|
| कर्तरि ७८<br>परस्मैपदम् ७८ | ९०. वा क्यषः<br>क्यषः (क्यषन्ताद् धातोः) परस्मैपदं वा भवति कर्तरि।<br>'लोहितादिडाज्भ्यः क्यष्'- लोहितायति,<br>लोहितायते। पटपटायति, पटपटायते। | वा ९३ |
| कर्तरि ७८<br>परस्मैपदम् ७८<br>वा ९० | ९१. द्युद्भ्यो लुङि<br>द्युतादिभ्यो लुङि परस्मैपदं वा भवति कर्तरि।<br>बहुवचननिर्देशादाद्यर्थो भवति। व्यद्युतत्,<br>व्यद्योतिष्ट। अलुठत् अलोठिष्ट। | |
| कर्तरि ७८<br>परस्मैपदम् ७८<br>वा ९० | ९२. वृद्भ्यः स्यसनोः<br>वृतादिभ्यः स्यसनोः परस्मैपदं वा भवति।<br>अत्रापि बहुवचननिर्देशादाद्यर्थो भवति।<br>वृतु वर्तने, वृधु वृद्धौ, शृधु शब्दकुत्सायाम्,<br>स्यन्दू प्रस्रवणे, कृपू सामथर्ये - इत्येते पञ्च<br>धातवो .वृतादयः।<br>वृत् - वर्त्स्यति, वर्तिष्यते।<br>अवर्त्स्यत्, अवर्तिष्यत।<br>विवृत्सति, विवर्तिषते।<br>वृध् - वर्त्स्यति, वर्धिष्यते।<br>अवर्त्स्यत्, अवर्द्धिष्यत।<br>विवृत्सति, विवर्द्धिषते।<br>परस्मैपदे 'न वृद्भ्यश्चतुर्भ्यः' इतीट्प्रतिषेधः। | स्यसनोः ९३ |
| कर्तरि ७८<br>परस्मैपदम् ७८<br>वा ९०<br>स्यसनोः ९२ | ९३. लुटि च क्लृपः<br>लुटि, चकारात् स्यसनोश्च क्लृपः परस्मैपदं वा<br>भवति कर्तरि।<br>कल्प्ता, कल्प्तारौ, कल्प्तारः।<br>कल्पिता, कल्पितारौ, कल्पितारः।<br>कल्प्स्यति, कल्पिष्यते।<br>चिक्लृप्सति, चिकल्पिषते।<br>परस्मैपदे 'तासि च क्लृपः' इतीट्प्रतिषेधः। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां प्रथमाध्यायस्य तृतीयः पादः।।

## ।। अथ प्रथमाध्यायस्य चतुर्थः पादः ।।

| | | |
|---|---|---|
| | १. आकडारादेका संज्ञा<br>कडाराः कर्मधारये (२.३.३८) इत्यन्तं यावदेकस्य एकैव संज्ञा भवति इति वेदितव्यम्।<br>काच सा? या पराऽनवकाशा च।<br>यथा 'शिक्षा' इत्यत्र इकारस्य गुरुसंज्ञैव भवति न च लघुसंज्ञापि। | |
| | २. विप्रतिषेधे परं कार्यम्<br>विप्रतिषेधे परं कार्यं भवति।<br>विप्रतिषेधः = तुल्यबलविरोधः।<br>'सुपि च'- इत्यस्यावकाशः 'वृक्षाभ्याम्' इत्यत्र।<br>'बहुवचने झल्येत्' इत्यस्यावकाशः 'वृक्षेषु' इत्यत्र।<br>'वृक्षेभ्यः' इत्यत्रोभयं प्राप्नोति, परं भवति विप्रतिषेधेन। | |
| | ३. यू स्त्र्याख्यौ नदी<br>यू स्त्र्याख्यौ नदीसंज्ञौ भवतः।<br>स्त्र्याख्यौ इत्यस्य नित्यस्त्रीलिङ्गौ इत्यर्थः।<br>'यू' इत्यत्र ईश्च–उश्च इति विग्रहे इतरेतरयोगद्वन्द्वसमासे कृते यू औ इत्यवस्थायां पूर्वसवर्णदीर्घः, 'दीर्घाज्जसि च' इति दीर्घाभावश्छान्दसः।<br>'यू' इत्यस्य तदन्तविधिना ईदूदन्तौ इत्यर्थः।<br>ईकारान्तः – कुमारी, कुमार्यै।<br>ऊकारान्तः – वधूः, वध्वै। | यू ६ स्त्रयाख्यौ ६<br>नदी ६ |
| यू ३ स्त्रयाख्यौ ३<br>नदी ३ | ४. नेयङुवङ्स्थानावस्त्री<br>इयङुवङ्स्थानौ यू स्त्र्याख्यौ नदीसंज्ञौ न भवतः, स्त्रीशब्दं वर्जयित्वा।<br>हे श्रीः। हे भ्रूः।<br>अस्त्रीति किम्? हे स्त्रि। | इयङुवङ्स्थानौ ६<br>अस्त्री ६<br>न ५ |
| इयङुवङ्स्थानौ ४<br>नदी ३ अस्त्री ४<br>न ४ | ५. वाऽऽमि<br>इयङुवङ्स्थानौ यू स्त्र्याख्यौ आमि नदीसंज्ञौ वा न भवतः, स्त्रीशब्दं वर्जयित्वा।<br>श्रियाम्, श्रीणाम्। भ्रुवाम्, भ्रूणाम्। अस्त्रीत्येव – स्त्रीणाम्। | वा ६ |

| | | |
|---|---|---|
| इयङुवङ्स्थानौ४<br>नदी ३ वा ५<br>अस्त्री४ | **६. ङिति ह्रस्वश्च**<br>ङिति ह्रस्वेकारान्तः, ह्रस्वोकारान्तश्चापि स्त्रीलिङ्गशब्दौ नदीसंज्ञौ वा भवतः, चकारात् इयङुवङ्स्थानौ स्त्र्याख्यौ यू अपि, स्त्रीशब्दं वर्जयित्वा।<br>ह्रस्वेकारोकारौ – कृत्यै, कृतये। धेन्वै, धेनवे।<br>दीर्घेकारोकारौ – श्रियै, श्रिये। भ्रुवै, भ्रुवे।<br>अस्त्रीत्येव – स्त्रियै।<br>नित्यस्त्रीलिङ्गयोरेव। तेनेह न भवति-शुचये स्त्रियै। पटवे स्त्रियै। | ह्रस्वः ७ |
| ह्रस्वः६ | **७. शेषो घ्यसखि**<br>शेषो ह्रस्वः (ह्रस्वेकारान्तः, ह्रस्वोकारान्तश्च) घिसंज्ञो भवति, सखिशब्दं वर्जयित्वा।<br>अग्नये। वायवे। कृतये। धेनवे।<br>असखीति किम्? सख्या, सख्ये, सख्युः सख्यौ। | घि ८ |
| घि ७ | **८. पतिः समास एव**<br>पतिः समास एव घिसंज्ञो भवति।<br>प्रजापतिना। प्रजापतये।<br>समास इति किम्? पत्या, पत्ये।<br>सूत्रे एवकार इष्टतोऽवधारणार्थः। तेन समासे पतिरेव इति नियमो न भवति। अतोऽत्र घिसंज्ञा भवत्येव-दृढमुष्टिना, दृढमुष्टये। | पतिः ९ |
| घि ७ पतिः८ | **९. षष्ठीयुक्तश्छन्दसि वा**<br>षष्ठीयुक्तः पतिः छन्दसि घिसंज्ञो वा भवति।<br>कुलुञ्चानां पतये नमः। कुलुञ्चानां पत्ये नमः। | |
| | **१०. ह्रस्वं लघु**<br>ह्रस्वम् (अक्षरम्) लघुसंज्ञं भवति।<br>भेत्ता,छेत्ता।'पुगन्तलघूपधस्य च' इत्यनेन गुणः। | ह्रस्वम् ११ |
| ह्रस्वम् १० | **११. संयोगे गुरु**<br>संयोगे ह्रस्वं गुरुसंज्ञं भवति।<br>शिक्षा। भिक्षा।<br>'गुरोश्च हलश्च' इत्यनेन स्त्रियामप्रत्ययः। | गुरू १२ |
| गुरु ११ | **१२. दीर्घं च**<br>दीर्घं च (अक्षरम्) गुरुसंज्ञं भवति।<br>ईहाञ्चक्रे। ऊहाञ्चक्रे।<br>'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्। | |

| | | |
|---|---|---|
| | १३. यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्<br>यस्मात् प्रत्ययविधिः (प्रत्ययस्य विधानं क्रियते) तदादि शब्दस्वरूपम् अङ्गसंज्ञं भवति प्रत्यये परे।<br>कर्त्ता। हर्त्ता। करिष्यति। हरिष्यति।<br>(वा०) तदादिवचनं स्यादिनुमर्थम्।<br>करिष्यावः, करिष्यामः। कुण्डानि। | |
| | १४. सुप्तिङन्तं पदम्<br>सुप्तिङन्तं पदसंज्ञं भवति।<br>ब्राह्मणाः पचन्ति। | पदम् १७ |
| पदम् १४ | १५. नः क्ये<br>नः (नकारान्तः शब्दः) क्ये पदसंज्ञं भवति।<br>'क्ये' इति क्यच् क्यङ्क्यषां सामान्यग्रहणम्।<br>क्यच् - राजीयति। क्यङ् - राजायते।<br>क्यष् - कर्मायति, कर्मायते।<br>नियमार्थमिदम् - नान्तमेव क्ये परतः पदसंज्ञं भवति, नान्यत् इति। तेन वाच्यति, स्रुच्यति इत्यत्र पदसंज्ञाया अभावेन कुत्वजश्त्वे न भवतः। | |
| पदम् १४ | १६. सिति च<br>सिति (परतः) पूर्वं पदसंज्ञं भवति। 'यचि भम्' (१.४.१८) इति वक्ष्यति, तस्यायं पुरस्तादपवादः।<br>भवतष्ठक्छसौ-भवदीयः। | |
| पदम् १४ | १७. स्वादिष्वसर्वनामस्थाने<br>स्वादिषु परतः पूर्वं पदसंज्ञं भवति, न तु सर्वनामस्थाने।<br>'स्वादिषु' इति पदेन 'स्वौजसमौट्'(४.१.२) इतिसूत्रस्थसुशब्दारभ्य 'उरःप्रभृतिभ्यः कप्' (५.४.१५१) इति यावत् प्रत्ययाः गृह्यन्ते।<br>राजभ्याम्, राजभिः। राजत्वम्, राजता। राजतरः। राजतमः।<br>असर्वनामस्थाने किम्? राजानौ, राजानः। | सम्पूर्णसूत्रम् १८ |
| स्वादिषु १७<br>असर्वनामस्थाने १७ | १८. यचि भम्<br>यकारादिषु, अजादिषु च स्वादिषु परतः पूर्वं भसंज्ञं भवति, न तु सर्वनामस्थाने।<br>य च अच् चानयोः समाहारद्वन्द्वे सप्तम्याः एकवचने 'यचि' इति रूपम्।<br>यकारादौ - गार्ग्यः, वात्स्यः।<br>अजादौ - दाक्षिः, प्लाक्षिः। | भम् २० |

| | | |
|---|---|---|
| भम् १८ | १६. तसौ मत्वर्थे<br>तकारान्तं, मकारान्तं च मत्वर्थे (प्रत्यये) रे भसंज्ञं भवति।<br>तकारान्तः - उदश्वित्वान् घोषः। विद्युत्वान् बलाहकः।<br>सकारानतः - पयस्वी। मनस्वी। | |
| भम् १८<br>पदम् १४ | २०. अयस्मयादीनि छन्दसि<br>अयस्मंयादीनि शब्दरूपाणि छन्दसि विषये यथापेक्षं पदसंज्ञाद्वारेण, भसंज्ञाद्वारेण च साधूनि भवन्ति।<br>स सुष्टुभा स ऋक्वता गणेन। 'ऋक्वता' इत्यत्र पदत्वात् कुत्वम्, भत्वाज्जश्त्वाभावः।<br>आकृतिगणोऽयम्। | |
| | २१. बहुषु बहुवचनम्<br>बहुषु बहुवचनं भवति।<br>बहुत्वमस्य वाच्यं भवतीति यावत्।<br>ब्राह्मणाः पठन्ति। | |
| | २२. द्व्येकयोर्द्विवचनैकवचने<br>द्व्येकयोर्द्विवचनैकवचने भवतः। ब्भ्भ्ह<br>ब्राह्मणौ पचतः। ब्राह्मणः पचति। | |
| | २३. कारके<br>अधिकारोऽयम् 'तत्प्रयोजको हेतुश्च' (१.४.५५) इत्यन्तं यावत्।<br>कारकशब्दश्च निमित्तपर्यायः, कारकम्, हेतुरित्यनर्थान्तरम्।<br>कस्य हेतुः? क्रियायाः। वक्ष्यति- 'ध्रुवमपायेऽपादानम्'(१.४.२४)- ग्रामादागच्छति। पर्वतादारोहति।<br>कारक इति किम्? वृक्षस्य पर्णं पतति। | कारके ५५ |
| कारकम् २३ | २४. ध्रुवमपायेऽपादानम्<br>अपाये ध्रुवं कारकमपादानसंज्ञं भवति।<br>ध्रुवम् = अवधिभूतम्। अपायः = विश्लेषः, विभागो वा।<br>वृक्षात्पत्रं पतति। बलाहकाद् विद्योतते विद्युत्।<br>माथुराः स्रौघ्नेभ्यः आढ्यतराः।<br>(वा०)जुगुप्सा-विराम-प्रमादार्थानामुपसंख्यानम्।<br>अधर्माज्जुगुप्सते। अधर्माद् विरमति।<br>धर्मात् प्रमाद्यति। | अपादानम् ३१ |

| | | |
|---|---|---|
| कारकम् २३<br>अपादानम् ३१ | २५. भीत्रार्थानां भयहेतुः<br>भीत्रार्थानां (धातूनां प्रयोगे) यो भयहेतुस्तत्कारकम् अपादानसंज्ञं भवति।<br>चौरेभ्यो बिभेति। चौरेभ्य उद्विजते।<br>चौरेभ्यस्त्रायते। चौरेभ्यो रक्षति। | |
| कारकम् २३<br>अपादानम् ३१ | २६. पराजेरसोढः<br>पराजेः (परापूर्वकाद् जिधातोः प्रयोगे) योऽसोढः तत्कारकम् अपादानसंज्ञं भवति।<br>असोढः इत्यस्य असह्य इत्यर्थः।<br>योऽर्थः सोढुं न शक्यते इति यावत्।<br>अध्ययनात्पराजयते। अध्ययनं सोढुं न शक्यते इत्यर्थः।<br>असोढ इति किम्? शत्रून् पराजयते। | |
| कारकम् २३<br>अपादानम् ३१ | २७. वारणार्थानामीप्सितः<br>वारणार्थानां (धातूनां प्रयोगे) यः ईप्सितः तत्कारकम् अपादानसंज्ञं भवति।<br>प्रवृत्तिविघातः = वारणम्। यवेभ्यो गा वारयति।<br>यवेभ्यो गा निवर्त्तयति। | |
| कारकम् २३<br>अपादानम् ३१ | २८. अन्तर्द्धौ येनादर्शनमिच्छति<br>अन्तर्द्धौ (सत्याम्) येन (यत्कर्तृकम्) अदर्शनमिच्छति तत्कारकमपादानसंज्ञं भवति।<br>अन्तर्द्धिः = व्यवधानम्।<br>उपाध्यायादन्तर्द्धते। उपाध्यायान्निलीयते।<br>अन्तर्द्धाविति किम्? चौरान्न दिदृक्षते।<br>इच्छतिग्रहणं किम्? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्। | |
| कारकम् २३<br>अपादानम् ३१ | २६. आख्यातोपयोगे<br>उपयोगे यः आख्याता तत्कारकमपादानसंज्ञं भवति।<br>आख्याता = प्रतिपादयिता, प्रवक्ता,अध्यापको वा।<br>उपयोगः = नियमपूर्वकविद्यास्वीकारः।<br>उपाध्यायादधीते।<br>उपयोग इति किम्? नटस्य गाथां शृणोति। | |
| कारकम् २३<br>अपादानम् ३१ | ३०. जनिकर्तुः प्रकृतिः<br>जनिधातोः यः कर्ता तस्य या प्रकृतिः तत्कारकमपादानसंज्ञं भवति।<br>प्रकृतिः = उपादानकारणम्।<br>ब्रह्मणः प्रजाः प्रजायन्ते। गोमयाद् वृश्चिको जायते। | कर्तुः ३२ |

| | | |
|---|---|---|
| कारकम् २३<br>अपादानम् ३१<br>कर्तुः ३० | ३१. भुवः प्रभवः<br>भुवः कर्तुः यः प्रभवः तत्कारकमपादानसंज्ञं भवति।<br>प्रभवः = प्रथमप्रकाशस्थानम्।<br>हिमालयाद् गङ्गा प्रभवति।<br>कश्मीरेभ्यो वितस्ता प्रभवति। | |
| कारकम् २३ | ३२. कर्मणा यमभिप्रैति स सम्प्रदानम्<br>कर्मणा (करणभूतेन) यमभिप्रैति (अभिसम्बध्नाति) तत्कारकं सम्प्रदानसंज्ञं भवति।<br>अन्वर्थसंज्ञाविज्ञानाद् ददातिकर्मणेति विज्ञायते।<br>उपाध्यायाय गां ददाति। माणवकाय भिक्षां ददाति।<br>(वा०) क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्।<br>पत्ये शेते। | सम्प्रदानम् ४१ |
| कारकम् २३<br>सम्प्रदानम् ३२ | ३३. रुच्यर्थानां प्रीयमाणः<br>रुच्यर्थानां (प्रयोगे) यः प्रीयमाणः तत्कारकं सम्प्रदानसंज्ञं भवति।<br>प्रीयमाणः इत्यस्य तृप्यमाण इत्यर्थः अर्थात् यः तृप्यति स प्रीयमाण इत्युच्यते।<br>देवदत्ताय रोचते मोदकः।<br>यज्ञदत्ताय स्वदते सूपः। | |
| कारकम् २३<br>सम्प्रदानम् ३२ | ३४. श्लाघ-ह्नुङ्-स्था-शपां ज्ञीप्स्यमानः<br>श्लाघ-ह्नुङ्-स्था-शपां (प्रयोगे) यो ज्ञीप्स्यमानस्तत्कारकं सम्प्रदानसंज्ञं भवति।<br>ज्ञीप्स्यमान इत्यस्य बोधयितुमभिप्रेत इत्यर्थः।<br>देवत्ताय श्लाघते, ह्नुते, तिष्ठते, शपते वा। | |
| कारकम् २३<br>सम्प्रदानम् ३२ | ३५. धारेरुत्तमर्णः<br>धारेः (प्रयोगे) यः उत्तमर्णस्त्कारकं सम्प्रदानसंज्ञं भवति।<br>यः ऋणं ददाति स उत्तमर्णः।<br>देवदत्ताय शतं धारयति। | |
| कारकम् २३<br>सम्प्रदानम् ३२ | ३६. स्पृहेरीप्सितः<br>स्पृहेः (प्रयोगे) यः ईप्सितः तत्कारकं सम्प्रदानसंज्ञं भवति।<br>ईप्सितः इत्यस्यात्र अभिप्रेत इत्यर्थः।<br>पुष्पेभ्यः स्पृहयति। | |

| | | |
|---|---|---|
| कारकम् २३<br>अपादानम् ३१ | २५. भीत्रार्थानां भयहेतुः<br>भीत्रार्थानां (धातूनां प्रयोगे) यो भयहेतुस्तत्कारकम् अपादानसंज्ञं भवति।<br>चौरेभ्यो बिभेति। चौरेभ्य उद्विजते।<br>चौरेभ्यस्त्रायते। चौरेभ्यो रक्षति। | |
| कारकम् २३<br>अपादानम् ३१ | २६. पराजेरसोढः<br>पराजेः (परापूर्वकाद् जिधातोः प्रयोगे) योऽसोढः तत्कारकम् अपादानसंज्ञं भवति।<br>असोढः इत्यस्य असह्य इत्यर्थः।<br>योऽर्थः सोढुं न शक्यते इति यावत्।<br>अध्ययनात्पराजयते। अध्ययनं सोढुं न शक्यते इत्यर्थः।<br>असोढ इति किम्? शत्रून् पराजयते। | |
| कारकम् २३<br>अपादानम् ३१ | २७. वारणार्थानामीप्सितः<br>वारणार्थानां (धातूनां प्रयोगे) यः ईप्सितः तत्कारकम् अपादानसंज्ञं भवति।<br>प्रवृत्तिविघातः = वारणम्। यवेभ्यो गा वारयति।<br>यवेभ्यो गा निवर्त्तयति। | |
| कारकम् २३<br>अपादानम् ३१ | २८. अन्तर्द्धौ येनादर्शनमिच्छति<br>अन्तर्द्धौ (सत्याम्) येन (यत्कर्तृकम्) अदर्शनमिच्छति तत्कारकमपादानसंज्ञं भवति।<br>अन्तर्द्धिः = व्यवधानम्।<br>उपाध्यायादन्तर्द्धते। उपाध्यायान्निलीयते।<br>अन्तर्द्धाविति किम्? चौरान्न दिदृक्षते।<br>इच्छतिग्रहणं किम्? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्। | |
| कारकम् २३<br>अपादानम् ३१ | २९. आख्यातोपयोगे<br>उपयोगे यः आख्याता तत्कारकमपादानसंज्ञं भवति।<br>आख्याता = प्रतिपादयिता, प्रवक्ता,अध्यापको वा।<br>उपयोगः = नियमपूर्वकविद्यास्वीकारः।<br>उपाध्यायादधीते।<br>उपयोग इति किम्? नटस्य गाथां शृणोति। | |
| कारकम् २३<br>अपादानम् ३१ | ३०. जनिकर्तुः प्रकृतिः<br>जनिधातोः यः कर्ता तस्य या प्रकृतिः तत्कारकमपादानसंज्ञं भवति।<br>प्रकृतिः = उपादानकारणम्।<br>ब्रह्मणः प्रजाः प्रजायन्ते। गोमयाद् वृश्चिको जायते। | कर्तुः ३२ |

| | | |
|---|---|---|
| कारकम् २३<br>अपादानम् ३१<br>कर्तुः ३० | ३१. भुवः प्रभवः<br>भुवः कर्तुः यः प्रभवः तत्कारकमपादानसंज्ञं भवति।<br>प्रभवः = प्रथमप्रकाशस्थानम्।<br>हिमालयाद् गङ्गा प्रभवति।<br>कश्मीरेभ्यो वितस्ता प्रभवति। | |
| कारकम् २३ | ३२. कर्मणा यमभिप्रैति स सम्प्रदानम्<br>कर्मणा (करणभूतेन) यमभिप्रैति (अभिसम्बध्नाति) तत्कारकं सम्प्रदानसंज्ञं भवति।<br>अन्वर्थसंज्ञाविज्ञानाद् ददातिकर्मणेति विज्ञायते।<br>उपाध्यायाय गां ददाति। माणवकाय भिक्षां ददाति।<br>(वा०) क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्।<br>पत्ये शेते। | सम्प्रदानम् ४१ |
| कारकम् २३<br>सम्प्रदानम् ३२ | ३३. रुच्यर्थानां प्रीयमाणः<br>रुच्यर्थानां (प्रयोगे) यः प्रीयमाणः तत्कारकं सम्प्रदानसंज्ञं भवति।<br>प्रीयमाणः इत्यस्य तृप्यमाण इत्यर्थः अर्थात् यः तृप्यति स प्रीयमाण इत्युच्यते।<br>देवदत्ताय रोचते मोदकः।<br>यज्ञदत्ताय स्वदते सूपः। | |
| कारकम् २३<br>सम्प्रदानम् ३२ | ३४. श्लाघ-ह्नुङ्-स्था-शपां ज्ञीप्स्यमानः<br>श्लाघ-ह्नुङ्-स्था-शपां (प्रयोगे) यो ज्ञीप्स्यमानस्तत्कारकं सम्प्रदानसंज्ञं भवति।<br>ज्ञीप्स्यमान इत्यस्य बोधयितुमभिप्रेत इत्यर्थः।<br>देवत्ताय श्लाघते, ह्नुते, तिष्ठते, शपते वा। | |
| कारकम् २३<br>सम्प्रदानम् ३२ | ३५. धारेरुत्तमर्णः<br>धारेः (प्रयोगे) यः उत्तमर्णस्त्कारकं सम्प्रदानसंज्ञं भवति।<br>यः ऋणं ददाति स उत्तमर्णः।<br>देवदत्ताय शतं धारयति। | |
| कारकम् २३<br>सम्प्रदानम् ३२ | ३६. स्पृहेरीप्सितः<br>स्पृहेः (प्रयोगे) यः ईप्सितः तत्कारकं सम्प्रदानसंज्ञं भवति।<br>ईप्सितः इत्यस्यात्र अभिप्रेत इत्यर्थः।<br>पुष्पेभ्यः स्पृहयति। | |

| | | |
|---|---|---|
| कारकम् २३<br>करणम् ४२<br>साधकतमम् ४२ | ४४. परिक्रयणे सम्प्रदानमन्यतरस्याम्<br>परिक्रयणे साधकतमं यत्कारकं तत्सम्प्रदानसंज्ञमन्यतरस्यां भवति। पक्षे करणसंज्ञा।<br>परिक्रयणम् = नियतकालं वेतनादिना स्वीकरणम्।<br>शतेन, शताय वा परिक्रीतोऽनुब्रूहि। | |
| कारकम् २३ | ४५. आधारोऽधिकरणम्<br>कर्तृ-कर्मद्वारा तन्निष्ठक्रियाया य आधारः तत्कारकमधिकरणसंज्ञं भवति।<br>औपश्लेषिको, वैषयिकोऽभिव्यापकश्चेति आधारस्त्रिधा।<br>क्रमेणोदाहरणं यथा- कटे आस्ते।<br>मोक्षे इच्छाऽस्ति। तिलेषु तैलम्। | आधारः ४८ |
| कारकम् २३<br>आधारः ४५ | ४६. अधि-शीङ्-स्थाऽऽसां कर्म<br>अधिपूर्वाणां शीङ्-स्था-आस्-इत्येषां यः आधारः तत्कारकं कर्मसंज्ञं भवति।<br>ग्राममधिशेते, अधितिष्ठति वा। पर्वतमध्यास्ते। | कर्म ४८ |
| कारकम् २३<br>आधारः ४५<br>कर्म ४६ | ४७. अभि-नि-विशश्च<br>अभिनिविशश्च(अभिनिपूर्वकस्य विश्धातोः) य आधारस्तत्कारकं कर्मसंज्ञं भवति।<br>ग्राममभिनिविशते।<br>अन्यतरस्यामित्यस्य मण्डूकप्लुत्या अनुवर्तनेन, व्यवस्थितविभाषाश्रयणेन कल्याणेऽभिनिवेशः, पापेऽभिनिवेशः इत्यादौ न भवति सम्प्रदानसंज्ञा। | |
| कारकम् २३<br>आधारः ४५<br>कर्म ४८ | ४८. उपान्वध्याङ्वसः<br>उपान्वध्याङ्वसः यः आधारः तत्कारकं कर्मसंज्ञं भवति।<br>ग्रामम् उपवसति, अनुवसति, अधिवसति, आवसति वा।<br>(वा०) वसेरश्यर्थस्य प्रतिप्रेधो वक्तव्यः।<br>ग्रामे उपवसति। भोजननिवृत्ति करोतीत्यर्थः। | |
| कारकम् २३ | ४९. कर्तुरीप्सिततमं कर्म<br>कर्तुर्यदीप्सिततमं तत्कारकं कर्मसंज्ञं भवति।<br>ईप्सितशब्दोऽत्र आप्तुम्-सम्बन्धुम्, ईप्सित इत्यर्थे यौगिको गृहयते न तु अभिप्रेतार्थे रूढः। कटं करोति। ग्रामं गच्छति।<br>कर्मेत्यनुवर्तमाने पुनःकर्मग्रहणमाधार- निवृत्त्यर्थम्।<br>कर्तुरिति किम्? माषेष्वश्वं बध्नाति।<br>कर्मण ईप्सिता माषाः, न कर्तुः। तमब्ग्रहणं किम्? पयसोदनं भुङ्क्ते।<br>तमब्ग्रहणेन प्राधान्यादोदनस्यैव ईप्सिततमत्वं न तु पयसोऽपि, संस्कारकत्वेन पयसोऽप्रधानत्वात्। | कर्म ५३ |

| | | |
|---|---|---|
| कारकम् २३<br>सम्प्रदानम् ३२ | ३७. क्रुध-द्रुहेर्ष्यासूयार्थानां यं प्रति कोपः<br>क्रुध, द्रुह, ईर्ष्य, असूया-इत्यर्थानां (धातूनां प्रयोगे) यं प्रति कोपः तत्कारकं सम्प्रदानसंज्ञं भवति।<br>क्रोधोऽमर्षः। द्रोहोऽपकारः।<br>ईर्ष्या अक्षमा। असूया गुणेषु दोषाविष्करणम्। एते सर्वेऽत्र कोपप्रभवा ग्राह्याः।<br>देवदत्ताय क्रुध्यति, द्रुह्यति, ईर्ष्यति, असूयति वा।<br>यं प्रति कोप इति किम्? भार्यामीर्ष्यति। परैर्दृश्यमानां तां न क्षमते इत्यर्थः। अस्त्यत्र भार्यायामीर्ष्या, न तु तां प्रति कोप इति सम्प्रदानसंज्ञा न भवति। | यं प्रति कोपः३८ |
| कारकम् २३<br>यं प्रति कोपः ३७ | ३८. क्रुध-द्रुहोरुपसृष्टयोः कर्म<br>उपसृष्टयोः (उपसर्गयुक्तयोः) क्रुध-द्रुहोः (प्रयोगे) यं प्रति कोपस्तत्कारकं कर्मसंज्ञं भवति।<br>देवदत्तमभिक्रुध्यति, अभिद्रुह्यति वा। | |
| कारकम् २३<br>सम्प्रदानम् ३२ | ३९. राधीक्ष्योर्यस्य विप्रश्नः<br>राधीक्ष्योः (प्रयोगे) यस्य (यत्सम्बन्धी) विप्रश्नः तत्कारकं सम्प्रदानसंज्ञं भवति।<br>विविधः प्रश्नः = विप्रश्नः।<br>देवदत्ताय राध्यति, ईक्षते वा।<br>नैमित्तिकः पृष्टः सन् देवदत्तस्य दैवं पर्यालोचयतीत्यर्थः। | |
| कारकम् २३<br>सम्प्रदानम् ३२ | ४०. प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता<br>प्रत्याङ्भ्यां श्रुवः (प्रयोगे) पूर्वस्य (पूर्वप्रेरकवाक्यस्य) यः कर्ता तत्कारकं सम्प्रदानसंज्ञं भवति।<br>देवदत्ताय गां प्रतिशृणोति, आशृणोति वा।<br>प्रतिजानीते इत्यर्थः। | पूर्वस्य कर्ता ४१ |
| कारकम् २३<br>पूर्वस्य कर्ता ४१ | ४१. अनुप्रतिगृणश्च<br>अनुप्रतिगृणश्च (अनुप्रतिपूर्वकाद् गृधातोः प्रयोगे) पूर्वस्य यः कर्ता तत्कारकं सम्प्रदानसंज्ञं भवति।<br>होत्रेऽनुगृणाति, प्रतिगृणाति वा। होता प्रथमं शंसति तमन्यः प्रोत्साहयति इत्यर्थः। | |
| कारकम् २३ | ४२. साधकतमं करणम्<br>साधकतमं यत्कारकं तत्करणसंज्ञं भवति।<br>दात्रेण लुनाति। परशुना छिनत्ति। | करणम् ४३<br>साधकतमम् ४४ |
| कारकम् २३<br>करणम् ४२<br>साधकतमम् ४२ | ४३. दिवः कर्म च<br>दिवः साधकतमं यत्कारकं तत्कर्मसंज्ञं भवति, चकारात्करणसंज्ञं च।<br>अक्षान्, अक्षैर्वा दीव्यति। | |

| | | |
|---|---|---|
| कारकम् २३<br>करणम् ४२<br>साधकतमम् ४२ | ४४. परिक्रयणे सम्प्रदानमन्यतरस्याम्<br>परिक्रयणे साधकतमं यत्कारकं तत्सम्प्रदानसंज्ञमन्यतरस्यां भवति। पक्षे करणसंज्ञा।<br>परिक्रयणम् = नियतकालं वेतनादिना स्वीकरणम्।<br>शतेन, शताय वा परिक्रीतोऽनुब्रूहि। | |
| कारकम् २३ | ४५. आधारोऽधिकरणम्<br>कर्तृ-कर्मद्वारा तन्निष्ठक्रियाया य आधारः तत्कारकमधिकरणसंज्ञं भवति।<br>औपश्लेषिको, वैषयिकोऽभिव्यापकश्चेति आधारस्त्रिधा।<br>क्रमेणोदाहरणं यथा- कटे आस्ते।<br>मोक्षे इच्छाऽस्ति। तिलेषु तैलम्। | आधारः ४८ |
| कारकम् २३<br>आधारः ४५ | ४६. अधि-शीङ्-स्थाऽऽसां कर्म<br>अधिपूर्वाणां शीङ्-स्था-आस्-इत्येषां यः आधारः तत्कारकं कर्मसंज्ञं भवति।<br>ग्राममधिशेते, अधितिष्ठति वा। पर्वतमध्यास्ते। | कर्म ४८ |
| कारकम् २३<br>आधारः ४५<br>कर्म ४६ | ४७. अभि-नि-विशश्च<br>अभिनिविशश्च(अभिनिपूर्वकस्य विश्धातोः) य आधारस्तत्कारकं कर्मसंज्ञं भवति।<br>ग्राममभिनिविशते।<br>अन्यतरस्यामित्यस्य मण्डूकप्लुत्या अनुवर्तनेन, व्यवस्थितविभाषाश्रयणेन कल्याणेऽभिनिवेशः, पापेऽभिनिवेशः इत्यादौ न भवति सम्प्रदानसंज्ञा। | |
| कारकम् २३<br>आधारः ४५<br>कर्म ४८ | ४८. उपान्वध्याङ्वसः<br>उपान्वध्याङ्वसः यः आधारः तत्कारकं कर्मसंज्ञं भवति।<br>ग्रामम् उपवसति, अनुवसति, अधिवसति, आवसति वा।<br>(वा०) वसेरश्यर्थस्य प्रतिप्रेधो वक्तव्यः।<br>ग्रामे उपवसति। भोजननिवृत्ति करोतीत्यर्थः। | |
| कारकम् २३ | ४९. कर्तुरीप्सिततमं कर्म<br>कर्तुर्यदीप्सिततमं तत्कारकं कर्मसंज्ञं भवति।<br>ईप्सितशब्दोऽत्र आप्तुम्-सम्बन्धुम्, ईप्सित इत्यर्थे यौगिको गृह्यते न तु अभिप्रेतार्थे रूढः। कटं करोति। ग्रामं गच्छति।<br>कर्मेत्यनुवर्तमाने पुनःकर्मग्रहणमाधार- निवृत्त्यर्थम्।<br>कर्तुरिति किम्? माषेष्वश्वं बध्नाति।<br>कर्मण ईप्सिता माषाः, न कर्तुः। तमब्ग्रहणं किम्? पयसोदनं भुङ्क्ते।<br>तमब्ग्रहणेन प्राधान्यादोदनस्यैव ईप्सिततमत्वं न तु पयसोऽपि, संस्कारकत्वेन पयसोऽप्रधानत्वात्। | कर्म ५३ |

| | | |
|---|---|---|
| कारकम् २३<br>कर्म ४६ | ५०. तथायुक्तं चानीप्सितम्<br>ईप्सिततमस्य कर्तुरिच्छाविषयीभूतत्वेन यथा क्रियया सम्बन्धो जायते तथा सम्बन्धश्चेद् अनीप्सितस्यापि जायेत तर्हि तदनीप्सितमपि कारकं कर्मसंज्ञं भवति।<br>ओदनं भुञ्जानो विषं भुङ्क्ते।<br>ग्रामं गच्छंस्तृणं स्पृशति। चौरान् पश्यति। | |
| कारकम् २३<br>कर्म ४६ | ५१. अकथितं च<br>अकथितं च यत्कारकं तत्कर्मसंज्ञं भवति।<br>केनाकथितम्? अपादानादिविशेषकथाभिः।<br>अकथितशब्देन केषां ग्रहणमिति विषये वैयाकरणसिद्धान्तकौमुद्यामयं वार्तिकार्थसंग्रहश्लोकः पठितः -<br>दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथमुषाम्।<br>कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्।।<br>इति।<br>दुहादीनां द्वादशानां, नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेव 'अकथितं कर्म' इति परिगणनं कर्त्तव्यमित्यर्थः।<br>क्रमेणोदाहरणम् - गां दोग्धि पयः। बलिं याचते वसुधाम्। तण्डुलानोदनं पचति। गर्गाञ्छतं दण्डयति। व्रजमवरुणद्धि गाम्। माणवकं पन्थानं पृच्छति। वृक्षमवचिनोति फलानि। माणवकं धर्मं ब्रूते, शास्ति वा।<br>शतं जयति देवदत्तम्। सुधां क्षीरनिधिं मथ्नाति। देवदत्तम् शतं मुष्णाति। ग्राममजां नयति, हरति, कर्षति, वहति वा।<br>(वा०)अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्म इति वाच्यम्।<br>कुरून् स्वपिति। मासमास्ते। गोदोहमास्ते। क्रोशमास्ते। | |

| | | |
|---|---|---|
| कारकम् २३<br>कर्म ४९ | **५२ गति-बुद्धि-प्रत्यवसानार्थशब्दकर्मा-कर्मकाणामणि कर्ता स णौ**<br>गति-बुद्धि-प्रत्यवसानार्थशब्दकर्माकर्मकाणामणि यः कर्ता स णौ कर्मसंज्ञो भवति।<br>प्रत्यवसानम् = भक्षणम्। अर्थ शब्दः प्रत्येकमभिसम्बध्यते।<br>गत्यर्थ - गच्छति, याति वा माणवको ग्रामम्; गमयति, यापयति वा माणवकं ग्रामम्।<br>बुद्ध्यर्थ - बुध्यते, वेत्ति वा माणवको धर्मम्, बोधयति, वेदयति वा माणवकं धर्मम्।<br>प्रत्यवसानार्थ - भुङ्क्ते, अश्नाति वा माणवक ओदनम्; भोजयति, आशयति वा माणवकमोदनम्।<br>शब्दकर्म - अधीते, पठति वा माणवको वेदम्; अध्यापयति, पाठयति वा माणवकं वेदम्।<br>अकर्मक - आस्ते, शेते वा देवदत्तः।<br>आसयति, शाययति वा देवदत्तम्।<br>गतिबुद्धीत्यादि किम्? पचति ओदनं देवदत्तः, पाचयत्योदनं देवदत्तेन। | अणि कर्ता स णौ५३ |
| कारकम् २३<br>अणि कर्ता स णौ५२ | **५३. हृक्रोरन्यतरस्याम्**<br>हृ-क्रोरणि यः कर्ता स णौ कर्मसंज्ञः अन्यतरस्यां भवति।<br>हरति भारं माणवकः, हारयति भारं माणवकं, माणवकेन वा।<br>करोति कटं देवदत्तः, कारयति कटं देवदत्तं, देवदत्तेन वा। | |
| कारकम् २३ | **५४. स्वतन्त्रः कर्ता**<br>स्वतन्त्रो यत्कारकं तत्कर्तृसंज्ञं भवति।<br>स्वतन्त्र इत्यस्य क्रियासिद्धौ प्रधानत्वेन विवक्षित इत्यर्थः।<br>देवदत्तः पचति। स्थाली पचति। असिश्छिनत्ति। | कर्ता ५५ |
| कारकम् २३<br>कर्ता ५४ | **५५. तत्प्रयोजको हेतुश्च**<br>तत्प्रयोजकः (कर्तुः प्रयोजकः) यः तत्कारकं हेतुसंज्ञं भवति, चकारात्कर्तृसंज्ञं च।<br>संज्ञासमावेशार्थश्चकारः।<br>कुर्वाणं प्रयुङ्क्ते कारयति देवदत्तः। हेतुत्वाद् 'हेतुमति च' इत्यनेन तन्निष्ठक्रियावाचकधातोर्णिज् भवति, कर्तृत्वेन कर्तृसंज्ञाप्रयुक्ता लकारा भवन्ति। | |

| | | |
|---|---|---|
| | **५६. प्राग्रीश्वरान्निपाताः**<br>अधिरीश्वरे (१.४.९७)इतिसूत्रस्थित'रीश्वर' शब्दात् प्राग् निपाता इत्यस्याधिकारो वेदितव्यः।<br>प्राग्वचनं संज्ञासमावेशार्थम्। एकसंज्ञाधिकारेऽपि प्राग्ग्रहणाद् गत्युपसर्गकर्मप्रवचनीयसंज्ञाभिः सह निपातसंज्ञा समाविशतीति भावः। 'रीश्वरे' त्यत्र रेफग्रहणं 'ईश्वरे तोसुन्कसुनौ'(३.४.१३) इत्ययमवधिर्मा विज्ञायीति। यदि तु प्रथमातिक्रमणे कारणाभावात् 'अधिरीश्वरे'(१.४.९७) इत्यस्यैवावधित्वम्,तदा सरफिग्रहणं स्पष्टार्थम्।<br>निपातसंज्ञाया उदाहरणम् - च, वा, ह, अह। | निपाताः ९८ |
| निपाताः ५६ | **५७. चादयोऽसत्त्वे**<br>असत्त्वेऽर्थे वर्तमानाश्चादयो निपातसंज्ञा भवन्ति।<br>च, वा, ह, अह इत्यादि। | असत्त्वे ५८ |
| निपाताः ५६<br>असत्त्वे ५७ | **५८. प्रादयः**<br>प्रादयोऽसत्त्वे निपातसंज्ञा भवन्ति।<br>प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप- इत्येते प्रादयः।<br>पृथग्योगकरणमुत्तरसंज्ञाविशेषणार्थम्। 'उपसर्गाः क्रियायोगे' इति चादीनामुपसर्गसंज्ञा मा भूत्।<br>असत्त्वे इत्येव। तेन- परा जयन्ति सेनाः, इत्यत्र परा इत्यस्य उपसर्गसंज्ञा न भवति। परा इत्यस्य उत्कृष्टाः इत्यर्थः, परदेशस्थिता इत्यर्थो वा। | प्रादयः ६० |
| निपाताः ५६<br>प्रादयः ५८ | **५९. उपसर्गाः क्रियायोगे**<br>प्रादयः निपाताः क्रियायोगे उपसर्गसंज्ञा भवन्ति।<br>प्रणयति। परिणयति।<br>(वा०) मरुच्छब्दस्य चोपसंख्यानम्।<br>मरुद्भिर्दत्तः मरुत्तः।<br>'संज्ञाविधानसामर्थ्यादनजन्तत्वेऽपि 'अच उपसर्गात्तः' इति सूत्रेण दाधातोः आकारस्य तकारादेशः।<br>(वा०) श्रच्छब्दस्योपसंख्यानम्।<br>श्रद्धा। 'आतश्चोपसर्गे' इति सूत्रेणाङ् भवति।<br>(वा०) अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्।<br>अङ्-अन्तर्धा। किविधिः-अन्तर्द्धिः।<br>णत्वम्-अन्तर्हण्यात्।<br>वा०) दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः।<br>दुःस्थितिः। दुर्भवानि। ( | क्रियायोगे ७९ |

| | | |
|---|---|---|
| निपाताः ५६<br>प्रादयः ५८<br>क्रियायोगे ५९ | ६०. गतिश्च<br>प्रादयः निपाताः क्रियायोगे गतिसंज्ञाश्च भवन्ति।<br>योगविभाग उत्तरार्थः; उत्तरत्र गतिसंज्ञैव यथा स्यात्, उपसर्गसंज्ञा मा भूत्।<br>चकारः संज्ञासमावेशार्थः। प्रणीतम्। अभिषिक्तम्।<br>'गतिरनन्तरः' इति स्वरः, उपसर्गादसमासेऽपि' इत्यनेन णत्वम्, 'उपसर्गात्सुनोति' इत्यनेन षत्वं च भवति। | गतिः ७९ |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६० | ६१. ऊर्यादि-च्वि-डाचश्च<br>ऊर्यादि-च्वि-डाचश्च क्रियायोगे गतिसंज्ञकाः भवन्ति।<br>ऊर्यादि- ऊरीकृत्य ; उररीकृत्य।<br>च्वि - शुक्लीकृत्य।<br>डाच् - पटपटाकृत्य।<br>एषु 'कुगतिप्रादयः' इति सूत्रेण समासः इति 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति सूत्रेण ल्यप्। | |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६० | ६२. अनुकरणं चानितिपरम्<br>अनुकरणमनितिपरं क्रियायोगे गतिसंज्ञं भवति।<br>इतिशब्दः परो यस्मात् तद् इतिपरम्, न इतिपरम् इति अनितिपरम्।<br>खाट्कृत्य।<br>अनितिपरम् इति किम्? खाडिति कृत्वा निरष्ठीवत्।<br>'निरष्ठीवत्' इति निःपूर्वाद् 'ष्ठिवु निरसने' इति धातोः लङि रूपम्। | |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६० | ६३. आदरानादरयोःसदसती<br>आदरानादरयोः सत्, असत् चेति शब्दस्वरूपे क्रियायोगे गतिसंज्ञे भवतः।<br>प्रीतिपूर्विका प्रत्युत्थानादिविषया त्वरा आदरः।<br>अवज्ञया कर्त्तव्यं प्रत्युत्त्थानादिकं प्रत्युपेक्षा अनादरः।<br>गुरुं सत्कृत्य कृतः। खलान् असत्कृत्य गतः।<br>आदरानादरयोः किम्? सत्कृत्वा गतः।<br>असत्कृत्वा गतः। अत्र शोभनवाचकः, विद्यमानवाचको वा सच्छब्दः, तद्विपरीतवचनोऽसच्छब्दः। | |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६० | ६४. भूषणेऽलम्<br>भूषणेऽर्थे यः 'अलम्' इतिशब्दः स क्रियायोगे गतिसंज्ञो भवति।<br>कन्याम् अलङ्कृत्य गतः।<br>भूषणे किम्? अलं भुक्त्वा ओदनं गतः।<br>पर्याप्तमित्यर्थः। | |

| | | |
|---|---|---|
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६० | ६५. अन्तरपरिग्रहे<br>अपरिग्रहेऽर्थे यः 'अन्तर्' इतिशब्दः स क्रियायोगे गतिसंज्ञो भवति।<br>परिग्रहः = स्वीकरणम्, तदभावोऽपरिग्रहः।<br>अन्तर्हत्य स्थितः खलः। मध्ये हत्वेत्यर्थ।<br>अपरिग्रहे इति किम्? अन्तर्हत्वा मूषिकां श्येनो गतः। परिगृह्य गत इत्यर्थः। | |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६० | ६६. कणेमनसी श्रद्धाप्रतीघाते<br>कणेमनसी श्रद्धाप्रतीघाते क्रियायोगे गतिसंज्ञे भवतः।<br>कणे शब्दः सप्तम्यन्तप्रतिरुपको निपात इह अभिलाषातिशये वर्तते। तत्साहचर्यान्मनः शब्दोऽपि अभिलाषवृत्तिरेवेह विज्ञायते।<br>कणेहत्य, मनोहत्य वा पयः पिबति। आतृष्णमित्यर्थः।<br>श्रद्धाप्रतीघाते इति किम्? कणे हत्वा गंतः। मनो हत्वा गतः। अत्र कणे शब्दः सूक्ष्मे तण्डुलावयवेऽधिकरणभूते वर्तते, मनश्शब्दश्च चेतसि। | |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६० | ६७. पुरोऽव्ययम्<br>पुरोऽव्ययं क्रियायोगे गतिसंज्ञं भवति।<br>पुरस्कृत्य शिखण्डिनम्।<br>अव्ययमिति किम्? पूः, पुरौ, पुरः कृत्वा काण्डं गतः। | अव्ययम् ६९ |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६०<br>अव्ययम् ६९ | ६८. अस्तं च<br>'अस्तम्' इति अव्ययं च क्रियायोगे गतिसंज्ञं भवति।<br>अस्तंगत्य सविता पुनरुदेति। अव्ययमित्येव-अस्तं काण्डम्। क्षिप्तमित्यर्थः। | |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६०<br>अव्ययम् ६७ | ६९. अच्छ गत्यर्थवदेषु<br>अच्छशब्दोऽव्ययमभिशब्दस्यार्थे। स गत्यर्थेषु धातुषु, वदतौ च गतिसंज्ञो भवति।<br>अच्छगत्य, अभिमुखं गत्वेत्यर्थः।<br>अच्छोद्य। अभिमुखम् उक्त्वेत्यर्थः।<br>अव्ययमित्येव- उदकमच्छं गच्छति।<br>अत्र अच्छमित्यस्याकलुषमित्यर्थः। | |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६० | ७०. अदोऽनुपदेशे<br>अदोऽनुपदेशे क्रियायोगे गतिसंज्ञं भवति।<br>अदस् शब्दस्त्यदादिषु पठ्यते।<br>उपदेशः = परार्थः प्रयोगः।<br>अदः कृत्य स गतः। एतत्कर्त्तव्यमिति स्वयमालोच्य स तत्कार्यं कृत्वा गत इत्यर्थः।<br>अनुपदेश इति किम्? अदः कृत्वा गच्छ। | |

| | | |
|---|---|---|
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६० | ७१. तिरोऽन्तर्द्धौ<br>तिरोऽन्तर्द्धौ क्रियायोगे गतिसंज्ञं भवति।<br>तिरोभूय।<br>अन्तर्द्धाविति किम्? तिरो भूत्वा स्थितः। पार्श्वतो भूत्वेत्यर्थः। | तिरोऽन्तर्धौ ७२ |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६०<br>तिरोऽन्तर्धौ ७१ | ७२. विभाषा कृञि<br>तिरोऽन्तर्द्धौ कृञि विभाषा गतिसंज्ञो भवति।<br>तिरः कृत्य, तिरः कृत्वा। तिरस्कृत्य; तिरस्कृत्वा।<br>अन्तर्द्धावित्येव - तिरः कृत्वा काष्ठं तिष्ठति। अनृजु भूत्वा, पार्श्वतो भूत्वा वेत्यर्थः। | विभाषा ७६<br>कृञि ७६ |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६०<br>विभाषा ७२<br>कृञि ७२ | ७३. उपाजेऽन्वाजे<br>उपाजेऽन्वाजे कृञि विभाषा गतिसंज्ञे भवतः।<br>उपाजेऽन्वाजे शब्दौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्तेते।<br>उपाजे कृत्य, उपाजेकृत्वा।<br>अन्वाजेकृत्य, अन्वाजेकृत्वा। | |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६०<br>विभाषा ७२<br>कृञि ७२ | ७४. साक्षात्प्रभृतीनि च<br>साक्षात्प्रभृतीनि च कृञि विभाषा गतिसंज्ञानि भवन्ति।<br>(वा०) साक्षात्प्रभृतिषु च्व्यर्थवचनम्।<br>असाक्षात् साक्षात्कृत्वा इति साक्षात्कृत्य, साक्षात्कृत्वा इति वा। अमिथ्या मिथ्या कृत्वा इति मिथ्याकृत्य, मिथ्याकृत्वा इति वा। | |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६०<br>विभाषा ७२<br>कृञि ७२<br>विभाषा ७२<br>कृञि ७२ | ७५. अनत्याधान उरसि-मनसी<br>अनत्याधाने उरसि, मनसि कृञि विभाषा गतिसंज्ञे भवतः।<br>अत्याधानम् = उपश्लेषणम्, तदन्यत् = अनत्याधानम्। उरसि, मनसि-इत्येतौ विभक्तिप्रतिरूपकौ निपातौ।<br>उरसिकृत्य, उरसिकृत्वा। मनसिकृत्य, मनसिकृत्वा। निश्चित्येत्यर्थः।<br>अनत्याधान इति किम्? उरसि कृत्वा पाणिं शेते। | अनत्याधाने ७६ |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६०<br>विभाषा ७२<br>कृञि ७२<br>अनत्याधाने ७५ | ७६. मध्ये पदे निवचने च<br>मध्ये, पदे, निवचने च कृञि विभाषा गतिसंज्ञानि भवन्ति अनत्याधाने।<br>मध्येपदेशब्दौ निपातौ, निवचनं वचनाभावः,तत्र निपातनादेकारान्तत्वं न पुनरेषा सप्तमी।<br>मध्येकृत्य, मध्येकृत्वा। पदेकृत्य, पदेकृत्वा।<br>निवचनेकृत्य, निवचने कृत्वा ; वाचं नियम्येत्यर्थः।<br>अनत्याधान इत्येव-हस्तिनः पदे कृत्वा शिरः शेते। | |

| | | |
|---|---|---|
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६० कृञि७२ | ७७. नित्यं हस्ते-पाणावुपयमने<br>हस्ते, पाणौ कृञि नित्यं गतिसंज्ञे भवतः, उपयमने।<br>उपयमनम् = दारकर्म, विवाहसंस्कारो वा।<br>हस्ते-पाणौ इत्येतौ शब्दौ सप्तम्यन्तप्रतिरूपकौ निपातौ। हस्तेकृत्य। पाणौ कृत्य।<br>उपयमने इति किम्? हस्ते कृत्वा कार्षापणं गतः। | |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६० कृञि७२ | ७८. प्राध्वं बन्धने<br>प्राध्वं बन्धने कृञि गतिसंज्ञं भवति।<br>'प्राध्वम्' इति मकारान्तमव्ययमानुकूल्ये वर्तते।<br>बन्धनहेतुके आनुकूल्ये प्राध्वमित्यस्यानेन गतिसंज्ञा भवति।<br>प्राध्वं कृत्य कुटुम्बं स्थितः। बन्धनेनानुकूल्यं कृत्वेत्यर्थः।<br>बन्धने इति किम्? प्रार्थनादिना आनुकूल्यकरणे मा भूत्। प्राध्वं कृत्वा कुटुम्बं स्थितः। प्रार्थनादिना आनुकूल्यं कृत्वेत्यर्थः। | |
| निपाताः ५६<br>क्रियायोगे ५९<br>गतिः ६० कृञि७२ | ७९. जीविकोपनिषदावौपम्ये<br>जीविकोपनिषदौ औपम्ये कृञि गतिसंज्ञौ भवतः।<br>जीविका = जीवनोपायः।<br>उपनिषद्=रहस्यं, वेदान्तजन्यं ज्ञानम्, वेदान्तभागो वा।<br>जीविकाकृत्य। जीविकामिवकृत्वेत्यर्थः।<br>उपनिषत्कृत्य। उपनिषदमिव कृत्वेत्यर्थः।<br>औपम्य इति किम्? जीविकां कृत्वा गतः। | |
| निपाताः ५६ | ८०. ते प्राग्धातोः<br>ते = गत्युपसर्गाः धातोः प्रागेव प्रयोक्तव्याः।<br>प्रणयति। प्रकृत्य। | ते धातोः ८२ |
| निपाताः ५६<br>ते धातोः ८० | ८१. छन्दसि परेऽपि<br>ते = गत्युपसर्गाः छन्दसि धातोः परेऽपि प्रयुज्यन्ते अपिना प्रागपि।<br>याति नि हस्तिना। नियाति हस्तिना। हन्ति नि मुष्टिना। निहन्ति मुष्टिना। | छन्दसि ८२ |
| निपाताः ५६<br>ते धातोः ८०<br>छन्दसि ८१ | ८२. व्यवहिताश्च<br>ते = गत्युपसर्गाः छन्दसि व्यवहिताश्चापि प्रयुज्यन्ते।<br>आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः। आयाहि। | |
| | ८३. कर्मप्रवचनीयाः<br>अधिकारोऽयम्, 'विभाषा कृञि' (१.४.९८) इति सूत्रं यावत्। | कर्मप्रवचनीयाः९८ |

| | | |
|---|---|---|
| निपाताः ५६<br>कर्मप्रवचनीयाः८३ | ८४. अनुर्लक्षणे<br>लक्षणे (द्योत्ये) अनुः कर्मप्रवचनीयसंज्ञो भवति।<br>पर्जन्यो जपमनु प्रावर्षत्।<br>हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः। परापि हेतौ तृतीया 'कर्मप्रवचनीययुक्ते' इत्यनेन बाध्यते, 'लक्षणेत्थम्भूत' इत्यादिना सिद्धे पुनः संज्ञाविधानसामर्थ्यात्। | अनुः ८६ |
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३<br>अनुः ८४ | ८५. तृतीयार्थे<br>तृतीयार्थे (द्योत्ये) अनुः कर्मप्रवचनीयसंज्ञो भवति।<br>'तृतीयार्थः' इत्यस्य सहार्थ इत्यर्थः।<br>नदीमन्वसिता सेना। गङ्गामन्वसिता पाटलिपुत्रनगरी। तया सह सम्बद्धेत्यर्थ। | |
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३<br>अनुः ८४ | ८६. हीने<br>हीने (द्योत्ये) अनुः कर्मप्रवचनीयसंज्ञो भवति।<br>हीनम् इत्यस्य न्यूनमित्यर्थः।<br>अनुशाकटायनं वैयाकरणाः।<br>अन्वर्जुनं योद्धारः। ततो हीना इत्यर्थः। | हीने ८७ |
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३<br>हीने ८६ | ८७. उपोऽधिके च<br>उपोऽधिके, चकाराद् हीने च कर्मप्रवचनीयसंज्ञो भवति।<br>अधिके - उप परार्धे हरेर्गुणाः।<br>परार्धादधिका इत्यर्थः।<br>हीने - उप हरिं सुराः। ततो हीना इत्यर्थः। | |
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३ | ८८. अपपरी वर्जने<br>अपपरी वर्जने कर्मप्रवचनीयसंज्ञौ भवतः।<br>अप हरेः संसारः। परि हरेः संसारः।<br>'पञ्चम्यपाङ्परिभिः' इति पञ्चमी।<br>जन्ममृत्युचक्रात्मकं संसरणम् = संसारः, हरिं वर्जयित्वा भवतीत्यर्थः। | |

| | | |
|---|---|---|
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३ | ८९. आङ् मर्यादावचने<br>मर्यादावचने यः आङ् स कर्मप्रवचनीयसंज्ञो भवति।<br>मर्यादावचनशब्देन मर्यादाशब्दो यत्रोच्यते तन्मर्यादावचनमिति व्युत्पत्त्या<br>'आङ् मर्यादाभिविध्योः' इति सूत्रं गृह्यते। तस्मिन् सूत्रे अभिविधिशब्दोऽपि वर्तते। तेन सूत्रस्य फलितार्थो भवति -मर्यादायां, अभिविधौ च यः आङ् स कर्मप्रवचनीयसंज्ञो भवति।<br>तेन विनेति मर्यादा; तेन सहेत्यभिविधिः।<br>मर्यादायाम् - आ मुक्तेः संसारः।<br>मुक्तेः प्रागित्यर्थः।<br>अभिविधौ - आकुमारेभ्यो यशः पाणिनेः।<br>कुमारेष्वपि पाणिनेर्यशः प्रसृतमासीदित्यर्थः।<br>'पञ्चम्यपाङ्परिभिः' इति सूत्रेण पञ्चमी। | |
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३ | ९०. लक्षणेत्थंभूताख्यान-भाग-वीप्सासु प्रतिपर्यनवः<br>लक्षणेत्थंभूताख्यान-भाग-वीप्सासु प्रतिपर्यनवः कर्मप्रवचनीयसंज्ञाः भवन्ति।<br>लक्षणे - वृक्षं प्रति, परि, अनु वा विद्योतते विद्युत्।<br>विद्युद् विद्योतते इति वृक्षोपरि तस्य क्षणिकं प्रकाशं दृष्ट्वा ज्ञापितं भवतीति वृक्षः लक्षणं, विद्युद् लक्ष्येति प्रत्यादिः द्योतयति।<br>इत्थम्भूताख्याने - साधुर्देवदत्तो मातरं प्रति, परि, अनु वा। देवदत्तः मातृसमक्षं साधुत्वेतिप्रकारयुक्तो भवतीति प्रत्यादिः द्योतयति।<br>भागे - यदत्र मां प्रति, परि, अनु वा स्याद् तद् दीयताम्। मां प्रति, परि, अनु-इत्यस्य मम भागः इत्यर्थः।<br>वीप्सायाम् - वृक्षं वृक्षं प्रति, परि, अनु वा सिञ्चति। प्रतिवृक्षमित्यर्थः। | लक्षण-वीप्सासु९१ |
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३<br>लक्षण-वीप्सासु९० | ९१. अभिरभागे<br>अभिः लक्षणादिषु कर्मप्रवचनीयसंज्ञो भवति, भागं वर्जयित्वा। वृक्षमभि विद्योतते विद्युत्।<br>साधुर्देवदत्तो मातरमभि।<br>वृक्षं वृक्षमभिसिञ्चति। | |

| | | |
|---|---|---|
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३ | ९२. प्रतिः प्रतिनिधि-प्रतिदानयोः<br>प्रतिः प्रतिनिधि-प्रतिदानयोः कर्मप्रवचनीयसंज्ञो भवति।<br>मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं, प्रत्यर्पणं वा प्रतिदानम्।<br>अभिमन्युः अर्जुनात्प्रति।<br>तिलेभ्यः प्रतियच्छति माषान्।<br>'प्रतिनिधिप्रतिदाने च यस्मात्' इति सूत्रेण पञ्चमी। | |
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३ | ९३. अधिपरी अनर्थकौ<br>अनर्थकौ अधिपरी कर्मप्रवचनीयसंज्ञौ भवतः।<br>अनर्थकौ इत्यस्य अर्थविशेषस्याद्योतकौ इत्यर्थः।<br>कुतोऽध्यागच्छति,पर्यागच्छति वा ?<br>कर्मप्रवचनीयसंज्ञया गतिसंज्ञाबाधात् 'गतिर्गतौ' इति सूत्रेण निघातो न। | |
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३ | ९४. सुः पूजायाम्<br>सु पूजायां कर्मप्रवचनीयसंज्ञो भवति।<br>सुसिक्तं, सुस्तुतं वा भवता।<br>उपसर्गत्वनिमित्तं षष्वं न भवति।<br>पूजायाम् किम्? सुषिक्तं किं तावत्र? | पूजायाम् ९५ |
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३<br>पूजायाम् ९४ | ९५. अतिरतिक्रमणे च<br>अतिः अतिक्रमणे चकारात् पूजायां च कर्मप्रवचनीयसंज्ञो भवति।<br>निष्पन्नेऽपि वस्तुनि क्रियाप्रवृत्तिः अतिक्रमणम् - अतिसिक्तमेव भवता।<br>अति स्तुतमेव भवता।<br>पूजायाम् - अतिसिक्तं भवता।<br>अतिस्तुतं भवता। शोभनं सिक्तं, स्तुतं चेत्यर्थः। | |
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३ | ९६. अपिः पदार्थ-सम्भावनाऽन्ववसर्ग-गर्हा-समुच्चयेषु<br>अपिः पदार्थे, सम्भावने, अन्ववसर्गे, गर्हायाम्, समुच्चयेषु कर्मप्रवंचनीयसंज्ञो भवति।<br>अप्रयुज्यमानस्य पदस्यार्थः पदार्थः।<br>शक्त्युत्कर्षमानिष्कर्तुमत्युक्तिः सम्भावनम्।<br>अन्ववसर्गः = कामचारानुज्ञा। गर्हा = निन्दा।<br>निरपेक्षाणामेकत्रान्वयः समुच्चयः।<br>पदार्थे - सर्पिषोऽपि स्यात्। अपिः अप्रयुज्यमानस्य 'बिन्दुः' इति पदस्यार्थे वर्तते।<br>सम्भावने - अपि सिञ्चेन्सूलसहस्रम्। अन्ववसर्गे - अपि सिञ्च, अपि स्तुहि।<br>गर्हा - अपि स्तुयाद् वृषलम्।<br>सम्मुच्चये - अपि सिञ्च, अपि स्तुहि।<br>उपसर्गसंज्ञाबाधनाद् उदाहरणेषु षत्वं न भवति। | |

| | | |
|---|---|---|
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३ | **९७. अधिरीश्वरे**<br>ईश्वरेऽर्थे :अधिः' इति निपातः कर्मप्रवचनीयसंज्ञो भवति।<br>ईश्वरः = स्वमी, स च स्वमपेक्षते, अतोऽनेन 'अधि' इत्यस्यस्य स्व-स्वामिसम्बन्धे कर्मप्रवचनीयसंज्ञा भवति।<br>तत्र कदाचित् स्वामिनः, कदाचिच्च स्वात् 'यस्मादधिकं यस्य चेश्वरवचनम्' इति सूत्रेण सप्तमी भवति।<br>अधि ब्रह्मदत्ते पञ्चालाः ; ब्रह्मदत्तस्य स्वाः पञ्चाला इत्यर्थः। अधि पञ्चालेषु ब्रह्मदत्तः; पञ्चालानां ब्रह्मदत्तः स्वामीत्यर्थः। | अधिः ९८ |
| निपाताः ५६<br>कर्मप्रवचनीयाः ८३<br>अधिः ९७ | **९८. विभाषा कृञि**<br>अधिरीश्वरे कृञि विभाषा कर्मप्रवचनीयसंज्ञो भवति।<br>यदत्र मामधिकरिष्यति ; विनियोक्ष्यते इत्यर्थः।<br>इह विनियोक्तुरीश्वरत्वं गम्यते। कर्मप्रवचनीयसंज्ञा पक्षे गतिसंज्ञाबाधनात् 'तिङि चोदात्तवति' इति निघातो न भवति, विकल्पे तु गतित्वाद् निघातो भवति, इत्येवात्र विभाषाग्रहणस्य फलम्। | |
| | **९९. लः परस्मैपदम्**<br>लः इति षष्ठ्यन्तं पदम्। तस्य च अध्याहारलभ्येन 'आदेश' इति पदेन अन्वयं कृत्वा सूत्रस्यार्थो भवति - लादेशाः परस्मैपदसंज्ञाः भवन्ति।<br>तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस्, मस्, शतृ, क्वसु इत्येते एकादेश लादेशाः परस्मैपदसंज्ञकाः प्रत्ययाः कथ्यन्ते। | लः १०० |
| लः ९९ | **१००. तङानावात्मनेपदम्**<br>लादेशौ तङ्, आन-इत्येतौ आत्मनेपदसंज्ञौ भवतः।<br>तङ् प्रत्यहारः, आन इति पदेन शानच्-कानचोर्ग्रहणम्।<br>त, आताम्, झ, थास्, आथाम्, ध्वम्, इट्, वहि, महिङ्, शानच्, कानच् - इत्येते एकादेश लादेशा आत्मनेपदसंज्ञकाः प्रत्ययाः कथ्यन्ते। | |

| | | |
|---|---|---|
| | **१०१. तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः**<br>तिङस्त्रीणि त्रीणि (शब्दरूपाणि) प्रथम-मध्यमोत्तमसंज्ञानि भवन्ति।<br>तिप, तस्, झि इति प्रथमः।<br>सिप्, थस्, थ इति मध्यमः।<br>मिप्, वस्, मस् इति उत्तमः।<br>पुनः<br>त, आताम्, झ इति प्रथमः।<br>थास्, आथाम्, ध्वम् इति मध्यमः।<br>इट्, वहि, महिङ् इति उत्तमः। | त्रीणि त्रीणि १०३<br>तिङः १०४ |
| त्रीणि त्रीणि १०१<br>तिङः १०१ | **१०२. तान्येकवचन-द्विवचन-बहुवचनान्येकशः**<br>तानि = लब्धप्रथमादिसंज्ञकानि शब्दस्वरूपाणि एकशः=एकमेकं भूत्वा क्रमेण एकवचन-द्विवचन-बहुवचनसंज्ञकानि भवन्ति।<br>यथा तिप् इत्येकवचनम्, तस् इति द्विवचनम्, 'झि' इति बहुवचनम्। एवमग्रेऽपि।<br>सूत्रे 'तानि' इति वचनं पुरुषवचनसंज्ञयोः समावेशार्थम्। | एकवचन-कशः१०३ |
| त्रीणि त्रीणि १०१<br>एकवचन-कशः१०२ | **१०३. सुपः**<br>सुपोऽपि त्रीणि त्रीणि शब्दरूपाणि एकशः एकवचन-द्विवचन-बहुवचनसंज्ञकानि भवन्ति।<br>यथा सु इत्येकवचनम्, औ इति द्विवचनम्, जस् इति बहुवचनम्। एवमग्रेऽपि। | सुपः १०४ |
| सुपः १०३<br>तिङः १०१<br>त्रीणि त्रीणि १०१ | **१०४. विभक्तिश्च**<br>सुप्तिङोः त्रीणि-त्रीणि विभक्तिसंज्ञान्यपि भवन्ति।<br>तिङो विभक्तिसंज्ञायाः प्रयोजनम्, तस्थसित्यादौ 'न विभक्तौ तुस्माः' इतीत्संज्ञाप्रतिषेधः, सुपस्त्वेतच्च, अन्यच्च त्यदाद्यत्वादि।<br>सूत्रे चकारः पुरुषादिसंज्ञासमावेशार्थः। | |

| | | |
|---|---|---|
| | **१०५. युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः**<br>समानाधिकरणे (तुल्यकारके) उपपदे सति धातोर्मध्यमपुरुषसंज्ञकः प्रत्ययो भवति, स्थानिन्यपि युष्मदि (युष्मदः प्रसङ्गमात्रेऽपि अर्थात् युष्मदोऽप्रयोगेऽपि) धातोः मध्यमपुरुषसंज्ञकः प्रत्ययो भवति।<br>त्वं पचसि, युवां पचथः, यूयं पचथ। स्थानिन्यपि- पचसि, पचथः, पचथ।<br>समानाधिकरणे इति किम्? त्वया पच्यते- इत्यत्र मा भूत्, भिन्नं ह्यत्राधिकरणम्, तथाहि 'त्वया' इत्येतत् कर्तृवाचि कर्तरि तृतीया- विधानात्, 'पच्यते' इति कर्मवाचि कर्मणि लकारविधानात्। | उपपदे समानाधिकरणे स्थानिन्यपि १०८ मध्यमः १०६ |
| उपपदे समानाधिकरणे स्थानिन्यपि १०५ मध्यमः १०५ | **१०६. प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च**<br>प्रहासे (गम्यमाने) च मन्योपपदे धातोः मध्यमपुरुषसंज्ञकः प्रत्ययो भवति, मन्यतेश्च उत्तमपुरुषसंज्ञकः प्रत्ययो स चैकवच्च भवति।<br>प्रहासः = परिहासः, क्रीडा।<br>एहि 'मन्ये ओदनं भोक्ष्यसे' इति, नहि भोक्ष्यसे, भुक्तः सोऽतिथिभिः। एतम् 'मन्ये ओदनं भोक्ष्येथे' इति नहि भोक्ष्येथे, भुक्तः सोऽतिथिभिः। एत 'मन्ये ओदनं भोक्ष्यध्वे' इति नहि भोक्ष्यध्वे, भुक्तः सोऽतिथिभिः। एत 'मन्ये ओदनं भोक्ष्यध्वे' इति नहि भोक्ष्यध्वे, भुक्तः सोऽतिथिभिः। सत्यप्योदने भोक्तुमागतं श्यालादिकं प्रति एतत्प्रयुज्यते इति परिहासो गम्यतेऽत्र। | |
| उपपदे समानाधिकरणे स्थानिन्यपि १०५ | **१०७. अस्मद्युत्तमः**<br>समानाधिकरणे (तुल्यकारके) अस्मदि उपपदे धातोरुत्तमपुरुषसंज्ञकः प्रत्ययो भवति, स्थानिन्यपि अस्मदि धातोरुत्तमपुरुषसंज्ञकः प्रत्ययो भवति।<br>अहं पचामि। आवां पचावः। वयं पचामः।<br>स्थानिन्यपि - पचामि। पचावः। पचामः। | |
| उपपदे समानाधिकरणे स्थानिन्यपि १०५ | **१०८. शेषें प्रथमः**<br>'शेषे' इति मध्यमोत्तमविषयादन्य उच्यते। अतः सूत्रस्यार्थो भवति-युष्मदस्मद्भ्याम् अन्यस्मिन् समानाधिकरणे उपपदे धातोः प्रथमपुरुषसंज्ञकः प्रत्ययो भवति, स्थानिन्यपि तस्मिन् धातोः प्रथमपुरुषसंज्ञकः प्रत्ययो भवति।<br>सः पचति। तौ पचतः। ते पचन्ति। स्थानिन्यपि - पचति। पचतः। पचन्ति। | |

| | | |
|---|---|---|
| | १०९. परः सन्निकर्षः संहिता<br>परः = अतिशयितः यः सन्निकर्षः = वर्णानां सामीप्यम्, स संहितासंज्ञो भवति।<br>दध्यत्र। मध्वत्र। | |
| | ११०. विरामोऽवसानम्<br>विरामः अवसानसंज्ञो भवति।<br>विरामः = अग्रे वर्णानामभावः।<br>दधिँ। मधुँ। वृक्षः। प्लक्षः। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां प्रथमाध्यायस्य चतुर्थपादः।।

।। समाप्तश्चायं प्रथमाध्यायः।

।। श्रीः ।।

## ।। अथ द्वितीयाध्यायस्य प्रथमः पादः ।।

| | | |
|---|---|---|
| | **१. समर्थः पदविधिः**<br>पदविधिः समर्थः सन् (विग्रहवाक्यार्थाभिधाने समर्थः सन्) साधुर्वेदितव्यः।<br>परिभाषासूत्रमिदम्।<br>पदविधिशब्देन कृत्तद्धितसमासैकशेषसनाद्यन्त-धातुरूपाणां ग्रहणं भवति।<br>यथा - राज्ञः पुरुषः राजपुरुषः इत्यत्र समासः।<br>समर्थ इति किम्? भार्या राज्ञः, पुरुषो देवदत्तस्य।<br>अत्र राज्ञः भार्यया सह सम्बन्धः, पुरुषस्य च देवदत्तेन सह। तत्र राज्ञः पुरुषः इत्यनयोः यदि समासः क्रियेत तर्हि वाक्यस्य स्वरूपं भविष्यति - भार्या राजपुरुषो देवदत्तस्य इति। समासोऽयं विग्रहवाक्यार्थाभिधाने समर्थो नास्तीत्यत्र समासोऽसाधुः।<br>पदविधिग्रहणं किम्? वर्णविधौ अस्य सूत्रस्य प्रवृत्तिर्मा भूदित्यर्थम्। तेन - तिष्ठति दध्यशान त्वं शार्कैन इत्यत्र दधि अशान इत्यनयोः असामर्थ्येऽपि यण् इति वर्णविधिर्भवत्येव। | |
| | **२. सुबामन्त्रिते पराङ्गवत्स्वरे**<br>सुप् (सुबन्तम्) पराङ्गवद् भवति आमन्त्रिते (परतः) स्वरे कर्त्तव्ये।<br>अतिदेशसूत्रमिदम्।<br>कुण्डेनाटन्। परशुना वृश्चन्। 'आमन्त्रितस्य च' इति सूत्रेण सुबन्तसहितस्यामन्त्रितस्य आद्युदात्तो भवति।<br>अङ्गग्रहणं किम्? यथा मृत्पिण्डीभूतः स्वरं लभेत, उभयोराद्युदात्तत्वं मा भूत्। | सुप् २.२.२६ |
| | **३. प्राक्कडारात्समासः**<br>'कडाराः कर्मधारये' (२.२.६८) इत्यतः प्राक् समासः इत्यधिक्रियते। | समासः २.२.३८ |
| सुप् २समासः३ | **४. सह सुपा**<br>सुप् (सुबन्तम्) सुपा (सुबन्तेन) सह समस्यते।<br>पूर्वं भूतः भूतपूर्वः। 'भूतपूर्वे चरट्' इति निर्देशाद् भूतशब्दस्य पूर्वप्रयोगः। | सहसुपा२.२.२२ |
| | **५. अव्ययीभावः**<br>अधिकारोऽयम् 'अन्यपदार्थे च संज्ञायाम्'(२.१.२१) इति यावत्। | अव्ययीभावः २१ |

| सुप् २ सह ४<br>सुपा४ समासः३<br>अव्ययीभावः५ | ६. अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्था-भावात्ययासम्प्रति-शब्दप्रादुर्भाव-पश्चाद्-यथानुपूर्व्य- योगपद्य-सादृश्य-सम्पत्ति-साकल्यान्तवचनेषु<br>विभक्त्याद्यर्थेषु वर्तमानमव्ययं समर्थेन सुबन्तेन सह समस्यते, सोऽव्ययीभावसमासः।<br>विभक्त्यर्थे - गृहे इति अधिगृहम्।<br>समीपार्थे - कुम्भस्य समीपमुपकुम्भम्।<br>समृद्धिः = ऋद्धेराधिक्यम् - मद्राणां समृद्धिः सुमद्रम् वर्तते।<br>व्यृद्धिः = ऋद्धेरभावः। यवनानां व्यृद्धिर्दुर्यवनम्।<br>अर्थाभावः = वस्तुनोऽभावः। मक्षिकाणामभावो निर्मक्षिकम्।<br>अत्ययः = ध्वंसः। हिमस्यात्ययः अतिहिमम्।<br>असंप्रति = उपभोगस्य वर्तमानकालप्रतिषेधः - नायमस्य कम्बलस्य भोगकालः इति अतिकम्बलम्।<br>शब्दप्रादुर्भावः = शब्दस्य प्रकाशः- हरिशब्दस्य प्रकाश इति इतिहरि।<br>पश्चात् - रथस्य पश्चादिति अनुरथम्<br>यथा - सूत्रे यथाशब्देन तदर्थो लक्ष्यते।<br>योग्यता-वीप्सा-पदार्थानतिवृत्ति-सादृश्यानि यथार्थाः।<br>योग्यतायाम् - अनुरूपमस्य दानम्।<br>वीप्सायाम् - अर्थम् अर्थं प्रति प्रत्यर्थम्।<br>पदार्थानतिवृत्तौ- शक्तिमनतिक्रम्य यथाशक्ति।<br>सादृश्ये - हरेः सादृश्यं यथाहरि।<br>आनुपूर्व्यम् = अनुक्रमः-ज्येष्ठस्यानुपूर्व्येणेति अनुज्येष्ठम्।<br>यौगपद्यम् = एककालता - चक्रेण युगपदिति सचक्रं धेहि।<br>सादृश्यम् = तुल्यता। किमर्थमिदमुच्यते, यथार्थ इत्येव सिद्धम् ? गुणभूतेऽपि सादृश्ये यथा स्यात् - सदृशः सख्या ससखि।<br>सम्पत्तिः = अनुरूप आत्मभावः सम्पत्तिः। क्षत्राणां सम्पत्तिः सक्षत्रं शालङ्कायनानाम्।<br>शालङ्कायनानां क्षत्रियाणानुरूपं कर्मेत्यर्थः।<br>साकल्यम् = अशेषता। तृणमत्यपरित्यज्य अत्ति इति सतृणमत्ति।<br>अन्तवचने - अग्निपर्यन्तमधीते इति साग्नि अधीते।<br>अग्निशब्देन अग्निचयनप्रतिपादको ग्रन्थो विवक्षितः। | अव्ययम् ८ |
|---|---|---|

| | | |
|---|---|---|
| सुप् २ सह ४<br>सुपा४ समासः३<br>अव्ययम्६<br>अव्ययीभावः५ | ७. यथाऽसादृश्ये<br>असादृश्ये 'यथा' इत्यव्ययं समर्थेन सुबन्तेन सह समस्यते सोऽव्ययीभावसमासः।<br>यथावृद्धं ब्राह्मणान् आमन्त्रयस्व। यथा शब्दोऽत्र वीप्सायां वर्तते।<br>ये ये वृद्धाः, तान् तान् आमन्त्रयस्वेत्यर्थः।<br>असादृश्ये इति किम्? यथा देवदत्तस्तथा तथा यज्ञदत्तः। अत्र समासो न भवति। | |
| सुप् २ सह ४<br>सुपा४ समासः३<br>अव्ययम्६<br>अव्ययीभावः५ | ८.यावदवधारणे<br>अवधारणे 'यावत्' इत्यव्ययं समर्थेन सुबन्तेन सह समस्यते सोऽव्ययीभावसमासः।<br>अवधारणम् = इयत्तापरिच्छेदः।<br>यावन्तः श्लोकास्तावन्तोऽच्युतप्रमाणा इति यावच्छ्लोकम्।<br>अवधारणे इति किम्? यावद् दत्तं तावद् भुक्तम्। कियन्मया भुक्तमिति नावधारयामि। | |
| सुप् २ सह ४<br>सुपा४ समासः३<br>अव्ययीभावः५ | ९. सुप् प्रतिना मात्रार्थे<br>सुबन्तं मात्रार्थे वर्तमानेन प्रतिना सह समस्यते सोऽव्ययीभावसमासः।<br>सुबिति वर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम्।<br>मात्रा, बिन्दुः, स्तोकम्, अल्पमिति पर्यायाः।<br>अस्त्यत्र किञ्चित् शाकमिति शाकप्रति। | |
| सुप् २ समासः३<br>अव्ययीभावः५ | १०. अक्ष-शलाका-संख्याः परिणा<br>अक्ष-शलाका-संख्याः परिणा सह समस्यन्ते सोऽव्ययीभावसमासः।<br>(वा०) द्यूतव्यवहारे पराजय एवायं समासः।<br>अक्षेण, शलाकया, एकेन वा विपरीतं वृत्तमिति अक्षपरि, शलाकापरि, एकपरि वा। | |
| | ११. विभाषा<br>अधिकारोऽयम्, 'चार्थे द्वन्द्वः' (२.२.२९) इति सूत्रं यावत्।<br>तेनातः परः समासः विभाषा भवति - राज्ञः पुरुषः, राजपुरुषः इति वा। | विभाषा२.२.२९ |

| | | |
|---|---|---|
| सुप् २ समासः३<br>अव्ययीभावः५<br>सह सुपा४<br>विभाषा११ | **१२. अप-परि-बहिरञ्चवः पञ्चम्या**<br>अप, परि, बहिः,अञ्चु- इत्येते सुबन्ताः पञ्चम्यन्तैः सुबन्तैः सह विभाषा समस्यन्ते सोऽव्ययीभावसमासः।<br>अञ्चुपदेन प्र, प्रति-इत्याद्युपसर्गपूर्वाद् अञ्चुधातोर्निष्पन्नाः प्राक्, प्रत्यक् इत्यादयः शब्दाः गृह्यन्ते।<br>अपत्रिगर्तं वृष्टो देवः, अप त्रिगर्तेभ्य इति वा।<br>परित्रिगर्तम्, परि त्रिगर्तेभ्यः। बहिर्ग्रामम्, बहिर्ग्रामात्।<br>प्राग्ग्रामम्, प्राग्ग्रामात्।<br>बहिःशब्दस्य योगे पञ्चमी भवति इत्यर्थस्य एतदेव ज्ञापकम्। | पञ्चम्या १३ |
| सुप् २ पञ्चम्या१२<br>अव्ययीभावः५<br>समासः३<br>सह सुपा४<br>विभाषा११ | **१३. आङ् मर्यादाभिविध्योः**<br>मर्यादाभिविध्योः आङ् समर्थेन सुबन्तेन सह विभाषा समस्यते सोऽव्ययीभावसमासः।<br>तेन विनेति मर्यादा। तेन सहेत्यभिविधिः।<br>मर्यादायाम् - आपाटलिपुत्रं वृष्टो देवः;<br>आपटलिपुत्रादिति वा।<br>अभिविधौ-आकुमारं यशः पाणिनेः, आकुमारेभ्य इति वा। | |
| सुप् २ अव्ययीभावः५<br>समासः३<br>सह सुपा४<br>विभाषा११ | **१४. लक्षणेनाभि-प्रती आभिमुख्ये**<br>आभिमुख्ये अभिप्रती लक्षणवाचिना समर्थेन सुबन्तेन सह विभाषा समस्येते सोऽव्ययीभावसमासः।<br>अभ्यग्नि शलभाः पतन्ति, अग्निमभि इति वा।<br>प्रत्यग्नि, अग्निं प्रति वा। अग्निं लक्ष्यीकृत्य अभिमुखं पतन्तीत्यर्थः। | लक्षणेन १६ |
| सुप् २<br>लक्षणेन १४<br>अव्ययीभावः५<br>समासः३<br>सह सुपा४<br>विभाषा११ | **१५. अनुर्यत्समया**<br>यत्समया (यस्य सामीप्यममर्थम्) अनुर्द्योतयति, तेन लक्षणवाचिना समर्थेन सुबन्तेन सह अनुः विभाषा समस्यते सोऽव्ययीभावसमासः।<br>अनुवनमशनिर्गतः, वनमनु वा, वनस्य समीपं गत इत्यर्थः।<br>उदाहरणे वनशब्दः वनसमीपवाचकः, न तु केवलं वनवाचकः।<br>वनशब्दः वनसमीपवाचकोऽस्तीत्यर्थः अनुना द्योत्यते, स च वनशब्दः अशनेर्गमनस्य लक्षणमिति प्रकृतसूत्रेण समासो भवति। पक्षे 'अनुर्लक्षणे' इति सूत्रेण कर्मप्रवचनीयसंज्ञा, ततो द्वितीया। अत्र वनस्यानु इत्यपि पक्षे उदाहरन्ति व्याख्याकाराः। (द्रष्टव्यमत्र शब्दरत्नम्)।<br>'अव्ययं विभक्तिसमीप०' इत्येव सिद्धे पुनर्वचनं विभाषार्थम्।<br>अनुरिति किम्? वनं समया। यत्समयेति किम्? वृक्षमनुविद्योतते विद्युत्। | अनुः १६ |

| | | |
|---|---|---|
| सुप् २ अनुः १५<br>लक्षणेन १४ समासः३<br>अव्ययीभावः५<br>सह सुपा४<br>विभाषा११ | १६. यस्य चायामः<br>यस्य च आयामो (दैर्घ्यमर्थः) अनुना द्योत्यते तेन लक्षणवाचिना समर्थेन सुबन्तेन सह अनुः विभाषा समस्यते सोऽव्ययीभावसमासः।<br>अनुगङ्गं वाराणसी। पक्षे गङ्गामनु इति।<br>गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षिता वाराणसीत्यर्थः। तथा चास्ति रामायणे – 'निवेश्य गङ्गामनु तां महानदीं चमूम्' इति ।<br>सूत्रोदाहरणे गङ्गाशब्दस्य गङ्गायाः दैर्घ्यमित्यर्थः, न तु केवलं जलप्रवाहरूपा नदीत्यर्थः। तत्र दैर्घ्यमर्थोऽनुना द्योत्यते, स च गङ्गाशब्दः वाराणस्या दर्घ्यं लक्षयति इति लक्षणभूतः। अतः प्रकृतसूत्रेण समासः। पक्षे 'अनुर्लक्षणे' इति सूत्रेण कर्मप्रवचनीयसंज्ञा, ततो द्वितीया। अत्र गङ्गाया अनु इत्यपि पक्षे उदाहरन्ति व्याख्याकाराः। (द्रष्टव्योऽत्र लघुशब्देन्दुशेखरः) | |
| अव्ययीभावः५<br>समासः३ | १७. तिष्ठद्गु-प्रभृतीनि च<br>तिष्ठद्गु-प्रभृतयः (शब्दाः) च कृसमासाः निपात्यन्ते ते च अव्ययीभावसंज्ञकसमासाः भवन्ति।<br>तिष्ठन्ति गावो यस्मिन् काले स तिष्ठद्गु दोहनकालः।<br>वहन्ति गावो यस्मिन् काले स वहद्गु कालः।<br>आयत्यो गावो यस्मिन् काले स आयतीगवं कालः।<br>खलेयवं कालः, खलेबुसं कालः इत्यादि।<br>सूत्रे चकारोऽवधारणार्थः, निपातानामनेकार्थ- त्वात्।<br>तेन तिष्ठद्गुप्रभृतिभिः सह अन्यः समासो न भवति।<br>अतः परमं तिष्ठद्गु इत्यत्र 'सन्महत्' इति सूत्रेण समासो न भवति। | |
| अव्ययीभावः५<br>समासः३<br>सह सुपा४<br>विभाषा११ | १८. पारे-मध्ये षष्ठ्या वा<br>पार-मध्यशब्दौ षष्ठ्या विभाषा समस्येते सोऽव्ययीभावसमासः , तयोरेदन्तत्वं च निपातनाद् भवति।<br>विभाषाधिकारे पुनर्वाग्रहणात् षष्ठीसमासोऽपि पक्षेऽभ्यनुज्ञायते।<br>पारं गङ्गायाः पारेगङ्गम् , गङ्गापारम्। मध्यं गङ्गायाः मध्येगङ्गम् , गङ्गामध्यम्।<br>महाविभाषया गङ्गायाः पारम्, गङ्गाया मध्यमिति वाक्यमपि भवति। | |

| | | |
|---|---|---|
| सुप् २ अव्ययीभावः५<br>समासः३<br>सह सुपा४<br>विभाषा११ | **१६. संख्या वंश्येन**<br>संख्यावाचकः शब्दः वंश्यवाचिना समर्थेन सुबन्तेन विभाषा समस्यते, सोऽव्ययीभावसमासः।<br>वंशः = कुलम्, स च द्विधा – विद्यया, जन्मना च, तत्र भवो वंश्यः।<br>विद्यावंश्ये – द्वौ मुनी व्याकरणस्य वंश्यौ इति द्विमुनि व्याकरणस्य।<br>त्रयो मुनयो व्याकरणस्य वंश्या इति त्रिमुनि व्याकरणस्य।<br>विद्या-तद्वताम् अभेदविवक्षायां त्रिमुनि व्याकरणम् इत्यपि प्रयुज्यते।<br>जन्मवंश्ये – एकविंशतिः भारद्वाजाः इति एकविंशतिभारद्वाजम्। | संख्या २० |
| सुप् २ संख्या १६<br>अव्ययीभावः५<br>समासः३<br>सह सुपा४ | **२०. नदीभिश्च**<br>संख्यावाचकः शब्दः नदीवचनैः समर्थैः सुबन्तैः सह समस्यते सोऽव्ययीभावसमासः।<br>(इष्टिः) समाहारे चायमिष्यते।<br>सप्तानां गङ्गानां समाहारः सप्तगङ्गम्।<br>द्वियमुनम्। पञ्चनदम्। सप्तगोदावरम्।<br>कृष्णोदकपाण्डुपूर्वायाः भूमेरच्प्रत्ययः स्मृतः।<br>गोदावर्याश्च नद्याश्च संख्या उत्तरे यदि॥<br>इति वचनादच्समासान्तः। | नदीभिः २१ |
| सुप् २ नदीभिः२०<br>अव्ययीभावः५<br>समासः३<br>सह सुपा४ | **२१. अन्यपदार्थे च संज्ञायाम्**<br>नदीवाचिभिः समर्थैः सुबन्तैः सह समर्थं सुबन्तं समस्यते, अन्यपदार्थे संज्ञायाम्, सोऽव्ययीभावसमासः।<br>विभाषाधिकारेऽपि वाक्येन संज्ञानवगमादिह नित्यसमाहारः।<br>उन्मत्ता गङ्गा यस्मिन् देशे स उन्मत्तगङ्गं नाम देशः।<br>लोहितगङ्गम्। कृष्णगङ्गम्।<br>शनैर्गङ्गम्।<br>संज्ञायामिति किम्? शीघ्रगङ्गो देशः। अत्र बहुव्रीहिसमासः। | |
| | **२२. तत्पुरुषः**<br>अधिकारोऽयं 'शेषो बहुव्रीहिः' (२.२.२३) इत्यतः प्राक्।<br>राज्ञः पुरुषः राजपुरुषः। | तत्पुरुषः२.२..२२ |

| | | |
|---|---|---|
| तत्पुरुषः २२<br>समासः३ | **२३. द्विगुश्च**<br>द्विगुश्च समासस्तत्पुरुषसंज्ञो भवति।<br>एकासंज्ञाधिकारेऽपि संज्ञाद्वयसमावेशार्थमिदं सूत्रम्।<br>द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजनम्।<br>पञ्चराजी। दशराजी। द्व्यहः, त्र्यहः। पञ्चगवम्, दशगवम्। | |
| तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | **२४. द्वितीया श्रितातीत-पतित-गतात्यस्तप्राप्तापन्नैः**<br>द्वितीयान्तं समर्थं सुबन्तं श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः समर्थैः सुबन्तैः सह विभाषा समस्यते,स च तत्पुरुषसमाससंज्ञो भवति।<br>श्रित- कष्टं श्रितः कष्टश्रितः।<br>अतीत- कान्तारमतीतः कान्तरातीतः।<br>पतित - नरकं पतितः नरकपतितः।<br>गत- ग्रामं गतः ग्रामगतः।<br>अत्यस्त - तरङ्गम् अत्यस्तः तरङ्गात्यस्तः।<br>प्राप्त - सुखं प्राप्तः सुखप्राप्तः।<br>आपन्न - सुखमापन्नः सुखापन्नः। | द्वितीया २६ |
| तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | **२५. स्वयं क्तेन**<br>स्वयम् इत्यव्ययं समर्थेन क्तान्तेन सुबन्तेन सह समस्यते।<br>स्वयं धोतौ इति स्वयंधोतौ पादौ।<br>ऐकपद्यम्, ऐकस्वर्यं च समासस्य फलम्। | क्तेन २८ |
| तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४ | **२६. खट्वा क्षेपे**<br>द्वितीया (द्वितीयान्तः) खट्वाशब्दः क्षेपे (गम्यमाने) क्तान्तेन सुपा सह समस्यते।<br>क्षेपः = निन्दा, स च समासार्थ एव, तेन विभाषाधिकारेऽपि नित्यसमास एवायम्, वाक्येन क्षेपानवगमात्।<br>खट्वारूढो जाल्मः। सर्व एव अविनीतः खट्वारूढ इत्युच्यते,न च गुरोः समक्षं यः खट्वायामुपाविशत् स एव।<br>क्षेपे इति किम्? खट्वामारूढः। | |
| क्तेन २५<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | **२७. सामि**<br>'सामि' सुपा सह समस्यते।<br>'सामि' इत्व्ययम् अर्द्धशब्दार्थे।<br>सामिकृतम्। सामिपीतम्। सामिभुक्तम्।<br>ऐकपद्यम्, ऐकस्वर्यं च समासस्य फलम्। | |

| | | |
|---|---|---|
| द्वितीया२४ क्तेन२५<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | २८. कालाः<br>द्वितीयान्ताः कालवाचिनः समर्थाः सुबन्ताः समर्थेन क्तान्तेन सुबन्तेन सह समस्यन्ते।<br>अनत्यन्तसंयोगार्थं वचनम्।<br>अत्यन्तसंयोगेऽग्रिमेण सूत्रेण समासः।<br>रात्रिम् आरूढा मुहूर्ता इति रात्र्यारूढाः। मासं प्रमितः = प्रमातुमारब्धः इति मासप्रमितश्चन्द्रः।<br>आदिकर्मणि कर्तरि क्तः। | कालाः २९ |
| द्वितीया२४ कालाः२८<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | २९. अत्यन्तसंयोगे च<br>अत्यन्तसंयोगे च (गम्यमानेऽपि) द्वितीयान्ताः कालाः सुपा समस्यन्ते।<br>मुहूर्तं सुखम् मुहूर्त्तसुखम्। वर्षं भोग्यः वर्षभोग्यः। | |
| तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ३०. तृतीया तत्कृतार्थेन गुणवचनेन<br>तृतीया (तृतीयान्तम्) तत्कृतेन गुणवचनेन, अर्थेन(अर्थशब्देन) च सह विभाषा समस्यते।<br>'तत्कृत' इति लुप्ततृतीयाकं पदं 'गुणवचनेन' इत्यस्य विशेषणम्। अर्थेन इति पदेन अर्थशब्दो गृह्यते।<br>तत्कृतेन गुणवचनेन- शङ्कुलया खण्डः शङ्कुलाखण्डः।<br>अर्थेन - धान्येन अर्थः धान्यार्थः।<br>हेतौ तृतीया, अर्थशब्दोऽत्र धनवाचकः। धान्यहेतुकं धनमित्यर्थः। | तृतीया ३५ |
| तृतीया ३० तत्पुरुषः २२ समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ३१. पूर्व-सदृश-समोनार्थ-कलह-निपुण-मिश्र-श्लक्ष्णैः<br>तृतीया पूर्वसदृशादिभिः सह समस्यते।<br>मासपूर्वः। मातृसदृशः। मातृसमः।<br>ऊनार्थ - माषोनम्, माषविकलम्।<br>वाक्कलहः। वाग्निपुणः। गुडमिश्रः। आचारश्लक्ष्णः।<br>(वा०) पूर्वादिष्ववरस्योपसंख्यानम्।<br>मासेनावरः मासावरः। संवत्सरावरः। | |
| तृतीया ३०<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ३२. कर्तृकरणे कृता बहुलम्<br>कर्तकरणे या तृतीया सा कृता (कृदन्तेन) सुपा सह बहुलं समस्यते।<br>कर्तरि तृतीया - अहिना हतः अहिहतः।<br>करणे तृतीया - नखैर्निर्भिन्नो नखनिर्भिन्नः।<br>कर्तृकरणे इति किम्? भिक्षाभिरुषितः। हेतौ तृतीया। | कर्तृकरणे ३३ |

| | | |
|---|---|---|
| कर्तकरणे ३२<br>तृतीया ३०<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ३३. कृत्यैरधिकार्थवचने<br>कर्तृकरणयोः या तृतीया सा कृत्यैः सह समस्यते, अधिकार्थवचने (गम्यमाने)।<br>स्तुतिनिन्दाफलकम् अर्थवादवचनम् अधिकार्थवचनम्।<br>कर्तरि तृतीया - काकेन पेया काकपेया नदी।<br>पूर्णाम्भस्त्वेन स्तुतिः, अल्पाम्भस्त्वेन निन्दा वा।<br>करणे तृतीया- वातच्छेद्यं तृणम्। कोमलत्वेन स्तुतिः, दुर्बलत्वेन निन्दा वा।<br>(वा०) कृत्यग्रहणे यण्ण्यतोर्ग्रहणं कर्त्तव्यम्।<br>इह मा भूत्-काकैः पातव्या नदी इति। | |
| तृतीया ३०<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ३४. अन्नेन व्यञ्जनम्<br>अन्नेन सह व्यञ्जनं समस्यते।<br>संस्कार्यमन्नम्, संस्कारकं व्यञ्जनम्।<br>दध्ना ओदनः दध्योदनः। इहान्तर्भूतोपसेकक्रियाद्वारा अन्नव्यञ्जनयोः सामर्थ्यम्। | |
| तृतीया ३०<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ३५. भक्ष्येण मिश्रीकरणम्<br>भक्ष्येण मिश्रीकरणं समस्यते।<br>मिश्रीक्रियते खाद्यं द्रव्यं येन तद् मिश्रीकरणं गुडादि।<br>गुडेन धानाः इति गुडधानाः। गुडमिश्रिता धाना इत्यर्थः।<br>इहान्तर्भूतमिश्रण- क्रियाद्वारा पूर्वोत्तरपदयोः सामर्थ्यम्। | |
| तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ३६. चतुर्थी तदर्थार्थ-बलि-हित-सुख-रक्षितैः<br>चतुर्थी (चतुर्थ्यन्तम्) तदर्थार्थ -बलि - हित-सुख- रक्षितैः सह विभाषा समस्यते।<br>तदर्थेन-यूपाय दारु यूपदारु।<br>(इष्टिः) तदर्थेन प्रकृतिविकारभावे समासोऽयमिष्यते।<br>तेनेह न भवति-रन्धनाय स्थाली।<br>(वा०) अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्या।<br>ब्राह्मणाय अयं ब्राह्मणार्थः सूपः।<br>ब्राह्मणाय इयं ब्राह्मणार्था यवागूः।<br>ब्राह्मणाय इदं ब्राह्मणार्थं पयः।<br>बलिना - कुबेराय बलिः कुबेरबलिः।<br>हितेन- गवे हितं गोहितम्।<br>सुखेन - गवे सुखं गोसुखम्।<br>रक्षितेन - गवे रक्षितं गोरक्षितम्। | |

| | | |
|---|---|---|
| तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ३७. पञ्चमी भयेन<br>पञ्चमी( पञ्चम्यन्तम्) भयेन सह विभाषा समस्यते।<br>वृकेभ्यो भयम् वृकभयम्।<br>(वा०) भय-भीत-भीति-भीभिरिति वक्तव्यम्।<br>वृकभयम्। वृकभीतः। वृकभीतिः। वृकभीः। | पंचमी ३६ |
| पञ्चमी ३७<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ३८. अपेतापोढ-मुक्त-पतितापत्रस्तैरल्पशः<br>पञ्चमी अपेतादिभिः सह समस्यते।<br>सुखादपेतः सुखापेतः। कल्पनाया अपोढः कल्पनापोढः।<br>चक्रान्मुक्तः। स्वर्गपतितः। तरङ्गाद् अपत्रस्त इति तरङ्गापत्रस्तः।<br>'अल्पशः' इत्युक्त्या अल्पैव पञ्चमी समस्यते, न सर्वा।<br>तेन प्रासादात्पतितः। भोजनादपत्रस्तः इत्यादौ समासो न भवति। | |
| पञ्चमी ३७<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ३९. स्तोकान्तिक-दूरार्थ-कृच्छ्राणि क्तेन<br>पञ्चम्यन्तानि स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन सुपा सह समस्यते।<br>स्तोकान्मुक्तः; अल्पान्मुक्तः।<br>अन्तिकादागतः; अभ्याशादागतः।<br>दूरादागतः; विप्रकृष्टादागतः। कृच्छ्रान्मुक्तः।<br>'पञ्चम्याः स्तोकदिभ्यः' (६.३.२) इति सूत्रेण समासे पञ्चम्या अलुक्। | |
| तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ४०. सप्तमी शौण्डैः<br>सप्तमी (सप्तम्यन्तम्) शौण्डादिभिः सह विभाषा समस्यते।<br>शौण्डैरिति बहुवचननिर्देशादाद्यर्थो गम्यते।<br>अक्षेषु शौण्डः अक्षशौण्डः।<br>अक्षेषु धूर्त्तः अक्षधूर्त्तः। | सप्तमी ४८ |
| सप्तमी ४०<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ४१. सिद्ध-शुष्क-पक्व-बन्धैश्च<br>सिद्ध-शुष्क-पक्व-बन्धैश्च सप्तमी समस्यते।<br>साङ्काश्यसिद्धः। आतपशुष्कः। स्थालीपक्वः। चक्रबन्धः। | |
| सप्तमी ४० तत्पुरुषः २२ समासः३<br>सुप् २ सह सुपा४ | ४२. ध्वाङ्क्षेण क्षेपे<br>ध्वाङ्क्षेण सप्तमी समस्यते क्षेपे (गम्यमाने)।<br>'ध्वाङ्क्षेण' इत्यर्थग्रहणम्।<br>तीर्थे ध्वाङ्क्ष इवेति तीर्थध्वाङ्क्षः, अनवस्थित इत्यर्थः।<br>तीर्थकाकः। तीर्थवायसः।<br>क्षेपे इति किम्? तीर्थे ध्वाङ्क्षस्तिष्ठति। | |

| | | |
|---|---|---|
| सप्तमी ४०<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ४३. कृत्यैर्ऋणे<br>कृत्यैः सह सप्तमी समस्यते, ऋणे (गम्यमाने)।<br>'ऋणपदमावश्यकोपलक्षणम्' इति भाष्यम्।<br>मासे देयमृणं मासदेयम्। संवत्सरदेयम्। त्र्यहदेयम्।<br>ऋणपदमावश्यकोपलक्षणतयैव इहापि समासो भवति–<br>पूर्वाह्णेगेयं साम। प्रातरध्येयोऽनुवाकः।<br>ऋण इति किम्? मासे देया भिक्षा। | |
| सप्तमी ४० | ४४. संज्ञायाम्<br>सप्तमी सुपा सह समस्यते, संज्ञायाम् (विषये)।<br>संज्ञा समुदायोपाधिः, तेन नित्यसमास एवायम्, वाक्येन संज्ञानवगमात्।<br>अरण्येतिलकाः। अरण्येमाषाः। 'हलदन्तात्सप्तम्याः संज्ञायाम्' इति सप्तम्या अलुक्। | |
| सप्तमी ४० तत्पुरुषः २२ समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ४५. क्तेनाहोरात्रावयवाः<br>क्तेनाहोरात्रावयवाः सप्तम्यन्ताः समस्यन्ते।<br>पूर्वाह्णकृतम्। अपराह्णकृतम्।<br>पूर्वरात्रकृतम्। अपरात्रकृतम्। | क्तेन ४७ |
| सप्तमी४० क्तेन४५<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ४६. तत्र<br>'तत्र' इत्येत्सप्तम्यन्तं पदं क्तेन सुपा समस्यते।<br>तत्रभुक्तम्। तत्रकृतम्। तत्रपीतम्।<br>ऐकपद्यम्, ऐकस्वर्यं च समासस्य फलम्। | |
| सप्तमी ४०<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४ | ४७. क्षेपे<br>सप्तमी क्तेन समस्यते क्षेपे (गम्यमाने)।<br>क्षेपः = निन्दा।<br>अवतप्तेनकुलस्थितं तवैतत्।<br>चापलमेतत्, अनवस्थितत्वं तवैतदित्यर्थः। 'तत्पुरुषे कृति बहुलम्' इति सूत्रेण सप्तम्या अलुक्। | क्षेपे ४८ |
| सप्तमी ४० क्षेपे४७<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४ | ४८. पात्रेसमितादयश्च<br>पात्रेसमितादयश्च कृतसमासा निपात्यन्ते, क्षेपे।<br>पात्रेसमिताः। भोजन समय एव सङ्गताः न पुनः कार्ये<br>गेहेशूरः। गेहेनर्दी। कूपमण्डूकः। | |

| | | |
|---|---|---|
| तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ४९. पूर्व-कालैक-सर्व-जरत्-पुराण-नव-केवलाः समानाधिकरणेन<br>पूर्वकालैकादयः समानाधिकरणेन सुपा समस्यन्ते।<br>भिन्नप्रवृत्तिनिमित्तस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्।<br>'पूर्वकाल' इत्यर्थनिर्देशः, परिशिष्टानां स्वरूपग्रहणम्।<br>पूर्वकाल- पूर्वं स्नातः पश्चादनुलिप्त इति स्नातानुलिप्तः।<br>पूर्वं पीतः पश्चात् प्रतिबद्ध इति पीतप्रतिबद्धः।<br>एक- एकशाटी। एकभिक्षा।<br>सर्व- सर्वमनुष्यः।<br>जरत् - जरद्धस्ती।<br>पुराण- पुराणान्नम्।<br>नव - नवान्नम्।<br>केवल - केवलान्नम्।<br>'समानाधिकरणेन' इत्यापादपरिसमाप्तेः वर्तते। | समानाधि-करणेन ७२ |
| समानाधिकरणेन४९<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ५०. दिक्-संख्ये संज्ञायाम्<br>दिक्संख्ये समानाधिकरणेन समस्येते, संज्ञायां (विषये)।<br>दिक् - पूर्वा चासौ इषुकामशमी चेति पूर्वेषुकामशमी।<br>अपरा चासौ इषुकामशमी अपरेषुकामशमी।<br>पूर्वोत्तरपदविभागमात्रप्रदर्शनार्थं वाक्यं कृतम्।<br>अत्र हि वाक्येन न भवितव्यम्, वाक्येन संज्ञानवगमात्।<br>संख्या - पञ्चाम्राः। सप्तर्षयः।<br>संज्ञायामिति किम्? उत्तराः वृक्षाः। पञ्च ब्राह्मणाः। | दिक्संख्ये ५१ |
| समानाधिकरणेन४९<br>दिक्संख्ये ५०<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ५१. तद्धितार्थोत्तरपदसमाहारे च<br>तद्धितार्थोत्तरपदसमाहारे च दिक्संख्ये समानाधिकरणेन सह समस्येते।<br>दिक्शब्दः<br>तद्धितार्थे - पूर्वस्यां शालायां भवः पौर्वशालः।<br>'दिक्पूर्वपदादसंज्ञायां ञः' इति सूत्रेण ञः।<br>उत्तरपदे - पूर्वा शाला प्रिया यस्य स पूर्वशाला- प्रियः।<br>समाहारे दिक्शब्दो न संभवति इति नोदाह्रियते।<br>संख्याशब्दः<br>तद्धितार्थे - षण्णां मातॄणामपत्यं पुमान् षाण्मातुरः।<br>'मातुरुत्संख्यासम्भद्रपूर्वायाः' इति सूत्रेणाण्, मातृघटकस्य ऋकारस्य उकारादेशश्च।<br>उत्तरपदे - पञ्च गावो धनं यस्य पञ्चगवधनः।<br>दशगवधनः।<br>समाहारे - पञ्चानां गवां समाहारः पञ्चगवम्। | |

| | | |
|---|---|---|
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ५२. संख्यापूर्वो द्विगुः<br>'तद्धितार्थोत्तर' इति सूत्रेण यः संख्यापूर्वः समासः स द्विगुसंज्ञो भवति।<br>पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः।<br>'द्विगोर्लुगनपत्ये' इति तद्धितस्याणो लुक्। पञ्च नावः प्रिया यस्य स पञ्चनावप्रियः।<br>अत्र 'नावो द्विगोः' इति समासान्तष्टच्।<br>पञ्चानां मूलानां समाहारः पञ्चमूली। अत्र 'द्विगोः' इति सूत्रेण ङीप्। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ५३. कुत्सितानि कुत्सनैः<br>कुत्सितवाचीनि सुबन्तानि कुत्सनवाचिभिः सुबन्तैः समानाधिकरणैः सह समस्यन्ते।<br>वैयाकरणखसूचिः। निष्प्रतिभ इत्यर्थः। याज्ञिककितवः। अयाज्ययाजनतृष्णापर उच्यते। मीमांसकदुर्दुरुटः। दुर्दुरुट इत्यस्य नास्तिक इत्यर्थः। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ५४. पापाणके कुत्सितैः<br>पापाणके कुत्सितैः समानाधिकरणैः सह समस्येते।<br>पापनापितः, पापकुलालः। अणकनापितः, अणकुलालः।<br>पापशब्दे मत्वर्थीयः अर्शआद्यच्, अणकशब्दश्च कुरूपिणि वर्तते। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ५५. उपमानानि सामान्यवचनैः<br>उपमानानि सामान्यवचनैः सह समस्यन्ते।<br>सामान्यवचनैरिति – उपमानोपमेययोः साधारणो धर्मः = सामान्यम्, तद्वचनैः = तद्वाचकैः शब्दैरित्यर्थः।<br>घन इव श्यामो घनश्यामः। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ५६. उपमितं व्याघ्रादिभिः सामान्याप्रयोगे<br>उपमितं (उपमेयम्) व्याघ्रादिभिः (उपमानवचकैः व्याघ्रादिभिः) समस्यते, सामान्याप्रयोगे।<br>पुरुषः व्याघ्र इव पुरुषव्याघ्रः। पुरुषसिंहः।<br>सामान्याप्रयोग इति किम्? पुरुषः व्याघ्र इव शूरः। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ५७. विशेषणं विशेष्येण बहुलम्<br>विशेषणवाचि सुबन्तं समानाधिकरणेन विशेष्यवाचिना सुबन्तेन सह बहुलं समस्यते।<br>नीलं च तदुत्पलं नीलोत्पलम्। रक्तोत्पलम्।<br>बहुलग्रहणाद् क्वचिन्नित्यः समासः – कृष्णसर्पः।<br>क्वचिन्न – रामो जामदग्न्यः। | विशेषणं<br>विशेष्येण<br>बहुलम् ५८ |

| | | |
|---|---|---|
| समानाधिकरणेन४६<br>विशेषणं विशेष्येण<br>बहुलम् ४७ तत्पुरुषः<br>२२ समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ५८. पूर्वापर-प्रथम-चरम-जघन्य-समान-मध्य-<br>मध्यम-वीराश्च<br>पूर्वादयः विशेषणवाचिनः शब्दाः समानाधिकरणेन<br>विशेष्यवाचिना सुबन्तेन सह समस्यन्ते।<br>पूर्वपुरुषः। अपरपुरुषः। प्रथमपुरुषः। चरमपुरुषः।<br>जघन्यपुरुषः। समानपुरुषः। मध्यपुरुषः। मध्यमपुरुषः।<br>वीरपुरुषः। पूर्वस्यैवायं प्रपञ्चः। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ५९. श्रेण्यादयः कृतादिभिः<br>श्रेण्यादयः कृतादिभिः समानाधिकरणैः सह समस्यन्ते।<br>(वा०) श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम्।<br>अश्रेणयः श्रेणयः कृताः श्रेणिकृताः। एककृताः।<br>च्व्यन्तानां तु 'कुगतिप्रादयः' इत्यनेन<br>नित्यसमासः-श्रेणीकृताः। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ६०. क्तेन नञ्विशिष्टेनानञ्<br>नञ्विशिष्टेन क्तेन समानाधिकरणेन अनञ्<br>(नञ्रहितक्तान्तम्) समस्यते।<br>कृतं च तदकृतं च कृताकृतम्। भुक्ताभुक्तम्।<br>पीतापीतम्। उदितानुदितम्।<br>(वा०) समानाधिकरणाधिकारे<br>शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च।<br>शाकप्रधानः पार्थिवः शाकपार्थिवः। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ६१. सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः<br>सन्महत्परमात्तमोत्कृष्टाः पूज्यमानैः समानाधिकरणैः<br>समस्यन्ते।<br>'पूज्यमानैः' इति वचनात् पूजावचनाः सदादयो गृह्यन्ते।<br>सत्पुरुषः। महापुरुषः। परमपुरुषः। उत्तमपुरुषः।<br>उत्कृष्टपुरुषः।<br>पूज्यमानैरिति किम्? उत्कृष्टो गौः कर्दमात्। उद्धृत<br>इत्यर्थः। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ६२. वृन्दारक-नाग-कुञ्जरैः पूज्यमानम्<br>वृन्दारकनागकुञ्जरैः समानाधिकरणैः पूज्यमानं<br>समस्यते।<br>वृन्दारकशब्दो देवतावाची, इतरौ गजवाचिनौ।<br>गौः वृन्दारक इव गोवृन्दारकः।<br>गौः नाग इव गोनागः।<br>गौः कुञ्जर इव गोकुञ्जरः।<br>व्याघ्रादेराकृतिगणत्वादेव सिद्धे समान्यप्रयोगार्थं वचनम्।<br>तेन गोवृन्दारकः पूज्य इत्यादौ समासो भवति। | |

| | | |
|---|---|---|
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ६३. कतरकतमौ जाति-परिप्रश्ने<br>जातिपरिप्रश्ने (गम्यमाने) कतरकतमौ समानाधिकरणेन समस्येते।<br>कतरः कठः कतरकठः। अनयोः कः कठशाखाध्येता इत्यर्थः।<br>कतमः कठः कतमकठः। एषां कः कठशाखाध्येता इत्यर्थः।<br>उभयत्र 'गोत्रं च चरणैः सह' इति जातित्वम्। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४ | ६४. किं क्षेपे<br>किम् इत्येंतत् समानाधिकरणेन सह समस्यते, क्षेपे (गम्यमाने)।<br>किंराजा यो न रक्षति। किंसखा योऽभिद्रुह्यति।<br>क्षेप इति किम् ? को राजा पाटलिपुत्रे? | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ६५. पोटा-युवति-स्तोक-कतिपय-गृष्टि-धेनु-वशा-वेहद्-बष्कयणी- प्रवक्तृ-श्रोत्रियाध्यापक- धूर्तैर्जातिः<br>पोटादिभिः समानाधिकरणैः सह जातिवाचकः शब्दः समस्यते।<br>पोटा= स्त्रीपुंसलक्षणा स्त्री।<br>युवतिः= नवयौवना स्त्री।<br>गृष्टिः= एकवारप्रसूता।<br>धेनुः= नवप्रसूता।<br>वशा= बन्ध्या।<br>वेहद्= गर्भघातिनी।<br>बष्कयणी= तरुणवत्सा।<br>प्रवक्ता= अध्यापकः।<br>पोटा चासौ इभी (हस्तिनी) इति इभपोटा।<br>एवमेव - इभयुवतिः। अग्निस्तोकः। कतिपयं च तदुदश्वित् इति उदश्वित्कतिपयम्।<br>'तक्रं ह्युदश्वित्' इत्यमरः।<br>गोगृष्टिः। गोधेनुः। गोवशा। गोवेहत्। गोवष्कयणी।<br>कठप्रवक्ता। कठश्रोत्रियः। कठाध्यापकः। कठधूर्तः।<br>जातिरिति किम्? यज्ञदत्तो धूर्तः। | जातिः ६६ |

| | | |
|---|---|---|
| समानाधिकरणेन४६<br>जातिः ६५<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ६६. प्रशंसावचनैश्च<br>प्रशंसावाचकैः समानाधिकरणैः सह जातिवाचकः सुबन्तः शब्दः समस्यते।<br>प्रकाण्डं चासौ गौः गोप्रकाण्डम्। मतल्लिका चासौ गौः गोमतल्लिका। गोमचर्चिका।<br>रूढिशब्दाः प्रशंसावचनाः गृह्यन्ते मतल्लिकादयः, ते चाविष्टलिङ्गत्वाद् अन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादाना एव समानाधिकरणाः भवन्ति।<br>जातिरित्येव-कुमारी मतल्लिका। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ६७. युवा खलति-पलित-वलिन-जरतीभिः<br>युवा समानाधिकरणैः खलति- पलित- वलिन- जरतीभिः समस्यते।<br>खलतिः = केशहीनशिराः।<br>पलतिः = शुक्लकेशः।<br>वलिनः = शुक्लकेशः।<br>जरती = वृद्धा<br>'जरतीभिः' इति स्त्रीलिङ्गनिर्देशः 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति ज्ञापनार्थः।<br>युवा चासौ खलतिः युवखलतिः।<br>युवतिश्चासौ खलतिः युवखलती; 'कृदिकारादक्तिनः' 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीष्।<br>युवपलितः, युवपलिता। युववलिनः, युववलिना।<br>युवजरन्, युवजरती।<br>युवावस्थायामेव वृद्धावस्थायाः धर्मं दृष्ट्वा तद्रूपारोपाद् युवजरतोः सामानाधिकरण्यम्। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ६८. कृत्य-तुल्याख्या अजात्या<br>कृत्य-तुल्याख्याः अजात्या समानाधिकरणेन सह समस्यन्ते।<br>कृत्य - भोज्यं च तदुष्णम् भोज्योष्णम्। तुल्याख्य - तुल्यश्वेतः। सदृशश्वेतः।<br>अजात्येति किम्? भोज्य ओदनः। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ६९. वर्णो वर्णेन<br>वर्णो वर्णेन समानाधिकरणेन सह समस्यते।<br>कृष्णसारङ्गः। लोहितसारङ्गः। कृष्णशबलः। लोहितशबलः।<br>अवयवद्वारेण कृष्णशब्दः समुदाये वर्तमानः समानाधिकरणो भवति। | |

| | | |
|---|---|---|
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ७०. कुमारः श्रमणादिभिः<br>कुमारः समानाधिकरणैः श्रमणादिभिः सह समस्यते।<br>लिङ्गविशिष्टपरिभाषया कुमारशब्देन कुमारी-शब्दस्यापि ग्रहणम्।<br>कुमारी चासौ श्रमणा कुमारश्रमणा। कुमारश्चासौ पण्डितः कुमारपण्डितः। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४<br>विभाषा११ | ७१. चतुष्पादो गर्भिण्या<br>चतुष्पादो गर्भिण्या समस्यते।<br>गोगर्भिणी। अजागर्भिणी।<br>(वा०) चतुष्पाज्जातिरिति वक्तव्यम्।<br>इह मा भूत् – कालाक्षी गर्भिणी। स्वस्तिमती गर्भिणी।<br>चतुष्पाद इति किम्? ब्राह्मणी गर्भिणी। | |
| समानाधिकरणेन४६<br>तत्पुरुषः २२<br>समासः३<br>सुप् २ सह सुपा४ | ७२. मयूर-व्यंसकादयश्च<br>एते निपात्यन्ते।<br>मयूरो व्यंसकः मयूरव्यंसकः। व्यंसकः = धूर्त्तः।<br>छात्रव्यंसकः। उदक् च अवाक् च उच्चावचम्। निश्चितं च प्रचितं च निश्चप्रचम्। नास्ति कुतो भयं यस्य सः अकुतोऽभयः। अन्यो राजा राजान्तरम्। चिदेव चिन्मात्रम्। न किञ्चनं विद्यते यस्य सः अकिञ्चनः।<br>(गणवार्तिकम्) आख्यातमाख्यातेन क्रियासातत्ये।<br>"अश्नीत पिबत" इत्येवं सततं यत्राभिधीयते सा क्रिया अश्नीतपिबता। पचतभृज्जता। खादतमोदता। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां द्वितीयाध्यायस्य प्रथमः पादः।।

।। श्रीः ।।

## ।। अथ द्वितीयाध्यायस्य द्वितीयः पादः ।।

| | | |
|---|---|---|
| तत्पुरुषः२.१.२२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४<br>विभाषा२.१.११ | १. पूर्वपराधरोत्तरमेकदेशिनैकाधिकरणे<br>पूर्वपराधरोत्तरम् एकाधिकरणे (एकत्वविशिष्ट- द्रव्ये) वर्तमानेन एकदेशिना सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति।<br>पूर्वं कायस्य पूर्वकायः। अपरकायः। अधरकायः। उत्तरकायः।<br>एकाधिकरणे इति किम्? पूर्वं छात्राणाम् आमन्त्रयस्व।<br>अत्र विशेषः - सर्वोप्येकदेशोऽह्ना समस्यते, 'संख्याविसायपूर्वस्याह्नस्य' इति ज्ञापकात्। तेन अह्नः मध्यम्, मध्याह्नः अह्नः सायः सायाह्नः इत्यादि सिद्धयति। | एकदेशिनैका-<br>धिकरणे ३ |
| एकदेशिनैका-<br>धिकरणे १<br>तत्पुरुषः२.१. २२<br>समासः२.१.३<br>सुप् २.१.२ सह सुपा२.१.४<br>विभाषा२.१.११ | २. अर्धं नपुंसकम्<br>नपुंसकमर्द्धम् एकाधिकरणे वर्तमानेन एकदेशिना समस्यते।<br>अत्रत्यभाष्यानुसारेण अर्द्धशब्दः समप्रविभागे नपुंसकलिङ्गः, अवयवार्थे पुँल्लिङ्गः। नपुंसकलिङ्गः यः समप्रविभागवाची अर्द्धशब्दः स समस्यते न तु अवयववाची।<br>अर्द्धं पिप्पल्याः इति अर्द्धपिप्पली।<br>नपुंसकमिति किम्? ग्रामस्यार्द्ध इति ग्रामार्द्धः।<br>ग्रामस्यैकदेश इतयर्थः। एकाधिकरणे इत्येव - अर्द्धं पिप्पलीनाम्। | |
| एकदेशिनैका-<br>धिकरणे १<br>तत्पुरुषः २.१.२२<br>समासः२.१.३<br>सुप् २.१.२ सह सुपा२.१.४<br>विभाषा२.१.११ | ३. द्वितीय-तृतीय-चतुर्थ-तुर्याण्यन्यतरस्याम्<br>द्वितीय-तृतीय-चतुर्थ-तुर्याणि एकदेशिना अन्यतरस्यां समस्यन्ते, एकाधिकरणे।<br>द्वितीयं भिक्षाया द्वितीयभिक्षा, पक्षे षष्ठीसमासोऽपि भिक्षाद्वितीयम्। अन्यतरस्यां ग्रहणसामर्थ्यादत्र 'पूरणगुण' इत्यादिनां सूत्रेण षष्ठीसमासो न निषिध्यते।<br>षष्ठीसमासाभावपक्षे<br>द्वितीयं भिक्षाया इति वाक्यमपि।<br>एवमेव - तृतीयभिक्षा, भिक्षातृतीयम्, भिक्षायाः तृतीयम् इत्यादि। | |

| | | |
|---|---|---|
| तत्पुरुषः २.१.२२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४<br>विभाषा२.१.११ | ४. प्राप्तापन्ने च द्वितीयया<br>प्राप्तापन्ने (प्राप्तशब्दः, आपन्नशब्दश्च) च द्वितीयनन्तेन सह समस्येते।<br>प्राप्तापन्नैः सह द्वितीयासमासस्यापि विधानात् पक्षे 'द्वितीया श्रित' इति समासोऽपि भवति।<br>प्राप्तो जीविकां प्राप्तजीविकः , जीविकाप्राप्तः इति वा।<br>आपन्नो जीविकाम् आपन्नजीविकः, जीविकापन्न इति वा। | |
| तत्पुरुषः २.१.२२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४<br>विभाषा२.१.११ | ५. कालाः परिमाणिना<br>कालाः(कालवाचिनः) परिमाणिना (परिमाणवाचिना) सुपा सह समस्यन्ते।<br>परिमाणी = परिच्छेद्यः।<br>मासो जातस्य मासजातः। संवत्सरजातः। द्व्यहजातः। त्र्यहजातः। | |
| तत्पुरुषः २.१.२२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४<br>विभाषा२.१.११ | ६. नञ्<br>नञ् सुपा सह समस्यते।<br>न ब्राह्मणः अब्राह्मणः। न अश्वः अनश्वः।<br>'नलोपो नञः' इति सूत्रेण नञो नकारस्य लोपः।<br>अजादेः पदस्य 'तस्मान्नुडचि' इति सूत्रेण नुडागमोऽपि। | |
| तत्पुरुषः २.१.२२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४<br>विभाषा२.१.११ | ७. ईषदकृता<br>ईषद् अकृता सुपा समस्यते।<br>(वा०) ईषद् गुणवचनेनेति वक्तव्यम्<br>ईषद्रक्तम्। ईषत्पीतम्। ईषदुन्नतः। | |
| तत्पुरुषः २.१.२२<br>समासः२.१.३<br>सुप् २.१.२ सह<br>सुपा२.१.४<br>विभाषा२.१.११ | ८. षष्ठी<br>षष्ठ्यन्तं समर्थं सुबन्तं समर्थेन सुबन्तेन सह समस्यते।<br>राज्ञः पुरुषः राजपुरुषः। ब्राह्मणस्य कम्बलः ब्राह्मणकम्बलः। | षष्ठी १७ |
| षष्ठी ८<br>तत्पुरुषः २.१.२२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४<br>विभाषा२.१.११ | ९. याजकादिभश्च<br>षष्ठी याजकादिभश्च समस्यते।<br>ब्राह्मणस्य याजकःब्राह्मणयाजकः। क्षत्रिययाजकः।<br>पूर्वेण समासः सिद्ध एव, तस्य 'कर्त्तरि च' इति प्रतिषेधे प्राप्ते वचनमिदमारभ्यते प्रतिप्रसवार्थम्। अन्येन निवर्तितस्य पुनः प्रवृत्त्यभ्यनुज्ञानम् = प्रतिप्रसवः। | |
| षष्ठी ८<br>तत्पुरुषः २.१.२२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४ | १०. न निर्धारणे<br>निर्धारणे या षष्ठी सा न समस्यते।<br>क्षत्रियो मनुष्याणां शूरतमः। कृष्णा गवां सम्पन्नक्षीरतमा। धावन् अध्वगानां शीघ्रतमः।<br>(वा०) प्रतिपदविधाना च षष्ठी न समस्यते इति वक्तव्यम्।<br>सर्पिषो ज्ञानम्। मधुनो ज्ञानम्। | न १६ |

| | | |
|---|---|---|
| षष्ठी ८ न १०<br>तत्पुरुषः २.१.२२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४ | **११. पूरण-गुण-सुहितार्थ-सदव्यय-तव्य-समानाधिकरणेन**<br>पूरणादिभिः षष्ठी न समस्यते।<br>पूरणशब्देन पूरणार्थकप्रत्ययान्तानां पञ्चमादिशब्दानां ग्रहणम्, द्वितीयादिभिस्तु 'द्वितीयतृतीयचतुर्थतुर्यान्यतरस्याम्' इति सूत्रेण समासो भवत्येव।<br>पूरण - छात्राणां पञ्चमः।<br>गुण - बलाकायाः शौक्ल्यम्।<br>सुहितार्थास्तृप्त्यर्थाः - फलानां सुहितः; फलानां तृप्तः।<br>सत् (शतृशानचौ) - ब्राह्मणस्य कुर्वन्। ब्राह्मणस्य कुर्वाणः।<br>अव्यय - ब्राह्मणस्य कृत्वा।<br>तव्य - ब्राह्मणस्य कर्त्तव्यम्।<br>समानाधिकरण - पाणिनेः सूत्रकारस्य। | |
| षष्ठी ८ न १०<br>तत्पुरुषः२.१.२२<br>समासः२.१.३<br>सुप् २.१.२ सह सुपा२.१.४ | **१२. क्तेन च पूजायाम्**<br>पूजायां विहतेन क्तेन षष्ठी न समस्यते।<br>राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः।<br>'मतिबुद्धिपूजार्थेभ्यश्च' इति सूत्रेणात्र क्तः।<br>पूजायामिति किम्? छात्रस्य हसितम् छात्रहसितम्। अत्र 'नपुंसके भावे क्तः' इति सूत्रेण क्तः न तु 'मतिबुद्धि' इति सूत्रेण। | क्तेन १३ |
| षष्ठी ८ न १०<br>क्तेन १२<br>तत्पुरुषः २.१.२२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४ | **१३. अधिकरणवाचिना च**<br>अधिकरणवाचिना क्तेन च षष्ठी न समस्यते।<br>इदमेषाम् आसितम्। इदमेषां यातम्। इदमेषां भुक्तम्।<br>अत्र 'ध्रौव्य-गति-प्रत्यवसानार्थेभ्यः' इति सूत्रेणं अधिकरणे क्तः। | |
| षष्ठी ८ न १०<br>तत्पुरुषः२.१. २२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४ | **१४. कर्मणि च**<br>'उभयप्राप्तौ कर्मणि' इति सूत्रेण विहिता या षष्ठी सा न समस्यते।<br>आश्चर्यो गवां दोहोऽगोपालकेन।<br>विचित्रा सूत्रस्य कृतिः पाणिनिना। | |
| षष्ठी ८ न १०<br>तत्पुरुषः२.१.२२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४ | **१५. तृजकाभ्यां कर्तरि**<br>र्तरि या षष्ठी सा तृजकाभ्यां न समस्यते।<br>भवतः शायिका। शयनमित्यर्थः। भावे ण्वुल्, 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' इति वार्तिकेन।<br>एवमेव - भवतः आसिका। आसनमित्यर्थः।<br>तृज्ग्रहणमुत्तरार्थम्, कर्तरि एव तृचो विधानात्, तत्प्रयोगे कर्तरि षष्ठ्या अभावात्। | तृजकाभ्याम् १६ |

| | | |
|---|---|---|
| तृजकाभ्याम् १५<br>षष्ठी ८ न १०<br>तत्पुरुषः२.१. २२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४ | १६. कर्तरि च<br>कर्तरि च विहिताभ्यां तृजकाभ्यां सह षष्ठी न समस्यते।<br>तृचा - अपां स्रष्टा। पुरां भेत्ता। वज्रस्य भर्ता।<br>अकेन - ओदनस्य भोजकः। सक्तूनां पायकः। | |
| तृजकाभ्याम् १५<br>षष्ठी ८<br>तत्पुरुषः२.१. २२<br>समासः२.१.३<br>सुप् २.१.२<br>सह सुपा२.१.४ | १७. नित्यं क्रीडाजीविकयोः<br>क्रीडायां, जीविकयोरर्थयोः नित्यं षष्ठी तृजकाभ्यां समस्यते।<br>तृच् क्रीडाजीविकयोर्नास्ति इति अक एवोदाह्रियतेऽत्र।<br>क्रीडायाम्- उद्दालकपुष्पभञ्जिका। क्रीडाविशेषस्य संज्ञेयम्। उद्दालकपुष्पाणि भज्यन्ते यस्यां क्रीडायामिति अस्वपदविग्रहः। 'संज्ञायाम्' इति सूत्रेण भावे ण्वुल्।<br>जीविकायाम् - दन्तलेखकः। जीविकाविशेषस्य संज्ञेयम्। दन्तानां लेखनेन जीवतीत्यस्वपदविग्रहः।<br>क्रीडाजीविकयोरिति किम्? ओदनस्य भोजकः। | नित्यम् २० |
| नित्यम् १७<br>तत्पुरुषः २.१.२२<br>समासः२.१.३ | १८. कुगतिप्रादयः<br>कुगतिप्रादयः नित्यं समस्यन्ते। केन? समर्थेन शब्दान्तरेण।<br>कु - कुत्सितः पुरुषः कुपुरुषः।<br>गति - उरीकृत्य। शुक्लीकृत्य।<br>प्रादयः - दुर्निन्दायाम्, दुष्पुरुषः।<br>स्वतीपूजायाम् - सुपुरुषः, अतिपुरुषः।<br>(वा०) प्रादयो गताद्यर्थे प्रथमया।<br>प्रगतः आचार्यः प्राचार्यः।<br>'प्र' इत्यस्य विवरणं 'गत' इति। अस्वपदविग्रहस्तु 'गत आचार्यः' इत्येव।<br>(वा०) अत्यादयः क्रान्ताद्यर्थे द्वितीयया।<br>अति क्रान्तः खट्वाम्, अतिखट्वः।<br>(वा०) अवादयः क्रुष्टाद्यर्थे तृतीयया।<br>अव क्रुष्टः कोकिलया अवकोकिलः।<br>(वा०) पर्यादयो ग्लानाद्यर्थे चतुर्थ्या।<br>परि ग्लानोऽध्ययनाय पर्यध्ययनः।<br>(वा०) निरादयः क्रान्ताद्यर्थे पञ्चम्या।<br>निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः। | |

| | | |
|---|---|---|
| नित्यम् १७<br>तत्पुरुषः २.१.२२<br>समासः२.१.३ | **१९. उपपदमतिङ्**<br>अतिङ् (अतिङन्तम्) उपपदं समर्थेन सह नित्यं समस्यते।<br>कुम्भं करोति इति कुम्भकारः।<br>अतिङिति किम्? आहारको व्रजति। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति 'व्रजति' इत्युपपदे आङ्पूर्वाद् धातोर्ण्वुल्।<br>उपपदं व्रजतीति तिङन्तमेवेति समासो न भवति। | उपपदम् २२ |
| उपपदम् १९<br>तत्पुरुषः २.१.२२<br>समासः२.१.३ | **२०. अमैवाव्ययेन**<br>पूर्वेणैव समासे सिद्धे नियमार्थं वचनम् - अव्ययेन सह उपपदस्य यः समासः सोऽमैव भवति, नान्येन।<br>स्वादुङ्कारं भुङ्क्ते। लवणङ्कारं भुङ्क्ते।<br>अमैवेति किम्? कालो भोक्तुम।<br>'काल' इत्युपपदस्य 'भोक्तुम्' इत्यव्ययेन समासो न भवति।<br>एवेति किम्? येन सूत्रेण अम् एव विधीयते न तु क्त्वापि यथा 'स्वादुमि णमुल्'(३.४.२६) इति सूत्रेण, तत्रत्यमुपपदमेव तेन अमन्तेन समस्यते इति सूचनार्थम्।<br>तेन अग्रे भोजम्, अग्रे भुक्त्वा इत्यत्र समासो न भवति।<br>अत्र हि 'विभाषाऽग्रेप्रथमपूर्वेषु'(३.४.२४) इति सूत्रेण क्त्वाणमुलौ उभौ विधीयेते न केवलम् अम् एव। | अमैवअव्ययेन२१ |
| उपपदम् १९<br>अमैव २०<br>अव्ययेन २०<br>तत्पुरुषः २.१.२२<br>समासः२.१.३ | **२१. तृतीयाप्रभृतीन्यन्यतरस्याम्**<br>'उपदंशस्तृतीयायाम्'(३.४.४७) इत्यतः प्रभृति यान्युपपदानि तानि अमन्तेनाव्ययेन सह अन्यतरस्यां समस्यन्ते।<br>मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं वा।<br>'उपदंशस्तृतीयायाम्'(३.४.४७) इति सूत्रेण णमुल्।<br>उच्चैःकारम् आचष्टे, उच्चैः कारं वा।<br>'अव्ययेऽयथाभिप्रेताख्याने'(३.४.५९) इति सूत्रेण णमुल्।<br>अत्र समासे असमासे च स्वरे विशेषः। | तृतीयाप्रभृतीनि अन्य. २२ |
| तृतीयाप्रभृतीनि २१<br>उपपदम् १९<br>अन्यतरस्याम् २१<br>तत्पुरुषः २.१.२२<br>समासः२.१.३ | **२२. क्त्वा च**<br>क्त्वा (क्त्वान्तेन) अव्ययेन चोपदमन्यतरस्यां समस्यते।<br>सूत्रे 'क्त्वा' इति तृतीयान्तं पदम्।<br>उच्चैःकृत्य, उच्चैः कृत्वा वा।<br>'अव्ययेऽयथाभिप्रेताख्याने'(३.४.५९) इति सूत्रेण क्त्वाप्रत्ययः। | |
| | **२३. शेषो बहुव्रीहिः**<br>अधिकारोऽयम्। 'द्वितीया श्रित०' इत्यादिभिः यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेषः, अर्थात् प्रथमान्तमित्यर्थः। | बहुव्रीहिः २८ |

| सुप्२.१.२<br>बहुव्रीहिः २३<br>समासः२.१.३ | २४. अनेकमन्यपदार्थे<br>अनेकं प्रथमान्तमन्यपदार्थे वर्त्तमानं समस्यते, स च बहुव्रीहिसंज्ञो भवति।<br>प्राप्तमुदकं यं स प्राप्तोदको ग्रामः।<br>ऊढः रथो येन स ऊढरथोऽश्वः।<br>उपहृतः पशुर्यस्मै स उपहृतपशू रुद्रः।<br>उद्धृतः ओदनो यस्याः सा उद्धृतौदना स्थाली। चित्रा गौर्यस्य स चित्रगुर्देवदत्तः।<br>वीराः पुरुषा यस्मिन् स वीरपुरुषको ग्रामः।<br>(वा०) सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च।<br>कण्ठेस्थः कालो यस्य स कण्ठेकालः। उष्ट्रमुखमिव मुखं यस्य स उष्ट्रमुखः।<br>(वा०) समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्चेति वक्तव्यम्।<br>केशानां संघातः केशसंघातः, केशसंघातः चूडा अस्य केशचूडः। सुवर्णस्य विकारः सुवर्णविकारः, सुवर्णविकारः अलङ्कारो यस्य स सुवर्णालङ्कारः।<br>(वा०) प्रादिभ्यो धातुजस्योत्तरपदलोपश्च वक्तव्यः।<br>प्रपतितं पर्णं यस्य स प्रपर्णो वृक्षः।<br>(वा०) नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च।<br>अविद्यमानः पुत्रो यस्य सोऽपुत्रः। अविद्यमाना भार्या यस्य सोऽभार्यः।<br>(वा०) अव्ययानां च बहुव्रीहिर्वक्तव्यः।<br>उच्चैः मुखं यस्य स उच्चैर्मुखः।<br>नीचैः मुखं यस्य स नीचैर्मुखः।<br>(वा०) सुबधिकारेऽस्तिक्षीरादीनां बहुव्रीहिर्वक्तव्यः।<br>अस्तिक्षीरा ब्राह्मणी। | अनेकम् २६ |
|---|---|---|
| बहुव्रीहिः २३<br>समासः२.१.३ | २५. संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये<br>संख्येये (वर्तमानया ) संख्यावाचकेन सुबन्तेन अव्यय, आसन्न, अदूर, अधिक, संख्या(संख्यावाचिशब्दः)- इत्येते समस्यन्ते।<br>अव्यय - दशाचां समीपे ये सन्ति ते उपदशाः। दशानां समीपस्था नव , एकादश वा इत्यर्थः। 'बहुव्रीहौ संख्येये डच्' इति समासान्तो डच्।<br>आसन्न - दशानामासन्नाः ये, ते उपदशाः।<br>अदूर - दशानामदूराः ये ते अदूरदशाः।<br>अधिक - दशानामधिका ये ते अधिकदशाः। एकादशादय इत्यर्थः।<br>संख्या - द्वौ वा त्रयो वा द्वित्राः।<br>अव्ययादि किम्? पञ्च ब्राह्मणाः।<br>संख्येये किम्? अधिका विंशतिर्गवाम्।<br>विंशतिरत्र संख्याबोधिका संख्या न तु संख्येयबोधिका। | |

| | | |
|---|---|---|
| बहुव्रीहिः २३<br>समासः२.१.३ | २६. दिङ्नामान्यन्तराले<br>दिङ्नामानि अन्तराले (वाच्ये) समस्यन्ते।<br>पूर्वस्याश्च उत्तरस्याश्च दिशोऽन्तरालं या सा पूर्वोत्तरा दिक्। एवमेव-दक्षिणपूर्वा, उत्तरपश्चिमा, पश्चिमदक्षिणा।<br>'सर्वनाम्नो वृत्तिमात्रे पुंवद् भावः' इति वार्तिकेन पूर्वादिशब्दानां पुंवद्भावः।<br>सूत्रे नामोक्त्या रूढ्यांश्रयणाद् ऐन्द्रयादीनां न समासः। | |
| बहुव्रीहिः २३<br>समासः२.१.३ | २७. तत्र तेनेदमिति सरूपे<br>सरूपे तत्र ( सप्तम्यन्ते पदे), सरूपे च तेन (तृतीयान्ते पदे) समस्येते, इदमिति 'इदमिति- प्रकारेण वृत्तम्' इत्यर्थे।<br>सूत्रस्य सिद्धान्तितोऽर्थः एवम्- सप्तम्यन्तयोः सरूपयोः पदयोः ग्रहणविषये, तृतीयान्तयोः सरूपयोः पदयोश्च प्रहरणविषये इदं युद्धं वृत्तमित्यर्थे समासो भवति, कर्मव्यतिहारे द्योत्ये स च बहुव्रीहिः।<br>सूत्रे इतिशब्देन ग्रहणं, प्रहरणं, कर्मव्यतिहारो, युद्धं च समासार्थ इति सर्वं लभ्यते।<br>केशेषु केशेषु गृहीत्वेदं युद्धं वृत्तमिति केशाकेशि। कचाकचि। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं वृत्तमिति दण्डादण्डि। मुसलामुसलि।<br>'इच् कर्मव्यतिहारे'(५.४.१२७) इति समासान्त इच् प्रत्ययः, 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः। 'इच् कर्मव्यतिहारे' इति तिष्ठद्गुप्रभृतिषु पाठात् अव्ययीभावत्वेन अव्ययत्वम्।<br>सरूपग्रहणं किम्? हलैश्च मुसलैश्च प्रहृत्येदं युद्धं वृत्तम्। अत्र समासो मा भूत्। | |
| बहुव्रीहिः २३<br>समासः२.१.३ | २८. तेन सहेति तुल्ययोगे<br>तुल्ययोगे सहेति शब्दः तेन (तृतीयान्तेन) समस्यते,बहुव्रीहिश्च समासो भवति।<br>तुल्ययोगः = समानसम्बन्धः।<br>सह पुत्रेणागतः सपुत्रः।<br>सच्छात्रः। सकर्मकारः।<br>तुल्ययोगे इति किम्? सहैव दशभिः पुत्रैर्भारं वहति गर्दभी। अत्र सहशब्दो विद्यमानार्थको न तु तुल्ययोगार्थकः।<br>तुल्ययोगे इति प्रायिकम्। तेन सकर्मकः सलोमकः, सपक्षकः इत्यादौ समासो भवत्येव। न ह्यत्र तुल्ययोगो गम्यते। किं तर्हि ? विद्यमानता। | |

| | | |
|---|---|---|
| सुप् २<br>अनेकम् २४<br>समासः२.१.३ | २९. चार्थे द्वन्द्वः<br>चार्थे वर्तमानमनेकं सुबन्तं समस्यते, स च द्वन्द्वसंज्ञो भवति।<br>समुच्चयान्वाचयेतरेयोगसमाहाराश्चार्थाः।<br>१.परस्परनिरपेक्षस्य अनेकस्य एकस्मिन् अन्वयः समुच्चयः। यथा- ईश्वरं गुरुं च भजस्व।<br>२.अन्यतरस्य आनुषङ्गिकत्वेन अन्वयः अन्वाचयः। यथा- भिक्षामट गां चानय।<br>३. परस्परापेक्षितानामेकत्रान्वयः इतरेतरयोगः। यथा-धवं च खदिरं च छिन्धि।<br>४.समूहः समाहारः। यथा-संज्ञायाः,परिभाषायाश्च समाहारः।<br>तत्र समुच्चयान्वाचययोरसामर्थ्याद् समासो न भवति।<br>इतरेतरयोगे, समाहारे चानेन समासो भवति।<br>इतरेतरयोगे - प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ।<br>धवश्च, खदिरश्च, पलाशश्च धवखदिरपलाशाः।<br>समाहारे -पाण्योः पादयोश्च समाहारः पाणिपादम्।<br>वाचः, त्वचश्च समाहारः वाक्त्वचम्। | |
| समासः २.१.३ | ३०. उपसर्जनं पूर्वम्<br>समासे उपसर्जनं पूर्वं प्रयोक्तव्यम्।<br>कष्टं श्रितः कष्टश्रितः। शङ्कुलया खण्डः शङ्कुलाखण्डः। | पूर्वम् ३८<br>उपसर्जनम् ३१ |
| उपसर्जनम् ३०<br>समासः २.१.३ | ३१. राजदन्तादिषु परम्<br>राजदन्तादिषु उपसर्जनं परं प्रयुज्यते।<br>दन्तानां राजा राजदन्तः। वनस्याग्रे अग्रेवणम्; निपातनात् सप्तम्याः अलुक्। | |
| पूर्वम् ३०<br>समासः २.१.३ | ३२. द्वन्द्वे घि<br>द्वन्द्वे समासे घि पूर्वं प्रयोक्तव्यम्।<br>हरिहरौ। पटुगुप्तौ। मृदुगुप्तौ।<br>(वा०) अनेकप्राप्तावेकस्य नियमः, शेषे त्वनियमः।<br>पटुमृदुशुक्लाः, पटुशुक्लमृदवः। | द्वन्द्वे ३४ |
| पूर्वम् ३० द्वन्द्वे ३२<br>समासः २.१.३ | ३३. अजाद्यदन्तम्<br>द्वन्द्वे समासे अजाद्यदन्तं पूर्वं प्रयोक्तव्यम्।<br>अजाद्यदन्तम् इति-अच् आदिः यस्य तत् अजादि, अत् अन्ते यस्य तत् अदन्तम्,अजादि च अदन्तं च इति अजाद्यन्तम्।<br>ईशकृष्णौ।<br>(वा०) बहुष्वनियमः।<br>अश्वरथेन्द्राः, इन्द्राश्वरथाः।<br>(वा०) द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेन।<br>इन्द्राग्नी। इन्द्रवायू। | |

| | | |
|---|---|---|
| पूर्वम् ३० द्वन्द्वे ३२<br>समासः २.१.३ | ३४. अल्पाच्तरम्<br>द्वन्द्वे समासे अल्पाच्तरं पूर्वं प्रयोक्तव्यम्।<br>अल्पः अच् यस्मिन् तत् अल्पाच्, इमे द्वे अल्पाची,इदमनयोरतिशयेन अल्पाच् इति अल्पाच्तरम्।<br>प्लक्षन्यग्रोधौ। शिवकेशवौ।<br>(वा०) बहुष्वनियमः।<br>शङ्खदुन्दुभिवीणाः, वीणाशङ्खदुन्दुभयः।<br>(वा०) ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणां पूर्वनिपातो वक्तव्यः।<br>हेमन्तशिशिरवसन्ताः। चित्रास्वाती।<br>समानाक्षराणामितिकिम्? ग्रीष्मवसन्तौ।<br>(वा०) लघ्वक्षरं पूर्वं निपततीति वक्तव्यम्।<br>कुशकाशम्।<br>(वा०) अभ्यर्हितं च।<br>मातापितरौ। श्रद्धामेधे।<br>(वा०) वर्णानामानुपूर्व्येण पूर्वनिपातः।<br>ब्राह्मणक्षत्रियविट्शूद्राः।<br>(वा०) भ्रातुश्च ज्यायसः।<br>युधिष्ठिरार्जुनौ।<br>(वा०) संख्याया अल्पीयस्याः।<br>द्वित्राः। त्रिचतुराः। नवतिशतम्। | |
| पूर्वम् ३०<br>समासः २.१.३ | ३५. सप्तमी-विशेषणे बहुव्रीहौ<br>सप्तमी-विशेषणे बहुव्रीहौ समासे पूर्वं प्रयोक्तव्ये।<br>सप्तमी - कण्ठेकालः। विशेषणम् - चित्रगुः।<br>(वा०) सर्वनामसंख्ययोरुपसंख्यानम्।<br>सर्वश्वेतः। द्विशुक्लः।<br>(वा०) मिथोऽनयोः समासे संख्यापूर्वम्, शब्द परविप्रतिषेधात्।<br>द्व्यन्यः। त्र्यन्यः।<br>(वा०) वा प्रियस्य पूर्वनिपातः।<br>प्रियगुडः। गुडप्रियः।<br>(वा०) सप्तम्याः पूर्वनिपाते प्राप्ते गड्वादिभ्यः सप्तम्यन्तं परम्।<br>गडुः कण्ठे यस्य स गडुकण्ठः। गडुर्नाम ग्रीवादिगतो दुर्मांसगोलः। गडुशिराः।<br>क्वचिन्न - वहेगडुः। | बहुव्रीहौ ३७ |

| | | |
|---|---|---|
| बहुव्रीहौ ३५<br>पूर्वम् ३०<br>समासः २.१.३ | **३६. निष्ठा**<br>बहुव्रीहौ समासे निष्ठा पूर्वं प्रयोक्तव्या।<br>कृतकटः।<br>(वा०) निष्ठायाः पूर्वनिपाते जातिकाल- सुखादिभ्यः परवचनम्।<br>सारङ्गजग्धी। मासजाता। सुखजाता।<br>प्रायिकं चेदम्। तेन कृतकटः। भुक्तौदन इति।<br>(वा०) प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्।<br>अस्युद्यतः। दण्डपाणिः।<br>क्वचिन्न। तेन उद्यतगदः, उद्यतासिः, विवृतासिः - इत्यादिप्रयोगा अपि सिद्ध्यन्ति। | निष्ठा ३७ |
| निष्ठा३६ पूर्वम् ३०<br>समासः २.१.३<br>बहुव्रीहौ ३५ | **३७. वाऽऽहिताग्न्यादिषु**<br>बहुव्रीहौ समासे आहिताग्न्यादिषु शब्देषु निष्ठा (क्त-क्तवतुप्रत्ययान्तशब्दः) पूर्वं वा प्रयोक्तव्या।<br>अग्न्याहितः, आहिताग्निः। जातपुत्रः, पुत्रजातः। | वा ३८ |
| वा ३७ पूर्वम् ३०<br>समासः २.१.३ | **३८. कडाराः कर्मधारये**<br>कडारादयः शब्दाः कर्मधारये समासे पूर्वं वा प्रयोक्तव्याः।<br>'कडाराः' इत्यत्र बहुवचननिर्देशेन आद्यर्थो लभ्यते।<br>कडारजैमिनिः, जैमिनिकडारः।<br>कर्मधारय इति किम्? कडारपुरुषो ग्रामः। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां द्वितीयाध्यायस्य द्वितीयः पादः ।।

।। श्रीः ।।

## ।। अथ द्वितीयाध्यायस्य तृतीयः पादः ।।

| | | |
|---|---|---|
| | १. अनभिहिते<br>'अनभिहिते' इत्यस्याधिकारो वेदितव्यः आपादपरिसमाप्तेः।<br>अनभिहितम् = अनुक्तम्।<br>अभिधानं च प्रायेण तिङ्कृत्तद्धितसमासैः।<br>तिङ् - हरिः सेव्यते।<br>कृत् - लक्ष्म्या सेवितः।<br>तद्धित - शतेन क्रीतः शत्यः।<br>समास - प्राप्तः आनन्दो यं स प्राप्तानन्दः।<br>क्वचिन्निपातेनाप्यभिधानम्, यथा विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् इति। साम्प्रतमित्यस्य हि युज्यते इत्यर्थः।<br>अनभिधाने तु 'कर्मणि द्वितीया' इत्याद्यग्रिमैः सूत्रैः द्वितीयादय एव। कटं करोति। देवदत्तेन कृतम्। दात्रेण लुनाति।<br>परिसंख्यानं किम्? कटं करोति भीष्ममुदारं दर्शनीयम्।<br>अत्र अम् इति सुब्विभक्त्या उक्तेऽपि कर्मणि भीष्मम्, उदारम्, दर्शनीयम् इति विशेषणेषु कर्मणि द्वितीया भवत्येव। | अनभिहिते ७३ |
| अनभिहिते १ | २. कर्मणि द्वितीया<br>अनभिहिते कर्मणि द्वितीया भवति।<br>कटं करोति। ग्रामं गच्छति।<br>श्लोकवार्तिकम् :-<br>उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।<br>द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।।<br>उभयतो ग्रामम्। सर्वतो ग्रामम्। धिग्देवदत्तम्। उपर्युपरि, अध्यधि, अधोऽधो वा लोकम्।<br>'ततोऽन्यत्रापि दृश्यते' इत्यंशस्य प्रपञ्चोऽग्रिमे वार्तिके दृश्यतेः-<br>(वा०) अभितः-परितः-समया-निकषा-हाप्रतियोगेऽपि।<br>अभितः,परितः,समया,निकषा वा ग्रामम्।<br>हा देवदत्तम्।<br>बुभुक्षितं न प्रतिभाति किञ्चित्। | द्वितीया ५<br>कर्मणि ३ |
| अनभिहिते ७३<br>द्वितीया २<br>कर्मणि २ | ३. तृतीया च होश्छन्दसि<br>छन्दसि होः (हुधातोः) कर्मणि तृतीया, चकाराद् द्वितीया च भवति।<br>यवाग्वाऽग्निहोत्रं जुहोति।<br>यवागूमग्निहोत्रं जुहोति। | |

| | | |
|---|---|---|
| अनभिहिते ७३<br>द्वितीया २<br>कर्मणि२ | ३. तृतीया च होश्छन्दसि<br>छन्दसि होः (हुधातोः) कर्मणि तृतीया, चकाराद् द्वितीया च भवति।<br>यवाग्वाऽग्निहोत्रं जुहोति।<br>यवागूमग्निहोत्रं जुहोति। | |
| द्वितीया २ | ४. अन्तराऽन्तरेणयुक्ते<br>अन्तराऽन्तेरण युक्ते द्वितीया भवति।<br>षष्ठ्यपवादोऽयं योगः।<br>अन्तराशब्दो मध्यार्थकः, अन्तरेणशब्दश्च मध्यार्थकः, विनार्थकश्च।<br>अन्तरा त्वां, मां च कमण्डलुः।<br>अन्तरेण त्वां, मां च कमण्डलुः।<br>अन्तरेण पुरुषकारं न किञ्चिल्लभ्यते। | |
| द्वितीया २ | ५. कालाध्वनोरत्यन्तसंयोगे<br>कालाध्वनोरत्यन्तसंयोगे द्वितीया भवति।<br>क्रिया-गुण-द्रव्यैः कालाध्वनोः साकल्येन सम्बन्धः = अत्यन्तसंयोगः। श्रुतत्वात् कालाध्वभ्यामेव द्वितीया भवति।<br>कालात् :-<br>क्रियात्यन्तसंयोगे - मासमधीते।<br>गुणात्यन्तसंयोगे - मासं कल्याणी।<br>द्रव्यात्यन्तसंयोगे - मासं गुडधानाः।<br>अध्वनः खल्वपि : -<br>क्रियात्यन्तसंयोगे - क्रोशं पर्वतः।<br>गुणात्यन्तसंयोगे - क्रोशं कुटिला नदी।<br>द्रव्यात्यन्तसंयोगे - क्रोशं पर्वतः।<br>अत्यन्तसंयोगे इति किम्? मासस्य द्विरधीते।<br>क्रोशस्यैकदेशे पर्वतः। | कालाध्वनोः<br>अत्यन्तसंयोगे<br>६ |
| कालाध्वनोर-<br>त्यन्तसंयोगे ५ | ६. अपवर्गे तृतीया<br>अपवर्गे तृतीया भवति कालाध्वनोरत्यन्तसंयोगे।अपवर्गः= फलप्राप्तिः।<br>मासेनानुवाकोऽधीतः।<br>क्रोशेनानुवाकोऽधीतः।<br>अपवर्गे इति किम्? मासमधीतोऽनुवाकोऽनेन न गृहीतः। | |
| कालाध्वनोः ५ | ७. सप्तमीपञ्चम्यौ कारकमध्ये<br>कारकयोर्मध्ये वर्तमानाभ्यां कालाध्वभ्यां सप्तमीपञ्चम्यौ भवतः।<br>अद्य भुक्त्वा देवदत्तो द्व्यहे, द्व्यहाद् वा भोक्ता।<br>इहस्थोऽयमभिष्वासः क्रोशे, क्रोशाद् वा लक्ष्यं विध्यति।<br>अत्र यथासंख्यं न भवति, अस्वरितत्वात्। | |
| | ८. कर्मप्रवचनीययुक्ते द्वितीया<br>कर्मप्रवचनीययुक्ते द्वितीया भवति।<br>पर्जन्यो जपमनु प्रावर्षत्। | कर्मप्रवचनीय-<br>युक्ते ११ |

| | | |
|---|---|---|
| कर्मप्रवचनीय-युक्ते ८ | ९. यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी<br>कर्मप्रवचनीययुक्ते यस्मादधिकं, यस्य चेश्वरवचनं तत्र सप्तमी भवति।<br>उप परार्धे हरेर्गुणाः। परार्धादधिका इत्यर्थः।<br>अधि ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्तो वा।<br>'अधिरीश्वरे' इति सूत्रेण 'अधि' इत्यस्य कर्मप्रवचनीयसंज्ञायां स्व-स्वामिनोरुभयोरपि पर्यायेण सप्तमी भवति प्रकृतसूत्रेण। | |
| कर्मप्रवचनीय-युक्ते ८ | १०. पञ्चम्यपाङ्-परिभिः<br>कर्मप्रवचनीयैः अपाङ्परिभिः योगे पञ्चमी भवति।<br>अप हरेः संसारः। परि हरेः संसारः। 'अपपरी वर्जने' इति सूत्रेण कर्मप्रवचनीयसंज्ञा।<br>आङ्योगे :-<br>मर्यादायाम्- आ मुक्तेः संसारः।<br>अभिविधौ - आ कुमारेभ्यो यशः पाणिनेः।<br>'आङ्मर्यादावचने' इति सूत्रेण कर्मप्रवचनीयसंज्ञा। | पञ्चमी ११ |
| कर्मप्रवचनीय-युक्ते ८ पञ्चमी१० | ११. प्रतिनिधि-प्रतिदाने च यस्मात्<br>यस्मात् प्रतिनिधि-प्रतिदाने भवतः तस्मात् कर्मप्रवचनीययुक्ते पञ्चमी भवति।<br>मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्।<br>अभिमन्युः अर्जुनात् प्रति।<br>तिलेभ्यः प्रतियच्छति माषान्।<br>'प्रतिः प्रतिनिधि-प्रतिदानयोः' इति सूत्रेण प्रतेः कर्मप्रवचनीयसंज्ञा। | |
| | १२. गत्यर्थकर्मणि द्वितीया-चतुर्थ्यौ चेष्टायामनध्वनि<br>अनध्वनि गत्यर्थकर्मणि द्वितीया-चतुर्थ्यौ भवतः चेष्टायां = परिस्पन्दनक्रियायां गम्यमानायाम्।<br>ग्रामं, ग्रामाय वा गच्छति।<br>चेष्टायामिति किम्? मनसा पाटलिपुत्रं गच्छति।<br>अनध्वनि इति किम्? अध्वानं गच्छति।<br>अध्वनीत्यर्थग्रहणम्- पन्थानं गच्छति, मार्गं गच्छति<br>द्वितीयाग्रहणं किम्? अपवादविषयेऽपि यथा स्यात् - ग्रामं, गामाय वा गन्ता। अत्र कृद्योगलक्षणा षष्ठी न भवति अपि तु द्वितीयैव। | |

| | | |
|---|---|---|
| अनभिहिते १ | १३. चतुर्थी सम्प्रदाने<br>अनभिहिते सम्प्रदाने चतुर्थी भवति।<br>द्वितीयाया अनुवृत्तिवारणाय पुनश्चतुर्थीग्रहणम्।<br>उपाध्यायाय गां ददाति। देवदत्ताय रोचते। पुष्पेभ्यः स्पृहयति इत्यादि।<br>(वा०) चतुर्थीविधाने तादर्थ्य उपसंख्यानम्।<br>यूपाय दारु। कुण्डलाय हिरण्यम्। रन्धनाय स्थाली। अवहननायोलूखलम्।<br>(वा०) क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या।<br>मूत्राय कल्पते यवागूः।<br>क्लृपीत्यर्थनिर्देशः - मूत्राय संपद्यते यवागूः। मूत्राय जायते यवागूः।<br>(वा०) उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या।<br>अशुभसूचकः आकस्मिको भूतविकारः उत्पातः, तेन सूचितेऽर्थे विद्यमानाच्चतुर्थी वाच्येत्यर्थः।<br>वाताय कपिला विद्युदातपायातिलोहिनी।<br>पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्।।<br>(वा०) हितयोगे चतुर्थी वक्तव्या।<br>गोभ्यो हितम्। | चतुर्थी १७ |
| चतुर्थी १३ | १४. क्रियार्थोपपदस्य च कर्मणि स्थानिनः<br>स्थानिनः (अप्रयुज्यमानस्य) क्रियार्थोपदस्य (तुमुन्नन्तस्य धातोः) कर्मणि चतुर्थी भवति।<br>फलेभ्यो याति। फलान्याहर्तुं यातीत्यर्थः।<br>नमस्कुर्मो नृसिंहाय। नृसिंहमनुकूलयितुं नमस्कुर्म इत्यर्थः। | |
| चतुर्थी १३ | १५. तुमर्थाच्च भाववचनात्<br>तुमर्थाच्च भाववचनाच्चतुर्थी भवति।<br>'भाववचनाश्च' इति सूत्रेण तुमर्थे विहितो यो भाववाचकः प्रत्ययः स भाववचनः प्रत्ययः कथ्यते। तदन्ताच्छब्दादनेन चतुर्थी भवति।<br>यागाय याति। यष्टुं यातीत्यर्थः।<br>पाकाय याति। त्यागाय व्रजति। | |
| चतुर्थी १३ | १६. नमः स्वस्ति-स्वाहा-स्वधाऽलंवषड्योगाच्च<br>नमः स्वस्ति-स्वाहा-स्वधाऽलंवषड्योगाच्च चतुर्थी भवति।<br>नमो देवभ्यः। स्वस्ति प्रजाभ्यः।<br>स्वाहाऽग्नये। स्वधा पितृभ्यः। अलं मल्लो मल्लाय।<br>(वा०) अलमिति पर्याप्त्यर्थग्रहणम्।<br>प्रभुर्मल्लो मल्लाय। शक्तो मल्लो मल्लाय। समर्थो मल्लो मल्लाय।<br>वषडग्नये। वषडिन्द्राय। | |

| | | |
|---|---|---|
| चतुर्थी १३ | १७. मन्यकर्मण्यनादरे विभाषाऽप्राणिषु<br>मन्यकर्मणि चतुर्थी विभाषा भवति अनादरे (गम्यमाने) न तु प्राणिषु कर्मसु।<br>न त्वां तृणाय, तृणं वा मन्ये।<br>न त्वां बुसाय, बुसं वा मन्ये।<br>व्यवस्थितविभाषाश्रयणाद् युष्मदः चतुर्थी न भवति।<br>विकरणनिर्देशः किम्? न त्वां तृणं मन्वे।<br>अनादरे इति किम्?<br>अश्मानं दृषदं मन्ये, मन्ये काष्ठमुलूखलम्।<br>अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति।<br>अत्र तत्त्वाख्यानम्, न चानादरो गम्यते।<br>अप्राणिष्विति किम्? न त्वां शृगालं मन्ये।<br>(वा०) अप्राणिष्वित्यपनीय नौ-काकान्नशुक-शृगालवर्जेष्विति वक्तव्यम्।<br>तेन 'न त्वां नावमन्नं वा मन्ये' इत्यत्राप्राणित्वेऽपि चतुर्थी न; 'न त्वां शुने मन्ये' इत्यत्र प्राणित्वेऽपि चतुर्थी भवत्येव। | |
| अनभिहिते १ | १८. कर्तृ-करणयोस्तृतीया<br>अनभिहितयोः कर्तृकरणयोस्तृतीया भवति।<br>कर्तरि - देवदत्तेन कृतम्। यज्ञदत्तेन भुक्तम्।<br>करणे - दात्रेण लुनाति। परशुना छिनत्ति।<br>(वा०) तृतीयाविधाने प्रकृत्यादीनामुपसंख्यानम्।<br>प्रकृत्याऽभिरूपः। प्रकृतिसम्बन्ध्यभिरूपत्ववानित्यर्थः।<br>सम्बन्धस्तृतीयार्थः। प्रायेण याज्ञिकः।<br>बहुलाचारसम्बन्धियाज्ञिकत्ववानित्यर्थः। सम्बन्धस्तृतीयार्थः।<br>सम्बन्धश्चात्र ज्ञाप्यज्ञापक भावः। गोत्रेण गार्ग्योऽस्मि।<br>गोत्रसम्बन्धिगार्ग्यत्ववानित्यर्थः। गोत्राभिन्नगार्ग्यत्ववानित्यर्थो वा। सम्बन्धे तृतीया, प्रातिपदिकार्थे वा।<br>समेनैति। विषमैणेति। क्रियाविशेषणमेतत्, समं, विषमं वा गमनं करोतीत्यर्थः।<br>द्विद्रोणेन धान्यं क्रीणाति। द्वौ द्वौ द्रोणौ कृत्वा धान्यं क्रीणातीत्यर्थः।<br>पञ्चकेन पशून् क्रीणाति। पञ्च परिमाणमस्य पशुसंघस्येति पञ्चकः संघः, पञ्चकं संघं कृत्वा पशून क्रीणातीत्यर्थः।<br>अर्थात् पञ्च पञ्च कृत्वा पशून्क्रीणातीत्यर्थः।<br>एवमेव साहस्रेणाश्वं क्रीणाति। साहस्रं संघं कृत्वा, सहस्रं सहस्रं कृत्वेति यावद् अश्वान् क्रीणातीत्यर्थः। | तृतीया २३ |

| | | |
|---|---|---|
| तृतीया १८ | १९. सहयुक्तेऽप्रधाने<br>सहयुक्तेऽप्रधाने तृतीया भवति।<br>पुत्रेण सहागतः पिता।<br>युक्तग्रहणात् सहेत्यर्थग्रहणम्। तेन साकं-सार्द्धं-समंयोगेऽपि तृतीया भवति - पुत्रेण साकं, सार्द्धं, समं वा पिता आगतः।<br>विनापि तद्योगं तृतीया भवति 'वृद्धो यूना' इत्यादिनिर्देशात्। | |
| तृतीया १८ | २०. येनाऽङ्गविकारः<br>येन (अङ्गेन) अङ्गविकारो लक्ष्यते ततः तृतीया भवति।<br>अङ्गशब्दोऽत्र अर्शआद्यजन्तः इति अङ्गविकारशब्दस्य अङ्गिनो विकार इत्यर्थः।<br>अक्ष्णा काणः। पादेन खञ्जः। पृष्ठेन कुब्जः।<br>अङ्गविकार इति किम्? अक्षि काणमस्य। | |
| तृतीया १८ | २१. इत्थम्भूतलक्षणे<br>इत्थम्भूतस्य यल्लक्षणम् = ज्ञापकं, ततस्तृतीया भवति।<br>अयं प्रकार इति इत्थम्, तं भूतः = प्राप्त इति इत्थम्भूतः।<br>'भू प्राप्तौ' इतिचौरादिकात् क्तप्रत्ययः।<br>जटाभिस्तापसः। जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः। | |
| तृतीया १८ | २२. संज्ञोऽन्यतरस्याम्<br>संज्ञोऽन्यतरस्यां कर्मणि तृतीया भवति।<br>पक्षे द्वितीया।<br>मात्रा, मातरं वा संजानीते। सम्यग्जानातीत्यर्थः। | |

| तृतीया १८ | २३. हेतौ<br>हेतौ (हेत्वर्थे वर्तमानाच्छब्दात्) तृतीया भवति।<br>फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते।<br>धनेन कुलम्। कन्यया शोकः। विद्यया यशः।<br>फलमपीह हेतुः - अध्ययनेन वसति।<br>गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका भवति।<br>तेन-अलं श्रमेण इत्यत्रापि तृतीया भवति। अलं श्रमेण इत्यस्य श्रमेण साध्यं नास्तीत्यर्थः। इह गम्यमानसाधनक्रियां प्रति श्रमः करणमिति ततः तृतीया।<br>एवमेव - शतेन शतेन वत्सान् पाययति। अत्र शतेन परिच्छिद्येत्यर्थः, इति गम्यमानपरिच्छेदन क्रियां प्रति शतं करणमिति ततः तृतीया।<br><br>(वा०) अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया वक्तव्या।<br>यद्यप्येवं वार्तिकं 'दाणश्च सा चतुर्थ्यर्थे' (१.३.५५) इति सूत्रे भाष्ये, काशिकावृत्तौ च पठितन्तथापि प्रकरणानुरोधात्, कौमुद्यनुरोधाच्च अत्रैव पठितमस्माभिः।<br>दास्या मालां संप्रयच्छते कामुकः। धर्म्ये तु भार्यायै संयच्छति। | हेतौ २७ |
|---|---|---|
| हेतौ २३ | २४. अकर्तर्यृणे पञ्चमी<br>अकर्तरि ऋणे हेतौ पञ्चमी भवति।<br>शताद् बद्धः। सहस्राद् बद्धः।<br>अकर्तरीति किम्? शतेन बन्धितः।<br>शतमृणं च भवति, प्रयोजकत्वाच्च कर्तृसंज्ञकम्। | पंचमी २५ |
| हेतौ २३<br>पञ्चमी२४ | २५. विभाषा गुणेऽस्त्रियाम्<br>अस्त्रियां गुणे हेतौ विभाषा पञ्चमी भवति। पक्षे 'हेतौ' इत्यनेन तृतीया।<br>जाड्याद्, जाड्येन वा बद्धः।<br>पाण्डित्याद्, पाण्डित्येन वा मुक्तः।<br>गुणग्रहणं किम्? धनेन कुलम्।<br>अस्त्रियामिति? बुद्ध्या, प्रज्ञया वा मुक्तः। | |
| हेतौ २३ | २६. षष्ठी हेतुप्रयोगे<br>हेतुप्रयोगे (हेतुशब्दस्य प्रयोगे सति) हेतौ षष्ठी भवति।<br>अन्नस्य हेतोर्वसति। | षष्ठी<br>हेतुप्रयोगे २७ |

| | | |
|---|---|---|
| हेतौ २३ षष्ठी २६<br>हेतुप्रयोगे २६ | २७. सर्वनाम्नस्तृतीया च<br>हेतुप्रयोगे हेतौ वर्तमानात् सर्वनाम्नस्तृतीया भवति चकारात्षष्ठी च।<br>केन हेतुना, कस्य हेतोर्वा वसति? येन हेतुना, यस्य हेतोर्वा वसति।<br><br>(वा०) निमितपर्यायप्रयोगे सर्वासां प्रायदर्शनम्।<br>किं निमित्तं, केन निमित्तेन, कस्मै निमित्ताय, कस्माद् निमित्ताद्, कस्य निमित्तस्य, कस्मिन् निमित्ते वा वसति।<br>एवं किं कारणम्, को हेतुः,<br>किं प्रयोजनमित्यादि।<br>प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न भवतः। ज्ञानेन निमित्तेन हरिः सेव्यः, ज्ञानाय निमित्ताय इत्यादि। | |
| अनभिहिते १ | २८. अपादाने पञ्चमी<br>अनभिहिते अपादाने पञ्चमी भवति।<br>ग्रामादागच्छति। पर्वतादवरोहति। वृकेभ्यो बिभेति। अध्ययनात् पराजयते।<br><br>(वा०) ल्यब्लोपे कर्मण्यधिकरणे च।<br>प्रासादात्प्रेक्षते। आसनात्प्रेक्षते।<br>प्रासादमारुह्य, आसने उपविश्य प्रेक्षते इत्यर्थः।<br>श्वशुराज्जिह्रेति। श्वशुरं वीक्ष्येत्यर्थः।<br>अर्थतः प्राप्तस्य ल्यबन्तस्यादर्शनेन 'अदर्शनं लोपः' इति सूत्रेण ल्यबन्तस्य लोपसंज्ञा।<br>(वा०) प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या।<br>कुतो भवान्? पाटलिपुत्रात्।<br><br>(वा०) यताश्चाध्वनिमानं ततः पञ्चमी वक्तव्या।<br><br>(वा०) तद्युक्तादध्वनः प्रथमासप्तम्यौ।<br>(वा०) कालात्सप्तमी च वक्तव्या।<br>वनाद् ग्रामो योजनं, योजने वा।<br>कार्तिक्या आग्रहायणी मासे। | पंचमी ३५ |

| | | |
|---|---|---|
| पञ्चमीं २८ | **२९. अन्यारादितरर्ते-दिक्छब्दाञ्चूत्तर-पदाजाहियुक्ते**<br>अन्यादिभिर्योगे पञ्चमी भवति।<br>अन्येत्यर्थग्रहणम्; इतरग्रहणं प्रपञ्चार्थम्। अन्यो, भिन्नः, इतरो वा कृष्णात्। पूर्वो ग्रामात्। दिशि दृष्टः दिक्शब्दः। तेन सम्प्रति देशकालवृत्तिना योगेऽपि भवति। चैत्रात्पूर्वः फाल्गुनः। अवयवावयवियोगे तु न 'तस्य परमाम्रेडितम्' इति निर्देशात्।<br>अञ्चूत्तरपदस्य तु दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थ' इति षष्ठीं बाधितुं पृथग्ग्रहणम्। प्राक्, प्रत्यग्वा ग्रामात्।<br>आच् - दक्षिणा ग्रामात्। 'दक्षिणादाच्' इति सूत्रेण आच् प्रत्ययः।<br>आहि - दक्षिणाहि ग्रामात्। 'आहि च दूरे' इति सूत्रेण आहिप्रत्ययः। | |
| | **३०. षष्ठ्यतसर्थप्रत्ययेन**<br>अतसर्थप्रत्ययान्तेन योगे षष्ठी भवति।<br>'दक्षिणोत्तराभ्यामतसुच्' इति सूत्रेण विहितो योऽतसुच् प्रत्ययः, तस्य योऽर्थः, तस्मिन् विहितप्रत्ययेन योगे षष्ठी क्रियतेऽनेन।<br>दक्षिणतः, उत्तरतः, पुरस्ताद्, उपरि, उपरिष्टाद् वा ग्रामस्य। | |
| | **३१. एनपा द्वितीया**<br>एनप्रत्ययान्तेन योगे द्वितीया भवति।<br>'एनबन्यतरस्यामदूरे पञ्चम्याः' इति सूत्रेण एनप्प्रत्ययो विधीयते, तदन्तेन योगे द्वितीया भवति।<br>दक्षिणेन, उत्तरेण वा ग्रामं ग्रामस्य वा।<br>'एनपा' इति योगविभागेन षष्ठ्यपि भवति। | |
| पञ्चमी २८ | **३२. पृथग्-विना-नानाभिस्तृतीयान्यतरस्याम्**<br>पृथग्-विना-नानाभिर्योगे तृतीया अन्यतरस्यां भवति।<br>अन्यतरस्यांग्रहणेन पञ्चमीग्रहणमत्र अनुवर्तते इति एभिर्योगे पञ्चम्यपि। 'पृथग्विनानानाभिः' इति योगविभागेन एभिर्योगे द्वितीया अपि।<br>एवं हि पृथविनानानाभिर्योगे तृतीया, पञ्चमी, द्वितीया इति तिस्रः विभक्तयः भवन्ति।<br>पृथक् , विना , नाना वा देवदत्तेन, देवदत्तात्, देवदत्तं वा। | तृतीया ३५<br>अन्यतरस्याम् ३३ |

| | | |
|---|---|---|
| पञ्चमी २८<br>तृतीया ३२<br>अन्यतरस्याम् ३३ | **३३. करणे च स्तोकाल्प-कृच्छ्र-कतिपयस्यासत्त्ववचनस्य**<br>करणे असत्त्ववचनस्य स्तोकाल्पकृच्छ्रकतिपयस्य च अन्यतरस्यां पञ्चमी भवति।<br>पक्षे 'कर्तृकरणयोस्तृतीया' इति सूत्रे तृतीया।<br>स्तोकेन, स्तोकाद् वा मुक्तः।<br>स्तोकेन आयासेनेत्यर्थः। एवमेव अल्पेन, अल्पात्, कृच्छ्रेण, कृच्छ्रात्, कतिपयेन, कतिपयाद् वा मुक्तः।<br>असत्त्ववचनस्येति किम्? स्तोकेन विषेण हतः। अल्पेन मधुना मत्तः। | असत्त्ववचनस्य ३५ |
| पञ्चमी २८ | **३४. दूरान्तिकान्तिकार्थैः षष्ठ्यन्यतरस्याम्**<br>दूरान्तिकार्थैर्योगे षष्ठी भवति अन्यतरस्यां पञ्चमी च।<br>अन्यतरस्यांग्रहणं पञ्चम्यर्थम्, अन्यथा हि अनन्तरत्वात्पक्षे तृतीयाया आपत्तिः स्यात्।<br>दूरार्थैः - दूरं ग्रामात्, ग्रामस्य वा। विप्रकृष्टं ग्रामात्, ग्रामस्य वा।<br>अन्तिकार्थैः - अन्तिकं ग्रामात्, ग्रामस्य वा। अभ्याशं ग्रामात्, ग्रामस्य वा। | |
| पञ्चमी २८<br>तृतीया३२<br>असत्त्ववचनस्य३३ | **३५. दूरान्तिकार्थेभ्यो द्वितीया च**<br>असत्त्ववचनेभ्यो दूरान्तिकार्थेभ्यो द्वितीया भवति, चकारात् पञ्चमी, तृतीयापि समुच्चीयते।<br>दूरं, दूराद्, दूरेण वा ग्रामस्य, ग्रामाद् वा।<br>अन्तिकम्, अन्तिकाद्, अन्तिकेन वा ग्रामस्य ग्रामाद् वा।<br>प्रातिपदिकार्थे विधिरयं प्रथमाया अपवादः।<br>असत्त्ववचनस्य इत्यनुवृत्तेर्नेह- दूरः पन्थाः, दूराय पथे देहि, दूरस्य पथः स्वम्। एषु यथायथं विभक्तयो भवन्ति। | दूरा-र्थेभ्यः २५ |

| | | |
|---|---|---|
| दूरान्तिकार्थेभ्यः २५ अनभिहिते १ | **३६. सप्तम्यधिकरणे च**<br>अनभिहिते अधिकरणे, चकाराद् दूरान्तिकार्थेभ्यश्च सप्तमी भवति।<br>अधिकरणे - कटे आस्ते। शकटे आस्ते। स्थाल्यां पचति।<br>दूरान्तिकार्थेभ्यः खल्वपि - दूरे, अन्तिके, अभ्याशे वा ग्रामस्य, ग्रामाद् वा।<br>अनेन सूत्रेणापि दूरान्तिकार्थेभ्यः प्रातिपदिकार्थे एव सप्तमी। एवं हि दूरान्तिकार्थेभ्यः प्रातिपदिकार्थे द्वितीया, तृतीया, पञ्चमी, सप्तमी चेति चतस्रो विभक्तयो भवन्ति।<br><br>(वा०) सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्।<br>अधीती व्याकरणे। अधीतं व्याकरणमनेन इत्यर्थे अधीतशब्दात् 'इष्टादिभ्यश्च' इति सूत्रेण इनिप्रत्यये कृते 'व्याकरणे' इत्यत्र कर्मणि सप्तमी भवति प्रकृतवार्तिकेन।<br><br>(वा०) साध्वसाधुप्रयोगे च सप्तमी वक्तव्या।<br>साधुर्देवदत्तो मातरि, असाधुः पितरि।<br><br>(वा०) निमित्तात्कर्मसंयोगे सप्तमी वक्तव्या।<br>निमित्तमिह फलम्। योगः संयोगसमवायात्मकः।<br>चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्। केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः।।<br>हेतुतृतीयाऽत्र प्राप्ता। सीमा = अण्डकोशः। पुष्कलको गन्धमृगः।<br>योगविशेष इति किम्? वेतनेन धान्यं लुनाति। | सप्तमी ४१ |
| सप्तमी ३६ | **३७. यस्य च भावेन भावलक्षणम्**<br>यस्य च भावेन (क्रियया) भावलक्षणं (भावस्य = क्रियान्तरस्य लक्षणम् = ज्ञापनम्) भवति ततः सप्तमी भवति।<br>गोषु दुह्यमानासु गतः।<br>अग्निषु हूयमानेषु गतः। | यस्य भावलक्षणम् ३८ |
| सप्तमी ३६<br>यस्य ३७<br>भावलक्षणम् ३७ | **३८. षष्ठी चानादरे**<br>यस्य च भावेन भावलक्षणं भवति ततः षष्ठी भवति, चकारात् सप्तमी च अनादरे गम्यमाने।<br>रुदतः, रुदति वा प्राव्राजीत्। रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः। | षष्ठी ४१ |
| षष्ठी ३८<br>सप्तमी ३६ | **३९. स्वामीश्वराधिपति-दायाद-साक्षि-प्रतिभू-प्रसूतैश्च**<br>स्वाम्यादिभिः सप्तभिर्योगे च षष्ठीसप्तम्यौ भवतः।<br>षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं सूत्रमिदम्।<br>गवां, गोषु वा स्वामी, ईश्वरः, अधिपतिः, दायादः, साक्षी, प्रतिभूः, प्रसूतो वा। | |

| | | |
|---|---|---|
| षष्ठी३८<br>सप्तमी ३६ | ४०. आयुक्त-कुशलाभ्यां चासेवायाम्<br>आयुक्त, कुशल-इत्येताभ्यां शब्दाभ्यां योगे सप्तमी भवति, चकारात् षष्ठी च, आसेवायाम्= तत्परतायां गम्यमानायाम्।<br>आयुक्तः = व्यापारितः। कुशलः = निपुणः। आसेवा = तात्पर्यम्, तत्परता वा।<br>आयुक्तः, कुशलो वा कटकरणस्य, कटकरणे वा।<br>आसेवायामिति किम्? आयुक्तोः गौः शकटे। ईषद्युक्त इत्यर्थः। अत्र सप्तम्यधिकरणे भवति। | |
| षष्ठी३८<br>सप्तमी ३६ | ४१. यतश्च निर्धारणम्<br>यतो निर्धारणं ततश्च षष्ठीसप्तम्यौ भवतः।<br>जातिगुणक्रियाभिः साधनैः समुदायादेकस्य पृथक्करणं निर्धारणम्।<br>मनुष्याणां, मनुष्येषु वा क्षत्रियः शूरतमः।<br>गवां, गोषु वा कृष्णा संपन्नक्षीरतमा।<br>अध्वगानाम्, अध्वगेषु वा धावन्तः शीघ्रतमाः। | यतः<br>निर्धारणम् ४२ |
| यतः४१<br>निर्धारणम्४१ | ४२. पञ्चमी विभक्ते<br>यतश्च निर्धारणं ततः पञ्चमी भवति, विभक्ते सति।<br>विभक्तम् = विभागः। यतः पृथक् क्रियते, यश्च पृथक् क्रियते तयोः केवलं भेद एव विवक्षितः तत्रानेन पञ्चमी भवति।<br>माथुराः पाटलिपुत्रकेभ्यः आढ्यतराः। | |
| | ४३. साधुनिपुणाभ्यां सप्तम्यप्रतेः<br>साधुनिपुणाभ्यां योगे सप्तमी भवति, आर्चायां गम्यमानायाम्, न तु प्रतेः प्रयोगे।<br>मातरि, साधुर्निपुणो वा।<br>आर्चायामिति किम्? निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्यम्।<br><br>(वा०) अप्रत्यादिभिरिति वक्तव्यम्।<br>साधुर्निपुणो वा मातरं प्रति, परि अनु वा। | सप्तमी ४५ |
| सप्तमी ४३ | ४४. प्रसितोत्सुकाभ्यां तृतीया च<br>प्रसितोत्सुकाभ्यां योगे तृतीया भवति, चकारात्सप्तमी च।<br>प्रसितः = प्रसक्तः, यस्तत्र नित्यमेवावबद्धः स प्रसितशब्देनोच्यते।<br>कैशैः, केशुषु वा प्रसितः, उत्सुको वा। | तृतीया ४५ |

| | | |
|---|---|---|
| अधिकरणे ३६<br>तृतीया ४४<br>सप्तमी ४३ | ४५. नक्षत्रे च लुपि<br>नक्षत्रे प्रकृत्यर्थे सति यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्, तृतीयासप्तम्यौ भवतोऽधिकरणे। अर्थात् अधिकरणे लुबन्तान्नक्षत्रवाचकात् शब्दादनेन तृतीयासप्तम्यौ भवतः।<br>''मूलेनावहयेद् देवीं श्रवणेन विसर्जयेत्।'' मूले, श्रवणे वा। मूल श्रवणशब्दाभ्यां 'नक्षत्रेण युक्तः कालः' इति सूत्रेणाण्, 'लुबविशेषे' इति सूत्रेण तस्य लुप्।<br>लुपि किम्? मघासु ग्रहः।<br>अधिकरणे इंत्येव। तेन मूलं प्रतीक्षते, अद्य पुष्यः, अद्य कृत्तिका इत्यादौ तृतीयासप्तम्यौ न भवतः। | |
| | ४६. प्रातिपदिकार्थ-लिङ्ग-परिमाणवचनमात्रे प्रथमा<br>प्रातिपदिकार्थमात्रे, लिङ्गमात्राधिके प्रातिपदिकार्थे, परिमाणमात्राधिके प्रातिपदिकार्थे, संख्यामात्रे च प्रथमा भवति।<br>द्वन्द्वान्ते श्रूयमाणस्य मात्रशब्दस्य प्रत्येकमभिसम्बन्धः।<br>प्रातिपदिकार्थमात्रे प्रथमा- उच्चैः, नीचैः, पुमान्, स्त्री, नपुंसकमित्यादि।<br>लिङ्गमात्राधिके प्रातिपदिकार्थे प्रथमा- कृष्णः, श्रीः, ज्ञानमित्यादि।<br>परिमाणमात्राधिके प्रातिपदिकार्थे प्रथमा- द्रोणो व्रीहिः इति।<br>एकः, द्वौ इत्यादिसिद्धये तु वचनग्रहणम्।<br>यद्यपि प्रवृत्तिनिमित्तं, व्यक्तिः, लिङ्गं, संख्या, कारकञ्चेति पञ्चकं प्रातिपदिकार्थस्तथापि सूत्रे लिङ्गग्रहणात्, 'कर्मणि द्वितीया' इत्यादौ 'कर्मण्येव द्वितीया भवति नान्यत्र' इति सूत्रकाराभिमत प्रत्ययनियमपक्षे कर्मादौ प्रथमाविभक्तिवारणाय सूत्रे मात्रग्रहणाच्च प्रातिपदिकार्थपदेन प्रवृत्तिनिमित्तं, व्यक्तिश्चेति द्विकं प्रातिपदिकार्थ इति गृह्यते। एवं च प्रातिपदिकार्थ इत्यस्य लिङ्गरहिता अव्ययसंज्ञकशब्दाः, लिङ्गप्रवृत्तिनिमित्तकाः पुंस्त्रीनपुंसकादयश्च शब्दाः उदाहरणम्। एवं हि प्रातिपदिकार्थे प्रथमेत्यस्योदाहरणं भवति - उच्चैः, नीचैः, पुमान्, स्त्री, नपुंसकमित्यादि।<br>प्रवृत्तिनिमित्त-तदाश्रययोरेव प्रातिपदिकार्थत्वस्वीकारेण यत्र ताभ्यां पुंस्त्वादीनां लिङ्गानाम् अधिकत्वेन बोधो भवति तत्र प्रथमा न स्यादतः सूत्रे लिङ्गमात्राधिक्येऽपि प्रातिपदिकार्थे प्रथमा स्यादित्यर्थं लिङ्गग्रहणं कृतम्। अतः लिङ्गमात्रस्योदाहरणं भवति - कृष्णः, श्रीः, ज्ञानमित्यादि।<br>अत्र प्रवृत्तिनिमित्त-तदाश्रयापेक्षया पुंस्त्वादि अधिकम्। | |

| | | |
|---|---|---|
| | द्रोणत्वादिप्रवृत्तिनिमित्तकानां द्रोणादिशब्दानां परिमाणत्वेन परिमाणमपि लिङ्गवद् विशेष्येण सह अन्वेति। एवं च तस्य लिङ्गवत् प्रातिपदिकर्थत्वाभावेन 'द्रोणो व्रीहिः' इत्यादौ द्रोणशब्दात् प्रथमा न प्राप्नोति। अतः परिमाणाधिक्येऽपि प्रातिपदिकार्थे प्रथमासिद्ध्यर्थं सूत्रे परिमाणग्रहणम्।<br>अतः परिमाणमात्रस्योदाहरणं भवति- द्रोणो व्रीहिः इति। एकः, द्वौ इत्यादिसिद्धये तु वचनग्रहणम्। अन्यथा एतत्सूत्रोपस्थितस्य 'अनभिहित' इत्यस्यात्र फलाभावादेतदेकवाक्यतापन्न 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति संख्यावाक्यान्वयित्वेन 'उक्तार्थानामप्रयोगः' इति न्यायेन एकः, द्वौ - इत्यादौ प्रथमाया अप्राप्तिः स्यात्। कृते तु वचनग्रहणे तत्सामर्थ्याद् 'उक्तार्थानामप्रयोगः' इति न्यायस्य अत्र अप्रवृत्तिर्भविष्यति।<br>रामौ इत्यादौ संख्याधिक्येऽपि प्रथमा तु प्रकृतसूत्रस्य 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति सूत्राभ्यां सहैकवाक्यतया भवति।<br>मात्रग्रहणं किम्? प्रातिपदिकार्थादिभ्योऽधिकेऽर्थे प्रथमा मा भूत्। तेन वृक्षं पश्यति,अश्वेन गम्यते इत्यादौ प्रथमा न भवति। अत्र कर्मत्वादयोऽधिका अर्थाः।<br>न चात्र द्वितीयादयः प्रथमाया बाधिकाः, इति वाच्यम्; प्रत्ययनियमपक्षे द्वितीयादिभिः प्रथमाया अपवदितुमशक्यत्वात्। सूत्रे मात्रग्रहणात् सूत्रकारस्य प्रत्ययनियम एवेष्टः। अर्थनियमपक्षे तु मात्रग्रहणं निरर्थकं स्यात्।<br>प्रत्ययनियमपक्षे 'कर्मणिद्वितीया' इत्यादीनामेवमर्थो भवति - कर्मण्येव द्वितीया, नान्यत्र इति।<br>अर्थनियमपक्षे च 'कर्मणि द्वितीया' इत्यादीनामेवमर्थो भवति - कर्मणि द्वितीयैव भवति,नान्या इति। | |
| प्रथमा | **४७. सम्बोधने च**<br>सम्बोधने च प्रथमा भवति।<br>सम्बोधनाधिक्ये प्रातिपदिकार्थे पूर्वसूत्रेण प्रथमा न प्राप्नोतीति वचनमिदमारभ्यते।<br>सम्बोधनम् = अभिमुखीकरणम्।<br>हे देवदत्त ! हे देवदत्तौ ! हे देवदत्ताः ! | संबोधने ४६<br>प्रथमा ४६ |
| संबोधने ४७<br>प्रथमा ४७ | **४८. साऽऽमन्त्रितम्**<br>सम्बोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं भवति।<br>हे विप्र ! तव स्वम्। हे वत्स ! तवाश्वः।<br>'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यनेन आमन्त्रितस्य अविद्यमानवद्भावेन 'तव' इत्यस्य पदात्परत्वाभावेन 'ते' इत्यादेशो न। | |

| | | |
|---|---|---|
| संबोधने ४७<br>प्रथमा ४७ | **४९. एकवचनं सम्बुद्धिः**<br>आमन्त्रितस्यैकवचनं सम्बुद्धिसंज्ञं भवति।<br>हे वृक्ष ! हे पते ! हे नदि ! हे पटो ! | |
| | **५०. षष्ठी शेषे**<br>शेषे षष्ठी भवति।<br>कर्मदिभ्यो योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः<br>स्व-स्वामिभावादिसम्बन्धः स शेषः।<br>राज्ञः पुरुषः। पशोः पादः। पितुः पुत्रः।<br>कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव - भजे<br>शम्भोश्चरणयोः। | षष्ठी ७३<br>शेषे ७३ |
| षष्ठी ५० शेषे<br>५० | **५१. ज्ञोऽविदर्थस्य करणे**<br>अविदर्थस्य ज्ञः करणे शेषे षष्ठी भवति।<br>सर्पिषो ज्ञानम्। सर्पिषोपायेन प्रवृत्तिरित्यर्थः। 'षष्ठी शेषे'<br>इति सिद्धेऽपि 'प्रतिपदविधाना षष्ठी न समस्यते'<br>इत्येतदर्थं वचनम्।<br>अविदर्थस्य किम्? स्वरेण पुत्रं जानाति। | |
| षष्ठी ५० शेषे<br>५० | **५२. अधीगर्थ-दयेशां कर्मणि**<br>अधीगर्थदयेशां कर्मणि शेषे षष्ठी भवति।<br>अधीगर्थाः = स्मरणार्थाः।<br>मातुः स्मरणम्। सर्पिषो दयनम्, ईशनं वा। | कर्मणि ६१ |
| षष्ठी ५०<br>कर्मणि५२<br>शेषे ५० | **५३. कृञः प्रतियत्ने**<br>कृञः कर्मणि शेषे षष्ठी भवति, प्रतियत्ने।<br>प्रतियत्नो गुणाधानम्।<br>एधोदकस्योपस्करणम्। | |
| षष्ठी ५०<br>कर्मणि५२<br>शेषे ५० | **५४. रुजार्थानां भाववचनानामज्वरेः**<br>भाववचनानां (भावप्रत्ययान्तकर्तृकाणाम्) रुजार्थानां कर्मणि<br>शेषे षष्ठी भवति, न तु ज्वरेः कर्मणि।<br>रुजा इति व्याधिकृतसन्तापादिपीडोच्यते।<br>चौरस्य रोगस्य रुजा। रोगकर्तृकचौरसम्बन्धिपीडेत्यर्थः।<br>(वा०) अज्वरि-सन्ताप्योरिति वक्तव्यम्।<br>रोगस्य चौरज्वरः, चौरसन्तापो वा। रोगकर्तृकं<br>चौरसम्बन्धिज्वरादिकमित्यर्थः। | |
| षष्ठी ५०<br>कर्मणि५२<br>शेषे ५० | **५५. आशिषि नाथः**<br>आशिषि वर्तमानस्य नाथः कर्मणि शेषे षष्ठी भवति।<br>'इदं मे भूयात्' इतीच्छा आशीः।<br>सर्पिषो नाथनम्। कर्मीभूतसर्पिस्सम्बन्धि आशासनमित्यर्थः।<br>अशिषि इति किम्? माणवकनाथनम्। तत्सम्बन्धिनी<br>याच्ञेत्यर्थः। | |

| | | |
|---|---|---|
| षष्ठी ५०<br>कर्मणि५२<br>शेषे ५० | ५६. जासि-निप्रहण-नाट-क्राथ-पिषां हिंसायाम्<br>हिंसायामर्थे वर्तमानानां जासि-निप्रहण-नाट- क्राथ-पिषां कर्मणि शेषे षष्ठी भवति।<br>जासि- चौरस्योज्जासनम्।<br>'निप्रहण' इति संघातस्य, विपर्यस्तस्य, व्यस्तस्य च ग्रहणम्। चौरस्य निप्रहणनम्, प्रणिहननम्, निहननं प्रहणनं वा।<br>'नट अवस्कन्दने' इति चुरादिः - चौरस्योन्नाटनम्।<br>क्राथ् - चौरस्य क्राथनम्।<br>पिष् - वृषलस्य पेषणम्।<br>हिंसायां किम्? धानापेषणम्। | |
| षष्ठी ५०<br>कर्मणि५२<br>शेषे ५० | ५७. व्यवहृ-पणोः समर्थयोः<br>समानार्थयोः (तुल्यार्थयोः) व्यवहृपणोः कर्मणि शेषे षष्ठी भवति।<br>द्यूते, क्रयव्यवहारे चानयोस्तुल्यार्थता।<br>शतस्य व्यवहरणं, पणनं वा।<br>समर्थयोः किम्? शलाकाव्यवहारः; गणनेत्यर्थः।<br>ब्राह्मणपणनम्; स्तुतिरित्यर्थः। | |
| षष्ठी ५०<br>कर्मणि५२ | ५८. दिवस्तदर्थस्य<br>तदर्थस्य = द्यूतार्थस्य, क्रयविक्ररूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी भवति।<br>अत्र 'शेष' इति नानुवर्तते, उत्तरसूत्रद्वयारम्भ- सामर्थ्यात्' इति हरदत्तः।<br>शतस्य दीव्यति।<br>तदर्थस्येति किम्? ब्राह्मणं दीव्यति। स्तौतीत्यर्थः।<br>योग विभाग उत्तरार्थः। | दिवस्तदर्थस्य<br>६० |
| षष्ठी ५०<br>कर्मणि५२<br>दिवस्तदर्थस्य ५८ | ५९. विभाषोपसर्गे<br>उपसर्गे सति दिवस्तदर्थस्य कर्मणि विभाषा षष्ठी भवति। पक्षे द्वितीया। पूर्वयोगापवादः। अत्रापि शेष इति नानुवर्तते।<br>शतस्य, शतं वा प्रतिदीव्यति। | |
| कर्मणि५२<br>दिवस्तदर्थस्य ५८ | ६०. द्वितीया ब्राह्मणे<br>ब्राह्मणे दिवस्तदर्थस्य कर्मणि द्वितीया भवति, अत्रापि 'शेष' इति नानुवर्तते। मन्त्रव्यतिरेको वेदभागः ब्राह्मणम्।<br>गामस्य तदहः सभायां दीव्येयुः। गामस्य सभायामित्यन्वयः।<br>'तदहः' इत्येतदुदाहरणम्, 'स्वमोर्नपुंसकात्' इति द्वितीयाया लुक् 'रोऽसुपि' इति नकारस्य रेफः, विसर्जनीयः, इति हरदत्तः, न्यासकारश्च। | |

| कर्मणि५२ षष्ठी ५० | ६१. प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने<br>देवतासम्प्रदाने सति प्रेष्य-ब्रुवोर्हविषः कर्मणः षष्ठी भवति। अत्रापि शेष इति नानुवर्तते।<br>अग्नये छागस्य हविषो वापाया मेदसः प्रेष्य। अग्नये छागस्य हविषो वापाया मेदसोऽनुब्रूहि।<br>प्रेष्येति साहचर्याद् ब्रुविरपि लोण्मध्यमपुरुषैक- वचन एव गृह्यते।<br>हविष इति किम्? अग्नये गोमयानि प्रेष्य।<br>देवतासम्प्रदाने किम्? माणवकाय पुरोडाशं प्रेष्य। | |
|---|---|---|
| षष्ठी ५० | ६२. चतुर्थ्यर्थे बहुलं छन्दसि<br>चतुर्थ्यर्थे षष्ठी बहुलं भवति छन्दसि।<br>पुरुषमृगश्चन्द्रमसः। पुरुषमृगश्चन्द्रमसे।<br><br>(वा०) षष्ठ्यर्थे चतुर्थी वक्तव्या।<br>या खर्वेण पिबति तस्यै खर्वो जायते। खर्वेण= अग्निदग्धशरावेण। खर्वः = वामनः।<br>या दतो धावते (दन्तान् शोधयतिं) तस्यै श्यावदन् (मलिनदन्तः)। या नखानि कृन्तते तस्यै कुनखी। याऽ ङ्क्ते (अञ्जनं करोति) तस्यै काणः।<br>या अभ्यङ्क्ते (तैलेन मर्दयति) तस्यै दुश्चर्मा।<br>या प्रलिखते (चित्रादि लिखति) तस्यै खलतिः (केशहीनशिराः) जायते।<br>'रजस्वलायाः खर्वपानादिनिषेधार्थोऽयमर्थवादः' इति चतुर्थ्यर्थे बहुलं छन्दसि' (२.३.६२) इति सूत्रस्थभाष्ये कैयटः। | छन्दसि बहुलम् ६३ |
| बहुलम् ६२ छन्दसि६२ षष्ठी५० | ६३. यजेश्च करणे<br>यजेश्च करणे षष्ठी बहुलं भवति छन्दसि।<br>घृतस्य यजते। घृतेन यजते। यजिरत्र देवपूजायां वर्तते, तत्र च घृतं करणम्। | |
| षष्ठी ५० शेषे ५० | ६४. कृत्वोऽर्थप्रयोगे कालेऽधिकरणे<br>कृत्वोऽर्थप्रयोगे कालेऽधिकरणे शेषे षष्ठी भवति।<br>पञ्चकृत्वोऽह्नो भुङ्क्ते। द्विरह्नोऽधीते।<br>कृत्वोऽर्थ ग्रहणं किम्? अह्नि शेते। रात्रौ शेते।<br>कालग्रहणं किम्? द्विः कांस्यपात्र्यां भुङ्क्ते।<br>शेष इत्येव - द्विरहन्यध्ययनम्। | |
| षष्ठी ५० अनभिहिते १ | ६५. कर्तृ-कर्मणोः कृति<br>कृति (कृदन्तैर्योगे) अनभिहितयोः कर्तृकर्मणोः षष्ठी भवति।<br>कर्तरि - कृष्णस्य कृतिः।<br>कर्मणि - जगतः कर्ता कृष्णः।<br>कर्तृकर्मणोरिति किम्? शस्त्रेण भेत्ता। | कृति ६६ |

| | | |
|---|---|---|
| षष्ठी ५० कृति ६५ | ६६. उभयप्राप्तौ कर्मणि<br>कृति उभयप्राप्तौ कर्मण्येव षष्ठी भवति न कर्तरि।<br>आश्चर्यो गवां दोहोऽगोपालकेन। | |
| षष्ठी ५० | ६७. क्तस्य च वर्तमाने<br>वर्तमानेऽर्थे क्तस्य योगे षष्ठी भवति।<br>'न लोकाव्यय' इति निषेधस्यापवादः।<br>राज्ञां मतो, बुद्धः, पूजितो वा।<br>'मति-बुद्धि-पूजार्थेभ्यश्च' इति वर्तमाने क्तः।<br>वर्तमाने इति किम्? ग्रामं गतः। अत्र भूते क्तः। | क्तस्य ६८ |
| क्तस्य ६७<br>षष्ठी५० | ६८. अधिकरणवाचिनश्च<br>अधिकरणवाचिनश्च क्तस्य योगे षष्ठी भवति।<br>इदमेषामासितं, शयितं, गतं भुक्तं वा। 'क्तोऽधिकरणे च ध्रौव्य-गति-प्रत्यवसानार्थेभ्यः' इति सूत्रेणाधिकरणे क्तः।<br><br>(वा०) गुणकर्मणि वेष्यते।<br>नेता अश्वस्य स्रुघ्नस्य, स्रुघ्नं वा। | |
| षष्ठी ५० | ६९. न लोकाव्ययनिष्ठाखलर्थतृनाम्<br>लोकाव्यय-निष्ठा-खलर्थ-तृनां योगे षष्ठी न भवति।<br>'लोक' इत्यत्र ल, उ, उक् इति च्छेदः।<br>ल = लादेशः - कुर्वन्, कुर्वाणो वा सृष्टिं हरिः।<br>उ = हरिं दिदृक्षुः, अलंकरिष्णुर्वा।<br>उक = दैत्यान् घातुको हरिः।<br><br>(वा०) कमेरनिषेधः<br>लक्ष्म्याः कामुको हरिः।<br>अव्ययम् - जगत्सृष्ट्वा। सुखं कर्तुम्।<br>निष्ठा - दैत्यान् हतवान् विष्णुः।<br>खलर्थाः - ईषत्करः प्रपञ्चो हरिणा।<br>तृन् इति प्रत्याहारः, 'शतृशानचौ' इति तृशब्दादारभ्य आ तृनो नकारात्। शानन् - सोमं पवमानः।<br>चानश् - आत्मानं मण्डयमानः।<br>शतृ - वेदमधीयन्। 'इङ्-धार्योः शत्रकृच्छ्रिणि' इति शतृप्रत्ययः।<br>तृन् - कर्ता लोकान्।<br><br>(वा०) द्विषः शतुर्वा वचनम्<br>सुरस्य, सुरं वा द्विषन्।<br>सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः। शेषे षष्ठी तु स्यादेव - ब्राह्मणस्य कुर्वन्। नरकस्य जिष्णुः। | न ७० |

| | | |
|---|---|---|
| षष्ठी ५० न ६६ | **७०. अकेनोर्भविष्यदाधमर्ण्ययोः**<br>भविष्यदाधमर्ण्ययोरर्थयोः विहितयोः अकेनोर्योगे षष्ठी न भवति।<br>भविष्यति अकस्य योगे – सतः पालको अवतरति हरिः। सज्जनान् पालयिष्यन् हरिः प्रादुर्भवतीत्यर्थः। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति सूत्रेण भविष्यति ण्वुल्।<br>आधमर्ण्ये अकः नास्तीति नोदाह्रियते।<br>भविष्यति इनः योगे – ग्रामं गमी। ग्रामं गामी। 'भविष्यति गम्यादयः' इति सूत्रेण निपातनम्।<br>आधमर्ण्ये इनः योगे – शतं दायी।<br>'आवश्यकाधमर्ण्ययोर्णिनिः' इति णिनिः। | |
| षष्ठी ५० | **७१. कृत्यानां कर्तरि वा**<br>कृत्यानां योगे कर्तरि षष्ठी विभक्तिर्वा भवति।<br>भवतः, भवता वा कटः कर्त्तव्यः।<br>कर्तरीति किम्? गेयो माणवकः साम्नाम्। 'भव्य गेय' इति सूत्रेण कर्तरि यत्प्रत्ययः, तद्योगे 'साम्नाम्' इत्यत्र कर्मणि नित्यमेव षष्ठी।<br><br>(वा०) उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः।<br>नेतव्याः व्रजं गावः कृष्णेन। | |
| षष्ठी ५० शेषे ५० | **७२. तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्**<br>तुल्यार्थैः शब्दैर्योगे शेषे तृतीया अन्यतरस्यां भवति, तुला, उपमा इत्येतौ शब्दौ वर्जयित्वा। पक्षे षष्ठी।<br>तुल्यः, सदृशः, समो वा कृष्णेन, कृष्णस्य वा।<br>अतुलोपमाभ्यामिति किम्? तुला, उपमा वा कृष्णस्य नास्ति। | अन्यतरस्याम्७३ |

| | | |
|---|---|---|
| षष्ठी ५० शेषे ५० अन्यतरस्याम् ७२ | **७३. चतुर्थी चाशिष्यायुष्य-मद्र-भद्र-कुशल-सुखार्थ-हितैः**<br>आयुष्य, मद्र, भद्र, कुशल, सुख, अर्थ, हित-इत्येतैर्योगे शेषे अन्यतरस्यां चतुर्थी भवति, आशिषि गम्यमानायाम्। पक्षे षष्ठी।<br><br>(वा०) अत्रायुष्यादीनां पर्यायग्रहणं कर्त्तव्यम्।<br>आयुष्य - आयुष्यं, चिरंजीवितं वा देवदत्ताय, देवदत्तस्य वा भूयात्।<br>मद्र - मद्रं देवदत्ताय, देवदत्तस्य वा भूयात्।<br>भद्र - भद्रं देवदत्ताय, देवदत्तस्य वा भूयात्।<br>कुशल - कुशलं, निरामयं वा देवदत्ताय, देवदत्तस्य वा भूयात्।<br>सुख - सुखं, शं वा देवदत्ताय, देवदत्तस्य वा भूयात्।<br>अर्थ - अर्थः, प्रयोजनं वा देवदत्ताय, देवदत्तस्य वा भूयात्।<br>हित - हितं, पथ्यं वा देवदत्ताय, देवदत्तस्य वा भूयात्।<br>आशिषीति किम्? आयुष्यं देवदत्तस्य तपः। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां द्वितीयाध्यायस्य तृतीयः पादः ।।

।। श्रीः ।।

## ।। अथ द्वितीयाध्यायस्य चतुर्थः पादः ।।

| | | |
|---|---|---|
| | १. द्विगुरेकवचनम्<br>द्विगुरेकवचनं लभते, अर्थादेकार्थवद् भवति।<br>पञ्चगवम्। सप्तशती। | एकवचनम् १७ |
| एकवचनम् १ | २. द्वन्द्वश्च प्राणि-तूर्य-सेनाङ्गानाम्<br>प्राणितूर्यसेनाङ्गानां यो द्वन्द्वः सोऽपि एकवचनं लभते।<br>द्वन्द्वान्ते श्रूयमाणस्याङ्गशब्दस्य प्रत्येकमभिसम्बन्धः।<br>प्राण्यङ्गानाम् - पाणिपादम्।<br>तूर्याङ्गानाम् - मार्दङ्गिकपाणविकम्।<br>वीणावादकपरिवादकम्।<br>सेनाङ्गानाम् - रथिकाश्वारोहम्। | द्वन्द्वे १६ |
| एकवचनम् १<br>द्वन्द्वे २ | ३. अनुवादे चरणानाम्<br>चरणानां यो द्वन्द्वः स एकवचनं लभते अनुवादे गम्यमाने।<br>चरणाः = शाखाध्येतृविशेषाः।<br>अनुवादः = प्रमाणान्तरेणावगतस्यार्थस्य शब्देन प्रतिपादनम्।<br>उदगात् कठकालापम्। प्रत्यष्ठात् कठकौथुमम्।<br>उदगादित्यस्य प्रादुरभूदित्यर्थः। प्रत्यष्ठादित्यस्य प्रतिष्ठां प्राप्नोदित्यर्थः।<br><br>(वा०) स्थेणोरद्यतन्यां चेति वक्तव्यम्।<br>'अद्यतनी' इति लुङः पूर्वाचार्यसंज्ञा।<br>स्थेणोरिति किम्? अनन्दिषुः कठकालापाः।<br>अद्यतन्यामिति किम्? उद्यन्ति कठकालापाः। | |

| | | |
|---|---|---|
| एकवचनम् १<br>द्वन्द्वः २ | ४. अध्वर्युक्रतुरनपुंसकम्<br>अध्वयुक्रत्ववयवको यो द्वन्द्वः स एकवचनं लभते, क्रतुश्चेद् नपुंसकलिङ्गशब्दस्तर्हि तदवयवको द्वन्द्व एकवचनं न लभते।<br>अध्वर्युशब्दोऽत्राध्वर्युकर्मविधायकयजुर्वेदपरः, तस्य यः क्रतुः = यज्ञः इति अध्वर्युक्रतुः; लक्षणया स अध्वर्युक्रत्वयवपरः।<br>अर्काश्वमेधम्। सायाह्नातिरात्रम्।<br>अर्कादयःशब्दाः यजुर्वेदविहिताः यज्ञाः पुँल्लिङ्गाः।<br>अध्वर्युक्रतुरिति किम्? इषुवज्रौ। क्रतू इमौ सामवेदे विहितौ।<br>अनपुंसकमिति किम्? राजसूयं च वाजपेयं च राजसूयवाजपेये। | |
| एकवचनम् १<br>द्वन्द्वः २ | ५. अध्ययनतोऽविप्रकृष्टाख्यानाम्<br>अध्ययनतोऽविप्रकृष्टाख्यानां (प्रत्यासन्नाख्यानाम्) यो द्वन्द्वः स एकवचनं लभते।<br>पदकक्रमकम्। क्रमकवार्त्तिकम्।<br>अध्ययनत इति किम्? पितापुत्रौ।<br>अविप्रकृष्टाख्यानामिति किम्?याज्ञिकवैयाकरणौ। | |
| एकवचनम् १<br>द्वन्द्वः २ | ६. जातिरप्राणिनाम्<br>जातिर्द्वन्द्वः अर्थात् जात्यवयवको द्वन्द्वः एकवचनं लभते, प्रणिनां यो द्वन्द्वः स एकवचनं न लभते।<br>धानाशष्कुलि। शैलद्रुमम्।<br>जातिरिति किम्? नन्दकपाञ्चजन्यौ। अप्राणिनामिति किम्? ब्राह्मणक्षत्रियविट्शूद्राः। | |
| एकवचनम् १<br>द्वन्द्वः २ | ७. विशिष्टलिङ्गो नदीदेशोऽग्रामाः<br>विशिष्टलिङ्गावयवको नदीदेशावयवको द्वन्द्वः एकवचनं लभते; तत्र ग्रामावयवका द्वन्द्वा एकवचनं न लभन्ते।<br>विशिष्टलिङ्ग इत्यस्य भिन्नलिङ्ग इत्यर्थः।<br>नदी – गङ्गा च शोणश्च गङ्गाशोणम्।<br>देश – कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम्।<br>अग्रामा इति किम्?. जाम्बब-शालूकिन्यौ।<br>जाम्बवं नगरम्, शालूकिनी ग्रामः।<br>(वा०) अग्रामा इत्यत्र नगराणां प्रतिषेधो वक्तव्यः।<br>इह मा भूत् – मथुरा च पाटलिपुत्रं च मथुरापाटलिपुत्रम्। | |

| | | |
|---|---|---|
| एकवचनम् १<br>द्वन्द्वः २ | ८. क्षुद्रजन्तवः<br>क्षुद्रजन्तवः द्वन्द्वाः अर्थात क्षुद्रजन्त्ववयवका द्वन्द्वा एकवचनं लभन्ते।<br>आनकुलात् क्षुद्रजन्तवः।<br>यूकालिक्षम्। दंशमशकम्।<br>क्षुद्रजन्तव इति किम्? ब्राह्मणक्षत्रियौ। | |
| एकवचनम् १<br>द्वन्द्वः २ | ९. येषां च विरोधः शाश्वतिकः<br>येषां शाश्वतिको विरोधः तेषां यो द्वन्द्वः स एकवचनं लभते।<br>विरोधः = वैरम्। शाश्वतिकः = नित्यः।<br>मार्जारमूषकम्। अहिनकुलम्।<br>शाश्वतिक इति किम्? गौपालि-शालङ्कायनाः कलाहायन्ते। | |
| एकवचनम् १<br>द्वन्द्वः २ | १०. शूद्राणामनिरवसितानाम्<br>अनिरवसितानां शूद्राणां यो द्वन्द्वः स एकवचनं लभते।<br>अनिरवसिताः = पात्राद् अबहिष्कृताः।<br>तक्षायस्कारम्। रजकतन्तुवायम्।<br>अनिरवसितानामिति किम्? चण्डालमृतपाः। | |
| एकवचनम् १<br>द्वन्द्वः २ | ११. गवाश्वप्रभृतीनि च<br>गवाश्वप्रभृतीनि चैकवचनं लभन्ते।<br>गावश्च अश्वाश्चेति गवाश्वम्।<br>कुब्जवामनम्। पुत्रपौत्रम्। दासीदासम्। | |

| | | |
|---|---|---|
| एकवचनम् १<br>द्वन्द्वः २ | १२. विभाषा वृक्ष-मृग-तृण-धान्य-व्यञ्जन - पशु-शकुन्यश्ववडव-पूर्वापराधरोत्तराणाम्<br>वृक्षादीनां यो द्वन्द्वः स एकवचनं विभाषा लभते।<br>वृक्ष- प्लक्षन्यग्रोधम्; प्लक्षन्यग्रोधाः।<br>मृग- रुरुपृषतम्; रुरुपृषताः।<br>तृण- कुशकाशम्, कुशकाशाः।<br>धान्य- व्रीहियवम्, व्रीहियवाः।<br>व्यञ्जन- दधिघृतम्, दधिघृते।<br>पशु- गोमहिषम्, गोमहिषाः।<br>शकुनि- शुकबकम्, शुकबकाः।<br>अश्ववडवादि - अश्ववडवम्, अश्ववडवौ। अश्वश्च वडवा चेति विग्रहे द्वन्द्वे कृते 'पूर्वपदश्ववडवौ' इति सूत्रेण पूर्वपदवत् पुँल्लिङ्गता।<br>पूर्वं च अपरं च पूर्वापरम्, पूर्वापरे।<br>अधरं च उत्तरं च अधरोत्तरम्, अधरोत्तरे।<br><br>(वा०) बहुप्रकृतिः फल-सेना-वनस्पति-मृग- शकुनि-क्षुद्रजन्तु-धान्य-तृणानाम्।<br>एषां बहुप्रकृतिरेव द्वन्द्व एकवचनं लभते न द्विप्रकृतिः।<br>वदरामलके। रथिकाश्वारोहौ।<br>प्लक्षन्यग्रोधौ। रुरुपृषतौ।<br>हंसचक्रवाकौ। यूकालिक्षे।<br>व्रीहियवौ। कुशकाशौ। | विभाषा १३ |
| एकवचनम् १<br>द्वन्द्वः२ विभाषा१२ | १३. विप्रतिषिद्धं चानधिकरणवाचि<br>विप्रतिषिद्धानधिकरणवाच्यवयवको यो द्वन्द्वः स एकवचनं लभते विभाषा।<br>शीतोष्णम्, शीतोष्णे। सुखदुःखम्, सुखदुःखे।<br>जीवितमरणम्, जीवितमरणे।<br>विप्रतिषिद्धमिति किम्? कामक्रोधौ।<br>अनधिकरणवाचीति किम्? शीतोष्णे उदके।<br>सूत्रेऽधिकरणशब्दो द्रव्यवाची। | |
| एकवचनम् १<br>द्वन्द्वः २ | १४. न दधिपयआदीनि<br>दधिपयआदीनि एकवचनं न लभन्ते। यथायथमेकवचने प्राप्ते प्रतिषेधोऽयम्।<br>दधिपयसी। सपिर्मधुनी।<br>मधुसर्पिषी इत्यादि। | न १६ |
| एकवचनम् १<br>द्वन्द्वः २ न१४ | १५. अधिकरणैतावत्त्वे च<br>अधिकरणैतावत्त्वे गम्यमाने द्वन्द्व एकवचनं न लभते।<br>अत्राप्यधिकरणशब्दो द्रव्यवाची।<br>दश दन्तोष्ठाः। दश मार्दङ्गिकपाणविकाः। | अधिकरणै-तावत्त्वे १६ |

| | | |
|---|---|---|
| एकवचनम् १<br>द्वन्द्वः २ न१४<br>अधिकरणैतावत्त्वे१५ | १६. विभाषा समीपे<br>अधिकरणैतावत्त्वस्य सामीप्येन परिच्छेदे सति द्वन्द्वो विभाषा एकवचनं न लभते।<br>उपदशं दन्तोष्ठम्; उपदशाः दन्तोष्ठाः।<br>उपदशं मार्दङ्गिकपाणविकम्।<br>उपदशाः मार्दङ्गिकपाणविकाः। | |
| एकवचनम् १ | १७. स नपुंसकमः<br>प्रकरणेऽस्मिन् यः यः एकवचनस्य विषय उक्तः स स नपुंसकं भवति।<br>स इति सर्वनाम्ना प्रकरणतः प्राप्तः एकवचनस्य विषयो गृह्यते। एकवचनस्य विषयः 'द्विगुरेकवचनम्' इति सूत्रानुसारेण द्विगुः, 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्यादिसूत्रानुसारेण समाहारद्वन्द्वश्च।<br>यथा- पञ्चगवम्। पाणिपादमित्यादि।<br><br>(वा०) अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः।<br>सप्तशती। दशरथी।<br><br>(वा०) वाऽऽबन्तः स्त्रियामिष्टः।<br>पञ्चखट्वम्, पञ्चखट्वी।<br><br>(वा०) अनो नलोपश्च वा च द्विगुः स्त्रियाम्।<br>पञ्चतक्षम्, पञ्चतक्षी।<br><br>(वा०) पात्रादिभ्यः प्रतिषेधो वक्तव्यः।<br>पञ्चपात्रम्। चतुर्युगम्। त्रिभुवनम्। | नपुंसकम् २५ |
| नपुंसकम् १७ | १८. अव्ययीभावश्च<br>अव्ययीभावश्च नपुंसकं भवति।<br>अधिस्त्रि। उन्मत्तगङ्गम्।<br><br>(वा०) पुण्य-सुदिनाभ्यामह्नः क्लीबतेष्यते।<br>पुण्याहम्। सुदिनाहम्।<br><br>(वा०) पथः संख्याव्ययादेः क्लीबतेष्यते।<br>'पथः' इति कृतसमासान्तनिर्देशः इति कृतसमासान्ते एव नपुंसकत्वम्। त्रयाणां पन्थाः इति त्रिपथम्।<br>विरूपः पन्थाः इति विपथम्।<br>कृतसमासान्तनिर्देशान्नेह - सुपन्थाः, अतिपन्थाः।<br><br>(वा०) क्रियाविशेषणानां च क्लीबतेष्यते।<br>मृदु पचति। शोभनं पचति। | |

| | | |
|---|---|---|
| नपुंसकम् १७ | १९. तत्पुरुषोऽनञ्कर्मधारयः<br>अधिकारोऽयम् 'विभाषा सेना (२.४.२५) इति सूत्रं यावत्। | तत्पुरुषः २५<br>अन-रयः २५ |
| नपुंसकम् १७<br>तत्पुरुषः १९<br>अनञ्कर्मधारयः१९ | २०. संज्ञायां कन्थोशीनरेषु<br>संज्ञायां कन्थान्तस्तत्पुरुषोऽ नञ्कर्मधारयः नपुंसकं भवति, सा चेत् कन्था उशीनरेषु भवति।<br>सौशमिकन्थम्। आह्वरकन्थम्। | |
| नपुंसकम् १७<br>तत्पुरुषः १९<br>अनञ्कर्मधारयः१९ | २१. उपज्ञोपक्रमं तदाद्याचिख्यासायाम्<br>उपज्ञाशब्दान्तः, उपक्रमशब्दान्तश्च तत्पुरुषः अनञ्कर्मधारयः नपुंसकं भवति, तदाद्याचिख्यासायाम् = तयोरुपज्ञोपक्रमयोरादेराचिख्यासायां गम्यमानायम्।<br>उपज्ञायते = प्रथमं ज्ञायते इति उपज्ञा= प्रथमज्ञानविषयः इत्यर्थः।<br>उपक्रम्यते = आरम्यते इत्युपक्रमः, प्रथमारम्भविषय इत्यर्थः।<br>आख्यातुमिच्छा आचिख्यासा।<br>सूत्रे आदिशब्दो भावप्रधानः।<br>अतः उपज्ञेयस्य, उपक्रमस्य चार्थस्य यत्र आदित्वम् = प्राथम्यमाख्यातुमिच्छा वर्तते तत्र उपज्ञान्तः, उपक्रमान्तश्च तत्पुरुषो नपुंसकं भवतीति सूत्रस्य फलितार्थः।<br>पाणिनेरुपज्ञा इति पाणिन्युपज्ञम् अकालकं व्याकरणम्। पूर्वाणि व्याकरणानि कालपरिभाषायुक्तानि, पाणिनिना तु सर्वप्रथमं व्याकरणं प्रणीतं यत्र कालस्य परिभाषा नास्तीति तस्य प्राथम्यमाख्यातुमिच्छास्ति, अतः नपुंसकत्वम्।<br>नन्दस्य उपक्रमः इति नन्दोपक्रमं द्रोणः। नन्देन प्रथमत आरभ्यमाण इत्यर्थः।<br>उपज्ञोपक्रममिति किम्? वाल्मीकिश्लोकाः।<br>तदाद्याचिख्यासायामिति किम्? देवदत्तोपज्ञो रथः। यज्ञदत्तोपक्रमो रथः। | |
| नपुंसकम् १७<br>तत्पुरुषः १९<br>अनञ्कर्मधारयः१९ | २२. छाया बाहुल्ये<br>छायान्तस्तत्पुरुषः अनञ्कर्मधारयः नपुंसकं भवति, यस्य छाया तस्य बाहुल्ये सति।<br>शलभानां छाया शलभच्छायम्। इक्षूणां छाया इक्षुच्छायम्।<br>बाहुल्ये किम्? कुड्यस्य छाया कुड्यच्छाया। | |

| | | |
|---|---|---|
| नपुंसकम् १७<br>तत्पुरुषः १९<br>अनञ्कर्मधारयः१९ | २३. सभा राजाऽमनुष्यपूर्वा<br>राजाऽमनुष्यपूर्वा या सभा तदन्तस्तत्पुरुषः नपुंसकं भवति।<br>राजपूर्वा – इनसभम्। ईश्वरसभम्।<br><br>(वा०) पर्यायस्यैवेष्यते।<br>राज्ञः सभा राजसभा।<br>अमनुष्यपूर्वा – अमनुष्यशब्दो रूढ्या रक्षः पिशाचादिष्वेव वर्तते।<br>तेन – रक्षःसभम्। पिशाचसभम्। अत्र नपुंसकत्वं भवति, काष्ठसभा इत्यत्र च न भवति। | सभा २४ |
| नपुंसकम् १७<br>तत्पुरुषः १९<br>अनञ्कर्मधारयः१९<br>सभा२३ | २४. अशाला च<br>अशाला या सभा तदन्तस्तत्पुरुषो नपुंसकं भवति।<br>सभाशब्दः शालायां, संघाते चार्थे वर्तते। तत्र पूर्वसूत्रेण शालावाचिसभान्तस्य तत्पुरुषस्य नपुंसकत्वमुक्तम्। प्रकृतसूत्रेण संघातवाचिनसभान्तस्य तत्पुरुषस्य नपुंसकत्वमुच्यते।<br>स्त्रीणां सभा स्त्रीसभम्।<br>स्त्रीणां सङ्घात इत्यर्थः।<br>अशालेति किम्? अनाथानां सभा (शाला) इति अनाथसभा। | |
| नपुंसकम् १७<br>तत्पुरुषः १९<br>अनञ्कर्मधारयः१९ | २५. विभाषा सेना-सुराच्छाया-शाला-निशानाम्<br>सेनाद्यन्तानां तत्पुरुषाणाम् अनञ्कर्मधारयानां नपुंसकत्वं विभाषा भवति।<br>'तत्पुरुषः' इति प्रकृतं षष्ठीबहुवचनान्तं विपरिणम्यते, नपुंसकमिति भावप्रधानं सम्पद्यते; इति पदमञ्जरी।<br>ब्राह्मणसेनम्, ब्राह्मणसेना। यवसुरम्, यवसुरा।<br>कुड्यच्छायम्, कुड्यच्छाया। गोशालम्, गोशाला।<br>श्वनिशम्, श्वनिशा। | |

| | | |
|---|---|---|
| | **२६. परवल्लिङ्गं द्वन्द्व-तत्पुरुषयोः**<br>द्वन्द्वतत्पुरुषयोः परवल्लिङ्गं भवति।<br>द्वन्द्वे - कुक्कुटमयूर्यौ इमे। मयूरीकुक्कुटौ इमौ।<br>तत्पुरुषे - अर्द्धं पिप्पल्याः अर्द्धपिप्पली।<br><br>(वा०) द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः।<br>द्विगु- पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः।<br>प्राप्तपूर्व- प्राप्तजीविकः।<br>आपान्नपूर्व - आपन्नजीविकः<br>अलं पूर्व - अलं जीविकायै अलंजीविका। 'अत एव ज्ञापकात् समासः' इति कौमुदी।<br>गतिसमासे - निष्कौशाम्बिः। | लिङ्गम् २८ |
| लिङ्गम् २६ | **२७. पूर्ववदश्ववडवौ**<br>'अश्ववडवौ' इति द्वन्द्वे पूर्ववल्लिङ्गं भवति।<br>अश्वश्च वडवा चेति अश्ववडवौ। द्विवचनमतन्त्रमिति वचनान्तरेऽपि पूर्ववल्लिङ्गता भवति - अश्ववडवान्, अश्ववडवैः।<br>वडवाघटकटापो निवृत्तिस्तु 'विभाषा वृक्षमृग' इति सूत्रे 'अश्ववडवा' इति वक्तव्येऽपि टापमनुच्चार्य यो निर्देशः कृतः, तेन निपातनाद् बोध्या। स्पष्टं चैतत् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति सूत्रे कैयटग्रन्थे। | पूर्ववत् २८ |
| पूर्ववत् २७<br>लिङ्गम् २६ | **२८. हेमन्त-शिशिरावहोरात्रे च छन्दसि**<br>'हेमन्तशिशिरौ' इति द्वन्द्वे, 'अहोरात्रे' इति च द्वन्द्वे पूर्ववल्लिङ्गं भवति छन्दसि<br>हेमन्तशिशिरावृतूनां प्रीणामि।<br>अहोरात्रे इदं ब्रूमः।<br>लोके तु परवल्लिङ्गता - हेमन्तशिशिरे, अहोरात्र इति। | |
| | **२९. रात्राह्नाहाः पुंसि**<br>रात्राह्नाहाः इति कृतसमासान्ताः पुंसि भाष्यन्ते।<br>अहश्च रात्रिश्च अहोरात्रः।<br>'जातिरप्राणिनाम्' इत्येकवचनम्।<br>अह्नः पूर्वः पूर्वाह्णः।<br>द्वयोरह्नोः समाहारः द्व्यहः।<br>(लिङ्गानुशासनम्) संख्यापूर्वरात्रं क्लीबम्।<br>द्वयोः रात्र्योः समाहारो द्विरात्रम्।<br>तिसृणां रात्रीणां समाहारः त्रिरात्रम्। गणानां रात्रीणां समाहारः गणरात्रम्। गणशब्दो बहुपर्यायः, 'बहुगण' इति सूत्रेण संख्यात्वम्। | |

| | | |
|---|---|---|
| | ३०. अपथं नपुंसकम्<br>'अपथम्' इति शब्दस्वरूपं नपुंसकं भवति।<br>न पन्था इति अपथम्।<br>तत्पुरुष इत्येव। तेनान्यत्र अपथो देशः।<br>कृतसमासान्तनिर्देशान्नेह-न पन्था इति अपन्थाः।<br>'पथो विभाषा' इति सूत्रेण समासान्ते अच् प्रत्यये अपथम्, पक्षे समासान्ताभावे अपन्था इति रूपमिति भावः। | नपुंसकम् ३१ |
| नपुंसकम् ३० | ३१. अर्धर्चाः पुंसि च<br>अर्धर्चादयः पुंसि, चकारात् नपुंसके च भाष्यन्ते।<br>'अर्धर्चाः' इति बहुवचननिर्देशादाद्यर्थो लभ्यते।<br>अर्धर्चः, अर्धर्चम्। एवं तीर्थ-शरीर-मण्ड- पीयूष-देहाङ्कुश-कलशेत्यादि। | |
| | ३२. इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ<br>अन्वादेशे इदमोऽश् भवति स चानुदात्तस्तृतीयादौ (विभक्तौ)।<br>किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरविधानाय पुनरुपादानम् अन्वादेशः।<br>अश्वचनं साकच्कार्थम्।<br>इमकाभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्याम् अहरप्यधीतम्।<br>अत्र साकच्केदम्शब्दस्य अशादेशेन आभ्यामिति रूपम्।<br>अनन्वादेशे तु इमकाभ्यामिति। | अश् ३३<br>इदमोऽन्वादेशे ३४ |
| अश् ३२<br>इदमोऽन्वादेशे ३२ | ३३. एतदस्त्र-तसोस्त्रसौ चानुदात्तौ<br>अन्वादेशे एतदः अश् भवति त्र-तसोः, अत्र त्रतसौ चानुदात्तौ भवतः।<br>एतस्मिन् ग्रामे सुखं वसामः, अथो अत्र युक्ता अधीमहे।<br>एतस्माच्छात्राच्छन्दोऽधीष्वः; अथो अतो व्याकरणमप्यधीष्व। सर्वानुदात्तं पदं भवति। | एतदः ३४ |

| | | |
|---|---|---|
| इदमः ३२<br>एतदः३३<br>इदमोऽन्वादेशे ३२ | ३४. द्वितीया-टौस्स्वेनः<br>अन्वादेशे इदमः, एतदश्च एनः भवति, स चानुदात्तः, द्वितीयाटौस्सु।<br>'द्वितीयाटौस्सु' इति द्वितीया च टा च औस् चेति विग्रहे द्वन्द्वे कृते सप्तमीबहुवचने रूपम्।<br>इदमः एनादेशः - इमं छात्रं छन्दोऽध्यापय ; अथो एनं व्याकरणमप्यध्यापय।<br>अनेन छात्रेण रात्रिरधीता ;अथो एनेन अहरप्यधीतम्।<br>अनयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम्।<br>एतदः एनादेशः - एतं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमध्यापय इत्यादि।<br><br>(वा०) एनदिति नपुंसकैकवचने वक्तव्यम्।<br>कुण्डं प्रक्षालयैनत्। कुण्डं परिवर्तयैनत्। | |
| | ३५. आर्धधातुके<br>अधिकारोऽयम्, 'वा यौ' (२.४.५७) इत्यन्तं यावत्।<br>'अस्तेर्भूः' - भविता, भवितुम्, भवितव्यम्।<br>विषयसप्तमी चेयं न परसप्तमी।<br>तेनार्धधातुकविवक्षायामेवादेशेषु कृतेषु पश्चाद् यथायथं प्रत्यया भवन्ति - भव्यम्, प्रवेयम्, आख्येयम्। | आर्धधातुके ५७ |
| आर्धधातुके ३५ | ३६. अदो जग्धिर्ल्यप्ति किति<br>अदो जग्धिर्भवति ल्यपि, तकारादौ किति च।<br>'ल्यप्' इति लुप्तसप्तमीकं पदम्।<br>जग्धिरित्यत्रेकार उच्चारणार्थः।<br>ल्यपि - प्रजग्ध्य।<br>तकारादौ किति - जग्धः, जग्धवान्। | अदः ४० |
| अदः ३६<br>आर्धधातुके ३५ | ३७. लुङ्-सनोर्घस्लृ<br>लुङि, सनि च अदो घस्लृ इत्यादेशो भवति।<br>लृदित्करणम् 'पुषादिद्युताद्युलृदितः परस्मैपदेषु' इत्यङर्थम्।<br>लुङि - अघसत्, अघसताम्, अघसन्।<br>सनि - जिघत्सति, जिघत्सतः, जिघत्सन्ति।<br>(वा०) घस्लृभावेऽच्युपसंख्यानम्।<br>प्रात्तीति प्रघसः। पचाद्यच्। | घस्लृ ४० |
| अदः ३६<br>घस्लृ ३७<br>आर्धधातुके ३५ | ३८. घञपोश्च<br>घञपोश्च अदो 'घस्लृ' इत्यादेशो भवति।<br>घञि - प्रघासः।<br>अपि - प्रघसः। 'उपसर्गेऽदः' इत्यप्। | |

| | | |
|---|---|---|
| अदः ३६<br>घस्लृ ३७<br>आर्धधातुके ३५ | ३९. बहुलं छन्दसि<br>अदो 'घस्लृ' इत्यादेशो बहुलं भवति छन्दसि।<br>घस्तान्नूनम्। सग्धिश्च मे।<br>बहुलग्रहणात् 'घस्ताम्' इत्यत्र 'घसिभसोर्हलि च' इत्यनेन उपधालोपो न भवति। | |
| अदः ३६<br>घस्लृ ३७<br>आर्धधातुके ३५ | ४०. लिट्यन्तरस्याम्<br>लिट्यन्यतरस्याम् अदो 'घस्लृ' इत्यादेशो भवति।<br>जघास, जक्षतुः, जक्षुः।<br>पक्षे–आद, आदतुः, आदुः। | लिटि<br>अन्यतरस्याम् ४१ |
| लिटि ४०<br>अन्यतरस्याम् ४०<br>आर्धधातुके ३५ | ४१. वेञो वयिः<br>लिट्यन्यतरस्यां वेञो वञिर्भवति।<br>इकार उच्चारणार्थः।<br>वेञ् तन्तुसन्ताने – उवाय, ऊयतुः, ऊयुः। 'लिटि वयो यः' इति यकारस्य सम्प्रसारणं प्रतिषिद्धम्।<br>वयादेशे एव 'वश्चास्यान्यतरस्याम्' इति सूत्रेण यकारस्य विकल्पेन वकारे कृते ऊवतुः, ऊवुः इत्यपि।<br>वयादेशाभावपक्षे तु ववौ, ववतुः, ववुः। अत्र 'वेञः' इति सूत्रेण सम्प्रसारणं निषिद्धम्। | |
| | ४२. हनो वध लिङि<br>आर्धधातुके लिङि हनो वध इत्यादेशो भवति।<br>वध्यात्, वध्यास्ताम्, वध्यासुः। अकारान्तश्चायमादेशः, तत्राकारस्य लोपो भवति। तस्य स्थानिवद्भावाद् 'अवधीत्' इत्यत्र हलन्तलक्षणा वृद्धिर्न भवति। | हनः४४ वध ४४ |
| हनो ४२ वध ४२<br>आर्धधातुके ३५ | ४३. लुङि च<br>लुङि च परे हनो वध इत्यादेशो भवति। अवधीत्, अवधिष्टाम्, अवधिषुः।<br>योगविभाग उत्तरार्थः – आत्मनेपदेषु लुङि विकल्पो यथा स्याल्लिङि मा भूत्। | लुङि ४४ |
| हनः ४२ वध ४२<br>लुङि ४३ | ४४. आत्मनेपदेष्वन्यतरस्याम्<br>आत्मनेपदेषु लुङि हनो वध इत्यादेशः अन्यतरस्यां भवति।<br>अवधिष्ट, आवधिषाताम्, आवधिषुः।<br>पक्षे आहत, आहसाताम्, आहसत। 'हनःसिच्' इति कित्त्वम्, 'अनुदात्तोपदेश वनति०' इत्यनुनासिकलोपः, 'ह्रस्वादङ्गात्' इति सिज्लोपः। | |

| | | |
|---|---|---|
| आर्धधातुके ३५ | ४५. इणो गा लुङि<br>लुङि इणो गा इत्यादेशो भवति।<br>अगात्, अगाताम्, अगुः। 'गातिस्था' इति सिज्लुक्।<br>'लुङि' इति वर्तमाने पुनर्लुङ्ग्रहणं 'आत्मनेपदेष्वन्यतरस्याम्' इत्येतन्मा भूत्। तेनानेन अविशेषेण नित्यं च भवति गादेशः। अगात्। अगायि भवता।<br>(वा०) इण्वदिक इति वक्तव्यम्।<br>अध्यगात्, अध्यगाताम्, अध्यगुः। | इणः ४७ |
| इणः ४५<br>आर्धधातुके ३५ | ४६. णौ गमिरबोधने<br>अबोधनेऽर्थे वर्तमानाद् इणो गमिर्भवति णौ।<br>इकार उच्चारणार्थः।<br>गमयति, गमयतः, गमयन्ति।<br>अबोधने इति किम्? प्रत्याययति।<br>इण्वदिक इत्येव - अधिगमयति। | गमिः ४८<br>बोधने ४७ |
| इणः ४५<br>अबोधने ४६<br>गमिः ४६<br>आर्धधातुके ३५ | ४७. सनि च<br>सनि च अबोधनेऽर्थे वर्तमानाद् इणो गमिर्भवति।<br>जिगमिषति, जिगमिषतः, जिगमिषन्ति।<br>अबोधन इत्येव - अर्थान् प्रतीषिषति।<br>इण्वदिक इत्येव - अधिजिगमिषति।<br>योगविभाग उत्तरार्थः 'इङश्च' इति सन्येव यथा स्यात्। | सनि ४८ |
| सनि ४७<br>गमिः ४६<br>आर्धधातुके ३५ | ४८. इङश्च<br>इङश्च गमिर्भवति सनि।<br>अधिजिगांसते, अधिजिगांसेते, अधिजिगांसन्ते।<br>'अज्झनगमां सनि' इति दीर्घः। | इङः ५१ |
| इङः ४८<br>आर्धधातुके ३५ | ४९. गाङ् लिटि<br>इङो गाङ् भवति लिटि।<br>अधिजगे, अधिजगाते, अधिजगिरे। 'आतो लोप इटि च' इत्याकारस्य लोपः।<br>गाङोऽनुबन्धकरणं विशेषणार्थम्, 'गाङ्कुटादिभ्यः' इत्यत्रास्य ग्रहणं यथा स्यात् अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। | गाङ् ५१ |
| इङः ४८ गाङ् ४९<br>आर्धधातुके ३५ | ५०. विभाषा लुङ्लृङोः<br>लुङ्लृङोः इङो गाङ् विभाषा भवति।<br>लुङि - अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत।<br>पक्षे - अध्यैष्ट, अध्यैषाताम्, अध्यैषत।<br>लृङि - अध्यगीष्यत, अध्यगीष्येताम्, अध्यगीष्यन्त। पक्षे - अध्यैष्यत, अध्यैष्येताम्, अध्यैष्यन्त। | विभाषा ५१ |

| | | |
|---|---|---|
| इङः ४८ गाङ् ४६<br>विभाषा ५१<br>आर्धधातुके ३५ | **५१. णौ च संश्चङोः**<br>संश्चङोः परयोः यो णिः तस्मिन् परेऽपि इङो गाङ् विभाषा भवति।<br>सन्परे णौ - अधिजिगापयिषति।<br>पक्षे - अध्यापिपयिषति।<br>चङ्परे णौ - अध्यजीगपत्।<br>पक्षे - अध्यापिपत्। | |
| आर्धधातुके ३५ | **५२. अस्तेर्भूः**<br>आर्धधातुके अस्तेर्भूः भवति।<br>भविता। भवितुम्। भवितव्यम्। | |
| आर्धधातुके ३५ | **५३. ब्रुवो वचिः**<br>आर्धधातुके ब्रुवो वचिर्भवति।<br>इकार उच्चारणार्थः।<br>वक्ता। वक्तुम्। वक्तव्यम्। | |
| आर्धधातुके ३५ | **५४. चक्षिङः ख्याञ्**<br>आर्धधातुके चक्षिङः ख्याञ् इत्यादेशो भवति।<br>आख्याता। आख्यातुम्। आख्यातव्यम्।<br>ञित्करणसामर्थ्यात् स्थानिवद्भावेन नित्यमात्मनेपदं न भवति। आख्यास्यति, आख्यास्यते।<br>(वा०) असनयोश्च प्रतिषेधो वक्तव्यः।<br>नृचक्षा राक्षसः। विचक्षणः पण्डितः। नृचक्षाः इत्यत्र 'नृ' इत्युपपदात् चक्ष् धातोः 'सर्वधातुभ्योऽसुन्' इत्यसुन् 'अत्वसन्तस्य चाऽधातोः' इति सूत्रेण दीर्घः।<br>(वा०) बहुलं संज्ञाछन्दसोरिति वक्तव्यम्।<br>अन्न-वधक-गात्र-विचक्षणाजिराद्यर्थम्। | चक्षिङःख्याञ् ५५ |
| चक्षिङः ५४<br>ख्याञ् ५४<br>आर्धधातुके ३५ | **५५. वा लिटि**<br>चाक्षिङः ख्याञ् इत्यादेशो वा भवति लिटि आर्धधातुके।<br>आचख्यौ, आचख्यतुः, आचख्युः।<br>पक्षे - आचचक्षे, आचचक्षाते, आचचक्षिरे। | |
| आर्धधातुके ३५ | **५६. अजेर्व्यघञपोः**<br>आर्धधातुके अजेर्वी इत्यादेशो भवति न तु घञपोः।<br>प्रवयणीयः। प्रवायकः।<br>अघञपोरिति किम्? घञि- समाजः, उदाजः।<br>अपि-समजः, उदजः।<br>'समुदोरजः पशुषु' इत्यप्।<br>दीर्घोच्चारणं किम्? प्रवीताः इत्यत्र दीर्घेकारश्रवणार्थम्।<br>(वा०) घञपोः प्रतिषेधे क्यप उपसंख्यानं कर्त्तव्यम्।<br>समज्या। 'संज्ञायां समज' इत्यादिना क्यप्।<br>(वा०) वलादावर्धधातुके विकल्प इष्यते।<br>प्रवेता, प्राजिता। प्रवेतुम्, प्राजितुम्। | अजेर्वी ५७ |

| | | |
|---|---|---|
| अजेर्वी ५६<br>आर्धधातुके ३५ | ५७. वा यौ<br>यौ परतः अजेर्वी वा भवति।<br>'यु' इति ल्युटो ग्रहणम्।<br>प्रवयणो दण्डः, प्राजनो दण्डः।<br>प्रवयणमानय, प्राजनमानय। | |
| | ५८. ण्य-क्षत्रियाऽऽर्ष-ञितो यूनि लुगणिञोः<br>ण्यादयो गोत्रप्रत्ययाः।<br>ण्यन्तात्, क्षत्रियगोत्राद्, आर्षाद्, ञितश्च परयोः युवार्थे विहितयोः अण्, इञ् इति प्रत्यययोर्लुग् भवति।<br>ण्यन्तात् - कौरव्यः पिता। कौरव्यः पुत्रः। 'कुर्वादिभ्यो ण्यः' तस्माद्यूनि इञ्, तस्यानेन लुक्।<br>क्षत्रिय - श्वफल्कस्य गोत्रापत्यं पुमान् श्वाफल्कः पिता। तस्य पुत्रोऽपि श्वाफल्कः।<br>आर्ष - वसिष्ठस्य गोत्रापत्यं पिता। तस्य पुत्रोऽपि वासिष्ठः। 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इति सूत्रेण गोत्रापत्येऽण्। तस्माद्यूनि इञ्, तस्यानेन लुक्।<br>ञित् - विदस्य गोत्रापत्यं वैदः पिता। तस्य पुत्रोऽपि वैदः। 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' इति अञ्। तस्माद्यूनि इञ्, तस्यानेन लुक्।<br>अणो लुक उदाहरणम् - तैकायनिः पिता, तस्य पुत्रोऽपि तैकायनिः। तिकस्य गोत्रापत्यमित्यर्थे 'तिकादिभ्यः फिञ्' इति फिञ्। तस्माद्यूनि 'प्राग्दीव्यतोऽण्' इत्यण्, तस्यानेन लुक्। | यूनि ६१<br>लुक् ८३ |
| यूनि ५८ लुक् ५८ | ५९. पैलादिभ्यश्च<br>पैलादिभ्यश्च यूनि विहितस्य प्रत्ययस्य लुग्भवति।<br>पैलः पिता। तस्य पुत्रोऽपि पैलः। पीलाया गोत्रापत्यमित्यर्थे 'पीलाया वा' इत्यण्, तस्माद्यूनि 'अणो द्व्यचः' इति फिञ्, तस्यानेन लुक्। | |
| यूनि ५८ लुक् ५८ | ६०. इञः प्राचाम्<br>प्राग्देशीये गोत्रे य इञ् तदन्ताद् यूनि विहितस्य प्रत्ययस्य लुग्भवति।<br>पान्नागारिः पिता। तस्य पुत्रोऽपि पान्नागारिः । प्राग्देशे पन्नगारो नाम कश्चित्, तस्य गोत्रापत्यमित्यर्थे 'अत इञ्' इति इञ्, तस्माद्यूनि 'यञिञोश्च' इति फक् तस्यानेन लुक्। | |
| यूनि ५८ लुक् ५८ | ६१. न तौल्वलिभ्यः<br>तौल्वल्यादिभ्यः यूनि विहितस्य प्रत्ययस्य लुग्न भवति।<br>तौल्वलिः पिता, तस्य पुत्रश्च तौल्वलायनः। प्राग्देशे तुल्वलः नाम कश्चित् तस्मात् तस्य गोत्रापत्यमित्यर्थे 'अत इञ्' इति इञ्। तस्माद्यूनि 'यञिञोश्च' इति फक्। पूर्वसूत्रेण प्राप्तो लुगनेन निषिध्यते। | |

| | | |
|---|---|---|
| लुक् ५८ | ६२. तद्राजस्य बहुषु तेनैवास्त्रियाम्<br>बहुषु = बह्वर्थेषु वर्तमानस्य तद्राजस्य = तद्राजसंज्ञकप्रत्ययस्य लुग्भवति, तेनैव = तद्राजसंज्ञकप्रत्ययेनैव चेद् बहुत्वं तत्र भवेत्, स्त्रियामेतत्तु न प्रवर्तते।<br>पञ्चालानामपत्यानि बहूनि इति पञ्चालाः।<br>पञ्चालशब्दात् 'जनपदशब्दात् क्षत्रियादञ्' इति सूत्रेण अपत्यार्थे अञ्, तस्य 'ते तद्राजाः'(४.१.१७२) इति सूत्रेण तद्राजसंज्ञा, तस्य पुनरनेन लुक्।<br>एवमेव बङ्गा, इक्ष्वाकवः, मगधाः इत्यादि।<br>तद्राजस्येति किम्? औपगवाः।<br>बहुष्विति किम्? आङ्गः।<br>'तेनैव' ग्रहणं किम्? प्रियो बाङ्गो येषां ते प्रियबाङ्गाः।<br>अस्त्रियामिति किम्? पाञ्चाल्यः स्त्रियः। | बहु-मू ७० |
| बहु-मू ६२<br>लुक् ५८ | ६३. यास्कादिभ्यो गोत्रे<br>बह्वर्थेषु वर्तमानस्य शब्दस्य गोत्रे यः प्रत्ययस्तस्य लुग्भवति, स प्रत्ययश्चेद् यस्कादिभ्यो विहितो भवति, तत्र बहुत्वं चेत् तेन प्रत्ययेनैव भवति, एतदपि स्त्रियां न प्रवर्तते।<br>यस्कस्यापत्यानि बहूनि इति यस्काः। 'शिवादिभ्योऽण्' इति सूत्रेण अण्, तस्य चानेन लुक्।<br>अस्त्रियामित्येव - यास्क्यः स्त्रियः।<br>तेनैव इत्येव - प्रिययास्का विप्राः।<br>बहुष्वित्येव - यास्कः।<br>गोत्रे इति किम्? यास्काश्छात्राः। 'तस्येदम्' इत्यण्। | गोत्रे ७० |
| बहु-मू ६२<br>लुक् ५८ गोत्रे ६३ | ६४. यञञोश्च<br>बह्वर्थेषु वर्तमानस्य शब्दस्य गोत्रे यौ यञञौ प्रत्ययौ, तयोश्चापि लुग्भवति तत्र बहुत्वं चेत्तेन प्रत्ययेनैव भवति, एतदपि स्त्रियां न प्रवर्तते।<br>यञ् - गर्गस्यापत्यानि बहूनि गर्गाः। 'गर्गादिभ्यो यञ्' इति सूत्रेण विहितस्य यञ्प्रत्ययस्य अनेन लुक्।<br>अञ् - बिदा, उर्वाः। 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' इति अञ्, तस्यानेन लुक्।<br>बहुष्वित्येव - गार्ग्यः, वैदः।<br>तेनैवेत्येव - प्रियगार्ग्याः, प्रियवैदाः।<br>अस्त्रियामित्येव - गार्ग्यः स्त्रियः। बैद्यः स्त्रियः।<br>गोत्र इत्येव - द्वीपे जाताः द्वैप्याः। औत्साश्छात्राः। | |

| | | |
|---|---|---|
| बहु-म् ६२<br>लुक् ५८ गोत्रे ६३ | ६५. अत्रि-भृगु-कुत्स-वसिष्ठ-<br>गोतमाङ्गिरोभ्यश्च<br>बह्वर्थेषु वर्तमानानां शब्दानां गोत्रे यः प्रत्ययः तस्य लुग्भवति, स प्रत्ययश्चेत् अत्र्यादिभ्यो विहितो भवति, तेन प्रत्ययेनैव चेद् बहुत्वं भवति, न तु स्त्रियाम्।<br>अत्रेरपत्यानि अत्रयः। 'इतश्चानिञः' इति ढक्, तस्यानेन लुक्<br>भृगोरपत्यानि भृगवः, कुत्सस्यापत्यानि कुत्साः, वसिष्ठस्यापत्यानि वसिष्ठाः, गोतमस्यापत्यानि गोतमाः, अङ्गिरसः अपत्यानि अङ्गिरसः। 'ऋष्यन्धक' इत्यण्, तस्यानेन लुक्।<br>बहुष्वित्येव-आत्रेयः, भार्गवः।<br>तेनैवेत्येव - प्रियात्रेयाः, प्रियभार्गवाः।<br>अस्त्रियामित्येव - आत्रेय्यः स्त्रियः। | |
| बहु-म् ६२<br>लुक् ५८ गोत्रे ६३ | ६६. बह्वचः इञः प्रच्यभरतेषु<br>बह्वर्थेषु वर्तमानानां शब्दानां प्राच्यगोत्रे, भरतगोत्रे च बह्वचः विहितो यः इञ् प्रत्ययस्तस्य लुग्भवति, बहुत्वं चेत्तेन प्रत्ययेनैव भवति, न तु स्त्रियाम्।<br>प्राच्यगोत्रे - पन्नागारस्यापत्यानि पन्नागाराः। 'अत इञ्' इति इञ्, तस्यानेन लुक्।<br>भरतगोत्रे - युधिष्ठिराः। कुर्वादिण्यापवादो बाह्वादिलक्षण इञ्, तस्यानेन लुक्।<br>बह्वच इति किम्? वैकयः। पौष्पयः। | |
| बहु-म् ६२<br>लुक् ५८ गोत्रे ६३ | ६७. न गोपवनादिभ्यः<br>गोपवनादिभ्यः परस्य गोत्रप्रत्ययस्य लुग्न भवति।<br>विदाद्यन्तर्गणोऽयम्। ततोऽञो गोत्रप्रत्ययस्य 'यञञोश्च' इति लुक् प्राप्तः प्रतिषिध्यते।<br>गौपवनाः। शैग्रवाः; शिग्रुशब्दाद् अञ् प्रत्ययः, 'ओर्गुणः' इति गुणः। | |
| बहु-म् ६२<br>लुक् ५८ गोत्रे ६३ | ६८. तिक-कितवादिभ्यो द्वन्द्वे<br>द्वन्द्वे समासे तिकादिभ्यः, कितवादिभ्यश्च गोत्रप्रत्ययस्य लुग्भवति, बहुषु।<br>तैकायनयश्च कैतवायनयश्च तिककितवाः। तिकादिभ्यः फिञ्, तस्य लुक्।<br>वाङ्खरयश्च भाण्डीरथयश्च वङ्खरभण्डीरथाः। 'अत इञ्' तस्य लुक्। | |

| | | |
|---|---|---|
| बहु-म् ६२<br>लुक् ५८ गोत्रे ६३ | **६९. उपकादिभ्योऽन्यतरस्यामद्वन्द्वे**<br>'उपक' इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य लुग्भवति, बहुषु, अन्यतरस्यां द्वन्द्वे चाद्वन्द्वे च।<br>अद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम्।<br>द्वन्द्वे - औपकायनाश्च लामकायनाश्च इति विग्रहे द्वन्द्वे कृते उपकलमकाः। 'नडादिभ्यः फक्' इति विहितस्य फको लुक्।<br>पक्षे - औपकायनलामकायनाः।<br>अद्वन्द्वेऽपि लुक् - उपकाः, औपकायनाः। लमकाः, लामकायनाः। | |
| बहु-म् ६२<br>लुक् ५८ गोत्रे ६३ | **७०. आगस्त्य-कौण्डिन्ययोरगस्ति-कुण्डिनच्**<br>आगस्त्य - कौणिन्ययोर्गोत्रप्रत्यययोः अणो, यञश्च बहुषु लुग्भवति, परिशिष्टस्य प्रकृतिभागस्य यथासंख्यम् अगस्ति, कुण्डिनच्- इत्येतावादेशौ भवतः।<br>अगस्तयः। कुण्डिनाः।<br>अगस्तय इति - अगस्त्यस्यापत्यानि इत्यर्थे अगस्त्यशब्दाद् ऋष्यणु, तस्य लुक्, प्रकृतेः अगस्त्यशब्दस्य अगस्ति इत्यादेशे कृते जसि अगस्तय इति रूपम्।<br>कुण्डिनाः इति - कुण्डिनः, कुण्डिन्या वा अपत्यानि इत्यर्थे गर्गादित्वाद्यञ्, तस्य लुक्, प्रकृतेः कुण्डिन् शब्दस्य, कुण्डिनीशब्दस्य वा कुण्डिनच् इत्यादेशे कृते जसि कुण्डिनाः इति रूपम्। कुण्डिनच् इत्यादेशे चकारः स्वरार्थः। | |
| लुक् ५८ | **७१. सुपो धातुप्रातिपदिकयोः**<br>धातुप्रातिपदिकयोरवयवस्य सुपो लुग्भवति।<br>धातोस्तावत् - पुत्रीयति। घटीयति।<br>अत्र 'सनाद्यन्ता धातवः' इति सूत्रेण धातुसंज्ञा।<br>प्रातिपदिकस्य तावत् - कष्टश्रितः। राजपुरुषः।<br>अत्र समासत्वात् प्रातिपदिकसंज्ञा।<br>धातुप्रातिपदिकयोरिति किम्? वृक्षः, प्लक्षः। | |
| लुक् ५८ | **७२. अदिप्रभृतिभ्यः शपः**<br>अदिप्रभृतिभ्यः शपो लुग्भवति।<br>अत्ति। हन्ति। द्वेष्टि। | शपः ७६ |
| लुक् ५८ शपो ७२ | **७३. बहुलं छन्दसि**<br>छन्दसि बहुलं शपो लुग्भवति।<br>बहुलग्रहणाद् अदिप्रभृतिभ्योऽपि शपो लुग्नापि भवति - वृत्तं हनति।<br>अन्येभ्योऽनुक्तोऽपि लुग्भवति - त्राध्वं नो देवाः। | बहुलं ७४ |

| | | |
|---|---|---|
| लुक् ५८<br>बहुलं ७३ | ७४. यङोऽचि च<br>यङो लुग्भवति अजादौ प्रत्यये परे बहुलम्।<br>लोलुवः। पोपुवः।<br>बहुलानुवृत्तेः अज्भिन्नेऽपि प्रत्यये क्वचिल्लुग्भवति - शाकुनिको लालपीति। दुन्दुभिर्वावदीति। | |
| शपः ७२ | ७५. जुहोत्यादिभ्यः श्लुः<br>जुहोत्यादिभ्यः शपः श्लुर्भवति।<br>लुकि प्रकृते श्लुविधानं द्विर्वचनार्थम्।<br>जुहोति। बिभर्ति। नेनेक्ति; 'निजां त्रयाणां गुणः' इत्यभ्यासस्येकारस्य गुणः। | श्लुः ७६ |
| शपः ७२ श्लुः ७५ | ७६. बहुलं छन्दसि<br>छन्दसि विषये शपः बहुलं श्लुर्भवति।<br>बहुलग्रहणाद् यत्रोक्तं तत्र न भवति, अन्यत्रापि भवति।<br>जुहोत्यादिभ्यस्तावन्न भवति - दाति प्रियाणि। धाति देवम्।<br>अन्येभ्यश्च भवति - पूर्णां विवष्टि। जनिमा विवक्ति। | |
| लुक् ५८ | ७७. गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु<br>गाति, स्था, घु, पा, भू- इत्येतेभ्यः सिचो लुग्भवति परस्मैपदेषु।<br>अगात्। अस्थात्। घु-अदात्, अधात्। अपात्। अभूत्।<br>(वा०) गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्।<br>गायतेः, पातेश्च न भवति - आगासीद् नटः। अपासीद् नृपः।<br>परस्मैपदेषु इति किम्? अगासातां ग्रामौ देवदत्तेन। कर्मण्यात्मनेपदम्, आताम्। | सिचः ७९<br>परस्मैपदेषु ७८ |
| लुक् ५८ सिचः७७<br>परस्मैपदेषु ७७ | ७८. विभाषा घ्रा-धेट्-शाच्छासः<br>घ्रा, धेट्, शा, सा - इत्येतेभ्यः परस्य सिचो विभाषा लुग्भवति परस्मैपदेषु ।<br>अघ्रात्; अघ्रासीत्। अधात्; अधासीत्। अशात्; अशासीत्। अच्छात्; अच्छासीत्। असात्; असासीत्।<br>परस्मैपदेष्वित्येव - अघ्रासातां सुमनसौ देवदत्तेन। | विभाषा ७९ |
| सिचः ७७<br>विभाषा ७८<br>लुक् ५८ | ७९. तनादिभ्यस्त-थासोः<br>तनादिभ्यः सिचो विभाषा लुग्भवति त-थासोः।<br>अतत; अतनिष्ट। अतथाः, अतनिष्ठाः।<br>थासा साहचर्यादात्मनेपदस्य तशब्दस्य ग्रहणम्। तेन परस्मैपदे न भवति - अतनिष्ट यूयम्। 'तनु विस्तारे' इत्युभयपदी धातुः। | |

| | | |
|---|---|---|
| लुक् ५८ | ८०. मन्त्रे घस-ह्वर-णश-वृह-दहाद्-वृच्-कृ-गमि-जनिभ्यो लेः<br>मन्त्रे घसादिभ्यो लेर्लुग्भवति। मन्त्रग्रहणं छन्दस उपलक्षणार्थम्। तेन ब्राह्मणप्रयोगेऽप्यस्य सूत्रस्य प्रवृत्तिर्भवति। बाहुल्येन तु मन्त्रे दर्शनात् सूत्रे मन्त्रग्रहणं कृतम् इति हरदत्तः।।<br>घस - अक्षन् पितरोऽमीमदन्त पितरः।<br>ह्वरेति 'ह्वृकौटिल्ये' - मा ह्वर्मित्रस्य त्वा।<br>नश - प्रणङ्मर्त्यस्य।<br>वृ इति वृङ्वृञोः सामान्येन ग्रहणम् - सुरुचो वेन आवः।<br>दह - मा न आ धक्।<br>आदिति आकारान्तग्रहणम् - प्रा पूरणे आप्रा द्यावापृथिवी अन्तरिक्षम्।<br>वृज् - मा नो अस्मिन् महाधने परा वर्क्।<br>कृ - अक्रन् कर्म कर्मकृतः।<br>गमि - अग्मन्।<br>जनि - अज्ञत वा अस्य दन्ताः। | लेः ८१ |
| लुक् ५८ लेः ८० | ८१. आमः<br>आमः परस्य लेर्लुग्भवति।<br>ईहाञ्चक्रे। ऊहाञ्चक्रे। ईक्षाञ्चक्रे। | |
| लुक् ५८ | ८२. अव्ययादाप्सुपः<br>अव्ययाद् (विहितस्य) आप्सुपो लुग्भवति।<br>आप् च सुप् चेति विग्रहे समाहारद्वन्द्वः, तस्य इति आप्सुपः।<br>आपः - तत्र शालायाम्। यत्र शालायाम्।<br>सुपः - कृत्वा। हृत्वा। | सुपः ८३ |
| लुक् ५८ सुपः ८२ | ८३. नाव्ययीभावादतोऽम्त्वपञ्चम्याः<br>अदन्तादव्ययीभावात्परस्य सुपो लुग्न भवति, अमादेशस्तु तस्य सुपो भवति न तु पञ्चम्याः।<br>एतस्मिन् प्रतिषिद्धे पञ्चम्याः श्रवणमेव भवति, अन्यासां तु अमादेश इति भावः।<br>उपकुम्भं तिष्ठति।<br>अत इति किम्? अधिस्त्रि।<br>अपञ्चम्या इति किम्? उपकुम्भादानय। | अव्यय-दतो ८४ |

| | | |
|---|---|---|
| लुक् ५८ न ८३<br>अव्ययी-दतो ८३ | ८४. तृतीयासप्तम्योर्बहुलम्<br>अदन्ताद् अव्ययीभावात् तृतीयासप्तम्योर्बहुलम् अम् भवति।<br>उपकुम्भेन, उपकुम्भं वा कृतम्।<br>उपकुम्भे, उपकुम्भं वा निधेहि।<br>(वा०) सप्तम्या ऋद्धि-नदीसमास-संख्यावयवेभ्यो नित्यमिति वक्तव्यम्।<br>ऋद्धि- सुमद्रम्, सुमगधम्।<br>नदीसमास - उन्मत्तगङ्गम्, लोहितगङ्गम्।<br>संख्यावयव - एकविंशतिभारद्वाजम्।<br>बहुलवचनात् सिद्धमिदं वचनम्। | |
| | ८५. लुटः प्रथमस्य डा-रौ-रसः<br>लुटः प्रथमस्य यथासंख्यं डा, रौ ,रस्- इत्येते आदेशाः भवन्ति।<br>भविता, भवितारौ, भवितारः।<br>अध्येता, अध्येतारौ, अध्येतारः।<br>प्रथमस्येति किम्? श्वः भवितासि; श्वः अध्येतासे। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां द्वितीयाध्यायस्य चतुर्थः पादः।।

।। समाप्तश्चायं द्वितीयाध्यायः।।

।। श्रीः ।।

# ।। अथ तृतीयाध्यायस्य प्रथमः पादः ।।

| | | |
|---|---|---|
| | १. प्रत्ययः<br>अधिकारोऽयम्,आपञ्चमाध्यायपरिसमाप्तेः। | प्रत्ययः५.४.<br>१६० |
| प्रत्ययः १ | २. परश्च<br>अयमप्यधिकारः, आपञ्चमाध्यायपरिसमाप्तेः।<br>परिभाषा वा, शब्दे प्रत्ययः परो भवत्येवेति<br>नियमार्थमेवेत्याशयः।<br>कर्त्तव्यम्। तैत्तिरीयम्। | प्रत्ययः५.४.<br>१६० |
| प्रत्ययः १ | ३. आद्युदात्तश्च<br>प्रत्यय आद्युदात्तश्च भवति।<br>कर्त्तव्यम्। तैत्तिरीयम्। | |
| प्रत्ययः १ | ४. अनुदात्तौ सुप्पितौ<br>सुप्पितौ प्रत्ययौ अनुदात्तौ भवतः।<br>दृषदौ; दृषदः।<br>पचति, पठति।<br>शबत्रोदाहरणम्, न तिप्, तस्य 'तास्यनुदात्तेन्ङिदुपदेशाल्ल-<br>सार्वधातुमनुदात्तमह्निवङोः'(६.१.१८३) इति सूत्रेणैव<br>सिद्धत्वात्। | |
| प्रत्ययः १ | ५. गुप्तिज्किद्भ्यः सन्<br>गुप्तिज्किद्भ्यः सन्प्रत्ययो भवति।<br>गुप गोपने - जुगुप्सते।<br>तिज निशाने - तितिक्षते।<br>कित निवासे - चिकित्सति।<br>'धातोः' इत्यनुच्चार्य सन्प्रत्ययो विहितोऽत्र। तेन<br>'आर्धधातुकं शेषः' इत्यनेन नार्धधातुकत्वमिति जुगुप्सते<br>इत्यादौ इड् न भवति। अत्र 'गुप व्याकुलत्वे'(दिवादिः),<br>'गुपू रक्षणे'(भ्वादिः) इत्येतयोस्तु ग्रहणं न भवति,<br>भ्वादिगणे तिजिना सह पठितस्यानुदात्तेत एव गुपेरिह<br>ग्रहणात्।<br>(इष्टिः) निन्दा-क्षमा-व्याधि प्रतीकारेषु सन्निष्यते, अन्यत्र<br>यथाप्राप्तं प्रत्यया भवन्ति।<br>गोपयति। तेजयति। संकेतयति। हेतुमण्णिच्। | सन् ७ |

| | | |
|---|---|---|
| सन् ५ प्रत्ययः १ | ६. मान्बध-दान्शान्भ्यो दीर्घश्चाभ्यासस्य<br>मान्, बध, दान्, शान्-इत्येतेभ्यः सन् प्रत्ययो भवति, अभ्यासस्य दीर्घश्च।<br>मान पूजायाम् - मीमांसते शास्त्रम्।<br>बध बन्धने - बीभत्सते गजम्।<br>दान अवखण्डने - दीदांसते शत्रून्।<br>शान अवतेजने - शीशांसते शस्त्रम्।<br>(इष्टिः) अत्रापि सन्नर्थविशेष इष्यते।<br>मानेर्जिज्ञासायाम्, बधेश्चित्तविकारे, दानेरार्जवे, शानेर्निशाने; निशानं तीक्ष्णीकरणम्। | |
| सन् ५ | ७. धातोः कर्मणः समानकर्तृकादिच्छायां वा<br>समानकर्तृकात् कर्मणो धातोः सन्प्रत्ययो वा भवति, इच्छायाम्।<br>पठितुमिच्छति पिपठिषति।<br>कर्तुमिच्छति चिकीर्षति।<br>वाग्रहणात्पक्षे वाक्यमपि।<br>कर्मण इति किम्? करणान्मा भूत्-गमनेनेच्छति।<br>समानकर्तृकादिति किम्? देवदत्तस्य भोजनमिच्छति यज्ञदत्तः।<br>इच्छायां किम्? कर्तुं जानाति।<br>(वा०) आशङ्कायामुपसंख्यानम्।<br>आशङ्के पतिष्यति नदीकूलम् इति पिपतिषति नदीकूलम्।<br>श्वा मुमूर्षति।<br>(वा०) इच्छासन्नतात्प्रतिषेधो वक्तव्यः।<br>चिकीर्षितुमिच्छति। | वा २२<br>कर्मणः १०<br>इच्छायाम् ६ |
| कर्मणः ७<br>इच्छायाम् ७<br>वा ७ | ८. सुपः आत्मनः क्यच्<br>कर्मणः सुपः क्यच् प्रत्ययो वा भवति, इच्छायाम्, तच्चेत्कर्म आत्मनो भवति।<br>आत्मनः पुत्रमिच्छति पुत्रीयति।<br>सुब्ग्रहणं किम्? वाक्यान्मा भूत्-महान्तं पुत्रमिच्छति।<br>आत्मन इति किम्? राज्ञः पुत्रमिच्छति।<br>ककारः 'न क्ये' इति सामान्यग्रहणार्थः। | सुपः ११<br>आत्मनः ६<br>क्यच् १० |
| सुपः ८<br>आत्मनः ८<br>कर्मणः ७<br>इच्छायाम् ७<br>वा ७ | ९. काम्यच्च<br>कर्मणः सुपः काम्यच् प्रत्ययोऽपि वा भवति इच्छायाम्, तच्चेत्कर्म आत्मनो भवति।।<br>ककारस्येत्संज्ञा प्रयोजनाभावान्न भवति।<br>आत्मनः पुत्रमिच्छति पुत्रकाम्यति। वस्त्रकाम्यति।<br>योगविभाग उत्तरत्र क्यचोऽनुवृत्त्यर्थः। | |

Comment: 3.1.10
Comment: 3.1.9

| | | | |
|---|---|---|---|
| कर्मणः ७<br>सुपः ८ वा ७<br>क्यच् ८ | १०. उपमानादाचारे<br>उपमानात् सुपः कर्मणः सुपः आचारेऽर्थे क्यच्प्रत्ययो वा भवति।<br>पुत्रमिवाचरति पुत्रीयति छात्रम्।<br>प्रावारीयति कम्बलम्।<br>(वा०) अधिकरणाच्चेति वक्तव्यम्<br>प्रासादीयति कुड्ये।<br>पर्यङ्कीयति मञ्चके। | उपमानादाचारे ११ | Comment: 3.1.11 |
| उपमानात्१०<br>सुपः८<br>आचारे १०<br>वा ७ | ११. कर्तुः क्यङ् सलोपश्च<br>उपमानात् सुपः कर्तुः सुपः आचारेऽर्थे क्यङ् वा भवति, सलोपश्च वा।<br>अन्वाचयशिष्टः सलोपः, तदभावेऽपि क्यङ् भवत्येव।<br>श्येन इवाचरति श्येनायते काकः।<br>कुमुदं पुष्करायते। एरण्डोऽपि द्रुमायते। काकोऽपि गरुडायते।<br>सलोपविधावपि वाग्रहणं सम्बध्यते, सा च व्यवस्थितविभाषया भवति। ओजायते। अप्सरायते। पयायते, पयस्यते।<br>(इष्टिः)ओजसोप्सरसोर्नित्यं पयसस्तु विभाषया।<br>सकारस्येष्यते लोपः शब्दशास्त्रविचक्षणैः।।<br>(वा०) आचारेऽवगल्भ-क्लीब-होडेभ्यः क्विब्वा वक्तव्यः।<br>वाग्रहणात् क्यङपि।<br>अवगल्भते; अवगल्भायते। क्लीबते; क्लीबायते। होडते; होडायते।<br>(वा०) सर्वप्रातिपदिकेभ्य इत्येके।<br>अश्व इवाचरति अश्वायते; अश्वति। गर्दभायते; गर्दभति। | क्यङ् १८ | Comment: 3.1.18 |
| वा ७ क्यङ् ११ | १२. भृशादिभ्यो भुव्यच्वेर्लोपश्च<br>भृशादभ्यो भुव्यर्थे(भवति इत्यर्थे) क्यङ्प्रत्ययो भवति, हलश्च लोपो भवति, च्वेस्तु क्यङ् न भवति।<br>सूत्रे 'अच्वेः' इति पर्युदासाद् अभूततद्भावेऽयं क्यङ् विज्ञायते।<br>अभृशो भृशो भवति भृशायते।<br>शीघ्रायते। मन्दायते इत्यादि।<br>हलः लोपः - असुमनाः सुमनाः भवति सुमनायते।<br>दुर्मनायते।<br>अच्वेरिति किम्? भृशीभवति। | भुवि १३<br>च्वेः१३ | Comment: 3.1.13 |

| | | |
|---|---|---|
| सन् ५ प्रत्ययः १ | ६. मान्बध-दान्शान्भ्यो दीर्घश्चाभ्यासस्य<br>मान्, बध, दान्, शान्-इत्येतेभ्यः सन् प्रत्ययो भवति, अभ्यासस्य दीर्घश्च।<br>मान पूजायाम् - मीमांसते शास्त्रम्।<br>बध बन्धने - बीभत्सते गजम्।<br>दान अवखण्डने - दीदांसते शत्रून्।<br>शान अवतेजने - शीशांसते शस्त्रम्।<br>(इष्टिः) अत्रापि सन्नर्थविशेष इष्यते।<br>मानेर्जिज्ञासायाम्, बधेश्चित्तविकारे, दानेरार्जवे, शानेर्निशाने; निशानं तीक्ष्णीकरणम्। | |
| सन् ५ | ७. धातोः कर्मणः समानकर्तृकादिच्छायां वा<br>समानकर्तृकात् कर्मणो धातोः सन्प्रत्ययो वा भवति, इच्छायाम्।<br>पठितुमिच्छति पिपठिषति।<br>कर्तुमिच्छति चिकीर्षति।<br>वाग्रहणात्पक्षे वाक्यमपि।<br>कर्मण इति किम्? करणान्मा भूत्-गमनेनेच्छति।<br>समानकर्तृकादिति किम्? देवदत्तस्य भोजनमिच्छति यज्ञदत्तः।<br>इच्छायां किम्? कर्तुं जानाति।<br>(वा०) आशङ्कायामुपसंख्यानम्।<br>आशङ्के पतिष्यति नदीकूलम् इति पिपतिषति नदीकूलम्।<br>श्वा मुमूर्षति।<br>(वा०) इच्छासन्नतात्प्रतिषेधो वक्तव्यः।<br>चिकीर्षितुमिच्छति। | वा २२<br>कर्मणः १०<br>इच्छायाम् ६ |
| कर्मणः ७<br>इच्छायाम् ७<br>वा ७ | ८. सुपः आत्मनः क्यच्<br>कर्मणः सुपः क्यच् प्रत्ययो वा भवति, इच्छायाम्, तच्चेत्कर्म आत्मनो भवति।<br>आत्मनः पुत्रमिच्छति पुत्रीयति।<br>सुब्ग्रहणं किम्? वाक्यान्मा भूत्-महान्तं पुत्रमिच्छति।<br>आत्मन इति किम्? राज्ञः पुत्रमिच्छति।<br>ककारः 'न क्ये' इति सामान्यग्रहणार्थः। | सुपः ११<br>आत्मनः ६<br>क्यच् १० |
| सुपः ८<br>आत्मनः ८<br>कर्मणः ७<br>इच्छायाम् ७<br>वा ७ | ९. काम्यच्च<br>कर्मणः सुपः काम्यच् प्रत्ययोऽपि वा भवति इच्छायाम्, तच्चेत्कर्म आत्मनो भवति।।<br>ककारस्येत्संज्ञा प्रयोजनाभावान्न भवति।<br>आत्मनः पुत्रमिच्छति पुत्रकाम्यति। वस्त्रकाम्यति।<br>योगविभाग उत्तरत्र क्यचोऽनुवृत्त्यर्थः। | |

Comment: 3.1.10
Comment: 3.1.9

| | | | |
|---|---|---|---|
| कर्मणः ७<br>सुपः ८ वा ७<br>क्यच् ८ | १०. उपमानादाचारे<br>उपमानात् सुपः कर्मणः सुपः आचारेऽर्थे क्यच्प्रत्ययो वा भवति।<br>पुत्रमिवाचरति पुत्रीयति छात्रम्।<br>प्रावारीयति कम्बलम्।<br>(वा०) अधिकरणाच्चेति वक्तव्यम्<br>प्रासादीयति कुड्ये।<br>पर्यङ्कीयति मञ्चके। | उपमानादाचारे<br>११ | Comment: 3.1.11 |
| उपमानात् १०<br>सुपः८<br>आचारे १०<br>वा ७ | ११. कर्तुः क्यङ् सलोपश्च<br>उपमानात् सुपः कर्तुः सुपः आचारेऽर्थे क्यङ् वा भवति, सलोपश्च वा।<br>अन्वाचयशिष्टः सलोपः, तदभावेऽपि क्यङ् भवत्येव।<br>श्येन इवाचरति श्येनायते काकः।<br>कुमुदं पुष्करायते। एरण्डोऽपि द्रुमायते। काकोऽपि गरुडायते।<br>सलोपविधावपि वाग्रहणं सम्बध्यते, सा च व्यवस्थितविभाषया भवति। ओजायते। अप्सरायते। पयायते, पयस्यते।<br>(इष्टिः)ओजसोप्सरसोर्नित्यं पयसस्तु विभाषया।<br>सकारस्येष्यते लोपः शब्दशास्त्रविचक्षणैः।।<br>(वा०) आचारेऽवगल्भ-क्लीब-होडेभ्यः क्विब्वा वक्तव्यः।<br>वाग्रहणात् क्यङपि।<br>अवगल्भते; अवगल्भायते। क्लीबते; क्लीबायते। होडते; होडायते।<br>(वा०) सर्वप्रातिपदिकेभ्य इत्येके।<br>अश्व इवाचरति अश्वायते; अश्वति। गर्दभायते; गर्दभति। | क्यङ् १८ | Comment: 3.1.18 |
| वा ७ क्यङ् ११ | १२. भृशादिभ्यो भुव्यच्वेर्लोपश्च<br>भृशादभ्यो भुव्यर्थे(भवति इत्यर्थे) क्यङ्प्रत्ययो भवति, हलश्च लोपो भवति, च्वेस्तु क्यङ् न भवति।<br>सूत्रे 'अच्वेः' इति पर्युदासाद् अभूततद्भावेऽयं क्यङ् विज्ञायते।<br>अभृशो भृशो भवति भृशायते।<br>शीघ्रायते। मन्दायते इत्यादि।<br>हलः लोपः - असुमनाः सुमनाः भवति सुमनायते। दुर्मनायते।<br>अच्वेरिति किम्? भृशीभवति। | भुवि १३<br>च्वेः१३ | Comment: 3.1.13 |

| | | |
|---|---|---|
| भुवि १२ वा ७<br>अच्वेः१२ | १३. लोहितादि-डाज्भ्यः क्यष्<br>लोहितादिडाज्भ्यः क्यष् वा भवति न तु च्वेः 'अच्वेः' इत्यनुवृत्तेः अभूततद्भावे क्यष् विज्ञायते।<br>अलोहितो लोहितो भवति इति लोहितायते, लोहितायति वा।<br>'वा क्यषः' इति सूत्रेण विकल्पेनात्मनेपदम्।<br>डाजन्तेभ्यः - पटापटाभवति इति पटपटायते, पटपटायति वा। | |
| क्यङ् ११ वा ७ | १४. कष्टाय क्रमणे<br>'कष्टाय' इति चतुर्थ्यन्तात् क्रमणेऽर्थे क्यङ् भवति।<br>क्रमणम्= उत्साहः।<br>क्यङनुवर्तते, न क्यष्, क्यङ एव स्वरितत्वात्।<br>कष्टाय कर्मणे क्रामति=उत्सहते इति कष्टायते। पापं कर्तुमुत्सहते इत्यर्थः। | |
| क्यङ् ११ वा ७ | १५. कर्मणो रोमन्थ-तपोभ्यां वर्ति-चरोः<br>कर्मणो रोमन्थात्, कर्मणः तपसश्च यथासंख्यं वर्तिचरोरर्थयोः क्यङ् भवति।<br>रोमन्थं वर्तयति रोमन्थायते गौः। उद्गीर्णस्य, निगीर्णस्य वा चर्वणं रोमन्थः।<br>(वा०) हनुचलन इति वक्तव्यम्।<br>हनुचलने = चर्वितस्याकृष्य पुनश्चर्वणे इत्यर्थः। तेनेह न भवति - कीटो रोमन्थं वर्तयति। 'अपानप्रदेशान्निःसृतं द्रव्यमिह रोमन्थः, तदश्नातीत्यर्थः' इति कैयटः। 'वर्तुलं करोति' इत्यर्थः इति न्यासकार-हरदत्तौ।<br>(वा०) तपसः परस्मैपदं च<br>तपश्चरति तपस्यति। | कर्मणः २१ |
| क्यङ् ११<br>कर्मणः१५<br>वा ७ | १६. वाष्पोष्मभ्यामुद्वमने<br>कर्मणो वाष्पाद्, ऊष्मणश्च क्यङ् प्रत्ययो वा भवति, उद्वमनेऽर्थे।<br>वाष्पमुद्वमति वाष्पायते स्थाली। ऊष्माणमुद्वमति ऊष्मायते भक्तम्।<br>(वा०) फेनाच्चेति वक्तव्यम्।<br>फेनमुद्वमति इति फेनायते नदी।<br>"'धूमाच्च' इति भर्तृहरिः" इति भाषावृत्तौ।<br>धूमायतेऽग्निः। 'धूमायन्त इवाश्लिष्टाः।" | |

Comment: 3.1.20 deZ.kks

| क्यङ् ११<br>कर्मणः१५<br>वा ७ | **१७. शब्द-वैर-कलहाभ्र-कण्व-मेघेभ्यः करणे**<br>शब्दवैरादिभ्यः कर्मणः(कर्मकारकेभ्यः) करणे(करोति इत्यर्थे) क्यङ् वा भवति।<br>शब्दं करोति शब्दायते। वैरायते। कलहायते। अभ्रायते। कण्वायते। मेघायते।<br>(वा०) सुदिन-दुर्दिन-नीहाराच्चेति वक्तव्यम्।<br>सुदिनायते। दुर्दिनायते। नीहारायते। | करणे २१ |
|---|---|---|
| करणे १५<br>क्यङ् ११<br>वा ७ | **१८. सुखादिभ्यः कर्तृवेदनायाम्**<br>सुखादिभ्यः कर्मभ्यः कर्तृवेदनायामर्थे क्यङ् वा भवति।<br>सुखं वेदयते सुखायते। दुःखायते।<br>कर्तृग्रहणं किम्? सुखं वेदयति प्रसाधको देवदत्तः। | |
| करणे १५ वा ७ | **१९. नमो-वरिवश्चित्रङः क्यच्**<br>नमस्, वरिवस् चित्रङ् - इत्येतेभ्यो वा क्यच् प्रत्ययो भवति, करणे।<br>(वा०) नमसः पूजायाम्।<br>नमस्यति देवान्।<br>(वा०) वरिवसः परिचर्यायाम्।<br>परिचर्या = शुश्रूषा।<br>वरिवस्यति गुरून्।<br>(वा०) चित्रङः आश्चर्ये।<br>चित्रीयते। ङकार आत्मनेपदार्थः। | |
| करणे १५ वा ७<br>कर्मणः१५ | **२०. पुच्छ-भाण्ड-चीवराण्णिङ्**<br>पुच्छादिभ्यः करणे णिङ् प्रत्ययो वा भवति।<br>(वा०) पुच्छादुदसने पर्यसने वा।<br>उदसनम् = उत्क्षेपणम्। पर्यसनम् = परितः क्षेपणम्।<br>उत्पुच्छयते व्याघ्रः।<br>परिपुच्छयते व्याघ्रः।<br>(वा०) भाण्डात्समाचयने।<br>समाचयनम् = राशीकरणम्। सम्भाण्डायते कुलालः। भाण्डानां संचयं करोतीत्यर्थः।<br>(वा०) चीवरादर्जने परिधाने वा।<br>अर्जनम् = द्रव्यलाभोपायः याच्ञादि।<br>परिधानम् = आच्छादनम्।<br>सञ्चीवरयते भिक्षुः। चीवराणि अर्जयति, परिधत्ते वा इत्यर्थः। | |

| करणे १५<br>कर्मणः१५<br>वा ७<br>प्रत्ययः १<br>परश्च २ | २१. मुण्ड-मिश्र-श्लक्ष्ण-लवण-व्रत-वस्त्र-हल-कल-कृत-तूस्तेभ्यो णिच्<br>मुण्डादिभ्यः करणेऽर्थे णिच् प्रत्ययो वा भवति।<br>मुण्डं करोति मुण्डयति माणवकम्। मिश्रयति अन्नम्।<br>श्लक्ष्णयति वस्त्रम्। लवणयति व्यञ्जनम्।<br>(वा०) व्रताद् भोजने, तन्निवृत्तौ च।<br>पयो व्रतयति। वृषलान्नं व्रतयति।<br>(वा०) वस्त्रात्समाच्छादने।<br>संवस्त्रयति।<br>(वा०) हल्यादिभ्यो ग्रहणे।<br>हलिं गृह्णाति हलयति, कलिं गृह्णाति कलयति।<br>हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम् - अजहलत्, अचकलत्।<br>कृतं गृह्णाति कृतयति।<br>तूस्तानि विहन्ति इति वितूस्तयति केशान्। केशान् विशदीकरोतीत्यर्थः।<br>'तूस्तं, धूलौ च विख्यातं जरायां च नपुंसकम्।' इति मेदिनीकोशः। | |
|---|---|---|
| वा ७<br>प्रत्ययः १<br>परश्च २ | २२. धातोरेकाचो हलादेः क्रियासमभिहारे यङ्<br>क्रियासमभिहारे (वर्तमानाद्) एकाचो हलादेर्धातोः यङ् प्रत्ययो वा भवति।<br>पौनः पुन्यं, भृशार्थश्च क्रियासमभिहारः।<br>पुनः पुनः पचति पापच्यते। भृशं ज्वलति जाज्वल्यते। | धातोः ९० यङ् २४ |
| यङ् २२<br>प्रत्ययः १<br>परश्च २ | २३. नित्यं कौटिल्ये गतौ<br>गतौ वर्तमानाद्धातोः नित्यं कौटिल्ये गम्यमाने एव यङ् प्रत्ययो भवति।<br>कुटिलं क्रामति चङ्क्रम्यते।<br>सूत्रे नित्यग्रहणं बिषयनियमार्थम्-गतिवचनान्नित्यं कौटिल्य एव यङ् भवति न तु क्रियासमभिहारे। तेन- भृशं क्रामति इत्यत्र यङ् न भवति। | नित्यम् २४ |

| | | |
|---|---|---|
| यङ् २२<br>नित्यम् २३<br>प्रत्ययः १<br>परश्च २ | **२४. लुप-सद-चर-जप-जभ-दह-दश-गॄभ्यो भावगर्हायाम्**<br>लुपादिभ्यो नित्यं भावगर्हायाम् = धात्वर्थगर्हायाम् एव यङ् प्रत्ययो भवति।<br>लुप्लृ छेदने - गर्हितं लुम्पति लोलुप्यते।<br>षद्लृ विशरणगत्यवसादनेषु - सासद्यते।<br>चर गत्यर्थः - चञ्चूर्यते।<br>जप व्यक्तायां वाचि - जञ्जप्यते।<br>जभी गात्रविनामे - जञ्जभ्यते।<br>दह भस्मीकरणे - दन्दह्यते।<br>दंश दशने - दन्दश्यते।<br>गॄ निगरणे - निजेगिल्यते।<br>भावगर्हायमिति किम्? साधनगर्हायां मा भूत् - मन्त्रं जपति वृषलः।<br>अत्रापि अनुवृत्तं नित्यग्रहणं विषयनियमार्थम् - लुपादिभ्यो नित्यं भावगर्हायामेव यङ् भवति, न क्रियासमभिहारे - भृशं लुम्पति। | |
| | **२५. सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच्**<br>सत्यापादि-चूर्णान्तेभ्यः, चुरादिभ्यश्च णिच् प्रत्ययो भवति। तत्र सत्यापादिभ्योऽर्थविशेषे, चुरादिभ्यश्च स्वार्थे णिच् प्रत्ययो भवति।<br>सत्यमाचष्टे सत्यापति। अत्र एव निपातनात् सत्यशब्दस्या 'आपुक्' इत्यागमोऽपि भवति।<br>(वा०) अर्थ-वेदयोरप्यापुग्वक्तव्यः।<br>अर्थमाचष्टे अर्थापयति। वेदमाचष्टे वेदापयति।<br>पाशं विमुञ्चति विपाशयति। रूपं पश्यति रूपयति।<br>वीणयोपगायति उपवीणयति। तुलेनानुकुष्णाति अनुतूलयति; तूलम् = तृणाग्रं, तेनानुघट्टयति इत्यर्थः श्लोकैरुपस्तौति उपश्लोकयति। सेनयाभियाति अभिषेणयति; 'उपसर्गात् सुनोति' इति षः। लोमान्यनुमार्ष्टि अनुलोमयति। त्वचं गृह्णाति त्वचयति; त्वच शब्दोऽकारान्तः; 'त्वच संवरणे' इति धातोः घप्रत्ययं कृत्वा। तेन 'अत उपधायाः' इत्यनेन उपधावृद्धिर्न भवति।। वर्मणा संनह्यति वर्मयति।<br>वर्णं गृह्णाति वर्णयति।<br>चूर्णैरवध्वंसति अवचूर्णयति।<br>चुरादिभ्यः स्वार्थे-चोरयति। चिन्तयति। | णिच् २६ |

| | | |
|---|---|---|
| | (चुरादिगणे गणसूत्रम्) प्रतिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च।<br>पटुमाचष्टे पटयति। एनीमाचष्टे एतयति। पृथुं करोति प्रथयति। इष्ठवत्त्वाट्टिलोपादयः।<br>(चुरादिगणे गणसूत्रम्) तत्करोति तदाचष्टे।<br>पूर्वस्यैवायं प्रपञ्चः।<br>सूत्रं करोति सूत्रयति। पटुमाचष्टे पटयति। कुमारीमाचष्टे कुमारयति। मालां करोति, आचष्टे वा मालयति।<br>(चुरादिगणे गणसूत्रम्) तेनातिक्रामति।<br>अश्वेनातिक्रामति अश्वयति।<br>'प्रातिपदिकाद् धात्वर्थे' इत्यस्यैवायं प्रपञ्चः।<br>(चुरादिगणे गणसूत्रम्) आख्यानात्कृतस्तदाचष्टे कृल्लुक्, प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकम्।<br>आख्यानम् = वृत्तकथाप्रबन्धः। कंसवधमाचष्टे इति कंसं घातयति। बलिबन्धमाचष्टे इति बलिं बन्धयति।<br>राजागमनमाचष्टे इति राजानमागमयति। | |
| णिच् २५<br>प्रत्ययः १<br>परश्च २ | २६. हेतुमति च<br>हेतुः = स्वतन्त्रस्य कर्तुः प्रयोजकः कर्ता, स आधारतया अस्यास्ति इति हेतुमान् अर्थात् प्रयोजकनिष्ठः = व्यापारः, क्रियासु प्रेषणम्, आनुकूल्यम्, उत्साहनं वा, तस्मिन् व्यापारे वाच्ये धातोर्णिच् प्रत्ययो भवति।<br>कुर्वन्तं प्रेरयति कारयति।<br>पचन्तं प्रेरयति पाचयति।<br>आसीनम् अनुकूलयति, उत्साहयति वा आसयति।<br>शयानम् अनुकूलयति इति शाययति। | |
| धातोः २२<br>प्रत्ययः १<br>परश्च २ | २७. कण्ड्वादिभ्यो यक्<br>कण्डूवादिभ्यो यक् प्रत्ययो भवति,<br>द्विधा हि कण्ड्वादयः – धातवः, प्रातिपदिकानि च। तत्र धातुभ्य एव यक् न प्रातिपदिकेभ्यः। कण्डूञ् गात्रघर्षणे – कण्डूयते, मेधायते।<br>धातुभ्य एवेति व्याख्यानेन कण्डूः, कण्ड्वौ, कण्ड्वः इत्यादि प्रयोगा अपि सिद्ध्यन्ति। | |

| धातोः २२<br>प्रत्ययः १<br>परश्च २ | २८. गुपू-धूप-विच्छ-पणि-पनिभ्य आयः<br>गूपू, धूप, विच्छि, पणि, पनिभ्यो धातुभ्यः आयप्रत्ययो भवति।<br>स्वार्थेऽयं प्रत्ययः।<br>गुपू रक्षणे - गोपायति।<br>धूप संतापे - धूपायति।<br>विच्छ गतौ - विच्छायति।<br>पण व्यवहारे स्तुतौ च - पणायति।<br>स्तुत्यर्थेन पनिना साहचर्यादत्र स्तुत्यर्थ एव पणिर्गृह्यते, न व्यवहारार्थः। तेन व्यवहारे- शतस्य पणते इत्येव।<br>पन च स्तुतौ - पनायति। | |
|---|---|---|
| | २९. ऋतेरीयङ्<br>ऋतेरीयङ् प्रत्ययो भवति।<br>ऋतिः सौत्रो धातुर्घृणायां वर्तते। ततः स्वार्थेऽयं प्रत्ययः।<br>ऋतीयते, ऋतीयेते, ऋतीयन्ते। | |
| धातोः २२<br>प्रत्ययः १<br>परश्च २ | ३०. कमेर्णिङ्<br>कमेर्धातोर्णिङ् प्रत्ययो भवति।<br>अयमपि स्वार्थे।<br>कमु कान्तौ - कामयते, कामयेते, कामयन्ते। | |
| | ३१. आयादय आर्धधातुके वा<br>आर्धधातुके आयादयो ( 'गुपधूप०' ३.१.२८)<br>इत्यारभ्य('कमेर्णिङ् ३.१.३०) इति यावद् वा भवन्ति।<br>आर्धधातुके इति विषयसप्तमी।<br>गोप्ता, गोपायिता।<br>अर्तिता, ऋतीयिता।<br>कमिता, कामयिता। | |

| | | |
|---|---|---|
| | ३२. सनाद्यन्ता धातवः<br>सनाद्यन्ताः शब्दाः धातुसंज्ञका भवन्ति।<br>सन् आदिर्येषां ते सनादयः,सनादयः अन्ते येषां ते सनाद्यन्ताः। सन्-क्यच्-काम्यच्-क्यङ्-क्यषोऽथाचारक्विब्-णिज्यङौ।<br>यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः।।<br>सन् - जुगुप्सते।<br>क्यच् - पुत्रीयति।<br>१. काम्यच् - पुत्रकाम्यति।<br>२. क्यङ् - भृशायते।<br>३. क्यष् - लोहितायते, लोहितायति।<br>४. आचार क्विप् - अवगल्भते।<br>५. णिच् - मुण्डयति।<br>६. यङ् - पापच्यते।<br>७. यक् - कण्डूयते, कण्डूयति।<br>८. आय - गोपायति।<br>९. ईयङ् - ऋतीयते।<br>१०. णिङ् - कामयते। | |
| धातोः २२<br>प्रत्ययः १<br>परश्च २ | ३३. स्य-तासी लृलुटोः<br>धातोः स्य,तासि-इत्येतौ प्रत्ययौ भवतः, यथासंख्यं 'लृ' इति परे, लुटि परे च।<br>'लृ' इति लृङ्लृटोः सामान्येन ग्रहणम्।<br>लृटि - करिष्यति।<br>लुटि - कर्ता। | |
| धातोः २२<br>प्रत्ययः १<br>परश्च २ | ३४. सिब्बहुलं लेटि<br>धातोः सिप् प्रत्ययो भवति लेटि।<br>जुषी प्रीतिसेवनयोः - जोषिषत्।<br>तॄ प्लवन-तरणयोः - तारिषत्।<br>बहुलग्रहणान्नापि भवति - पताति। | |
| धातोः २२<br>प्रत्ययः १<br>परश्च २ | ३५. कास्प्रत्ययादाममन्त्रे लिटि<br>'कासृ शब्दकुत्सयाम्' इति धातोः, प्रत्ययान्तेभ्यश्च धातुभ्यः आम् प्रत्ययो भवति, लिटि अमन्त्रे।<br>कास् - कासाञ्चक्रे।<br>प्रत्ययान्तेभ्यः - लोलूयाञ्चक्रे।<br>अमन्त्र इति किम्? कृष्णो नोनाव।<br>'नोनाव' इति 'णु स्तुतौ' इति यङ्लुगन्तस्य लिटि रूपम्।<br>(वा०) कास्यनेकाच इति वक्तव्यम्।<br>चकासृ दीप्तौ - चकासाञ्चकार।<br>दरिद्रा दुर्गतौ - दरिद्राञ्चकार। | आम् ४२<br>लिटि ३६ |

| | | |
|---|---|---|
| आम् ३५<br>लिटि३५<br>धातोः २२<br>प्रत्ययः १<br>परश्च २ | **३६. इजादेश्च गुरुमतोऽनृच्छः**<br>अनृच्छः इजादेः गुरुमतो धातोश्चाम्प्रत्ययो भवति लिटि।<br>इच् (प्रत्याहारः) आदिर्यस्य स इजादिः, गुरुः अस्मिन् अस्ति इति गुरुमान्, तस्माद् इति गुरुमतः।<br>ईहाञ्चक्रे। ऊहाञ्चक्रे।<br>अनृच्छ इति किम्? 'ऋच्छ गतीन्द्रिय- प्रलयमूर्तिभावेषु' - आनर्च्छ, आनर्च्छतुः, आनर्च्छुः।<br>(वा०) ऊर्णोतेश्च प्रतिषेधो वक्तव्यः।<br>प्रोर्णुनाव। | |
| आम् ३५<br>लिटि३५<br>धातोः २२<br>प्रत्ययः १<br>परश्च २ | **३७. दयायासश्च**<br>दय, अय, आस्-इत्येतेभ्यो धातुभ्यश्च आम्प्रत्ययो भवति लिटि।<br>दय दानगतिरक्षणेषु - दयाञ्चक्रे न राक्षसः।<br>अय गतौ - पलायाञ्चक्रे।<br>आस उपवेशने - आसाञ्चक्रे। | |
| आम् ३५<br>लिटि३५<br>धातोः २२<br>प्रत्ययः १<br>परश्च २ | **३८. उष-विद-जागृभ्योऽन्यतरस्याम्**<br>उष, विद, जागृभ्योऽन्यतरस्याम् आम्प्रत्ययो भवति लिटि।<br>उष दाहे - ओषाञ्चकार कामाग्निः उवोष।<br>विद ज्ञाने - विदाञ्चकार, विवेद।<br>विदेरदन्तत्वप्रतिज्ञानादामि लघूपधगुणो न।<br>जागृ निद्राक्षये - जजागराञ्चकार, जजागार। | अन्यतरस्याम्३९ |
| आम् ३५<br>लिटि३५<br>अन्यतरस्याम् ३९<br>धातोः २२<br>प्रत्ययः १<br>परश्च २ | **३९. भी-ह्री-भृ-हुवां श्लुवच्च**<br>भी, ह्री, भृ, हुवां श्लुवत्कार्यं भवति, चकारादेतेभ्यः आम्प्रत्ययश्च लिटि, अन्यतरस्याम्।<br>ञि भी भये - बिभयाञ्चकार, बिभाय।<br>ह्री लज्जायाम् - जिह्रयाञ्चकार, जिह्राय।<br>डु भृञ् धारणपोषणयोः - बिभराञ्चकार। बभार।<br>हु दानादानयोः - जुहवाञ्चकार। जुहाव। | |
| | **४०. कृञ्चानुप्रयुज्यते लिटि**<br>आमः पश्चाद् लिट्परः कृञ् चापि प्रयुज्यते। सूत्रे अनु शब्दः पश्चादर्थे वर्तते, तत्र कस्य पश्चादित्यपेक्षायां प्रकृतत्वात् 'आमः' इति विज्ञायते।<br>कृञ् इति प्रत्याहारेण कृभ्वस्तयो गृह्यन्ते, तत्सामर्थ्यादस्तेर्भूर्भावो न भवति।<br>पाचयाञ्चकार। पाचयाम्बभूव। पाचयामास। | |

| | | |
|---|---|---|
| | ४१. विदांकुर्वन्त्वित्यन्यतरस्याम्<br>'विदाङ्कुर्वन्तु' इत्येतदन्यतरस्यां निपात्यते।<br>अत्र विदेर्लोट्याम्प्रत्ययः, गुणाभावः, लोटो लुक्, लोट्परस्य कृञः अनुप्रयोगश्च निपात्यते। 'विदाङ्कुर्वन्तु' इति निर्देशे पुरुषवचने न विवक्षिते इति इतिशब्दाल्लभ्यते। अतः लोटि अन्यस्मिन्नपि पुरुषे, वचने च उक्तानि सर्वाणि निपातनाल्लभ्यन्ते।<br>विदांकरोतु, विदांकुरुताम्, विदांकुर्वन्तु।<br>विदांकुरु, विदांकुरुतम् इत्यादि। पक्षे-वेत्तु, वित्ताम्, विदन्तु। विद्धि, वित्तम् इत्यादि। | |
| अन्यतरस्याम् ४१<br>आम् ३५ | ४२. अभ्युत्सादयां-प्रजनयां-चिकयां-<br>रमयामकः- पावयांक्रियाद्-<br>विदामक्रन्निति च्छन्दसि<br>छन्दसि अभ्युत्सादयामकः, प्रजनयामकः, चिकयामकः, रमयामकः, पावयांक्रियाद्, विदामक्रन् इति शब्दाः अन्यतरस्यां निपात्यन्ते।<br>अभ्युत्पूर्वात् 'षद्लृ विशरणगत्यवसादनेषु' इति धातोर्ण्यन्ते लुङि तिपि - अभ्युत्सादयामकः।<br>अभ्युदसीषदत् इति भाषायाम्।<br>प्रपूर्वाद् जनी प्रादुर्भावे इति धातोर्ण्यन्ते लुङि तिपि - प्रजनयामकः। प्राजीजनत् इति भाषायाम्।<br>'चिञ् चयने' इति धातोर्लुङि - रमयामकः। अरीरमत् इति भाषायाम्।<br>पूङ्पवने इति धातोर्ण्यन्ते लिङि पावयांक्रियात्। पाव्यादिति भाषायाम्।<br>विद् धातोर्लुङि प्रथमपुरुषबहुवचने विद्रामक्रन्। अवेदिषुः इति भाषायाम्। | |
| धातोः२२<br>प्रत्ययः१<br>परश्च २ | ४३. च्लि लुङि<br>धातोः च्लिप्रत्ययो भवति लुङि।<br>इकार उच्चारणार्थः, चकारः स्वरार्थः। च्लेः कुत्रापि प्रयोगो न भवति, अपि तु तत्स्थाने सिच्, क्स, चङ्, अङ्, चिण् - इत्येते आदिष्टाः प्रत्ययाः प्रयुज्यन्ते।<br>च्लेः सिच् - अकार्षीत्।<br>च्लेः क्सः - अस्पृक्षत्।<br>च्लेः चङ् - अचीकरत्।<br>च्लेः अङ् - अवोचत्।<br>च्लेः चिण् - समपादि। | |

| | ४४. च्लेः सिच्<br>च्लेः सिज् भवति।<br>इकार उच्चारणार्थः, चकारः स्वरार्थः।<br>अकार्षीत्। अहार्षीत्।<br>(वा०) स्पृश - मृश - कृष - तृप - दृपां सिज्वा वक्तव्यः।<br>अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत्।<br>अम्राक्षीत्, अमार्क्षीत्, अमृक्षत।<br>अक्राक्षीत्, अकार्क्षीत्, अकृक्षत।<br>एषु पक्षे क्सः।<br>अत्राप्सीत्, अतार्प्सीत्, अतृपत्।<br>अद्राप्सीत्, आदार्प्सीत्, अदृषत्।<br>पक्षेऽनयोः पुषाद्यङ्। | च्लेः ६६ |
|---|---|---|
| च्लेः ४४ | ४५. शल इगुपधादनिटः क्सः<br>इगुपधात् शलन्ताद् अनिटः धातोः परस्य च्लेः क्सो भवति।<br>स्पृश् - अस्पृक्षत्।<br>लिह् - अलिक्षत्।<br>अनिटः किम्? अकोषीत्। अमोषीत्। | क्सः ४७ |
| च्लेः ४४ क्सः ४५धातोः२२ प्रत्ययः१ | ४६. श्लिष आलिङ्गने<br>श्लिषश्च्लेः क्सः आलिङ्गनेऽर्थे भवति।<br>आलिङ्गनम् = उपगूहनम्, परिष्वङ्गे वा। अत्र नियमार्थमेतत्। श्लिष आलिङ्गने एव च्लेः क्सो भवति नान्यत्रेति।<br>आश्लिक्षत् कन्यां देवदत्तः।<br>आलिङ्गने इति किम्? समाश्लिषज्जतु काष्ठम्।<br>पुषादित्वादङ्। | |
| च्लेः ४४ क्सः ४५धातोः२२ प्रत्ययः१ | ४७. न दृशः<br>दृशः च्लेः क्सो न भवति।<br>अदर्शत्। 'इरितो वा' इत्यङ्, 'ऋदृशोऽङि गुणः' इति गुणः ।<br>अङभावे - अद्राक्षीत्। | |

| | | |
|---|---|---|
| च्लेः ४४<br>धातोः२२<br>प्रत्ययः१<br>परश्च २ | ४८. णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ्<br>णि-श्रि-द्रु-स्रुभ्यः च्लेश्चङ् भवति, कर्तरि (कर्तृवाचिनि लुङि परतः)<br>णि (ण्यन्त) - अचीकरत्। अजीहरत्।<br>श्रिञ् सेवायाम्- अशिश्रियत्।<br>द्रु गतौ - अदुद्रुवत्।<br>स्रु गतौ - असुस्रुवत्।<br>कर्तरीति किम्? अकारयिषातां कटौ देवदत्तेन।<br>(वा०) कमेरुपसंख्यानम्।<br>अचकमत्।<br>'कमेर्णिङ्' इति सूत्रेण णिङि तु च्लेश्चङ् - अचीकमत। | चङ् ५१<br>कर्तरि ६१ |
| च्लेश्चङ्<br>४४,४८धातोः२२<br>प्रत्ययः१<br>परश्च २ | ४९. विभाषा धेट्-श्व्योः<br>धेट्, श्वि- इत्यनयोः यश्च्लिः तस्य चङ् विभाषा भवति, कर्तरि।<br>धेट् पाने - अदधत्।<br>पक्षे सिच्, तस्य च 'विभाषा घ्राधेट्' इति सूत्रेण विभाषया लुक् - अधात्।<br>सिचो लुगभावे-आधासीत्।<br>टु ओ श्वि गतिवृद्ध्योः - अशिश्वियत्।<br>पक्षे 'जॄ स्तम्भु' इति सूत्रेण विभाषया अङ् - अश्वत्।<br>अत्र 'श्वयतेरः' इति इकारस्य अकारादेशः, 'अतो गुणे' इति पररूपम्। अङभावे सिच् - अश्वयीत्।<br>कर्तरीत्येव - अधिषातां गावौ वत्सेन। कर्मणि रूपमेतत्। | विभाषा ५० |
| च्लेश्चङ् ४४,४८<br>विभाषा ४९ | ५०. गुपेश्छनदसि<br>गुपेश्च्लेश्छन्दसि विभाषा चङ् भवति।<br>इमान्नो मित्रावरुणौ गृहानजूगुपतम्; अगौप्तम्, अगोपिष्टम्, अगोपायिष्टम् इति वा। भाषायां तु चङन्तं वर्जयित्वा शिष्टं रूपत्रयं भवति। | छन्दसि ५१ |
| च्लेश्चङ् ४४,४८<br>छन्दसि ५० | ५१. नोनयति-ध्वनयत्येलयत्यर्दयतिभ्यः<br>ऊनयति, ध्वनयति, एलयति, अर्दयति - इत्येतेभ्यः च्लेश्चङ् न भवति, छन्दसि।<br>सर्वेऽत्र ण्यन्ताः।<br>ऊन परिहाणे - काममूनयीः। औननदिति भाषायाम्।<br>ध्वन शब्दे - मा त्वाग्निर्ध्वनयीत्। अदिध्वनदिति भाषायाम्।<br>इल प्रेरणे - काममैलयीत्।<br>ऐलिलदिति भाषायाम्।<br>अर्द गतौ, याचने च - मैनमर्दयीत्।<br>आर्दिददिति भाषायाम्। | |

| | | |
|---|---|---|
| च्लेः<br>४४धातोः२२<br>प्रत्ययः१<br>परश्च २ | ५२. अस्यति-वक्ति-ख्यातिभ्यो ऽङ्<br>अस्यति-वक्ति-ख्यातिभ्यश्च्लेः अङ् भवति कर्तरि।<br>असु क्षेपणे - अस्मात् पुषादित्वादेव अङि सिद्धे पुनर्ग्रहणमात्मनेपदार्थम्-पर्यास्थत, पर्यास्थेताम्, पर्यास्थन्त।<br>'उपसर्गादस्त्यूह्योर्वावचनम्' इत्युपसंख्यानादात्मनेपदम्।<br>'अस्यतेस्थुक्' इति थुगागमः।<br>वच परिभाषणे, ब्रूञादेशो वा - अवोचत्।<br>'वच उम्' इति उम्।<br>ख्या प्रकथने, चक्षिङादेशो वा - आख्यत्।<br>कर्तरीत्येव - पर्यासिषातां गावौ वत्सेन। | अङ् ५६ |
| च्लेरङ् ४४,५२<br>धातोः२२<br>प्रत्ययः१<br>परश्च २ | ५३. लिपि-सिचि-ह्वश्च<br>लिपि-सिचि-ह्वश्च च्लेरङ् भवति।<br>लिप उपदेहे - अलिपत्।<br>षिच क्षरणे - असिचत्।<br>ह्वेञ् स्पर्द्धायाम् - आह्वत्।<br>पृथग्योग उत्तरार्थः। | लिपिसिचिह्वः ५४ |
| लिपिसिचिह्वः ५३<br>च्लेरङ् ४४,५२<br>धातोः२२<br>प्रत्ययः१<br>परश्च २ | ५४. आत्मनेपदेष्वन्यतरस्याम्<br>लिपि-सिचि-ह्वः आत्मनेपदेषु च्लेरङ् भवति अन्यतरस्याम्।<br>अलिपत।<br>पक्षे सिच् तस्य 'झलो झलि' इति सूत्रेण लुक्-अलिप्त।<br>असिचत, असिक्त। अह्वत, अह्वास्त।<br>लिपिसिच्योः स्वरितेत्त्वात्, ह्वयतेस्तु ञित्त्वादात्मनेपदम्। | |
| च्लेः ४४<br>अङ् ५२ | ५५. पुषादि-द्युताद्य्लृदितः परस्मैपदेषु<br>पुषादिद्युताद्य्लृदितश्च्लेरङ् भवति, परस्मैपदेषु।<br>पुषादि - पुषादिर्दिवाद्यन्तर्गणो गृह्यते, न भ्वादिः, क्र्याद्यन्तर्गणो वा।<br>पुषादि - पुष पुष्टौ - अपुषत्।<br>द्युतादि - द्युत दीप्तौ - अद्युतत्।<br>'द्युद्भ्यो लुङि' इति परस्मैपदम्।<br>लृदित् - गम्लृ गतौ - अगमत्।<br>शक्लृ शक्तौ - अशकत।<br>परस्मैपदेष्विति किम्? अद्योतिष्ट। | परस्मैपदेषु ५८ |

| | | |
|---|---|---|
| च्लेः ४४<br>अङ् ५२ | ५६. सर्ति-शास्त्यर्तिभ्यश्च<br>सर्ति-शास्त्यर्तिभ्यश्च च्लेरङ् भवति।<br>सृ गतौ - असरत्।<br>शासु अनुशिष्टौ - अशिषत्। 'शास इदङ् हलोः' इति इत्वम्, 'शासिवसिघसीनां च' इति षत्वम्।<br>ऋ गतौ - आरत्।<br>पृथग्योगकरणमात्मनेपदेष्वपि अस्य प्रवृत्त्यर्थम् -समरन्त। 'समो गमि' इत्यादिनात्मनेपदम्। | |
| च्लेः ४४<br>अङ् ५२<br>परस्मैपदेषु ५५ | ५७. इरितो वा<br>इरितो धातोश्च्लेरङ् वा भवति, परस्मैपदेषु।<br>इर् इद् यस्य स इरित्, तस्मात् इति इरितः।<br>भिदिर् विदारणे-अभिदत्।<br>पक्षे सिच्-अभैत्सीत्।<br>परस्मैपदेष्वित्येव-अरुद्ध। स्वरितेत्त्वादात्मनेपदम्। | वा ५८ |
| च्लेः ४४<br>अङ् ५२<br>वा ५७<br>धातोः२२<br>प्रत्ययः१<br>परश्च २ | ५८. जॄ-स्तम्भु-म्रुचु-म्लुचु-ग्रुचु-ग्लुचु-ग्लुञ्चु-श्विभ्यश्च<br>एभ्योऽपि च्लेरङ् वा भवति।<br>जॄष् वयोहानौ-अजरत्, अजारीत्।<br>स्तम्भुः सौत्रो धातुः - अस्तम्भत्, अस्तम्भीत्।<br>म्रुचु, म्लुचु गत्यर्थौ - अम्रुचत्, अम्रोचीत्। अम्लुचत्, अम्लोचीत्।<br>ग्रुचु, ग्लुचु स्तेयकरणे-अग्रुचत्, अग्रोचीत्। अग्लुचत्, अग्लोचीत्।<br>टुओ श्वि गतिवृद्ध्योः - अश्वत्; 'श्वयतेरः' इत्यत्वम्।<br>पक्षे 'विभाषा धेट्श्व्योः' इति चङ् - अशिश्वियत्।<br>चङभावेऽपि सिच् - अश्वयीत्। | |
| च्लेः ४४<br>अङ् ५२<br>धातोः२२<br>प्रत्ययः१<br>परश्च २ | ५९. कृ-मृ-दॄ-रुहिभ्यश्छन्दसि<br>कृ-मृ-दॄ-रुहिभ्यश्चलेरङ् भवति, छन्दसि।<br>डुकृञ् करणे - शंकलाङ्गुष्ठकोऽकरत्।<br>मृङ् प्राणत्यागे - अथोऽमरत्।<br>दॄ विदारणे - अदरदर्थान्।<br>रुह जन्मनि - अन्तरिक्षाद्दिवमारुहम्।<br>छन्दसीति किम्? अकार्षीत्। अमृत। अदारीत्। अरुक्षत्। | |
| च्लेः ४४<br>धातोः२२<br>प्रत्ययः१<br>परश्च २ | ६०. चिण् ते पदः<br>पदश्च्लेः चिण् भवति तशब्दे परे।<br>उदपादि सस्यम्। समपादि भैक्ष्यम्। उत्पूर्वस्य, सम्पूर्वस्य च 'पद गतौ' इत्येतस्य धातोः लुङि, प्रथमपुरुषैकवचने उदपादि, समपादि इति रूपे। 'चिणो लुक्' इति तशब्दस्य लुक्।<br>ते इति किम्? उदपत्साताम्, उदपत्सत। | चिण् ६५ ते६६ |

| | | |
|---|---|---|
| च्लेः ४४ चिण् ६० ते ६० कर्तरि४८ धातोः२२ प्रत्ययः१ परश्च २ | ६१. दीप-जन-बुध-पूरि-तायि-प्यायिभ्योऽन्यतरस्याम्<br>दीपादिभ्यश्च्लेश्चिण् अन्यतरस्यां भवति तशब्दे परे कर्तरि।<br>दीपी दीप्तौ - अदीपि, अदीपिष्ट।<br>जनी प्रादुर्भावे - अजनि, अजनिष्ट।<br>बुध अवगमने - अबोधि, अबुद्ध।<br>पूरी आप्यायने - अपूरि, अपूरिष्ट।<br>तायृ संतानपालनयोः - अतायि, अतायिष्ट।<br>ओ प्यायी वृद्धौ - अप्यायि, अप्यायिष्ट। | अन्यतरस्याम् ६३ |
| च्लेः ४४ चिण् ६० ते ६० अन्यतरस्याम् ६१ | ६२. अचः कर्मकर्तरि<br>अचः (अजन्ताद्) धातोश्च्लेचिण् अन्यतरस्यां भवति कर्मकर्तरि तशब्दे परे।<br>'कर्मकर्तरि' इत्यस्य यत्र कर्म सौकर्यातिशयनाय कर्तृत्वेन विवक्ष्यते तत्र इत्यर्थः।<br>अकारि कटः स्वयमेव, अकृत कटः स्वयमेव।<br>अलावि केदारः स्वयमेव, अलविष्ट केदारः स्वयमेव।<br>कर्मकर्तरि इति किम्? अकारि कटो देवदत्तेन। अत्र शुद्धे कर्मणि तः तेन, 'चिण्भावकर्मणोः' इति सूत्रेण नित्यमेव चिण्। | कर्मकर्तरि ६० |
| च्लेः४४ चिण् ६० ते ६० अन्यतरस्याम् ६१ कर्मकर्तरि ६२ | ६३. दुहश्च<br>'दुहश्च च्लेः चिण् अन्यतरस्यां भवति कर्मकर्तरि तशब्दे परे।<br>अदोहि गौः स्वयमेव, अदुग्ध गौः स्वयमेव।<br>कर्मकर्तरीत्येव - अदोहि गौर्गोपालकेन। अत्रापि शुद्धे कर्मणि तशब्दः। | |
| च्लेः४४ चिण् ६० ते ६० अन्यतरस्याम् ६१ कर्मकर्तरि ६२ | ६४. न रुधः<br>रुधश्च्लेश्चिण् कर्मकर्तरि तशब्दे परे न भवति।<br>कर्मवदित्यतिदेशे प्राप्तस्य चिणोऽयं प्रतिषेधः।<br>रुधिर् आवरणे - अन्ववारुद्ध गौः स्वयमेव।<br>कर्मकर्तरीत्येव - अन्ववारोधि गौः गोपालकेन; अत्र शुद्धे कर्मणि तः इति चिण्भवत्येव। | न ६५ |
| च्लेः४४ चिण् ६० कर्मकर्तरि ६२ न ६४ | ६५. तपोऽनुतापे च<br>तपश्च्लेश्चिण् न भवति, कर्मकर्तरि, अनुतापे, च तशब्दे परे।<br>अनुतापः = पश्चात्तापः, अस्य ग्रहणमत्र अकर्मकर्त्रर्थम्।<br>तेन अनुतापेऽर्थे भावकर्मणोरपि च्लेश्चिण् न भवति।<br>कर्मकर्तरि चिण्प्रतिषेधः- - अतप्त तपस्तापसः।<br>अनुतापे चिण्प्रतिषेधः- अन्ववातप्त पापेन कर्मणा। अत्र शुद्धे कर्मणि तशब्दः, तथापि चिण्प्रतिषेधो भवत्येव। | |

| | | |
|---|---|---|
| च्लेः ४४<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | ६६. चिण् भावकर्मणोः<br>धातोः परस्य च्लेश्चिण् भवति भावे, कर्मणि च तशब्दे परतः।<br>भावे – अशायि भवता।<br>कर्मणि – अकारि कटो देवदत्तेन। 'चिण्ते पदः' इत्यतः चिण्शब्दे प्रकृतेऽपि पुनरत्र चिण्ग्रहणं विस्पष्टार्थम्। | |
| भावकर्मणोः ६६<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | ६७. सार्वधातुके यक्<br>भावकर्मवाचिनि सार्वधातुके परतो धातोर्यक् प्रत्ययो भवति।<br>भावे – आस्यते भवता। शय्यते भवता ; 'अयङ् यि क्ङिति' इत्ययङादेशः।<br>कर्मणि – क्रियते कटः। गम्यते ग्रामः। | सार्वधातुके ८२ |
| सार्वधातुके ६७<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | ६८. कर्तरि शप्<br>कर्तृवाचिनि सार्वधातुके परतः धातोः शप् प्रत्ययो भवति। पकारः स्वरार्थः, शकार 'तिङ्शित् सार्वधातुकम्' इति सार्वधातुकसंज्ञार्थः।<br>भवति। पचति। | कर्तरि ८८ |
| कर्तरि ६८<br>सार्वधातुके ६७<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | ६९. दिवादिभ्यः श्यन्<br>दिवादिभ्यः श्यन्प्रत्ययो भवति, कर्तृवाचिनि सार्वधातुके परतः।<br>दीव्यति। सीव्यति। | श्यन् ७२ |
| श्यन् ६९<br>कर्तरि६८<br>सार्वधातुके ६७<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | ७०. वा भ्राश–भ्लाश–भ्रमु–क्रमु–क्लमु–त्रसि–त्रुटि–लषः<br>भ्राशादिभ्यः श्यन् प्रत्ययो वा भवति कर्तृवाचिनि सर्वधातुके परतः।<br>टुभ्राशृ, टुभ्लाशृ दीप्तौ – भ्राश्यते, भ्राशते। भ्लाश्यते, भ्लाशते।<br>भ्रमु अनवस्थाने, भ्रमु चलने द्वयोरपि ग्रहणम् भ्राम्यति, भ्रमति । 'भ्राम्यति' इत्यत्र 'शमामष्टानां दीर्घः श्यनि' इति दीर्घः।<br>क्रमु पादविक्षेपे – क्राम्यति, क्रामति।<br>'क्रमः परस्मैपदेषु' इति दीर्घः।<br>क्लमु ग्लानौ – क्लाम्यति, क्लामति।<br>'ष्ठिवु–क्लमु–चमां शिति' इति दीर्घः।<br>त्रसी उद्वेगे – त्रस्यति, त्रसति।<br>त्रुटी छेदनें – त्रुट्यति, त्रुटति।<br>लष कान्तौ – लष्यति, लषति। | वा ७२ |

| | | |
|---|---|---|
| श्यन् ६६<br>कर्तरि६८<br>सार्वधातुके ६७<br>वा७०<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | ७१. यसोऽनुपसर्गात्<br>यसोऽनुपसर्गात् श्यन् प्रत्ययो वा भवति, कर्तृवाचिनि सार्वधातुके परतः।<br>यसु प्रयत्ने - यस्यति, यसति।<br>अनुपसर्गादिति किम्? प्रयस्यति, आयस्यति। अत्र -'दिवादिभ्यः श्यन्' इत्यनेन नित्यमेव श्यन्। | |
| श्यन् ६६<br>कर्तरि६८<br>सार्वधातुके ६७<br>वा७०धातोः२२<br>प्रत्ययः १<br>परश्च २ | ७२. संयसश्च<br>संयसश्च श्यन् प्रत्ययो वा भवति कर्तृवाचिनि सार्वधातुके परतः।<br>संयस्यति, संयसति। | |
| कर्तरि ६८<br>सार्वधातुके ६७<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | ७३. स्वादिभ्यः श्नुः<br>स्वादिभ्यः श्नुप्रत्ययो भवति, कर्तृवाचिनि सार्वधातुके परतः।<br>षुञ् अभिषवे - सुनोति।<br>षिञ् बन्धने- सिनोति।<br>षिञ् बन्धने इति क्र्यादिगणेऽपि वर्तते, तस्य सिनातीति रूपम्। | श्नुः ७६ |
| श्नुः ७३<br>कर्तरि६८<br>सार्वधातुके ६७<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | ७४. श्रुवः शृ च<br>श्रुवः श्नुप्रत्ययो भवति, श्रुवः शृ इत्यादेशश्च कर्तृवाचिनि सार्वधातुके।<br>श्रु श्रवणे - शृणोति। | |
| श्नुः ७३<br>कर्तरि६८<br>सार्वधातुके ६७ | ७५. अक्षोऽन्यतरस्याम्<br>अक्षोऽन्यतरस्यां श्नुप्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः।<br>अक्षू व्याप्तौ - अक्ष्णोति, अक्षति। | अन्यतरस्याम्७६ |
| श्नुः ७३<br>कर्तरि६८<br>सार्वधातुके ६७<br>अन्यतरस्याम्७५<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | ७६. तनूकरणे तक्षः<br>तनूकरणे तक्षोऽन्यतरस्यां श्नुप्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः।<br>तक्षू तनूकरणे - तक्ष्णोति, तक्षति वा काष्ठम्।<br>तनूकरणे इति किम्? सन्तक्षति वाग्भिः। निर्भत्सयतीत्यर्थः, धातूनामनेकार्थत्वात्। | |
| कर्तरि ६८<br>सार्वधातुके ६७<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | ७७. तुदादिभ्यः शः<br>तुदादिभ्यः शप्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः।<br>तुद व्यथने - तुदति।<br>णुद प्रेरणे - नुदति। | |

| | | |
|---|---|---|
| कर्तरि ६८<br>सार्वधातुके ६७<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | **७८. रुधादिभ्यः श्नम्**<br>रुधादिभ्यः श्नम् प्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः।<br>रुधिर् आवरणे – रुणद्धि। भिदिर् विदारणे – भिनत्ति। | |
| कर्तरि ६८<br>सार्वधातुके ६७<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | **७९. तनादिकृञ्भ्य उः**<br>तनादिभ्यः, कृञश्च उप्रत्ययो भवति, कर्तृवाचिनि सार्वधातुके परतः।<br>तनु विस्तारे – तनोति।<br>षणु दाने – सनोति।<br>कृञः खल्वपि – करोति।<br>'डुकृञ् करणे' इति धातुः तनादिः। तत्र तनादित्वादेव उप्रत्यये सिद्धे तस्यात्र ग्रहणं नियमार्थम् – तनादिगणकार्यं कृञो मा भूदिति।<br>तेन अकृत, अकृथाः इत्यत्र 'तनादिभ्यस्तथासोः' इति सूत्रेण सिचो लुग् विभाषया न भवति, अपि तु 'ह्रस्वादङ्गात्' इति सूत्रेण नित्यमेव सिचो लुग्भवति। | उः ८० |
| उः ७९ कर्तरि ६८<br>सार्वधातुके ६७ | **८०. धिन्वि-कृण्व्योर च**<br>धिवि, कृवि इत्यनयोः 'अ' इत्यादेशो भवति, चकाराद् आभ्याम् 'उ' प्रत्ययश्च कर्तृवाचिनि सार्वधातुके परतः।<br>हिंवि, धिवि, जिवि प्रीणनार्थाः – धिनोति।<br>कृवि हिंसाकरणयोः – कृणोति।<br>अतो लोपस्य स्थानिवद्भावाद् गुणो न भवति। | श्ना ८२ |
| कर्तरि ६८<br>सार्वधातुके ६७ | **८१. क्र्यादिभ्यः श्ना**<br>क्र्यादिभ्यो श्नाप्रत्ययो भवति, कर्तृवाचिनि सार्वधातुके परतः।<br>डुक्रीञ् द्रव्यविनिमये – क्रीणाति।<br>प्रीञ् तर्पणे, कान्तौ च – प्रीणाति। | |
| कर्तरि ६८<br>सार्वधातुके ६७<br>श्ना ८१<br>धातोः२२<br>प्रत्ययः १<br>परश्च २ | **८२. स्तम्भु-स्तुम्भु-स्कम्भु-स्कुम्भु-स्कुञ्भ्यः श्नुश्च**<br>स्तम्भु-स्तुम्भु-स्कम्भु-स्कुम्भु-स्कुञ्भ्यः श्नुः प्रत्ययो भवति चकारात् श्नाप्रत्ययश्च।<br>आद्याश्चत्वारो धातवः सौत्राः<br>स्तम्भु – स्तभ्नाति, स्तभ्नाति।<br>स्तम्भु – स्तभ्नोति, स्तभ्नाति।<br>स्कम्भु – स्कभ्नोति, स्कभ्नाति।<br>स्कुम्भु – स्कुभ्नोति, स्कुभ्नाति।<br>स्कुञ् आप्रवणे – स्कुनोति, स्कुनाति। | |

| | | |
|---|---|---|
| | ८३. हलः श्नः शानज्झौ<br>हलः परस्य श्नाप्रत्ययस्य शानच् इत्यादेशो भवति, हौ परतः।<br>मुष स्तेये - मुषाण।<br>पुष पुष्टौ - पुषाण।<br>हल इति किम्? क्रीणीहि। | श्नः ८४ हौ ८४ |
| श्नः ८३ हौ ८३ | ८४. छन्दसि शायजपि<br>छन्दसि श्नः शायजपि भवति, अपिना शानजपि।<br>ग्रह उपादाने - गृभाय जिह्वया मधु।<br>'ग्रहिज्या' इति सूत्रेण सम्प्रसारणम्, 'हृग्रहोर्भश्छन्दसि' इति सूत्रेण हकारस्य भकारः।<br>शानजपि - बधान देव सवितः।<br>'बन्ध बन्धने' इति धातुरत्र। | छन्दसि ८६ |
| छन्दसि ८४ | ८५. व्यत्ययो बहुलम्<br>यथायथं शबादयो विकरणाः विहितास्तेषां छन्दसि विषये बहुलं व्यत्ययो भवति।<br>व्यत्ययः = व्यतिगमनम्, व्यतिकरो वा।<br>व्यत्ययस्यानेके प्रकाराः भवन्ति; तद्यथा<br>१. विषयान्तरे विधानम्।<br>२. द्विविकरणता।<br>३. त्रिविकरणता।<br>१. विषयान्तरे विधानम् - आण्डा शुष्णस्य भेदति। भिनत्तीति प्राप्ते।<br>२. द्विविकरणता - इन्द्रो वस्तेन नेषतु। नयतु इति प्राप्ते। अत्र नयतेर्लोटि शप्-सिपौ द्वौ विकरणौ।<br>३. त्रिविकरणता - इन्द्रेण युजा तरुषेम वृत्रम्। 'तरेम' इति प्राप्ते। तरतेर्विध्यादौ लिङि शप्, सिप्, उश्चेति त्रयो विकरणाः।<br>बहुलग्रहणाच्छन्दसि विषये व्यत्ययो न केवलं विकरणानां विषयेऽपि तु सर्वेषु विधिषु। व्यत्ययविषयेऽयं हि संग्रहश्लोकः<br>भाष्ये पठितः -<br>सुप्तिङुपग्रहलिङ्गनराणां　　कालहलच्स्वरकर्तृयङां च<br>व्यत्ययमिच्छति शास्त्रकदेषां　　सोऽपि च सिध्यति बाहुलकेन।। इति। | |

| | | |
|---|---|---|
| छन्दसि ८४ | ८६. लिङ्याशिष्यङ्<br>आशिषि वर्तमाने लिङि अङ्प्रत्ययो भवति, छन्दसि विषये स्था-गा-गमि-वचि-वदि-शकि-रुहयः प्रयोजनम्।<br>स्था - उपस्थेयं वृषभं तुग्रियाणाम्।<br>गा - सत्यमुपगेयम्।<br>गमि - गृहं गमेम।<br>वचि - मन्त्रं वोचेमाग्नये।<br>शकि - व्रतं चरिष्यामि तच्छकेयम्।<br>रुहि - स्वर्गं लोकमारुहेयम्।<br>(वा०) दृशेरग्वक्तव्यः।<br>पितरं दृशेयं मातरं च। | |
| कर्ता ६८ | ८७. कर्मवत्कर्मणा तुल्यक्रियः<br>कर्मणा तुल्यक्रियः कर्ता कर्मवद् भवति। यत्र कर्मकारकं कर्तृत्वेन विवक्ष्यते तत्रेदं प्रवर्तते।<br>अनुवृत्तं 'कर्तरि' इति पदं 'तुल्यक्रियः' इत्यनुरोधात् प्रथमान्ततया विपरिणम्यते।<br>यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम्।<br>यक्, आत्मनेपदम्- - पच्यते ओदनः स्वयमेव।<br>षष्टिकाः षष्टिरात्रेण पच्यन्ते।<br>चिण् - अभेदि काष्ठं स्वयमेव।<br>चिण्वद्भावः - कारिष्यते कटः स्वयमेव।<br>कर्मणेति किम्? करणाधिकरणाभ्यां तुल्यक्रियस्य मा भूत् - साध्वसिश्छिनत्ति। साधु स्थाली पचति। | कर्मवत् ६० |
| कर्मवत् ८७<br>कर्ता ६८ | ८८. तपस्तपःकर्मकस्यैव<br>तपःकर्मकस्यैव तपधातोः कर्ता कर्मवद् भवति।<br>तपस्तप्यते तापसः। तापसः तपः = तपोजन्यं पुण्यम्, तप्यते = अर्जयतीत्यर्थः। तपधातुरत्र अर्जनार्थकः, धातूनामनेकार्थत्वात्।<br>तपःकर्मकस्यैवेति किम्? उत्तपति सुवर्णं सुवर्णकारः।<br>सूत्रे एवकारः विस्पष्टार्थः, क्रियाभेदाद् विध्यर्थमेतद् न तु नियमार्थम्। | |

| | | |
|---|---|---|
| कर्मकर्तरि ६२<br>कर्मवत् ८७ | ८९. न दुह-स्नु-नमां यक्चिणौ<br>दुह-स्नु-नमां कर्मकर्तरि यक्चिणौ न भवतः।<br>दुह प्रपूरणे - दुग्धे गौः स्वयमेव।<br>दुहधातोर्यगेवानेन निषिध्यते। चिण् तु 'दुहश्च' इति सूत्रेण विभाषया भवत्येव- अदोहि, अदुग्ध वा गौः स्वयमेव।<br>ष्णु प्रस्रवणे - प्रस्नुते गौः स्वयमेव।<br>प्रास्नोष्ट गौः स्वयमेव।<br>णम प्रह्वत्वे, शब्दे च - नमते दण्डः स्वयमेव। अनंस्त दण्डः स्वयमेव।<br>(वा०) यक्चिणोः प्रतिषेधे णि-श्रन्थि-ग्रन्थि-ब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्।।<br>णि - कारयते कटः स्वयमेव।<br>अचीकरत् कटः स्वयमेव।<br>श्रन्थ, ग्रन्थ सन्दर्भे - श्रथ्नीते, ग्रथ्नीते वा ग्रन्थः स्वयमेव। अश्रन्थिष्ट, अग्रन्थिष्ट वा ग्रन्थः स्वयमेव।<br>ब्रूञ् व्यक्तायां वाचि - ब्रूते, अवोचत वा श्लोकः स्वयमेव।<br>आत्मनेपदाकर्मकाणाम् = आत्मनेपदविधौ अकर्मका ये ते आत्मनेपदाकर्मकास्तेषामित्यर्थः।<br>आह्वते माणवकः स्वयमेव। आवधिष्ट, आहत वा माणवकः स्वयमेव। विकुर्वते सैन्धवाः स्वयमेव। व्यकृषत सैन्धवाः स्वयमेव। | |
| कर्मकर्तरि ६२<br>कर्मवत् ८७ | ९०. कुषि-रञ्जोः प्राचां श्यन् परस्मैपदं च<br>कुषिरञ्जोः प्राचामाचार्याणां मतेन कर्मकर्तरि श्यन् भवति, परस्मैपदं च। यगात्मनेपदयोरपवादौ।<br>कुष निष्कर्षे - कुष्यति पादः स्वयमेव।<br>रञ्ज रागे - रज्यति वस्त्रं स्वयमेव।<br>प्राचां ग्रहणं विकल्पार्थम् - कुष्यते। रज्यते। | |
| | ९१. धातोः<br>अधिकारोऽयम् आतृतीयाध्यायपरिसमाप्तेः।<br>'तव्यत्तव्यानीयरः' (३.१.९६) धातोरेते प्रत्ययाः भवन्ति - कर्त्तव्यम्। करणीयम्। | धातोः ३.४.११७ |
| | ९२. तत्रोपपदं सप्तमीस्थम्<br>तत्र = 'धातोः' इत्यधिकारे यत् सप्तमीस्थं शब्दस्वरूपं तदुपपदसंज्ञं भवति।<br>यथा - 'कर्मण्यण्' (३.२.१) - कुम्भं करोतीति कुम्भकारः।<br>अयमाशयः 'कर्मण्यण्' (३.२.१) इति सूत्रे 'कर्मणि' इत्यत्र सप्तम्यां स्थितं शब्दस्वरूपं 'कर्म' इति, अतः तद्गृहीतस्य 'कुम्भम्' इति पदस्य उपपदसंज्ञा भवति। तेन 'उपपदमतिङ्' इति सूत्रेणोपपदसमासो भवति। | तत्र ९४ |

| | | |
|---|---|---|
| छन्दसि ८४ | ८६. लिङ्याशिष्यङ्<br>आशिषि वर्तमाने लिङि अङ्प्रत्ययो भवति, छन्दसि विषये स्था-गा-गमि-वचि-वदि-शकि-रुहयः प्रयोजनम्।<br>स्था - उपस्थेयं वृषभं तुग्रियाणाम्।<br>गा - सत्यमुपगेयम्।<br>गमि - गृहं गमेम।<br>वचि - मन्त्रं वोचेमाग्नये।<br>शकि - व्रतं चरिष्यामि तच्छकेयम्।<br>रुहि - स्वर्गं लोकमारुहेयम्।<br>(वा०) दृशेरग्वक्तव्यः।<br>पितरं दृशेयं मातरं च। | |
| कर्ता ६८ | ८७. कर्मवत्कर्मणा तुल्यक्रियः<br>कर्मणा तुल्यक्रियः कर्ता कर्मवद् भवति। यत्र कर्मकारकं कर्तृत्वेन विवक्ष्यते तत्रेदं प्रवर्तते।<br>अनुवृत्तं 'कर्तरि' इति पदं 'तुल्यक्रियः' इत्यनुरोधात् प्रथमान्ततया विपरिणम्यते।<br>यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम्।<br>यक्, आत्मनेपदम्- - पच्यते ओदनः स्वयमेव।<br>षष्टिकाः षष्टिरात्रेण पच्यन्ते।<br>चिण् - अभेदि काष्ठं स्वयमेव।<br>चिण्वद्भावः - कारिष्यते कटः स्वयमेव।<br>कर्मणेति किम्? करणाधिकरणाभ्यां तुल्यक्रियस्य मा भूत् - साध्वसिश्छिनत्ति। साधु स्थाली पचति। | कर्मवत् ९० |
| कर्मवत् ८७<br>कर्ता ६८ | ८८. तपस्तपःकर्मकस्यैव<br>तपःकर्मकस्यैव तपधातोः कर्ता कर्मवद् भवति।<br>तपस्तप्यते तापसः। तापसः तपः = तपोजन्यं पुण्यम्, तप्यते = अर्जयतीत्यर्थः। तपधातुरत्र अर्जनार्थकः, धातूनामनेकार्थत्वात्।<br>तपःकर्मकस्यैवेति किम्? उत्तपति सुवर्णं सुवर्णकारः।<br>सूत्रे एवकारः विस्पष्टार्थः, क्रियाभेदाद् विध्यर्थमेतद् न तु नियमार्थम्। | |

| | | |
|---|---|---|
| कर्मकर्तरि ६२<br>कर्मवत् ८७ | ८९. न दुह-स्नु-नमां यक्चिणौ<br>दुह-स्नु-नमां कर्मकर्तरि यक्चिणौ न भवतः।<br>दुह प्रपूरणे - दुग्धे गौः स्वयमेव।<br>दुहधातोर्यगेवानेन निषिध्यते। चिण् तु 'दुहश्च' इति सूत्रेण विभाषया भवत्येव- अदोहि, अदुग्ध वा गौः स्वयमेव।<br>ष्णु प्रस्रवणे - प्रस्नुते गौः स्वयमेव।<br>प्रास्नोष्ट गौः स्वयमेव।<br>णम प्रह्वत्वे, शब्दे च - नमते दण्डः स्वयमेव। अनंस्त दण्डः स्वयमेव।<br>(वा०) यक्चिणोः प्रतिषेधे णि-श्रन्थि-ग्रन्थि-ब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्।।<br>णि - कारयते कटः स्वयमेव।<br>अचीकरत् कटः स्वयमेव।<br>श्रन्थ, ग्रन्थ सन्दर्भे - श्रथ्नीते, ग्रथ्नीते वा ग्रन्थः स्वयमेव। अश्रन्थिष्ट, अग्रन्थिष्ट वा ग्रन्थः स्वयमेव।<br>ब्रूञ् व्यक्तायां वाचि - ब्रूते, अवोचत वा श्लोकः स्वयमेव।<br>आत्मनेपदाकर्मकाणाम् = आत्मनेपदविधौ अकर्मका ये ते आत्मनेपदाकर्मकास्तेषामित्यर्थः।<br>आहते माणवकः स्वयमेव। आवधिष्ट, आहत वा माणवकः स्वयमेव। विकुर्वते सैन्धवाः स्वयमेव। व्यकृषत सैन्धवाः स्वयमेव। | |
| कर्मकर्तरि ६२<br>कर्मवत् ८७ | ९०. कुषि-रञ्जोः प्राचां श्यन् परस्मैपदं च<br>कुषिरञ्जोः प्राचामाचार्याणां मतेन कर्मकर्तरि श्यन् भवति, परस्मैपदं च। यगात्मनेपदयोरपवादौ।<br>कुष निष्कर्षे - कुष्यति पादः स्वयमेव।<br>रञ्ज रागे - रज्यति वस्त्रं स्वयमेव।<br>प्राचां ग्रहणं विकल्पार्थम् - कुष्यते। रज्यते। | |
| | ९१. धातोः<br>अधिकारोऽयम् आतृतीयाध्यायपरिसमाप्तेः।<br>'तव्यत्तव्यानीयरः' (३.१.९६) धातोरेते प्रत्ययाः भवन्ति - कर्त्तव्यम्। करणीयम्। | धातोः ३.४.११७ |
| | ९२. तत्रोपपदं सप्तमीस्थम्<br>तत्र = 'धातोः' इत्यधिकारे यत् सप्तमीस्थं शब्दस्वरूपं तदुपपदसंज्ञं भवति।<br>यथा - 'कर्मण्यण्' (३.२.१) - कुम्भं करोतीति कुम्भकारः।<br>अयमाशयः 'कर्मण्यण्' (३.२.१) इति सूत्रे 'कर्मणि' इत्यत्र सप्तम्यां स्थितं शब्दस्वरूपं 'कर्म' इति, अतः तद्गृहीतस्य 'कुम्भम्' इति पदस्य उपपदसंज्ञा भवति। तेन 'उपपदमतिङ्' इति सूत्रेणोपपदसमासो भवति। | तत्र ९४ |

| तत्र ९२ | ९३. कृदतिङ्<br>अस्मिन् धात्वधिकारे अतिङ् प्रत्ययः कृत्संज्ञो भवति। कर्त्तव्यम्। करणीयम्। कृदन्तत्वात् प्रातिपदिकसंज्ञा। | कृत् ३.४.७६ |
|---|---|---|
| तत्र ९२ | ९४. वाऽसरूपोऽस्त्रियाम्<br>अस्मिन् धात्वधिकारे असरूपप्रत्ययः वा = विभाषया भवति अर्थात् असरूपोऽपवादप्रत्ययः उत्सर्गस्य बाधको वा भवति, अस्त्रियाम्, 'स्त्रियाम्' (३.३.९४) इत्यधिकारे तु एतत्सूत्रं न प्रवर्तते।<br>'ण्वुल्तृचौ' (३.१.१३३) इति उत्सर्गौ, 'इगुपधज्ञाप्रीकिरः कः' (३.१.१३५) इति अपवादः। अतः क प्रत्ययविषयेऽपि पक्षे ण्वुल्तृचावपि भवत एव।<br>विक्षिपः, विक्षेपकः, विक्षेप्ता।<br>असरूप इति किम्? कर्मण्यण् (३.२.१) इत्युत्सर्गः, 'आतोऽनुपसर्गे कः' (३.२.३) इत्यपवादः, स नित्यं बाधको भवति।<br>गोदः, कम्बलदः। अनुबन्धकृतमसारूप्यं न गृह्यते तथा चास्ति परिभाषा – 'नानुबन्धकृतमसारूप्यम्' इति।<br>अस्त्रियामिति किम्? 'स्त्रियां क्तिन्' (३.३.९४) इत्युत्सर्गः, 'अ प्रत्ययात्' (३.३.१०२) इत्यपवादः, स बाधको नित्यं भवति – चिकीर्षा, जिहीर्षा। | |
| | ९५. कृत्याः<br>'कृत्याः' इत्यधिकारोऽयम् 'ण्वुल्तृचौ' (३.१.१३३) इत्यतः प्राक्। तेन इत ऊर्ध्वं विधीयमानाः प्रत्ययाः कृत्यसंज्ञका भवन्ति।<br>तव्यं च तव्यतं चानीयरं केलिमरं तथा।<br>यतं ण्यतं क्यपं चैव सप्त कृत्यान् प्रचक्षते।<br>तव्य-तव्यतौ – कर्त्तव्यम्।<br>अनीयर् – करणीयम्।<br>केलिमर्– पचेलिमा माषाः।<br>यत् – पेयम्, गेयम्।<br>ण्यत् – कार्यम्, हार्यम्।<br>क्यप् – स्तुत्यः, शिष्यः।<br>कृत्यप्रत्ययाः 'तयोरेव कृत्यक्तखलर्थाः' इति सूत्रानुसारेण प्रायेण भावे, कर्मणि च भवन्ति। | कृत्याः १३२ |

| | | |
|---|---|---|
| धातोः९१<br>प्रत्ययः १ | ९६. तव्यत्तव्यानीयरः<br>धातोरेते प्रत्यया भवन्ति।<br>तकाररेफौ स्वरार्थौ।<br>कर्त्तव्यम्। कर्त्तव्यम्। करणीयम्।<br>(वा०) वसेस्तव्यत् कर्तरि णिच्च।<br>वास्तव्यः।<br>(वा०) केलिमर उपसंख्यानम्।<br>पचेलिमा माषाः। भिदेलिमानि काष्ठानि।<br>'कर्मकर्तरि चायमिष्यते' इति काशिका। | |
| धातोः९१<br>प्रत्ययः १ | ९७. अचो यत्<br>अजन्ताद् धातोर्यत्प्रत्ययो भवति।<br>गेयम्। पेयम्। चेयम्। जेयम्।<br>(वा०) तकि-शसि-चति-यति-<br>जनीनामुपसंख्यानम्।<br>तक हसने-तक्यम्।<br>शसु हिंसायाम्-शस्यम्।<br>चते याचने-चत्यम्।<br>यती प्रयत्ने-यत्यम्।<br>जनी प्रादुर्भावे-जन्यम्।<br>(वा०) हनो वा वध च।<br>वध्यम्। पक्षे ण्यत्-घांत्यम्। | यत् १०६ |
| धातोः९१<br>प्रत्ययः १ यत्<br>९७ | ९८. पोरदुपधात्<br>अकारोपधात् पवर्गान्ताद् धातोर्यत्प्रत्ययो भवति।<br>शप आक्रोशे-शप्यम्।<br>डुलभष् प्राप्तौ-लभ्यम्। | |
| यत् ९७<br>धातोः९१<br>प्रत्ययः १ | ९९. शकिसहोश्च<br>शकिसहोश्च यत्प्रत्ययो भवति।<br>शक्लृ शक्तौ - शक्यम्।<br>षह मर्षणे - सह्यम्। | |
| यत् ९७<br>धातोः९१<br>प्रत्ययः १ | १००. गद-मद-चर-यमश्चानुपसर्गे<br>गद-मद-चर-यमश्च यत्प्रत्ययो भवति, उपसर्गे उपपदे सति यत्प्रत्ययो न भवति।<br>गद व्यक्तायां वाचि- गद्यम्।<br>मदी हर्षे- मद्यम्।<br>चर गतिभक्षणयोः- चर्यम्।<br>यम उपरमे- यम्यम्।<br>अनुपसर्गे इति किम्? प्रगाद्यम्। प्रमाद्यम्।<br>(वा०) चरेराङि चागुरौ।<br>आचर्यो देशः। गन्तव्य इत्यर्थः।<br>अगुराविति किम्? आचार्यः = उपनेता। | अनुपसर्गे १०८ |

| | | |
|---|---|---|
| यत् ६७<br>धातोः६१<br>प्रत्ययः १ | १०१. अवद्य-पण्य-वर्या गर्ह्यपणितव्यानिरोधेषु<br>अवद्य, पण्य, वर्या- इत्येते यत्प्रत्ययान्ताः शब्दा निपात्यन्ते यथासंख्यं गर्ह्य,पणितव्य, अनिरोध-इत्येतेष्वर्थेषु।<br>अवद्यं पापम्। अनुद्यमन्यत्। पापिनां नाम अवद्यं भवति, गुरोर्नाम अनुद्यं भवति। उभयत्रापि अवक्तव्यमित्यर्थ एव।<br>पण्यः कम्बलः। पण्याः गौः। पाण्यमन्यत्।<br>वर्या इति स्त्रियां निपात्यते, अनिरोधश्चेद्भवति।<br>अनिरोधः = अप्रतिबन्धः।<br>शतेन, सहस्रेण वा वर्या कन्या। पुरुषशतेन, पुरुषसहस्रेण वा कन्या परिग्रहीतुमर्हा, अनेन सहैव सा वरणीया इति प्रतिबन्धो नास्तीति भावः।<br>वृत्या अन्या। अनुरूपेण वरणीया इत्यर्थः। | |
| | १०२. वह्यं करणम्<br>'वह्यम्' इति निपात्यते, करणम् = वहनसाधनं चेत्तद् भवति।<br>वहत्यनेनेति वह्यं शकटम्।<br>करणमिति किम्? वाह्यमन्यत्। | |
| | १०३. अर्यः स्वामि-वैश्ययोः<br>'ऋ गतौ' अस्माद् धातोः स्वामिनि, वैश्ये चार्थे यत्प्रत्ययो निपात्यते।<br>अर्यः स्वामी, वैश्यो वा।<br>स्वामिवैश्ययोरिति किम्? आर्यो ब्राह्मणः। प्राप्तव्य इत्यर्थः। | |
| | १०४. उपसर्या काल्या प्रजने<br>'उपसर्या' इति निपात्यते प्रजने काल्या चेत्सा भवति।<br>प्रजनः = प्रजननम्, प्रथमगर्भग्रहणम्।<br>काल्या = प्राप्तकाला।<br>गर्भग्रहणे प्राप्तकाला या सा उपसर्या। वृषभेणोपगन्तुं गौः योग्येत्यर्थः। वृषभोपगमनस्य प्राप्तकालेतियावत्।<br>काल्या प्रजने इति किम्? उपसार्या शरदि मधुरा। प्राप्तव्येत्यर्थः। | |
| | १०५. अजर्यं सङ्गतम्<br>नञ्पूर्वाद् 'जॄष् वयोहानौ' इति धातोः कर्तरि यत्प्रत्ययो निपात्यते, सङ्गतञ्चेत् तस्य विशेष्यम्।<br>न जीर्यति इति अजर्यं सङ्गतम्।<br>'तेन सङ्गतमार्येण रामाजर्यं कुरु द्रुतम्।।' इति भट्टिः।<br>सङ्गतमिति किम्? अजरिता कम्बलः। कर्तरि तृच्। | |

| | | |
|---|---|---|
| अनुपसर्गे १००<br>यत् ९७<br>भावे १०७ | **१०६. वदः सुपि क्यप् च**<br>अनुपसर्गे सुप्युपपदे वदः क्यप् प्रत्ययो भवति, चकाराद् यच्च, भावे।<br>ब्रह्मोद्यम्, ब्रह्मवद्यम्।<br>ब्रह्म = वेदस्तस्य वदनमित्यर्थः।<br>सोपसर्गे तु ण्यदेव - अनुवाद्यम्। अपवाद्यम्।<br>सुपीति किम्? वाद्यम्। | सुपि १०८<br>क्यप् १२१ |
| सुपि १०६<br>अनुपसर्गे १००<br>क्यप् १०६<br>धातोः९१<br>प्रत्ययः १ | **१०७. भुवो भावे**<br>अनुपसर्गे सुप्युपपदे भुवो(भूधातोः) भावे क्यप् प्रत्ययो भवति।<br>ब्रह्मभूयं गतः। ब्रह्मत्वं गत इत्यर्थः।<br>सुपीत्येव - भव्यम्। 'अचो यत्' इति यत्। अनुपसर्गे इत्येव - प्रभव्यम्। अत्रापि यत्। भावग्रहणमुत्तरार्थम्। | भावे १०८,१०७ |
| सुपि १०६<br>अनुपसर्गे १००<br>क्यप् १०६<br>भावे १०७<br>धातोः९१<br>प्रत्ययः १ | **१०८. हनस्त च**<br>अनुपसर्गे सुप्युपपदे हनो भावे क्यप् भवति, तकारश्चान्तादेशः।<br>ब्रह्मणो हननं ब्रह्महत्या। अश्वस्य हननम् अश्वहत्या।<br>सुपीत्येव - हननमिति घातः। निरुपपदं 'हत्या' इति असाध्वेवेति बालमनोरमा।<br>अनुपसर्गे इत्येव - प्रघातो वर्तते।<br>भावे इत्येव- तेन कर्मणि 'त्वया घात्यो वृषलः' इत्यत्र ण्यद् भवति। | |

| | | |
|---|---|---|
| धातोः६१<br>प्रत्ययः १ | **१०९. एति-स्तु-शास्-वृ-दृ-जुषः क्यप्**<br>एत्यादिभ्यः क्यपुप्रत्ययो भवति।<br>इणुं गतौ - इत्यः।<br>ष्टुञ् स्तुतौ - स्तुत्यः।<br>शासु अनुशिष्टौ - शिष्यः। 'शास इदङ्हलोः' इतीत्वम्, 'शासिवसिघसीनां च' इति षत्वम्।<br>(वा०) क्यब्विधौ वृञ्ग्रहणम्।<br>वृञ् वरणे इति स्वादिः, वृञ् आवरणे इति चुरादिः - वृत्या।<br>वृङ् सम्भक्तौ इत्यस्मात्तु यत्प्रत्ययो न भवति अपि तु ण्यदेव - वार्या ऋत्विजः।<br>दृङ् आदरे, आङ् पूर्वः - आदृत्यः।<br>जुषी प्रीतिसेवनयोः - जुष्यः।<br>क्यबिति वर्तमाने पुनः क्यब्ग्रहणं बाधकबाधनार्थम्।<br>(वा०) शंसि-दुहि-गुहिभ्यो वेति वक्तव्यम्।<br>शंसु स्तुतौ - शस्यम्, शंस्यम्।<br>दुह प्रपूरणे - दुह्यम्, दोह्यम्।<br>गुहू संवरणे - गुह्यम्, गोह्यम्।<br>(वा०) आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्।<br>अञ्जू व्यक्ति-म्रक्षण-कान्ति-गतिषु, आङ्पूर्वः - आज्यं घृतम्। | |
| क्यप् १०९<br>धातोः६१<br>प्रत्ययः १ | **११०. ऋदुपधाच्चाक्लृपि-चृतेः**<br>ऋदुपधाच्च धातोः क्यप् प्रत्ययो भवति, कृपि-चृती वर्जयित्वा।<br>वृतु-वृत्यम्। वृधु-वृध्यम्।<br>अक्लृपि-चृतेरिति किम्? कल्प्यम्, चर्त्यम्।<br>तपरकरणं किम्? 'कॄत संशब्दने' - ण्यदेव भवति कीर्त्यम्।<br>(वा०) पाणौ सृजेर्ण्यद् वक्तव्यः।<br>पाणिसर्ग्या रज्जुः।<br>(वा०) समवपूर्वाच्च।<br>समवसर्ग्या। | |
| क्यप् १०९<br>धातोः६१<br>प्रत्ययः १ | **१११. ई च खनः**<br>खनः क्यप् प्रत्ययो भवति, ईकारान्तश्चादेशो भवति।<br>खनु अवदारणे-खेयम्।<br>'ई' इति दीर्घोच्चारणं 'ये विभाषा' इति पक्षे आत्वबाधनार्थम्। | |

| | | |
|---|---|---|
| क्यप् १०६<br>धातोः६१<br>प्रत्ययः १ | ११२. भृञोऽसंज्ञायाम्<br>भृञोऽसंज्ञायां क्यप् प्रत्ययो भवति।<br>डु भृञ् धारणपोषणयोः -. भृत्याः कर्मकराः। भर्त्तव्या इत्यर्थः।<br>असंज्ञायामिति किम्? भार्यो नाम क्षत्रियः।<br>(वा०) संपूर्वाद् विभाषा।<br>संभृत्याः, संभार्या वा कर्मकराः।<br>सम्यग्भर्त्तव्या इत्यर्थः। | |
| क्यप् १०६<br>धातोः६१<br>प्रत्ययः १ | ११३. मृजेर्विभाषा<br>मृजेर्विभाषा क्यप्प्रत्ययो भवति।<br>मृजूष् शुद्धौ- परिमृज्यः, परिमार्ग्यो वा। | |
| | ११४. राजसूय-सूर्य-मृषोद्य-रुच्य-कुप्य-कृष्टपच्याव्यथ्याः<br>राजसूय, सूर्य, मृषोद्य, रुच्य, कुप्य, कृष्टपच्य, अव्यथ्य-इत्यते सप्त क्यबन्ताः शब्दाः निपात्यन्ते।<br>राजसूय - राजसूयः, राजसूयं वा क्रतुः, अर्धर्चादिः।<br>राज्ञा सोतव्यः =अभिषवद्वारा निष्पादयितव्यः क्रतुः इत्यर्थे कर्मणि, राजा = लतात्मकः सोमः, सूयते = कण्डूयतेऽत्रेत्यर्थे अधिकरणे वा राजोपपदात् 'षुञ् अभिषवे' इति धातोः क्यप्, दीर्घश्च निपात्येते।<br>सूर्यः - सरत्याकाशे इत्यर्थे 'सृ गतौ' इति धातोः, सुवति = लोकं प्रेरयति इत्यर्थे 'षू प्रेरणे' इति धातोर्वा कर्तरि क्यप्, रुडागमश्च निपात्येते।<br>मृषोद्यम् - 'मृषा' इत्युपपदाद् वद्धातोः कर्मणि क्यप्प्रत्ययो निपात्यते। मृषोद्यशब्दो विशेष्यनिघ्नः। "उच्छ्रायसौन्दर्यगुणा मृषोद्याः" इति।<br>रुच्यः - रोचते इति रुच्यः, रुच्धातोः कर्तरि क्यप्प्रत्ययो निपात्यते।<br>कुप्यम् - 'गुप गोपने' इत्यस्माद्, 'गुपू रक्षणे' इत्यस्माद् वा धातोः कर्मणि क्यप् प्रत्ययः, गुपेरादेः कुत्वं च निपात्यते। सुवर्णरजतभिन्नं धनं कुप्यं भवति। गोप्यमन्यत्।<br>कृष्टपच्याः - कृष्टे स्वयमेव पच्यन्ते इत्यर्थे कृष्टोपपदात् पच्धातोः क्यप् प्रत्ययः कर्मकर्तरि निपात्यते। शुद्धे कर्मणि तु कृष्टपाक्याः इति।<br>अव्यथ्यः - न व्यथते इत्यर्थे कर्तरि क्यप्प्रत्ययो निपात्यते। | |

Comment: lw=

| | | |
|---|---|---|
| क्यप् १०६ | ११५. भिद्योद्ध्यौ नदे<br>भिद्योद्ध्यौ नदेऽभिधेये निपात्येते।<br>भिदिर् विदारणे – भिनत्ति कूलं यः स भिद्यः नदः। कर्तरि क्यप्।<br>उज्झ उत्सर्गे – उज्झत्युदकं यः सः उद्ध्यः नदः। कर्तरि क्यप्, झसय धत्वं च निपात्यते।<br>नद इति किम्? भेत्ता। उज्झिता। | |
| क्यप् १०६ | ११६. पुष्य-सिद्ध्यौ नक्षत्रे<br>पुष्य-सिद्ध्यौ नक्षत्रेऽभिधेये निपात्येते।<br>पुष पुष्टौ – पुष्यन्त्यस्मिन्नर्था इति पुष्यः। अधिकरणे क्यप्।<br>षिधु संराद्धौ – सिध्यन्त्यस्मिन्नर्था इति सिद्ध्यः।<br>अत्राप्यधिकरणे क्यप्।<br>पुष्यसिद्ध्यशब्दौ पर्यायौ, स्वरूपपरत्वात् सूत्रे द्वन्द्वः।<br>नक्षत्र इति किम्? पोषणम्, सेधनम्। | |
| क्यप् १०६ | ११७. विपूय-विनीय-जित्या मुञ्ज-कल्क-हलिषु<br>क्यप्प्रत्ययान्ताः विपूयादयो मुञ्जादिष्वर्थेषु निपात्यन्ते।<br>पूङ् पवने – विपूयो मुञ्जः। रज्जवादिकरणाय शोधयितव्य इत्यर्थः।<br>णीञ् प्रापणे – विनीयः कल्कः।<br>कल्कः = पिष्टः ओषधिविशेषः, पापमिति वा।<br>जि अभिभवे – जित्यो हलिः। बलेन क्रष्टव्य इत्यर्थः।<br>कृष्टसमीकरणार्थं यत्स्थूलकाष्ठं तद् हलिरित्युच्यते।<br>अन्यत्र – विपव्यम्, विनेयम्, जेयम्; एषु 'अचो यत्' इति यत्। | |
| क्यप् १०६ | ११८. प्रत्यपिभ्यां ग्रहेः<br>प्रत्यपिभ्यां ग्रहेः क्यप्प्रत्ययो भवति।<br>(वा०) छन्दसीति वक्तव्यम्।<br>मत्तस्य न प्रतिगृह्यम्। अनृतं हि मत्तो वदति तस्मान्नापि गृह्यम्।<br>लोके तु-प्रतिग्राह्यम्। अपिग्राह्यम्। | ग्रहेः ११६ |

| | | |
|---|---|---|
| क्यप् १०६<br>ग्रहेः११८ | ११९. पदास्वैरि-बाह्यापक्ष्येषु<br>एष्वर्थेषु ग्रहेर्धातोः क्यप् प्रत्ययो भवति।<br>पदे - अवगृह्यम्, प्रगृह्यं वा पदम्।<br>अस्वैरी = परतन्त्रः, अस्मिन्नर्थे - गृह्यकाः शुकाः।<br>पञ्जरादिबन्धनेन परतन्त्रीकृता इत्यर्थः। गृह्यकाः इत्यत्र 'अनुकम्पायाम् इति सूत्रेण कन् प्रत्ययः।<br>बहिर्भवा इति बाह्या- ग्रामगृह्या सेना। नगरगृह्या सेना।<br>ग्रामनगराभ्यां बहिर्भूतेत्यर्थः। स्त्रीलिङ्गनिर्देशात् पुंनपुंसकयोर्न भवति।<br>पक्ष्ये = पक्षाश्रिते - आर्यैर्गृह्यते यः स आर्यगृह्यः।<br>तत्पक्षाश्रित इत्यर्थः। | |
| क्यप् १०६ | १२०. विभाषा कृ-वृषोः<br>कृ-वृषोर्विभाषा क्यप् प्रत्ययो भवति।<br>डुकृञ् करणे - कृत्यम्। पक्षे ण्यत्-कार्यम्।<br>वृषु सेचने - वृष्यम्। पक्षे ण्यत् - वर्ष्यम्। | |
| क्यप् १०६ | १२१. युग्यं च पत्रे<br>पत्रेऽर्थे 'युग्यम्' इति निपात्यते।<br>पत्रम् = वाहनम्।<br>युग्यो गौः। शकटादिना योक्तव्य इत्यर्थः। 'युजिर् योगे' इत्यस्मात् क्यप्, कुत्वं च निपात्यते। | |
| | १२२. अमावस्यदन्यतरस्याम्<br>अमोपपदाद् वसतेः कालेऽधिकरणे ण्यत् प्रत्ययो भवति, तत्रान्यतरस्यां वृद्ध्यभावो निपात्यते।<br>अमा = सह वसतोऽस्यां चन्द्रार्कौ इति अमावास्या, अमावस्या वा। | |

| | | |
|---|---|---|
| | १२३. छन्दसि निष्टर्क्य-देवहूय-<br>प्रणीयोन्नीयोच्छिष्य-<br>मर्य-स्तर्या-ध्वर्य-खन्य-खान्य-<br>देवयज्यापृच्छ्य-प्रतिषीव्य-ब्रह्मवाद्य-<br>भाव्य-स्ताव्योपचाय्यपृडानि<br>छन्दसि निष्टर्क्य, देवहूय, प्रणीय, उन्नीय, उच्छिष्य, मर्य, स्तर्या, ध्वर्य, खन्य, खान्य, देवयज्या, आपृच्छ्य, प्रतिषीव्य, ब्रह्मवाद्य, भाव्य, स्ताव्य, उपचाय्यपृड - इत्येते सप्तदश शब्दाः निपात्यन्ते।<br>यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम्। अत्रैवं श्लोकवार्तिकं भाष्ये -<br>ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः।<br>ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः।।<br>यथाक्रमं एवं हि प्रत्ययाः<br>ण्यत्-१, क्यप्-४, यत् -४,<br>ण्यत् -१, यत् -१, क्यप् -२,<br>ण्यत् -४। | |
| धातोः६१<br>प्रत्ययः १ | १२४. ऋ-हलोर्ण्यत्<br>ऋवर्णान्ताद्, हलन्ताच्च धातोर्ण्यत् प्रत्ययो भवति।<br>कृ - कार्यम्। हृ- हार्यम्। वच् - वाच्यम्, वाक्यम्। पच् - पाक्यम्। | ण्यत् १३१ |
| ण्यत् १२४<br>धातोः६१<br>प्रत्ययः १ | १२५. ओरावश्यके<br>उवर्णान्ताद् धातोर्ण्यत् प्रत्ययो भवति, आवश्यके द्योत्ये।<br>यतोऽपवादः।<br>अवश्यं भवः = आवश्यकम्, मनोज्ञादित्वाद् वुञ्।<br>अवश्यं लवनीयम् - लाव्यम्।<br>अवश्यं पवनीयम् - पाव्यम्।<br>आवश्यके इति किम्? लव्यम्। पव्यम्। | |
| ण्यत् १२४<br>धातोः६१<br>प्रत्ययः १ | १२६. आसु-यु-वपि-रपि-लपि-त्रपि-चमश्च<br>आस्वादिभ्यश्च ण्यत्प्रत्ययो भवति। यतोऽपवादः।<br>आङ्पूर्वः षु प्रसवैश्वर्ययोः - आसाव्यम्।<br>यु मिश्रणे - याव्यम्।<br>डुवप बीजसन्ताने - वाप्यम्।<br>रप लप व्यक्तायां वाचि - राप्यम्। लाप्यम्।<br>त्रपूष् लज्जायाम् - त्राप्यम्।<br>चमु अदने - आचाम्यम्।<br>सूत्रे चकारोऽनुक्तसमुच्चयार्थः - दभि-दाभ्यम्। | |

| | | |
|---|---|---|
| ण्यत् १२४<br>धातोः९१<br>प्रत्ययः १ | १२७. आनाय्योऽनित्ये<br>'आनाय्यः' इति निपात्यते अनित्येऽभिधेये।<br>नयतेराङ्पूर्वाण्यत् प्रत्ययः, आयादेशश्च निपात्यते।<br>आनाय्यो दक्षिणाग्निविशेषः।<br>स हि गार्हपत्यादानीयतेऽनित्यश्च, सततमप्रज्वलनात्।<br>आनेयोऽन्यः घटादिः, वैश्यकुलादानीतो दक्षिणाग्निश्च। | |
| ण्यत् १२४<br>धातोः९१<br>प्रत्ययः १ | १२८. प्रणाय्योऽसंमतौ<br>'प्रणाय्यः' इति निपात्यते असम्मतौ।<br>न विद्यते सम्मतिः = पूजा, आदरो वा यस्मिन्<br>सोऽसम्मतिः, तस्मिन्नभिधेये प्रपूर्वान्नयतेर्ण्यत्,<br>आयादेशश्च निपात्यते इत्यर्थः।<br>प्रणाय्यश्चौरः।<br>असंमताविति किम्? प्रणेयोऽन्यः। | |
| ण्यत् १२४ | १२९. पाय्य-सानाय्य-निकाय्य-धाय्या<br>मान-हवि-र्निवास-सामिधेनीषु<br>पाय्यादयः शब्दाः मानादिष्वर्थेषु निपात्यन्ते।<br>पाय्यं मानम्। मीयतेऽनेनेत्यर्थे 'माङ् माने' इति<br>धातोर्ण्यत्, आदेः पत्वं च निपात्यते। मेयमन्यत्।<br>सान्नाय्यं हविः। सम्यग्नीयते होमार्थमग्निं प्रति इत्यर्थे<br>सम्पूर्वान्नयतेः कर्मणि ण्यत्, आयादेशः, उपसर्गदीर्घत्वं च<br>निपात्यते। सन्नेयमन्यत्।<br>निकाय्यो निवासः। निचीयते धान्यादिकमस्मिन् इत्यर्थे<br>निपूर्वाच्चिनोतेरधिकरणे ण्यत्, आयादेशः, कुत्वं च<br>निपात्यते। निचेयमन्यत्।<br>धाय्या सामिधेनी। धीयतेऽनया समिदित्यर्थे धाञो करणे<br>ण्यत्प्रत्ययः निपातनाद् भवति। 'आतो युक्चिण्कृतोः' इति<br>सूत्रेण युगागमः। सामेधिनीशब्द ऋग्विशेषस्य वाचकः।<br>धेयमन्यत्। | |
| ण्यत् १२४ | १३०. क्रतौ कुण्डपाय्य-संचाय्यौ<br>क्रतावभिधेये कुण्डपाय्य-संचाय्यौ निपात्येते।<br>कुण्डपाय्यः क्रतुः। कुण्डेन पीयते सोमोऽस्मिन्नित्यर्थे<br>कुण्डोपपदात् 'पा पाने' इति धातोरधिकरणे यत्प्रत्ययः,<br>युक् च निपात्यते।<br>संचाय्यः क्रतुः। संचीयतेऽसौ इत्यर्थे सम्पूर्वाच्चिनोतेः<br>कर्मणि ण्यत्, आयादेशश्च निपात्यते।<br>क्रताविति किम्? कुण्डपानम्। अत्र अधिकरणे ल्युट्।<br>संचेयः। अत्र 'अचो यत्' इति सूत्रेण यत्। | |

| | | |
|---|---|---|
| ण्यत् १२४ | **१३१. अग्नौ परिचाय्योपचाय्य-समूह्याः**<br>परिचाय्य, उपचाय्य, समूह्य-इत्येते शब्दाः अग्नावभिधेये निपात्यन्ते।<br>अग्निशब्दोऽत्र अग्निधारणार्थे स्थलविशेषे वर्तते, परिचाय्यादीनां शब्दानां तस्मिन्नेवार्थे रूढत्वादिति हरदत्तः, दीक्षितश्च।<br>परिचाय्यम्। उपचाय्यः। चिनोतेर्ण्यदायादेशौ निपात्येते।<br>समूह्यं चिन्वीत पशुकामः। सम्पूर्वाद् वहेः हलन्तत्वाण्ण्यत् सिद्ध एव, तत्र सम्प्रसारणं, दीर्घत्वं च निपात्यते।<br>अग्नाविति किम्? परिचेयम्। उपचेयम्। संवाह्यम्। | |
| | **१३२. चित्याग्निचित्ये च**<br>अग्नौ चित्य, अग्निचित्या - इत्येतावपि शब्दौ निपात्येते।<br>चित्योऽग्निः। चीयतेऽसौ इत्यर्थे चिनोतेः क्यप् प्रत्ययो निपात्यते।<br>अग्नेश्चयनम् अग्निचित्या। अग्निशब्दे षष्ठ्यन्ते उपपदे भावे यकारप्रत्ययः, तुक् च निपात्यते। तेनान्तोदात्तत्वं भवति। 'यप्रत्ययान्तनिपातने प्रत्ययस्वरेणान्तोदात्तत्वं पदस्य भवति। ण्यति तु सति तित्स्वरितत्वं भवति। तस्मात् प्रकृतं त्यक्त्वा यप्रत्ययो निपात्यते इति भावः' इति न्यासः।<br>अग्नावित्येव - चेयमन्यत्।<br>अग्नाविति चित्यशब्दस्यैव विशेषणम्, नाग्निचित्याशब्दस्य, तस्य भावे निपातितत्वात्। | |
| धातोः९१<br>प्रत्ययः १ | **१३३. ण्वुल्-तृचौ**<br>धातोः ण्वुल्, तृचौ प्रययौ भवतः।<br>कारकः; कर्ता। हारकः; हर्ता। | |

| | | |
|---|---|---|
| | १३४. नन्दि-ग्रहि-पचादिभ्यो ल्यु-णिन्यचः<br>नन्दि-ग्रहि-पचादिभ्यो यथासंख्यं ल्यु,णिनि,अच्-इत्येते प्रत्ययाः भवन्ति।<br>प्रत्येकमादिशब्दः संबध्यते।<br>नन्द्यादिभ्यो ल्युः - नन्दयतीति नन्दनः।<br>जनमर्दयतीति जनार्दनः।<br>मधुं सूदयतीति मधुसूदनः।<br>विशेषेण भीषयते इति विभीषणः।<br>ग्रह्यादिभ्यो णिनिः - गृह्णातीति ग्राही।<br>तिष्ठतीति स्थायी।<br>मन्त्रयतीति - मन्त्री।<br>पचादिभ्योऽच् - पचतीति पचः।<br>वक्तीति वचः।<br>वदतीति वदः।<br>चलतीति चलः।<br>पततीति - पतः।<br>नदतीति - नदट्-नदः, नदी।<br>टित्त्वान्ङीप्।<br>(वा०) चरि-चलि-पति-वदीनां वा<br>द्वित्वमच्याकच्चाभ्यासस्येति वक्तव्यम्।<br>आगागमस्य दीर्घत्वसामर्थ्यादभ्यासह्रस्वो, हलादिशेषश्च न भवति।<br>चरतीति चराचरः, चरो वा।<br>चलतीति चलाचलः, चलो वा।<br>पततीति पतापतः, पतो वा।<br>वदतीति वदावदः, वदो वा।<br>(वा०) हन्तेर्घत्वं च<br>हन्तीति घनाघनः, हनो वा। | |
| | १३५. इगुपध-ज्ञा-प्री-किरः कः<br>इगुपधादिभ्यः कः प्रत्ययो भवति।<br>इगुपध- क्षिपः। लिखः। बुधः। कृशः।<br>ज्ञा अवबोधने - जानातीति ज्ञः।<br>प्रीञ् तर्पणे - प्रीणातीति प्रियः।<br>कॄ विक्षेपे - किरतीति किरः। | कः १३६ |
| कः १३५ | १३६. आतश्चोपसर्गे<br>उपसर्गे उपपदे आदन्ताद् धातोश्च कः प्रत्ययो भवति।<br>प्रस्थः। सुग्लः। सुम्लः। | |

|  |  |  |
|---|---|---|
|  | १३७. पा-घ्रा-ध्मा-धेट्-दृशः शः<br>पादिभ्यः शप्रत्ययो भवति।<br>पा - पिबः। घ्रा - जिघ्रः। ध्मा - धमः। धेट् - धयः।<br>दृश् - पश्यः।<br>'पाघ्राध्मा' इति सूत्रेण पिबाद्यादेशाः।<br>(वा०) जिघ्रतेः प्रतिषेधो वक्तव्यः।<br>व्याघ्रः। अत्र 'आतश्चोपसर्गे' इति पूर्वसूत्रेण कप्रत्ययः। | शः १३८ |
| शः १३७ | १३८. अनुपसर्गाल्लिम्प-विन्द-धारि-पारि-वेद्युदेजि-चेति-साति-साहिभ्यश्च<br>लिम्प, विन्द, धारि, पारि, वेदि, उदेजि, चेति, साति, साहि - इत्येतेभ्यश्च शप्रत्ययो भवति, उपसर्गात् परेभ्यः एतेभ्यः श प्रत्ययो न भवति।<br>लिप उपदाहे - लिम्पतीति लिम्पः।<br>विद्लृ लाभे - विन्दतीति विन्दः।<br>धृञ् धारणे, धृङ् अवध्वंसने, धृङ् आदरे, हेतुमण्णौ - धारयतीति धारयः।<br>'पार कर्मसमाप्तौ' इति चुरादिणिच्,<br>'पॄ पालनपूरणयोः' इति क्र्यादिः हेतुमण्णिच्-पारयतीति पारयः।<br>विद चेतनाख्याननिवासेषु चुरादिण्यन्तः, ज्ञानाद्यर्थाः 'विद ज्ञाने' इत्यादयः हेतुमण्णिजन्ताश्च -वेदयतीति वेदयः।<br>उदेजि- उत्पूर्वः 'एजृ कम्पने' हेतुमण्णिजन्तः-उदेजयतीति उदेजयः।<br>चिती संज्ञाने, चुरादिण्यन्तः - चेतयतीति चेतयः।<br>साति इति सौत्रो धातुः सातयतीति सातयः।<br>'षह मर्षणे' हेतुमण्ण्यन्तः, चुरादिण्यन्तो वा साहयतीति साहयः।<br>अनुपसर्गादिति किम्? प्रलिम्पतीति प्रलिपः। 'इगुधज्ञा' इत्यादिना कप्रत्ययः।<br>(वा०) नो लिम्पेरिति वक्तव्यम्।<br>निलिम्पा नाम देवाः।<br>(वा०) गवादिषु विन्देः संज्ञायाम्।<br>गाम् = भुवम्, धेनुम्, स्वर्गम्, वेदम् वा विन्दति = लभते, प्राप्नोति वा इति गोविन्दः।<br>अराणि = अरसदृशानि पुष्पपत्राणि विन्दति इति अरविन्दः, अरविन्दं वा।। | अनुपसर्गात्१४० |

| | | |
|---|---|---|
| शः १३७<br>अनुपसर्गात्<br>१३८ | १३९. ददाति-दधात्योर्विभाषा<br>दधाति-दधात्योर्विभाषा शप्रत्ययो भवति, उपसर्गात्परयोस्तु न भवति।<br>ददातीति ददः। पक्षे 'श्याऽऽद्व्यध०' इत्यादिसूत्रेण णः, युक् दायः इति रूपं भवति।<br>दधातीति दधः। पक्षे पूर्ववद् धायः। अनुपसर्गादित्येव - प्रदः, प्रधः।<br>'आतश्चोपसर्गे' इति कप्रत्ययः। | विभाषा १४० |
| विभाषा १३९<br>अनुपसर्गात्<br>१३८ | १४०. ज्वलिति-कसन्तेभ्यो णः<br>इतिशब्दः आद्यर्थः। 'ज्वलदीप्तौ' इत्यारभ्य 'कस गतौ' इत्येवमन्तेभ्यो धातुभ्यो विभाषा णप्रत्ययो भवति, अनुपसर्गात्।<br>ज्वलतीति ज्वालः। पक्षे पचादित्वादच् - ज्वलः।<br>चलतीति - चालः। पक्षे - चलाचलः, चलः।<br>अनुपसर्गादित्येव - प्रज्वलः। पचादित्वादच्।<br>(वा०) तनोतेर्णस्योपसंख्यानं कर्त्तव्यम्।<br>अवतनोतीति अवतानः। | णः १४३ |
| णः १४० | १४१. श्याद्-व्यधास्रु-संस्रुवतीणवसा-वहृ-लिह-श्लिष-श्वसश्च<br>श्या, आत्, व्यध, आस्रु, संस्रु, अतीण, अवसा, अवहृ, लिह, श्लिष, श्वस् - इत्येतेभ्यो णप्रत्ययो भवति।<br>श्या - श्यैङ् गतो - अवश्यायः। प्रतिश्यायः।<br>आत् - आदन्तेभ्यः - दायः, धायः।<br>व्यध ताडने - व्याधः।<br>आस्रु - आङ्पूर्वः स्रु गतौ - आस्रावः।<br>संस्रु - सम्पूर्वः स्रु गतौ - संस्रावः।<br>अतीण् - अतिपूर्वः इण् गतौ - अत्यायः।<br>अवसा - अवपूर्वः षोऽन्तकर्मणि - अवसायः।<br>अवहृ - अवपूर्वः हृञ् हरणे - अवहारः।<br>लिह आस्वादने - लेहः।<br>श्लिष आलिङ्गने - श्लेषः।<br>श्वस प्राणने - श्वासः।<br>श्यैङोऽवस्यतेश्चादन्तत्वादेव सिद्धे पृथग्ग्रहणमुपसर्गे 'आतश्चोपसर्गे' इति सूत्रेण प्राप्तस्य कप्रत्ययस्य बाधनार्थम्। | |
| णः १४० | १४२. दुन्योरनुपसर्गे<br>दुन्योः णप्रत्ययो भवति, उपसर्गे उपपदे सति तु णप्रत्ययो न भवति।<br>टु दु उपतापे - दुनोतीति दावः।<br>णीञ् प्रापणे - नयतीति नायः।<br>अनुपसर्गे इति किम्? प्रदवः। प्रणयः। पचाद्यच्। | |

Comment: .k% 13-1-3-143

| | | |
|---|---|---|
| णः १४० | १४३. विभाषा ग्रहः<br>ग्रहो णप्रत्ययो विभाषा भवति अनुपसर्गे। अचोऽपवादः।<br>ग्रह उपादाने - गृह्णातीति ग्राहः।<br>पक्षे पचादित्वाद् अच् - ग्रहः।<br>व्यवस्थितविभाषा चेयम्। तेन जलचरे नित्यं णः - ग्राहः, ज्योतिषि तु नेष्यते - ग्रहः।<br>(वा०) भवतेश्चेति वक्तव्यम्।<br>भवतीति भावः, भवः।<br>भावः = पदार्थः, भवः = संसारो, देवश्च। | ग्रहः १४४ |
| ग्रहः १४३ | १४४. गेहे कः<br>गेहेऽर्थे ग्रहः कप्रत्ययो भवति।<br>गृह्णाति धान्यादिकमिति गृहम्। | |
| | १४५. शिल्पिनि ष्वुन्<br>धातोः ष्वुन्प्रत्ययो भवति शिल्पिनि कर्तृवाचिनि।<br>क्रियासु कौशलं शिल्पम्, तदस्यास्तीति शिल्पी।<br>(वा०) नृति-खनि-रञ्जिभ्यः परिगणनं कर्त्तव्यम्।<br>नृती गात्रविक्षेपे - नर्तकः। षित्त्वात् स्त्रियां ङीषि कृते - नर्तकी।<br>खनु विदारणे - खनकः। खनकी।<br>रञ्ज रागे - रजकः। रजकी।<br>"रजक-रजन-रजःसूपसंख्यानं कर्त्तव्यम्" इति वार्तिकेन नलोपः। | शिल्पिनि १४७ |
| शिल्पिनि १४५ | १४६. गस्थकन्<br>गः (गैधातोः) थकन्प्रत्ययो भवति शिल्पिनि।<br>कै, गै शब्दे - गाथकः। गाथिका। | गः १४७ |
| शिल्पिनि १४५<br>गः १४६ | १४७. ण्युट् च<br>गः ण्युट् च भवति शिल्पिनि।<br>गायनः। गायनी।<br>योगविभाग उत्तरार्थः। | ण्युट् १४८ |
| ण्युट् १४७ | १४८. हश्च व्रीहिकालयोः<br>हश्च ('हा' इत्यस्य पञ्चम्यन्तं रूपम्) ण्युट्प्रत्ययो भवति व्रीहिकालयोः।<br>व्रीहौ - ओहाक् त्यागे - जहात्युदकमिति हायनो नाम व्रीहिः।<br>काले - ओहाङ् गतौ - जिहीते= भावान् (पदार्थान्) परिच्छेदकत्वेन प्राप्नोतीति हायनः संवत्सरः। | |

|  | १४९. प्रु-सृल्वः समभिहारे वुन्<br>प्रु, सृ, लू – इत्येतेभ्यः वुन्प्रत्ययो भवति समभिहारे। समभिहारशब्देनात्र साधुकारित्वमिति लक्ष्यार्थो गृह्यते। अयमाशयः – समभिहारशब्दस्य मुख्यार्थो भवति – पौनः पुन्यं, भृशत्वं चेति। यश्च यां क्रियां पुनः पुनरनुतिष्ठति तस्य तत्र प्रायेण कौशलमुपजायते, तेन समभिहारशब्दस्य साधुकारित्वमिति लक्ष्यार्थः सम्पद्यते। अतः साधुकारिणि वुन्प्रत्ययस्य विधानात् यः सकृदपि सुष्ठु करोति तत्र वुन् भवति; बहुशोऽपि यो दुष्टं करोति तत्र वुन् न भवति।<br>प्रुङ् गतौ – प्रवकः।<br>सृ गतौ – सरकः।<br>लूञ् छेदने – लवकः। | वुन् १५० |
|---|---|---|
| वुन् १४९ | १५०. आशिषि च<br>आशिषि गम्यमानायां च धातोः वुन् प्रत्ययो भवति।<br>जीवतादिति जीवकः। नन्दतादिति नन्दकः।<br>अप्राप्तस्याभीष्टस्य वस्तुनः प्रार्थना आशीः। सा चेह क्रियाविषयः। जीवनक्रियायाः, नन्दनक्रियायाश्च अयं कर्ता भवेदित्येवमाशास्यते।<br>जीवनं, नन्दनं च ते भूयादित्यर्थः। |  |

। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां तृतीयाध्यायस्य प्रथमः पादः ।।

।। श्रीः ।।

## ।। अथ तृतीयाध्यायस्य द्वितीयपादः ।।

| | | |
|---|---|---|
| धातोः ३.१.९१ | १. कर्मण्यण्<br>कर्मण्युपपदे धातोरण् प्रत्ययो भवति ।<br>कुम्भं करोतीति कुम्भकारः । काण्डं लुनातीति काण्डलावः ।<br>वेदमध्येतीति वेदाध्यायः । | कर्मणि ५६<br>अण् २ |
| कर्मणि १ अण् १<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१ | २. ह्वा-वा-मश्च<br>कर्मण्युपपदे ह्वा, वा, मा - इत्येतेभ्यःधतुभ्यो ऽपि अण् प्रत्ययो भवति।<br>'आतोऽनुपसर्गे कः' (३.२.३) इत्यस्य पूर्वापवादः।<br>ह्वा - ह्वेञ् स्पर्धायां शब्दे च - स्वर्गं ह्वयति = अभिभवितुमिच्छतीति स्वर्गह्वायः।<br>वा - वेञ् तन्तुसन्ताने - तन्तून् वयतीति तन्तुवायः।<br>मा - माङ् माने (दिवादिः, जुहोत्यादिश्च), मेङ् प्रणिदाने च (भ्वादिः) - धान्यं मायते, मिमीते, मयते वा धान्यमायः। 'मा माने' इत्यस्य सम्भावनार्थस्य त्वकर्मकत्वान्न ग्रहणम्। | |
| कर्मणि १<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१ | ३. आतोऽनुपसर्गे कः<br>कर्मण्युपपदे आतो(आकारान्तात्) धातोः कप्रत्ययो भवति, न तु उपसर्गे सति। अणोऽपवादः।<br>गां ददातीति गोदः।<br>पार्ष्णिः = पादमूलभागः, तं त्रायते इति पार्ष्णित्रम्।<br>अनुपसर्गे इति किम्? गोसंदायः। वडवासंदायः। | अनुपसर्गे ६०<br>कः७ |

| | | |
|---|---|---|
| कः ३<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१ | ४. सुपि स्थः<br>सुप्युपपदे स्थः कः प्रत्ययो भवति।<br>समे, समं, समेन वा तिष्ठतीति समस्थः।<br>विषमे, विषमं, विषमेण वा तिष्ठतीति विषमस्थः।<br>अत्र सुपीति योगो विभज्यते।<br>तत्र 'सुपि' इत्यस्यायमर्थः - सुप्युपपदे आतो धातोः कप्रत्ययो भवति। इति।<br>तेन द्वाभ्यां पिबतीति द्विपः, कच्छाभ्याम् = पार्श्वस्थभागाभ्यां पिबतीति कच्छपः इत्यादावपि कप्रत्ययः सिध्यति।<br>ततः - 'स्थः' इति। अस्य चायमर्थः - सुपि स्थः कप्रत्ययो भवति।<br>किमर्थमिदम्? कर्तरि पूर्वयोगः, भावेऽपि यथा स्यादिति द्वितीययोगः। तेन आखूनाम् उत्थानमित्यर्थे आखूत्थः, शलभानामुत्थानमित्यर्थे शलभोत्थः इत्यादिप्रयोगाः सिध्यन्ति।<br>इत उत्तरं 'कर्मणि' इति, 'सुपि' इति च द्वयमप्यनुवर्तते। तत्र सकर्मकेषु धातुषु 'कर्मणि' इत्येतदुपतिष्ठते, अन्यत्र 'सुपि' इति।<br>तद्यथा- 'तुन्दशोकयोः परिमृजापनुदोः' इत्यत्र कर्मणीत्युपतिष्ठते, 'स्तम्बकर्णयोः रमिजपोः' (३.२.१३) इत्यत्र 'सुपि' इति। | सुपि ८३ |

| | | |
|---|---|---|
| कर्मणि १ कः ३<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१ | ५. तुन्द-शोकयोः परिमृजापनुदोः<br>तुन्द-शोकयोः कर्मणोरुपपदयोः परिमृज, अपनुद्-इत्येतयोः कप्रत्ययो भवति।<br>'आतोऽनुपसर्गे कः' इत्यस्यापवादः। 'अनुपसर्गे' इत्यस्याधिकारेऽपि ये धातवः उपसर्गपूर्वकाः पठिताः तत्र अनुपसर्गे इत्यस्याप्रवृत्तिः।<br>(वा०) आलस्य-सुखाहरणयोरिति वक्तव्यम्।<br>आलस्ये, सुखोत्पादने च गम्यमाने प्रकृतसूत्रेण कप्रत्ययो भवति।<br>तुन्दम् =उदरं परिमार्ष्टि इति तुन्दपरिमृजोऽलसः।<br>शोकम् अपनुदति इति शोकापनुदः पुत्रः ;<br>सुखस्याहर्त्तेत्यर्थः।<br>अलसादन्यत्र तुन्दपरिमार्ज एव। एवमेव यः संसाराऽसारत्वोपदेशेन शोकमपनुदति स शोकापनोद एव।<br>(वा०) कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्।<br>मूलानि विभुजति = विमर्दयतीति मूलविभुजो रथः।<br>नखानि मुञ्चन्तीति नखमुचानि धनूंषि। काकेभ्यो गूहितव्या इति काकगूहास्तिलाः, कर्मणि कप्रत्ययः। कौ = पृथिव्यां, मोदते इति कुमुदम्।<br>आकृतिगणोऽयम्। तेन महीध्रः, कुलध्रः, गिलतीति गिलः, शिरसि रोहतीति शिरोरुहाः केशाः इत्यादिशब्दाः सिद्धाः भवन्ति। | |
| कर्मणि १ कः ३<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१ | ६. प्रे दा-ज्ञः<br>कर्मण्युपपदे प्रे दा-ज्ञः(प्रपूर्वाभ्यां दा-ज्ञाधातुभ्यम्) कप्रत्ययो भवति।<br>सोपसर्गार्थ अयमारम्भः।<br>सर्वप्रदः। पथिप्रज्ञः।<br>प्र इति किम्? गोसन्दायः। अत्र कर्मण्यण्, 'आतो युक्' इति युक्। | |
| कर्मणि १ कः ३<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१ | ७. समि ख्यः<br>कर्मण्युपपदे समि ख्यः(सम्पूर्वात् चक्षिङः ख्याञ् इत्यस्य) कप्रत्ययो भवति।<br>गां संचष्टे गोसंख्यः। | |

| | | |
|---|---|---|
| कर्मणि १<br>अनुपसर्गे ३<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१ | ८. गापोष्टक्<br>कर्मण्युपपदे गापोष्टक् प्रत्ययो भवति, न तु उपसर्गे सति। कस्यापवादः।<br>साम गायतीति सामगः। स्त्रियां तु सामगी इति, टित्त्वान्ङीप्।<br>उपसर्गे तु सामसंगाय इति।<br>(वा०) पिबतेः सुराशीध्वोरिति वक्तव्यम्।<br>सुरां पिबतीति सुरापः। सुरापी।<br>शीधुम् = आसवं पिबतीति शीधुपः। शीधुपी।<br>अनुपसर्गे इत्येव - सामसंगायः।<br>कर्मण्यण्, युक्। | |
| कर्मणि १<br>अनुपसर्गे ३<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१ | ९. हरतेरनुद्यमनेऽच्<br>कर्मण्युपपदे अनुद्यमनेऽर्थे वर्तमानाद् हरतेर्धातोरच् प्रत्ययो भवति।<br>उद्यमनम् = उत्थाप्य ग्रहणम्, तदन्यद् अनुद्यमनम्।<br>अंशं हरतीति अंशहरः। अंशस्य स्वीकर्त्तेत्यर्थः। एवमेव रिक्थं = धनं हरति इति रिक्थहरः।<br>अनुद्यमने इति किम्? भारहारः। भारम् उत्थाप्य गृह्णातीत्यर्थः।<br>(वा०) अच्प्रकरणे शक्ति- लाङ्गलाङ्कुश- यष्टि-तोमर -घट-घटी-धनुष्षु ग्रहेरुपसंख्यानम्।<br>शक्तिग्रहः। लाङ्गलग्रहः। अङ्कुशग्रहः। यष्टिग्रहः। तोमरग्रहः। घटग्रहः। घटीग्रहः। धनुर्ग्रहः।<br>(वा०) सूत्रे च धार्यर्थे।<br>सूत्रग्रहः। सूत्रं धारयतीत्यर्थः।<br>धार्यर्थभिन्ने सूत्रग्राह इत्येव;<br>सूत्रं केवलमुपादत्ते न तु धारयतीत्यर्थः। | हरतेः११ अच्१५ |
| कर्मणि १<br>हरतेः ९<br>अच् ९<br>अनुपसर्गे ३<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१ | १०. वयसि च<br>वयसि गम्यमाने च कर्मण्युपपदे हरतेरच् प्रत्ययो भवति। उद्यमनार्थोऽयमारम्भः।<br>वयः कालकृता शरीरावस्था यौवनादिः।<br>यदुद्यमनं क्रियमाणं, सम्भाव्यमानं वा वयो गमयति तत्रायं विधिः।<br>अस्थिहरः श्वा। कवचहरः क्षत्रियकुमारः। | |

| | | |
|---|---|---|
| कर्मणि १ हरतेः ६<br>अच् ६<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१<br>अनुपसर्गे ३ | **११. आङि ताच्छील्ये**<br>कर्मण्युपपदे आङि हरतेरच् प्रत्ययो भवति, ताच्छील्ये गम्यमाने।<br>ताच्छील्यम् = तत्स्वभावता।<br>पुष्पाहरः। फलानपेक्षा प्रवृत्तिरस्येत्यर्थः।<br>ताच्छील्य इति किम्? भारमाहरतीति भाराहारः। | |
| कर्मणि १ अच् ६<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१<br>अनुपसर्गे ३ | **१२. अर्हः**<br>कर्मण्युपपदे अर्हः अच् प्रत्ययो भवति।<br>अर्ह पूजायाम् – पूजामर्हतीति पूजार्हः, स्त्रियां तु पूजार्हा इति।<br>एवमेव – मालार्हः, मालार्हा। गन्धार्हः, गन्धार्हा। | |
| सुपि ४ अच् ६<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१<br>अनुपसर्गे ३ | **१३. स्तम्ब-कर्णयोः रमि-जपोः**<br>सुबन्तयोः स्तम्ब-कर्णयोः उपपदयोर्यथासंख्यं रमिजपोरच् प्रत्ययो भवति।<br>(वा०) हस्ति-सूचकयोरिति वक्तव्यम्।<br>स्तम्बे रमते इति स्तम्बेरमः हस्ती।<br>कर्णे जपतीति कर्णेजपः सूचकः। सूचकः= निन्दकः।<br>हस्ति-सूचकयोरिति किम्? स्तम्बे रन्ता। कर्णे जपिता मशकः। | |
| अच् ६<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१<br>अनुपसर्गे ३ | **१४. शमि धातोः संज्ञायाम्**<br>शमि उपपदे धातोः अच् प्रत्ययो भवति संज्ञायां विषये।<br>शंकरः। शंभवः। शंवदः।<br>धात्वधिकारे पुनः धातुग्रहणं कृञो हेत्वादिष्वपि टप्रतिप्रतिषेधार्थम्। तेन शंकरा नाम परिव्राजिका। शंकरा नाम शकुनिका इत्यादौ अजेव भवति न तु 'ताच्छील्ये कृञो हेतु-ताच्छील्यानुलोम्येषु'(३.२.२०) इति सूत्रेण टप्रत्ययः। | |
| सुपि ४ अच् ६<br>धातोः ३.१.९१<br>प्रत्ययः३.१.१<br>अनुपसर्गे ३ | **१५. अधिकरणे शेतेः**<br>अधिकरणे सुबन्ते उपपदे शेतेरच् प्रत्ययो भवति।<br>खे शेते इति खशयः। गर्त्तशयः।<br>(वा०) पार्श्वादिषूपसंख्यानम्।<br>पार्श्वाभ्यां शेते इति पार्श्वशयः।<br>उदरशयः। पृष्ठशयः।<br>(वा०) उत्तानादिषु कर्तृषु।<br>उत्तानः शेते उत्तानशयः। अवमूर्द्धा शेते अवमूर्द्धशयः।<br>(वा०) गिरौ डश्छन्दसि।<br>गिरौ शेते गिरिशः। गिरौ आस्ते इत्यर्थः। | अधिकरणे १६ |

| | | |
|---|---|---|
| अधिकरणे१५<br>सुपि४ | १६. चरेष्टः<br>अधिकरणे सुप्युपपदे चरेष्टप्रत्ययो भवति।<br>कुरुषु चरतीति कुरुचरः। मद्रचरः। कुरुचरी। मद्रचरी।<br>प्रत्ययान्तरकरणं टित्त्वान्ङीबर्थम्। | चरेः१७ टः२३ |
| चरेष्टः १६<br>अनुपसर्गे३<br>कर्मणि१<br>सुपि४ | १७. भिक्षा-सेनादायेषु च<br>भिक्षासेनादायेषूपपदेषु च चरेष्टप्रत्ययो भवति।<br>भिक्षां चरतीति भिक्षाचरः।<br>चरिरत्र तत्पूर्वके अर्जने वर्तते। चरणेन भिक्षामर्जयतीत्यर्थः।<br>सेनां चरतीति सेनाचरः। सेनामध्ये प्रविशतीत्यर्थः।<br>आदाय चरति इति आदायचरः। | |
| टः १६<br>अनुपसर्गे३<br>धातोः<br>सुपि४ | १८. पुरोऽग्रतोऽग्रेषु सर्तेः<br>पुरस्, अग्रतस्, अग्रे - इत्येतेषूपपदेषु सर्तेष्ट- प्रत्ययो भवति।<br>पुरतः संरतीति पुरःसरः। अग्रतःसरः। अग्रेसरः। | सर्तेः १६ |
| सर्तेः १८ टः १६<br>सुपि४ | १९. पूर्वे कर्तरि<br>पूर्वशब्दे कर्तृवाचिन्युपपदे सर्तेष्टप्रत्ययो भवति।<br>पूर्वो भूत्वा सरतीति पूर्वसरः।<br>कर्तरीति किम्? पूर्वं देशं सरतीति पूर्वसारः। | |
| कर्मणि १ टः १६ | २०. कृञो हेतु-ताच्छील्यानुलोम्येषु<br>कर्मण्युपपदे कृञष्टप्रत्ययो भवति हेतु-ताच्छील्यानुलोम्येषु गम्यमानेषु।<br>हेतुः = कारणम्। ताच्छील्यम् = तत्स्वभावता।<br>आनुलोम्यम्= अनुकूलता; आराध्यचित्ता-नुवर्तनमित्यर्थः।<br>हेतौ - द्रारिद्रचं पुरुषस्य विक्लवकरम्। यशस्करी विद्या। कुलकरं धनम्।<br>ताच्छील्ये - श्राद्धकरः। श्राद्धक्रियाशील इत्यर्थः।<br>आनुलोम्ये - वचनकरः। गुर्वादिवचनानुवर्तीत्यर्थः।<br>हेत्वादिष्विति किम्? कुम्भकारः। नगरकारः। | कृञः २४ |

| | | |
|---|---|---|
| कर्मणि १ सुपि४<br>कृञः २० टः१६ | २१. दिवा-विभा-निशा-प्रभा-भास्-कारान्तानन्तादि-बहु-नान्दी-किं-लिपि-लिबि-बलि-भक्ति-कर्तृ-चित्र-क्षेत्र-संख्या-जङ्घा-बाह्वहर्यत्-तद्धनुररुःषु<br>दिवादिषूपपदेषु कृञष्टप्रत्ययो भवति।<br>'कर्मणि' 'सुपि' इति च द्वयमप्यनुवर्तते; तत्र यथायोगं सम्बन्धः। अहेत्वाद्यर्थ आरम्भः।<br>दिवा = अहनि प्राणिनश्चेष्टायुक्तान् करोतीति दिवाकरः। विभां करोतीति विभाकरः।<br>एवमेव - निशाकरः। प्रभाकरः। भास्करः। कर एव कारः, प्रज्ञादित्वात् स्वार्थिकोऽण्, कारं करोतीति कारकरः।<br>अन्तकरः। अनन्तकरः। आदिकरः। बहुकरः।<br>किम् = किंचित् करोतीति किङ्करः। लिपि-लिबिशब्दौ पर्यायौ-लिपिकरः। लिबिकरः। बलिकरः। भक्तिकरः। कर्तृकरः। चित्रकरः। क्षेत्रकरः।<br>संख्या- एककरः, द्विकरः, त्रिकरः। जङ्घादि-जङ्घाकरः। बाहुकरः। अहस्करः। यत्करः। तत्करः। धनुष्करः। अरुष्करः। अरुः = व्रणम्।<br>(वा०) किंयत्तद्बहुषु कृञोऽज्विधानम्।<br>किंकरा। यत्करा। तत्करा। बहुकरा।<br>वार्तिकेनाज्विधानं स्त्रियां 'टिड्ढाणञ्०' इति ङीबभावार्थम्। | |
| कर्मणि १<br>कृञः २० टः१६ | २२. कर्मणि भृतौ<br>कर्मणि इति स्वरूपग्रहणम्। कर्मवाचिनि कर्मशब्दे उपपदे कृञष्टप्रत्ययो भवति भृतौ गम्यमानायाम्<br>भृतिः = वेतनम्।<br>कर्म करोतीति कर्मकरः। भृतक इत्यर्थः।<br>भृताविति किम्? कर्मकारः। | |

| | | |
|---|---|---|
| कृञः २० टः१६ | **२३. न शब्द-श्लोक-कलह-गाथा-वैर-चाटु-सूत्र-मन्त्र-पदेषु**<br>शब्दादिषूपपदेषु कृञष्टप्रत्ययो न भवति। हेत्वादिषु प्राप्तः प्रतिषिध्यते।<br>शब्दकारः। श्लोककारः। कलहकारः। गाथाकारः। वैरकारः। चाटुकारः। सूत्रकारः। मन्त्रकारः। पदकारः। एषु कर्मण्यण्। | |
| कर्मणि १ कृञः२० | **२४. स्तम्ब-शकृतोरिन्**<br>स्तम्ब-शकृतोः कर्मणोरुपपदयोः कृञः इन् प्रत्ययो भवति।<br>(वा०) व्रीहिवत्सयोरिति वक्तव्यम्।<br>स्तम्बम् = तृणनिचयं करोतीति स्तम्बकरिः व्रीहिः।<br>शकृत् = विष्ठां करोतीति शकृत्करिर्वत्सः।<br>व्रीहिवत्सयोरिति किम्? स्तम्बकारः। शकृत्कारः।<br>अत्र कर्मण्यण्। | |
| कर्मणि १ इन् २४ | **२५. हरतेर्दृति-नाथयोः पशौ**<br>दृतिनाथयोः कर्मणोरुपपदयोः हरतेरिन्प्रत्ययो भवति पशौ वाच्ये।<br>दृतिः = चर्मभस्त्रिका, तां हरतीति इति दृतिहरिः श्वा।<br>नाथः = नासारज्जुः, तं हरतीति नाथहरिः वृषभः।<br>पशाविति किम्? दृतिहारः। नाथहारः।<br>अत्र कर्मण्यण्। | |
| इन् २४ | **२६. फलेग्रहिरात्मम्भरिश्च**<br>फलेग्रहिः, आत्मम्भरिः-इत्येतौ शब्दौ निपात्येते।<br>फलानि गृह्णातीति फलेग्रहिर्वृक्षः। फलशब्दस्यैदन्तत्वं, ग्रहेरिन्प्रत्ययश्च निपात्यते।<br>आत्मानं बिभर्तीति आत्मम्भरिः।<br>आत्मशब्दस्य मुमागमः, भृञ इन्प्रत्ययश्च निपात्यते।<br>अनुक्तसमुच्चयार्थश्चकारः। तेन कुशिम्भरिः, उदरम्भरिः - इत्यादिशब्दा अपि सिध्यन्ति। | |
| कर्मणि १ इन् २४ | **२७. छन्दसि वन-सन-रक्षि-मथाम्**<br>कर्मण्युपपदे वन, सन, रक्षि, मथ् - इत्येतेषाम् इन्प्रत्ययो भवति छन्दसि।<br>वन, षण संभक्तौ, रक्ष पालने - ब्रह्मवनिं त्वा क्षत्रवनिम्। गोसनिं यौ पथिरक्षी श्वानौ।<br>मथे विलोडने - हविर्मथीनाम्। | |

| | | |
|---|---|---|
| कर्मणि १ | २८. एजेः खश्<br>कर्मण्युपपदे एजेः खश्प्रत्ययो भवति।<br>खकारो मुमर्थः, शकार सार्वधातुकसंज्ञार्थः।<br>एजृ कम्पने, हेतुमण्णिच् - अङ्गमेजयतीति अङ्गमेजयः। जनान् एजयतीति जनमेजयः।<br>'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः। | |
| कर्मणि १<br>खश् २८ | २९. नासिका-स्तनयोर्ध्माधेटोः<br>नासिका-स्तनयोः कर्मणोरुपपदयोः ध्माधेटोः खश्प्रत्ययो भवति।<br>यथासंख्यमत्र नेष्यते, अल्पाच्तरस्य पूर्वाप्रयोगकरणात्।<br>(वा०) स्तने धेटः।<br>धेट् पाने - स्तनं धयतीति स्तनन्धयः। धेटष्टित्वात् स्त्रियां ङीप् प्रत्ययो भवति - स्तनन्धयी।<br>(वा०) नासिकायां तु ध्मश्च, धेटश्च।<br>नासिकन्धमः। नासिकन्धयः।<br>'खित्यनव्ययस्य' इति सूत्रेण पूर्वपदस्य ह्रस्वः, ततो मुम्। | |
| कर्मणि १<br>खश् २८<br>ध्माधेटोः२९ | ३०. नाडी-मुष्ट्योश्च<br>नाडी-मुष्ट्योश्च कर्मणोरुपपदयोः ध्मा-धेटोः खश्प्रत्ययो भवति।<br>अत्रापि यथासंख्यं नेष्यते, घ्यन्तस्य पूर्वाप्रयोगकरणात्।<br>नाडिन्धमः; नाडिन्धयः।<br>मुष्टिन्धमः; मुष्टिन्धयः। | |
| कर्मणि १<br>खश् २८ | ३१.उदि कूले रुजिवहोः<br>कूले कर्मण्युपपदे उदि रुजि-वहोः खश्प्रत्ययो भवति।<br>रुजो भङ्गे - कूलम् उद्रुजति इति कूलमुद्रुजो रथः।<br>वह प्रापणे - कुलमुद्वहतीति कुलमुद्वहा नदी। | |
| कर्मणि १<br>खश् २८ | ३२.वहाभ्रे लिहः<br>वहाभ्रे कर्मण्युपपदे लिहः खश्प्रत्ययो भवति।<br>वहः = स्कन्धस्तं लेढि इति वहंलिहो गौः।<br>अभ्रं = मेघं लेढि इति अभ्रंलिहो वायुः। | |
| कर्मणि १<br>खश् २८ | ३३.परिमाणे पचः<br>परिमाणम् = प्रस्थादि, तस्मिन् कर्मण्युपपदे पचः खश् प्रत्ययो भवति।<br>प्रस्थं पचतीति प्रस्थम्पचा स्थाली। द्रोणम्पचः, खारिम्पचः कटाहः। | |

| | | |
|---|---|---|
| कर्मणि १<br>पचः३३<br>खश् २८ | **३४. मित-नखे च**<br>मित-नखे च कर्मण्युपपदे पचः खश्प्रत्ययो भवति।<br>मितं पचतीति मितम्पचा ब्राह्मणी।<br>नखं पचतीति नखम्पचा यवागूः।<br>पचिरत्र तापवाची, धातूनामनेकार्थत्वात्। | |
| कर्मणि १<br>खश् २८ | **३५. विध्वरुषोस्तुदः**<br>विध्वरुषोः कर्मणोरुपपदयोः तुदः खश् प्रत्ययो भवति।<br>तुद व्यथने - विधुं तुदति इति विधुन्तुदः, राहुरित्यर्थः।<br>अरुः = मर्म, व्रणं वा, तत् तुदति इति अरुन्तुदः। मुमि कृते संयोगान्तलोपेन सकारस्य लोपः। | |
| कर्मणि १<br>खश् २८ | **३६. असूर्य-ललाटयोर्दृशितपोः**<br>असूर्य-ललाटयोः कर्मणोरुपपदयोः दृशि-तपोः खश् प्रत्ययो भवति।<br>सूर्यमपि न पश्यन्तीति असूर्यम्पश्याः राजदाराः।<br>ललाटन्तपतीति ललाटन्तपः आदित्यः। | |
| | **३७.उग्रम्पश्येरंमद-पाणिंधमाश्च**<br>उग्रम्पश्य, इरम्मद, पाणिन्धम - इत्येते शब्दा निपात्यन्ते।<br>उग्रम्पश्यतीति उग्रम्पश्यः। अत्र निपातनात् खश्प्रत्ययः।<br>इरा = उदकम्, तया माद्यति = दीप्यते अबिन्धनत्वादिति इरम्मदः, मेघज्योतिरित्यर्थः। इह निपातनात् खश्, श्यनोऽभावश्च।<br>पाणयो ध्मायन्तेऽस्मिन्निति पाणिन्धमोऽध्वा, अन्धकाराद्यावृत इत्यर्थः। तत्र हि सर्पाद्यपनोदाय पाणयः शब्द्यन्ते।<br>अत्र निपातनात् खश्प्रत्ययः। | |

| | | |
|---|---|---|
| कर्मणि १ | ३८. प्रियवशे वदः खच्<br>प्रियवशे कर्मण्युपपदे वदः खच् भवति।<br>प्रियं वदतीति प्रियंवदः।<br>वशं वदतीति वशंवदोऽनुकूलः।<br>(वा०) खच्प्रकरणे गमेः सुप्युपसंख्यानम्।<br>मितं गच्छतीति मितंगमो हस्ती। मितंगमा हस्तिनी।<br>(वा०) विहायसो विह च।<br>विहायसा गच्छतीति विहंगमः।<br>(वा०) खच्च डिद् वा वक्तव्यः।<br>विहंगः। विहंगमः।<br>(वा०) डे च विहायसो विहादेशो वक्तव्यः।<br>विहगः।<br>एवं हि विहायसा गच्छतीत्यर्थे विहगः, विहंगः, विहंगम इति रूपत्रयं भवति। | खच् ४७ |
| कर्मणि १<br>खच् ३८ | ३९. द्विषत्परयोस्तापेः<br>द्विषत्परयोः कर्मणोरुपपदयोः तापेः खश्प्रत्ययो भवति।<br>द्विषन्तम्=शत्रुं तापयतीति द्विषन्तपः।<br>परम् = शत्रुं तापयतीति परन्तपः। 'खचि ह्रस्वः' इति सूत्रेण खच्परे णौ उपधाया ह्रस्वः। | |
| कर्मणि १<br>खच् ३८ | ४०. वाचि यमो व्रते<br>वाचि कर्मणि उपपदे यमः खच् प्रत्ययो भवति, व्रते गम्यमाने।<br>शास्त्रे, शास्त्रेण वा विहितः संकल्पविशेषो व्रतम्।<br>वाचं यच्छति (यम उपरमे) इति वाचंयमः, मौनव्रतीत्यर्थः। खचि कृते 'वाचंयम-पुरन्दरौ' इति सूत्रेण निपातनात् पूर्वपदस्यामन्तत्वम्।<br>व्रत इति किम्? वाग्यामः। यो हि आशक्त्यादिना वाचं यच्छति, अत्र कर्मण्यण्। | |

| | | |
|---|---|---|
| कर्मणि १<br>खचू ३८ | ४१. पूः-सर्वयोर्दारि-सहोः<br>पूःसर्वयोः कर्मणोरुपपदयोः दारि-सहोः खच् प्रत्ययो भवति।<br>'दारि' इति - 'दॄ विदारणे' इति धातोः ण्यन्तस्य ग्रहणम्, न 'दॄ भये', 'दृङ् आदरे' इत्येतयोरित्युपदेशः' इति पदमञ्जर्याम्।<br>पुरं दारयतीति पुरन्दरः।<br>'वाचंयम-पुरन्दरौ' इति सूत्रेण पूर्वपदस्यामन्तत्वम्,'खचि ह्रस्वः' इत्यनेन खच्परे णौ उपधायाः ह्रस्वत्वं च।<br>सर्वं सहते इति सर्वंसहो राजा।<br>सर्वं सम्पादयितुं समर्थ इत्यर्थः।<br>(वा०) भगे च दारेरिति वक्तव्यम्।<br>भगं दारयतीति भगन्दरः। | |
| कर्मणि १<br>खच् ३८ | ४२. सर्व-कूलाभ्र-करीषेषु कषः<br>सर्वादिषु कर्मसूपपदेषु कषः खच् प्रत्ययो भवति।<br>कष हिंसार्थः - सर्वं कषतीति सर्वङ्कषः खलः।<br>कूलङ्कषा नदी। अभ्रंकषो गिरिः।<br>करीषंकषा वात्या। | |
| कर्मणि १<br>खच् ३८ | ४३. मेघर्ति-भयेषु कृञः<br>मेघर्तिभयेषु कर्मसूपपदेषु कृञः खच् प्रत्ययो भवति।<br>मेघङ्करः। ऋतिङ्करः, ऋतिः गमनम्। भयङ्करः।<br>(वा०) उपपदविधौ भयादिग्रहणं तदन्तविधिं प्रयोजयति।<br>अभयंकरः। | कृञः ४४ |
| कर्मणि १<br>कृञः ४३<br>खच् ३८ | ४४. क्षेम-प्रिय-मद्रेऽण् च<br>क्षेम-प्रिय-मद्रे कर्मण्युपपदे कृञः अण्प्रत्ययो भवति, चकारात् खच्च।<br>क्षेमकारः; क्षेमंकरः। प्रियकारः; प्रियंकरः। मद्रकारः; मद्रंकारः।<br>'वा' इति वक्तव्ये पुनरण्ग्रहणं हेत्वादिषु टप्रतिषेधार्थम्। | |

| | | |
|---|---|---|
| कर्मणि १ सुपि ४ खच् ३८ | **४५. आशिते भुवः करणभावयोः**<br>सुबन्ते आशिते उपपदे भुवः(भूधातोः) करणभावयोः खच् प्रत्ययो भवति।<br>आशितशब्दे 'अश् भोजने' इत्यतो ण्यन्तात्प्रयोज्ये कर्मणि क्तः।<br>करणे - आशितो भवत्यनेनेति आशितम्भवः ओदनः। यावता ओदनेनातिथ्यादिः भोजितो भवति स ओदनः आशितम्भव इत्युच्यते।<br>भावे - आशितस्य भवनम्, इति आशितम्भवं वर्तते। | |
| कर्मणि १ सुपि ४ खच् ३८ | **४६. संज्ञायां भृ-तॄ-वृ-जि-धारि-सहि-तपि-दमः**<br>संज्ञायां 'भृ' इत्यादिभ्यः खच् प्रत्ययो भवति। 'कर्मणि' इति, 'सुपि' इति च प्रकृतं संज्ञावशाद् यथासम्भवं सम्बध्यते।<br>भृ - विश्वं बिभर्तीति विश्वम्भरो विष्णुः। विश्वम्भरा पृथिवी।<br>तॄ- रथनतरं साम। इह रथेन तरतीति व्युत्पत्तिमात्रम्, न त्ववयवार्थानुगमः।<br>वृ - पतिं वृणीते, वृणुते वा पतिंवरा कन्या।<br>जि - शत्रुं जयतीति शत्रुञ्जयः। धनञ्जयोऽर्जुनः।<br>धारि - युगं धारयतीति युगन्धरः पर्वतः। वसुन्धरा पृथिवी।<br>सह - सर्वं सहते इति सर्वंसहा पृथिवी।<br>तपि - शत्रूनतपतीति शत्रुन्तपः। उष्णन्तपः सूर्यः।<br>दम - अरिं दाम्यतीति अरिन्दमः। अन्तर्भावितण्यर्थत्वात् अरिं दमयतीत्यर्थः। | संज्ञायाम् ४७ |
| संज्ञायां ४६ सुपि ४ खच् ३८ | **४७. गमश्च**<br>संज्ञायां सुप्युपपदे गमश्च खच्प्रत्ययो भवति।<br>योगविभाग उत्तरार्थः।<br>सुतंगमो नाम, यस्य सौतंगमिः पुत्रः। प्लवङ्गमः। भुजङ्गमः। | गमः ४८ |

| | | |
|---|---|---|
| कर्मणि १<br>गमः ४७ | ४८. अन्तात्यन्ताध्व-दूर- पार - सर्वानन्तेषु डः<br>अन्तादिषु कर्मपपदेषु गमः डः प्रत्ययो भवति।<br>अन्तगः। अत्यन्तगः। अध्वगः। दूरगः। पारगः। सर्वगः। अनन्तगः।<br>डित्त्वसामर्थ्यादभस्यापि टेर्लोपः।<br>(वा०) सर्वत्र-पन्नयोरुपसंख्यानम्।<br>सर्वत्रगः। पन्नगः।<br>(वा०) उरसो लोपश्च।<br>उरसा गच्छतीति उरगः।<br>(वा०) सुदुरोधिकरणे।<br>सुखेन गच्छत्यस्मिन्निति सुगः।<br>दुःखेन गच्छत्यस्मिन्निति दुर्गः।<br>(वा०) निरो देशे।<br>निर्गम्यतेऽस्मिन् देशे इति निर्गो देशः।<br>(वा०) अन्यत्रापि दृश्यत इति वक्तव्यम्।<br>ग्रामगः। स्त्र्यागारगः। गुरुतल्पगः। | डः ५० |
| डः ४८ कर्मणि १ | ४६. आशिषि हनः<br>आशिषि गम्यमानायां हनो डप्रत्ययो भवति।<br>शत्रुं वध्यादिति शत्रुहः। दस्युहः।<br>आशिषीति किम्? शत्रुघातः। कर्मण्यण्।<br>(वा०) दारावाहनोऽणन्तस्य च टः संज्ञायाम्।<br>दारावुपपदे आङ्पूर्वाद् हनोऽण् प्रत्ययो भवति, अन्तस्य च टकारादेशो भवति, संज्ञायां विषये।<br>दारु = काष्ठम् आहन्ति इति दार्वाघाटः।<br>(वा०) चारौ वा।<br>चार्वाघाटः, चार्वाघातः।<br>(वा०) कर्मणि समि च।<br>वर्णान् संहन्तीति वर्णसंघाटः, वर्णसंघातः। पदसंघाटः, पदसंघातः। | हनः ५५ |
| डः ४८ कर्मणि १<br>हनः४६ | ५०. अपे क्लेश-तमसोः<br>क्लेश-तमसोः कर्मणोरुपपदयोः अपे हनो डप्रत्ययो भवति।<br>अनाशीरर्थमिदम्।<br>क्लेशान् अपहन्तीति क्लेशापहः पुत्रः। तमोऽपहः सूर्यः। | |

| | | |
|---|---|---|
| कर्मणि १<br>हनः४६ | ५१. कुमारशीर्षयोर्णिनिः<br>कुमार-शीर्षयोः कर्मणोरुपपदयोर्हनो णिनिः प्रत्ययो भवति।<br>कुमारघाती। शिरः हन्ति इति शीर्षघाती ;<br>निपातनाच्छिरसः शीर्षभावः। | |
| हनः ४६<br>कर्मणि १ | ५२. लक्षणे जायापत्योष्टक्<br>जायापत्योः कर्मणोरुपपदयोः हनष्टक् प्रत्ययो भवति, लक्षणवति कर्तरि।<br>सूत्रे लक्षणशब्दः अर्शआद्यजन्तः।<br>जायां हन्तीति जायाघ्नः पुरुषः,<br>जायाहननसूचकलक्षणवानित्यर्थः। 'गमहन' इति सूत्रेणोपधालोपः।<br>पतिं हन्तीति पतिघ्नी स्त्री;<br>पतिहननसूचकलक्षणवतीत्यर्थः। टित्त्वान्ङीप्। | टक् ५४ |
| हनः ४६<br>कर्मणि१ टक् ५२ | ५३. अमनुष्यकर्तृके च<br>कर्मण्युपपदे अमनुष्यकर्तृके वर्तमानाद् हनः टक् प्रत्ययो भवति।<br>जायाघ्नस्तिलकालकः। तिलकालकः इत्यस्य तिलाकृतिकृष्णबिन्दुरित्यर्थः।<br>पतिघ्नी पाणिरेखा।<br>श्लेष्मघ्नं मधु। पित्तघ्नं घृतम्।<br>अमनुष्यकर्तृके इति किम्? आखुघातः शूद्रः। | |
| हनः ४६<br>कर्मणि१ टक् ५२ | ५४. शक्तौ हस्ति-कपाटयोः<br>शक्तौ गम्यमानायां हस्तिकपाटयोः कर्मणोरुपपदयोः हनः टक्प्रत्ययो भवति।<br>मनुष्यकर्तृकार्थ आरम्भः।<br>हस्तिनं हन्तुं शक्त इति हस्तिघ्नो मनुष्यः।<br>कपाटघ्नश्चौरः।<br>शक्ताविति किम्? विषेण हस्तिनं हन्ति इति हस्तिघातः।<br>अत्र कर्मण्यण्। | |
| हनः ४६<br>कर्मणि१ टक् ५२ | ५५. पाणिघ-ताडघौ शिल्पिनि<br>पाणिघ-ताडघौ निपात्येते शिल्पिनि कर्तरि।<br>पाणिं हन्तीति पाणिघः।<br>पाणिवादने निपुण इत्यर्थः।<br>ताडं हनतीति ताडघः।<br>मध्यमाङ्गुष्ठाभ्यां करमूले लयात्मकध्वनिप्रकाशने निपुणः इत्यर्थः। | |

| | | |
|---|---|---|
| कर्मणि १ | ५६. आढ्य-सुभग-स्थूल-पलित-नग्नान्ध-प्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्<br>च्व्यर्थेषु आढ्यादिषु कर्मसूपपदेषु कृञः ख्युन् प्रत्ययो भवति करणे कारके, न तु च्वौ।<br>च्वेर्विकल्पेन विधानाद् द्विविधाश्च्व्यर्थाः - च्व्यन्ताः, अच्व्यन्ताश्च। च्व्यन्ता यथा - कृष्णीभवति। अच्व्यन्ता यथा - अकृष्णः कृष्णो भवति। अनेन सूत्रेण अच्व्यन्तेषु कर्मसु उपपदेषु कृञः ख्युन् विधीयते।<br>अनाढ्यम् आढ्यं कुर्वन्त्यनेनेति आढ्यंकरणम्।<br>सुभगंकरणम्। स्थूलंकरणम्। पलितंकरणम्।<br>नग्नंकरणम्। अन्धंकरणम्। प्रियंकरणम्।<br>अच्वाविति किम्? आढ्यीकुर्वन्त्यनेन। | आढ्य-षु५७<br>च्व्य-च्वौ ५७ |
| आढ्य-षु ५६<br>च्व्य-च्वौ ५६ | ५७. कर्तरि भुवः खिष्णुच्-खुकञौ<br>च्व्यर्थेषु आढ्यादिषु सुबन्तेषूपपदेषु कर्तरि कारके भुवः खिष्णुच्,खुकञ्- इत्येतौ प्रत्ययौ भवतः, न तु च्वौ।<br>अनाढ्य आढ्यो भवति आढ्यम्भविष्णुः, आढ्यम्भावुकः।<br>एवमेव-सुभगम्भविष्णुः, सुभगम्भावुकः इत्यादि।<br>अच्वावित्येव - आढ्यीभविता।<br>कर्तरीति किम्? करणनिवृत्त्यर्थम्, उत्तरार्थं च। | कर्तरि ५८ |
| सुपि ४ कर्तरि५७ | ५८. स्पृशोऽनुदके क्विन्<br>अनुदके सुबन्ते उपपदे स्पृशः क्विन् प्रत्ययो भवति कर्तरि।<br>कर्मणीति निवृत्तम्। तेन सुबन्तमात्रे उपपदे इतः प्रभृति प्रत्ययाः भवन्ति।<br>घृतं स्पृशतीति घृतस्पृक्।<br>मन्त्रेण स्पृशतीति मन्त्रस्पृक्।<br>अनुदके इति किम्? उदकस्पर्शः, अत्र कर्मण्यण्। | क्विन् ६० |

| | | |
|---|---|---|
| कर्मणि १<br>हनः४६ | ५१. कुमारशीर्षयोर्णिनिः<br>कुमार-शीर्षयोः कर्मणोरुपपदयोर्हनो णिनिः प्रत्ययो भवति।<br>कुमारघाती। शिरः हन्ति इति शीर्षघाती ; निपातनाच्छिरसः शीर्षभावः। | |
| हनः ४६<br>कर्मणि १ | ५२. लक्षणे जायापत्योष्टक्<br>जायापत्योः कर्मणोरुपपदयोः हनष्टक् प्रत्ययो भवति, लक्षणवति कर्तरि।<br>सूत्रे लक्षणशब्दः अर्शआद्यजन्तः।<br>जायां हन्तीति जायाघ्नः पुरुषः, जायाहननसूचकलक्षणवानित्यर्थः। 'गमहन' इति सूत्रेणोपधालोपः।<br>पतिं हन्तीति पतिघ्नी स्त्री; पतिहननसूचकलक्षणवतीत्यर्थः। टित्त्वान्ङीप्। | टक् ५४ |
| हनः ४६<br>कर्मणि१ टक् ५२ | ५३. अमनुष्यकर्तृके च<br>कर्मण्युपपदे अमनुष्यकर्तृके वर्तमानाद् हनः टक् प्रत्ययो भवति।<br>जायाघ्नस्तिलकालकः। तिलकालकः इत्यस्य तिलाकृतिकृष्णबिन्दुरित्यर्थः।<br>पतिघ्नी पाणिरेखा।<br>श्लेष्मघ्नं मधु। पित्तघ्नं घृतम्।<br>अमनुष्यकर्तृके इति किम्? आखुघातः शूद्रः। | |
| हनः ४६<br>कर्मणि१ टक् ५२ | ५४. शक्तौ हस्ति-कपाटयोः<br>शक्तौ गम्यमानायां हस्तिकपाटयोः कर्मणोरुपपदयोः हनः टक्प्रत्ययो भवति।<br>मनुष्यकर्तृकार्थ आरम्भः।<br>हस्तिनं हन्तुं शक्त इति हस्तिघ्नो मनुष्यः।<br>कपाटघ्नश्चौरः।<br>शक्ताविति किम्? विषेण हस्तिनं हन्ति इति हस्तिघातः। अत्र कर्मण्यण्। | |
| हनः ४६<br>कर्मणि१ टक् ५२ | ५५. पाणिघ-ताडघौ शिल्पिनि<br>पाणिघ-ताडघौ निपात्येते शिल्पिनि कर्तरि।<br>पाणिं हन्तीति पाणिघः।<br>पाणिवादने निपुण इत्यर्थः।<br>ताडं हनतीति ताडघः।<br>मध्यमाङ्गुष्ठाभ्यां करमूले लयात्मकध्वनिप्रकाशने निपुणः इत्यर्थः। | |

| | | |
|---|---|---|
| कर्मणि १ | ५६. आढ्य-सुभग-स्थूल-पलित-नग्नान्ध-प्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्<br>च्व्यर्थेषु आढ्यादिषु कर्मसूपपदेषु कृञः ख्युन् प्रत्ययो भवति करणे कारके, न तु च्वौ।<br>च्वेर्विकल्पेन विधानाद् द्विविधाश्च्व्यर्थाः - च्व्यन्ताः, अच्व्यन्ताश्च। च्व्यन्ता यथा - कृष्णीभवति। अच्व्यन्ता यथा - अकृष्णः कृष्णो भवति। अनेन सूत्रेण अच्व्यन्तेषु कर्मसु उपपदेषु कृञः ख्युन् विधीयते।<br>अनाढ्यम् आढ्यं कुर्वन्त्यनेनेति आढ्यंकरणम्। सुभगंकरणम्। स्थूलंकरणम्। पलितंकरणम्। नग्नंकरणम्। अन्धंकरणम्। प्रियंकरणम्।<br>अच्वाविति किम्? आढ्यीकुर्वन्त्यनेन। | आढ्य-षु५७<br>च्व्य-च्वौ ५७ |
| आढ्य-षु ५६<br>च्व्य-च्वौ ५६ | ५७. कर्तरि भुवः खिष्णुच्-खुकञौ<br>च्व्यर्थेषु आढ्यादिषु सुबन्तेषूपपदेषु कर्तरि कारके भुवः खिष्णुच्,खुकञ्- इत्येतौ प्रत्ययौ भवतः, न तु च्वौ।<br>अनाढ्य आढ्यो भवति आढ्यम्भविष्णुः, आढ्यम्भावुकः।<br>एवमेव-सुभगम्भविष्णुः, सुभगम्भावुकः इत्यादि।<br>अच्वावित्येव - आढ्यीभविता।<br>कर्तरीति किम्? करणनिवृत्त्यर्थम्, उत्तरार्थं च। | कर्तरि ५८ |
| सुपि ४ कर्तरि५७ | ५८. स्पृशोऽनुदके क्विन्<br>अनुदके सुबन्ते उपपदे स्पृशः क्विन् प्रत्ययो भवति कर्तरि।<br>कर्मणीति निवृत्तम्। तेन सुबन्तमात्रे उपपदे इतः प्रभृति प्रत्ययाः भवन्ति।<br>घृतं स्पृशतीति घृतस्पृक्।<br>मन्त्रेण स्पृशतीति मन्त्रस्पृक्।<br>अनुदके इति किम्? उदकस्पर्शः, अत्र कर्मण्यण्। | क्विन् ६० |

| क्विन् ५८ | ५६. ऋत्विग्दधृक्-स्रग्दिगुष्णिगञ्चुयुजि-क्रुञ्चां च<br>ऋत्विगादयः पञ्चशब्दाः क्विन्प्रत्ययान्ताः निपात्यन्ते, अपरेभ्यः त्रिभ्यः धातुभ्यः क्विन्प्रत्ययो विधीयते अनेन सूत्रेण।<br>ऋत्विक् - ऋतौ = वसन्तादौ यजति, ऋतुम् = यस्मिन् यागे ऋतुर्देवता, तं यजति, ऋतुप्रयुक्तो यजति वा सः ऋत्विक्।<br>अत्र क्विनूप्रत्ययो निपात्यते।<br>दधृक् - धृष्णोतीति दधृक्। 'ञिधृषा प्रागलभ्ये' क्विन्प्रत्ययः, द्विर्वचनम्, अन्तोदात्तत्वं च निपात्यते।<br>स्रक् - सृज्यते या सा स्रक्।<br>'सृज विसर्गे' इति धातोः कर्मणि क्विन् प्रत्ययः, अमागमंश्च निपात्यते।<br>दिक् - दिश्यते या सा दिक्।<br>'दिश अतिसर्जने' इति धातोः कर्मणि क्विन्प्रत्ययो निपात्यते।<br>उष्णिक् - उत्स्निह्यतीति उष्णिक्। उत्पूर्वात् 'ष्णिह प्रीतौ' इति धातोः क्विनूप्रत्ययः, उपसर्गान्तलोपः, षत्वं च निपात्यते।<br>अञ्चु, युजि, क्रुञ्च - इत्येतेषां धातूनां क्विन्प्रत्ययो भवति। निपातनैः सहैषां निर्देशादत्रापि किञ्चिदलाक्षणिकं कार्यं भवति।<br>अञ्चतेः सुबन्तमात्रे उपपदे क्विन्प्रत्ययो भवति - प्राङ्, प्रत्यङ्, उदङ्।<br>युजेः, क्रुञ्चेश्च केवलादेव - युङ्, युञ्जौ, युञ्जः।<br>सोपपदात्तु 'सत्सूद्विष' इत्यादिना क्विप्प्रत्ययो भवति - अश्वयुक्, अश्वयुजौ, अश्वयुजः।<br>क्रुङ् क्रुञ्चौ, क्रुञ्चः। नलोपोऽत्र निपातनसाहचर्यान्न भवति। | |
|---|---|---|

| | | |
|---|---|---|
| क्विन् ५८ | **६०. त्यदादिषु दृशोऽनालोचने कञ् च**<br>त्यदादिषूपपदेषु अनालोचनेऽर्थे दृशः कञ् प्रत्ययो भवति, चकारात् क्विन् च।<br>स्य इवायं पश्यति=ज्ञानविषयो भवतीति त्यादृशः; त्यादृक्। स इवायं पश्यतीति तादृशः, तादृक्। य इवायं पश्यतीति यादृशः, यादृक्।<br>'आ सर्वनाम्नः' इति सूत्रेण सर्वनाम्न आकारान्तादेशः। तादृशादयो हि रूढशब्दाः।<br>अनालोचने इति किम्? तं पश्यतीति तद्दर्शः। कर्मण्यण्।<br>(वा०) समानान्ययोश्चेति वक्तव्यम्।<br>सदृशः, सदृक्। 'दृग्दृशवतुषु' इति सूत्रेण समानस्य सभावः। अन्यादृशः, अन्यादृक्।<br>(वा०) दृशेः क्सश्च वक्तव्यः।<br>यादृक्षः, तादृक्षः, अन्यादृक्षः, कीदृक्षः। | |
| सुपि ४ | **६१. सत्सू-द्विष- द्रुह-दुह-युज-विद-भिद-छिद-जि-नी-राजामुपसर्गेऽपि क्विप्**<br>सुबन्ते, उपपदे सदादीनां धातूनामुपसर्गेऽपि क्विप् प्रत्ययो भवति, अपिना अनुपसर्गेऽपि<br>सत् - षद्लृ विशरणगत्यवसादनेषु दिवि सीदतीति द्युसत् 'सात्पदाद्योः' इति न षत्वम्। उपनिषत्। 'सदिरप्रतेः' इति षत्वम्।<br>सूः - षूङ् प्राणिगर्भविमोचने - अण्डं सूते इति अण्डसूः। शतसूः। प्रसूः।<br>द्विष अप्रीतौ - मित्रं द्वेष्टि इति मित्रद्विट्।<br>द्रुह जिघांसायाम् - मित्राय द्रुह्यतीति मित्रध्रुक्। प्रध्रुक्।<br>दुह प्रपूरणे - गां दोग्धीति गोधुक्। प्रधुक्।<br>युजिर् योगे - अश्वं युनक्तीति अश्वयुक्। प्रयुक्।<br>विद ज्ञाने - वेदं वेत्तीति वेदवित्। प्रवित्।<br>भिदिर् विदारणे - कष्ठभित्। प्रभित्।<br>छिदिर् द्वैधीकरणे - रज्जुं छिनत्तीति रज्जुछित्। प्रच्छित्।<br>जि अभिभवे - शत्रुं जयतीति शत्रुजित्। प्रजित्।<br>णीञ् प्रापणे - सेनां नयतीति सेनानीः। प्रणीः।<br>राजृ दीप्तौ - राजते इति राट्। विराट्। सम्राट्। | उपसर्गेऽपि ७७ |
| उपसर्गेऽपि६१<br>सुपि४ | **६२. भजो ण्विः**<br>सुबन्ते उपपदे, भजो ण्विः प्रत्ययः उपसर्गेऽपि भवति अपिना अनुपसर्गेऽपि।<br>अर्धं भजते इति अर्धभाक्। प्रभाक्। | ण्विः ६४ |

| उपसर्गेऽपि६१<br>सुपि४ | ६३. छन्दसि सहः<br>छन्दसि विषये सुबन्ते उपपदे सहो ण्विप्रत्ययः उपसर्गेऽपि भवति, अपिना अनुपसर्गेऽपि।<br>तुरं सहते इति तुराषाट्।<br>'सहेः साडः सः' इति षत्वम्, 'अन्येषामपि दृश्यते' इति दीर्घत्वम्। | छन्दसि ६७ |
|---|---|---|
| छन्दसि ६३<br>सुपि४ ण्विः ६२ | ६४. वहश्च<br>छन्दसि विषये सुबन्ते उपपदे वहश्च ण्विप्रत्ययो भवति।<br>प्रष्ठवाट्। दित्यवाट्।<br>योगविभाग उत्तरार्थः। | वहः ६६ |
| वहः ६४<br>छन्दसि६३ | ६५. कव्य-पुरीष-पुरीष्येषु ञ्युट्<br>छन्दसि कव्य-पुरीष-पुरीष्येषूपपदेषु वहो ञ्युट्प्रत्ययो भवति।<br>कव्यवाहनः पितॄणाम्। पुरीषवाहनः। पुरीष्यवाहनः। | ञ्युट् ६६ |
| वहः ६४<br>छन्दसि६३<br>ञ्युट्६५ | ६६. हव्येऽनन्तःपादम्<br>छन्दसि हव्ये उपपदे वहो ण्युट् प्रत्ययो भवति, अनन्तःपादं चेद् वहधातुर्वर्तते।<br>अनन्तःपादम्- न पादस्य मध्ये इत्यर्थः।<br>अग्निश्च हव्यवाहनः।<br>अनन्तःपादमिति किम्? हव्यवाडग्निरजरः पिता नः। अत्र हि वह धातुः पादस्य मध्यभागे विद्यते इति ण्युट्प्रत्ययो न भवति। | |
| छन्दसि ६३<br>उपसर्गेऽपि६१<br>सुपि४ | ६७. जन-सन-खन-क्रम-गमो विट्<br>छन्दसि विषये सुबन्ते उपपदे जनादिभ्यः विट्प्रत्ययो भवति उपसर्गेऽपि, अपिना अनुपसर्गेऽपि।<br>जन - जन जनने, जनी प्रादुर्भावे - द्वयोरपि ग्रहणम् - अब्जा गोजाः।<br>सन -'षण दाने', 'वन, षणसम्भक्तौ' द्वयोरपि ग्रहणम् - गोषा इन्द्रो नृषा असि।<br>खनु विदारणे - विसखाः। कूपखाः।<br>क्रमु पादविक्षेपे - दधिक्राः।<br>गम्लृ गतौ - अग्रेगा उन्नेतॄणाम्। सर्वत्र 'विड्वनोरनुनासिकस्य' इत्यात्वम्। | विट् ६८ |

| | | |
|---|---|---|
| सुपि ४ विट् ६७ | ६८. अदोऽनन्ने<br>अनन्ने सुप्युपपदे अदो विट् प्रत्ययो भवति।<br>आमम् = अपक्वम् अत्तीति आमात्। सस्यमत्तीति सस्यात्।<br>अनन्ने इति किम्? अन्नादः। अत्र कर्मण्यण्। | अदः ६९ |
| अदः ६८<br>विट् ६७ | ६९. क्रव्ये च<br>क्रव्ये चोपपदे अदो विट् प्रत्ययो भवति।<br>क्रव्यम् = अपक्वमांसमत्ति इति क्रव्यात्।<br>पूर्वेणैव सिद्धे वचनमसरूपबाधनार्थम्। तेनाण्न भवति।<br>कथं तर्हि क्रव्यादः? कृत्तविकृत्तशब्दे उपपदेऽण्, तस्य च पृषोदरादिपाठात् क्रव्यभावः। कृत्तविकृत्तपक्वमांसभक्षः क्रव्यादः इत्युच्यते; आममांसभक्षः क्रव्यादिति। | |
| सुपि ४ | ७०. दुहः कब्घश्च<br>दुहः सुप्युपपदे कप्रत्ययो भवति, दुहः घकारश्चान्तादेशः।<br>कामदुघा धेनुः। काममपेक्षितम्, अभिलषितं वा दुग्धे इति विग्रहः। | |
| | ७१. मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्<br>मन्त्रे श्वतेवह, उक्थशस्, पुरोडाश्-इति धातूपपदसमुदायेभ्यो ण्विन् प्रत्ययो भवति। श्वेतवहादयो धातूपदेशसमुदाया अस्मादेव निपातनाल्लभ्यते।<br>(वा०) श्वेतवहादीनां डस् पदस्येति वक्तव्यम्।<br>यत्र पदत्वं भावि तत्र ण्विनोऽपवादो डस् वक्तव्य इति वार्तिकार्थः।<br>श्वेतशब्दे कर्तृवाचिन्युपपदे वहेर्धातोः कर्मणि ण्विन् प्रत्ययः, पदत्वे च डस् प्रत्ययो भवति।<br>श्वेताः वहन्ति एनमिति श्वेतवा इन्द्रः। श्वेतवाहौ, श्वेतवाहः।<br>उक्थशब्दे कर्मणि, करणे वा उपपपदे शंसतेर्धातोः ण्विन् प्रत्ययो भवति, पदत्वे च डस् प्रत्ययः। उक्थानि, उक्थैर्वा शंसति उक्थशा यजमानः।<br>उक्थशासौ, उक्थशासः। निपातनान्नलोपः।<br>'दाशृ दाने' इत्येतस्य पुरःपूर्वस्य डत्वम्, कर्मणि च प्रत्ययः।<br>पुरो दाशन्ते एनं पुरोडाः, पुरोडाशौ, पुरोडाशः। | मन्त्रे ७२<br>ण्विन् ७२ |

| | | |
|---|---|---|
| मन्त्रे ७१<br>ण्विन् ७१ | **७२. अवे यजः**<br>मन्त्रे अवे उपपदे यजः ण्विन् प्रत्ययो भवति।<br>अत्रापि यत्र पदत्वं भावि तत्र डस् भवति, अन्यत्र ण्विः पूर्ववत्।<br>अवयाः, अवयाजौ, अवयाजः।<br>योगविभाग उत्तरार्थः। | यजः ७३ |
| यजः ७२ | **७३. विजुपे छन्दसि**<br>छन्दसि उपे उपपदे यजो विच्प्रत्ययो भवति।<br>उपयड्भीरूर्ध्वं वहन्ति। उपयट्त्वम्।<br>छन्दोग्रहणं ब्राह्मणार्थम्। | विच् ७५ |
| छन्दसि ७३<br>सुपि४<br>उपसर्गेऽपि ६१<br>विच् ७३ | **७४. आतो मनिन्क्वनिब्वनिपश्च**<br>छन्दसि सुप्युपपदे आतो धातोः(आकारान्ताद् धातोः)<br>मनिन्, क्वनिप्, वनिप् - इत्येते प्रत्यया भवन्ति, चकाराद् विच् च उपसर्गेऽपि।<br>मनिन् - अश्व इव तिष्ठतीति अश्वत्थामा।<br>पृषोदरादित्वात् सकारस्य तकारः। शोभनं ददातीति सुदामा।<br>क्वनिप् - शोभनं दधातीति सुधीवा। शोभनं पिबतीति सुपीवा। घुमास्थादिनेत्वम्।<br>वनिप् - भूरि ददातीति भूरिदावा। घृतं पिबतीति घृतपावा।<br>विच् खल्वपि - कीलालपाः। शुभंयाः। | मनि-पः ७५ |
| म-पः७४<br>विच् ६३ | **७५. अन्येभ्योऽपि दृश्यन्ते**<br>छन्दसीति, निवृत्तम्। अन्येभ्योऽपि धातुभ्यो मनिनादयो दृश्यन्ते।<br>मनिन् - सुशर्मा। ''शॄ हिंसायाम्'' इत्यतो मनिन्।<br>क्वनिप् - प्रातरित्वा। 'इणु गतौ' इत्यतः क्वनिप्।<br>वनिप् - विजावा। विपूर्वाद् 'जनी प्रादुर्भावे' इत्यतो वनिप्।<br>विच् - रेडसि पर्णं नयेः। 'रिष हिंसायाम्' इत्यतो विच्।<br>अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन निरुपपदादपि भवति - धीवा, पीवा।<br>दृशिग्रहणं प्रयोगानुसरणार्थम्। | |

| | | |
|---|---|---|
| | **७६. क्विप् च**<br>सर्वधातुभ्यः सोपपदेभ्यो, निरुपपदेभ्यश्च छन्दसि, भाषायां च क्विप् प्रत्ययो भवति।<br>उखायाः स्रंसते इति उखास्रत्।<br>पर्णाद् ध्वंसते इति पर्णध्वत्।<br>'अनिदिताम्' इति नलोपः, 'वसुस्रंसु' इति दः। | क्विप् ७७ |
| क्विप् ७६<br>सुपि ४<br>उपसर्गेऽपि ६१ | **७७. स्थः क च**<br>सुप्युपपदे स्थः (स्थाधातोः) कप्रत्ययो भवति, चकारात् क्विप् च उपसर्गेऽपि।<br>शंस्थः। शंस्थाः।<br>शम् = सुखं स्थापयतीत्यर्थः। अत्र तिष्ठतिरन्तर्भावितण्यर्थः। | |
| | **७८. सुप्यजातौ णिनिस्ताच्छील्ये**<br>अजातिवाचिनि सुप्युपपदे ताच्छील्ये गम्यमाने धातोर्णिनिप्रत्ययो भवति।<br>उष्णं भुङ्क्ते इति उष्णभोजी। उष्णभोजनशील इत्यर्थः।<br>अजाताविति किम्? ब्राह्मणान् आमन्त्रयिता।<br>ताच्छील्ये इति किम्? उष्णं भुङ्क्ते कदाचित्।<br>(वा०) उत्प्रतिभ्यामाङि सर्त्तेरुपसंख्यानम्।<br>उदासरिण्यः। प्रत्यासारिण्यः।<br>(वा०) साधुकारिणि च।<br>साधुदायी। साधुकारी।<br>(वा०) ब्रह्मणि वदः।<br>ब्रह्मवादिनो वदन्ति। | सुपि ८३<br>णिनिः ८६ |
| णिनिः ७८ | **७९. कर्तर्युपमाने**<br>कर्तर्युपमाने उपपदे धातोर्णिनिप्रत्ययो भवति।<br>उष्ट्र इव क्रोशति उष्ट्रकोशी। | |
| सुपि ७८<br>णिनिः७८ | **८०. व्रते**<br>व्रते गम्यमाने सुप्युपपदे धातोर्णिनिप्रत्ययो भवति।<br>'व्रतम्' इति शास्त्रतो नियम उच्यते।<br>स्थण्डिलशायी। अश्राद्धभोजी।<br>स्थण्डिल एव शेते, अश्राद्धमेव भुङ्क्ते इत्यर्थः। | |

| | | |
|---|---|---|
| सुपि ७८<br>णिनिः७८ | ८१. बहुलमाभीक्ष्ण्ये<br>आभीक्ष्ण्ये गम्यमाने सुप्युपपदे धातोर्बहुलं णिनिप्रत्ययो भवति।<br>आभीक्ष्ण्यम् = पौनःपुन्यम्।<br>कषायपायिणो गान्धाराः। क्षीरपायिण उशीनराः।<br>सौवीरपायिणो बाह्लीकाः।<br>बहुलग्रहणात् कुल्माषखादः इत्यत्र न भवति। | |
| सुपि ७८<br>णिनिः७८ | ८२. मनः<br>सुप्युपपदे मनो णिनिप्रत्ययो भवति।<br>बहुलग्रहणानुवृत्तेः 'मन्' इत्यनेन 'मन ज्ञाने' इति दैवादिकस्य ग्रहणं न तु 'मनु अवबोधने' इति तानादिकस्य। उत्तरसूत्रे हि खश्प्रत्यये विकरणकृतो विशेषः स्यात्।<br>दर्शनीयं मन्यते इति दर्शनीयमानी। | मनः ८३ |
| मनः८२<br>सुपि ७८<br>णिनिः ७८ | ८३. आत्ममाने खश्च<br>आत्मनो मननम् = आत्ममानः। तत्र वर्तमानाद् मन्यतेः धातोः सुप्युपपदे खश्प्रत्ययो भवति, चकाराद् णिनिश्च।<br>दर्शनीयमात्मानं मन्यते इति दर्शनीयम्मन्यः, दर्शनीयमानी। पण्डितमानी।<br>आत्ममाने इति किम्? दर्शनीयमानी देवदत्तो यज्ञदत्तस्य। | |
| | ८४. भूते<br>अधिकारोऽयम् 'वर्तमाने लट्' (३.२.१२३) इति यावत्। | भूते १२२ |
| णिनिः ७८<br>भूते८४ | ८५. करणे यजः<br>करणे उपपदे यजो णिनिप्रत्ययो भवति, भूते।<br>अग्निष्टोमेन इष्टवानिति अग्निष्टोमयाजी। | |
| णिनिः ७८<br>भूते८४ | ८६. कर्मणि हनः　कर्मण्युपपदे हनो णिनिप्रत्ययो भवति, भूते।　पितृव्यं हतवानिति पितृव्यघाती। मातुलघाती।<br>(वा०) कुत्सितग्रहणं कर्त्तव्यम्।<br>इह मा भूत्-चौरं हतवान्। | हनः ८८<br>कर्मणि ६५ |
| हनः८६<br>कर्मणि८६ बहुलं<br>छन्दसि ८८<br>भूते८४ | ८७. ब्रह्म-भ्रूण-वृत्रेषु क्विप्<br>ब्रह्मन्-भ्रूण-वृत्रेषूपपदेषु हनः क्विप् प्रत्ययो भवति भूते।<br>ब्रह्म हतवानिति ब्रह्महा। भ्रूणहा। वृत्रहा। | क्विप् ६२ |

| | | |
|---|---|---|
| हनः८६<br>कर्मणि८६ | ८८. बहुलं छन्दसि<br>छन्दसि विषये कर्मणि उपपदे हनः क्विप्प्रत्ययो बहुलं भवति भूते। बहुलग्रहणाद् उपपदान्तरेऽपि छन्दसि हनः क्विप्प्रत्ययो भवति।<br>मातृहा सप्तमं नरकं प्रविशेत्। पितृहा।<br>न च भवति-मातृघातः। पितृघातः। कर्मण्यण्। | बहुलंछन्दसि८७,<br>बहुलम्८६ |
| कर्मणि ८६<br>क्विप् ८७<br>बहुलम्८८<br>भूते८४ | ८६. सुकर्म-पाप-मन्त्र-पुण्येषु कृञः<br>'कर्मणि' इति वर्तते, तदसम्भवात् सुशब्दं वर्जयित्वा परिशिष्टानां विशेषणं भवति।<br>स्वादिषु कर्मसूपपदेषु कृञः क्विप्प्रत्ययो बहुलं भवति भूते।<br>सुकृत्। कर्मकृत्। पापकृत्। मन्त्रकृत्। पुण्यकृत्।<br>अत्र बहुलग्रहणानुवृत्तेः अन्यस्मिन्नप्युपपदे कृञः क्विप्प्रत्ययो भवति - शास्त्रकृत्, भाष्यकृत्। | |
| कर्मणि ८६<br>क्विप् ८७<br>बहुलम्८६<br>भूते८४ | ६०. सोमे सुञः<br>सोमे कर्मण्युपपदे सुञः क्विप् प्रत्ययो भवति भूते।<br>सोमं सुतवानिति सोमसुत्। | |
| कर्मणि ८६<br>क्विप् ८७<br>बहुलम्८६<br>भूते८४ | ६१. अग्नौ चेः<br>अग्नौ कर्मण्युपपदे चेः क्विप्प्रत्ययो भवति भूते।<br>अग्निं चितवानिति अग्निचित्। | चेः ६२ |
| कर्मणि ८६<br>क्वनिप् ६४<br>भूते८४ | ६२. कर्मण्यग्न्याख्यायाम्<br>कर्मण्युपपदे चेः क्विप्प्रत्ययो भवति कर्मणि कारके, भूते अग्न्याख्यायाम्। अग्न्याख्या इत्यस्य धातूपपदप्रत्ययसमुदायेन चेदग्न्याधारस्थलविशेषस्याख्या गम्यते इत्यर्थः। श्येन इव चित इति श्येनचित्। | |
| भूते८४ | ६३. कर्मणीनिर्विक्रियः<br>कर्मण्युपपदे विक्रियः इनिप्रत्ययो भवति भूते।<br>'कर्मणि' इति वर्तमाने पुनः कर्मग्रहणं कर्तुः कुत्सानिमित्ते कर्मणि यथा स्यात्, कर्ममात्रे मा भूत्।<br>सोमं विक्रीतवानिति सोमविक्रयी। रसविक्रयी। सोमादीनां विक्रयः शास्त्रे निषिद्ध इति कुत्सानिमित्तं कर्मात्र।<br>इह न भवति - धान्यविक्रायः। कर्मण्यण्। | |

| | | |
|---|---|---|
| कर्मणि ८६<br>भूते८४ | ९४. दृशेः क्वनिप्<br>कर्मण्युपपदे दृशेः क्वनिप् प्रत्ययो भवति भूते।<br>पारं दृष्टवानिति पारदृश्वा। मेरुदृश्वा। परलोकदृश्वा। | क्वनिप् ९६ |
| कर्मणि ८६<br>क्वनिप् ९४<br>भूते८४ | ९५. राजनि युधि-कृञः<br>राजनि कर्मण्युपपदे युधि-कृञः (युध्-कृञ्धातुभ्याम्)<br>क्वनिप्प्रत्ययो भवति, भूते।<br>राजानं योधितवानिति राजयुध्वा।<br>युधिरत्रान्तर्भावितण्यर्थः।<br>राजानं कृतवान् इति राजकृत्वा। | युधिकृञः ९६ |
| युधिकृञः ९५<br>क्वनिप् ९४<br>भूते८४ | ९६. सहे च<br>सहे चोपपदे युधि-कृञः क्वनिप् प्रत्ययो भवति भूते।<br>सहयुध्वा। सहकृत्वा। | |
| भूते८४ | ९७. सप्तम्यां जनेर्डः<br>सप्तम्यन्ते उपपदे जनेर्डप्रत्ययो भवति भूते।<br>सरसि जातमिति सरसिजम्।<br>'हलदन्तात्सप्तम्याः' इति सप्तम्या अलुक्।<br>मन्दुरायां जात इति मन्दुरजः।<br>'ङ्यापोः' इति ह्रस्वः।<br>'वाजिशाला तु मन्दुरा' इत्यमरः। | जनेर्डः १०१ |
| जनेर्डः ९७<br>भूते८४ | ९८. पञ्चम्यामजातौ<br>अजातिवाचिनि पञ्चम्यन्ते उपपदे जनेर्डप्रत्ययो भवति भूते।<br>बुद्धिजः। संस्कारजः। दुःखजः।<br>अजाताविति किम्? हस्तिनो जातः। अश्वाज्जातः। | |
| जनेर्डः ९७<br>भूते८४ | ९९. उपसर्गे च संज्ञायाम्<br>उपसर्गे चोपपदे जनेर्डप्रत्ययो भवति, संज्ञायाम्।<br>समुदायोपाधिः संज्ञा।<br>अथेमा मानवीः प्रजाः। | |
| जनेर्डः ९७<br>भूते८४ | १००. अनौ कर्मणि<br>कर्मण्युपपदे अनौ जनेर्डप्रत्ययो भवति भूते।<br>पुंमासमनुरुध्य जात इति पुमनुजः। स्त्रियमनुरुध्य जात इति स्त्र्यनुजः। | |

| | | |
|---|---|---|
| जनेर्डः ६७<br>भूते ८४ | १०१. अन्येष्वपि दृश्यते<br>सप्तम्यन्ताद् अन्येष्वपि उपपदेषु जनेर्डप्रत्ययो दृश्यते।<br>सप्तम्यामित्युक्तम्, असप्तम्यामपि दृश्यते-न जात इति अज। द्विर्जात इति द्विजः।<br>पञ्चम्यामजातावित्युक्तम्, जातावपि दृश्यते-ब्राह्मणजो धर्मः। क्षत्रियजं युद्धम्।<br>उपसर्गे संज्ञायामित्युक्तम्, असंज्ञायामपि दृश्यते - अभिजाः परिजाः केशाः।<br>अनौ कर्मणीत्युक्तम्, अकर्मण्यपि दृश्यते - अनुजातः अनुजः।<br>अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि भवति, कारकान्तरेऽपि-परितः खाता या सा परिखा। आखा। | |
| भूते ८४ | १०२. निष्ठा<br>धातोर्निष्ठा(क्तक्तवतू निष्ठा) भवति भूते।<br>कृतम्, कृतवान्। भुक्तम्, भुक्तवान्।<br>(वा०) आदिकर्मणि निष्ठा वक्तव्या।<br>कर्मशब्दोऽत्र क्रियावाचकः। दीर्घकालेन सम्पद्यमानायाः कटाद्युत्पादनादिक्रियायाः आरम्भकालविशिष्टोंऽशः आदिकर्म; तत्र विद्यमानाद् धातोर्निष्ठाप्रत्ययो भवतीति वार्तिकार्थः।<br>तत्र आद्येषु क्रियाक्षणेषु भूतेष्वपि क्रियाया भूतत्वाभावाद् भूते विहिता निष्ठा ततो न प्राप्नोतीति वार्तिकमिदमारब्धम्।<br>प्रकृतः कटं देवदत्तः। प्रकृतवान् कटं देवदत्तः।<br>देवदत्तः कटस्य निर्माणकार्यं प्रारब्धवानित्यर्थः। प्रशब्दोऽत्र आदिकर्म द्योतयति। 'आदिकर्मणि क्तः कर्तरि च' (३.४.७१) इति सूत्रेण आदिकर्मणि क्तः कर्तर्यर्थे भवति, चकाराद् भावकर्मणोरपि। | |
| भूते ८४ | १०३. सुयजोर्ङ्वनिप्<br>सु-यजोर्ङ्वनिप्प्रत्ययो भवति भूते।<br>षुञ् अभिषवे-सुत्वा, सुत्वानौ, सुत्वानः।<br>यज देवपूजासङ्गतिकरणदानेषु- यज्वा, यज्वानौ, यज्वानः। | |

| | | |
|---|---|---|
| भूते८४ | १०४. जीर्यतेरतृन्<br>जीर्यतेरतृन् प्रत्ययो भवति भूते।<br>जॄष वयोहानौ - जरन्, जरन्तौ, जरन्तः।<br>वाऽसरूपेण निष्ठापि - जीर्णः, जीर्णवान्। | |
| भूते८४ | १०५. छन्दसि लिट्<br>छन्दसि धातोर्लिट् प्रत्ययो भवति भूते।<br>अहं सूर्यमुभयतो ददर्श।<br>अहं द्यावापृथिवी आततान। | छन्दसि १०७ |
| छन्दसि १०५<br>भूते८४ | १०६. लिटः कानज्वा<br>छन्दसि लिटः स्थाने कानज्वा भवति भूते।<br>अग्निं चिक्यानः। 'चिञ् चयने' इति धातोर्लिट्, कानच्, 'विभाषा चेः' इति कुत्वम्। न च भवति - अहं सूर्यमुभयतो ददर्श। | वा,लिटः १०६ |
| छन्दसि १०५<br>लिटः१०६ वा<br>१०६ भूते८४ | १०७. क्वसुश्च<br>छन्दसि लिटः क्वसुश्च वा भवति भूते।<br>जक्षिवान्। 'लिट्यन्यतरस्याम्' इति सूत्रेण अदो घस्लादेशः।<br>न च भवति - अहं सूर्यमुभयतो ददर्श।<br>योगविभाग उत्तरार्थः। | क्वसुः १०६ |
| लिटः १०६<br>क्वसुः१०७<br>वा १०६ भूते८४ | १०८. भाषायां सद-वस-श्रुवः<br>भाषायां सद,वस,श्रु-इत्येतेभ्यो धातुभ्यः लिट्प्रत्ययो भूतसामान्ये वा भवति, तस्य च नित्यं क्वसुरादेशो भवति।<br>षद्लृ विशरणगत्यवसादनेषु - उपसेदिवान् कौत्सः पाणिनिम्।<br>तेन मुक्ते यथाप्राप्तं प्रत्यया भवन्ति- उपासदत्, अपासीदत्, उपससाद।<br>वस निवासे - अनूषिवान् कौत्सः पाणिनिम्।<br>पक्षे - अन्ववात्सीत्, अन्ववसत्, अनूवास।<br>श्रु श्रवणे - उपशुश्रुवान् कौत्सः पाणिनिम्।<br>पक्षे - उपाश्रौषीत्, उपाशृणोत्, उपशुश्राव। | |

| | | |
|---|---|---|
| वा१०६ भूते८४ | १०६. उपेयिवाननाश्वाननूचानश्च<br>उपेयिवान्, अनाश्वान्, अनूचान्- इत्येते शब्दा वा निपात्यन्ते।<br>उपेयिवान् - उपपूर्वाद् 'इण् गतौ' इति धातोः क्वसुः, द्विर्वचनं, 'दीर्घ इणः किति' इति सूत्रेण अभ्यासदीर्घत्वम्, दीर्घत्वविधानसामर्थ्याद् दीर्घैकादेशस्याभावः, तत्र 'वस्वेकाचाद्घसाम्' इत्यनेकाच्त्वादिण्न प्राप्नोति स निपात्यते।<br>तत्र अभ्यासस्येकारस्य श्रवणं भवति , धातुरूपस्य इकारस्य 'इणो यण्' इति यणादेशः।<br>पक्षे लङादयोऽपि - उपागात्, उपैत्, उपेयाय।<br>अनाश्वान् - नञ् पूर्वाद् 'अश भोजने' इति धातोः क्वसुर्निपात्यते, इडभावश्च।<br>पक्षे - नाशीत्, नाश्नात्, नाश।<br>अनूचानः - अनुपूर्वाद् 'ब्रुवो वचिः' इति वचेः कर्तरि कानज्निपात्यते।<br>पक्षे - अन्ववोचत्, अन्वब्रवीत्, अनूवाच। | |
| भूते८४ | ११०. लुङ्<br>धतोर्लुङ्प्रत्ययो भवति भूते।<br>अकार्षीत्। अहार्षीत्। | |
| भूते८४ | १११. अनद्यतने लङ्<br>अनद्यतने भूते धातोर्लङ् प्रत्ययो भवति।<br>अकरोत्। अहरत्।<br>'एकस्याः रात्रेश्चतुर्थो यामो, दिवसश्च सर्वो, द्वितीयायाश्च रात्रेः प्रथमोऽद्यतनः' इति 'लुङ्' (३.२.११०) सूत्रे कैयटः।<br>अविद्यमानोऽद्यतनो यस्मिन् सोऽनद्यतनो भूतः इति बहुव्रीहिसमासः अनद्यतनशब्दे। तेन अद्य ह्यो वा अभुक्ष्महि' इति व्यामिश्रे लङ् न भवति। | अनद्यतने १२२ |
| अनद्यतने १११<br>भूते८४ | ११२. अभिज्ञावचने लृट्<br>अभिज्ञा = स्मृतिः, तद्वचने उपपदे अनद्यतने भूते लृट् प्रत्ययो भवति भूते।<br>अभिजानासि देवदत्त ! कश्मीरेषु वत्स्यामः।<br>वचनग्रहणं पर्यायार्थम् - अभिजानासि, स्मरसि, बुध्यसे, चेतयसे वा देवदत्त ! कश्मीरेषु वत्स्यामः। | अभिज्ञावचने लृट् ११४ |

| | | |
|---|---|---|
| अनद्यतने १११<br>अभिज्ञावचने ११२<br>लृट् ११२<br>भूते८४ | **११३. न यदि**<br>यच्छब्दे उपपदे पूर्वसूत्रेण प्राप्तो लृड् न भवति भूते।<br>अभिजानासि देवदत्त ! यत् कश्मीरेषु अवसाम। | |
| अनद्यतने १११<br>अभिज्ञावचने ११२<br>लृट ११२<br>भूते८४ | **११४. विभाषा साकाङ्क्षे**<br>अभिज्ञावचने उपपदे अनद्यतने भूते लृट् प्रत्ययो भवति, साकाङ्क्षश्चेद् धात्वर्थः।<br>अभिजानासि देवदत्त ! कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे। पक्षे अवसाम, अभुञ्ज्महि इति।<br>यद्युपपदेऽपि परत्वादनेन लृड् भवति–अभिजानासि देवदत्त ! यत्कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे। पक्षे अत्रापि अवसाम, अभुञ्ज्महि।<br>उभयत्र वासो लक्षणम्, भोजनं च लक्ष्यम्। अतः लक्ष्यलक्षणभावेन धात्वर्थोऽत्र साकाङ्क्षः। | |
| भूते ८४<br>अनद्यतने १११ | **११५. परोक्षे लिट्**<br>अनद्यतने परोक्षे भूते धातोर्लिट् प्रत्ययो भवति।<br>चकार। जहार।<br>उत्तमपुरुषविषयेऽपि चित्तव्याक्षेपात् परोक्षता सम्भवत्येव। तद्यथा– 'सुप्तोऽहं किल विललाप' इति। | परोक्षे ११८ |
| भूते ८४<br>अनद्यतने १११<br>परोक्षे ११५लिट्११५ | **११६. हशश्वतोर्लङ् च**<br>ह-शश्वतोरुपपदयोः अनद्यतने परोक्षे भूते लङ् प्रत्ययो भवति, चकाराल्लिट् च।<br>इति ह अकरोत्, चकार वा।<br>शश्वदकरोत्, चकार वा। | लङ् ११७ |
| भूते ८४<br>अनद्यतने १११<br>परोक्षे ११५<br>लङ् ११६<br>लिट् ११५ | **११७. प्रश्ने चासन्नकाले**<br>आसन्नकाले पृच्छ्यमाने अनद्यतने परोक्षे भूते धातोः लङ् प्रत्ययो भवति, चकाराल्लिट् च।<br>कश्चित् कंचित् पृच्छति – अगच्छत्, जगाम वा देवदत्तः? अयजत्, इयाज वा देवदत्त?<br>प्रश्न इति किम्? जगाम देवदत्तः।<br>आसन्नकाले इति किम्? भवन्तं पृच्छामि – जघान कंसं किल वासुदेवः? | |

| | | |
|---|---|---|
| भूते ८४<br>अनद्यतने १११<br>परोक्षे ११५ | ११८. लट् स्मे<br>स्मे उपपदे अनद्यतने परोक्षे भूते धातोर्लट् प्रत्ययो भवति।<br>लिटोऽपवादः।<br>यजति स्म युधिष्ठिरः। | लट् १२२<br>स्मे ११९ |
| लट् ११८<br>भूते ८४<br>अनद्यतने १११ | ११९. अपरोक्षे च<br>अनद्यतनेऽपरोक्षेऽपि भूते स्मे उपपदे धातोर्लट् प्रत्ययो भवति।<br>एवं स्म पिता ब्रवीति।<br>इति स्मोपाध्यायः कथयति। | |
| लट् ११८ भूते ८४ | १२०. ननौ पृष्टप्रतिवचने<br>ननौ उपपदे पृष्टप्रतिवचने धातोर्लट् प्रत्ययो भवति भूते।<br>अनद्यतने, परोक्षे इति निवृत्तमिति भूतसामान्ये विधिरयम्।<br>अकार्षीः कटं देवदत्त ! ननु करोमि भोः।<br>पृष्टप्रतिवचने इति किम्? नन्वकार्षीद् माणवकः। | पृष्टप्रतिवचने १२१ |
| भूते ८४<br>पृष्टप्रतिवचने १२०<br>लट् ११८ | १२१. नन्वोर्विभाषा<br>नन्वोरुपपदयोः पृष्टप्रतिवचने धातोर्लट् प्रत्ययो भवति भूते।<br>अकार्षीः कटं देवदत्त? न करोमि भोः, नाकार्षम्।<br>अहं नु करोमि, अहं न्वकार्षम्। | विभाषा १२२ |
| भूते ८४<br>अनद्यतने १११<br>लट् ११८<br>विभाषा १२१ | १२२. पुरि लुङ् चास्मे<br>पुराशब्दे उपपदे अनद्यतने भूते धातोविभाषा लुङ् प्रत्ययो भवति चकाराल्लट् च, न तु स्मे उपपदे।<br>ताभ्यां मुक्ते पक्षे यथाविषयमन्येऽपि प्रत्यया भवन्ति।<br>अवात्सुः, वसति वा इह पुरा छात्राः। पक्षे यथाविषयम् अवसन्निह पुरा छात्राः। ऊषुरिह पुरा छात्राः।<br>अस्मे इति किम्? यजति स्म युधिष्ठिरः। | |
| | १२३. वर्तमाने लट्<br>प्रारब्धोऽपरिसमाप्तश्च वर्तमानः, तस्मिन्वर्त्तमानेऽर्थे वर्त्तमानाद् धातोर्लट् प्रत्ययो भवति।<br>पचति। पठति। | वर्तमाने ३.३.१ |

| | | |
|---|---|---|
| वर्त्तमाने१२३ | **१२४. लटः शतृशानचावप्रथमासमानाधिकरणे**<br>लटः शतृ-शानचौ भवतः, प्रथमासमानाधिकरणे लटि तु एतन्न प्रवर्त्तते।<br>पचन्तं देवदत्तं पश्य। पचमानं देवदत्तं पश्य। पचता कृतम्। पचमानेन कृतम्।<br>अप्रथमासमानाधिकरणे इति किम्?<br>देवदत्तः पचति।<br>'लट्' इति वर्तमाने पुनर्लड्ग्रहणम् अधिकविधानार्थम्। तेन क्वचित् प्रथमासमानाधिकरणेऽपि लटि एतत्प्रवर्तते। सन्ब्राह्मणः। अस्ति ब्राह्मणः। विद्यमानो ब्राह्मणः। विद्यते ब्राह्मणः। | लटः १२६<br>शतृशानचौ १२६ |
| लटः १२४<br>शतृशानचौ १२४<br>वर्त्तमाने१२३ | **१२५. सम्बोधने च**<br>सम्बोधने च लटः शतृशानचौ प्रत्ययौ भवतः।<br>प्रथमासमानाधिकरणार्थ आरम्भः।<br>हे पचन् ! हे पचमान ! | |
| लटः १२४<br>शतृशानचौ १२४<br>वर्त्तमाने१२३ | **१२६. लक्षणहेत्वोः क्रियायाः**<br>क्रियायाः लक्षणहेत्वोर्वर्त्तमानाद् धातोः परस्य लटः शतृशानचौ भवतः।<br>लक्षणम् = परिचायकम्। हेतुः = फलं, कारणं च।<br>लक्षणे - शयाना भुञ्जते यवनाः।<br>हेतौ - अर्जयन् वसति। अधीयानो वसति।<br>क्रियाया इति किम्? द्रव्य-गुणयोर्मा भूत्।<br>यः कम्पते सोऽश्वत्थः। यदुत्प्लवते तल्लघु। यन्निषीदति तद् गुरु। | |
| | **१२७. तौ सत्**<br>तौ = शतृशानचौ सत्संज्ञकौ भवतः।<br>तौ ग्रहणमुपाध्यसंसर्गाथम्। तेन शतृशानज्मात्रस्य संज्ञा भवति। अतः लृटः स्थाने जायमानयोरपि शतृशानचोः सत्संज्ञा भवति।<br>ब्राह्मणस्य कुर्वन्। ब्राह्मणस्य कुर्वाणः। ब्राह्मणस्य करिष्यन्। ब्राह्मणस्य करिष्यमाणः। | |

| | | |
|---|---|---|
| वर्त्तमाने१२३ | १२८. पूङ्यजोः शानन्<br>वर्त्तमाने काले वर्तमानयोः पूङ्यजोः शानन् प्रत्ययो भवति।<br>नायं लादेशः।<br>पूङ् पवने - सोमं पवमानः।<br>यज देवपूजासंगतिकरणदानेषु - यजमानः।<br>'आने मुक्' इति मुमागमः। | |
| वर्त्तमाने१२३ | १२९. ताच्छील्य-वयोवचन-शक्तिषु चानश्<br>ताच्छील्यादिषु द्योत्येषु वर्त्तमानकाले वर्त्तमानाद् धातोः चानश् प्रत्ययो भवति।<br>ताच्छील्यम् = तत्स्वभावता।<br>वयः = शरीरावस्था यौवनादिः।<br>शक्तिः = सामर्थ्यम्।<br>ताच्छील्ये - कतीह मुण्डयमानाः। कतीह भूषयमाणाः।<br>वयोवचने- कतीह कवचं पर्यस्यमानाः। कतीह शिखण्डं वहमानाः। पर्यासः = सन्नहनम्। शिखण्डशब्दः शिखापर्यायः।<br>शक्तौ - कतीह निघ्नानाः।<br>कतीह पचमानाः। | |
| वर्त्तमाने१२३ | १३०. इङ्-धार्योः शत्रकृच्छ्रिणि<br>इङ्-धार्योः शतृप्रत्ययो भवति अकृच्छ्रिणि कर्तरि।<br>अकृच्छ्रः = सुखसाध्यो धात्वर्थो यस्य कर्तुः सोऽकृच्छ्री।<br>अधीयन् पारायणम्। धारयन्नुपनिषदम्।<br>अकृच्छ्रिणीति किम्? कृच्छ्रेणाधीते। कृच्छ्रेण धारयति। | शतृ १३३ |
| शतृ १३०.<br>वर्त्तमाने१२३ | १३१. द्विषोऽमित्रे<br>अमित्रे कर्तरि अर्थे द्विषः शतृप्रत्ययो भवति वर्त्तमाने।<br>अमित्रः = शत्रुः।<br>द्विषन्, द्विषन्तौ, द्विषन्तः।<br>अमित्रे इति किम्? द्वेष्टि भार्या पतिम्। | |
| शतृ १३०.<br>वर्त्तमाने१२३ | १३२. सुञो यज्ञसंयोगे<br>यज्ञसंयोगे सुञः शतृप्रत्ययो भवति वर्त्तमाने।<br>षुञ् अभिषवे-सर्वे सुन्वन्तः।<br>संयोगग्रहणं प्रधानकर्तृप्रतिपत्त्यर्थम्। तेन यागस्य ये कर्तारो भूत्वा फलं प्राप्नुवन्ति, तेषु कर्तृषु प्रकृतसूत्रेण शतृप्रत्ययो भवति न तु याजकेषु कर्तृषु।<br>यज्ञसंयोग इति किम्? सुनोति सुराम्। | |

| | | |
|---|---|---|
| शतृ १३०<br>वर्त्तमाने १२३ | १३३. अर्हः प्रशंसायाम्<br>अर्हः शतृप्रत्ययो भवति प्रशंसायाम्।<br>प्रशंसा = स्तुतिः।<br>अर्हन्निह भवान् विद्याम्। अर्हन्निह भवान् पूजाम्।<br>प्रशंसायामिति किम्? अर्हति चौरो वधम्। | |
| वर्त्तमाने १२३ | १३४. आ क्वेस्तच्छील-तद्धर्म-तत्साधुकारिषु<br>'भ्राजभास (३.२.१७७) इति क्विपं वक्ष्यति।<br>तत्सूत्रसहितानि यानि सूत्राणि इतोऽग्रे वक्ष्यन्ते तैर्विहिताः प्रत्ययास्तच्छीले,तद्धर्मिणि,तत्कारिणि चार्थे भवन्ति।<br>तच्छीलः = यः स्वभावतः फलनिरपेक्षस्तत्र प्रवर्तते।<br>तद्धर्मा = तदाचारः, यः स्वधर्मे ममायमिति प्रवर्तते विनापि शीलेन।<br>तत्साधुकारी = यो धात्वर्थं साधु करोति।<br>क्रमेणोदाहरणम् -<br>तच्छीले - वदिता जनापवादान्।<br>तद्धर्मणि - श्राद्धं कर्त्ता।<br>तत्साधुकारिणि - कर्त्ता कटम्।<br>सर्वेषूदाहरणेषु 'तृन्' इत्यग्रिमेण सूत्रेण तृन्प्रत्ययः। | तच्छील-तद्धर्म-तत्साधुकारिषु १७८ |
| तच्छील तद्धर्म तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १३५. तृन्<br>धातोस्तृन्प्रत्ययः भवति तच्छीलादिषु कर्तृषु।<br>तच्छीले - वदिता जनापवादान्।<br>तद्धर्मणि - श्राद्धं कर्त्ता।<br>तत्साधुकारिणि - कर्त्ता कटम्। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १३६. अलंकृञ्-निराकृञ्-प्रजनोत्पचोत्पतोन्मद-रुच्यपत्रप-वृतु-वृधु-सह-चर इष्णुच्<br>अलंकृञादिभ्य इष्णुच्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>अलंकरिष्णुः। निराकरिष्णुः। प्रजनिष्णुः। उत्पचिष्णुः। उत्पतिष्णुः। उन्मदिष्णुः। रोचिष्णुः। अपत्रपिष्णुः। वर्तिष्णुः। वर्धिष्णुः। सहिष्णुः। चरिष्णुः। | इष्णुच् १३८ |
| इष्णुच् १३६<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १३७. णेश्छन्दसि<br>णेश्छन्दसि इष्णुच्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>दृषदं धारयिष्णवः। वीरुधः पारयिष्णवः। | छन्दसि १३८ |

| | | |
|---|---|---|
| छन्दसि १३७<br>इष्णुच् १३६<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १३८. भुवश्च<br>भुवश्च छन्दसि इष्णुच्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>भविष्णुः।<br>योगविभाग उत्तरार्थः।<br>चकारोऽनुक्तसमुच्चयार्थः - भ्राजिष्णुना लोहितचन्दनेन। | भुवः १३९ |
| भुवः १३८.<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १३९. ग्ला-जि-स्थश्च क्स्नुः<br>ग्ला-जि-स्थः चकाराद् भुवश्च क्स्नुप्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>ग्लास्नुः। जिष्णुः। स्थास्नुः। भूष्णुः।<br>गिच्चायं प्रत्ययो न कित्। तेन 'घुमास्था' इत्यनेन स्थः ईकारो न भवति।<br>'क्ङिति च' इत्यत्र गकारोऽपि चर्त्वभूतो निर्दिश्यते, तेन 'जिष्णुः' इत्यत्र गुणो न भवति। 'श्र्युकः किति' इत्यत्रापि गकारो निर्दिश्यते, तेन 'भूष्णुः' इत्यत्र भुवः इड् न भवति। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १४०. त्रसि-गृधि-धृषि-क्षिपेः क्नुः<br>त्रस्यादिभ्यः क्नुप्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>त्रसी उद्वेगे - त्रस्नुः।<br>गृध अभिकाङ्क्षायाम् - गृध्नुः।<br>ञिधृषा प्रागल्भ्ये - धृष्णुः।<br>क्षिप प्रेरणे - क्षिप्णुः। क्वचित् 'क्षिप्नुः' इति दन्त्यनकारयुक्तोऽपि पाठः। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १४१. शमित्यष्टाभ्यो घिनुण्<br>शमित्यष्टाभ्यो घिनुण् प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>शमु उपशमे, तमु काङ्क्षायाम्, दमु उपरमे, श्रमु तपसि, खेदे च, भ्रमु अनवस्थाने, क्षमु सहने, क्लमु ग्लानौ, मदी हर्षे इति शमादयोऽष्टौ धातवो दिवादिषु पठ्यन्ते। तेभ्योऽयं प्रत्ययः।<br>शमी। तमी। दमी। श्रमी। भ्रमी। क्षमी। क्लमी। प्रमादी। उन्मादी।<br>शमीत्यादिषु सप्तसु 'नोदात्तोपदेश०' इत्यादिना वृद्धिप्रतिषेधः।<br>अष्टाभ्य इति किम्? असिता। असु क्षेपणे, अत्र तृन्। | घिनुण् १४५ |

| | | |
|---|---|---|
| घिनुण् १४१ | १४२. संपृचानुरुधाङ्यमाङ्यस-परिसृ-संसृज-परिदेवि-संज्वर-परिक्षिप-परिरट-परिवद-परिदह-परिमुह-दुष्-द्विष्-द्रुह-दुह-युजाक्रीड-विविच-त्यज-रज-भजातिचरापचरामुषाभ्याहनश्च<br>सम्पृचादिभ्यो घिनुण्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>सम्पर्की। अनुरोधी। आयामी। आयासी। परिसारी। संसर्गी। परिदेवी। संज्वारी। परिक्षेपी। परिराटी। परिवादी। परिदाही। परिमोही। दोषी। द्वेषीं। दोही। द्रोही। योगी। आक्रीडी। विवेकी। त्यागी।<br>रञ्ज रागे - रागी, निपातनादनुनासिकलोपः। भज सेवायाम् - भागी।<br>अतिचारी। अपचारी। आमोषी। अभ्याघाती। | |
| घिनुण् १४१<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने१२३ | १४३. वौ कष-लस-कत्थ-स्रम्भः<br>वौ कषादिभ्यो घिनुण् प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>कष हिंसार्थः- विकाषी।<br>लस श्लेषण-क्रीडनयोः - विलासी।<br>कत्थ श्लाघायाम् - विकत्थी।<br>स्रम्भु विश्वासे - विस्रम्भी। | वौ १४४ |
| वौ १४३<br>घिनुण्१४१<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने१२३ | १४४. अपे च लषः<br>अपे चकाराद्, वौ च लषो घिनुण् प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>लष कान्तौ - अपलाषी। विलाषी। | |
| घिनुण् १४१<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने१२३ | १४५. प्रे लप-सृ-द्रु-मथ-वद-वसः<br>प्रे लपादिभ्यो घिनुण् प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>लप व्यक्तायां वाचि - प्रलापी।<br>सृ गतौ - प्रसारी।<br>द्रु गतौ - प्रद्रावी।<br>मथ विलोडने - प्रमाथी।<br>वद व्यक्तायां वाचि - प्रवादी।<br>वस निवासे - प्रवासी। | |

| | | |
|---|---|---|
| | १४६. निन्द-हिंस-क्लिश-खाद-विनाश परिक्षिप-परिरट-परिवादि-व्याभाषासूयो वुञ्<br>निन्दादिभ्यो वुञ्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>णिदि कुत्सायाम् - निन्दकः।<br>हिसि हिंसायाम् - हिंसकः।<br>क्लिश उपतापे, क्लिश विबाधने - क्लेशकः।<br>खादृ भक्षणे - खादकः।<br>णश अदर्शने, ण्यन्तः - विनाशकः।<br>क्षिप प्रेरणे, ण्यन्तः - परिक्षेपकः।<br>रट परिभाषणे - परिराटकः।<br>वद व्यक्तायां वाचि, ण्यन्तः - परिवादकः।<br>भाष व्यक्तायां वाचि, व्याङ्पूर्वः - व्याभाषकः।<br>असूय इति कण्ड्वादिः - असूयकः।<br>ण्वुलैव सिद्धे वुञ्विधानं ज्ञापनार्थम् - तच्छीलादिषु कर्तृषु वासरूपन्यायेन तृजादयो न भवन्तीति। | वुञ् १४७ |
| वुञ् १४६<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने१२३ | १४७. देविक्रुशोश्चोपसर्गे<br>उपसर्गे देवि-क्रुशोश्च वुञ्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>दिवु क्रीडाद्यर्थकः हेतुमण्ण्यन्तः, दिवि कूजने इति चुरादिण्यन्तो वा - आदेवकः। परिदेवकः।<br>क्रुश आह्वाने - आक्रोशकः। परिक्रोशकः<br>उपसर्गे इति किम्? देवयिता। क्रोष्टा।<br>व्रश्चादिना षः। | |
| | १४८. चलन-शब्दार्थादकर्मकाद्युच्<br>चलनार्थकात्, शब्दार्थकाच्च अकर्मकाद् धातोः युच्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>चलनार्थकादकर्मकात् - चलनः। चोपनः।<br>चल कम्पने, चुप मन्दायां गतौ।<br>शब्दार्थकादकर्मकात् -शब्दनः। रवणः।<br>शब्द शब्दने,उपसर्गाविष्कारे च। रु शब्दे।<br>अकर्मकादिति किम्? पठिता विद्याम्। | अकर्मकात् १४९<br>युच् १५३ |

| | | |
|---|---|---|
| अकर्मकात् १४८<br>युच् १४८<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १४९. अनुदात्तेतश्च हलादेः<br>अनुदात्तेतश्च हलादेः अकर्मकाद् धातोर्युच्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>वृतु वर्तने - वर्तनः।<br>वृधु वर्धने - वर्धनः।<br>अकर्मकादित्येव - वसिता वस्त्रम्।<br>'वस आच्छादने' इत्यदादिः सकर्मकः। | |
| युच् १४८<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १५०. जु-चङ्क्रम्य-दन्द्रम्य-सृ-गृधि-ज्वल-शुच-लष-पत-पदः<br>ज्वादिभ्यः युच्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>जु - जवनः। 'जु' इति सौत्रो धातुः गतौ वर्तते इत्येके, विशेषहेतौ वेगे इत्यपरे।<br>चङ्क्रम्य - चङ्क्रमणः। क्रमु पादविक्षेपे, 'नित्यं कौटिल्ये गतौ' इति यङन्तः।<br>दन्द्रम्य - दन्द्रमणः। द्रम गतौ 'नित्यं कौटिल्ये गतौ' इति यङन्तः।<br>सृ गतौ - सरणः।<br>गृधु अभिकाङ्क्षायाम् - गर्द्धनः।<br>ज्वल दीप्तौ - ज्वलनः।<br>शुच शोके - शोचनः।<br>लष कान्तौ - लषणः।<br>पत्लृ गतौ - पतनः।<br>पद गतौ - पदनः। | |
| युच् १४८<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १५१. क्रुध-मण्डार्थेभ्यश्च<br>क्रुध-मण्डार्थेभ्यो धातुभ्यश्च युच्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>क्रुध कोपे - क्रोधनः।<br>रुष रोषे - रोषणः।<br>मडि भूषायाम् - मण्डनः।<br>भूष अलंकारे - भूषणः। | |
| युच् १४८<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १५२. न यः<br>यकारान्तेभ्यो धातुभ्यो युच्प्रत्ययो न भवति।<br>'अनुदात्तेतश्च' इत्यादिपूर्वसूत्रेण प्राप्तो युच् प्रतिषिध्यते।<br>क्नूयी शब्दे - क्नूयिता।<br>क्ष्मायी विधूनने - क्ष्मायिता। | न. १५३ |

| | | |
|---|---|---|
| न १५२ युच् १४८ तच्छील-तद्धर्म-तत्साधुकारिषु १३४ वर्त्तमाने १२३ | १५३. सूद-दीप-दीक्षश्च<br>सूदादिभ्या धातुभ्यो युज्न भवति।<br>अनुदात्तेत्त्वात् प्राप्तः प्रतिषिध्यते।<br>षूद क्षरणे - सूदिता।<br>दीपी दीप्तौ - दीपिता।<br>दीक्ष मौण्ड्ये - दीक्षिता। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४ वर्त्तमाने १२३ | १५४. लष-पत-पद-स्था-भू-वृषू-हन-कम-गम-शॄभ्य उकञ्<br>लषादिभ्य धातुभ्यः उकञ्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>अभिलाषुकः। पातुकः। पादुकः। स्थायुकः। भावुकः।<br>वर्षुकः। घातुकः। कामुकः। गामुकः। शारुकः। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४ वर्त्तमाने १२३ | १५५. जल्प-भिक्ष-कुट्ट-लुण्ठ-वृङः षाकन्<br>जल्पादिभ्यः धातुभ्यः षाकन् प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>जल्प व्यक्तायां वाचि - जल्पाकः।<br>भिक्ष याच्ञायाम् - भिक्षाकः।<br>कुट्ट छेदने - कुट्टाकः।<br>लुण्ट स्तेये - लुण्टाकः।<br>वृङ् सम्भक्तौ - वराकः, वराकी। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४ वर्त्तमाने १२३ | १५६. प्रजोरिनिः<br>जु इति सौत्रो धातुः। तस्माद् प्रपूर्वात् इनिः प्रत्ययो भवति, तच्छीलादिषु कर्तृषु।<br>प्रजवी, प्रजविनौ, प्रजविनः। | इनिः १५७ |

| | | |
|---|---|---|
| इनिः १५६<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १५७. जि-दृ- क्षि-विश्रीण्-वमाव्यथाभ्यम-परिभू-प्रसूभ्यश्च<br>जिप्रभृतिभ्यश्च धातुभ्यः इनिः प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>जि जये, जि अभिभवे - जयी।<br>दृङ् आदरे - दरी।<br>क्षि क्षये, क्षि निवासगत्योः - क्षयी।<br>श्रिञ् सेवायाम्, विपूर्वः - विश्रयी।<br>इण् गतौ अतिपूर्वः - अत्ययी।<br>टुवम उद्वमने - वमी।<br>व्यथ भयचलनयोः नञ्पूर्वः - अव्यथी।<br>अम रोगे, अभिपूर्वः - अभ्यमी।<br>भू सत्तायाम्, परिपूर्वः - परिभवी।<br>षू प्रेरणे, प्रपूर्वः - प्रसवी। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १५८. स्पृहि-गृहि-पति-दयि-निद्रा-तन्द्रा-श्रद्धाभ्य आलुच्<br>स्पृहिप्रभृतिभ्यः आलुच्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>स्पृह ईप्सायाम्, चुरादिः - स्पृहयालुः।<br>गृह ग्रहणे चुरादिः - गृहयालुः।<br>पत गतौ, चुरादिः - पतयालुः।<br>दय दानगतिरक्षणेषु - दयालुः।<br>द्रा कुत्सायां गतौ, निपूर्वः, तत्पूर्वश्च।<br>तत्र तत्पूर्वत्वे तदो नकारान्तता च निपात्यते - निद्रालुः, तन्द्रालुः।<br>डुधाञ् धारणपोषणयोः श्रत्पूर्वः - श्रद्धालुः।<br>(वा०) आलुचि शीङो ग्रहणं कर्त्तव्यम्।<br>शीङ् स्वप्ने - शयालुः। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १५९. दा-धेट्-सि-शद-सदो रुः<br>दाप्रभृतिभ्यः धातुभ्यः रुप्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>दा - दारुः। डु दाञ् दाने, दो अवखण्डने, देङ् रक्षणे इति त्रयाणामिह ग्रहणाम्, 'गा-मा-दा-ग्रहणेष्वविशेषः' इति वचनात्।<br>धेट् पाने - धारुर्वत्सो मातरम्।<br>षिञ् बन्धने - सेरुः।<br>शद्लृ शातने - शद्रुः।<br>षद्लृ विशरणगत्यवसादनेषु - सद्रुः। | |

| | | |
|---|---|---|
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १६०. सृ-घस्यदः क्मरच्<br>सृ-घस्यदः क्मरच् प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>सृ गतौ - सृमरः।<br>घस्लृ अदने, भौवादिकः - घस्मरः।<br>अद भक्षणे - अद्मरः। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १६१. भञ्ज-भास-मिदो घुरच्<br>भञ्ज-भास-मिदो धातुभ्यः घुरच् प्रत्ययो भवति, तच्छीलादिषु कर्तृषु।<br>भञ्जो आमर्दने - भङ्गुरं काष्ठम्।<br>भासृ दीप्तौ - भासुरं ज्योतिः।<br>ञिमिदा स्नेहने - मेदुरः पशुः।<br>भञ्जेः कर्मकर्तरि प्रत्ययः, स्वभावात्।<br>तेन भङ्गुरं काष्ठमित्यस्य स्वयं भञ्जनक्रियाशीलं काष्ठमित्यर्थः। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १६२. विदि-भिदि-च्छिदेः कुरच्<br>विदादिभ्यः धातुभ्यः कुरच् प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>विद ज्ञाने - विदुरः पण्डितः।<br>भिदिर् विदारणे - भिदुरं काष्ठम्।<br>छिदिर् द्वैधीकरणे - छिदुरा रज्जुः।<br>भिदिच्छिद्योः कर्मकर्तरि प्रयोगः, स्वभावात्।<br>(वा०) व्यधेः सम्प्रसारणं कुरच्च वक्तव्यः।<br>व्यध ताडने - विधुरः। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १६३. इण्-नश-जि-सर्तिभ्यः क्वरप्<br>इणादिभ्यः धातुभ्यः क्वरप् प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>इत्वरः, इत्वरी। नश्वरः, नश्वरी। जित्वरः, जित्वरी। सृत्वरः, सृत्वरी। | क्वरप् १६४ |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १६४. गत्वरश्च<br>गत्वरश्च तच्छीलादिषु कर्तृषु निपात्यते।<br>गमेः क्वरप् प्रत्ययः, अनुनासिकलोपश्च निपात्यते।<br>झलादिप्रत्ययपरकत्वाभावाद् अनुनासिकलोपस्यापि अप्राप्तिरिति सोऽपि निपात्यते।<br>गत्वरः, गत्वरी। | |

| तच्छील-तद्धर्म-तत्साधुकारिषु १३४ वर्त्तमाने १२३ | १६५. जागरूकः<br>जागर्तेः ऊकः प्रत्ययो निपात्यते तच्छीलादिषु कर्तृषु ।<br>जागृ निद्राक्षये - जागरूकः। | ऊकः १६६ |
|---|---|---|
| ऊकः १६५ तच्छील-तद्धर्म-तत्साधुकारिषु १३४ वर्त्तमाने १२३ | १६६. यज-जप-दशां यङः<br>यजादीनां यो यङ् तदन्ताद् ऊकप्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>यायजूकः। जञ्जपूकः। दन्दशूकः। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४ वर्त्तमाने १२३ | १६७. नमि-कम्पि-स्म्यजस-कम-हिंस-दीपो रः<br>नमिप्रभृतिभ्यो धातुभ्यः रः प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>णम प्रह्वत्वे, शब्दे च - नम्रं काष्ठम्।<br>कपि चलने - कम्प्रा शाखा।<br>ष्मिङ् ईषद्धसने - स्मेरं मुखम्।<br>नञ्पूर्वः जसु मोक्षणे - अजस्रं जुहोति।<br>अजस्रमित्यस्य क्रियासातत्यमित्यर्थः।<br>कमु कान्तौ - कम्रा युवतिः।<br>हिसि हिंसायाम् - हिंस्रं रक्षः।<br>दीप दीप्तौ - दीप्रं काष्ठम्। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४ वर्त्तमाने १२३ | १६८. सनाशंस-भिक्ष उः<br>सन्प्रत्ययान्ताद्, आङ्पूर्वात् शसिधातोः, भिक्षधातोश्च उप्रत्ययो भवति।<br>सन्नन्तात् - चिकीर्षुः। जिहीर्षुः।<br>आङः शसि इच्छायाम् - आशंसुः।<br>भिक्ष याच्ञायाम् - भिक्षुः।<br>सनिति सन्प्रत्ययान्तो गृह्यते न सनिर्धातुः; अनभिधानाद्, व्याप्तिन्यायाद् वा। | उः १७० |
| उः १६८ तच्छील-तद्धर्म-तत्साधुकारिषु १३४ वर्त्तमाने १२३ | १६९. विन्दुरिच्छुः<br>तच्छीलादिषु कर्तृषु वेत्तेर्नुमागमः, इषेश्छत्वम् उप्रत्ययश्च निपात्यते।<br>विन्दुः। वेदनशील इत्यर्थः।<br>इच्छुः। एषणशील इत्यर्थः।<br>कथमल्पार्थे विन्दुः ? 'विदि अवयवे' इत्यस्माद् औणादिक उप्रत्ययः। | |

| | | |
|---|---|---|
| उः १६८<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १७०. क्याच्छन्दसि<br>क्यप्रत्ययान्तेभ्यः धातुभ्यः छन्दसि उप्रत्ययो भवति।<br>'क्य' इति क्यच्-क्यष्-क्यङां सामान्येन निर्देशः।<br>क्यजन्तात् - मित्रयुः। 'सुपः आत्मनः क्यच्।<br>क्यषन्तात् - संस्वेदयुः। लोहितादित्वात् क्यष्।<br>क्यङन्तात् - सुम्नुयुः। सुम्न इवाचरतीत्यर्थे 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्।<br>छन्दसीति किम्? मित्रीयिता। | छन्दसि १७१ |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १७१. आदृ-गम-हन-जनः किकिनौ लिट् च<br>आकारान्तेभ्यः, ऋवर्णान्तेभ्यः, गम, हन, जन-इत्येतेभ्यश्च धातुभ्यः छन्दसि विषये तच्छीलादिषु कर्तृषु कि,किन्-इत्येतौ प्रत्ययौ भवतः, लिड्वच्च तौ भवतः।<br>आत् - पपिः सोमम्। ददिर्गाः।<br>ऋ - बभ्रिर्वज्रम्।<br>गम् - जग्मिर्युवा।<br>हन् - जघ्निर्वृत्रममित्रियम्।<br>जन् - जज्ञिः।<br>किन् प्रत्ययेऽपि एवमेव रूपाणि, केवलं स्वरे विशेषः। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १७२. स्वपितृषोर्नजिङ्<br>स्वपितृषोस्तच्छीलादिषु कर्तृषु नजिङ्प्रत्ययो भवति।<br>ञिष्वप् शये - स्वप्नक्।<br>ञितृषा पिपासायाम् - तृष्णक्।<br>(वा०) धृषेश्चेति वक्तव्यम्।<br>धृष्णक्। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १७३. शॄ-वन्द्योरारुः<br>शॄ-वन्द्योस्तच्छीलादिषु कर्तृषु आरुप्रत्ययो भवति।<br>शॄ हिंसायाम् - शरारुः।<br>वदि अभिवादनस्तुत्योः - वन्दारुः। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १७४. भियः क्रु-क्लुकनौ<br>भियः क्रु, क्लुकन् - इत्येतौ प्रत्ययौ भवतः।<br>ञि भी भये - भीरुः। भीलुकः।<br>(वा०) क्रुकन्नपि वक्तव्यः।<br>भीरुकः। | |

| | | |
|---|---|---|
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १७५. स्थेश-भास-पिस-कसो वरच्<br>स्थादिभ्यः धातुभ्यः वरच् प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>ष्ठा गतिनिवृत्तौ-स्थावरः।<br>ईश ऐश्वर्ये - ईश्वरः।<br>भासृ दीप्तौ - भास्वरः।<br>पिसृ, पेसृ गतौ - पेस्वरः।<br>कस गतौ - विकस्वरः। | वरच् १७६ |
| वरच् १७५<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १७६. यश्च यङः<br>'या प्रापणे' इत्येतस्य यो यङ् तदन्ताद् धातोः वरच्प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>यायावरः। | |
| तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १७७. भ्राज-भास-धुर्विद्युतोर्जि-पॄ-जु-ग्रावस्तुवः क्विप्<br>भ्राजादिभ्यः धातुभ्यः क्विप् प्रत्ययो भवति तच्छीलादिषु कर्तृषु।<br>भ्राज दीप्तौ, विपूर्वः - विभ्राट्।<br>भास दीप्तौ - भाः।<br>धुर्वी हिंसार्थः - धूः। 'राल्लोपः' इति वलोपः, 'र्वोरुपधाया दीर्घ इकः' इति दीर्घः।<br>द्युत दीप्तौ, विपूर्वः - विद्युत्।<br>ऊर्ज बलप्राणनयोः - ऊर्क्।<br>पॄ पालनपूरणयोः - पूः। 'उदोष्ठ्यपूर्वस्य' इत्युत्वम्, रपरत्वम्, 'र्वोरुपधायाः इति दीर्घत्वम्।<br>(वा०) जवतेर्दीर्घश्च निपात्यते।<br>जु सौत्रो धातुः - जूः, जुवौ, जुवः।<br>ग्रावस्तुत् - ग्रावशब्दस्य 'ष्टुञ् स्तुतौ' इति धातुना सह समासः सूत्रे निपात्यते, ततः क्विप्। | क्विप् १७८ |
| क्विप् १७७<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १७८. अन्येभ्योऽपि दृश्यते<br>अन्येभ्योऽपि धातुभ्यस्तच्छीलादिषु कर्तृषु क्विप् प्रत्ययो दृश्यते।<br>युक्। छित्। भित्। | |

| | | |
|---|---|---|
| क्विप् १७७<br>तच्छील-तद्धर्म-तत्साधुकारिषु १३४<br>वर्त्तमाने १२३ | १७९. भुवः संज्ञान्तरयोः<br>भुवः क्विप्प्रत्ययो भवति संज्ञायाम्, अन्तरे च गम्यमाने।<br>संज्ञायाम् - विभूर्नाम कश्चित्।<br>अन्तरे - प्रतिभूः।<br>धनिकाधमर्णयोरन्तरे यस्तिष्ठति स प्रतिभूरुच्यते। | भुवः १८० |
| भुवः १७९ | १८०. वि-प्र-संभ्यो ड्वसंज्ञायाम्<br>वि-प्र-संभ्यो भुवः डुप्रत्ययो भवति असंज्ञायाम्।<br>विभुः सर्वगतः। प्रभुः स्वामी। संभुर्जनिता।<br>असंज्ञायामिति किम्? विभूर्नाम कश्चित्।<br>(वा०) डुप्रकरणे मित द्र्वादिभ्य उपसंख्यानम्।<br>मितं द्रवति मितद्रुः।<br>शं सुखं भवति = उत्पादयति इति शम्भुः।<br>अन्तर्भावितण्यर्थोऽत्र भवतिरिति हरदत्तः। | |
| | १८१. धः कर्मणि ष्ट्रन्<br>धः ष्ट्रन् प्रत्ययो भवति कर्मणि कारकेऽभिधेये।<br>'धः' इति 'धा' इत्यस्य पञ्चम्यन्तं रूपम्। 'धा' इत्यनेन 'धेट् पाने' 'डुधाञ् धारणपोषण्योः' इत्युभयोर्धात्वोर्ग्रहणम्।<br>धयन्ति यां, दधति वा यां भैषज्यार्थं सा धात्री।<br>धात्री इति स्तनदायिनी, आमलकी चोच्यते। षित्त्वान्ङीष्। | ष्ट्रन् १८३ |

| | | |
|---|---|---|
| | **१८२. दाम्नी-शस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे**<br>दाप्प्रभृतिभ्यः ष्ट्रन् प्रत्ययो भवति करणे कारके।<br>दाप् लवने - दाति = लुनात्यनेनेति दात्रम्।<br>णीञ् प्रापणे - नेत्रम्।<br>शसु हिंसायाम् - शस्त्रम्।<br>युजिर् योगे - योक्त्रम्।<br>ष्टुञ् स्तुतौ - स्तोत्रम्।<br>तुद व्यथने - तोत्त्रम्।<br>षिञ् बन्धने - सेत्रम्।<br>षिचिर् क्षरणे - सेक्त्रम्।<br>मिह सेचने - मेढ्रम्।<br>दंश दशने, सूत्रे 'दश' इति अनुनासिकलोपेन निर्देशः - द्रंष्ट्रा। अजादित्वाट्टाप् न ङीष्।<br>दंशेरनुनासिकलोपेन निर्देशो ज्ञापनार्थः - क्ङितोऽन्यस्मिन्नपि प्रत्यये न लोपः क्वचिद् भवति; तेन ल्युट्यपि लोपो दृश्यते-दशनम्।<br>णह बन्धने - नद्ध्री। | |
| करणे १८२ ष्ट्रन् १८१ | **१८३. हलसूकरयोः पुवः**<br>पुवः ष्ट्रन् प्रत्ययो भवति, करणे कारके, तच्चेत्करणकारकं हलसूकरयोरवयवो भवति।<br>'पू' इति पूङ्-पुञोः सामान्येन ग्रहणम्।<br>पूयतेऽनेनेति पोत्रम्, हलस्य, सूकरस्य वा मुखमित्यर्थः। | |
| करणे १८२ | **१८४. अर्त्ति-लू-धू-सू-खन-सह-चर इत्रः**<br>अर्त्तिप्रभृतिभ्य इत्रप्रत्ययो भवति करणे कारकेऽभिधेये।<br>अर्त्ति - ऋगतौ - अरित्रम्।<br>लूञ् छेदने - लवित्रम्।<br>धू विधूनने - धवित्रम्।<br>षू प्रेरणे - सवित्रम्।<br>खनु अवदारणे - खनित्रम्।<br>षह मर्षणे - सहित्रम्।<br>चर गतिभक्षणयोः - चरित्रम्। | इत्रः १८६ |
| करणे १८२<br>इत्रः १८४ | **१८५. पुवः संज्ञायाम्**<br>पुवः इत्रप्रत्ययो भवति करणे कारके, संज्ञायाम्।<br>पूयतेऽनेनेति पवित्रम्।<br>येनाज्यमुत्पूयते, यच्च अनामिकावेष्टनं तत् पवित्रमुच्यते, संज्ञा चैषा। | पुवः १८६ |

| | | |
|---|---|---|
| करणे १८२<br>इत्रः १८४<br>पुवः १८५ | **१८६. कर्तरि चर्षिदेवतयोः**<br>पुवः इत्रप्रत्ययो भवति, करणे, कर्त्तरि च कारकेऽभिधेये, तच्चेत्करणं ऋषिर्भवति, कर्ता च देवता भवति।<br>ऋषौ करणे - पूयतेऽनेनेति पवित्रोऽयमृषिः।<br>देवतायां कर्तरि - अग्निः पवित्रं स मा पुनातु। वायुः, सोमः, सूर्य इन्द्रः पवित्रं ते मा पुनन्तु।<br>सामान्याभिप्रायमेकवचनं, नपुंसकत्वं च पवित्रशब्दे। | |
| वर्त्तमाने१२३ | **१८७. ञीतः क्तः**<br>'ञि' इद्यस्य स ञीत्।<br>ञीतो धातोः क्तप्रत्ययो भवति वर्तमाने काले।<br>भूते निष्ठा विहितेति वर्तमाने सा न प्राप्नोतीत्यस्मिन् 'वर्तमाने' इत्यधिकारे विधीयते। तेनानेन वर्तमानकाले क्तप्रत्ययो भवति।<br>ञिमिदा स्नेहने - मिन्नः।<br>ञिक्ष्विदा स्नेहमोचनयोः - क्ष्विण्णः।<br>ञिधृषा प्रागल्भ्ये - धृष्टः। | क्तः १८८ |
| क्तः १८७<br>वर्त्तमाने१२३ | **१८८. मति-बुद्धि-पूजार्थेभ्यश्च**<br>मति-बुद्धि-पूजार्थेभ्यश्च धातुभ्यः क्तप्रत्ययो भवति वर्तमाने काले।<br>मतिरिहेच्छा, बुद्धेः पृथगुपादानात्।<br>बुद्धिः=ज्ञानम्। पूजा= सत्कारः।<br>मत्यर्थेभ्यः - राज्ञां मतः, इष्टो वा। तैरिष्यमाण इत्यर्थः।<br>पूजार्थेभ्यः - राज्ञां पूजितः, अर्चितो वा।<br>तैः सत्कार्य इत्यर्थः।<br>उदाहरणेषु 'क्तस्य च वर्तमाने' इति सूत्रेण क्तस्य योगे कर्तरि षष्ठी, कर्मण उक्तत्वात् क्तान्तात् प्रथमा।<br>सूत्रे चकारोऽनुक्तसमुच्चयार्थस्तेनान्येभ्योऽपि धातुभ्यः क्वचिद् वर्तमाने, क्वच्चि भविष्यत्यपि क्तप्रत्ययो दृश्यते।<br>वर्तमाने क्तप्रत्ययो यथा - शीलितः, रक्षितः, क्षान्तः, आक्रुष्टः, जुष्टः, रुष्टः, रुपितः, अभिव्याहृतः, हृष्टः, तुष्टः, कान्तः, संयतः, उद्यतः, अमृतः, सुप्तः, शयितः, आशितः, लिप्तः, तृप्तः इत्यादि।<br>भविष्यत्यपि क्तप्रत्ययो यथा - कष्टम् इति।<br>एवं हि चकारेण सर्वं सिद्धं भवति। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां तृतीयाध्यायस्य द्वितीयः पादः।।

।। श्रीः ।।

# ।। अथ तृतीयाध्यायस्य तृतीयपादः ।।

| | | |
|---|---|---|
| धातोः३.१.९१<br>प्रत्ययः ३.१.१<br>वर्त्तमाने ३.२.१२३ | १. उणादयो बहुलम्<br>उणादयः प्रत्ययाः वर्तमाने काले बहुलं भवन्ति, संज्ञायाम्।<br>बहुलग्रहणाद् यतो विहितास्ततोऽन्यत्रापि भवन्ति, केचिदविहिता अपि प्रत्ययाः प्रयोगत उह्यन्ते।<br>'कृ-वा-पा-जि-मि-स्विदि-साध्यशूभ्य उण्'<br>(उणादिसूत्रम् १.१) करोतीति कारुः। वातीति वायुः। पातीति पायुः। जयत्यभिभवति रोगानिति जायुः औषधम्।<br>मिनोति = प्रक्षिपति देहे उष्माणमिति मायुः पित्तम्।<br>स्वदते = रोचते इति स्वादु फलम्।<br>साध्नोति परकार्यमिति साधुः।<br>अश्नुते = व्याप्नोति यत्तद् आशु शीघ्रम्।<br>संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।<br>कार्याद् विद्यादनुबन्धमेतच्छास्त्रमुणादिषु।। | उणादयः ३ |
| उणादयः १<br>धातोः३.१.९१<br>प्रत्ययः ३.१.१ | २. भूतेऽपि दृश्यन्ते<br>उणादयो भूतेऽपि दृश्यन्ते।<br>वृत्तमिदं वर्त्म। चरितं तदिति चर्म। भसितं तदिति भस्म।<br>दृशिग्रहणं प्रयोगानुसारार्थम्। | |
| उणादयः १<br>धातोः३.१.९१<br>प्रत्ययः ३.१.१ | ३. भविष्यति गम्यादयः<br>भविष्यति काले गम्यादयः शब्दाः साधवो भवन्ति।<br>गम्यादिषु केचिदुणादयः, केचिदष्टाध्यायीगताः।<br>ग्रामं गमी। आगामी। प्रस्थायी। प्रतिरोधी। प्रतियोधी। प्रतियोगी। प्रतियायी। आयायी। भावी।<br>(वा०) अनद्यतन उपसंख्यानम्।<br>श्वो गमी ग्रामम्। | भविष्यति १५ |

| | | |
|---|---|---|
| भविष्यति ३<br>धातोः३.१.९१<br>प्रत्ययः ३.१.१ | ४. यावत्पुरानिपातयोर्लट्<br>यावत्पुरानिपातयोरुपपदयोः धातोर्लट् प्रत्ययो भवति भविष्यति काले।<br>यावद्, भुङ्क्ते। पुरा भुङ्क्ते।<br>निपातयोरिति किम्? यावद् भोक्ष्यसे तावद् दास्यति। करणभूतया पुरा व्रजिष्यति। | लट् ६ |
| भविष्यति ३ लट् ४<br>धातोः३.१.९१<br>प्रत्ययः ३.१.१ | ५. विभाषा कदाकर्ह्योः<br>कदा,कर्हि-इत्येतयोरुपपदयोः धातोः भविष्यति काले लट् प्रत्ययो विभाषा भवति।<br>कदा भुङ्क्ते, भोक्ष्यते, भोक्ता वा।<br>कर्हि भुङ्क्ते, भोक्ष्यते, भोक्ता वा। | विभाषा ६ |
| भविष्यति ३<br>विभाषा५<br>लट् ४ | ६. किंवृत्ते लिप्सायाम्<br>किंवृत्ते (किंशब्दान्निष्पन्ने शब्दे) उपपदे लिप्सायां भविष्यति काले धातोर्विभाषा लट् प्रत्ययो भवति।<br>लब्धुमिच्छा लिप्सा।<br>कं, कतरं, कतमं वा भवान् भोजयति, भोजयिष्यति, भोजयिता वा? भोजनलाभो मे भवेदिति प्रश्नकर्तुः लिप्सा।<br>लिप्सायामिति किम्? कः पाटलिपुत्रं गमिष्यति। | |
| भविष्यति ३<br>विभाषा५<br>लट् ४ | ७. लिप्स्यमानसिद्धौ च<br>लिप्स्यमानेनान्नादिना स्वर्गादिसिद्धौ गम्यमानायां भविष्यति काले धातोर्विभाषा लट् प्रत्ययो भवति।<br>अकिंवृत्तार्थोऽयमारम्भः।<br>योऽन्नं ददाति, दास्यति, दाता वा स स्वर्गं याति, यास्यति, याता वा। | |
| भविष्यति ३<br>विभाषा५<br>लट् ४ | ८. लोडर्थलक्षणे च<br>लोडर्थलक्षणे वर्तमानाद् धातोर्भविष्यति काले विभाषा लट् प्रत्ययो भवति।<br>लोडर्थलक्षणे इत्यस्य लोडर्थः =प्रैषादिर्लक्ष्यते येन स लोडर्थलक्षणो धात्वर्थः,तस्मिन्नित्यर्थः।<br>उपाध्यायश्चेदागच्छति, आगमिष्यति, आगन्ता वा, अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणमधीष्व।<br>उपाध्यायागमनम् अध्ययनप्रैषस्य लक्षणम्। | लोडर्थलक्षणे ६ |

| | | |
|---|---|---|
| लोडर्थलक्षणे ८<br>भविष्यति ३<br>विभाषा५<br>लट् ४ | ९. लिङ् चोर्ध्वमौहूर्तिके<br>ऊर्ध्वमौहूर्तिके भविष्यति काले लोडर्थलक्षणे वर्तमानाद् धातोर्विभाषा लिङ्प्रत्ययो भवति, चकाराल्लट् च।<br>मुहूर्तादुपरि उपाध्यायश्चेदागच्छेत्, आगच्छति, आगमिष्यति, आगन्ता वा, अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणमधीष्व। | |
| भविष्यति ३ | १०. तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्<br>क्रियार्थायां क्रियायामुपपदे धातोर्भविष्यति काले तुमुन्, ण्वुल्-इत्येतौ प्रत्ययौ भवतः।<br>भोक्तुं, भोजको वा व्रजति।<br>भुजिक्रियार्थो व्रजिरत्रोपपदम्। | क्रियायां १३<br>क्रियार्थायाम् १३ |
| क्रियार्थायाम्१०<br>क्रियायां १०<br>भविष्यति ३ | ११. भाववचनाश्च<br>क्रियार्थायां क्रियायामुपपदे धातोर्भविष्यति काले भाववचनाः प्रत्यया अपि भवन्ति।<br>'भावे' (३.३.१८) इति प्रकृत्य भाववाचकाः घञादयः प्रत्यया भाववचनाः कथ्यन्ते।<br>पाकाय व्रजति। भूतये व्रजति। पुष्टये व्रजति।<br>अत्र 'तुमर्थाच्च भाववचनात्' इति सूत्रेण चतुर्थी। | |
| क्रियार्थायाम्१०<br>क्रियायां १०<br>भविष्यति ३ | १२. अण् कर्मणि च<br>क्रियार्थायां क्रियायामुपपदे कर्मोपपदाद् धातोरण् प्रत्ययो भवति, भविष्यति काले।<br>काण्डलावो व्रजति। काण्डं लवितुं व्रजतीत्यर्थः। | |
| क्रियार्थायाम्१०<br>क्रियायां १०<br>भविष्यति ३ | १३. लृट् शेषे च<br>शेषे = शुद्धे भविष्यति काले, चकारात् क्रियार्थायां क्रियायां चोपपदे धातोर्लृट् प्रत्ययो भवति।<br>करिष्यामीति व्रजति।<br>शेषे खल्वपि - करिष्यति। | |
| भविष्यति ३ | १४. लृटः सद्वा<br>लृटः स्थाने सद् (शतृ-शानच्प्रत्ययौ) वा भवति।<br>करिष्यन्, करिष्यमाणो वा देवदत्तः। करिष्यति, करिष्यते वा देवदत्तः।<br>व्यवस्थितविभाषेयम्। तेन अप्रथमासमानाधिकरणे, सम्बोधने, लक्षणहेत्वोश्च च नित्यं भवति - करिष्यन्तं, करिष्यमाणं वा देवदत्तं पश्य, हे करिष्यन् ! हे करिष्यमाण ! अर्जयिष्यमाणो वसति। | |

| भविष्यति ३<br>धातोः३.१.९१<br>प्रत्ययः ३.१.१ | **१५. अनद्यतने लुट्**<br>अनद्यतने भविष्यति काले वर्तमानाद् धातोः लुट् प्रत्ययो भवति।<br>श्वः कर्ता। श्वो भोक्ता।<br>अनद्यतने इति बहुव्रीहिः। तेन अद्य श्वो वा भविष्यति-इत्यत्र अनद्यतनेन व्यामिश्रे भविष्यति लुङ् न भवति। | |
|---|---|---|
| धातोः३.१.९१<br>प्रत्ययः ३.१.१ | **१६. पद-रुज-विश-स्पृशो घञ्**<br>पदादिभ्यो घञ् प्रत्ययो भवति।<br>'भविष्यति' इति निवृत्तम्। तेन इत उत्तरं त्रिष्वपि कालेषु प्रत्ययाः भवन्ति।<br>'कर्तरि कृत्' (३.४.६७) इति सूत्रानुसारेण कर्तरि कारकेऽयं प्रत्ययः।<br>पद्यतेऽसौ पादः। रुजति = पीडयति असौ रोगः।<br>विशत्यसौ वेशः।<br>(वा०) स्पृश उपताप इति वक्तव्यम्।<br>स्पृशतीति स्पर्शः उपतापः। उपतापः = रोगः। | घञ् ५५ |
| घञ् १६<br>धातोः३.१.९१<br>प्रत्ययः ३.१.१ | **१७. सृ स्थिरे**<br>'सृ' धातोर्घञ्प्रत्ययो भवति स्थिरे कर्तरि वाच्ये।<br>स्थिर इति कालान्तरस्थायी पदार्थ उच्यते।<br>चिरं तिष्ठन् कालान्तरं सरतीति सारः।<br>सारः=मज्जा।<br>चन्दनसारः। खदिरसारः।<br>(वा०) व्याधि-मत्स्य-बलेष्विति वक्तव्यम्।<br>अतीसारो व्याधिः। शरीरान्तरवस्थितं रुधिरादि द्रव्यमतिशयेन सारयातीति कृत्वा। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति सूत्रेण उपसर्गस्य दीर्घत्वम्।<br>विविधं सरतीति विसारो मत्स्यः। सारो बलम्।<br>सारयति = चेष्टयतीति कृत्वा। | |
| घञ् १६<br>धातोः३.१.९१<br>प्रत्ययः ३.१.१ | **१८. भावे**<br>भावे धातोर्घञ् प्रत्ययो भवति।<br>पाकः। त्यागः। रागः; रञ्जेश्च' ''घञि च भावकरणयोः' इति रञ्जेर्नस्य लोपः। | भावे ११२. |

| | | |
|---|---|---|
| घञ् १६<br>धातोः३.१.९१<br>प्रत्ययः ३.१.१ | १९. अकर्तरि च कारके संज्ञायाम्<br>अकर्तरि कारके संज्ञायाम्, चकारादसंज्ञायां च धातोर्घञ्प्रत्ययो भवति।<br>बाहुल्येन संज्ञायामेव घञ्, क्वचिदसंज्ञायामपीति ज्ञापनाय सूत्रे चकारग्रहणं कृतम्।<br>संज्ञायाम् - प्रास्यते = प्रक्षिप्यते यः स प्रासः; कुन्त इत्यर्थः।<br>आहरन्ति अस्माद् रसमिति आहारः।<br>क्वचिदसंज्ञायामपि यथा - को भवता दायो दत्तः। को भवता लाभो लब्धः।<br>इत उत्तरम् 'आक्रोशे नञ्यनिः' (३.३.११२) इति सूत्रं यावत् 'भावे' 'अकर्तरि च कारके' इति च द्वयमनुवर्तते। | सम्पूर्णसूत्रम्११२ |
| घञ् १६ | २०. परिमाणाख्यायां सर्वेभ्यः<br>अकर्तरि कारके, भावे च सर्वेभ्यो धातुभ्यो घञ् प्रत्ययो भवति परिमाणाख्यायां गम्यमानायाम्।<br>सर्वग्रहणमपो बाधनार्थम्। पुरस्तादपवादन्यायेन ह्यचमेवायं बाधेत नापम्।<br>एकस्तण्डुलनिचायः। द्वौ शूर्पनिष्पावौ। कॄ विक्षेपे द्वौ कारौ, त्रयः काराः<br>निचीयते = राशीक्रियते इति निचायः, राशिरित्यर्थः। कर्मणि घञः। एवमेव निष्पूयते = तुषापनयेनेन शोध्यते इति निष्पावः, अत्रापि कर्मणि घञ्।<br>कीर्यते = विक्षिप्यते यः स कारः, अत्रापि कर्मणि घञ्।<br>परिमाणाख्यायामिति किम्? निश्चयः।<br>अत्र न केनचिदियत्ता गम्यते इति 'एरच्' इति सूत्रेण अच् प्रत्यय एव।<br>(वा०) दारजारौ कर्तरि णिलुक् च।<br>दारयन्तीति दाराः। जरयन्ति = नाशयन्ति कुलमिति जाराः, जारः= प्रच्छन्नपतिः। 'जरयन्ति' इत्यत्र 'जनीजॄष्०'इति ह्रस्वत्वम्। | |

| | | |
|---|---|---|
| घञ् १६ | २१. इङश्च<br>इङश्च अकर्तरि कारके, भावे च घञ् प्रत्ययो भवति।<br>अधीयते यः सोऽध्यायः। उपेत्यास्मादधीयते छात्रा इति उपाध्यायः।<br>(वा०) अपदाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्।<br>उपाध्यायी। उपाध्याया। | |
| घञ् १६ | २२. उपसर्गे रुवः<br>उपसर्गे उपपदे रुवो घञ् प्रत्ययो भवति अकर्तरि कारके, भावे च।<br>रु शब्दे - संरावः। उपरावः।<br>उपसर्गे इति किम्? रवः। 'ऋदोरप्' इत्यप्प्रत्ययः। | |
| घञ् १६ | २३. समि यु-द्रु-दवः<br>समि उपपदे यु-द्रु-दवो घञ् प्रत्ययो भवति अकर्तरि कारके, भावे च।<br>संयूयते = मिश्रीक्रियते गुडजीरकादिभिरिति संयावः, पिष्टविकारोऽपूपविशेषः।<br>सन्द्रावः। सन्दावः।<br>समीति किम्? प्रयवः। | |
| घञ् १६ | २४. श्रि-णी-भुवोऽनुपसर्गे<br>श्रि, णी, भुवो घञ्प्रत्ययो भवति अकर्तरि कारके, भावे च, उपसर्गे तु घञ् न भवति।<br>श्रायः। नायः। भावः।<br>अनुपसर्गे इति किम्? प्रश्रयः, प्रणयः। प्रभवः।<br>कथं "प्रभावो राज्ञः" इति? प्रकृष्टो भाव इति प्रादिसमासः।<br>कथं "राज्ञो नय" इति? 'कृत्यल्युटो बहुलम्' इत्यज्भविष्यति। | |
| घञ् १६ | २५. वौ क्षु-श्रुवः<br>वौ क्षु-श्रुवो घञ्प्रत्ययो भवति अकर्तरि कारके, भावे च।<br>टु क्षु शब्दे - विक्षावः।<br>श्रु श्रवणे - विश्रावः। | |

| | | |
|---|---|---|
| घञ् १६ | **२६. अवोदोर्नियः**<br>अवोदोः उपपदयोर्नियो(णीञ्धातोः) घञ्प्रत्ययो भवति, अकर्तरि कारके, भावे च।<br>अवनायः, अधोनयनमित्यर्थः।<br>उन्नायः, ऊर्ध्वनयनमित्यर्थः।<br>कथम्? ''उन्नयः पदार्थानाम्'' इति? 'कृत्यल्युटो बहुलम्' इत्यज्भविष्यति। | |
| घञ् १६ | **२७. प्रे द्रु-स्तु-स्रुवः**<br>प्रे उपपदे द्रु-स्तु-स्रुवो घञ् प्रत्ययो भवति, अकर्तरि कारके, भावे च।<br>प्रद्रावः। प्रस्तावः। प्रस्रावः।<br>प्र इति किम्? द्रवः। स्तवः। स्रवः। | |
| घञ् १६ | **२८. निरभ्योः पूल्वोः**<br>निरभ्योः उपपदयोः यथासंख्यं पूल्वोः(पू-लूधात्वोः) घञ्प्रत्ययो भवति अकर्तरि कारके, भावे च।<br>'पू' इति पूङ्पूञोः सामान्येन ग्रहणम्।<br>निष्पावः। अभिलावः। | |
| घञ् १६ | **२९. उन्न्योर्ग्रः**<br>उन्न्योः(उद्,नि-इत्यनयोः) उपपदयोः ग्रः(गॄधातोः) घञ्प्रत्ययो भवति, अकर्तरि कारके, भावे च।<br>गॄ शब्दे, गॄ निगरणे - उद्गारः समुद्रस्य।<br>अतिप्रबृद्धः शब्द इत्यर्थः।<br>निगारो देवदत्तस्य। भक्षणमित्यर्थः। | उन्न्योः ३० |
| घञ् १६ उन्न्योः२९ | **३०. कॄ धान्ये**<br>उन्न्योः उपपदयोः कॄ घञ्प्रत्ययं लभते धान्यविषयश्चेद् धात्वर्थो भवति।<br>कॄ विक्षेपे - उत्कारो, निकारो वा धान्यस्य।<br>धान्यस्योत्क्षेपणमित्यर्थः।<br>धान्य इति किम्? भैक्ष्योत्करः।<br>पुष्पनिकरः। भैक्ष्यराशिः, पुष्पसमूह इत्यर्थः। | |
| घञ् १६ उन्न्योः२९ | **३१. यज्ञे समि स्तुवः**<br>यज्ञे समि स्तुवो घञ्प्रत्ययो भवति।<br>संस्तावश्छन्दोगानाम्। यस्मिन् देशे छन्दोगाः समेत्य स्तुवन्ति स देशः संस्ताव इत्युच्यते।<br>यज्ञ इति किम्? संस्तवश्छात्रयोः।<br>संस्तव इत्यस्य परिचय इत्यर्थः। 'ऋदोरप्' इत्यप्प्रत्ययः। | |

| | | |
|---|---|---|
| घञ् १६ उन्न्योः२९ | **३२. प्रे स्त्रोऽयज्ञे**<br>प्रे स्त्रो(स्तॄ धातोः) अयज्ञे विषये घञ् प्रत्ययो भवति।<br>स्तॄञ् आच्छादने - शङ्खप्रस्तारः।<br>अयज्ञे इति किम्? बर्हिष्प्रस्तरः।<br>प्रस्तरः = मुष्टिविशेषः। 'ॠदोरप्' इत्यप्प्रत्ययः। | स्त्रः ३४ |
| घञ् १६ स्त्रः ३२ | **३३. प्रथने वावशब्दे**<br>वौ स्त्रो घञ्प्रत्ययो भवति अशब्दे प्रथने।<br>प्रथनम् = विस्तीर्णता।<br>पटस्य विस्तारः।<br>प्रथन इति किम्? तृणविस्तरः।<br>अशब्द इति किम्? विस्तरो वचसाम्। 'ॠदोरप्' इत्यप्प्रत्ययः। | वौ ३४ |
| वौ ३३ स्त्रः ३२ घञ् १६ | **३४. छन्दोनाम्नि च**<br>वौ स्त्रो घञ्प्रत्ययो भवति छन्दोनाम्नि च।<br>अत्र छन्दःशब्देन गायत्र्यादिछन्दोविशेषा गृह्यन्ते,न तु मन्त्र-ब्राह्मणम् सूत्रे नामग्रहणात्।<br>विष्टारपङ्क्तिः छन्दः।<br>विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञि कृते, 'छन्दोनाम्नि च' (८.३.९४) इति सूत्रेण षत्वे च कृते निष्पन्नस्य विष्टारशब्दस्य पङ्क्तिशब्देन कर्मधारयसमासः। | |
| घञ् १६ | **३५. उदि ग्रहः**<br>उदि ग्रहो घञ्प्रत्ययो भवति अकर्तरि कारके, भावे च।<br>उद्ग्राहः। | ग्रहः ३६ |
| ग्रहः ३५ घञ् १६ | **३६. समि मुष्टौ**<br>समि ग्रहो घञ्प्रत्ययो भवति अकर्तरि कारके, भावे च, मुष्टिविषयश्चेद्धात्वर्थो भवति।<br>मुष्टिः = अङ्गुलिसन्निवेश इत्यर्थः।<br>अहो मल्लस्य संग्राहः, मुष्टिरित्यर्थः।<br>मुष्टाविति किम्? संग्रहो धान्यस्य।<br>'ग्रह-वृ-दृ-निश्चि-गमश्च' इति सूत्रेण अप् प्रत्ययः। | |

| | | |
|---|---|---|
| घञ् १६ | ३७. परिन्योर्नीणोर्द्यूताभ्रेषयोः<br>परिन्योः उपपदयोः नीणोर्घञ्प्रत्ययो भवति यथासंख्यं द्यूताभ्रेषयोः।<br>यथोचिताद् भ्रंशो भ्रेषः, तदन्यः अभ्रेषः अर्थात् यथाप्राप्तकरणमिति अभ्रेषशब्दस्यार्थः।<br>द्यूते-परिणायेन शारान् हन्ति।<br>द्यूतव्यवहारे अक्षाणां समन्तान्नयनेन परपक्षस्य अक्षान् बाधते इत्यर्थः।<br>अभ्रेषे- एषोऽत्र न्यायः। उचितमित्यर्थः।<br>द्यूताभ्रेषयोरिति किम्? परिणयः, विवाह इत्यर्थः। न्ययं गतः पापः, नाशं गत इत्यर्थः। 'एरच्' इति अच् प्रत्ययः। | |
| घञ् १६ | ३८. परावनुपात्यय इणः<br>परौ इणो घञ्प्रत्ययो भवति अनुपात्यये गम्यमाने।<br>क्रमप्राप्तस्यानतिक्रमणम् अनुपात्ययः, परिपाटीत्यर्थः।<br>तव पर्यायः। मम पर्यायः।<br>अनतिक्रमणमित्यर्थः।<br>अनुपात्यये इति किम्? कालस्य पर्ययः।<br>अतिक्रमणमित्यर्थः। 'एरच्' इत्यच्प्रत्ययः। | |
| घञ् १६ | ३९. व्युपयोः शेतेः पर्याये<br>व्युपयोः शेतेः (शीङ्धातोः) घञ्प्रत्ययो भवति पर्याये गम्यमाने।<br>पर्याय इत्यस्य अनतिक्रमणमित्यर्थः।<br>तव विशायः। मम विशायः।<br>तव राजोपशायः; तव राजानमुपशयितुं पर्याय इत्यर्थः।<br>पर्याय इति किम्? विशयः। उपशयः।<br>'एरच्' इत्यच्प्रत्ययः। | |
| घञ् १६ | ४०. हस्तादाने चेरस्तेये<br>अकर्तरि कारके, भावे च चेः घञ्प्रत्ययो भवति हस्तादाने गम्यमाने न तु स्तेये।<br>स्तेयम् = चौर्यम्। हस्तादानग्रहणेन प्रत्यासत्तिरादेयस्य लक्ष्यते।<br>पुष्पप्रचायः। फलप्रचायः।<br>हस्तादाने इति किम्? वृक्षशिखरे फलप्रचयं करोति।<br>अस्तेय इति किम्? पुष्पप्रचयश्चौर्येण।<br>'एरच्' इत्यच्प्रत्ययः। | चेः ४२ |

| | | |
|---|---|---|
| चेः ४० घञ् १६ | **४१.निवास-चिति-शरीरोपसमाधानेष्वादेश्च कः**<br>अकर्तरि कारके, भावे च चेः घञ् प्रत्ययो भवति, तस्यादेश्च कः, निवास, चिति, शरीर, उपसमाधान-इत्येतेष्वर्थेषु।<br>निवासः = वासस्थलम्। चितिः=चयनविषयः।<br>शरीरम् = पाण्यादिसमुदायः। उपसमाधानम् = राशीकरणम्।<br>निवासे - चिखल्लिनिकायः।<br>चिखल्लिर्जनपदः, तत्सम्बन्धी ग्रामादिर्निवास इत्यर्थः।<br>चितौ - आकायमग्निं चिन्वीत।<br>आचीयतेऽस्मिन्निष्टका इत्यधिकरणे घञ्।<br>शरीरे - कायः। चीयतेऽस्मिन् अस्थ्यादीनि इत्यर्थे अधिकरणे घञ्।<br>उपसमाधाने - महागोमयनिकायः।<br>एतेष्विति किम्? चयः। चयनमित्यर्थः।<br>भावे 'एरच्' इत्यनेन अच्प्रत्ययः। | आदेश्च कः ४२ |
| चेः ४० घञ् १६<br>आदेश्च कः ४१ | **४२. संघे चानौत्तराधर्ये**<br>अनौत्तराधर्ये संघे वाच्ये चेर्घञ् प्रत्ययो भवति, आदेश्च कः।<br>भिक्षुनिकायः। ब्राह्मणनिकायः। वैयाकरण निकायः।<br>भिक्ष्वादीनां संघ इत्यर्थः।<br>अनौत्तराधर्ये इति किम्?<br>सूकरनिचयः। सूकराणां संघ इत्यर्थः। सूकराणां संघे केचित् सूकराः सूकरान्तरस्योपरिभागे, केचिच्चाधोभागे स्थिताः भवन्ति। एषा स्थितिः स्तनपानकाले सूकरशिशूनां द्रष्टुं शक्यते। एवं हि सूकराणां यः संघः स उत्तराधरभावेन भवतीति तत्र घञ्प्रत्ययः, आदेश्च 'क' इत्यादेशो न भवति।<br>प्राणिसंघ एव घञ् प्रत्ययो भवति।<br>तेनेह न - प्रमाणसमुच्चयः। | |

| | | |
|---|---|---|
| | **४३. कर्मव्यतिहारे णच् स्त्रियाम्**<br>कर्म = क्रिया। व्यतिहारः = परस्परं करणम्। कर्मव्यतिहारे गम्यमाने धातोर्णच्प्रत्ययो भवति स्त्रीलिङ्गे वाच्ये, तच्च भावे इति सूत्रार्थः। अत्र अकर्तृकारके इति नानुवर्तते, अनभिधानादिति हरदत्तः।<br>व्यावक्रोशी। परस्परं निन्दाकरणमित्यर्थः। व्यवपूर्वात् 'क्रुश आह्वाने' इति धातोः णचि कृते सिद्धाद् व्यवक्रोश-शब्दात् 'णचः स्त्रियामञ्' (५.४.१४) इति सूत्रेण स्वार्थेऽञि कृते, आदिवृद्धौ, ङीपि च व्यावक्रोशी इति रूपं सिध्यति।<br>एवमेव - व्यावहासी। परस्परमुपहासकरणमित्यर्थः।<br>स्त्रियामिति किम्? व्यतिपाको वर्तते। | |
| | **४४. अभिविधौ भाव इनुण्**<br>अभिविधौ गम्यमाने धातोर्भावे इनुण् भवति।<br>धात्वर्थस्य कात्स्र्न्येन सम्बन्धोऽभिविधिः।<br>सांकूटिनम्। 'सम्पूर्वात् 'कूट दाहे' इति धातोः इनुणि कृते 'संकूटिन्' इत्यवस्थायाम् 'अणिनुणः' (५.४.१५) इति सूत्रेण स्वार्थेऽण्, आदिवृद्धिः।<br>'भावे' इति वर्तमाने पुनर्भावग्रहणं वाऽसरूपनिरासार्थम्, तेन घञ् न भवति। ल्युटा तु समावेश इष्यते संकूटनं वर्तते। तत्कथम्? 'कृत्यल्युटो बहुलम्' इति। | ग्रहः ४७ |
| घञ् १६ | **४५. आक्रोशेऽवन्योर्ग्रहः**<br>आक्रोशे गम्यमाने अवन्योर्ग्रहो घञ्प्रत्ययो भवति।<br>आक्रोशः = शपनम्,अनिष्टाशंसनं वा।।<br>अवग्राहस्ते भूयात्। बाध इत्यर्थः।<br>आक्रोश इति किम्? अवग्रहः पदस्य। छेद इत्यर्थः।<br>निग्रहश्चोरस्य। निरोध इत्यर्थः।<br>'ग्रह-वृ-दृ-निश्चि-गमश्च' इत्यप्प्रत्ययः। | |
| ग्रहः ४५ घञ् १६ | **४६. प्रे लिप्सायाम्**<br>प्रे ग्रहो घञ् प्रत्ययो भवति, लिप्सायां गम्यमानायाम्।<br>पात्रप्रगाहेण चरति भिक्षुः पिण्डार्थी। स्रुवग्राहेण चरति द्विजो दक्षिणार्थी।<br>लिप्सायामिति किम्? प्रग्रहो देवदत्तस्य। मदः, प्रकृष्टोऽभिनिवेशो वेत्यर्थः।<br>'ग्रह-वृ-दृ-निश्चि-गमश्च' इत्यप्प्रत्ययः। | |

| | | |
|---|---|---|
| ग्रहः ४५ घञ् १६ | ४७. परौ यज्ञे<br>परौ ग्रहो घञ् प्रत्ययो भवति,<br>यज्ञविषयश्चेत्प्रत्ययान्ताभिधेयः स्यात्।<br>उत्तरः परिग्राहः। 'वसवस्त्वा' इत्यादिमन्त्रैः पूर्वः परिग्राहो वेदे उक्तः, तदपेक्षया द्वितीय इत्यर्थः।<br>'स्फ्येन वेदेः स्वीकरणं परिग्राहः' इति हरदत्तः।<br>यज्ञे इति किम्? परिग्रहो देवदत्तस्य।<br>'ग्रह-वृ-दृ-निश्चि-गमश्च' इत्यप्प्रत्ययः। | |
| ग्रहः ४५ घञ् १६ | ४८. नौ वृ धान्ये<br>नौ उपपदे वृ इति धातुः घञं लभते धान्ये वाच्ये।<br>नीवारा नाम व्रीहयो भवन्ति।<br>धान्य इति किम्? निवरा कन्या।<br>'ग्रह-वृ-दृ-निश्चि-गमश्च' इत्यप्प्रत्ययः। | |
| ग्रहः ४५ घञ् १६ | ४९. उदि श्रयति-यौति-पू-द्रुवः<br>उदि श्रयति-यौति-पू-द्रुवः घञ् प्रत्ययो भवति अकर्तरि कारके, भावे च।<br>उच्छ्रायः। उद्यावः। उत्पावः। उद्द्रावः। | |
| घञ् १६ | ५०. विभाषाऽऽङि रुप्लुवोः<br>आङि उपपदे रुप्लुवोर्घञ्प्रत्ययो विभाषा भवति अकर्तरि कारके, भावे च।<br>आरावः, आरवः। आप्लावः, आप्लवः। | विभाषा ५५ |
| विभाषा५० घञ् १६ | ५१. अवे ग्रहो वर्षप्रतिबन्धे<br>अवे ग्रहो घञ् प्रत्ययो विभाषा भवति वर्षप्रतिबन्धेऽभिधेये।<br>प्राप्तकालस्य वर्षस्य कुतश्चिन्निमित्तादभावः = वर्षप्रतिबन्धः।<br>अवग्राहो, अवग्रहो वा देवस्य।<br>वर्षप्रतिबन्ध इति किम्? अवग्रहः पदस्य।<br>'ग्रह-वृ-दृ-निश्चि-गमश्च' इत्यप्प्रत्ययः। | ग्रहः ५३ |
| विभाषा ५०<br>ग्रहः ५१<br>घञ् १६ | ५२. प्रे वणिजाम्<br>प्रे ग्रहो घञ् प्रत्ययो विभाषा भवति, प्रत्ययान्तश्चेद् वणिजां सम्बन्धी भवति।<br>वणिक्सम्बन्धेन च तुलासूत्रं लक्ष्यते। तुलाप्रग्राहेण, तुलाप्रग्रहेण वा चरति।<br>वणिजामिति किम् - प्रग्रहो देवदत्तस्य।<br>'ग्रह-वृ-दृ-निश्चि-गमश्च' इत्यप्प्रत्ययः। | प्रे ५४ |

| | | |
|---|---|---|
| प्रे ५२ विभाषा ५०<br>ग्रहः ५१ घञ् १६ | ५३. रश्मौ च<br>प्रे ग्रहो घञ्प्रत्ययो विभाषा भवति, रश्मौ।<br>रथादियुक्तानामश्वादीनां संयमनार्था या रज्जुः सा रश्मिरिह गृह्यते।<br>प्रग्राहः। प्रग्रहः।<br>'ग्रह-वृ-दृ-निश्चि-गमश्च' इत्यप्प्रत्ययः। | |
| प्रे ५२ विभाषा ५०<br>घञ् १६ | ५४. वृणोतेराच्छादने<br>प्रे वृणोतेराच्छादने घञ्प्रत्ययो विभाषा भवति, आच्छादने।<br>प्रावारः। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति सूत्रेण पूर्वपदस्य दीर्घत्वम्।<br>पक्षे प्रवरः। 'ग्रह-वृ-दृ' इति सूत्रेण अप्प्रत्ययो भवति।<br>आच्छादने इति किम्? प्रवरा गौः। | |
| विभाषा५० घञ् १६ | ५५. परौ भुवोऽवज्ञाने<br>परौ भुवो घञ्प्रत्ययो विभाषा भवति, अवज्ञाने।<br>अवज्ञानम् = असत्कारः।<br>परिभावः, परिभवः।<br>अवज्ञान इति किम्? सर्वतो भवनं परिभव।<br>ऋदोरप्' इत्यप्प्रत्ययः। | |
| भावे १८ | ५६. एरच्<br>एः (इवर्णान्ताद् धातोः)अच् प्रत्ययो भवति, अकर्तरि कारके, भावे च।<br>चयः। अयः। जयः। क्षयः। | |
| भावे १८ | ५७. ॠदोरप्<br>ॠदन्ताद्, उवर्णान्ताच्च धातोः अप्प्रत्ययो भवति।<br>ॠत्,उ इत्यनयोः समाहारद्वन्द्वे सौत्रं पुंस्त्वम्।<br>कॄ - करः। गॄ - गरः। शॄ - शरः।<br>यु - यवः। लू - लवः। स्तु - स्तवः। पू - पवः। | अप् ८७ |

| | | |
|---|---|---|
| अप् ५७ | ५८. ग्रह-वृ-दृ-निश्चि-गमश्च<br>ग्रहादिभ्यो घञ् प्रत्ययो भवति अकर्तरि कारके, भावे च।<br>ग्रह उपादाने - ग्रहः।<br>वृ इति वृङ् सम्भक्तौ,वृञ् वरणे इत्यनयोः सामान्येन ग्रहणम् - वरः।<br>दृङ् आदरे - दरः।<br>चिञ् चयने निपूर्वः - निश्चयः।<br>गम्लृ गतौ - गमः।<br>(वा०) घञर्थे कविधानं स्था-स्ना-पा-व्यधि-हनि-युध्यर्थम्।<br>प्रस्थः पर्वतस्य। प्रस्नात्यस्मिन् प्रस्नः।<br>प्रपिबत्यस्यामिति प्रपा। आविध्यन्ति तेनेत्याविधः।<br>विहन्यतेऽस्मिन्निति विघ्नः। आयुध्यतेऽनेनेत्यायुधम्। | |
| अप् ५७ | ५९. उपसर्गेऽदः<br>उपसर्गेऽदः अप्प्रत्ययो भवति अकर्तरि कारके, भावे च।<br>विघसः। प्रघसः<br>उपसर्ग इति किम्? घासः। 'घञोरप्' इति अदः घस्लृ इत्यादेशः। | अदः ६० |
| अदः ५९ अप् ५७ | ६०. नौ ण च<br>नौ उपपदे अदो णप्रत्ययो भवति, चकारादप् च।<br>न्यादः। निघसः। | |
| अप् ५७ | ६१. व्यध-जपोरनुपसर्गे<br>व्यधजपोरप्प्रत्ययो भवति अकर्तरि कारके, भावे च, न तु उपसर्गे।<br>व्यधः। जपः।<br>अनुपसर्गे इति किम्? आव्याधः। उपजापः। | अनुपसर्गे ६५ |
| अनुपसर्गे ६१<br>अप्५७ | ६२. स्वन-हसोर्वा<br>स्वनहसोरप् प्रत्ययो वा भवति न तूपसर्गे। पक्षे घञ्।<br>स्वनः, स्वानः। हसः, हासः।<br>अनुपसर्गे इत्येव - प्रस्वानः, प्रहासः। | वा ६५ |

| | | |
|---|---|---|
| वा ६२ अप् ५७ अनुपसर्गे ६१ | ६३. यमः समुपनिविषु च<br>यमोऽप् प्रत्ययो वा भवति समुप-नि-विषु, चकाराद् अनुपसर्गेऽपि।<br>संयमः। उपयमः। नियमः। वियमः।<br>पक्षे घञ् - संयामः। उपयामः। नियामः। वियामः।<br>अनुपसर्गात्खल्वपि - यमः, यामः। | |
| वा ६२ अप् ५७ अनुपसर्गे ६१ | ६४. नौ गद-नद-पठ-स्वनः<br>नौ गदादिभ्योऽप्प्रत्ययो वा भवति। पक्षे घञ्।<br>निगदः, निगादः। निनदः, निनादः। निपठः, निपाठः।<br>निस्वनः, निस्वानः। | नौ ६५ |
| वा ६२ अप् ५७अनुपसर्गे६१ | ६५. क्वणो वीणायां च<br>नौ क्वणः अप्प्रत्ययो वा भवति, अनुपसर्गेऽपि, वीणायां विषयेऽपि।<br>निक्वणः, निक्वाणः।<br>अनुपसर्गेऽपि - क्वणः, क्वाणः।<br>वीणायां विषयेऽपि - प्रक्वणः, प्रक्वाणो वा वीणायाः।<br>सूत्रे वीणाग्रहणं निव्यतिरिक्तानामप्युपसर्गाणां सत्त्वे अब्विधानार्थम्। | |
| अप् ५७ | ६६. नित्यं पणः परिमाणे<br>पणः धातोर्नित्यम् अप् प्रत्ययो भवति, परिमाणे गम्यमाने।<br>नित्यग्रहणं विकल्पनिवृत्त्यर्थम्।<br>'पण व्यवहारे स्तुतौ च' - मूलकपणः। शाकपणः।<br>पण्यते = विक्रयार्थं बध्यते मुष्टिमात्रमित्यर्थे पण् धातोरप्प्रत्यये कृते निष्पन्नेन पणशब्देन सह मूलकानां, शाकानां च षष्ठीसमासः। विक्रयार्थं मूलकादीनां या मुष्टिः=परिणामविशेषो बध्यते सा मूलकपण इत्यादिशब्देनाभिधीयते।<br>परिमाणे इति किम्? पाणः। | |
| अप् ५७ | ६७. मदोऽनुपसर्गे<br>अनुपसर्गे उपपदे मद्धातोरप् प्रत्ययो भवति।<br>विद्यामदः। धनमदः। कुलमदः।<br>अनुपसर्गे इति किम्? उन्मादः। प्रमादः। | |
| अप् ५७ | ६८. प्रमद-संमदौ हर्षे<br>हर्षेऽभिधेये एतौ अप्प्रत्ययान्तौ निपात्येते।<br>कन्यानां प्रमदः। कोकिलानां संमदः।<br>हर्षे इति किम्? प्रमादः। संमादः। | |

| | | |
|---|---|---|
| अप् ५७ | ६९. समुदोरजः पशुषु<br>समुदोः उपपदयोः अजोऽप्रत्ययो भवति पशुषु।<br>'अज गति-क्षेपणयोः' इति धातुः संपूर्वः समुदाये वर्तते, उत्पूर्वश्च प्रेरणे।<br>समजः पशूनाम्। पशूनां समूह इत्यर्थः।<br>उदजः पशूनाम्। पशूनां प्रेरणमित्यर्थः।<br>पशुष्विति किम्? समाजो ब्राह्मणानाम्। उदाजो क्षत्रियाणाम्। | |
| अप् ५७ | ७०. अक्षेषु ग्लहः<br>अक्षेषु = द्यूतक्रीडासु पराजितेन पुरुषेण देयं यद् द्रव्यं, तस्मिन्नर्थे ग्रह धातोः अप्रत्ययान्तः 'ग्लह' इति शब्दो निपात्यते। ग्रहेरप् प्रतयय: 'ग्रहवृ' इति सूत्रेण सिद्ध एव लत्वार्थं निपातनम्।<br>अक्षस्य ग्लहः।<br>अक्षेष्विति किम्? ग्रहः पादस्य। | |
| अप् ५७ | ७१. प्रजने सर्त्तेः<br>सर्तेरप् प्रत्ययो भवति प्रजने विषये। प्रजनः = प्रथमं गर्भग्रहणम्।<br>गवामुपसरः। पशूनामुपसरः।<br>स्त्रीगवीषु पुंगवानां गर्भाधानय प्रथममुपसरणम् उपसर इत्युच्यते। | |
| अप् ५७ | ७२. ह्वः सम्प्रसारणं च न्यभ्युपविषु<br>न्यभ्युपविषु ह्वः अप्रत्ययो भवति सम्प्रसारणं च भवति।<br>ह्वेञ् स्पर्धायाम्- निहवः। अभिहवः। उपहवः। विहवः।<br>एतेष्विति किम्? प्रह्वायः। अत्र घञ्प्रत्ययः, 'आतो युक्चिण्कृतोः' इति युक्। | ह्वः ७५<br>संप्रसारणम् ७५ |
| ह्वः७२ अप् ५७<br>संप्रसारणम् ७२ | ७३. आङि युद्धे<br>आङि ह्वः अप्प्रत्ययो भवति, सम्प्रसारणं च, युद्धेऽभिधेये।<br>आहूयन्तेऽस्मिन्नित्याहवः।<br>युद्ध इति किम्? आह्वायः। | |

| | | |
|---|---|---|
| अप् ५७ ह्वः७२ | ७४. निपानमाहावः<br>आङ् पूर्वस्य ह्वयतेर्धातोः सम्प्रसारणम्, अप् प्रत्ययः, वृद्धिश्च निपात्यते, निपानं चेदभिधेयं भवति।<br>निपिबन्त्यस्मिन् गवादयः पशव इति निपानम्, उदकाधार उच्यते।<br>आहावः पशूनाम्।<br>कूपोपसरेषु य उदकाधारस्तत्र हि पानाय पशव आहूयन्ते इति निपानम् आहाव इत्यपि कथ्यते।<br>निपानमिति किम्? आह्वायः। | |
| ह्वः ७२ अप् ५७<br>संप्रसारणम् ७२ | ७५. भावेऽनुपसर्गस्य<br>अनुपसर्गस्य ह्वतेः सम्प्रसारणम्, अप् प्रत्ययश्च भवति, भावेऽभिधेये।<br>'भावे' इति वर्तमाने पुनर्भावग्रहणम् 'अकर्तरि च कारके संज्ञायाम्' इत्यस्य निरासार्थम्।<br>हवः।<br>अनुपसर्गस्येति किम्? आह्वायः। | भावे अनुपर्सगस्य ७६ |
| अनुपर्सगस्य ७५<br>अप् ५७ | ७६. हनश्च वधः<br>अनुपसर्गस्य हनश्चाप्प्रत्ययो भवति, तत्संनियोगेन च अन्तोदात्तो 'वध' इत्यादेशश्च भवति।<br>वधश्चोराणाम्। वधो दस्यूनाम्।<br>सूत्रे वधशब्दोऽन्तोदात्ततयोच्चारित इति सूत्रार्थे 'अन्तोदात्तो वध इत्यादेशश्च' इत्युक्तम्। तत्र उदात्तस्य धकाराकारस्य 'अतो लोपः' इत्यनेन लोपो भवति, अतः उदाहरणे 'अनुदात्तस्य च यत्रोदात्तलोपः' इति सूत्रेण अप उदात्तत्वं भवति।<br>भावे इत्येव - घातः। अत्र कर्मादौ कारके घञ्।<br>अनुपसर्गस्य इत्येव - प्रघातः, विघातः। | हनः ८७ |
| हनः ७६ अप् ५७ | ७७. मूर्तौ घनः<br>मूर्ताविभिधेयायां हनोऽप्प्रत्ययः, घनश्चादेशो भवति।<br>मूर्तिः = काठिन्यम्।<br>अभ्रघनः। दधिघनः।<br>अभ्रस्य, दध्नो वा काठिन्यमित्यर्थः।<br>कथं घनं दधीति? धर्मशब्देन धर्मी भण्यते। | घनः ८३ |

| | | |
|---|---|---|
| हनः ७६ अप् ५७<br>घनः ७७ | **७८. अन्तर्घनो देशे**<br>अन्तःपूर्वाद् हन्तेरप् प्रत्ययः तस्य घनादेशश्च निपात्यते, देशेऽभिधेये।<br>अन्तर्घनः। वाहीकग्रामविशेषस्य संज्ञेयम्।<br>अत्र 'अन्तर्घणो देशे' इत्येवमपि सूत्रं केचित् पठन्ति, तदपि ग्राह्यमेव, उभयथाप्याचार्येण शिष्याणां प्रतिपादितत्वादिति काशिकायां, पदमञ्जर्यां च। | |
| हनः ७६ अप् ५७<br>घनः ७७ | **७९. अगारैकदेशे प्रघणः प्रघाणश्च**<br>अगारैकदेशेऽभिधेये प्रपूर्वस्य हनः प्रघणः, प्रघाण-इत्येतौ शब्दौ निपात्येते।<br>प्रघणः। प्रघाणः।<br>द्वारप्रदेशे द्वौ प्रकोष्ठौ भवतः, यौ 'अलिन्दः' इत्युच्येते। तत्रैक आभ्यन्तरः, अपरश्च बाह्यो भवति। तत्र बाह्यः प्रकोष्ठः प्रघण, प्रघाण इति वोच्यते।<br>प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते इत्यर्थे कर्मण्यप्, घनादेशः, पाक्षिकी वृद्धिश्च निपात्यते। | |
| हनः ७६ अप् ५७<br>घनः ७७ | **८०. उद्घनोऽत्याधानम्**<br>उद्घन इति निपात्यते, अत्याधानं चेत्तद्वाच्यं भवति।<br>उद्घनः, यस्मिन् काष्ठेऽन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तत्काष्ठम् उद्घनः इति कथ्यते। तत्र हन्यतेऽस्मिन्निधिकरणे अप्प्रत्ययः, घनादेशश्च निपात्यते। उद्घातोऽन्यः। | |
| हनः ७६ अप् ५७<br>घनः ७७ | **८१. अपघनोऽङ्गम्**<br>'अपघनः' इति निपात्यते अङ्गं चेत्तद्वाच्यं भवति।<br>अपघनः अङ्गम्। अवयवो न सर्व एकदेशः, किं तर्हि ? पाणिः, पादश्चाभिधीयते। तत्र अपहन्यतेऽनेनेति करणेऽप्। अपघातोऽन्यः। | |
| हनः ७६ अप् ५७<br>घनः ७७ | **८२. करणेऽयोविद्रुषु**<br>अयोविद्रुषूपपदेषु हनोऽप्प्रत्ययो भवति घनादेशश्च, करणे कारके।<br>अयो हन्यतेऽनेनेति अयोघनः।<br>विघनः। द्रुघनः।<br>'द्रुघण' इति केचिदुदाहरन्ति।<br>तत्र कथं णत्वम्? अरीहणादिषु पाठात्, 'पूर्वपदात्संज्ञायामगः' इति वा, संज्ञैषा कुठारस्य, द्रुः = हन्यतेऽनेनेति करणेऽप्। | करणे ८४ |

| हनः ७६ करणे ८२ अप् ५७ घनः ७७ | ८३. स्तम्बे क च<br>स्तम्ब उपपदे हनः क प्रत्ययो भवति, अप्प्रत्ययश्च, घनादेशश्च करणे कारके।<br>स्तम्बघ्नः। स्तम्बघनः। | |
|---|---|---|
| हनः ७६ करणे ८२ अप् ५७ | ८४. परौ घः<br>परौ हनोऽप्प्रत्ययो भवति 'घ' इत्यादेशश्च, करणे कारके।<br>परिहन्यतेऽनेनेति परिघः, पलिघः। 'परेश्च घाङ्कयोः' इति विकल्पेन लत्वम्। | |
| हनः ७६ अप् ५७ | ८५. उपघ्न आश्रये<br>आश्रये उपघ्न इति निपात्यते। उपपूर्वाद् हनोऽप्प्रत्ययः, उपधालोपश्च निपात्यते।<br>आश्रयशब्देन सामीप्यं लक्ष्यते।<br>पर्वतेनोपहन्यते = सामीप्येन गम्यते इति पर्वतोपघ्नः, कर्मणि अप्। पर्वतस्य सामीप्यमाश्रित्य यः पदार्थो नीयते स पर्वतोपघ्न इत्युच्यते।<br>'उपघ्नोऽन्तिकाश्रये' इत्यमरकोषः (३.२.१९) | |
| हनः ७६ अप् ५७ | ८६. संघोद्घौ गणप्रशंसयोः<br>समुदोः उपपदयोर्हन्तेर्धातोरप् प्रत्ययो भवति, टिलोपो, घत्वं च निपात्यते, यथासंख्यं गणेऽभिधेये, प्रशंसाया च गम्यमानायाम्।<br>सङ्घः पशूनाम्, भावेऽप्। उद्घो मनुष्याणाम्।<br>उद्घन्यते = उत्कृष्टत्वेन ज्ञायते यः स उद्घः, मनुष्याणां मध्ये प्रशस्त इत्यर्थः।<br>गण-प्रशंसयोरिति किम्? संघातः। | |
| हनः ७६ अप् ५७ | ८७. निघो निमितम्<br>'निघ' इति निपात्यते निमितं चेत्तदभिधेयं भवति।<br>समन्तान्मितम् = निमितम्।<br>आरोहः = उच्छ्रायः, औनत्यं वा, परिणाहः =विस्तारः, स्थौल्यं वा, तौ समानौ यस्य तत् निमितमिति कथ्यते।<br>निघा वृक्षाः। निपूर्वाद् हनोऽप्प्रत्ययः, टिलोपो, घत्वं च निपात्यते।<br>येषां वृक्षाणाम् औनत्यं, स्थौल्यं च समाने भवतस्ते वृक्षा निघा इत्युच्यन्ते।<br>'विष्वक् समे निघः' इत्यमरकोषः (३.३.३६)<br>निर्विशेषं हन्यन्ते = ज्ञायन्ते इति व्युत्पत्तौ कर्मणि अप् प्रत्ययः। | |

| | | |
|---|---|---|
| भावे १८ अकर्तरि १९ | ८८. ड्वितः क्त्रिः<br>ड्वितो धातोः क्त्रिप्रत्ययो भवति।<br>डु इत् यस्य स ड्वित्, तस्मात्।<br>'भावे' 'अकर्तरि च कारके' इति वर्तते। अत्र स्वभावाद् भाव एव सम्बध्यते।<br>डुपचष् पाके - पक्त्रिमम्।<br>डुवप् बीजसन्ताने - उप्त्रिमम्।<br>डुकृञ् करणे - कृत्रिमम्।<br>क्त्रिप्रत्ययान्तात् 'क्त्रेर्मम्नित्यम्' इति सूत्रेण निर्वृत्तेऽर्थे मप्प्रत्ययो नित्यं भवतीति केवलः क्त्रिप्रत्ययान्तः शब्दो लोके न प्रयुज्यते। अतः पक्त्रिमम् इत्यादेः पाकेन निर्वृत्तमित्येवं विग्रहः क्रियते। | |
| भावे १८ अकर्तरि १९ | ८९. ट्वितोऽथुच्<br>ट्वितो धातोः अथुच् प्रत्ययो भवति।<br>टु इत् यस्य स ट्वित्, तस्मात्।<br>टु वेपृ कम्पने - वेपथुः।<br>टुओ श्वि गतिवृद्ध्योः - श्वयथुः।<br>टु क्षु शब्दे - क्षवथुः। | |
| भावे १८ अकर्तरि १९ | ९०. यज-याच-यत-विच्छ-प्रच्छ-रक्षो नङ्<br>यजादिभ्यः नङ्प्रत्ययो भवति अकर्तरि कारके, भावे च।<br>यज्ञः। याच्ञा ; स्त्रीत्वं लोकात्। यत्नः। विश्नः, प्रश्नः; 'च्छ्वोः' इति श् इत्यादेशः। 'प्रश्ने चासन्नकाले' इति ज्ञापकान्न सम्प्रसारणम्।<br>रक्ष्णः। | |
| भावे १८ अकर्तरि १९ | ९१. स्वपो नन्<br>स्वपो नन् प्रत्ययो भवति अकर्तरि कारके, भावे च।<br>स्वप्नः। | |
| भावे १८ अकर्तरि १९ | ९२. उपसर्गे घोः किः<br>उपसर्गे घोः (दा-धाधात्वोः) किप्रत्ययो भवति अकर्तरि कारके, भावे च।<br>प्रदिः। प्रधिः। अन्तर्धिः।<br>अन्तःशब्दस्य ' अन्तःशब्दस्याङ्किविधिणत्वेषूपसंख्यानम्' इति वार्तिकेन उपसर्गत्वम्। | घोः किः ९३ |

| | | |
|---|---|---|
| घोः ६२ किः ६२ | ६३. कर्मण्यधिकरणे च<br>कर्मण्युपपदे घोः(दा-धाधात्वोः) किप्रत्ययो भवति, अधिकरणे कारके।<br>जलं धीयतेऽस्मिन्निति जलधिः।<br>अधिकरणग्रहणमर्थान्तरनिरासार्थम्। | |
| भावे १८<br>अकर्तरि १९ | ६४. स्त्रियां क्तिन्<br>धातोः क्तिन् प्रत्ययो भवति स्त्रियाम्,अकर्तरि कारके, भावे च।<br>कृतिः। चितिः। मतिः।<br>(वा०) क्तिन्नाबादिभ्यश्च वक्तव्यः।<br>आबादयः प्रयोगतोऽनुसर्त्तव्याः।<br>आप्तिः। राद्धिः। दीप्तिः। स्रस्तिः। ध्वस्तिः। आस्तिः। लब्धिः।<br>(वा०) श्रुयजिस्तुभ्यः करणे।<br>श्रूयतेऽनयेति श्रुतिः।<br>इज्यतेऽनया देवतेति इष्टिः।<br>स्तूयतेऽनयेति स्तुतिः।<br>करणे ल्युड्बाधनार्थमिदं वार्तिकम्।<br>(वा०) ग्ला-म्ला-ज्या-हाभ्यो निः।<br>ग्लानिः। म्लानिः। ज्यानिः। हानिः।<br>(वा०) ॠकार-ल्वादिभ्यः क्तिन्निष्ठावद् भवति इति वक्तव्यम्।<br>कीर्ण्णिः। गीर्ण्णिः। जीर्ण्णिः।<br>शीर्ण्णिः। लूनिः। पूनिः।<br>(वा०) संपदादिभ्यः क्विप्।<br>संपत्। विपत्। प्रतिपत्।<br>(वा०) क्तिन्नपीष्यते।<br>संपत्तिः। विपत्तिः। | स्त्रियाम् ११२<br>क्तिन् ९७ |
| क्तिन् ९४ | ९५. स्था-गा-पा-पचो भावे<br>स्थाप्रभृतिभ्यः भावे क्तिन् प्रत्ययो भवति, स्त्रियाम्।<br>स्था- प्रस्थितिः; 'द्यति-स्यति-मा-स्थाम्' इति इत्वम्।<br>गा- उद्गीतिः, 'घुमा' इति ईत्वम्।<br>पा- प्रपीतिः।<br>पच्- पक्तिः।<br>सूत्रे भावग्रहणमर्थान्तरनिरासार्थम्।<br>अङोऽपवादस्य बाधकोऽयम्।<br>कथमवस्था, संस्थेति? 'व्यवस्थायामसंज्ञायाम्' इति ज्ञापकाद् नात्यन्ताय बाधा भवतीति। | भावे ९६ |

| | | |
|---|---|---|
| क्तिन् ९४ भावे ९५ | ९६. मन्त्रे वृषेष-पच-मन-विद-भू-वी-राः उदात्तः<br>मन्त्रे वृषादयः क्तिन्प्रत्ययं लभन्ते, स्त्रियां भावे, स चोदात्तः।<br>वृष्टिः। इष्टिः। पक्तिः। मतिः। वित्तिः। भूतिः। वीतिः। रातिः।<br>मन्त्रेऽमन्त्रे च सर्वधातुभ्यः सामान्येन विहत एव क्तिन्। उदात्तार्थं वचनमिदम्। मन्त्रादन्यत्रादिरुदात्तः। | उदात्तः १०० |
| क्तिन् ९४ भावे ९५ | ९७. ऊति-यूति-जूति-साति-हेति-कीर्तयश्च<br>ऊत्यादयः उदात्तस्वरयुक्ताः क्तिन्प्रत्ययान्ताः शब्दा निपात्यन्ते स्त्रियाम्।<br>ऊतिः - अव रक्षणादौ, क्तिन्, 'ज्वर-त्वर' इत्यादिसूत्रेण ऊठि ऊतिः इति प्रयोगः सिध्यत्येव, केवलमत्र उदात्तस्वरो निपात्यते।<br>यूतिः - यु मिश्रणे, क्तिन् प्रत्ययः सिद्ध एव, केवलं दीर्घत्वमुदात्तत्वं च निपात्यते।<br>जूतिः - जु इति सौत्रो धातुः। अत्रापि दीर्घत्वमुदात्तत्वं च निपात्यते।<br>सातिः - षोऽन्तकर्मणि, साधातोः क्तिनि ईत्वाभावः, उदात्तत्वं च निपात्यते।<br>षणु दाने अस्मात् क्तिनि तु 'जनसनखनाम्' इत्यनेन आत्वे कृते सातिः इति प्रयोगः सिद्ध एव, केवलमुदात्तत्वं निपात्यते।<br>हेतिः - हन हिंसागत्योः, इति धातोः, हि गतौ, वृद्धौ च धातोर्वा हेतिः इति रूपम्।<br>कीर्त्तिः - कॄत संशब्दने इत्यस्यात् क्तिनि कृते रूपम्। | |
| | ९८. व्रजयजोर्भावे क्यप्<br>व्रज, यजोर्भावे क्यप् प्रत्ययो भवति, स्त्रियाम् स चोदात्तः, स्त्रियां क्तिनोऽपवादः।<br>व्रज्या। इज्या।<br>पित्करणमुत्तरत्र तुगर्थम्। | क्यप् १०० |

| | | |
|---|---|---|
| क्यप् ९८ | ९९. संज्ञायां समज-निषद-निपद-मन-विद-सुञ्-शीङ्-भृञिणः<br>समजादिभ्यो क्यप्प्रत्ययो भवति, स चोदात्तः, स्त्रियाम्, संज्ञायां विषये।<br>(वा०) अजेः क्यपि वीभावो नेति वाच्यम्।<br>समजन्ति = सङ्घीभवन्त्यस्यामिति समज्या, सभेत्यर्थः।<br>निषीदन्ति अस्यामिति निषद्या, आपण इत्यर्थः।<br>निपतन्त्यस्यामिति निपत्या, पिच्छिला भूमिरित्यर्थः।<br>मन्यतेऽनया मत्या, गलपार्श्वशिरा इत्यर्थः।<br>विदन्त्यनयेति विद्या।<br>सुन्वन्त्यनयेति सुत्या, अभिषवः इत्यर्थः।<br>शेरतेऽस्यामिति शय्या। 'अयङ् यि क्ङिति' इति अयङादेशः।<br>एति = गच्छत्यनयेति इत्या, शिविकेत्यर्थः। | |
| क्यप् ९८ भावे १८ अकर्तरि १९ | १००. कृञः श च<br>कृञः स्त्रियां शप्रत्ययो भवति, चकारात्क्यप् च।<br>योगविभागोऽत्र कर्त्तव्यः, क्तिन्नपि यथा स्यात्।<br>क्रिया। कृत्या। कृतिः। | श १०१ |
| क्यप् ९८ भावे १८ अकर्तरि १९ | १०१. इच्छा<br>'इषु इच्छायाम्' इत्यस्माद् भावे शप्रत्ययो, यगभावश्च निपात्यते, स्त्रियाम्।<br>इच्छा।<br>(वा०) परिचर्या-परिसर्या-मृगयाटाट्यानामुपसंख्यानम्।<br>परिचर्या = पूजा, परिपूर्वाच्चरेः भावे शः, यक् च।<br>परिसर्या = परिसरणम्, परिपूर्वात्सर्तेः शः, यक्, गुणश्च निपात्यते।<br>मृगया = आखेटः। 'मृग अन्वेषणे' चुरादौ अदन्तः, ततो णिच्प्रत्ययः, णिचि अतो लोपाभावो निपातनात्, पुनश्च शे, यकि, णिलोपः।<br>अटाट्या = अटतेः शप्रत्यये, यकि च कृते , ट्यशब्दस्य द्वित्वं, पूर्वभागे यकारनिवृत्तिर्दीर्घश्च निपात्यते।<br>(वा०) जागर्तेरकारो वा।<br>'जागृ निद्राक्षये' इति धातोर्भावे'अ' इति प्रत्ययो वा भवति स्त्रियाम्, वाशब्दात्पक्षे शः।<br>जागरा, जागर्या। | |

| | | |
|---|---|---|
| स्त्रियाम् ९४ क्यप् ९८ भावे १८ अकर्तरि १९ | १०२. अ प्रत्ययात्<br>प्रत्ययान्ताद् (सनाद्यन्तात्) धातोः 'अ' इति प्रत्ययो भवति स्त्रियाम्।<br>चिकीर्षा। जिहीर्षा। पुत्रीया। पुत्रकाम्या। लोलूया। कण्डूया। | अ १०३ |
| स्त्रियाम् ९४ अ १०२ | १०३. गुरोश्च हलः<br>हलन्तो यो धातुर्गुरुमान् ततः स्त्रियाम् 'अ' इति प्रत्ययो भवति स्त्रियाम्।<br>कुडि दाहे - कुण्डा। हुडि संघाते- हुण्डा। शिक्ष विद्योपादाने - शिक्षा। ईह चेष्टायाम् - ईहा। ऊह वितर्के - ऊहा।<br>गुरोरिति किम्? भक्तिः।<br>हल इति किम्? णीञ् प्रापणे नीतिः। | |
| स्त्रियाम् ९४ | १०४. षिद्भिदादिभ्योऽङ्<br>षिद्भिदादिभ्योऽङ्प्रत्ययो भवति स्त्रियाम्।<br>षित् - जॄष् वयोहानौ - जरा। 'ऋदृशोऽङि गुणः' इति गुणः।<br>त्रपूष् लज्जायाम् - त्रपा।<br>भिदादि- भिदा। छिदा। विदा। क्षिपा। गुहा इत्यादि। | अङ् १०६ |
| स्त्रियाम्९४अङ्१०४ | १०५. चिन्ति-पूजि-कथि-कुम्बि-चर्चश्च<br>चिन्तादिभ्यः अङ्प्रत्ययो भवति स्त्रियाम्, चकाराद् 'ण्यासश्रन्थो युच्' इति सूत्रेण ण्यन्तत्वाद् युच्प्रत्ययश्च।<br>चिति स्मृत्याम्, चुरादिः - चिन्ता।<br>पूज पूजायाम्, चुरादिः - पूजा।<br>कथ वाक्यप्रबन्धे, चुरादिः - कथा।<br>कुबि आच्छादने, चुदादिः - कुम्बा।<br>चर्च अध्ययने, चुरादिः - चर्चा।<br>चकाराद् युजपि भवति - चिन्तना। | |
| स्त्रियाम्९४अङ्१०४ | १०६. आतश्चोपर्गे<br>आदन्तेभ्यो धातुभ्य उपसर्गे उपपदे स्त्रियामङ् प्रत्ययो भवति।<br>प्रदा। उपदा। प्रधा। उपधा।<br>(वा०) श्रदन्तरोउपसर्गवद् वृत्तिः।<br>श्रद्धा। अन्तर्द्धा। | |

| स्त्रियाम् ९४ | १०७. ण्यास-श्रन्थो युच्<br>ण्यन्तेभ्यो धातुभ्यः, आस, श्रन्थ- इत्येताभ्यां च स्त्रियां युच्प्रत्ययो भवति।<br>णि (ण्यन्त) - कारणा, हारणा।<br>आस उपवेशने- आसना।<br>श्रन्थ विमोचन-प्रतिहर्षयोः - श्रन्थना।<br>(वा०) घट्टि-वन्दि-विदिभ्य उपसंख्यानम्।<br>घट्टचलने - घट्टना।<br>वदि अभिवादनस्तुत्योः - वन्दना।<br>विद्लृ लाभे - वेदना।<br>(वा०) इषेरनिच्छार्थस्य युज्वक्तव्यः।<br>अध्येषणा। अन्वेषणा।<br>(वा०) परेर्वा<br>पर्येषणा, परीष्टिः। | |
|---|---|---|

| | | |
|---|---|---|
| स्त्रियाम् ९४ | १०८. रोगाख्यायां ण्वुल् बहुलम्<br>रोगाख्यायां गम्यमानायां धातोर्ण्वुल्प्रत्ययो बहुलं भवति स्त्रियाम्।<br>प्रच्छर्दिका। 'छर्द वमने' इत्यस्माण्ण्वुल्। प्रवाहिका। विचर्चिका।<br>सूत्रे आख्याग्रहणाद् ण्वुल्प्रत्ययान्तः शब्दो यत्र रोगस्य वाचकस्तत्रैव ण्वुल्प्रत्ययो भवति। तेन पदान्तरद्योत्ये रोगे न भवति- बुभुक्षा भस्मकेन। भस्मको नाम रोगविशेषस्तत्र भुक्त पीतादिकं वस्तु शरीरस्य व्यापकं न भवति, सर्वदा च बुभुक्षा भवति।<br>सूत्रे बहुलग्रहणात् क्वचिन्नापि भवति - शिरोऽर्त्तिः। शिरःपीडेत्यर्थः। अर्द हिंसायाम्, अर्दगतौ' इति वा, ततः क्तिन्।<br>(वा०) धात्वर्थनिर्देशे ण्वुल्वक्तव्यः।<br>आसिका। शायिका। आसनं, शयनमित्यर्थः।<br>(वा०) इक्श्तिपौ धातुनिर्देशे इति वक्तव्यम्।<br>इक् - भिदिः। छिदिः।<br>श्तिप्रत्ययः - पचतिः। पठतिः। सुनोतिः। सुवतिः।<br>(वा०) वर्णात्कारः।<br>वर्णनिर्देशे कर्त्तव्ये वर्णात्कारप्रत्ययो भवतीति वार्तिकार्थः।<br>अकारः। ककारः।<br>कारप्रत्ययघटकककारस्येत्संज्ञा न भवति,प्रयोजनाभावात्।<br>(वा०) रादिफः।<br>रेफः।<br>(वा०) मत्वर्थाच्छः।<br>मत्वर्थीयः।<br>बहुलग्रहणादभसंज्ञायामपि आकारस्य लोपः।<br>(वा०) इक्कृष्यादिभ्यः।<br>कृषिः। किरिः। गिरिः। | ण्वुल् ११० |
| स्त्रियाम् ९४<br>ण्वुल्१०८ | १०९. संज्ञायाम्<br>संज्ञायां विषये धातोर्ण्वुल्प्रत्ययो भवति स्त्रियाम्।<br>उद्दालकपुष्पभञ्जिका। वरणपुष्पप्रचायिका।<br>क्रीडाविशेषस्य संज्ञे इमे।<br>अभ्यूषखादिका। तालभञ्जिका। शालभञ्जिका।<br>जीविकाविशेषस्य संज्ञा इमाः। | |

| | | |
|---|---|---|
| स्त्रियाम् ९४<br>ण्वुल् १०८ | **११०. विभाषाख्यान-परिप्रश्नयोरिञ् च**<br>परिप्रश्ने, आख्याने च गम्यमाने धातोरिञ् प्रत्ययो विभाषा भवति, चकाराद् ण्वुलपि स्त्रियाम्।<br>पूर्वं परिप्रश्नः, पश्चादाख्यानम्, सूत्रेऽल्पाच्तरस्य पूर्वनिपातः।<br>विभाषोक्तेर्यथाप्राप्तमन्येऽपि क्तिन्नादयः।<br>परिप्रश्ने - कां त्वां कारिं, कारिकां, क्रियां, कृत्यां, कृतिं वा अकार्षीः।<br>आख्याने - सर्वां कारिं, कारिकां, क्रियां, कृत्यां, कृतिं वा अकार्षम्।<br>आख्यानपरिप्रश्नयोरिति किम्? कृतिः। हृतिः। | विभाषा १११ |
| विभाषा ११०<br>स्त्रियाम् ९४ | **१११. पर्यायार्हर्णोत्पत्तिषु ण्वुच्**<br>पर्यायादिष्वर्थेषु धातोर्ण्वुच्प्रत्ययो विभाषा भवति स्त्रियाम्।<br>पर्यायः = परिपाटी, क्रमः। अर्हणम् = अर्हः, तद्योग्यता।<br>ऋणम् = तद्यत् परस्य धार्यते। उत्पत्तिः = जन्म।<br>पर्याये तावत् - भवतः आसिका, शायिका, अग्रगामिका।<br>भवतः क्रियाणामेष क्रमो विद्यते- आदौ आसनम्, ततः शयनम्, ततोऽग्रगमनमित्यर्थः।<br>अर्हणे - अर्हति भवान् इक्षुभक्षिकाम्। इक्षुभक्षणस्य योग्यता भवति वर्तते इत्यर्थः।<br>ऋणे - इक्षुभक्षिकां मे धारयसि। इक्षुभक्षणमृणत्वेन धारयसीत्यर्थः।<br>उत्पत्तौ - इक्षुभक्षिका मे उदपादि।<br>विभाषेत्येव - चिकीर्षोत्पद्यते।<br>ण्वुलि प्रकृते प्रत्ययान्तरकरणं स्वरार्थम्। | |
| स्त्रियाम् ९४ | **११२. आक्रोशे नञ्यनिः**<br>आक्रोशे गम्यमाने नञ्युपपदे धातोः अनिप्रत्ययो भवति।<br>आक्रोशः = शपनम्।<br>अजीवनिस्ते वृषल भूयात्। अजीवनमित्यर्थः।<br>अकरणिस्ते वृषण भूयात्। अकरणमित्यर्थः।<br>तस्याजननिरेवास्तु जननीक्लेशकारिणः।<br>अजननमित्यर्थः।<br>आक्रोश इति किम्? अकृतिस्तस्य कटस्य।<br>नञीति किम्? मृतिस्ते वृषल भूयात्। | |

| | | |
|---|---|---|
| | ११३. कृत्यल्युटो बहुलम्<br>धातोः विहिताः कृत्य-ल्युटो बहुलमर्थेषु भवन्ति। यत्र विहितास्ततोऽन्यत्रापि भवन्ति कृत्यल्युटः इति सूत्रस्याशयः।।<br>भाव-कर्मणोः कृत्या विहिताः कारकान्तरेऽपि भवन्ति - स्नानीयं चूर्णम्; अत्र करणे कृत्यः।<br>दानीयो ब्राह्मणः; अत्र सम्प्रदाने कृत्यः।<br>करणाधिकरणयोर्भावे च ल्युड् विहितस्ततोऽन्यत्रापि भवति - गुणमुक्तवानिति गुणवचनः; अत्र कर्तरि ल्युट्।<br>अवसेचनो वृक्षः; अत्र कर्मणि ल्युट्।<br>राजभोजनाः शालयः; अत्रापि कर्मणि ल्युट्।<br>प्रपतत्यस्मादिति प्रपतनः; अत्र अपादाने ल्युट्।<br>बहुलग्रहणादन्येऽपि कृत्प्रत्यया यथाप्राप्तमर्थं व्यभिचरन्ति। तद्यथा-पादाभ्यां ह्रियते यः स पादहारकः कर्तरि विहितो ण्वुलत्र कर्मणि वर्तते। | |
| | ११४. नपुंसके भावे क्तः<br>नपुंसके भावे धातोः क्तः प्रत्ययो भवति।<br>हसितम्। सहितम्। जल्पितम्। | नपुंसके भावे ११६ |
| नपुंसके ११४<br>भावे ११४ | ११५. ल्युट् च<br>नपुंसके भावे धातोर्ल्युट् च भवति।<br>हसनं छात्रस्य। शोभनम्। जल्पनम्। शयनम्। आसनम्। योगविभाग उत्तरार्थः। | ल्युट् ११७ |
| नपुंसके ११४<br>भावे ११४ ल्युट्११५ | ११६. कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम्<br>संस्पर्शात् येन (कर्मणा) कर्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्युपपदे धातोर्नपुंसके भावे ल्युट् प्रत्ययो भवति।<br>पूर्वेणैव सिद्धे नित्यसमासार्थमिदं वचनम्। उपपदसमासो हि नित्यः।<br>पयः पानं सुखम्। ओदनभोजनं सुखम्।<br>संस्पर्शादिति किम्? अग्निकुण्डस्योपासनं सुखम्। | |
| ल्युट् ११५ | ११७. करणाधिकरणयोश्च<br>करणाधिकरणयोश्चार्थयोः धातोर्ल्युट् प्रत्ययो भवति।<br>करणे - प्रवृश्च्यतेऽनेनेति प्रव्रश्चनः, कुठारादिः।<br>इध्मस्य प्रव्रश्चन इति इध्मप्रवश्चनः।<br>अधिकरणे - दुह्यतेऽस्यामिति दोहनी, गोर्दोहनी इति गोदोहनी। गोदोहनपात्रमित्यर्थः। | करणा-योः १२५ |

| | | |
|---|---|---|
| करणाधिकरणयोः११७ | ११८. पुंसि संज्ञायां घः प्रायेण<br>पुंसि संज्ञायां करणाधिकरणयोः धातोर्घप्रत्ययो प्रायेण भवति।<br>करणे - दन्तश्छाद्यतेऽनेनेति दन्तच्छदः।<br>उरश्छाद्यतेऽनेनेति उरश्छदः। 'छादेर्घेऽद्व्युपसर्गस्य' इति सूत्रेण छादेराकारस्य ह्रस्वत्वम्।<br>अधिकरणे - एत्य अस्मिन् कुर्वन्ति व्यवहारमित्याकरः = उत्पत्तिस्थानमित्यर्थः।<br>आलीयतेऽस्मिन्निति आलयः। निलयः।<br>संज्ञायामिति किम्? प्रहरणो दण्डः। | पुंसि<br>संज्ञायाम्१२५<br>घः११९<br>प्रायेण१२० |
| पुंसि११८<br>संज्ञायाम्११८<br>करणाधिकरणयोः११७ | ११९. गोचर-संचर-वह-व्रज-व्यजापण-निगमाश्च<br>करणाधिकरणयोः घान्ताः गोचरादयः शब्दाः पुंसि संज्ञायां निपात्यन्ते।<br>गावश्चरन्त्यस्मिन्निति गोचरो देशः। संचरन्तेऽनेनेति संचरो मार्गः।<br>वहन्ति तेन वहः = स्कन्धः।<br>व्रजन्ति तेन व्रजः = गोष्ठम्।<br>व्यजन्ति अनेन व्यजः = तालवृन्तम्, निपातनाद् 'अजेर्व्यघञपोः' इति वीभावो न भवति।<br>एत्य अस्मिन् आपणन्ते = क्रयविक्रयं कुर्वन्तीति आपणः = पण्यस्थानम्। निगच्छन्ति तस्मिन्निति निगमः = छन्दः।<br>चकारोऽनुक्तसमुच्चयार्थः - कषः। निकषः। | |
| पुंसि११८<br>संज्ञायाम्११८<br>करणाधिकरणयोः ११७ | १२०. अवे तॄ-स्त्रोर्घञ्<br>करणाधिककरणयोरथयोः अवे तॄ-स्त्रोः(अवपूर्वकाभ्यां तॄ-स्तॄधातुभ्याम्)घञ् प्रत्ययो भवति पुंसि प्रायेण संज्ञायाम्।<br>अवतारः = रूपादिः।<br>अवस्तारः = जवनिकादिः।<br>कथमवतारो नद्याः? न हीयं संज्ञा।<br>प्रायानुवृत्तेरसंज्ञायामपि भवति। | घञ् १२५ |
| पुंसि११८<br>संज्ञायाम्११८<br>करणाधिकरणयोः११७<br>घञ् १२० | १२१. हलश्च<br>करणाधिकरणयोः हलश्च प्रायेण घञ् प्रत्ययो भवति संज्ञायां पुंसि।<br>लिखत्यनेनेति लेखः। लेखनीत्यर्थः।<br>विद्येते = ज्ञायेतेऽनेन धर्माधर्माविति वेदः। | |

| | | |
|---|---|---|
| पुंसि११८<br>संज्ञायाम्११८<br>करणाधिकरणयोः११७<br>घञ् १२० | १२२. अध्याय-न्यायोद्याव-संहाराश्च<br>करणाधिकरणयोः अध्यायादयः शब्दाः घञन्ताः पुंसि निपात्यन्ते।<br>अधीयतेऽस्मिन्नध्यायः।<br>नीयतेऽनेन न्यायः।<br>उद्युवन्ति अस्मिन्निति उद्यावः। संह्रियतेऽनेनेति संहारः।<br>(वा०) अवहाराधारावायानामुपसंख्यानम्।<br>अवह्रियतेऽनेनेति अवहारः।<br>आध्रियतेऽस्मिन्निति आधारः।<br>आवयन्ति अस्मिन्निति आवायः। | |
| पुंसि११८<br>संज्ञायाम्११८<br>अधिकरणे११७<br>घञ् १२० | १२३. उदङ्कोऽनुदके<br>अनुदके विषये 'उदङ्कः' इति घञ्प्रत्यान्तः निपात्यते।<br>उत्पूर्वादञ्चतेरधिकणे घञ् निपात्यतेऽनेन।<br>तैलोदङ्कः = चर्ममयं भाजनम्।<br>तैलमुदच्यते=उद्ध्रियतेऽस्मिन्निति व्युत्पत्तिः।<br>अनुदके इति किम्? उदकोदञ्चनः। | |
| पुंसि११८<br>संज्ञायाम्११८<br>करणे११७<br>घञ् १२० | १२४. जालमानायः<br>'आनायः' इति निपात्यते, जालं चेत्तद्भवति।<br>आङ्पूर्वान्नयतेः करणे घञ् निपात्यते।<br>आनायो मत्स्यानाम्। आनायो मृगाणाम्। आनीयन्ते मत्स्यादयोऽनेन इति विग्रहः। आनायः = जालम्।<br>जालमिति किम्? आनयः। | |
| करणाधिकरणयोः११७<br>घञ् १२० | १२५. खनो घ च<br>करणाधिकरणयोः खनो घप्रत्ययो भवति, चकाराद् घञ् च।<br>आखनः। आखानः। | |
| | १२६. ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्<br>कृच्छ्राकृच्छ्रार्थेषु वर्त्तमानेषु ईषत्, दुस्, सु - इत्येतेषूपपदेषु धातोः खल्प्रत्ययो भवति।<br>कृच्छ्रार्थे - दुष्करो भवता कटः।<br>अकृच्छ्रार्थे - ईषत्करः, सुकरो वा भवता कटः।<br>ईषदादिषु किम्? कृच्छ्रेण कार्यः कटः।<br>कृच्छ्राकृच्छ्रार्थेषु इति किम्? ईषत्कार्यः।<br>ईषच्छब्दोऽत्र अल्पमित्यर्थे।<br>लकारः, स्वरार्थः, खित्करणमुत्तरत्र मुमर्थम्। | ईष-षु १३०<br>कृ-र्थेषु १३०<br>खल् १२७ |

| | | |
|---|---|---|
| ईष-षु १२६<br>कृ-र्थेषु १२६<br>खल्१२६ | १२७. कर्तृकर्मणोश्च भूकृञोः<br>कर्तृ-कर्मणोरुपपदयोः यथासंख्यं भू-कृञोः खल्प्रत्ययो भवति, चकारादीषदादिषु च।<br>कर्तर्युपपदे - ईषदाढ्यम्भवं भवता, दुराढ्यं वा।<br>कर्मण्युपपदे- ईषदाढ्यङ्करः, स्वाढ्यङ्करो वा देवदत्तो भवता।<br>(वा०) कर्तृकर्मणोश्च्व्यर्थयोरिति वक्तव्यम्।<br>इह मा भूत् - आढ्येन सुभूयते। | |
| ईष-षु १२६ कृ-र्थेषु १२६ | १२८. आतो युच्<br>कृच्छ्राकृच्छ्रार्थेषु ईषदादिषूपपदेषु आदन्ताद् धातोः युच्प्रत्ययो भवति।<br>ईषत्पानः सोमो भवता। दुःपानः। सुपानः।<br>ईषद्दानो गौर्भवता। दुर्दानः। सुदानः। | युच् १३० |
| ईष-षु १२६ कृ-र्थेषु १२६<br>युच् १२८ | १२९. छन्दसि गत्यर्थेभ्यः<br>कृच्छ्राकृच्छ्रार्थेषु ईषदादिषु उपपदेषु गत्यर्थेभ्यश्छन्दसि युच्प्रत्ययो भवति।<br>सूपसदनोऽग्निः। सूपसदनमन्तरिक्षम्। | छन्दसि १३० |
| छन्दसि१२९ युच्१२८ | १३०. अन्येभ्योऽपि दृश्यते<br>गत्यर्थेभ्योऽन्येभ्योऽपि धातुभ्यश्छन्दसि युच्प्रत्ययो दृश्यते।<br>सुदोहनामकृणोद् ब्रह्मणे गाम्। सुवेदनामकृणो र्ब्रह्मणे गाम्।<br>(वा०) भाषायां शासि-युधि-दृशि-धृषि -मृषिभ्यो युज्वक्तव्यः।<br>दुःशासनः। दुर्योधनः। दुर्दर्शनः। दुर्द्धर्षणः। दुर्मर्षणः। | |
| | १३१. वर्तमानसमीप्ये वर्तमानवद्वा<br>वर्तमानसामीप्ये वर्तमानाद् धातोः वर्त्तमानकालवत् प्रत्ययाः वा भवन्ति।<br>देवदत्त ! कदाऽऽगतोऽसि?<br>अयमागच्छामि, आगमं वा।<br>कदा गमिष्यसि ? एष गच्छामि, गमिष्यामि, गन्तास्मि वा। | वर्तमानवत्१३२ |

| | | |
|---|---|---|
| वर्तमानवत् १३१<br>वा १३१ | **१३२. आशंसायां भूतवच्च**<br>आशंसायां गम्यमानायां धातोः भूतवत्प्रत्यया वा भवन्ति, चकाराद् वर्तमानवच्च। आशंसनमाशंसा = अप्राप्तस्य प्रियार्थस्य प्राप्तुमिच्छा, तस्याश्च भविष्यत्कालो विषयः। अतोऽनेन भविष्यति काले प्रत्ययाः भवन्ति।<br>उपाध्यायश्चेदागमत्, आगतः, आगच्छति, आगमिष्यति वा एते वयं व्याकरणमध्यगीष्महि, अधीतवन्तः, अधीमहे, अध्येष्यामहे वा। | आशंसायाम् १३३ |
| आशंसायाम् १३२ | **१३३. क्षिप्रवचने लृट्**<br>क्षिप्रवचने उपपदे आशंसायां गम्यमानायां धातोर्लृट्प्रत्ययो भवति।<br>'भूतवच्च' इत्यस्यायमपवादः।<br>उपाध्यायश्चेत् क्षिप्रमागमिष्यति, क्षिप्रं व्याकरणमध्येष्यामहे।<br>वचनग्रहणं पर्यायार्थम्, तेन शीघ्रम्, आशु, त्वरितम् – इत्यादिष्वपि उपपदेषु लृडेव भवति। | |
| | **१३४. आशंसावचने लिङ्**<br>आशंसा येनोच्यते तदाशंसावचनम्, तस्मिन्नुपपदे धातोर्लिङ्प्रत्ययो भवति।<br>'भूतवच्च' इत्यस्यापवादः।<br>उपाध्यायश्चेदागच्छेत् आशंसे युक्तोऽधीयीय, आशंसेऽवकल्पये युक्तोऽधीयीय। आशंसे क्षिप्रमधीयीय। | |
| | **१३५. नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः**<br>क्रियाप्रबन्ध-सामीप्ययोः गम्यमानयोः धातोः अनद्यतनवत् प्रत्ययविधिर्न भवति।<br>भूतानद्यतने, भविष्यदनद्यतने च लङ्लुटौ विहितौ, तयोरयं प्रतिषेधः।<br>क्रियाणां प्रबन्धः = सातत्येनानुष्ठानम्। कालानां समीप्यं च तुल्यजातीयेनाव्यवधानम्।<br>क्रियाप्रबन्धे – यावज्जीवं भृशमन्नमदात्, दास्यति वा।<br>सामीप्ये – येयं पौर्णमास्यतिक्रान्ता, एतस्यामुपाध्यायोऽग्नीन् आधित, सोमेनायष्ट, गामदित। येयममावास्याऽऽगामिनी एतस्यामुपाध्यायोऽग्नीनाधास्यते, सोमेन यक्ष्यते, स गां दास्यते। | नानद्यतनवत् १३८ |

| | | |
|---|---|---|
| नानद्यतनवत् १३५ | १३६. भविष्यति मर्यादावचनेऽवरस्मिन्<br>भविष्यति काले मर्यादावचने सति अवरशब्दे उपपदे धातोः अनद्यतवत् प्रत्ययविधिर्न भवति।<br>योऽयमध्वा गन्तव्य आपाटलिपुत्रात् तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे।<br>मर्यादावचन इति किम्? योऽयमध्वा निरवधिको गन्तव्यस्तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्तास्महे।<br>अवरस्मिन्निति किम्? योऽयमध्वा गन्तव्य आपटलिपुत्रात् तस्य यत्परं कौशाम्ब्यास्तत्र द्विरोदनं भोक्तास्महे।<br>इह सूत्रे देशकृता मर्यादा, उत्तरसूत्रे कालकृता तत्र च विशेषं वक्ष्यति। | भविष्यति १३८<br>मर्यादावचने १३८<br>अवरस्मिन् १३७ |
| मर्यादावचने १३६<br>अवरस्मिन् १३६<br>नानद्यतनवत् १३५ | १३७. कालविभागे चानहोरात्राणाम्<br>भविष्यति काले मर्यादावचने कालविभागे सति अवरशब्दे उपपदे अनद्यतनवत् प्रत्ययविधिर्न भवति, न चेदहोरात्रसम्बन्धी विभागः।<br>योऽयं संवत्सरः आगामी तत्र यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे।<br>'मर्यादावचने' इत्येव - योऽयं निरवधिकः कालः आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येतास्महे।<br>अवरस्मिन् इत्येंव - परस्मिन् उपपदे उत्तरसूत्रेण विभाषां वक्ष्यति।<br>अनहोरात्राणामिति किम्? योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रः तत्र युक्ता अध्येतास्महे। | कालविभागे १३८<br>अनहो-णाम्१३८ |
| कालविभागे १३७<br>अनहोरात्राणाम्१३७<br>नानद्यतनवत् १३५ | १३८. परस्मिन् विभाषा<br>भविष्यति काले मर्यादावचने कालविभागे सति परशब्दे उपपदे धातोः विभाषा अनद्यतनवत् प्रत्ययविधिर्न भवति, न चेदहोरात्रसम्बन्धी विभागः।<br>योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे, अध्येतास्महे वा।<br>अनहोरात्राणामित्येव - योऽयं त्रिंशद्रात्र आगामी तस्य यः परः पञ्चदशरात्रः तत्र युक्ता अध्येतास्महे।<br>कालविभागे इत्येव - योऽयमध्वा गन्तव्य आपाटलिपुत्रात् तस्य यत्परं कौशाम्ब्यास्तत्र युक्ता अध्येतास्महे। | |

| | | |
|---|---|---|
| | १३९. लिङ्निमित्ते लृङ् क्रियातिपत्तौ<br>लिङ्निमित्ते भविष्यति काले लृङ् प्रत्ययो भवति क्रियातिपत्तौ सत्याम्।<br>हेतुहेतुमतोर्लिङ (३.३.१५६) इत्येवमादिकं लिङो निमित्तम्।<br>कुतश्चिद् वैगुण्यात् क्रियायाः अनभिनिर्वृत्तिः = क्रियातिपत्तिः।<br>सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्। | सम्पूर्णसूत्रम् १४१ |
| लिङ्निमित्ते १३९<br>लृङ् १३९<br>क्रियातिपत्तौ १३९ | १४०. भूते च<br>लिङ्निमित्ते भूते कालेऽपि धातोः लृङ्प्रत्ययो भवति क्रियातिपत्तौ सत्याम्।<br>सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्। | भूते १४१ |
| लिङ्निमित्ते १३९<br>लृङ् १३९<br>क्रियातिपत्तौ १३९<br>भूते१४० | १४१. वोताप्योः<br>अत्र 'वा + आ + उताप्योः' इतिच्छेदः। आङ् अत्र मर्यादायां न त्वभिविधौ। सूत्रेऽस्मिन् 'भूते, लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति सर्वमनुवर्तते।<br>अतः सूत्रस्यार्थो भवति - इत आरम्य 'उताप्योः समर्थयोर्लिङ् (३.३.१५२) इत्यतः प्रागु यानि सूत्राणि तेषु भूते लिङ्निमित्ते क्रियातिपत्तौ लृङ् वा भवति' इत्येतदधिकृतं वेदितव्यम्।<br>यैः सूत्रैः लिङ्विधिस्तेष्वेव इदमधिकारसूत्रं प्रवर्तते।<br>तेन 'विभाषा कथमि लिङ् च' (३.३. १४३)इत्यादिविधौ इदमधिकारसूत्रं प्रवर्तते, न तु 'गर्हायां लडपि-जात्वोः' इत्यादौ लडादिविधौ। | उताप्योः १५१ |
| | १४२. गर्हायां लडपिजात्वोः<br>गर्हायां गम्यमानायाम् अपिजात्वोः उपपदयोर्धातोर्लट्प्रत्ययो भवति।<br>गर्हा = कुत्सा, निन्दा वा। कालसामान्येऽयं प्रत्ययो विहित इति कालविशेषविहितानपि लुङादीन् प्रत्ययानयं परत्वाद् बाधते।<br>अपि जायां त्यजसि। जातु गणिकामाधत्से। गर्हितमेतत्।<br>अनेन हि लड् विहितः न तु लिङ् इति लिङ्निमित्ताभावाद् एतत्सूत्रविषये क्रियातिपत्तावपि लृङ् न भवति। | गर्हायां १४४<br>लट् १४३ |

| | | |
|---|---|---|
| गर्हायां १४२<br>लट् १४२ | १४३. विभाषा कथमि लिङ् च<br>गर्हायां गम्यमानायां कथमि उपपदे धातोर्लिङ् प्रत्ययो भवति चकाराल्लट् च।<br>विभाषाग्रहणाद् कालविशेषे यथास्वं लुङादयोऽपि भवन्ति।<br>कथं नाम तत्रभवान् वृषलं याजयेत्, याजयति वा।<br>पक्षे याजयिष्यति, याजयिता, अयीयजत्, अयाजयत्, याजयांचकार वा।<br>अनेन लिङोऽपि विधानादत्र लिङ्निमित्तमस्तीति भूतविवक्षायां क्रियातिपत्तौ लृङ्प्रत्ययोऽपि वा भवति।<br>भविष्यद्विवक्षायां सर्वत्र नित्य एव लृङ्प्रत्ययः।<br>कथं नाम तत्रभवान् वृषलम् अयाजयिष्यत्। | |
| गर्हायां १४२<br>लट् १४२ | १४४. किंवृत्ते लिङ्लृटौ<br>गर्हायां गम्यमानायां किंवृत्ते (किंशब्दनिष्पन्ने) शब्दे उपपदे धातोर्लिङ्-लृटौ प्रत्ययौ भवतः।<br>कतमो वा हरिं निन्देत्, निन्दिष्यति वा।<br>अत्रापि पूर्ववत् भूतविवक्षायां क्रियातिपत्तौ वा लृङ्, भविष्यद्विवक्षायां नित्यमेव। कः, कतरः, कतमो वा हरिम् अनिन्दिष्यत्। | लिङ्लृटौ १४५ |
| लिङ्-लृटौ १४४<br>किंवृत्ते १४४ | १४५. अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि<br>अनवक्लृप्त्यमर्षयोर्धातोः लिङ्लृटौ प्रत्ययौ भवतः, अकिंवृत्ते उपपदे, अपिना किंवृत्तेऽपि।<br>अनवक्लृप्तिः =असंभावना। अमर्षः=अक्षमा।<br>अनवक्लृप्तौ तावत्- नावकल्पयामि, न संभावयामि, न श्रद्दधे तत्रभवान्नाम वृषलं याजयेत्, याजयिष्यति वा।<br>किंवृत्ते उपपदेऽपि - नावकल्पयामि को नाम तत्र भवान् वृषलं याजयेत्, याजयिष्यति वा।<br>अमर्षे - न मर्षयामि तत्रभवान् वृषलं याजयेत्, याजयिष्यति वा।<br>किंवृत्ते उपपदेऽपि- न मर्षयामि को नाम वृषलो यं तत्रभवान् याजयेत्, याजयिष्यति वा।<br>पूर्ववद् भूतविवक्षायां क्रियातिपत्तौ लृङ् वा भवति, भविष्यद्विवक्षायां तु नित्यम् - नावकल्पयामि, न मर्षयामि वा तत्रभवान् नाम वृषलमयाजयिष्यत्। | |

| | | |
|---|---|---|
| अन-मर्षयोः १४५ | **१४६. किंकिलास्त्यर्थेषु लृट्**<br>किंकिल इत्युपपदे, अस्त्यर्थेषु शब्देषु चोपपदेषु अनवक्लृप्त्यमर्षयोर्गम्यमानयोः धातोर्लृट्प्रत्ययो भवति।<br>किंकिलेति समुदायः क्रोधद्योतकः।<br>पूर्वसूत्रेण प्राप्तस्य लिङोऽपवादः।<br>किंकिल नाम तत्रभवान् वृषलं याजयिष्यति, न श्रद्दधे, न मर्षयामि।<br>लिङ्निमित्तमिह नास्ति, तेन लृङ् न भवति। | |
| अन-मर्षयोः १४५ | **१४७. जातुयदोर्लिङ्**<br>जातुयदोः उपपदयोः अनवक्लृप्त्यमर्षयोः धातोर्लिङ् प्रत्ययो भवति।<br>जातु तत्र भवान् वृषलं याजयेत्, यन्नाम तत्रभवान् वृषलं याजयेत्, न श्रद्दधे, न मर्षयामि।<br>क्रियातिपत्तौ भूते वा लृङ्, भविष्यति नित्यम्।<br>(वा०) जातुयदोर्विधाने यदायद्योरुपसंख्यानम्।<br>यदा, यदि वा भवद्विधः क्षत्रियं याजयेत्, न श्रद्दधे, न मर्षयामि। | लिङ् |
| अन-मर्षयोः १४५<br>लिङ् १४७ | **१४८. यच्च-यत्रयोः**<br>यच्च-यत्रयोः उपपदयोः अनवक्लृप्त्यमर्षयोः धातोर्लिङ्प्रत्ययो भवति।<br>यच्च, यत्र वा तत्रभवान् वृषलं याजयेत, न श्रद्दधे, न मर्षयामि।<br>योगविभाग उत्तरार्थः।<br>क्रियातिपत्तौ पूर्ववद् यथायथं लृङ्। | यच्चयत्रयोः १५० |
| यच्चयत्रयोः १४८<br>लिङ् १४७ | **१४९. गर्हायां च**<br>गर्हायां गम्यमानायां यच्चयत्रयोः उपपदयोः धातोर्लिङ् प्रत्ययो भवति।<br>सर्वलकाराणामपवादः।<br>यच्च, यत्र वा तत्रभवान् वृषलं याजयेत्, गर्हामहे, अहो अन्याय्यमेतत्।<br>क्रियातिपत्तौ पूर्ववद् यथायथं लृङ्। | |

| | | |
|---|---|---|
| यच्चयत्रयोः १४८<br>लिङ् १४७ | **१५०. चित्रीकरणे च**<br>चित्रीकरणे गम्यमाने यच्च-यत्र योरुपपदयोधातोर्लिङ्प्रत्ययो भवति।<br>सर्वलकाराणामपवादः।<br>यच्च, यत्र वा तत्र भवान् वृषलं याजयेत्, आश्चर्यमेतत्।<br>क्रियातिपत्तौ पूर्ववद् यथायथं लृङ्। | चित्रीकरणे १५१ |
| चित्रीकरणे १५० | **१५१. शेषे लृडयदौ**<br>यच्च-यत्राभ्यामन्यत्र चित्रीकरणं शेषः।<br>शेषे उपपदे चित्रीकरणे गम्यमाने धातोर्लृट्प्रत्ययो भवति, न तु यदौ।<br>सर्वलकाराणामपवादः।<br>आश्चर्यम्, चित्रम्, अद्भुतम्, अन्धो नाम पर्वतमारोक्ष्यति, बधिरो नाम व्याकरणमध्येष्यते।<br>अयदाविति किम्? आश्चर्यं यदि स भुञ्जीत।<br>लिङ्निमित्ताभावादिह लृङ् न भवति। | |
| | **१५२. उताप्योः समर्थयोर्लिङ्**<br>उताप्योः समर्थयोरुपपदयोर्धातोलिङ् प्रत्ययो भवति।<br>उताप्योः बाढमित्यर्थे समानार्थत्वम्।<br>सर्वलकाराणामपवादः।<br>उत, अपि वा अधीयीत। बाढमध्येष्यते इत्यर्थः।<br>समर्थयोरिति किम्? उत दण्डः पतिष्यति?<br>उतशब्देनात्र प्रश्नो गम्यते।<br>अपि द्वारं धास्यति। अपि शब्देन चात्र प्रच्छादनं गम्यते।<br>'वोपताप्योः' (३.३.१४१) इति विकल्पो निवृत्तः।<br>तेन इतः प्रभृति यैः यैः सूत्रैः लिङ् विहितस्तेषु विषयेषु भूते क्रियातिपत्तौ 'भूते च' (३.३.१४०) इति सूत्रेण नित्यं लृङ् भवति। भविष्यति क्रियातिपत्तौ तु सर्वत्र नित्यो लृङ् भवत्येव। | |
| लिङ् १५२ | **१५३. कामप्रवेदनेऽकच्चिति**<br>कामप्रवेदने गम्ये धातोर्लिङ् प्रत्ययो भवति।<br>'कच्चित्' इति उपपदे तु धातोर्लिङ् प्रत्ययो न भवति।<br>स्वाभिप्रायविष्करणम् = कामप्रवेदनम्।<br>सर्वलकाराणामपवादः।<br>कामो मे भुञ्जीत भवान्। अभिलाषो मे भुञ्जीत भवान्।<br>अकच्चितीति किम्? कच्चिज्जीवति। | |

| | | |
|---|---|---|
| लिङ् १५२ | १५४. संभावनेऽलमिति चेत्सिद्धाप्रयोगे<br>सम्भावने गम्यमाने धातोर्लिङ्प्रत्ययो भवति अलमित्यस्य सिद्धाप्रयोगे सति।<br>सिद्धश्चासौ अप्रयोग इति सिद्धाप्रयोगः।<br>सम्भावनम् = शक्त्युत्कर्षमाविष्कर्त्तुमत्युक्तिः।<br>शक्त्युत्कर्षस्याविष्करणाय अन्यत्र अलं शब्दस्य प्रयोगो दृश्यते, तद्यथा - दैत्येभ्यो हरिरलम् इत्यत्र।<br>यत्र अलमितिशब्दस्य प्रयोगं विनापि प्रकरणादिना सम्भावनमित्यर्थो गम्यते, तत्र वर्तमानाद् धातोर्लिङ् प्रत्ययो भवति इति सूत्राशयः।<br>अपि स्तुयाद् विष्णुम्; अवाङ्मानसगोचरं विष्णुमपि स्तोतुं शक्त इत्यर्थः।<br>अपि पर्वतं शिरसा भिन्द्यात्; अभेद्यं पर्वतमपि शिरसा भेत्तुं शक्त इत्यर्थः।<br>अलमिति किम्? विदेशस्थायी देवदत्तः प्रायेणागमिष्यति ग्रामम्।<br>सिद्धाप्रयोग इति किम्? अलं देवदत्तो हस्तिनं हनिष्यति।<br>क्रियातिपत्तौ भूते, भविष्यति च नित्यं लृङ् भवति। | सम्पूर्णसूत्रम् १५५ |
| संभावने १५४<br>अलमितिचेत् १५४<br>सिद्धाप्रयोगे १५४<br>लिङ् १५२ | १५५. विभाषा धातौ संभावनवचनेऽयदि<br>संभावनवाचके धातावुपपदे यच्छब्दवर्जिते धातोर्विभाषा लिङ् प्रत्ययो भवति, अलमिति शब्दस्य प्रयोगं विनापि सम्भावने गम्यमाने।<br>पूर्वेण नित्यप्राप्तौ विकल्पार्थं वचनम्। संभावयामि भुञ्जीत भवान्, भोक्ष्यते वा।<br>अयदीति किम्? संभावयामि यद् भुञ्जीत भवान्।<br>पूर्वसूत्रेण नित्यमेव लिङ्। | विभाषा १५६ |
| विभाषा १५५ | १५६. हेतुहेतुमतोर्लिङ्<br>हेतुभूते, हेतुमति चार्थे वर्त्तमानाद् धातोः लिङ् प्रत्ययो विभाषा भवति।<br>हेतुः = कारणम्। हेतुमत् = फलम्।<br>(वा०) भविष्यत्येवेष्यते।<br>कृष्णं नमेच्चेत्सुखं यायात्।<br>कृष्णाय नमनं हेतुः, सुखप्राप्तिः फलम्; अतः नमधातो र्हेत्वर्थे लिङ्,याधातोश्च हेतुमत्यर्थे।। पक्षे - कृष्णं नंस्यति चेत्सुखं यास्यति।<br>'भविष्यत्येवेष्यते' इति वार्तिकोक्त्या इह न भवति - हन्तीति पलायते। | |

| | | |
|---|---|---|
| | **१५७. इच्छार्थेषु लिङ्लोटौ**<br>इच्छार्थेषूपपदेषु धातोर्लिङ्लोटौ प्रत्ययौ भवतः।<br>सर्वलकाराणामपवादः।<br>इच्छामि, कामये, प्रार्थये वा भवान् भुञ्जीत, भुङ्क्तां वा। | इच्छार्थेषु १५८ |
| इच्छार्थेषु १५७ | **१५८. समानकर्तृकेषु तुमुन्**<br>समानकर्तृकेषु इच्छार्थेषूपपदेषु धातोस्तुमुन् प्रत्ययो भवति।<br>इच्छति, कामयते, वष्टि, वाञ्छति वा भोक्तुम्।<br>समानकर्तृकेषु इति किम्?<br>देवदत्तं भुञ्जानमिच्छति यज्ञदत्तः। | समानकर्तृकेषु१५९ |
| समानकर्तृकेषु१५८<br>इच्छार्थेषु १५७ | **१५९. लिङ् च**<br>समानकर्तृकेषु इच्छार्थेषूपपदेषु धातोस्तुमुन् प्रत्ययो भवति।<br>इच्छति, कामयते, वष्टि, वाञ्छति वा भोक्तुम्।<br>समानकर्तृकेषु इति किम्?<br>भुञ्जीयेतीच्छति। अधीयीयेतीच्छति।<br>क्रियातिपत्तौ लृङ् भवति।<br>योगविभाग उत्तरार्थः। | लिङ् १६० |
| लिङ् १५९ | **१६०. इच्छार्थेभ्यो विभाषा वर्तमाने**<br>इच्छार्थेभ्यो धातुभ्यो वर्तमाने काले विभाषा लिङ्प्रत्ययो भवति।<br>लटि प्राप्ते वचनम्, अतः पक्षे लट्।<br>इच्छति, इच्छेत्। वष्टि, उश्यात्। कामयते, कामयेत। | |

| | | |
|---|---|---|
| | १६१. विधि-निमन्त्रणामन्त्रणाधीष्टसंप्रश्न-प्रार्थनेषु लिङ्<br>धातोर्लिङ्प्रत्ययो भवति विध्यादिष्वर्थेषु।<br>विधिः = प्रेरणम्, आज्ञाप्रदानं वा।<br>निमन्त्रणम् = नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्।<br>आमन्त्रणम् = कामचारानुज्ञा। अधीष्टम् = सत्कारपूर्वको व्यापारः। संप्रश्नः =संप्रधारणम्। इदं वा कर्त्तव्यम् ? इदं वा? इत्येवम्भूतविचारणा सम्प्रधारणम्। प्रार्थनम् = याच्ञा।<br>सर्वलकाराणामपवादः।<br>विधौ - कटं कुर्यात्। ग्रामं भवान् आगच्छेत्।<br>निमन्त्रणे - इह भवान् भुञ्जीत।<br>आमन्त्रणे - इह भवान् आसीत।<br>अधीष्टे - पुत्रमध्यापयेद् भवानिति मेऽनुरोधः।<br>संप्रश्ने - किं नु खलु भो वेदमधीयीय, उत तर्कम्।<br>प्रार्थने - भोः भोजनं लभेय। | विधि-नेषु १६२ |
| विधि-नेषु १६१ | १६२. लोट् च<br>विध्यादिष्वर्थेषु धातोर्लोट् प्रत्ययोऽपि भवति।<br>विधौ - कटं करोतु। ग्रामं भवान् आगच्छतु।<br>निमन्त्रणे - इह भवान् भुङ्क्ताम्।<br>आमन्त्रणे - इह भवान् आस्ताम्।<br>अधीष्टे - पुत्रमध्यापयतु भवानिति मेऽनुरोधः।<br>संप्रश्ने - किं नु खलु भो वेदमध्ययै, उत तर्कम्।<br>प्रार्थने - भो भोजनं लभै।<br>योगविभाग उत्तरार्थः। | लोट् १६३ |
| लोट् १६२ | १६३. प्रैषातिसर्ग-प्राप्तकालेषु कृत्याश्च<br>प्रैषातिसर्गप्राप्तकालेषु गम्यमानेषु धातोः कृत्याः भवन्ति, चकाराल्लोट् च।<br>प्रैषः = विधिः, प्रेरणं वा।<br>अतिसर्गः = कामाचारानुज्ञा।<br>निमित्तभूतस्य कालस्यावसरः = प्राप्तकालता।<br>प्रैषादौ कृत्याः- भवता कटः करणीयः, कर्त्तव्यः, कृत्यः, कार्यो वा।<br>प्रैषादौ लोट् - करोतु कटं भवान्। | प्रैषातिसर्ग-प्राप्तकालेषु १६५ |

| | | |
|---|---|---|
| प्रैषातिसर्ग-प्राप्तकालेषु १६३ | १६४. लिङ् चोर्ध्वमौहूर्तिके<br>प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद्धातोर्लिङ् प्रत्ययो भवति, चकाराद्यथाप्राप्तं च।<br>ऊर्ध्वं मुहूर्ताद्, उपरि मुहूर्तस्य वा भवान् कटं कुर्यात्; भवता कटः कर्त्तव्यः, कृत्यः, करणीयः, कार्यो वा; भवान् कटं करोतु वा। | ऊर्ध्वमौहूर्तिके १६५ |
| प्रैषातिसर्ग-प्राप्तकालेषु १६३<br>ऊर्ध्वमौहूर्तिके १६४ | १६५. स्मे लोट्<br>स्मे उपपदे प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद्धातोर्लोट् प्रत्ययो भवति।<br>लिङ्कृत्यानामपवादः।<br>ऊर्ध्वं मुहूर्ताद् भवान् कटं करोतु स्म। | स्मे लोट् १६६ |
| स्मे लोट् १६५ | १६६. अधीष्टे च<br>अधीष्टे गम्यमाने स्मे उपपदे धातोर्लोट् प्रत्ययो भवति।<br>लिङोऽपवादः।<br>अङ्ग स्म राजन् माणवकमध्यापय। | |
| प्रैषातिसर्गप्राप्तकालेषु १६३ | १६७. काल-समय-वेलासु तुमुन्<br>प्रैषादिषु गम्यमानेषु कालसमय-वेलासूपपदेषु धातोस्तुमुन् प्रत्ययो भवति।<br>कालः, समयो, वेला वा भोक्तुम्।<br>'भूतानि कालः पचतीति वार्ता' इत्यत्र प्रैषादयो न गम्यन्ते; तेन तुमुन् प्रत्ययो न भवति। | काल-समय-वेलासु १६८ |
| काल-समय-वेलासु १६७<br>प्रैषातिसर्गप्राप्तकालेषु १६३ | १६८. लिङ् यदि<br>'यद्' इत्युपपदे प्रैषादिषु गम्यमानेषु धातोर्लिङ् प्रत्ययो भवति।<br>तुमुनोऽपवादः।<br>कालः, समयो, वेला वा यद् भुञ्जीत भवान्। | |
| | १६९. अर्हे कृत्यतृचश्च<br>अर्हतीति अर्हः = तद्योग्यः। अर्हे कर्तरि वाच्ये, गम्यमाने वा धातोः कृत्य-तृचः प्रत्ययाः भवन्ति, चकाराल्लिङ्च।<br>अर्हे कृत्याः - भवता खलु कन्या वोढव्या, वाह्या, वहनीया वा।<br>अर्हे तृच् - भवान् खलु कन्याया वोढा।<br>अर्हे लिङ् - भवान् खलु कन्यां वहेत्।<br>भवान् कन्यया सह विवाहं कर्तुं योग्यः इत्यर्थः। | |

| | | |
|---|---|---|
| | **१७०. आवश्यकाधमर्ण्ययोर्णिनिः**<br>अवश्यंभावविशिष्टे; आधमर्ण्यविशिष्टे च कर्तरि वाच्ये धातोर्णिनिः प्रत्ययो भवति।<br>अवश्यं भावः आवश्यकम्, अधमर्णस्य भावः आधमर्ण्यम्, प्रत्ययार्थस्य विशेषणे इमे।<br>आवश्यके - अवश्यं करोतीति अवश्यंकारी।<br>मयूरव्यंसकादित्वात्समासः।<br>आधमर्ण्ये - शतं दायी। सहस्रं दायी।<br>'अकेनोर्भविष्यदाधमर्ण्ययोः' इति सूत्रेण षष्ठ्याः प्रतिषेधाद् कर्मणि द्वितीयैव। | आवश्यका-धमर्ण्ययोः १७१ |
| आवश्यका-धमर्ण्ययोः १७० | **१७१. कृत्याश्च**<br>आवश्यकाधमर्ण्ययोरुपाधिभूतयोः अर्थयोः धातोः कृत्यसंज्ञकाः प्रत्यया अपि भवन्ति।<br>आवश्यके - भवता खलु अवश्यं कटः कर्त्तव्यः, करणीयः, कार्यः, कृत्यो वा।<br>आधमर्ण्ये - भवता शतं, सहस्रं वा दातव्यम्, दानीयं, देयं वा। | कृत्याः १७२ |
| कृत्याः १७१ | **१७२. शकि लिङ् च**<br>'शकि' इति प्रकृत्यर्थविशेषणम्, शक्नोत्यर्थोपाधिके धात्वर्थे लिङ् प्रत्ययो भवति, चकारात् कृत्याश्च।<br>भवान् खलु भारं वहेत्। वोढुं शक्नोतीत्यर्थः।<br>भवता खलु भारो वोढव्यः, वहनीयः, वाह्यो वा।<br>वोढुं शक्य इत्यर्थः। | |
| | **१७३. आशिषि लिङ्-लोटौ**<br>आशीर्विशिष्टेऽर्थे वर्तमानाद् धातोर्लिङ्लोटौ प्रत्ययौ भवतः।<br>आशंसनमाशीः = अप्राप्तस्येष्टस्यार्थस्य प्राप्तुमिच्छा।<br>प्रकृत्यर्थविशेषणं चैतत्।<br>चिरं जीव्याद् भवान्। चिरं जीवतु भवान्।<br>आशिषीति किम्? चिरं जीवति देवदत्तः। | आशिषि १७४ |

| | | |
|---|---|---|
| आशिषि १७३ | १७४. क्तिच्क्तौ च संज्ञायाम्<br>आशिषि विषये धातोः क्तिच्क्तौ प्रत्ययौ भवतः, संज्ञायाम्।<br>क्तिच् – तनुतात् इति तन्तिः। 'न क्तिचि दीर्घश्च' इति सूत्रेण प्रतिषेधाद् 'अनुदात्तोपदेश' इत्यादिना सूत्रेणानुनासिक लोपः, 'अनुनासिकस्य क्विझलोः क्ङिति इति सूत्रेण दीर्घत्वं च न।<br>भवतात् भूतिः। मनुतात् मन्तिः।<br>क्तः – देवा एनं देयासुः इति देवदत्तः। | |
| | १७५. माङि लुङ्<br>'माङ्' इत्युपपदे धातोर्लुङ्प्रत्ययो भवति।<br>सर्वलकाराणामपवादः।<br>म कार्षीत्। मा हार्षीत्।<br>'न माङ्योगे' इति निषेधान्न अडागमः। | माङि लुङ् १७६ |
| माङि लुङ् १७५ | १७६. स्मोत्तरे लङ् च<br>स्मशब्दोत्तरे माङ् इत्युपपदे धातोर्लङ् प्रत्ययो भवति।<br>चकाराल्लुङ् च।<br>मा स्म करोत्, कार्षीद् वा।<br>मा स्म हरत्, हार्षीद् वा। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां तृतीयाध्यायस्य तृतीयपादः ।।

।। श्रीः ।।

# ।। अथ तृतीयाध्यायस्य चतुर्थपादः ।।

| | १. धातुसंबन्धे प्रत्ययाः<br>धात्वर्थानां सम्बन्धे सति यत्र काले ये प्रत्यया उक्तास्ततोऽन्यत्रापि काले ते प्रत्यया भवन्ति। धातुशब्देनात्र धात्वर्थो लक्ष्यते। धातूनां = धात्वर्थानां सम्बन्धो धातुसम्बन्धः = विशेष्यविशेषणभावः। तत्र तिङन्तवाच्यक्रियायाः प्राधान्यात् तदनुरोधेन विशेषणीभूतक्रियावाचिभ्यो धातुभ्यः तत्तत्प्रत्यया भवन्ति। सर्वत्र तिङन्तवाच्योऽर्थो विशेष्यः,सुबन्तवाच्योऽर्थस्तु विशेषणम्।<br>वसन् ददर्श। 'वसन्' इति पदे वर्तमाने विहितो लट् 'ददर्श' इत्यनुरोधेन भूतकाले।<br>सोमयाज्यस्य पुत्रो भविता। सोमयाजीत्यत्र भूताधिकारे 'करणे यजः' इति सूत्रेण विहितो णिनिः भविता इत्यनुरोधेन भविष्यत्काले वर्तते।<br>कृतः कटः श्वो भविता। कृत इत्यत्र भूताधिकारे विहिता निष्ठा भविता इत्यनुरोधेन भविष्यकाले वर्तते। प्रत्ययाधिकारे पुनः प्रत्ययग्रहणम् अधात्वधिकार विहितानामपि प्रत्ययानां संग्रहार्थम्। तेन गोमान् आसीत्, गोमान् भविता इत्यादि सिध्यति। | धातुसंबन्धे ६ |
|---|---|---|

| धातुसंबन्धे १ | २. क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः<br>क्रियासमभिहारे द्योत्ये धातुसम्बन्धे सति धातोः लोट् प्रत्ययो भवति, लोटः हि-स्वौ भवतः, त-ध्वमोर्विषये तु हि-स्वौ वा भवतः।<br>पौनः पुन्यं, भृशार्थश्च क्रियासमभिहारः। अत्रायं विवेकः - सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः, कर्तरि, आत्मनेपदिभ्यः स्वः भावे, कर्मणि, कर्तरि च भवति।<br>परस्मैपदस्योदाहरणम् -<br>वर्तमानकाले - लुनीहि लुनीहीत्येवायं लुनाति, इमौ लुनीतः, इमे लुनन्ति, त्वं लुनासि, युवां लुनीथः।<br>तविषये - लुनीहि लुनीहीत्येव यूयं लुनीथ। पक्षे लुनीत, लुनीतेत्येव यूयं लुनीथ।<br>एवमेव भूतकाले, भविष्यत्कालेऽप्युदाहर्यम्।<br>सर्वत्र क्रियासमभिहारद्योतनाय 'क्रियासमभिहारे द्वे भवतः' इति वार्तिकेन लुनीहि इत्यस्य द्विर्वचनं भवति 'यथाविध्यनुप्रयोगः (३.४.४) इत्यनेन 'लुनाति' इत्यादीनामनुप्रयोगश्च भवति। अनुप्रयोगाद्यथायथं लडादयः, तिबादयश्च भवन्ति। अनुप्रयोगादेव संख्याकालयोः, पुरुषविशेषस्य चाभिव्यक्तिर्भवति।<br>आत्मनेपदस्योदाहरणम् -<br>वर्तमानकाले - अधीष्व अधीष्वेत्येवायमधीते, इमौ अधीयाते, इमे अधीयते इत्यादि।<br>ध्वविषये तु - अधीष्व अधीष्वेत्येव यूयमधीध्वे, पक्षे अधीध्वम्, अधीध्वम् इत्येव यूयमधीध्वे।<br>एवमेव उत्तमपुरुषे, भूते, भविष्यति चाप्युदाहार्यम्।<br>लुनीहि लुनीहीत्येवायं लुनाति इत्यादीनां पुनः पुनः, अतिशयेन वा लवनं करोतीत्याद्यर्थः। तत्र पुनः पुनः, अतिशयेन वा लवनमिति लुनीहि लुनीहि इत्यस्यार्थः, एककर्तृकं, वर्तमानकालिकं लवनम् इति लुनाति इत्यस्य चार्थः।<br>अनयोरर्थयोरभेदान्वयेन 'लुनीहि लुनीहीत्येवायं लुनाति' इति वाक्यस्य उक्तार्थः सम्पद्यते, तत्र इति शब्दस्त्वभेदान्वये तात्पर्यं ग्राहयति। | लोट् लोटो हिस्वौ वा च तध्वमोः३ |
|---|---|---|

| | | |
|---|---|---|
| लोट् लोटो हिस्वौ वा च तध्वमोः २ | ३. समुच्चयेऽन्यतरस्याम्<br>समुच्चये द्योत्ये धातुसम्बन्धे सति धातोर्लोट् प्रत्ययो भवति, लोटः हिस्वौ भवतः, त-ध्वमोर्विषये तु हि-स्वौ वा भवतः।<br>सक्तून् पिब, धानाः खाद इत्यभ्यवहरति। अन्नं भुङ्क्ष्व, दाधिकमास्वादयस्व इत्यभ्यवहरते।<br>तध्वमोर्विषये तु - सक्तून् पिबत, धानाः खादत इत्यभ्यवहरथ। अन्नं भुङ्ग्ध्वम्,दाधिकमास्वादयध्वम् इति अभ्यवहरध्वे।<br>अत्र समुच्चीयमानपानादिक्रियाविशेषाणाम् अनुप्रयोगार्थेन अभ्यवहारेतिक्रियासामान्येन अभेदान्वयः।<br>लोड्विकल्पे - सक्तून् पिबति, धानाः खादति। अन्नं भुङ्क्ते, दाधिकमास्वादयते। इति। | अन्यतरस्याम् ७ |
| | ४. यथाविध्यनुप्रयोगः पूर्वस्मिन्<br>अत्र लोड्विधायकं सूत्रद्वयम् - 'क्रियासमभिहारे लोट्' (३.४.२) इत्याद्येकं सूत्रम्, 'समुच्चयेऽन्यतरस्याम्' (३.४.३) इति द्वितीयं सूत्रम्। तत्र प्रथमं सूत्रं 'पूर्वस्मिन्' इत्यत्र पूर्वपदेन गृह्यते। अतः सूत्रस्यार्थो भवति - आद्ये लोड्विधाने लोट्प्रकृतिभूतस्यैव धातोरनुप्रयोगः कर्त्तव्य इति। तथा चैवोदाहृतं पूर्वसूत्रे - लुनीहि लुनीहीत्येवायं लुनातीत्यादि। अत्र छिनत्तीति नानुप्रयुज्यते।<br>एवमेव अधीष्वाधीष्वेत्येवायमधीते इति। अत्र पठतीति नानुप्रयुज्यते। | अनुप्रयोगः ५ |
| अनुप्रयोगः ४ | ५. समुच्चये सामान्यवचनस्य<br>'समुच्चयेऽन्यतरस्याम्' (३.४.३) इति सूत्रेण लोड्विधाने सामान्यार्थस्य धातोरनुप्रयोगः कर्त्तव्यः।<br>तथा चैवोदाहृतम् - सक्तून् पिब, धानाः खाद इत्यभ्यवहरति इत्यादि। | |
| धातुसम्बन्धे १ अन्यतरस्याम् ३ | ६. छन्दसि लुङ्-लङ्-लिटः<br>छन्दसि विषये धातुसम्बन्धे सति धातोः लुङ्-लङ्-लिटः प्रत्यया अन्यतरस्यां भवन्ति,<br>लुङ् - देवो देवेभिरागमत्।<br>लङ् - अग्निमद्य होतारमवृणीतायं यजमानः।<br>लिट् - अद्या ममार। अद्य म्रियते इत्यर्थः।<br>'उदाहरणेषु धातुसम्बन्धो मृग्यः' इति लघुशब्देन्दुशेखरः, पदमञ्जरी च। | छन्दसि १७ |

| | | |
|---|---|---|
| छन्दसि ६<br>अन्यतरस्याम् ३ | ७. लिङर्थे लेट्<br>छन्दसि लिङर्थे लेट्प्रत्ययोऽन्यतरस्यां भवति।<br>जोषिषत्।<br>'जुषी प्रीतिसेवनयोः' अनुदात्तेत्, व्यत्ययेन परस्मैपदम्, 'इतश्च लोपः परस्मैपदेषु' इत्यनेन तिप इकारस्य लोपः, 'लेटोऽडाटौ' इति तिपोऽडागमः, 'सिब्बहुलं लेटि' इति सिप्, इडागमः, लघूपधगुणः।<br>अन्यान्युदाहरणानि – तारिषत्, मन्दिषत्, नेता इन्द्रो नेषत्। पताति दिद्युत्। उदधिं च्यावयाति। | लेट् ८ |
| छन्दसि ६<br>लेट् ७ | ८. उपसंवादाऽऽशङ्कयोश्च<br>उपसंवादाऽऽशङ्कयोश्च गम्यमानयोः छन्दसि धातोर्लिङर्थे लेट्प्रत्ययो भवति।<br>उपसंवादः = 'यदि मे भवानिदं कुर्यात्तर्हीदमहं दास्यामि' इत्येवं पणबन्धः, वचनप्रदानं वा।<br>आशङ्का – कारणं समीक्ष्य कार्यस्यानुमानम्, सम्भावना वा।<br>उपसंवादे – अहमेव पशूनामीशै। त्रिपुरविजये देवैः प्रार्थितस्य रुद्रस्येदं वचनम्।<br>आशङ्कायाम् – नेज्जिह्मायन्तो नरकं पताम। जिह्माचरणेन नरकपात आशङ्क्यते। | |
| छन्दसि ६ | ९. तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन् तवैतवेङ्तवेनः<br>तुमर्थे छन्दसि से, सेन्, असे, असेन्, क्से,क्सेन्,अध्यै, अध्यैन्, कध्यै, कध्यैन्, शध्यै, शध्येन्, तवै, तवेङ्, तवेन् – इत्येते पञ्चदश प्रत्यया भवन्ति।<br>तुमर्थो भावः, 'अव्ययकृतो भावे' इत्युक्तेः।<br>से – वक्षे रायः। वचः से।<br>सेन् – ता वामेषे रथानाम्। 'एषे' इत्यत्र इण्धातोः सेन्।<br>असे, असेन् – क्रत्वे दक्षाय जीवसे। स्वरे विशेषः। एवमेवमन्येष्वपि प्रत्ययेषु।<br>क्से – प्रेषे भगाय।<br>क्सेन् – श्रियसे।<br>कध्यै – इन्द्राग्नी आहुवध्यै।<br>कध्यैन् – श्रियध्यै।<br>शध्यै, शध्यैन् – वायवे पिबध्यै। राधसः सह मादयध्यै।<br>तवै – सोममिन्द्राय पातवै।<br>तवेङ् – दशमे मासि सूतवे।<br>तवेन् – स्वर्देवेषु गन्तवे। कर्त्तवे। हर्त्तवे। | तुमर्थे६६ |

| | | |
|---|---|---|
| छन्दसि ६<br>तुमर्थे ६ | १०. प्रयै रोहिष्यै अव्यथिष्यै<br>तुमर्थे छन्दसि एते निपात्यन्ते।<br>प्रयै देवेभ्यः। प्रपूर्वस्य यातेः कैप्रत्ययः। अपामोषधीनां रोहिष्यै। रुहेः इष्यै प्रत्ययः।<br>अव्यथिष्यै। व्यथेर्नञ्पूर्वस्य इष्यै प्रत्ययः।<br>प्रयातुम्, रोढुम्, अव्यथितुम् इत्यर्थाः क्रमेण प्रयै इत्यादीनाम्। | |
| छन्दसि ६<br>तुमर्थे ६ | ११. दृशे विख्ये च<br>तुमर्थे छन्दसि दृशे, विख्ये-इत्येतौ शब्दौ निपात्येते।<br>दृशे विश्वाय सूर्यम्। दृशेः केप्रत्ययः। द्रष्टुमित्यर्थः।<br>विख्ये त्वा हरामि। विपूर्वाच्चक्षिङः, ख्यातेर्वा के प्रत्ययः।<br>विख्यातुमित्यर्थः। | |
| तुमर्थे ६<br>छन्दसि ६ | १२. शकि णमुल्कमुलौ<br>छन्दसि शक्नातावुपपदे तुमर्थे णमुल्कमुलौ प्रत्ययौ भवतः।<br>विभाजं नाशकत्। विपूर्वाद् भजेर्णमुल्। विभक्तुमित्यर्थः।<br>अपलुपं नाशकत्। अपपूर्वाद् "लुप्लृ छेदने" इत्यस्मात् कमुल्। अपलोप्तुमित्यर्थः। | |
| तुमर्थे ६<br>छन्दसि ६ | १३. ईश्वरे तोसुन्कसुनौ<br>छन्दसि ईश्वरे उपपदे तोसुन्,कसुन्- इत्येतौ प्रत्ययौ भवतः।<br>ईश्वरोऽभिचरितोः। अभिचरितुमित्यर्थः।<br>ईश्वरो विलिखः। विलिखितुमित्यर्थः। | |
| छन्दसि ६ | १४. कृत्यार्थे तवैकेन्केन्यत्वनः<br>छन्दसि कृत्यार्थे धातोः तवै-केन्-केन्य-त्वनः प्रत्यया भवन्ति।<br>तवै - न म्लेच्छितवै। 'म्लेच्छ अव्यक्ते शब्दे' इत्येतस्मात् तवैप्रत्ययः। न म्लेच्छितव्यम् इत्यर्थः।<br>केन् - अवगाहे।<br>केन्य - दिदृक्षेण्यः। दृशेः सन्नन्तात् केन्यप्रत्ययः।<br>त्वन् - कर्त्वं हविः। कृञः त्वन्। कर्त्तव्यम् इत्यर्थः। | कृत्यार्थे १५ |
| कृत्यार्थे १४<br>छन्दसि ६ | १५. अवचक्षे च<br>छन्दसि कृत्यार्थे अवचक्षे च निपात्यते।<br>अत्र अवपूर्वाच्चक्षिङः एशप्रत्ययो निपात्यते।<br>रिपुणा नावचक्षे। नावख्यातव्यमित्यर्थः। | |

| | | |
|---|---|---|
| तुमर्थे ९<br>छन्दसि ६ | **१६. भावलक्षणे स्थेण्-कृञ्-वदि-चरि-हु-तमि-जनिभ्यस्तोसुन्**<br>छन्दसि भावलक्षणे वर्तमानेभ्यः स्थादिभ्यः धातुभ्यः तोसुन्प्रत्ययो भवति, तुमर्थे।<br>भावः = क्रियान्तरं लक्ष्यते येन तद् भावलक्षणम्।<br>स्था - आ संस्थातोर्वेद्यां सीदन्ति। आ समाप्तेः सीदन्तीत्यर्थः। 'सम्पूर्वो हि तिष्ठतिः समाप्तौ रूढः; सन्तिष्ठते पिण्डपितृयज्ञ इत्यादौ दर्शनात्' इति हरदत्तः।<br>इण् - पुरा सूर्यस्योदेतोराधेयः।<br>कृञ् - पुरा वत्सानामपाकर्त्तोः।<br>वदि - पुरा प्रवदितोरग्नौ प्रहोतव्यम्।<br>चरि - पुरा प्रचरितोरग्नीध्रीये होतव्यम्।<br>हु - आहोतोरप्रमत्तस्तिष्ठति।<br>तमि - 'तमु काङ्क्षायाम्' - आतमितोरासीत्।<br>जनि - आ विजनितोः संभवामेति। | भावलक्षणे १७ |
| भावलक्षणे१६<br>छन्दसि६ तुमर्थे९ | **१७. सृपि-तृदोः कसुन्**<br>भावलक्षणे वर्तमानयोः सृपितृदोः कसुन् प्रत्ययो भवति तुमर्थे छन्दसि विषये।<br>पुरा क्रूरस्य विसृपो विरप्शिन्।<br>पुरा जत्रुभ्य आतृदः। अत्र'जतृभ्य' इति पाठान्तरम्। | |
| तुमर्थे९ | **१८. अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा**<br>अलंखल्वोः प्रतिषेधवाचिनोरुपपदयोः धातोः क्त्वाप्रत्ययो भवति तुमर्थे प्राचामाचार्याणां मतेन।<br>अलं कृत्वा। खलु कृत्वा।<br>करणेन किञ्चिदपि साध्यं नास्तीत्यर्थः।<br>प्रतिषेधयोरिति किम्? अलंकारः। भूषणवचनोऽत्र अलंशब्दः।<br>प्राचां ग्रहणं विकल्पार्थम् - अलं रोदनेन।<br>वासरूपविधिश्चेत् प्राचांग्रहणं पूजार्थम्। | क्त्वा २४ |

| | | |
|---|---|---|
| क्त्वा १८<br>तुमर्थे ६ | १९. उदीचां माङो व्यतीहारे<br>व्यतीहारेऽर्थे वर्तमानाद् मेङःधातोः क्त्वा प्रत्ययो भवति उदीचामाचार्याणां मतेन। व्यतीहारो = विनिमयः। 'माङ्' इत्ययं 'मेङ् प्रणिदाने' इति धातोः कृतात्वनिर्देशः।<br>अपमित्य, अपमाय वा याचते।<br>पूर्वं ह्यसौ याचित्वा पश्चाद् अपमयते = वस्त्रादि परिवर्तयतीत्यर्थो विवक्षितः। 'अपमित्य' इत्यत्र ल्यपि परे 'मयतेरिदन्यतरस्याम्' इति सूत्रेण विकल्पेन इत्वम्।<br>उदीचांग्रहणाद् यथाप्राप्तमपि भवति - याचित्वाऽपमयते।<br>अत्र 'समानकर्तृकयोः पूर्वकाले' (३.४.२१) इति सूत्रेण पूर्वकाले विद्यमानाद् याच्धातोरेव क्त्वाप्रत्ययः।<br>प्रकृतसूत्रेण तु पश्चात्काले विद्यमानाद् मेङ् धातोः क्त्वेति विशेषः। | |
| क्त्वा १८ | २०. परावरयोगे च<br>परेण अवरस्य (पूर्वस्य), अवरेण च परस्य योगे गम्यमाने धातोः क्त्वा प्रत्ययो भवति।<br>परावराभ्यां योगः परावरयोगः।<br>परेण तावत् - अप्राप्य नदीं पर्वतः स्थितः।<br>परनदीयोगोऽत्र पर्वतस्य।<br>अतिक्रम्य पर्वतं स्थिता नदी।<br>अवरपर्वतयोगोऽत्र नद्याः। | |
| क्त्वा १८ | २१. समानकर्तृकयोः पूर्वकाले<br>समानकर्तृकयोर्धात्वर्थयोर्मध्ये पूर्वकाले वर्तमानाद् धातोः क्त्वाप्रत्ययो भवति।<br>भुक्त्वा व्रजति। पीत्वा व्रजति।<br>समानकर्तृकयोरिति किम्? व्रजति च जल्पति च।<br>यौगपद्यादिह क्रियायाः पूर्वकालता नास्ति।<br>(वा०) आस्यं व्यादाय स्वपिति, चक्षुः संमील्य हसतीत्युपसंख्यानमपूर्वकालत्वात्।<br>आस्यं व्यादाय स्वपिति। चक्षुः संमील्य हसति। | समानकर्तृकयोः२६<br>पूर्वकाले२६ |
| क्त्वा १८<br>समानकर्तृकयोः<br>पूर्वकाले२१ | २२. आभीक्ष्ण्ये णमुल् च<br>समानकर्तृकयोर्धात्वर्थयोर्मध्ये पूर्वकाले आभीक्ष्ण्यविशिष्टेऽर्थे वर्तमानाद् धातोर्णमुल्प्रत्ययो भवति, चकारात् क्त्वा च।<br>आभीक्ष्ण्यम् = पौनः पुन्यम्।<br>भोजं भोजं व्रजति, भुक्त्वा भुक्त्वा व्रजति।<br>'आभीक्ष्ण्ये द्वे भवतः' इत्युपसंख्यानाद् णमुलन्तस्य, क्त्वान्तस्य च द्विर्वचनम्। | आभीक्ष्ण्ये २३<br>णमुल् २४ |

| | | |
|---|---|---|
| क्त्वा १८<br>णमुलौ २२<br>समानकर्तृकयोः<br>पूर्वकाले २१ | २३. न यद्यनाकाङ्क्षे<br>'यद्' इत्युपपदे पूर्वकाले यत्प्राप्तं तन्न भवति, अनाकाङ्क्षे चेत् पूर्वोत्तरक्रिये।<br>यदयं भुङ्क्ते; ततः पठति।<br>यदयमधीते; ततः स्वपिति।<br>अनाकाङ्क्षे इति किम्? यदयं भुक्त्वा व्रजति अधीत एव ततः परम्। | |
| समानकर्तृकयोः<br>पूर्वकाले २१ | २४. विभाषाऽग्रेप्रथमपूर्वेषु<br>अग्रे-प्रथम-पूर्वेषूपपदेषु समानकर्तृकयोः पूर्वकालेऽर्थे वर्त्तमानाद् धातोः क्त्वाणमुल्प्रत्ययौ भवतः।<br>अग्रे भोजं, भुक्त्वा वा व्रजति।<br>प्रथमं भोजं, भुक्त्वा वा व्रजति।<br>पूर्वं भोजं, भुक्त्वा वा व्रजति<br>पक्षे लडादयः - अग्रे भुङ्क्ते ततो व्रजति। | |
| समानकर्तृकयोः<br>पूर्वकाले २१ | २५. कर्मण्याक्रोशे कृञः खमुञ्।<br>कर्मण्युपपदे समानकर्तृकयोः पूर्वकाले कृञः खमुञ् प्रत्ययो भवति आक्रोशे गम्यमाने।<br>चोरंकारम् आक्रोशति। 'चोरोऽसि' इत्येवं चोरशब्दमुच्चार्य आक्रोशतीत्यर्थः।<br>खमुञ् इति खित्, अतः 'अरुर्द्विषदजन्तस्य मुम्' इति सूत्रेण मुम्। | कृञ् २८ |
| कृञ २५<br>समानकर्तृकयोः<br>पूर्वकाले २१ | २६. स्वादुमि णमुल्<br>स्वाद्वर्थेषूपपदेषु समानकर्तृकयोः पूर्वकाले कृञो णमुल् प्रत्ययो भवति। पूर्वपदस्य मान्तत्वं च निपात्यतेऽनेन।<br>स्वादुङ्कारं भुङ्क्ते। लवणङ्कारं भुङ्क्ते।<br>सम्पन्नंकारं भुङ्क्ते।<br>'सम्पन्नलवणशब्दौ स्वादुपर्यायौ' इति वैयाकरणसिद्धान्तकौमुदी। | णमुल् ५८ |

| कृञ् २५ णमुल् २६ | २७. अन्यथैवं-कथमित्थंसु सिद्धाप्रयोगश्चेत्<br>अन्यथा, एवम्, कथम्, इत्थम् - इत्येतेषूपपदेषु कृञो णमुल् प्रत्ययो भवति, सिद्धाप्रयोगश्चेत् कृञः।<br>निरर्थकत्वाद् यस्य अप्रयोगः सिद्धो भवति तस्याप्रयोगः सिद्धाप्रयोग इति कथ्यते।<br>तद्यथा 'अन्यथाकारं भुङ्क्ते' इति कथनेन योऽर्थः प्राप्यते स एवार्थः 'अन्यथा भुङ्क्ते' इति कथनेनापि प्राप्यते। अतः कृञः अप्रयोगोऽत्र सिद्धाप्रयोगः।<br>अन्यथाकारं भुङ्क्ते। एवंकारं भुङ्क्ते। कथङ्कारं भुङ्क्ते। इत्थङ्कारं भुङ्क्ते।<br>सिद्धाप्रयोग इति किम्? शिरोऽन्यथा कृत्वा भुङ्क्ते। | सिद्धाप्रयोगः २८ |
|---|---|---|
| कृञः२५ णमुल् २६<br>सिद्धाप्रयोगः २७ | २८. यथातथयोरसूयाप्रतिवचने<br>यथा,तथा- इत्येतयोः उपपदयोः कृञो धातोः णमुल्प्रत्ययो भवति, असूयाप्रतिवचने गम्यमाने, सिद्धाप्रयोगश्चेत्कृञः।<br>असूयया = मानसोपतापकारणेन,यत् प्रतिवचनम् = प्रत्युत्तरदानम् तद् असूयाप्रतिवचनम्।<br>यथाकारमहं भोक्ष्ये, तथाकारमहं भोक्ष्ये, किं तवानेन।<br>असूयाप्रतिवचने इति किम्? यथाकारमहं भोक्ष्ये, तथा त्वं द्रक्ष्यसि। | |
| णमुल् २६ | २९. कर्मणि दृशिविदोः साकल्ये<br>कर्मण्युपपदे साकल्यविशिष्टेऽर्थे वर्तमानयोः दृशिविदोः धात्वोः णमुल्प्रत्ययो भवति।<br>कन्यादर्शं वारयति। याः याः कन्याः पश्यति तास्ताः वारयतीत्यर्थः।<br>ब्राह्मणवेदं भोजयति। यं यं ब्राह्मणं जानाति, लभते, विचारयति वा तान् सर्वान् भोजयतीत्यर्थः।<br>साकल्ये इति किम्? ब्राह्मणं दृष्ट्वा भोजयति। | कर्मणि ३६ |
| णमुल्२६<br>कर्मणि२९ | ३०. यावति विन्दजीवोः<br>यावत्युपपदे विन्द-जीवोः धात्वोः णमुल्प्रत्ययो भवति।<br>'विन्द' इति विदेर्लाभार्थस्यानुकरणम्, तस्य हि विन्दतीत्यादौ 'शे मुचादीनाम्' इति सूत्रेण नुम्भवति।<br>यावद्वेदं भुङ्क्ते। यावल्लभते तावद् भुङ्क्ते इत्यर्थः।<br>यावज्जीवमधीते। यावज्जीवति तावदधीते इत्यर्थः। | |
| णमुल् २६<br>कर्मणि २९ | ३१. चर्मोदरयोः पूरेः<br>चर्मोदरयोः कर्मणोरुपपदयोः पूरयतेर्णमुल् प्रत्ययो भवति।<br>चर्मपूरं स्तृणाति। उदरपूरं स्तृणाति। | पूरेः ३२ |

| | | |
|---|---|---|
| पूरेः३१ णमुल् २६ | ३२. वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्<br>कर्मण्युपपदे पूरेर्णमुल्प्रत्ययो भवति, पूरेः ऊलोपश्चास्यान्यतरस्यां भवति, समुदायेन चेद् वर्षस्य = वृष्टेः, प्रमाणम् = इयत्ता गम्यते।<br>गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वा। सीतापूरं वृष्टो देवः, सीताप्रं वा।<br>अस्यग्रहणं किम्? उपपदस्य उकारस्य लोपो मा भूत्– 'मूषिकाविलपूरं वृष्टो देवः, मूषिकाविलप्रम्। | वर्षप्रमाणे ३३ |
| वर्षप्रमाणे३२ णमुल्२६ कर्मणि २६ | ३३. चेले क्नोपेः<br>चेलार्थेषु कर्मसूपपदेषु ण्यन्तक्नोपेर्णमुल् भवति वर्षप्रमाणे गम्यमाने।<br>चेलम्= वस्त्रम्।<br>चेलक्नोपं वृष्टो देवः।<br>वस्त्रक्नोपम्, वसनक्नोपम्। 'क्नूयी शब्दे,उन्दने च' अस्माद् ण्यन्ताद् धातोर्णमुल्। | |
| कर्मणि २६ णमुल् २६ | ३४. निमूल-समूलयोः कषः<br>निमूल, समूल - इत्येतयोः कर्मणोरुपपदयोः कषो धातोः णमुल् प्रत्ययो भवति।<br>निमूलकाषं कषति। समूलकाषं कषति। निमूलं, समूलं कषतीत्यर्थः। कषधातुर्हिंसार्थः।<br>"इतः प्रभृति कषादीन् यान् वक्ष्यति, तत्र 'कषादिषु यथाविध्यनुप्रयोगः" (३.४.४६) इति सूत्रानुसारेण यस्माण्णमुल् तस्यैवानुप्रयोगोऽपि। | |
| कर्मणि २६ णमुल् २६ | ३५. शुष्क-चूर्ण-रूक्षेषु पिषः<br>शुष्क-चूर्ण-रूक्षेषु कर्मसूपपदेषु पिषः धातोःणमुल् प्रत्ययो भवति।<br>'पिष्लृ सञ्चूर्णने'। शुष्कपेषं पिनष्टि। चूर्णपेषं पिनष्टि। रुक्षपेषं पिनष्टि।<br>शुष्कं, चूर्णं, रूक्षं वा पिनष्टीत्यर्थः। | |
| कर्मणि २६ णमुल् २६ | ३६. समूलाकृतजीवेषु हन्कृञ्ग्रहः<br>समूल, अकृत, जीव - इत्येतेषु कर्मसूपपदेषु यथासंख्यं हन्, कृञ्, ग्रह् - इत्येतेभ्यो धातुभ्यो णमुल् प्रत्ययो भवति।<br>समूलघातं हन्ति। समूलं हन्तीत्यर्थः।<br>अकृतकारं करोति।<br>जीवग्राहं गृह्णाति। जीवतीति जीवः, 'इगुपध' इति कः।<br>जीवम् = जीवन्तं गृह्णातीत्यर्थः। | |

| | | |
|---|---|---|
| णमुल २६ | ३७. करणे हनः<br>करणे उपपदे हनो धातोः णमुल् भवति।<br>पाणिघातं हन्ति। पादघातं हन्ति। पाणिना, पादेन वा हन्तीत्यर्थः। | करणे ४० |
| कर्मणि २८<br>णमुल् २६ | ३८. स्नेहने पिषः<br>स्नेहनवाचिनि करणे उपपदे पिषेर्धातोर्णमुल् प्रत्ययो भवति।<br>स्निह्यते येन तत् स्नेहनम्, तैलादिद्रव्यमित्यर्थः।<br>उदपेषं पिनष्टि। उदकेन पिनष्टीत्यर्थः।'पेषं -वासवाहनधिषु च' इति सूत्रेण उदकस्य उद इत्यादेशः।<br>तैलपेषं पिनष्टि। तैलेन पिनष्टीत्यर्थः। | |
| कर्मणि २८<br>णमुल २६ | ३९. हस्ते वर्त्तिग्रहोः<br>हस्तवाचिनि करणे उपपदे वर्त्तयतेर्गृह्णातेश्च णमुल् प्रत्ययो भवति।<br>वर्त्तिर्ण्यन्तः।<br>हस्तेन वर्त्तयतीति हस्तवर्त्तं वर्तयति। हस्तेन गुलिकां करोतीत्यर्थ।<br>हस्तेन गृह्णातीति हस्तग्राहं गृह्णाति। करग्राहम्। पाणिग्राहम्। | |
| कर्मणि २८<br>णमुल् २६ | ४०. स्वे पुषः<br>स्ववाचिनि करणे उपपदे पुषेधातोर्णमुल् प्रत्ययो भवति।<br>स्वेत्यर्थग्रहणम्।<br>आत्मात्मीयज्ञातिधनवचनः स्वशब्दः।<br>स्वपोषं पुष्णाति। आत्मपोषं पुष्णाति। गोपुषं पुष्णाति।<br>पितृपोषं पुष्णाति। धनपोषं पुष्णाति। | |
| णमुल् २६ | ४१. अधिकरणे बन्धः<br>अधिकरणवाचिन्युपपदे बध्नातेर्धातोर्णमुल् प्रत्ययो भवति।<br>चक्रबन्धं बध्नाति। चक्रे बध्नातीत्यर्थः। कूटबन्धं बध्नाति। मुष्टिबन्धं बध्नाति। | बन्धः ४२ |
| बन्धः ४१<br>णमुल् २६ | ४२. संज्ञायाम्<br>संज्ञायां विषये बध्नातेर्धातोर्णमुल् प्रत्ययो भवति।<br>क्रौञ्चबन्धं बध्नाति। मयूरिकाबन्धम्, अट्टालिकाबन्धं बद्धः।<br>बन्धविशेषाणां नामधेयान्येतानि। | |

| | | |
|---|---|---|
| णमुल् २६ | ४३. कर्त्रोर्जीवपुरुषयोर्नशिवहोः<br>कर्तृवाचिनोः जीव-पुरुषयोरुपपदयोः धातोर्णमुल् प्रत्ययो भवति।<br>जीवनाशं नश्यति। जीवो नश्यतीत्यर्थः। पुरुषवाहं वहति। पुरुषः प्रेष्यो भूत्वा वहतीत्यर्थः।<br>कर्तरीति किम्? जीवेन नष्टः।<br>पुरुषेणोढः। जीवः, पुरुषश्चात्र करणमुपपदम्। | कर्तरि ४५ |
| कर्तरि ४३<br>णमुल् २६ | ४४. ऊर्ध्वे शुषिपूरोः<br>कर्तृवाचिनि ऊर्ध्वशब्दे उपपदे शुषिपूरोर्धात्वोः णमुल् प्रत्ययो भवति।<br>ऊर्ध्वशोषं शुष्यति। ऊर्ध्वं शुष्यतीत्यर्थः।<br>ऊर्ध्वपूरं पूर्यते। ऊर्ध्वं पूर्यते इत्यर्थः। | |
| कर्तरि ४३<br>णमुल् २६ | ४५. उपमाने कर्मणि च<br>उपमाने कर्मणि, चकारात् उपमाने कर्तरि चोपपदे धातोर्णमुल्प्रत्ययो भवति।<br>उपमीयतेऽनेनेत्युपमानम्।<br>कर्मणि - घृतनिधायं निहितं जलम्। घृतमिव सुरक्षितमित्यर्थः।<br>सुवर्णनिधायं निहितः। सुवर्णमिव निहित इत्यर्थः।<br>कर्तरि - अजकनाशं नष्टः।<br>अजक इव नष्टः। एवमेव - चूडकनाशम्। दन्तनाशम्। | |
| | ४६. काषादिषु यथाविध्यनुप्रयोगः<br>'निमूलसमूलयोः कषः (३४.४.३४) इत्येतदारभ्य कषादयः, एतेषु यथाविध्यनुप्रयोगो भवति। अर्थाद् यस्माद्धातोर्णमुल् प्रत्ययो भवति, तस्यैवानुप्रयोगोऽपि कर्त्तव्यः।<br>तथा चैवोदाहृतम् - निमूलकाषं कषतीत्यादि। | |
| णमुल् २६ | ४७. उपदंशस्तृतीयायाम्<br>'दंश दशने' अस्माद्धातोरुपपूर्वात् तृतीयान्ते उपपदे णमुल्प्रत्ययो भवति।<br>मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं वा।<br>अत्र 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति सूत्रेण विकल्पेनोपपदसमासः। मूलकादि चोपदंशेः कर्म, भुजेः करणमिति प्रधानक्रियानुरोधात्, परत्वाच्च ततः तृतीया। सर्वस्मिन्नेवात्र णमुल्प्रकरणे क्रियाभेदे सति वाऽसरूपविधिना क्त्वापि भवति - मूलकेनोपदश्य भुङ्क्ते। | तृतीयायाम् ५१ |

| | | |
|---|---|---|
| तृतीयायाम् ४७<br>णमुल् २६ | ४८. हिंसार्थानां च समानकर्मकाणाम्<br>समानकर्मकाणां हिसार्थानां धातूनां णमुल्प्रत्ययो भवति तृतीयान्ते उपपदे।<br>हिंसा = प्राण्युपघातः।<br>दण्डोपघातं गाः कालयति, दण्डेनोपघातं वा। दण्डताडम्, दण्डेन ताडम् वा।<br>समानंकर्मकाणामिति किम्? चोरं दण्डेनोपहत्य गोपालको गाः कलयति। | |
| तृतीयायाम् ४७<br>णमुल् २६ | ४९. सप्तम्यां चोपपीड-रुध-कर्षः<br>सप्तम्यां, तृतीयायां चोपपदे उपपीड-रुध-कर्षः णमुल् प्रत्ययो भवति।<br>उपशब्दः प्रत्येकमभिसम्बध्यते।<br>पार्श्वोपपीडं शेते, पार्श्वयोरुपपीडम्, पार्श्वाभ्यामुपपीडं वा।<br>व्रजोपरोधं गाः स्थापयति, व्रजे उपरोधम्, व्रजेनोपरोधं वा। पाण्युपकर्षं धानाः संगृह्णाति, पाणावुपकर्षम्, पाणिनोपकर्षं वा। | सप्तम्याम् ५१ |
| तृतीयासप्तम्योः<br>४९<br>णमुल् २६ | ५०. समासत्तौ<br>समासत्तौ गम्यमानायां तृतीया- सप्तम्योः उपपदयोर्धातोर्णमुल् भवति।<br>समासत्तिः = सन्निकर्षः, सामीप्यं वा।<br>केशग्राहं युध्यन्ते, केशेषु ग्राहम्, कैशैर्ग्राहं वा।<br>हस्तग्राहं युध्यन्ते, हस्तेषु ग्राहम्, हस्तैर्ग्राहं वा।<br>अत्यन्तं सन्निहिता भूत्वा युध्यन्ते इत्यर्थः। | |
| तृतीयासप्तम्योः<br>४९<br>णमुल् २६ | ५१. प्रमाणे च<br>प्रमाणे गम्यमाने तृतीयासप्तम्योरुपपदयोर्धातोः णमुल् प्रत्ययो भवति।<br>प्रमाणम् = आयामः, दैर्घ्यम्।<br>द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति, द्व्यङ्गुले उत्कर्षम्, द्व्यङ्गुलेनोत्कर्षं वा। | |

| | | |
|---|---|---|
| णमुल् २६ | ५२. अपादाने परीप्सायाम्<br>परीप्सायां गम्यमानायाम् अपादाने उपपदे धातोर्णमुल् प्रत्ययो भवति।<br>परीप्सा = त्वरा, शीघ्रता वा।<br>शय्योत्थायं धावति, शय्याया उत्थायं वा।<br>एवं हि नाम त्वरा यदावश्यकं मुखक्षालनाद्यकृत्वैव धावतीत्यर्थः।<br>परीप्सायामिति किम्? आसनादुत्थाय गच्छति। अत्र क्त्वैव भवति। | परीप्सायाम् ५३ |
| परीप्सायाम् ५२<br>णमुल् २६ | ५३. द्वितीयायां च<br>परीप्सायां गम्यमानायां द्वितीयान्ते उपपदेऽपि धातोर्णमुल् प्रत्ययो भवति।<br>यष्टिग्राहं युध्यन्ते, यष्टिं ग्राहं वा। लोष्टग्राहं युध्यन्ते, लोष्टं ग्राहं वा।<br>एवं नाम त्वरते यद् आयुधग्रहणमपि नाद्रियते, लोष्टादिकं यत्किञ्चिदासन्नं तद् गृहीत्वा युध्यते इत्यर्थः। | द्वितीयायाम् ५८ |
| द्वितीयायाम् ५३<br>णमुल् २६ | ५४. स्वाङ्गेऽध्रुवे<br>अध्रुवे स्वाङ्गवाचिनि द्वितीयान्ते उपपदे धातोर्णमुल् प्रत्ययो भवति।<br>येन विना जीवनं न सम्भवति तद् ध्रुवमङ्गम्, यथा - शिरः, उरः आदि। तद्भिन्नम् अध्रुवमङ्गम्, यथा - अक्ष्यादि।<br>अक्षिनिकाणं जल्पति। अक्षि निमील्येत्यर्थः। 'कण निमीलने' चुरादिर्निपूर्वः। अक्षि निकाणं वा।<br>भ्रूविक्षेपं कथयति, भ्रुवं विक्षेपं वा।<br>'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति सूत्रेण विकल्पेन समासः।<br>अध्रुव इति किम्? उत्क्षिप्य शिरः कथयति। | स्वाङ्गे ५५ |
| स्वाङ्गे ५४<br>द्वितीयायाम् ५३<br>णमुल् २६ | ५५. परिक्लिश्यमाने च<br>परिक्लिश्यमाने स्वाङ्गवाचिनि द्वितीयान्ते उपपदे धातोर्णमुल् प्रत्ययो भवति। ध्रुवार्थोऽयमारम्भः।<br>परिक्लेशः = सर्वतो विबाधनम्, दुःखनं वा।<br>उरःपेषं युद्ध्यन्ते, उरः पेषं वा। शिरःपेषं युद्ध्यन्ते, शिरः पेषं वा।<br>'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति सूत्रेण विकल्पेन समासः। रूपाभेदेऽपि स्वरभेदः।<br>कृत्स्नं उरः, शिरो वा पीडयन्तो युध्यन्ते इत्यर्थः। | |

| | | |
|---|---|---|
| द्वितीयायाम् ५३<br>णमुल् २६ | ५६. विशि-पति-पदि-स्कन्दां व्याप्य-मानासेव्यमानयोः<br>द्वितीयान्ते उपपदे विशत्यादिभ्यो धातुभ्यो णमुल् प्रत्ययो भवति, व्याप्यमाने, आसेव्यमाने चार्थे गम्यमाने।<br>पदार्थनां विश्यादिक्रियाभिः साकल्येन सम्बन्धो व्याप्तिः। तात्पर्यम्=आसेवा,पौनःपुन्यमाभीक्ष्ण्यमिति वा। तत्र द्रव्ये व्याप्तिः, क्रियायां च आसेवा।<br>विशि - गेहानुप्रवेशमास्ते।<br>समासेन व्याप्त्यासेवयोरुक्तत्वात् 'नित्यवीप्सयोः' इति सूत्रेण द्विर्वचनं न भवति।<br>असमासपक्षे तु-'नित्यवीप्सयोः' इति सूत्रेण व्याप्यमानतायां द्रव्यवचनस्य द्विर्वचनम्, आसेव्यमानतायां च क्रियावचनस्य।<br>तेनासमासे वीप्सायाम् - गेहं गेहमनुप्रवेशमास्ते इति प्रयोगो भवति, आसेवायां तु- गेहमनुप्रवेशमनुप्रवेशमास्ते इति। एवमेवाग्रे ऽपि।<br>पति - गेहानुप्रपातमास्ते, गेहं गेहमनुप्रपातमास्ते, गेहमनुप्रपातमनुप्रपातमास्ते।<br>पदि - गेहानुप्रपादमास्ते, गेहं गेहमनुप्रपादमास्ते, गेहमनुप्रपादमनुप्रपादमास्ते।<br>स्कन्दि - गेहावस्कन्दमास्ते, गेहं गेहमवस्कन्दम् आस्ते, गेहमवस्कन्दमवस्कन्दमास्ते।<br>'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति सूत्रेण विकल्पेन समासः। | |
| द्वितीयायाम् ५३<br>णमुल् २६ | ५७. अस्यतितृषोः क्रियान्तरे कालेषु<br>क्रियान्तरे धात्वर्थे वर्तमानात् 'असु क्षेपणे' इत्यस्माद्, 'ञितृषा पिपासायम्' इत्यस्माच्च धातोः णमुल् प्रत्ययो भवति।<br>क्रियाम् अन्तरयति व्यवधत्ते इति क्रियान्तरः, क्रियाव्यवधायक इत्यर्थः।<br>द्व्यहात्यासं गाः पाययति, द्व्यहमत्यासं वा। त्र्यहात्यासं गाः पाययति, त्र्यहमत्यासं वा। द्व्यहतर्षं गाः पाययति, द्व्यहं तर्षं वा।<br>अत्यसनेन, तर्षणेन च गवां पानक्रिया व्यवधीयते। अद्य पाययित्वा द्व्यहं, त्र्यहं वातिक्रम्य पुनः पाययतीत्यर्थः।<br>'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति सूत्रेण विकल्पेनोपपदसमासः। समासे स्वरविशेषः। | |

| | | |
|---|---|---|
| द्वितीयायाम् ५३<br>णमुल् २६ | ५८. नाम्न्यादिशिग्रहोः<br>द्वितीयान्ते नाम्नि उपपदे आदिशि-ग्रहोः(आङ्पूर्वयोः दिशि-ग्रह्धात्वोः) णमुल् प्रत्ययो भवति।<br>नामादेशमाचष्टे। नामग्राहमाचष्टे। | |
| | ५९. अव्यये ऽयथाभिप्रेताख्याने कृञः क्त्वा-णमुलौ<br>अव्यये उपपदे कृञः धातोः क्त्वाणमुलौ प्रत्ययौ भवतः, अयथाभिप्रेताख्याने गम्यमाने।<br>अप्रियस्योच्चैः, प्रियस्य च नीचैः कथनम् अयथाभिप्रेताख्यानम्।<br>उच्चैःकृत्य, उच्चैः कृत्वा, , उच्चैःकारम्, उच्चैः कारं वा अप्रियमाचष्टे। नीचैःकृत्य, नीचैः कृत्वा, नीचैःकारं, नीचैः कारं वा प्रियं ब्रूते। 'क्त्वा च' इति सूत्रेण, 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति सूत्रेण च विकल्पेनोपपदसमासः। समासे स्वरविशेषः। | कृञः ६०<br>क्त्वाणमुलौ ६२ |
| कृञः ५९<br>क्त्वाणमुलौ ५९ | ६०. तिर्यच्यपवर्गे<br>तिर्यच्युपपदे कृञः क्त्वा-णमुलौ प्रत्ययौ भवतः, अपवर्गे गम्यमाने।<br>अपवर्गः = समाप्तिः।<br>तिर्यक्कृत्य, तिर्यक्कृत्वा, तिर्यक्कारं, तिर्यक् कारं वा गतः।<br>समाप्य गत इत्यर्थः।<br>'क्त्वा च' इति सूत्रेण, 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति सूत्रेण च विकल्पेनोपपदसमासः। समासे स्वरविशेषः।<br>अपवर्गे इति किम्? तिर्यक्कृत्वा काष्ठं गतः। अंनृजु कृत्वा अग्रतः स्थितं काष्ठं पार्श्वे क्षिप्त्वा गत इत्यर्थः। | |
| कृञः ५९<br>क्त्वाणमुलौ ५९ | ६१. स्वाङ्गे तस्प्रत्यये कृभ्वोः<br>तस्प्रत्ययान्ते स्वाङ्गे उपपदे कृभ्वोः क्त्वाणमुलौ प्रत्ययौ भवतः।<br>'तस्प्रत्यये' इति पदे तस्प्रत्ययो यस्मादिति विग्रहे बहुव्रीहिसमासः।<br>मुखतःकृत्य, मुखतः कृत्वा, मुखतःकारम्, मुखतः कारं वा गतः। मुखतः इत्यत्र 'प्रतियोगे पञ्चम्यास्तसिः' (५.४.४४) इति सूत्रपठितेन 'आद्यादिभ्य उपसंख्यानम्' इति वार्तिकेन आद्यादित्वात्तसिः। मुखतोभूय, मुखतो भूत्वा, मुखतोभावं मुखतो भावं वा तिष्ठति।<br>'क्त्वा च' इति सूत्रेण, 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति सूत्रेण च विकल्पेनोपपदसमासः। समासे स्वरविशेषः। | कृभ्वोः ६२ |

| | | |
|---|---|---|
| कृभ्वोः ६१<br>क्त्वाणमुलौ ५६ | **६२. नाधार्थप्रत्यये च्व्यर्थे**<br>च्व्यर्थविषये नाधार्थप्रत्ययान्ते शब्दे उपपदे कृभ्वोः क्त्वा-णमुलौ प्रत्ययौ भवतः।<br>अर्थशब्दस्य 'धा' इत्यनेन सह सम्बन्धः।<br>नाप्रत्ययान्ते शब्दे उपपदे - अनाना नानाकृत्वा गत इति नानाकृत्य, नाना कृत्वा, नानाकारं, नाना कारं वा गतः।<br>अविना विना कृत्वा गत इति विनाकृत्य, विना कृत्वा, विनाकारं, विना कारं वा गतः।<br>अनाना नाना भूत्वेति नानाभूय, नाना भूत्वा, नानाभावं, नाना भावं वा गतः।<br>अविना विना भूत्वेति विनाभूय, विनाभूत्वा, विनाभावं, विना भावं वा गतः ।<br>धार्थप्रत्ययान्ते शब्दे उपपदे - अद्विधा द्विधा कृत्वेति द्विधाकृत्य, द्विधा कृत्वा, द्विधाकारं, द्विधा कारं वा गतः।<br>अद्विधा द्विधा भूत्वेति द्विधाभूय, द्विधा भूत्वा, द्विधाभावं, द्विधा भावं वा गतः।<br>अद्वैधं द्वैधं कृत्वेति द्वैधंकृत्य, द्वैधं कृत्वा, द्वैधंकारं, द्वैधं कारं वा गतः।<br>अद्वैधं द्वैधं भूत्वेति द्वैधंभूय, द्वैधं भूत्वा, द्वैधम्भावं, द्वैधम्भावं वा गतः।<br>नानाकारं, नाना कारं वा गतः इत्यादौ 'क्त्वा च' इति सूत्रेण, 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति सूत्रेण च विकल्पेनोपपदसमासः। समासे स्वरविशेषः। | |
| क्त्वाणमुलौ ५६ | **६३. तूष्णीमि भुवः**<br>'तूष्णीम्' इत्युपपदे भूधातोः क्त्वाणमुलौ प्रत्ययौ भवतः।<br>भूग्रहणं कृञो निवृत्त्यर्थम्।<br>तूष्णीम्भूय, तूष्णीम्भूत्वा, तूष्णीम्भावं, तूष्णीं भावं वा गतः।<br>'क्त्वा च' इति सूत्रेण, 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति सूत्रेण च विकल्पेनोपपदसमासः। समासे स्वरविशेषः। | भुवः ६४ |
| भुवः६३<br>क्त्वाणमुलौ५६ | **६४. अन्वच्यानुलोम्ये**<br>अन्वचि(अन्वच् इत्युपपदे) भुवः क्त्वा-णमुलौ प्रत्ययौ भवतः, आनुलोम्ये गम्यमाने।<br>आनुलोम्यम् = अनुकूलत्वम्।<br>अन्वग्भूय, अन्वग्भूत्वा, अन्वग्भावम्, अन्वग्भावं वा आस्ते। अग्रतः, पार्श्वतः, पृष्ठतो वा अनुकूलो भूत्वाऽऽस्ते इत्यर्थः।<br>'क्त्वा च' इति सूत्रेण, 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति सूत्रेण च विकल्पेनोपपदसमासः। समासे स्वरविशेषः। | |

| तुमर्थे ९ | ६५. शक-धृष-ज्ञा-ग्ला-घट-रभ-लभ-क्रम-सहार्हास्त्यर्थेषु तुमुन्<br>शकादिषूपपदेषु, अस्त्यर्थेषु वा उपपदेषु धातुमात्रात्तुमुन् प्रत्ययो भवति।<br>अत्रानन्तरेणास्तिशब्देनैवार्थशब्दः संबद्ध्यते, शकधृषज्ञानां, घटार्हयोश्च पृथगुपादानात्।<br>अक्रियार्थोपपदार्थो ऽयमारम्भः।<br>शक्नोति, धृष्णोति, जानाति, ग्लायति, घटते, आरभते, लभते, सहते, अर्हति वा भोक्तुम्।<br>अस्त्यर्थेषूपपदेषु - अस्ति, भवति, विद्यते वा भोक्तुम्। | तुमुन् ६६ |
|---|---|---|
| तुमुन् ६५<br>तुमर्थे ९ | ६६. पर्याप्तिवचनेष्वलमर्थेषु<br>पर्याप्तिवचनेष्वलमर्थेषूपपदेषु धातोस्तुमुन्प्रत्ययो भवति।<br>पर्याप्तिः = अन्यूनता, पूर्णता वा।<br>पर्याप्तो भोक्तुम्। अलं भोक्तुम्। प्रवीणो भोक्तुम्। पटुः भोक्तुम्। कुशलो भोक्तुम्।<br>पर्याप्तिवचनेष्विति किम्? अलं कृत्वा। प्रतिषेधवचनोऽत्र अलं शब्दः; 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति सूत्रेणात्र क्त्वा।<br>अलमर्थेष्विति किम्? पर्याप्तं भुङ्क्ते।<br>पर्याप्तमित्यस्यात्र प्रभूतं, प्रचुरं वेत्यर्थः। | |
| | ६७. कर्तरि कृत्<br>धात्वधिकारे विहिताः कृत्संज्ञकाः प्रत्ययाः कर्तरि कारके भवन्ति।<br>कृदुत्पत्तिवाक्यानामयं शेषः। तत्र येष्वर्थनिर्देशो नास्ति तत्रेदमुपतिष्ठते, अर्थाकाङ्क्षत्वात्।<br>'ण्वुल्तृचौ' - कारकः। कर्त्ता। नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः - नन्दनः। ग्राही। पचः। | कर्तरि ६८ |

| | | |
|---|---|---|
| कर्तरि ६७ | ६८. भव्य-गेय-प्रवचनीयोपस्थानीय-जन्याप्लाव्यापात्या वा<br>भव्य, गेय, प्रवचनीय, उपस्थानीय, जन्य, आप्लाव्य, आपाव्य – एते कृत्यप्रत्यान्ताः शब्दाः कर्तरि वा निपात्यन्ते। पक्षे 'तयोरेव कृत्य-क्त- खलर्थाः' (३.४.७०) इति सूत्रेण सकर्मकेभ्यः कर्मणि, अकर्मकेभ्यः भावे एते शब्दाः ज्ञेयाः। भवत्यसौ भव्यः। भावे-भव्यमनेन।<br>गायतीति गेयः साम्नामयं माणवकः।<br>कर्मणि – गेयानि सामानि अनेन माणवकेन।<br>प्रवक्तीति प्रवचनीयो गुरुः स्वाध्यायस्य; प्रवक्तेत्यर्थः।<br>कर्मणि-प्रवचनीयः स्वध्यायो गुरुणा।<br>उपतिष्ठतीति उपस्थानीयः शिष्यः गुरोः। कर्मणि – उपस्थानीयो गुरुः शिष्येण।<br>जायतेऽसौ जन्यः। भावे-जन्यमनेन। 'तकि शसि चति यति जनीनामुपसंख्यानम्' इति वार्तिकेन यत् प्रत्ययः।<br>आप्लवतेऽसौ आप्लाव्यः। भावे-आप्लाव्यमनेन।<br>आङ्पूर्वात् प्लुङ् गतौ इत्येतस्माद् 'ओरावश्यके' इति सूत्रेण ण्यत्।<br>आपतत्यसौ आपात्यः। भावे- आपात्यमनेन। | |
| कर्तरि ६७ | ६९. लः कर्मणि च भावे चाऽकर्मकेभ्यः<br>अत्र वाक्यद्वयम् – 'लः कर्मणि च' इति प्रथमं वाक्यम्। 'भावे चाकर्मकेभ्यः' इति द्वितीयं वाक्यम्। तत्र प्रथमवाक्यस्यार्थो भवति – लकाराः कर्मणि भवन्ति चकारात् कर्तरि च। इति।<br>द्वितीय वाक्यस्यार्थो भवति – अकर्मकेभ्यः लकारा भावे भवन्ति चकारात्कर्तरि च। इति।<br>कर्मणि लकारः – गम्यते ग्रामो देवदत्तेन।<br>कर्तरि लकारः – गच्छति ग्रामं देवदत्तः।<br>अकर्मकेभ्यः भावे लकारः – आस्यते देवदत्तेन।<br>अकर्मकेभ्यः कर्तरि लकारः – आस्ते देवदत्तः।<br>सकर्मकेभ्यस्तु भावे न भवन्ति लकाराः, सूत्रे 'अकर्मकेभ्यः' इत्युक्तेः। | कर्मणि च भावे चाकर्मकेभ्यः७२ |

| | | |
|---|---|---|
| कर्मणि च भावे चाकर्मकेभ्यः६९ | ७०. तयोरेव कृत्यक्तखलर्थाः<br>कृत्य, क्त, खलर्थाश्च प्रत्ययाः तयोरेव (भावकर्मणोरेव) भवन्ति।<br>*कृत्याः*<br>कर्मणि – कर्त्तव्यः कटो भवता।<br>भावे – शयितव्यं भवता।<br>*क्तः*<br>कर्मणि – कृतः कटो भवता।<br>भावे – शयितं भवता।<br>*खलर्थाः*<br>कर्मणि – ईषत्करः, सुकरः, दुष्करो वा कटो भवता।<br>भावे – ईषदाढ्यंभवं भवता। | तयोः ७२ |
| तयोः ७०<br>कर्मणि च भावे चाकर्मकेभ्यः६९ | ७१. आदिकर्मणि क्तः कर्तरि च<br>'निष्ठा' (३.२.१०२) इति सूत्रे पठितेन 'आदिकर्मणि निष्ठा वक्तव्या' इति वार्तिकेन विहितो यः क्तः स कर्तरि भवति, चकाराद् यथाप्राप्तं भावकर्मणोः।<br>'आदि कर्म' इत्यस्य व्याख्यानं 'निष्ठा' (३.२.१०२) इति सूत्रे पठिते वार्तिके कृतमस्ति। तत्रैव द्रष्टव्यम्।<br>आदिकर्मणि कर्तरि क्तः – प्रकृतः कटं देवदत्तः।<br>देवदत्तः कटनिर्माणकार्यं प्रारब्धवानित्यर्थः।<br>आदिकर्मणि कर्मणि क्तः – प्रकृतः कटो देवदत्तेन।<br>आदिकर्मणि भावे क्तः – प्रकृतं देवदत्तेन।<br>एवमेव – प्रभुक्तः देवदत्तः ओदनम्।<br>प्रभुक्तः ओदनः देवदत्तेन। प्रभुक्तं देवदत्तेन। | क्तः कर्तरि ७२ |

| | | |
|---|---|---|
| क्तःकर्तरिच ७१<br>तयोः ७०<br>कर्मणि च भावे<br>चाकर्मकेभ्यः६८ | **७२. गत्यर्थाकर्मक-श्लिष-शीङ्-स्थास-वस-जन-रुह-जीर्यतिभ्यश्च**<br>गत्यर्थेभ्यः, अकर्मकेभ्यः, श्लिषादिभ्यश्च क्तः कर्तरि भवति, चकाराद्यथाप्राप्तं भावकर्मणोरपि।<br>गत्यर्थ - गतो देवदत्तो ग्रामम्।<br>गतो ग्रामः देवदत्तेन।<br>गतं देवदत्तेन।<br>अकर्मक - ग्लानो भवान्।<br>ग्लानं भवता।<br>श्लिष् - उपश्लिष्टो गुरुं भवान्।<br>उपश्लिष्टो गुरुर्भवता।<br>उपश्लिष्टं भवता।<br>शीङ् - उपशयितो गुरुं देवदत्तः।<br>उपशयितो गुरुः देवदत्तेन।<br>उपशयितं देवदत्तेन।<br>स्था - उपस्थितो गुरुं भवान्।<br>उपस्थितो गुरुः भवता।<br>उपस्थितं भवता।<br>एवमेव - उपासितः, अनूषितः, अनुजातः, आरूढः, अनुजीर्णः इत्येतेषु कर्तरि, कर्मणि, भावे च प्रत्ययो ज्ञेयः।<br>श्लिषादयो यद्यपि अकर्मका इति अकर्मकत्वेनैव एभ्यः कर्तरि क्तप्रत्ययः सम्भवति तथापि सोपसर्गाः श्लिषादयः यदा सकर्मका भवन्ति तदा तेभ्योऽपि कर्तरि क्तप्रत्ययो भवेदित्यर्थमेषां ग्रहणम्, तेन तथैवोदाहृतम्। | |
| | **७३. दाश-गोघ्नौ संप्रदाने**<br>दाश-गोघ्नौ शब्दौ संप्रदाने कारके निपात्येते।<br>दाशन्ति अस्मै इति दाशः गुणवान् ब्राह्मणः। 'दाशृ दाने' अस्मात् पचादित्वादच्। स हि कृत्संज्ञकत्वात् कर्तरि प्राप्तः, संप्रदानेऽनेन निपात्यते।<br>आगताय तस्मै दातुं गां घ्नन्तीति गोघ्नः।<br>अर्घार्होऽतिथिरित्यर्थः। | |

| | | |
|---|---|---|
| | ७४. भीमादयोऽपादाने<br>भीमादयः शब्दा अपादाने निपात्यन्ते।<br>भीमादिगणे उणादिप्रत्ययान्ता अपि शब्दा वर्तन्ते। तत्र 'ताभ्यामन्यत्रोणादयः' (३.४.७५) इति पर्युदासे प्राप्तेऽपि निपातनाद् अपादानेऽपि उणादिप्रत्ययानां सिद्ध्यर्थमिदमारभ्यते।<br>बिभेत्यस्मादिति भीमः, भीष्मः। प्रस्कन्दत्यस्मादिति प्रस्कन्दनः।<br>प्ररक्षत्यस्मादिति प्ररक्षः।<br>मुह्यन्त्यस्मादिति मूर्खः।<br>स्खलन्ति केशा अस्मादिति खलतिः; निष्केशशिरा इत्यर्थः। | |
| | ७५. ताभ्यामन्यत्रोणदयः<br>उणादयः ताभ्याम् (सम्प्रदानापादानाभ्याम्) अन्यत्र कारके भवन्ति।<br>ततोऽसौ तन्तुः। कर्तरि तनोतेस्तुन्। वृत्तं तदिति वर्म। वृतेः कर्मणि मनिन्। | |
| | ७६. क्तोऽधिकरणे च ध्रौव्य-गति-प्रत्यवसानार्थेभ्यः<br>ध्रौव्य-गति-प्रत्यवसानार्थेभ्यो धातुभ्यः क्तोऽधिकरणेऽपि भवति चकाराद्यथाप्राप्तं च।<br>अर्थशब्दः प्रत्येकमभिसम्बध्यते।<br>ध्रौव्यार्थाः = अकर्मकाः, प्रत्यवसानार्थाः= अभ्यवहारार्था इति वैयाकरणानां निकाये प्रसिद्धिः, यथा यूप-चषालादयो याज्ञिकानामेव प्रसिद्धाः। (द्रष्टव्या अत्रत्या काशिका,पदमञ्जरी च)<br>ध्रौव्यार्थेभ्यस्तावत् - इदमेषामासितम्।<br>गत्यर्थेभ्यः - इदमेषां यातम्।<br>प्रत्यवसानार्थेभ्यः - इदमेषां भुक्तम्।<br>सर्वत्र अधिकरणे क्तः। | |
| | ७७. लस्य<br>अधिकारोऽयम्।<br>लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ् - इत्येते प्रत्ययाः लपदेन गृह्यन्ते। | लस्य ११७ |

| | | |
|---|---|---|
| लस्य ७७ | ७८. तिप्-तस्-झि-सिप्-थस्-थ-मिब्-वस्-मस्-तातांझ-थासाथांध्वमिड्वहि-महिङ्<br>लस्य स्थाने तिबादयः आदेशा भवन्ति।<br>कर्त्तरि-भवति, भवतः, भवन्ति। एधते, एधेते, एधन्ते।<br>भावे - भूयते।<br>कर्मणि - पच्यते। एवं लिडादावपि। | |
| लस्य ७७ | ७९. टित आत्मनेपदानां टेरे<br>टितो लस्यात्मनेपदानां टेः एकारादेशो भवति।<br>पचते, पचेते, पचन्ते।<br>कथं पचमानः? प्रकृतस्य तङो ग्रहणात्। | टितः ८० |
| टितः ७९<br>लस्य ७७ | ८०. थासः से<br>टितो लस्य थासः स्थाने 'से' इत्यादेशो भवति।<br>पचसे, पेचिषे, पक्तासे, पक्ष्यसे। | |
| | ८१. लिटस्तझयोरेशिरेच्<br>लिटस्तझयोरेशिरेच् च भवति।<br>पेचे, पेचाते, पेचिरे। लेभे, लेभाते, लेभिरे। | लिटः ८२ |
| लिटः ८१ | ८२. परस्मैपदानां णलतुसुस्थलथुसणल्वमाः<br>लिटः परस्मैपदानाम्= तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस्, मस् - इत्येतेषां यथासंख्यं णल्, अतुस्, उस्,थल्, अथुस्, अ, णल्, व, म - इत्येते आदेशा भवन्ति।<br>पपाच, पेचतुः, पेचुः।<br>पेचिथ, पपक्थ, पेचथुः, पेच।<br>पपाच, पपच, पेचिव, पेचिम। | सम्पूर्णसूत्रम् ८४ |
| परस्मैपदानाम् ८२<br>णलतु-णल्वमाः ८२ | ८३. विदो लटो वा<br>विदो लटः परस्मैपदानां णलादयो वा भवन्ति।<br>वेद, विदतुः, विदुः।<br>वेत्थ, विदथुः, विद।<br>वेद, विद्व, विद्म।<br>पक्षे - वेत्ति, वित्तः, विदन्ति।<br>वेत्सि, वित्थः, वित्थ।<br>वेद्मि, विद्व, विद्वः। | लटः ८४वा८४ |

| | | |
|---|---|---|
| परस्मैपदानाम् ८२<br>णलतु-णल्वमाः ८२<br>वा८३ | ८४. ब्रुवः पञ्चानामादित आहो ब्रुवः<br>ब्रुवः परस्य लटः परस्मैपदानां णलादयः पञ्चानामादिभूतानां पञ्च आदेशा वा भवन्ति, तत्संन्नियोगेन च ब्रुवः 'आह' इत्यादेशो भवति।<br>'आह' इत्यत्राकार उच्चारणार्थः।<br>आह, आहतुः, आहुः। आत्थ, आहथुः।<br>पक्षे - ब्रवीति, ब्रूतः, ब्रुवन्ति। ब्रवीषि, ब्रूथः। | |
| | ८५. लोटो लङ्वत्<br>लोटो लङ्वत्कार्यं भवति।<br>अनेनातिदेशेन 'तस्थस्थमिपां तांतंतामः' इति सूत्रेण तसादीनां तामादयः, 'नित्यं ङितः' इति सूत्रेण ङिदुत्तमस्य सस्य लोपश्च भवति।<br>पचताम्, पचतम्, पचाव, पचाम। | लोटः ९३ |
| लोटः ८५ | ८६. एरुः<br>लोटः इकारस्य स्थाने उकारादेशः भवति।<br>पचतु। पचन्तु।<br>हिन्योरुत्वं न, इकारोच्चारणसामर्थ्यात्। | |
| लोटः ८५ | ८७. सेर्ह्यपिच्च<br>लोटः सेः 'हि' इत्यादेशो भवति सोऽपिच्च।<br>लुनीहि। पुनीहि। राध्नुहि।<br>अपिद्भावेन 'सार्वधातुकमपित्' इति सूत्रेण 'हि' इत्यस्य ङित्वमिति तस्मिन् परे 'श्नाभ्यस्तयोरातः' इत्यनेन ईत्वम्, 'क्ङिति च' इत्यनेन गुणनिषेधश्च। | सेर्ह्यपिच्च ८८ |
| लोटः ८५ | ८८. वा छन्दसि<br>छन्दसि ह्यपिद् वा भवति।<br>अपित्त्वं विकल्प्यते, अनन्तरत्वात्।<br>युयोध्यस्मज्जुहुराणमेनः प्रीणाहि, प्रीणीहि। | |
| लोटः ८५ | ८९. मेर्निः<br>लोटो मेर्निर्भवति।<br>पचानि। पठानि। | |
| लोटः ८५ | ९०. आमेतः<br>लोट एतः आम् भवति।<br>पचताम्, पचेताम्, पचन्ताम्। | एतः ९१ |
| लोटः ८५ एतः ९० | ९१. सवाभ्यां वामौ<br>लोटः सवाभ्यामेतः यथासंख्यं व, अम् - इत्येतावादेशौ भवतः।<br>पचस्व। पचध्वम्। | |

| | | |
|---|---|---|
| लोटः ८५ | ९२. आडुत्तमस्य पिच्च<br>लोटः उत्तमस्य आड् भवति, स पिच्च।<br>करवाणि, करवाव, करवाम।<br>करवै, करवावहै, करवामहै। | उत्तमस्य ९३ |
| लोटः ८५<br>उत्तमस्य९२ | ९३. एत ऐ<br>लोटः उत्तमस्य एत ऐ इत्यादेशो भवति।<br>करवै, करवावहै, करवामहै। | |
| | ९४. लेटोऽडाटौ<br>लेटोऽडाटौ भवतः पर्यायेण।<br>अट् -जोषिषत्। तारिषत्। मन्दिषत्।<br>आट्- पताति दिद्युत्। उदधिं च्यावयति।<br>जोषिषत् इत्यत्र 'सिब्बहुलं लेटि' इति विकरणः सिपूप्रत्ययः। 'तारिषत्' इत्यत्र छान्दसत्वात् धात्वकारस्य दीर्घत्वम्।<br>च्यावयति इति 'च्युङ् गतौ' इत्यस्य हेतुमण्णिचि रूपम्। | लेटः ९८ |
| लेटः ९४ | ९५. आत ऐ<br>लेट आत ऐ इत्यादेशो भवति।<br>प्रथममध्यमपुरुषयोराकारस्य ऐत्वं भवत्यनेन न तु 'लेटोऽडाटौ' इति सूत्रेण विहितस्य आटः आकारस्य विधानसामर्थ्यात्।<br>मन्त्रयैते, मन्त्रयैथे। | ऐ ९६ |
| लेटः ९४ ऐ ९५ | ९६. वैतोऽन्यत्र<br>'आत ऐ' इत्यनेन यस्मिन् प्रयोगे आकारस्य ऐकारोदेशो न भवति तत्र लोटः एकारस्य ऐकारादेशो वा भवति।<br>अहमेव पशूनामीशै।<br>वा ग्रहणाद् नापि भवति - यत्र क्व च ते मनो दक्षं दधस उत्तरम्।<br>अन्यत्रेति किम्? मन्त्रयैते, मन्त्रयैथे। | वा ९८ |
| लेटः ९४ वा ९६ | ९७. इतश्च लोपः परस्मैपदेषु<br>लेटः परस्मैपदेषु य इत् (इकारः) तस्य लोपो वा भवति।<br>जोषिषत्। तारिषत्। मन्दिषत्।<br>वानुवृत्तेः नापि भवति - पताति दिद्युत्। | लोपः १००<br>परस्मैपदेषु१०० |
| लेटः ९४ वा ९६<br>लोपः ९७ | ९८. स उत्तमस्य<br>लेट उत्तमस्य सस्य लोपो वा भवति।<br>करवाव। करवाम।<br>वानुवृत्तेः क्वचिन्नापि भवति- करवावः। करवामः। | उत्तमस्य सः ९९ |

| | | |
|---|---|---|
| उत्तमस्य९८ सः ९८<br>लोपः ९७ | ९९. नित्यं ङितः<br>ङितो लस्य यः उत्तमस्तस्य सस्य नित्यं लोपो भवति।<br>अपचाव। अपचाम।<br>नित्यग्रहणं विकल्पनिवृत्त्यर्थम्। | ङितः ११२<br>नित्यम् १०० |
| ङितः<br>९९नित्यम्९९<br>लोपः ९७<br>परस्मैपदेषु१०० | १००. इतश्च<br>ङितो लस्य इतश्च(इकारस्य) नित्यं लोपो भवति।<br>अपचत्। अपाक्षीत्।<br>परस्मैपदेष्वित्येव - अपचावहि, अपचामहि। | |
| ङितः ९९ | १०१. तस्-थस्-थ-मिपां तान्तन्तामः<br>ङितो लस्य तस्-थस्-थ-मिपां यथासंख्यं ताम्, तम्, त, अम् - इत्येते आदेशा भवन्ति।<br>अपचताम्। अपचतम्। अपचाव। अपचाम। | |
| | १०२. लिङः सीयुट्<br>लिङः सीयुडागमो भवति।<br>विधिलिङि - पचेत, पचेयाताम्, पचेरन्।<br>आशीर्लिङि पक्षीष्ट, पक्षीयास्ताम्, पक्षीरन्। | लिङः १०८ |
| लिङः १०२ | १०३. यासुट् परस्मैपदेषूदात्तो ङिच्च<br>परस्मैपदेषु लिङः यासुड् भवति, स चोदात्तः, ङिच्च।<br>कुर्यात्, कुर्याताम्, कुर्युः।<br>विकरणनिमित्तो धातोर्गुणः, 'अत उत्सार्वधातुके इत्युत्वम्, 'ये च' इत्युकारलोपः। | यासुट् परस्मैपदेषु<br>उदात्तः १०४ |
| लिङः १०२<br>यासुट्<br>परस्मैपदेषु<br>उदात्तः १०३ | १०४. किदाशिषि<br>आशिषि परस्मैपदेषु लिङः यासुड् भवति, स चोदात्तः, किच्च।<br>कित्त्वस्य फलं 'वचिस्वपि' इति सूत्रेण सम्प्रसारणं, 'जाग्रोऽविचिण्णल्ङित्सु' इति सूत्रेण जागतेर्गुणश्च।<br>उच्यात्, उच्यास्ताम्, उच्यासुः। जागर्यात्। | |
| लिङः १०२ | १०५. झस्य रन्<br>लिङो झस्य रन् भवति।<br>पचेरन्। यजेरन्। कृषीरन्। | |
| लिङः १०२ | १०६. इटोऽत्<br>लिङ इटोऽत् भवति।<br>पचेय। यजेय। कृषीय। हृषीय। | |
| लिङः १०२ | १०७. सुट् तिथोः<br>लिङस्तकारथकारयोः सुडागमो भवति।<br>कृषीष्ट, कृषीयास्ताम्।<br>कृषीष्ठाः, कृषीयास्थाम्। | |

| | | |
|---|---|---|
| लिङः १०२ | १०८. झेर्जुस्<br>लिङो झेर्जुस् भवति।<br>पचेयुः। यजेयुः। | झेर्जुस् ११२ |
| ङित ९९<br>झे १०८<br>जुस् १०८ | १०९. सिजभ्यस्त-विदिभ्यश्च<br>सिजभ्यस्तविदिभ्यश्च ङितो लस्य झेर्जुस्भवति।<br>अलिङर्थ आरम्भः।<br>सिचस्तावत् - अकार्षुः। अहार्षुः।<br>अभ्यस्तात् - अबिभयुः, अजागरुः।<br>'जुसि च' इति सूत्रेण गुणः।<br>विदः - अविदुः। | सिचः ११० |
| ङितः ९९<br>झेः१०८<br>जुस् १०८<br>सिचः१०९ | ११०. आतः<br>आकारात्परो यः सिच् ततः परस्य झेर्जुस् भवति।<br>अदुः। अधुः।<br>'गातिस्था' इति सूत्रेण सिज्लोपः, 'उस्यपदान्तात्' इति सूत्रेण च पररूपम्।<br>पूर्वेणैव सिद्धे नियमार्थं वचनम् - सिज्लुकि सति आदन्तादेव परस्य झेर्जुस्भवतीति। तेन 'अभूवन्' इत्यत्र जुसादेशो न भवति। | आतः १११ |
| ङितः ९९<br>झेः १०८<br>जुस् १०८ | १११. लङः शाकटायनस्यैव<br>आदन्तात्परस्य लङो झेर्जुस् भवति शाकटायनाचार्यस्य मतेन।<br>अयुः।<br>उस्यपदान्तात्' इति सूत्रेण पररूपम्। अन्येषां मते-अयान्। | सम्पूर्णसूत्रम्११२<br>एव११६ |
| ङित ९९<br>लङः १११<br>झेः १०८<br>जुस्१०८<br>शाकटायनस्यैव १११ | ११२. द्विषश्च<br>द्विषश्च लङो झेर्जुस् भवति शाकटायनाचार्यस्य मतेन।<br>अद्विषुः। अन्येषां मते-अद्विषन्। | |
| | ११३. तिङ्शित्सार्वधातुकम्<br>तिङः, शितश्च प्रत्ययाः सार्वधातुकसंज्ञा भवन्ति।<br>भवति। नयति। स्वपिति। रोदिति। पवमानः। यजमानः। | तिङ्११७ |

| | | |
|---|---|---|
| | **११४. आर्धधातुकं शेषः**<br>'धातोः' इति शब्दमुच्चार्य विहितो यः तिङ्शिद्भ्योऽन्यः प्रत्ययः स आर्धधातुकसंज्ञो भवति।<br>लविता। लवितुम्। लवितव्यम्।<br>'धातोः' इति शब्दमुच्चार्य विहितत्वाभावेन 'जुगुप्सते' इत्यादौ 'गुप्तिज्किद्भ्यः सन्'(३.१.५) इति सूत्रेण विहितस्य सन आर्धधातुकसंज्ञा न भवतीति इडागमो न भवति। | आर्धधातुकम् ११७ |
| आर्धधातुकम् ११४<br>तिङ् ११३एव१११ | **११५. लिट् च**<br>लिटस्तिङ् आर्धधातुकसंज्ञो भवतीति।<br>लिडिति लुप्तस्थानषष्ठ्यन्तम्।<br>पेचिथ। शेकिथ।<br>आर्धधातुकत्वादिडागमः।<br>जग्ले। मम्ले।<br>आर्धधातुकत्वात् "आतो लोप इटि च" इति सूत्रेण आकारस्य लोपः।<br>एकसंज्ञाधिकारबहिर्भूतत्वेऽपि सूत्रे एवग्रहणानुवृत्तेः अनेन सूत्रेण एकैव संज्ञा भवति, न तु सार्वधातुकसंज्ञापि। | |
| आर्धधातुकम्<br>११४<br>एव१११<br>सार्वधातुकम् ११३ | **११६. लिङाशिषि**<br>आशिषि यो लिङ् स आर्धधातुकसंज्ञो भवति।<br>सार्वधातुकसंज्ञाया अपवादः।<br>समावेशश्चैवकारानुवृत्तेर्न भवति।<br>लविषीष्ट। पविषीष्ट। | |
| आर्धधातुकम् ११<br>? | **११७. छन्दस्युभयथा**<br>छन्दसि उभयथा भवति - सार्वधातुकमार्धधातुकं च।<br>वर्धन्तु त्वा सुष्टुतयः। आर्धधातुकत्वाण्णिलोपः।<br>वर्धयन्त्विति प्राप्ते।<br>स्वस्तये नावमिवारुहेम। क्तिनः सार्वधातुकत्वादस्तेर्भूभावो न भवति। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां तृतीयाध्यायस्य चतुर्थः पादः ।।

।। समाप्तश्चायं तृतीयाध्यायः।।

।। श्रीः ।।

## ।। अथ चतुर्थाध्यायस्य प्रथमपादः ।।

| | | |
|---|---|---|
| | १. ङ्याप्प्रातिपदिकात्<br>अधिकारोऽयम्, आपञ्चमाध्यायपरिसमाप्तेः।<br>ङी' इति- ङीब्ङीष्ङीनां सामान्येन ग्रहणम्, आबिति - टाब्डाप्चापाम्।<br>प्रातिपदिकमुक्तम् 'अर्थवदधातु०' इति सूत्रेण, 'कृत्तद्धितसमासाश्च' इति सूत्रेण च। | सम्पूर्णसूत्रम्<br>५.४.१६० |
| ङ्याप्प्रातिपदिकात् १ | २. स्वौजसमौट्छष्टाभ्यांभिस्-ङेभ्यांभ्यस्- ङसिभ्यांभ्यस्-ङसोसांङ्योस्सुप्<br>ङ्याप्प्रातिपदिकात् सु, औ, जस्; अम्, औट्, शस्; टा, भ्याम्, भिस्; ङे, भ्याम्, भ्यस्; ङसि, भ्याम्, भ्यस्; ङस्, ओस्, आम्; ङि, ओस्, सुप् - इत्येते प्रत्ययाः भवन्ति।<br>ङ्यन्तात् - कुमारी। गौरी। शार्ङ्गरवी। ङीब्ङीष्ङीनां क्रमेणोदाहरणम्।<br>आबन्तात् - खट्वा। बहुराजा। कारीषगन्ध्या। टाब्डाप्चापां क्रमेणोदाहरणम्।<br>प्रातिपदिकात् - दृषद्, दृषदौ, दृषदः।<br>अमादिषु कुमारीम्, खट्वाम्, दृषदम् इत्यादीनि रूपाण्युदाहार्याणि। | |
| | ३. स्त्रियाम्<br>अधिकारोऽयम् 'समर्थानां प्रथमाद् वा' (४.१.८२) इति सूत्रं यावत्। | स्त्रियाम्४.१.८१ |
| स्त्रियाम् ३<br>प्रातिपदिकात् १ | ४. अजाद्यतष्टाप्<br>अजीदिगणपठितेभ्यः, अदन्तेभ्यश्च प्रातिपदिकेभ्यश्च स्त्रियां टाप् प्रत्ययो भवति।<br>अजादिभ्यः - अजा। एडका। कोकिला। चटका। अश्वा।<br>अदन्तेभ्यः - खट्वा। देवदत्ता। | अतः ४.१.८१ |

| | | |
|---|---|---|
| स्त्रियाम् ३<br>प्रातिपदिकात् १ | ५. ऋन्नेभ्यो ङीप्<br>ऋकारान्तेभ्यो, नकारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीप्प्रत्ययो भवति।<br>ऋकारान्तेभ्यः - कर्त्री। हर्त्री।<br>नकारान्तेभ्यः - दण्डिनी। छत्त्रिणी। | ङीप् २४ |
| प्रातिपदिकात् १<br>ङीप् ५ स्त्रियाम् ३ | ६. उगितश्च<br>उगिदन्तात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति।<br>भवतु - भवती, अतिभवती।<br>शतृप्रत्ययान्तः - पचन्ती। यजन्ती।<br>'शप्श्यनोर्नित्यम्' इत्यनेन नुम्।<br>(वा०) धातोरुगितः प्रतिषेधो वक्तव्यः।<br>उखास्रत्। पर्णध्वत्। 'स्रंसु, ध्वंसु अधःपतने'। ततः क्विप्।<br>(वा०) अञ्चतेश्चोपसंख्यानम्।<br>प्राची। प्रतीची। उदीची। | |
| प्राति० १ ङीप् ५<br>स्त्रियाम् ३ | ७. वनो र च<br>वन्नन्तान्तं यत्प्रातिपदिकं ततः स्त्रियां ङीप् प्रत्ययो भवति,तत्संन्नियोगशिष्टः रश्चान्तादेशः।<br>वन्निति ङ्वनिप्,क्वनिप्, वनिप्-इत्येतेषां सामान्येन ग्रहणम्।<br>ङ्वनिप् - अतिसुत्वरी। सुत्वानमतिक्रान्तेति विग्रहः।<br>सुत्वन्शब्दे 'षुञ् अभिषवे' इत्येतस्माद् धातोः 'सुयजोर्ङ्वनिप्' इति सूत्रेण ङ्वनिप्रत्ययः।<br>क्वनिप् - अतिधीवरी। धीवानमतिक्रान्तेति विग्रहः।<br>'डुधाञ् धारणपोषणयोः' इत्येतस्माद् धातोः 'आतो मनिन्क्वनिब्वनिपश्च' 'अन्येभ्योऽपि दृश्यते' इति भाषायामपि क्वनिप्।<br>वनिप् - शर्वरी।<br>'शॄ हिंसायाम्' इत्येतस्माद् धातोः 'आतो मनिन्क्वनिब्वनिपश्च' 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप्। | |

| | | |
|---|---|---|
| प्राति० १ ङीप् ५ स्त्रियाम् ३ | ८. पादोऽन्यतरस्याम्<br>कृतसमासान्तो यः पाच्छब्दस्तदन्तात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति।<br>'पादः' इति कृतसमासान्तः पादशब्दो निर्दिश्यते।<br>द्विपदी। द्विपाद्।<br>द्वौ पादावस्येति विग्रहे बहुव्रीहिसमासे कृते 'संख्यासुपूर्वस्य' इत्यकारलोपः, ङीपि कृते 'पादः पत्' इति सूत्रेण पद्भावः। | पादः ९ |
| पादः ८ स्त्रियाम् ३ | ९. टाबृचि<br>ऋचि वाच्यायां पादन्तात्प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति।<br>ङीपोऽपवादः।<br>द्विपदा ऋक्। त्रिपदा ऋक्। | |
| ङीप् ५ टाप् ४ | १०. न षट्स्वस्रादिभ्यः<br>षट्संज्ञकेभ्यः, स्वस्रादिभ्यश्च प्रातिपदिकेभ्यः स्त्रीप्रत्ययो न भवति।<br>यो यतः प्राप्नोति स सर्वः प्रतिषिध्यते इत्याशयः।<br>षट् - पञ्च ब्राह्मण्यः। सप्त, नव, दश।<br>स्वस्रादि - स्वसा। दुहिता। ननान्दा। याता। माता। तिस्रः। चतस्रः। | न १२ |
| ङीप् ५ न १० | ११. मनः<br>मन्नन्तात्प्रातिपदिकान्ङीप् प्रत्ययो न भवति स्त्रियाम्।<br>दामन् - दामा। पामन् - पामा।<br>ददातेः, पिबतेश्च 'आतो मनिन्- क्वनिब्वनिपश्च' इति सूत्रेण मनिन् प्रत्ययः। | मनः १३ |
| ङीप् ५ न १० | १२. अनो बहुव्रीहेः<br>अन्नन्ताद् बहुव्रीहेः स्त्रियां ङीप् प्रत्ययो न भवति।<br>अनुपधालोपी बहुव्रीहिरिहोदाहरणम्। उपधालोपिनां तु 'अनउपधालोपिनोऽन्यतरस्याम्' इति सूत्रेण विकल्पेन ङीब्भवत्येव।<br>सुपर्वा, सुपर्वाणौ, सुपर्वाणः। सुधर्मा, सुधर्माणौ, सुधर्माणः। | अनः बहुव्रीहेः१३ |

| | | |
|---|---|---|
| अनः १२ मनः ११ | १३. डाबुभाभ्यामन्यतरस्याम्<br>उभाभ्याम् = मन्नन्ताद्, अन्नन्ताद् बहुव्रीहेश्च डाप् प्रत्ययोऽन्यतरस्यां भवति।<br>मन्नन्ताड्डाप् - दामानौ, दामानः।<br>अन्नन्ताद् ब्रहुव्रीहेर्डाप् - बहुयज्वा, बहुयज्वे बहुयज्वाः।<br>पक्षे - बहुयज्वा, बहुयज्वानौ, बहुयज्वानः। | |
| | १४. अनुपसर्जनात्<br>अधिकारोऽयम्।<br>अनुपसर्जनम्=प्रधानम्।<br>अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति।<br>तेन 'कुरुचरी' इत्यत्र 'टिड्ढाणञ्०, इति सूत्रेण ङीप् भवति, बहुकुरुचरा नगरी इत्यत्र अन्यपदार्थं प्रति कुरुचर इत्यस्य अप्रधानत्वेन तदन्ताद् ङीब्न भवति। | अनुपसर्जनात्८१ |

| | | |
|---|---|---|
| अनुपसर्जनात् १४<br>ङीप् ५ | १५. टिड्ढाणञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः<br>अनुपसर्जनं यट्टिदादि तदन्तेभ्योऽदन्तेभ्यः प्रातिपदिकेभ्यो ङीप्प्रत्ययो भवति।<br>टित् - कुरुचरी। गायनी। सायन्तनी। टित्त्वसामर्थ्यात् - नदट् - नदी। धेट् - स्तनन्धयी।<br>ढः - वैनतेयी। 'स्त्रीभ्यो ढक्'।<br>अण् - कुम्भकारी। औपगवी।<br>अञ् - औत्सी।<br>द्वयसच् - ऊरुद्वयसी।<br>दघ्नच् - ऊरुदघ्नी।<br>मात्रच् - ऊरुमात्री।<br>तयप् - पञ्चतयी।<br>ठक् - आक्षिकी।<br>ठञ् - लावणिकी।<br>कञ् - यादृशी। तादृशी।<br>क्वरप् - नश्वरी। जित्वरी।<br>'इण्नश्जिसर्त्तिभ्यः क्वरप्' इति क्वरप्प्रत्ययः।<br>(वा०)नञ्स्नञीकक्ख्युंस्तरुणतलुनामुपसंख्यानम्।<br>नञ् - स्त्रैणी।<br>स्नञ् - पौंस्नी।<br>ईकक् - शाक्तीकी।<br>शक्तिः प्रहणमस्या इत्यर्थे 'शक्तियष्ट्योरीकक्' इति सूत्रेण ईकक्प्रत्ययः।<br>ख्युन् - आढ्यङ्करणी। 'आढ्य-सुभग०' इत्यादिना ख्युन्।<br>तरुण - तरुणी।<br>तलुन - तलुनी।<br>तरुण-तलुनशब्दौ युववाचकौ। | |
| अनुपसर्जनात् १४<br>ङीप् ५ | १६. यञश्च<br>यञन्तात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति।<br>गार्गी। वात्सी।<br>'गर्गादिभ्यो यञ्' इति यञ्, ङीपि कृते भत्वाद् 'यस्येति च' इति सूत्रेण अकारलोपः, 'हलस्तद्धितस्य' इति सूत्रेण यकारस्य लोपः।<br>(वा०) अपत्यग्रहणं कर्त्तव्यम्।<br>इह मा भूत् - द्वीपे भवा द्वैप्या। | यञः १८ |

| | | |
|---|---|---|
| यञः१६ सर्वत्र१८ | १७. प्राचां ष्फस्तद्धितः<br>प्राचामाचार्याणां मतेन यञन्तात् प्रातिपदिकात् स्त्रियां ष्फः प्रत्ययो भवति, स च तद्धितसंज्ञः।<br>षकारो ङीषर्थः। प्रत्ययद्वयेनेह स्त्रीत्वं व्यज्यते।<br>तद्धितग्रहणं प्रातिपदिकसंज्ञार्थम्।<br>प्राचां मते – गार्ग्यायणी। वात्स्यायनी।<br>अन्येषां मते – गार्गी। वात्सी।<br>'सर्वत्र' ग्रहणमुत्तरसूत्रादिहापकृष्यते, बाधक बाधनार्थम्।<br>तेन प्राचां मते 'आवट्याच्च' (४.१.७५) इति सूत्रेण प्राप्तमपि चापं बाधित्वा ष्फ एव भवतीति प्राचां मते – आवट्यायनी इति भवति, अन्येषां मते – आवट्या इति। | ष्फः १६ |
| यञः १६ ष्फः १७ | १८. सर्वत्र लोहितादि-कतन्तेभ्यः<br>सर्वत्र = सर्वेषामाचार्याणां मते लोहितादिभ्यः कतपर्यन्तेभ्यो यञन्तेभ्यः स्त्रियां ष्फप्रत्ययो भवति।<br>लौहित्यायनी। शांसित्यायनी। बाभ्रव्यायणी। | सर्वत्र१७ |
| यञः १६ ष्फः १७ | १९. कौरव्य-माण्डूकाभ्यां च<br>कौरव्य-माण्डूकाभ्यां च स्त्रियां ष्फप्रत्ययो भवति।<br>कुरोरपत्यं स्त्री कौरव्यायणी।<br>कौरव्यशब्दे कुरुशब्दात् 'कुर्वादिभ्यो ण्यः' इति सूत्रेण ण्यप्रत्ययः ।<br>माण्डूकायनी।<br>मण्डूको नाम ऋषिस्तस्यापत्यं स्त्री इत्यर्थे 'ढक् च मण्डूकात्' इति सूत्रेण अण् प्रत्ययः।<br>(वा०) आसुरेरुपसंख्यानम्।<br>आसुरायणी।<br>असुरस्यापत्यं स्त्री इत्यर्थे 'अत इञ्' इति सूत्रेण इञ्प्रत्ययः। | |
| ङीप् ५ अतः ४ | २०. वयसि प्रथमे<br>प्रथमवयोवाचिनोऽदन्तात् प्रातिपदिकात् स्त्रियां ङीप्प्रत्ययो भवति।<br>प्राणिनां कालकृता शरीरावस्था यौवनादिः वयः।<br>कुमारी। किशोरी।<br>(वा०) वयस्यचरम इति वक्तव्यम्।<br>वधूटी। चिरण्टी।<br>द्वितीयवयोवचनावेतौ। प्राप्तयौवना स्त्र्यभिधीयते।<br>अत इति किम् ? शिशुः। | |

| | | |
|---|---|---|
| अतः ४ | २१. द्विगोः<br>अदन्ताद् द्विगोर्ङीप् प्रत्ययो भवति।<br>त्रिलोकी। पञ्चपूली।<br>कथं त्रिफला, त्र्यनीका सेना इति ? अजादिषु दृश्यते। | द्विगोः २४ |
| अतः ४ द्विगोः २१ | २२. अपरिमाण-विस्ताचित-<br>कम्बल्येभ्यो न तद्धितलुकि<br>अपरिमाणान्ताद्, विस्तान्ताद्, आचितान्तात्, कम्बल्यान्ताच्च द्विगोर्ङीब्न भवति, तद्धितलुकि सति।<br>अपरिमाणान्तात् - पञ्चाश्वा।<br>पञ्चभिरश्वैः क्रीतेत्यर्थे तद्धितार्थे द्विगुः, 'तेन क्रीतम्' इत्यार्हीयष्ठक्, 'अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्' इति सूत्रेण ठको लुक्।<br>विस्तान्तात् - द्विविस्ता। द्वौ विस्तौ (परिमाण विशेषेण परिच्छिन्नौ) पचतीत्यर्थे तद्धितार्थे द्विगुः, 'सम्भवत्यवहरति पचति' इति सूत्रेण ठक्, तस्य -अध्यर्धपूर्व०' इत्यादिना लुक्।<br>आचितान्तात् - द्व्याचिता। द्वौ आचितौ (परिमाणविशेषेण परिच्छिन्नौ) वहति या शकटीत्यर्थे 'आढकाचितपात्रात् खोऽन्यतरस्याम्' इति सूत्रेण खठनोरभावे प्राग्वतीयः ठञ्, तस्य -अध्यर्धपूर्व०' इत्यादिना लुक्।<br>कम्बल्यान्तात्-द्विकम्बल्या। द्वाभ्यां कम्बल्याभ्यां क्रीतेत्यर्थे 'तेन क्रीतम्' इति सूत्रेण ठञ्, तस्य अध्यर्धपूर्व०' इत्यादिना लुक्। कम्बलस्य प्रकृतिभूतं द्रव्यं कम्बल्यम्, ऊर्णापलशतम्। 'तदर्थं विकृतेः प्रकृतौ' इत्यर्थे 'कम्बलाच्च संज्ञायाम्' इति सूत्रेण यत्प्रत्ययः।<br>अपरिमाणे इति किम्? द्वौ आढकौ पचतीति द्व्याढकी।<br>तद्धितलुकीति किम्? पञ्चानामश्वानां समाहार इति पञ्चाश्वी। | न २४<br>तद्धितलुकि २४ |

| | | |
|---|---|---|
| द्विगोः २१<br>तद्धितलुकि२२<br>न २२ ङीप् ५ | २३. काण्डान्तात् क्षेत्रे<br>क्षेत्रे इति काण्डान्तात् इत्यस्य विशेषणम्, 'काण्डान्तात्' इति च द्विगोः। अतः सूत्रस्यार्थो भवति – तद्धितलुकि सति क्षेत्रेऽर्थे यः काण्डान्तो द्विगुस्ततः स्त्रियां ङीब्न भवतीति।<br>द्वे काण्डमस्या इति द्विकाण्डा क्षेत्रभक्तिः।<br>'प्रमाणे द्वयसच्०' इत्यादिना विहितस्य मात्रचः 'प्रमाणे लो. द्विगोर्नित्यम्' इति लुक्।<br>क्षेत्रे इति किम्? द्विकाण्डी रज्जुः। | |
| द्विगोः २१<br>तद्धितलुकि २२<br>न २२ ङीप् ५ | २४. पुरुषात्प्रमाणेऽन्यतरस्याम्<br>तद्धितलुकि सति प्रमाणेऽर्थे यः पुरुषशब्दस्तदन्ताद् द्विगोर्ङीब्न भवति अन्यतरस्याम्।<br>द्विपुरुषा, द्विपुरुषी व परिखा।<br>'प्रमाणे द्वयसज्०' इत्यादिसूत्रेण द्वयसच्, तस्य 'प्रमाणे लो द्विगोर्नित्यम्' इति सूत्रेण लुक्।<br>प्रमाण इति किम्? द्वाभ्यां पुरुषाभ्यां क्रीता इति द्विपुरुषा।<br>तद्धितलुकीत्येव – समाहारे द्विपुरुषी। | |
| | २५. बहुव्रीहेरूधसो ङीष्<br>'ऊधस्' इतिशब्दान्ताद् बहुव्रीहेर्ङीष् प्रत्ययो भवति स्त्रियाम्।<br>कुण्डमिवोधः=स्तनः यस्या इति कुण्डोध्नी। घटोध्नी।<br>'ऊधसोऽनङ्' इति अनङादेशः। | बहुव्रीहे २६<br>ऊधसः २६ |
| बहुव्रीहेः २५<br>ऊधसः २५ | २६. संख्याव्ययादेर्ङीप्<br>संख्याव्ययादेः ऊधस् इतिशब्दान्ताद् बहुव्रीहेर्ङीप् प्रत्ययो भवति।<br>ङीषोऽपवादोऽयम्, ङीपि स्वरे विशेषः।<br>द्वे ऊधसी यस्या सा द्व्यूध्नी।<br>अतिशयितमूधो यस्याः सा अत्यूध्नी।<br>बहुव्रीहेरित्यनुवृत्त्या ऊधोऽतिक्रान्ता इति अत्यूधाः इत्यत्र ङीब् न भवति। | ङीप् ३६<br>संख्यादेः २७ |

| | | |
|---|---|---|
| बहुव्रीहेः २५<br>ऊधसः २५<br>संख्यादेः २६<br>ङीप् २६ | २७. दामहायनान्ताच्च<br>संख्यादेः 'दामन्' इति शब्दान्तात्, हायनशब्दान्ताच्च बहुव्रीहेर्ङीप् प्रत्ययो भवति।<br>द्वे दामनी अस्या इति द्विदाम्नी। त्रिदाम्नी।<br>द्वौ हायनावस्या इति द्विहायनी बाला। त्रिहायणी, चतुर्हायणी वा बाला।<br>'त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्' इति वार्तिकेन णत्वम्।<br>(वा०) वयोवाचकस्यैव हायनस्य ङीब्णत्वं चेष्यते।<br>तेनेह न भवति - द्विहायना, त्रिहायना, चतुर्हायना वा शाला। न च शालाया वयः सम्भवति, तस्य प्राणिधर्मत्वात्। | |
| बहुव्रीहेः२५ ङीप्२६ | २८. अन उपधालोपिनोऽन्यतरस्याम्<br>अन्नन्ताद् बहुव्रीहेरुपधालोपिनोऽन्यतरस्यां ङीप् प्रत्ययो भवति स्त्रियां विषये।<br>ङीपा मुक्ते 'डाबुभाभ्यामन्यतरस्याम्' इति सूत्रेण डाप्। डापोऽपि विकल्पे 'ऋन्नेभ्यो ङीप्' इति सूत्रेण प्राप्तस्य ङीपः 'अनो बहुव्रीहेः' इति प्रतिषेधः।<br>बहवो राजानो यस्यां नगर्यां सा बहुराज्ञी, बहुराजा वा नगरी। प्रथमाया द्विवचने बहुराज्ञ्यौ, बहुराजे, बहुराजानौ नगर्यौ इति रूपत्रयम्। | अनः<br>उपधालोपिनः२८ |
| अनः २८<br>उपधालोपिनः २८<br>बहुव्रीहेः२५ | २९. नित्यं संज्ञाछन्दसोः<br>संज्ञायां, छन्दसि च विषये अन्नन्ताद् बहुव्रीहेरुपधालोपिनो नित्यं ङीप् प्रत्ययो भवति स्त्रियाम्। ।<br>संज्ञायाम् - सुराज्ञी, अतिराज्ञी नाम ग्रामः।<br>छन्दसि - गौः पञ्चदाम्नी। एकदाम्नी। द्विदाम्नी। एकमूर्ध्नी। समानमूर्ध्नी। | संज्ञाछन्दसोः ३१ |
| ङीप्२६<br>संज्ञाछन्दसोः २९ | ३०.केवल-मामक-भागधेय-पापापर-समानार्यकृत-सुमङ्गल-भेषजाच्च<br>केवलादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप्प्रत्ययो भवति संज्ञाछन्दसोः।<br>केवली। मामकी। मित्रावरुणयोर्भागधेयीः। सा पापी। उताऽपरीभ्यो मघवा विजिग्ये। समानी प्रवाणी। आर्यकृती। सुमङ्गली। भेषजी।<br>भाषायामसंज्ञायां च - केवला। मामिका। भागधेया। पापा। अपरा। समाना। आर्यकृता। सुमङ्गला। भेषजा। | |

| | | |
|---|---|---|
| संज्ञाछन्दसोः २६<br>ङीप् २६ | ३१. रात्रेश्चाजसौ<br>जस्विषयादन्यत्र रात्रेर्ङीप्रत्ययो भवति संज्ञाछन्दसोः।<br>या च रात्री सृष्टा। रात्रीभिः।<br>अजसाविति किम्? यास्ता रात्रयः। | |
| | ३२. अन्तर्वत्पतिवतोर्नुक्<br>अनेन सूत्रेण गर्भिण्यां, जीवद्भर्तृकायां (सधवायाम्) च क्रमेण अन्तर्वत्, पतिवत् इत्येतौ प्रकृतिभागौ निपात्य नुगागमो विधीयते। नुगागमानन्तरं नान्तत्वात् 'ऋन्नेभ्यो ङीप्' इति सूत्रेण ङीप् प्रत्ययः।<br>अन्तर्वत्नी।<br>अन्तरस्त्यस्यां गर्भ इति विग्रहे अन्तःशब्दस्याधिकरणशक्तिप्रधानतया अस्तिसमानाधिकरणाभावादप्राप्तो मतुप्प्रत्ययः निपात्यते।<br>पतिवत्नी। पतिरस्ति अस्या इति विग्रहे पतिशब्दान्मतुपि 'पतिमत्' इत्यवस्थायामप्राप्तं वत्वं निपात्यते।<br>अर्थान्तरे तु - अन्तरस्त्यस्यां शालायां घटः। पतिमती पृथिवी। इति। | |
| | ३३. पत्युर्नो यज्ञसंयोगे<br>स्त्रियां पत्युर्नो भवति यज्ञसंयोगे सति।<br>न इत्यत्राकार उच्चारणार्थः।<br>वसिष्ठस्य पत्नी।<br>तत्कर्तृकस्य यज्ञस्य फलभोक्त्रीत्यर्थः, दम्पत्योः सहाधिकारात्।<br>कथं वृषलस्य पत्नी? पत्नीव पत्नीत्युपचारात्। | पत्युः नः ३५ |
| पत्युः ३३ नः ३३ | ३४. विभाषा सपूर्वस्य<br>सपूर्वस्य पत्युर्नो विभाषा भवति स्त्रियाम्।<br>गृहस्य पतिः स्त्री इति गृहपत्नी, गृहपतिः।<br>'अनुपसर्जनात्' इतीहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणं, किन्तु तदन्तस्य। तेन बहुव्रीहावपि नकारादेशो भवति - दृढपत्नी, दृढपतिः। | |

| | | |
|---|---|---|
| पत्युः ३३ नः ३३ | ३५. नित्यं सपत्न्यादिषु<br>सपत्न्यादिषु नित्यं पत्युर्नो भवति स्त्रियाम्, समानस्य सभावश्च।<br>समानः पतिर्यस्याः सा सपत्नी। एकः पतिः यस्याः सा एकपत्नी। वीरः पतिः यस्याः सा वीरपत्नी।<br>गणपाठोऽत्र- 'समान, एक, वीर, पिण्ड, भ्रातृ, पुत्र, (गणवार्तिकम्) दासाच्छन्दसि।' इत्येवं पठ्यते इति 'नित्यं समानादिषु' इति वक्तव्ये समानस्य सभावार्थं 'नित्यं सपत्न्यादिषु' इत्येवं सूत्रं कृतम्। | |
| ङीप् २६ | ३६. पूतक्रतोरै च<br>पूतक्रतोर्ङीप्रत्ययो भवति, अन्ते 'ऐ' इत्यादेशश्च।<br>पूतक्रतोः स्त्री पूतक्रतायी।<br>(वा०) इयं त्रिसूत्री पुंयोग एवेष्यते।<br>'पूतक्रतोरै च' इति सूत्रम्, अनुपदोक्तं च सूत्रद्वयं (वृषाकप्यग्नि०, मनोरौ वा इति सूत्रद्वयम्) पुंयोग एव प्रवर्तते इत्यर्थः।<br>तेन पूतः क्रतुर्येन सा 'पूतक्रतुः' इत्यत्र ऐकारादेशो, ङीप्च न भवति। | ऐ ३८ |
| ङीप् २६ ऐ ३६ | ३७. वृषाकप्यग्नि-कुसित-कुसीदानामुदात्तः<br>वृषाकपि, अग्नि, कुसित, कुसिद - इत्येतेषामुदात्त ऐकारादेशो भवति स्त्रियां, ङीप् च प्रत्ययः।<br>वृषाकप्योः स्त्री वृषाकपायी।<br>'हरविष्णू वृषाकपी' इत्यमरः।<br>'वृषाकपायी श्रीगौर्योः' इति च।<br>अग्नेः स्त्री अग्नायी।<br>कुसितस्य स्त्री कुसितायी।<br>कुसिदस्य स्त्री कुसिदायी।<br>'कुसितकुसिदे अव्युत्पन्नप्रातिपदिके देवताविशेषस्य नामधेये' इति बालमनोरमा। | उदात्तः ३८ |
| ङीप् २६ ऐ ३६ उदात्तः३७ | ३८. मनोरौ वा<br>मनुशब्दस्य औकारादेशो भवति, उदात्तैकारश्च वा, ताभ्यां सन्नियोगशिष्टो ङीप् च भवति।<br>मनुशब्द आद्युदात्तः, तत्र उकारोऽनुदात्त इति औकारादेशोऽपि अनुदात्तो भवति।<br>मनोः स्त्री मनावी, मनायी, मनुर्वा। | वा ३९ |

| | | |
|---|---|---|
| वा ३८ ङीप् २६ | ३९. वर्णादनुदात्तात्तोपधात्तो नः<br>वर्णवाची योऽनुदात्तान्तस्तोपधः, तदन्तादनुपसर्जनात्प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो वा भवति, तकारस्य नकारादेशश्च।<br>एनी, एता। रोहिणी, रोहिता। हरिणी, हरिता।<br>'वर्णानां त-ण-ति-णि-तान्तानाम्' (फिट्सूत्रम् - २.३३) इत्यनेन एतादयो आद्युदात्ताः इति'अनुदात्तं पदमेकवर्जम्' इति सूत्रेण एतेऽनुदात्तान्ताः।<br>अनुदात्तादिति किम्? श्वेता।<br>श्वेतशब्दः 'घृतादीनां च' (फिट्सूत्रम् - १.२१) इत्यनेन अन्तोदात्तः।<br>अत इत्येव - शितिर्ब्राह्मणी।<br>(वा०) पिशङ्गादुपसंख्यानम्।<br>पिशङ्गी, पिशङ्गा।<br>(वा०) असित-पलितयोः प्रतिषेधः।<br>असिता। पलिता।<br>(वा०) तयोश्छन्दसि क्नमेके।<br>असिक्नी। पलिक्नी। | वर्णात् ४० |
| वर्णात् ३९<br>अनुदात्तात्तोपधात् ३९ | ४०. अन्यतो ङीष्<br>तोपधभिन्नाद् वर्णवाचिनोऽनुदात्तान्तात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति।<br>तोपधापेक्षमत्रान्यत्वम्।<br>कल्माषी। सारङ्गी।<br>मध्योदात्ताविमौ।<br>अनुदात्तादिति किम्? कृष्णा। कपिला।<br>अन्तोदात्ताविमौ। | ङीष् ६५ |

| ङीष् ४० | ४१. षिद्गौरादिभ्यश्च<br>षिदन्तेभ्यः, गौरादिभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययो भवति।<br>षिदन्तेभ्यः – नर्तकी। खनकी। रजकी। 'शिल्पिनि ष्वुन्' इति सूत्रेण ष्वुन्।<br>गौरादिभ्यः – गौरी। मत्सी।<br>'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति सूत्रेण मत्स्यशब्दस्य यकारलोपः।<br>अनड्वाही, अनडुही।<br>'चतुरनडुहोरामुदात्तः' इति सूत्रपठितेन 'अनुडुहः स्त्रियां वेति वक्तव्यम्' इति वार्तिकेन विकल्पेन आमागमः।<br>'मातरि षिच्च' इति वार्तिकानुसारेण षित्त्वादेव सिद्धे गौरादिषु मातामहीशब्दस्य पाठादनित्यः षितां ङीष् इति ज्ञापितं भवति। तेन 'दंष्ट्रा' इत्यत्र षित्त्वेऽपि ङीष् न भवति। 'द्रंष्ट्रा' इत्यत्र दंशृ धातोः 'दाम्नीशस' इत्यादिना सूत्रेण ष्ट्रन् प्रत्ययः। | |
|---|---|---|

| ङीष् ४० | ४२. जानपद-कुण्ड-गोण-स्थल-भाज- नाग-काल-नील-कुश-कामुक-कबराद्-वृत्त्यमत्रावपना-कृत्रिमाश्राणा-स्थौल्य-वर्णानाच्छादनायोविकार-मैथुनेच्छा-केशवेशेषु<br>जानपदादिभ्यः एकादशभ्यः प्रातिपदिकेभ्यः यथासंख्यं वृत्त्यादिष्वर्थेषु ङीष् प्रत्ययो भवति।<br>जानपदी वृत्तिश्चेत्, अन्या तु जानपदी, उत्सदित्वादञन्तत्वेन 'टिड्ढाणञ्०' इति ङीप्।<br>ङीप्ङीषोः स्वरे विशेषः।<br>कुण्डी अमत्रं (पात्रविशेषः) चेत्। कुण्डा अन्या, 'कुडि दाहे' इत्यस्माद् 'गुरोश्च हलः' इत्यप्रत्ययः।<br>यस्तु 'अमृते जारजः कुण्डः' इति मनुष्यजाति वचनस्ततो जातिलक्षणो ङीष् 'जातेरस्त्री०' इत्यादिना सूत्रेण भवत्येव।<br>गोणी आवपनं चेत्; यत्र धान्यादि प्रक्षिप्य नीयते सा गोणीत्युच्यते। गोणाऽन्या; कस्याश्चित्संज्ञेयम्।<br>स्थली अकृत्रिमाचेत्; यथा वनस्थली। कृत्रिमा चेत् स्थला; यथा श्राद्धस्थला।<br>भाजी श्राणा चेत्; पक्वेत्यर्थः।<br>भाजाऽन्या अश्राणा, अपक्वेत्यर्थः।<br>नागशब्दोऽत्र नागसदृशवाचकः। नागः इत्यस्य गजः, सर्पश्चेति द्वावर्थौ। स्थौल्यं गजे भवति। अतः गजसदृशी या स्थूला सा नागी।<br>या तु सर्पसदृशी दीर्घा सा नागा।<br>काली वर्णश्चेत्। कालाऽन्या; काला इति कस्याश्चित्संज्ञा।<br>नीली अनाच्छादनं चेत्; आच्छादनम् = वस्त्रम्, तदन्यत् अनाच्छादनं; यथा - नीली वडवा। नीली औषधिः। नीलाऽन्या। नील्या रक्ता शाटीत्यर्थः।<br>'नील्या अन् वक्तव्यः' इति वार्तिकेन नीलीशब्दाद् अनुप्रत्यये कृते निष्पन्नान्नीलशब्दाट्टाप्।<br>कुशी अयोविकारः, लौहविकार इत्यर्थः, 'फाल' इति यस्याभिधानम्। कुशाऽन्या। ''छन्दोगाः स्तोत्रियाः गणनार्थानौदुम्बरान् शङ्कून् 'कुशा' इति व्यवहरन्ति'' इति हरदत्तः।<br>कामुकी मैथुनेच्छा चेत्।<br>कामुकाऽन्या, धनादीच्छावतीत्यर्थः।<br>कबरी केशानां संनिवेशश्चेत्। कबराऽन्या; चित्रेत्यर्थः। | |
|---|---|---|

| | | |
|---|---|---|
| ङीष् ४० | ४३. शोणात्प्राचाम्<br>शोणाद् ङीष् प्रत्ययो भवति प्राचामाचार्याणां मतेन।<br>शोणी, शोणा वा वडवा। | |
| ङीष् ४० | ४४. वोतो गुणवचनात्<br>गुणवचनादुकारान्तात् प्रातिपदिकाद् ङीष्प्रत्ययो वा भवति स्त्रियाम्।<br>पट्वी, पटुः वा स्त्री। मृद्वी, मृदुः वा स्त्री।<br>उत इति किम्? शुचिरियं ब्राह्मणी।<br>गुणवचनादिति किम्? आखुः।<br>जातिवचनोऽयं न गुणवचनः।<br>(वा०) वसुशब्दाद् गुणवचनाद् ङीबाद्युदात्तार्थम्।<br>वस्वी।<br>(वा०) खरु-संयोगोपधात्प्रतिषेधो वक्तव्यः।<br>खरुरियं ब्राह्मणी। पतिंवरा कन्या खरुरित्युच्यते।<br>पाण्डुः ब्राह्मणी; श्वेतेत्यर्थः। | वा ४५ |
| वा ४४ ङीष् ४० | ४५. बह्वादिभ्यश्च<br>बह्वादिभ्यश्च स्त्रियां ङीष् प्रत्ययो वा भवति।<br>बह्वी, बहुः। पद्धती, पद्धतिः। गती, गतिः। कपी, कपिः। मुनी, मुनिः। यष्टी, यष्टिः। | बह्वादिभ्यः ४६ |
| ङीष् ४०<br>बह्वादिभ्यः ४५ | ४६. नित्यं छन्दसि<br>छन्दसि बह्वादिभ्यो नित्यं ङीष्प्रत्ययो भवति स्त्रियाम्।<br>बह्वीषु हित्वा प्रपिबन्। बह्वी नाम औषधी भवति। | छन्दसि ४७ |
| नित्यम् ४६<br>छन्दसि ४६<br>ङीष्४० | ४७. भुवश्च<br>'भु' शब्दान्तात् प्रातिपदिकात् स्त्रियां नित्यं ङीष् प्रत्ययो भवति।<br>भुवश्चेति भुशब्दस्य पञ्चम्यां रूपम्, सौत्रत्वाद् उवङ्।<br>विभ्वी च। प्रभ्वी च।<br>'भुवः' इत्यनेन ह्रस्वोकारान्तभुशब्दस्य ग्रहणात्<br>'स्वयंभूः' इत्यत्र ङीष् न भवति। | |

| | | |
|---|---|---|
| ङीष् ४० --- | ४८. पुंयोगादाख्यायाम्<br>यः पुंवाचकः शब्दः पुंयोगकारणात् स्त्रियां वर्तते, ततः ङीष् प्रत्ययो भवति।<br>पुंसा योगः = दाम्पत्यादिसम्बन्धः इति पुंयोगः, तस्माद् हेतौ पञ्चमी। आख्यायते अनया प्रातिपदिकार्थ इति आख्या, वाचक इत्यर्थ कस्य वाचक इत्यपेक्षायां पुंयोगादित्युपस्थिततत्वात् पुंस इति लभ्यते, अर्थात् पुमान् आख्यायते येन शब्देन स शब्दः आख्याशब्देन गृह्यते। यस्य शब्दस्य प्रयोग सामान्यतः पुरुषस्य कृते एव भवति स शब्द इत्यर्थः। अतः सूत्रस्योक्तार्थः सम्पद्यते।<br>गोपस्य स्त्री गोपी। गणकस्य स्त्री गणकी।<br>पुंयोगदिति किम्? देवदत्ता।<br>यज्ञदत्ता। कस्याश्चित् स्त्रिया एवैषा संज्ञा।<br>आख्याग्रहणं किम्? प्रसूता। प्रजाता।<br>यद्यपि पुंयोगादेते शब्दाः स्त्रियां वर्तन्ते तथापि नैते शब्दा केवलं पुमांसमाचक्षते इति नात्र ङीष्।<br>(वा०) गोपालकादीनां प्रतिषेधो वक्तव्यः।<br>गोपालकस्य स्त्री गोपालिका।<br>(वा०) सूर्याद् देवतायां चाब्वक्तव्यः।<br>सूर्यस्य स्त्री देवतेति सूर्या।<br>देवतायामिति किम्? सूर्यस्य स्त्री मानुषी सूरी, कुन्तीत्यर्थः। | पुंयोगात् ४६ |

| | | |
|---|---|---|
| ङीष् ४० | ४९. इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-हिमारण्य-यव-यवन-मातुलाचार्याणामानुक्<br>इन्द्रादीनां प्रातिपदिकानामानुगागमो भवति, तेभ्यो ङीष् प्रत्ययश्च।<br>इन्द्रादीनां षण्णां, मातुलाचार्ययोश्च पुंयोग एवेष्यते। तत्र पूर्वसूत्रेण ङीषि सिद्धे आनुगागममात्रं विधीयते। इतरेषां चतुर्णामुभयम्।<br>इन्द्रस्य स्त्री इन्द्राणी।<br>एवमेव- वरुणानी। भवानी। शर्वाणी। रुद्राणी। मृडानी।<br>(वा०) हिमारण्ययोर्महत्त्वे।<br>महद्धिमं हिमानी। महदरण्यम् अरण्यानी।<br>(वा०) यवाद्दोषे।<br>दुष्टो यवो यवानी।<br>(वा०) यवनाल्लिप्याम्।<br>लिपिः = अक्षरविन्यासः। यवनानां लिपिः यवनानी।<br>(वा०) मातुलोपाध्याययोरानुग्वा।<br>मातुलानी, मातुली। उपाध्यायस्य स्त्री उपाध्यायानी, उपाध्यायी।<br>(वा०) या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः। उपेत्य अधीयते छात्राः अस्या इति उपाध्यायी, उपाध्याया वा।<br>(वा०) आचार्यादणत्वं च।<br>आचार्यस्य स्त्री आचार्यानी , पुंयोग एव।<br>या तु स्वयं व्याख्यात्री सा आचार्या। वार्तिकमिदं 'क्षुभ्नादिषु च' (८.४.३९) इति क्षुभ्नादिगणे पठितम्।<br>(वा०) अर्य - क्षत्रियाभ्यां वा स्वार्थे।<br>अर्याणी, अर्या वा। स्वामिनी, वैश्या वेत्यर्थः। 'अर्यः स्वामिवैश्ययोः' इति सूत्रेण निपातनाद् अर्यशब्दः सिध्यति।<br>क्षत्रियाणी, क्षत्रिया वा।<br>क्षत्रियात् क्षत्रियायां भार्यायामुत्पन्नेत्यर्थः।<br>पुंयोगे तु - अर्यी। क्षत्रियी।<br>(वा०) मुद्गलाच्छन्दसि लिच्च।<br>रथीरभून्मुद्गलानी गविष्टौ। ङीषो लित्त्वादानुगाकारस्य लित्स्वरः।<br>कथं 'ब्रह्माणी' इति। ब्रह्माणम् आनयति = जीवयति इति व्युत्पत्त्या। अत्र 'कर्मण्यण्' इति अण्, अण्णन्तत्वान्ङीप्। | |

| ङीष् ४० अतः४ | ५०. क्रीतात्करणपूर्वात्<br>करणपूर्वादन्तात् क्रीतान्तात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति।<br>वस्त्रैः क्रीता या सा वस्त्रक्रीती। वसनक्रीती। इह कस्मान्न भवति – 'सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी' इति ? टाबन्तेन समासः, 'अतः' इति चानुवर्त्तते। 'गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः' इति परिभाषाऽपि बहुलतया प्रवर्त्तते, 'कर्तृकरणे कृता बहुलम्' इति सूत्रे बहुलग्रहणात्। | करणपूर्वात् |
|---|---|---|
| करणपूर्वात् ४०<br>ङीष् ४० | ५१. क्तादल्पाख्यायाम्<br>करणपूर्वात् क्तान्तान्तात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति अल्पत्वे द्योत्ये।<br>अल्पैः अभ्रैः लिप्ता, अभ्रैरल्पं वा लिप्तेत्यर्थे अभ्रलिप्ती द्यौः।<br>आद्ये अल्पत्वं करणगतं, द्वितीये च क्रियागतं बोध्यम्। अल्पाख्यायामिति किम्? चनदनलिप्ता अङ्गना। बहुचन्दनानुलिप्तेत्यर्थः। | क्तात् ५३ |

| | | |
|---|---|---|
| करणपूर्वात् ङीष्४० | ५२. बहुव्रीहेश्चान्तोदात्तात्<br>बहुव्रीहेः क्तान्तादन्तोदात्तान्तात् स्त्रियां ङीष् प्रत्ययो भवति।<br>शङ्खभिन्नी। शङ्खः=ललाटास्थि, भिन्नः यस्याः सा इति विग्रहः।<br>ऊरुभिन्नी। ऊरू= जङ्घे, भिन्नौ=असंयुक्तौ यस्याः सा इति विग्रहः।<br>(वा०) जातान्तान्न।<br>दन्तजाता। स्तनजाता।<br>(वा०) पाणिगृहीती भार्यायाम्।<br>विधिवत् पाणिर्गृहीतो यस्या विवाहकाले सा पाणिगृहीती भार्या।<br>कौतुकादिना पाणिर्गृहीतो यस्या दास्यादेः सा पाणिगृहीता।<br>(वा०) अबहुनञ्सुकालसुखादिपूर्वादिति वक्तव्यम्।<br>बहु - बहुकृता। वहवः कृता ययेति विग्रहः।<br>नञ् - अकृता। न विद्यते कृतमनयेति विग्रहः।<br>सु - सुकृता। सु = शोभनं कृतमनयेतिविग्रहः।<br>काल - मासजाता। मासो जातोऽस्याः इति विग्रहः। संवत्सरजाता।<br>सुखादि - सुखजाता। सुखं जातं प्राप्तमनया इति विग्रहः।<br>दुखजाता।<br>सुखादयः 'सुखादिभ्यः कर्तृवदेनायाम् (३.१.१८) इत्यत्र पठिताः गृह्यन्ते। | बहुव्रीहेः अन्तोदात्तात् ५३ |
| अन्तोदात्तात् ५२<br>क्तात् ५१<br>ङीष्४० बहुव्रीहेः५२ | ५३. अस्वाङ्गपूर्वपदाद्वा<br>अस्वाङ्गपूर्वपदाद् अन्तोदात्तान्ताद् क्तान्तान्ताद् बहुव्रीहेः स्त्रियां वा ङीष् प्रत्ययो भवति।<br>पूर्वेण नित्ये प्राप्ते विकल्प उच्यते।<br>सुरा पीता यया सा सुरापीती, सुरापीता वा।<br>अस्वाङ्गपूर्वपदादिति किम्? शङ्खभिन्नी। ऊरुभिन्नी। अत्र पूर्वसूत्रेण नित्यमेव ङीष्। | वा ५५ |

| | | |
|---|---|---|
| वा ५३ ङीष् ४० | ५४. स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्<br>असंयोगोपधं यदुपसर्जनं स्वाङ्गं तदन्तादन्तात्प्रातिपदिकात् स्त्रियां वा ङीष् प्रत्ययो भवति।<br>अतिकेशी, अतिकेशा। चन्द्रमुखी, चन्द्रमुखा।<br>(वा०) अङ्ग-गात्र-कण्ठेभ्य इति वक्तव्यम्।<br>मृद्वङ्गी, मृद्वङ्गा। सुगात्री, सुगात्रा। स्निग्धकण्ठी, स्निग्धकण्ठा।<br>एषु संयोगोपधत्वादप्राप्तो ङीष् वार्तिकेन विधीयते। | संपूर्णसूत्रम् ६० |

| | | |
|---|---|---|
| उपसर्जनात् ५४<br>स्वाङ्गात् ५४<br>वा ५३ ङीष् ४० | ५५. नासिकोदरौष्ठ-जङ्घा-दन्त-कर्ण-शृङ्गाच्च<br>उपसर्जनभूतेभ्यः नासिका, उदर, ओष्ठ, जङ्घा, दन्त, कर्ण, शृङ्ग- इत्यन्तेभ्यः प्रातिपदिकेभ्यो वा ङीष् प्रत्ययो भवति।<br>तुङ्गनासिकी, तुङ्गनासिका। कुम्भोदरी, कुम्भोदरा। बिम्बोष्ठी, बिम्बोष्ठा। दीर्घजङ्घी, दीर्घजङ्घा। समदन्ती, समदन्ता। चारुकर्णी, चारुकर्णा। तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा।<br>(वा०) पुच्छाच्चेति वक्तव्यम्।<br>कल्याणपुच्छी, कल्याणपुच्छा। कल्याणं पुच्छं यस्याः इति विग्रहः।<br>(वा०) कबर-मणि-विष-शेरभ्यो नित्यम्।<br>कबरपुच्छी मयूरी।<br>कबरम् = नानावर्णं पुच्छं यस्या इति विग्रहः।<br>मणिपुच्छी वृश्चिकी।<br>मणिः पुच्छे अस्या इति विग्रहः।<br>विषपुच्छी।<br>विषं पुच्छे यस्या इति विग्रहः। विषपुच्छी।<br>वृश्चिकी इति पदमञ्जरी, पक्षिजातिविशेष इति बालमनोरमा<br>शरपुच्छी।<br>शरः पुच्छे यस्या इति विग्रहः। पक्षिजातिविशेष इति बालमनोरमा।<br>(वा०) उपमानात्पक्षाच्च पुच्छाच्च। नित्यमित्येव।<br>उलूकपक्षी सेना।<br>उलूकः पक्षिविशेषः, उलूकपक्षाविव पक्षौ = पार्श्वभागौ यस्या इति विग्रहः।<br>उलूकपुच्छी सेना।<br>उलूकपुच्छमिव पुच्छम् = पश्चिमान्तभागो यस्या इति विग्रहः। | |
| उपसर्जनात् ५४<br>स्वाङ्गात् ५४<br>ङीष् ४० | ५६. न क्रोडादिबह्वचः<br>क्रोडाद्यन्ताद्, बह्वजन्ताच्च प्रतिपादिकात्स्त्रियां ङीष् प्रत्ययो न भवति।<br>क्रोडादि- कल्याणक्रोडा। कल्याणखुरा। कल्याणबाला। कल्याणशफा। क्रोडादिराकृतिगणः।<br>बह्वच्-सुजघना। महाललाटा। | न ५८ |

| | | |
|---|---|---|
| उपसर्जनात् ५४<br>स्वाङ्गात् ५४<br>ङीष् ४० | ५७. सहनञ्विद्यमानपूर्वाच्च<br>सह,नञ्,विद्यमान- इत्येवम्पूर्वाच्च स्वाङ्गान्तात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो न भवति।<br>सकेशा। अकेशा। विद्यमानकेशा। सनासिका। अनासिका। विद्यमाननासिका। | |
| उपसर्जनात् ५४<br>स्वाङ्गात् ५४<br>ङीष् ४० | ५८. नखमुखात्संज्ञायाम्<br>नखान्तात्, मुखान्ताच्च प्रातिपदिकात्स्त्रियां ङीष् प्रत्ययो न भवति, संज्ञायां विषये।<br>शूर्पणखा।<br>'पूर्वपदात्संज्ञायामगः' इति णत्वम्।<br>गौरमुखा।<br>कस्याश्चित् संज्ञेयम्।<br>संज्ञायामिति किम्? ताम्रनखी कन्या। चन्द्रमुखी बाला। | |
| | ५९. दीर्घजिह्वी च छन्दसि<br>छन्दसि विषये 'दीर्घजिह्वी' इति शब्दो निपात्यते।<br>संयोगोपधत्वादप्राप्तो ङीष् निपात्यते।<br>आसुरी वै देवानां दीर्घजिह्वी यज्ञवाट्। | |
| स्वाङ्गात् ५४<br>ङीष्४० | ६०. दिक्पूर्वपदान्ङीप्<br>दिक्पूर्वपदात् स्वाङ्गान्तात् प्रातिपदिकात् परस्य ङीषो ङीबादेशो भवति।<br>अत्र 'अन्यतो ङीष्' (४.१.४०) इति सूत्रादनुवृत्तं ङीष् इति प्रथमान्तं षष्ठ्या विपरिणम्यते।<br>प्राङ्मुखी। प्राङ्मुखा।<br>प्राङ्नासिकी प्राङ्नासिका।<br>ङीषभावे ङीबपि न। | |
| ङीष् ४० | ६१. वाहः<br>ण्विप्रत्ययान्तवाहन्तात्प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति।<br>दित्यवाट् च मे दित्यौही च मे। | |
| ङीष् ४० | ६२. सख्यशिश्वीति भाषायाम्<br>सखी, अशिश्वी- इत्येतौ शब्दौ ङीषन्तौ भाषायां निपात्येते।<br>सखीयं मे ब्राह्मणी।<br>नास्याः शिशुरिति अशिश्वी। | |

| ङीष् ४० | ६३. जातेरस्त्रीविषयादयोपधात्<br>जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् भवति।<br>(श्लोकवार्तिकम्)<br>आकृतिग्रहणा जातिर्लिङ्गानां न च सर्वभाक्।<br>सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह।।<br>''आकृतिग्रहणा जातिः'' इति प्रथमं जातिलक्षणम्-<br>कुक्कुटी। मयूरी।<br>''लिङ्गानां न च सर्वभाक्, सकृदाख्यातनिर्ग्राह्या''इति द्वितीयं जातिलक्षणम्-<br>ब्राह्मणी। वृषली।<br>''गोत्रं च चरणैः सह'' इति तृतीयं जातिलक्षणम्-<br>नाडायनी। चारायणी। कठी। बह्वृची।<br>जातेरिति किम्? मुण्डा। गुणशब्दोऽयम्।<br>अस्त्रीविषयादिति किम्? मक्षिका। सर्वदा स्त्रियामेव नियतत्वात् स्त्रीविषयो मक्षिकाशब्दः।<br>अयोपधादिति किम्? क्षत्रिया।<br>(वा०) योपधप्रतिषेधे हय-गवय-मुकय-मत्स्य-मनुष्याणामप्रतिषेधः।<br>हयी।<br>गवयी। गोसदृशचतुष्पाज्जातिविशेषः।<br>मुकयी। चतुष्पाज्जाति विशेषः।<br>मत्सी।<br>मत्स्य शब्दान्ङीषि, 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति यकारस्य लोपः।<br>मनुषी।<br>मनुष्यशब्दान्ङीषि 'हलस्तद्धितस्य' इति सूत्रेण यकारस्य लोपः, 'यस्येति च' इत्यनेनाकारस्य लोपः। | जातेः ७३<br>अयोपधात् ६६ |
|---|---|---|
| जातेः ६३ ङीष् ४० | ६४. पाक-कर्ण-पर्ण-पुष्प-फल-मूल-बालोत्तरपदाच्च<br>पाक, कर्ण, पर्ण, पुष्प, फल, मूल, बाल - इत्येवमुत्तरपदाज्जातिवाचिनः प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति।<br>ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोबाली।<br>ओषधिविशेषे रूढाः एते शब्दाः। | |

| | | |
|---|---|---|
| ङीष् ४० | ६५. इतो मनुष्यजातेः<br>मनुष्यजातिवाचिन इकारान्तात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति।<br>दाक्षी। प्लाक्षी।<br>गोत्रं च चरणैः सह इति तृतीयं जातिलक्षणमत्र।<br>(वा०) इञ उपसंख्यानमजात्यर्थम्।<br>अजातेरपि इञन्तान्ङीष्स्यादित्यर्थं वार्तिकमिदं कतर्व्यमित्यर्थः।<br>सौतङ्गमी। सुतङ्गमेन निर्वृत्ता नगरी इत्यर्थे 'वुञ्छण्' इत्यादिना चातुरर्थिक इञ्। अतः 'सौतङ्गमि' इति इञ्प्रत्ययान्तः अजातिवाचकः, ततः ङीषि सौतङ्गमी इति।<br>एवमेव मौनिचित्ती। मुनिचित्तेन निर्वृत्ता नगरीत्यर्थे चातुरर्थिकः इञ्, ततः ङीष्। | मनुष्यजातेः ६६ |
| अयोपधात् ६३<br>मनुष्यजातेः ६५ | ६६. ऊङुतः<br>मनुष्यजातिवाचिनः उकारान्ताद् अयोपधात् प्रातिपदिकात् स्त्रियामूङ् प्रत्ययो भवति।<br>कुरूः।<br>कुरुक्षेत्रस्य राजा कुरुः, तस्यापत्यं स्त्रीत्यर्थे 'कुरु-नादिभ्यो ण्यः' इति ण्यः, तस्य 'स्त्रियावन्ति०' इत्यादिना लुक्। अत्रापि गोत्रत्वाद् जातित्वम्।<br>अयोपधादित्येव - अध्वर्युर्ब्राह्मणी।<br>(वा०) अप्राणिजातेश्चारज्ज्वादीनमिति वक्तव्यम्।<br>अलाबूः। कर्कन्धूः। अनयोर्दीर्घान्तत्वेऽपि 'नोङ्धात्वोः' (६.१.१७२) इति विभक्त्युदात्तत्वप्रतिषेधः फलम्।<br>प्राणिजातेस्तु - कृकवाकुः। पक्षिजातिविशेषः।<br>रज्ज्वादेस्तु - रज्जुः। हनुः। | ऊङ् ७२ |
| ऊङ् ६६ | ६७. बाह्वन्तात्सञ्ज्ञायाम्<br>बाहुशब्दान्तात् प्रातिपदिकात् संज्ञायां विषये स्त्रियामूङ् प्रत्ययो भवति।<br>भद्रबाहूः। जालबाहूः।<br>कस्याश्चित् संज्ञेयम्।<br>संज्ञायामिति किम्? वृत्तौ बाहू यस्याः सा वृत्तबाहुः। | |

| | | |
|---|---|---|
| ऊङ् ६६ | ६८. पङ्गोश्च<br>पङ्गुशब्दात् स्त्रियामूङ् प्रत्ययो भवति।<br>पङ्गूः स्त्री।<br>(वा०) श्वशुरस्योकाराकारयोर्लोपश्च वक्तव्यः।<br>श्वशुरशब्दात् स्त्रियामूङ्प्रत्ययो भवति, तस्य उकारस्य, अकारस्य च लोपोऽपि भवतीति वार्तिकार्थः।<br>श्वशुरस्य स्त्री श्वश्रूः।<br>पुंयोगलक्षणस्य ङीषोऽपवादः। | |
| ऊङ् ६६ | ६९. ऊरूत्तरपदादौपम्ये<br>ऊरूत्तरपदात् प्रातिपदिकाद् औपम्ये गम्यमाने स्त्रियामूङ्प्रत्ययो भवति।<br>करभौ इव ऊरू यस्याः सा करभोरूः।<br>'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। | ऊरूत्तरपदात् ७० |
| ऊरूत्तरपदात् ६९<br>ऊङ्६६ | ७०. संहित-शफ-लक्षण-वामादेश्च<br>संहित, शफ, लक्षण, वाम- इत्येवमादेः प्रातिपदिकादूरूत्तरपदात् स्त्रियामूङ् प्रत्ययो भवति।<br>संहितौ=संश्लिष्टौ ऊरू यस्याः सा संहितोरूः।<br>शफौ=खुरौ,ताविव संश्लिष्टौ ऊरू यस्याः सा शफोरूः।<br>लक्षणौ=उत्तमलक्षणयुक्तौ ऊरू यस्याः सा लक्षणोरूः।<br>लक्षणशब्दः अर्शआद्यजन्तः।<br>वामौ=सुन्दरौ ऊरू यस्याः सा वामोरूः।<br>(वा०) सहितसहाभ्यां चेति वक्तव्यम्।<br>हितेन सह सहितौ ऊरू यस्या सा सहितोरूः।<br>सहेते रतिकालिकमर्दनं यौ तौ सहौ, तथाभूतौ ऊरू यस्याः सा सहोरूः। | |
| ऊङ्६६ | ७१. कद्रुकमण्डल्वोश्छन्दसि<br>कद्रुशब्दात्, कमण्डलुशब्दाच्च छन्दसि विषये स्त्रियामूङ् प्रत्ययो भवति।<br>कद्रूश्च वै सुपर्णी च।<br>मा स्म कमण्डलूं शूद्राय दद्यात्।<br>छन्दसीति किम्? भाषायाम्- कद्रुः। कमण्डलुः।<br>(वा०) गुग्गुलु-मधु-जतु-पतयालूनामिति वक्तव्यम्।<br>गुग्गुलूः। मधूः। जतूः। पतयालूः। | कद्रुकमण्डल्वोः७२ |

| | | |
|---|---|---|
| कद्रुकमण्डल्वोः ७१<br>ऊङ् ६६ | ७२. संज्ञायाम्<br>कद्रु-कमण्डलुशब्दाभ्यां संज्ञायां विषये स्त्रियामूङ्प्रत्ययो भवति।<br>अच्छन्दोऽर्थं वचनम्।<br>कद्रूः।<br>नागानां मातुः संज्ञा।<br>कमण्डलूः।<br>कस्यचिन्मृगस्य संज्ञा। | |
| जातेः ६३ अतः ४ | ७३. शार्ङ्गरवाद्यञो ङीन्<br>शार्ङ्गरवादिभ्यः अञो योऽकारस्तदन्तेभ्यश्च अदन्तप्रातिपदिकेभ्यः स्त्रियां ङीन् प्रत्ययो भवति।<br>शार्ङ्गरवादिभ्यः- शार्ङ्गरवी। कापटवी।<br>अञन्तेभ्यः-वैदी। और्वी।<br>(गणसूत्रम्) नृ-नरयोर्वृद्धिश्च।<br>शार्ङ्गरवादिगणे पठितत्वादिदं गणसूत्रम्।<br>नृशब्दात्, नरशब्दाच्च ङीन् प्रत्ययो भवति, तयोरचः वृद्धिश्चेति गणसूत्रस्यार्थः।<br>नारी।<br>नृशब्दान्ङीनि कृते ऋकारस्य वृद्धिः, नरशब्दान्ङीनि तु 'यस्येति च' इति लोपे कृते नकारोत्तराकारस्य वृद्धिः। | |

| | | |
|---|---|---|
| | **७४. यङश्चाप्**<br>यङन्तात् प्रातिपदिकात् स्त्रियां चाप् प्रत्ययो भवति।<br>यङ् इति ञ्यङः, ष्यङश्च सामान्यग्रहणम्।<br>ञ्यन्तात्- आम्बष्ठ्या।<br>अम्बष्ठशब्दः जनपदक्षत्रियोभयवाचकः, ततः अपत्येऽर्थे 'वृद्धेत्कोसलाजादाञ्ञ्यङ्(४.१.१७२) इति सूत्रेण ञ्यङ्, ततः टाप्।<br>ष्यङन्तात्- कारीषगन्ध्या। करीषं=गवादिपुरीषम्, तस्येव गन्धो यस्य सः करीषगन्धिः। 'उपमानाच्च' इति सूत्रेण समासान्तः इकारः। करीषगन्धेर्गोत्रापत्यम् इत्यर्थे 'अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे' इति सूत्रेण ष्यङ्। ततः चाप्।<br>(वा०) षाद्ययञ्चाब्वाच्यः।<br>षकारात्परो यो यञ् तदन्तात् चाप् प्रत्ययो भवतीति वार्तिकार्थः।<br>शर्कराक्ष्या।<br>शर्कराक्षस्यापत्यं स्त्रीत्यर्थे 'गर्गादिभ्यो यञ्' इति यञ्प्रत्यये कृते निष्पन्नात् शर्कराक्ष्य शब्दात् चाप्। एवमेव पौतिमाष्या इत्यत्र पूतिमाषस्यापत्यं स्त्रीत्यर्थे यञ्, चाप्। गोकक्ष्या इत्यत्र गोकक्षस्यापत्यं स्त्रीत्यर्थे यञ्, चाप्। | चाप् ७५ |
| चाप् ७४ | **७५. आवट्याच्च**<br>अवटशब्दो गर्गादिः, तस्माद्यञि कृते निष्पन्नात् आवट्यशब्दात् चाप् प्रत्ययो भवति।<br>आवट्या।<br>प्राचां मते-आवट्यायनी इति,'प्राचां ष्फ तद्धितः'(४.१.१७) इति सूत्रेण तेषां मते ष्फस्य विधानात्। | |
| | **७६. तद्धिताः**<br>अधिकारोऽयम्,आपञ्चमाध्यायपरिसमाप्तेः।<br>'यूनस्तिः'(४.१.७७) इत्यतः प्रागेव अस्य सूत्रस्य पाठः, लिङ्गविशिष्टपरिभाषायाः अनित्यत्वज्ञापनार्थमिति शब्दरत्नम्।<br>लिङ्गविशिष्टपरिभाषया सिद्धे तद्धिताधिकार उत्तरार्थः इति वैयाकरणसिद्धान्तकौमुदी। | तद्धिताः<br>५.४.१६० |

| | | |
|---|---|---|
| तद्धितः ७६ | ७७ यूनस्तिः<br>'युवन्' इति प्रातिपदिकात् तिप्रत्ययो भवति स्त्रियाम्, स च तद्धितः।<br>ङीपोऽपवादः।<br>युवतिः।<br>अनुपसर्जनाधिकारेण बहवो युवानो यस्यां सा बहुयुवा इत्यत्र युवन्शब्दस्योपसर्जनत्वेन तिप्रत्ययो न भवति। | |
| तद्धितः ७६ | ७८. अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे<br>गोत्रेऽर्थे यौ अणिञौ अनार्षौ, तदन्तयोः गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशो भवति।<br>त्र्यादीनामन्त्यमुत्तमम्, तस्य समीपम् उपोत्तमम्।<br>गुरु उपोत्तमं यस्य तद् गुरूपोत्तमं प्रातिपदिकम्, तयोः गुरूपोत्तमयोः। यस्मिन् त्र्यच्के, त्र्यधिकाच्के वा प्रातिपदिके अन्त्याच्समीपवर्ती अच् गुरुसंज्ञको भवति तत्प्रातिपदिकं गुरूपोत्तमं कथ्यते। यथा- वाराहि इति प्रातिपदिकम्।<br>अणन्तस्य ष्यङादेशः- करीषगन्धेरपत्यं स्त्री कारीषगन्ध्या।<br>'तस्यापत्यम्' इत्यणि कृते यस्येति लोपः, ततः ष्यङि कृते यस्येति लोपः,'यङश्चाप्' इति सूत्रेण चाप्रत्ययः।<br>इञन्तस्य ष्यङादेशः- वाराह्या।<br>वराहशब्दात् इञि कृते निष्पन्नस्य वाराहिशब्दस्य ष्यङादेशः 'यङश्चाप्' इति सूत्रेण च चाप्।<br>अणिञोरिति किम्? ऋतभागस्यापत्यम् आर्तभागी।<br>अत्र विदादित्वात् अञ् इति 'टिड्ढाणञ्' इति ङीप्।<br>अनार्षयोरिति किम्? वासिष्ठी। वैश्वामित्री।<br>गुरूपोत्तमयारिति किम्? औपगवी।<br>गोत्रे इति किम्? 'तत्र जातः', आहिच्छत्री, कान्यकुब्जी। | ष्यङ् ८१<br>गोत्रे ८०<br>अणिञोः ७९ |
| अणिञोः७८<br>ष्यङ्७८ | ७९. गोत्रावयवात्<br>गोत्रावयववाचकाच्छब्दाद् गोत्रेऽर्थे विहितौ यौ अणिञौ तदन्तयोः स्त्रियां प्रातिपदिकयोः ष्यङादेशो भवति।<br>गोत्राध्याये अपठिताः सन्तोऽपि लोके गोत्ररूपेण प्रसिद्धाः शब्दाः गोत्रावयवा इत्युच्यन्ते, यथा पुणिक-भुणिक-मुखरप्रभृतयः शब्दाः।<br>अगुरूपोत्तमार्थोऽयमारम्भः।<br>पौणिक्या। भौणिक्या। मौखर्या।<br>पुणिक-भुणिक-मुखरशब्देभ्यः तस्यापत्यमित्यर्थे 'अत इञ्' इति इञ्, ततः ष्यङ्, चाप्। | ष्यङ् ७८<br>गोत्रे ७८ |

| | | |
|---|---|---|
| ष्यङ् ७८ गोत्रे ७८ | ८०. क्रौड्यादिभ्यश्च<br>'क्रौडि' इत्येवमादिभ्यः स्त्रियां ष्यङ् प्रत्ययो भवति।<br>अगुरूपोत्तमार्थोऽयमारम्भः, अनणिञर्थश्च।<br>क्रौड्या। लाड्या। | |
| ष्यङ् ७८ गोत्रे ७८ | ८१. दैवयज्ञि-शैचिवृक्षि-सात्यमुग्रि-<br>काण्डेविद्धिभ्योऽन्यतरस्याम्<br>दैवयज्ञि, शौचिवृक्षि, सात्यमुग्रि, काण्डेविद्धि-<br>इत्येतेभ्यः इञ्प्रत्ययान्तेभ्यः स्त्रियां ष्यङ्<br>प्रत्ययोऽन्तरस्यां भवति।<br>पक्षे 'इतो मनुष्यजातेः' इति ङीष्।<br>दैवयज्ञ्या,दैवयज्ञी। शौचिवृक्ष्या,शौचिवृक्षी।<br>सात्यमुग्र्या,सात्यमुग्री। काण्डेविद्ध्या, काण्डेविद्धी।<br>देवयज्ञ-शुचिवृक्ष-सत्यमुग्र-काण्डेविद्धशब्देभ्यः अपत्यार्थे<br>इञ्, ततः ष्यङ्, चाप्। पक्षे ङीष्। | अन्यतरस्याम् ८२ |
| अन्यतरस्याम् ८१ | ८२. समर्थानां प्रथमाद्वा<br>इदं पदत्रयम्, अनुवृत्तिलभ्यमन्यतरस्यामिति पदं च<br>'प्राग्दिशो विभक्तिः (५.३.१) इति यावदधिक्रियते।<br>समर्थानामिति निर्धारणे षष्ठी। समर्थानां मध्ये सूत्रे<br>प्रथमनिर्दिष्टादेव पदात् विकल्पेन प्रत्ययो भवतीति<br>ज्ञेयमिति सूत्रार्थः।<br>यथा 'तस्यापत्यम्' 'तेन रक्तं रागात्' 'तत्र भवः'<br>इत्यादिसूत्रैः उपगोरपत्यम् इति औपगवः, कषायेण<br>रक्तम् इति काषायं वस्त्रम्, राष्ट्रे भवं राष्ट्रियम्<br>इत्यादौ तस्य, तेन, तत्र इत्यादिप्रथमनिर्दिष्टेभ्यः<br>उपगोः, कषायेण, राष्ट्रे इत्यादिसमर्थसुबन्तेभ्यः<br>प्रत्ययाः भवन्ति।<br>''वाग्रहणं किम् ? वाक्यमपि हि यथा स्यात्-<br>उपगोरपत्यम् इति। यद्येवम् समासवृत्तिः तद्धितवृत्त्या<br>बाध्येत-उपग्वपत्यमिति न स्यात् ? नैष दोषः ;<br>पूर्वसूत्रादन्यतरस्यांग्रहणमनुवर्तते, तेनैतदपि<br>भविष्यति।'' इति काशिकाग्रन्थमनुसृत्य सूत्रे 'वा' इति<br>सत्यपि अत्र 'अन्यतरस्याम्' इत्यस्यापि अनुवृत्तिः<br>दर्शिता। | समर्थानां प्रथमाद्<br>५.२.१४०,<br>वा ५.४.६७ |

| | | |
|---|---|---|
| | ८३. प्राग्दीव्यतोऽण्<br>'तेन दीव्यति खनति जयति जितम्' (४.४.२) इत्यतः प्रागर्थेष्वणधिक्रियते। अपवादविषयं परिहृत्य सर्वत्र अण् प्रत्ययो भवतीत्यर्थः।<br>उपगोरपत्यं पुमान् इति औपगवः।<br>**अत्र विशेषः**<br>'प्राग्दीव्यतोऽण् (४.१.८३) अश्वपत्यादिभ्यश्च (४.१.८४) दिव्यदित्यादित्यपत्युत्तरपदाण्ण्यः (४.१.८५) उत्सादिभ्योऽञ् (४.१.८६) स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्'(४.१.८७) इति सूत्रैः विहिताः अण्, ण्यः, अञ्, नञ्, स्नञ्- इत्येते पञ्च प्रत्ययाः तस्यापत्यम्, तेन रक्तं रागाद्, तत्र भवः, तत्र जातः, तस्येदम् इत्यादिषु सर्वेष्वर्थेषु प्राग्दीव्यतो भवन्तीति एते पञ्च महोत्सर्गाः प्रत्ययाः कथ्यन्ते। | प्राग्दीव्यतः ६१ |
| प्राग्दीव्यतः ८३ | ८४. अश्वपत्यादिभ्यश्च<br>अश्वपत्यादिभ्यश्च प्राग्दीव्तीयेष्वर्थेषु अण्प्रत्ययो भवति।<br>अग्रिमेण सूत्रेण वक्ष्यमाणस्य ण्यस्यापवादोऽयम्।<br>आश्वपतम्। गाणपतम्। पाशुपतम्। | |

| | | |
|---|---|---|
| प्राग्दीव्यतः ८३ | ८५. दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः<br>प्राग्दीव्यतीयेष्वर्थेषु दिति, अदिति, आदित्य - इत्येतेभ्यः, पत्युत्तरपदाच्च ण्यः प्रत्ययो भवति।<br>दैत्यः। आदित्यः। आदित्यम्। प्राजापत्यम्।<br>(वा०) यमाच्चेति वक्तव्यम्।<br>याम्यम्।<br>(वा०) वाङ्-मति-पितृमतां छन्दस्युपसंख्यानम्।<br>वाच्यः। मात्या। पैतृमत्यम्।<br>(वा०) पृथिव्या ञाञौ।<br>पार्थिवा। पार्थिवी।<br>(वा०) देवाद् यञञौ।<br>दैव्यम्। दैवम्।<br>(वा०) वहिषष्टिलोपश्च।<br>बाह्यः।<br>(वा०) ईकक् च।<br>बाहीकः।<br>(वा०) ईकञ् छन्दसि।<br>बाहीकः। स्वरे विशेषः।<br>(वा०) स्थाम्नोऽकारः।<br>अश्वत्थामः।<br>(वा०) लोम्नोऽपत्ये बहुषु।<br>बाह्वादीञोऽपवादः।<br>उडुलोमाः। उडुलोमान्।<br>बहुषु किम्? औडुलौमिः।<br>(वा०) सर्वत्र गोरजादिप्रसङ्गे यत्।<br>गवि भवम्, गोरागतं वा गव्यम्।<br>अणपवादो यत्।<br>अजादिप्रसङ्गे इति किम्? गोभ्यो हेतुभ्यः आगतं गोरूप्यम्, गोमयम्। | |
| प्राग्दीव्यतः ८३ | ८६. उत्सादिभ्योऽञ्<br>प्राग्दीव्यतीयेष्वर्थेषु उत्सादिशब्देभ्योऽञ् प्रत्ययो भवति।<br>अणः, तदपवादानाम् इञादीनां च बाधकः।<br>औत्सः। औदपानः। | |

| | | |
|---|---|---|
| | ८७. स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्<br>'धान्यानां भवने क्षेत्रे (५.२.१) इत्यतः प्रागर्थेषु स्त्रीशब्दात्, पुम्स्शब्दाच्च यथाक्रमं नञ्स्नञ्प्रत्ययौ भवतः।<br>स्त्रीषु भवम्, स्त्रीणां समूहः, स्त्रीभ्यः आगतम्, स्त्रीभ्यो हितं वा स्त्रैणम्।<br>पुंसु भवम्, पुंसां समूहः, पुम्भ्यः आगतम्, पुम्भ्यः हितं वा पौंस्नम्। | धान्यानां भवने क्षेत्रे ५.२.१ |
| प्राग्दीव्यतः ८३<br>अचि ८९ | ८८. द्विगोर्लुगनपत्ये<br>द्विगोर्निमित्तं यस्तद्धितोऽजादिरनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुग् भवति।<br>पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः। दशकपालः। द्वौ वेदौ अधीते द्विवेदः। चतुर्वेदः।<br>परसूत्राद् 'अचि' इत्यस्यापकर्षेण पञ्चभ्यो गर्गेभ्य आगतं पञ्चगर्गरूप्यम्, पञ्चगर्गमयम् इत्यादौ प्राग्दीव्यतीयस्य लुग् न भवति। | |
| प्राग्दीव्यतः ८३ | ८९. गोत्रेऽलुगचि<br>अजादौ प्रादीव्यतीये विवक्षिते गोत्रार्थप्रत्ययस्य अलुग्भवति।<br>'यस्कादिभ्यो गोत्रे'(२.४.६३) इत्यादिना बहुत्वे विवक्षिते येषां गोत्रार्थकप्रत्ययानां लुगुक्तस्तेषाम् अजादौ प्राग्दीव्यतीये विषयभूते लुक् प्रतिषिध्यतेऽनेन।<br>गर्गाणां (गर्गगोत्रापत्यानाम्) छात्राः गार्गीयाः।<br>अत्र 'यञञोश्च'(२.४.६४) इति सूत्रेण प्राप्तो लुग् निषिध्यते। | अचि ९१, ८८ |

| | | |
|---|---|---|
| प्राग्दीव्यतः ८३<br>अचि ८९ | ९०. यूनि लुक्<br>प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते युवापत्यार्थे यः सम्भावितः प्रत्ययस्तस्य लुग्भवति।<br>ग्लुचुकस्य गोत्रापत्यं पुमान् ग्लुचुकायनिः।<br>'प्राचामवृद्धात् फिन् बहुलम्' इति फिन् प्रत्ययः।<br>तस्यापत्यं युवा इत्यर्थे 'प्राग्दीव्यतोऽण्' इति अणि कृते ग्लौचुकायनः इति रूपं सिद्ध्यति।<br>ग्लौचुकायनस्य छात्राः इत्यर्थे यद्यपि 'वृद्धाच्छः' इति सूत्रेण छप्रत्ययः प्राप्नोति तथापि अजादिप्रत्यये विवक्षिते एव युवापत्यार्थे सम्भावितस्य प्रत्ययस्य लुग्भवति। अतः ग्लुचुकायनिशब्दादेव तस्य छात्राः इत्यर्थे प्रत्ययो भवति, ग्लुचुकायनिशब्दो नास्ति वृद्धसंज्ञकः; अतस्ततः 'प्राग्दीव्यतोऽण्' इत्यनेन अणेव भवति न तु छप्रत्ययः।<br>अतः ग्लौचुकायनस्य छात्राः अपि ग्लौचुकायनाः एव कथ्यन्ते। | यूनि ९१<br>लुक् ९१ |
| प्राग्दीव्यतः ८३<br>अचि ८९ | ९१. फक्फिञोरन्यतरस्याम्<br>प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते युवापत्यार्थे सम्भावितयोः फक्-फिञ्प्रत्यययोर्लुग्वा भवति।<br>फको लुक्- गर्गस्य गोत्रापत्यं पुमान् गार्ग्यः, गार्ग्यस्य युवापत्यं पुमान् गार्ग्यायणः।<br>'यञिञोश्च' इति सूत्रेण गार्ग्येति यञन्तात् फक्प्रत्ययः।<br>गार्ग्यायणस्य छात्राः इत्यर्थे छप्रत्यये विवक्षिते युवापत्यार्थकस्य फक्प्रत्ययस्य लुकि गार्ग्यशब्दादेव 'वृद्धाच्छः' इत्यनेन छप्रत्यये कृते गार्गीयाः छात्राः इति रूपं भवति।<br>पक्षे- गार्ग्यायणशब्दात् छप्रत्यये कृते गार्ग्यायणीयाः छात्राः इति रूपं भवति।<br>फिञो लुक्- यस्कस्यापत्यं पुमान् यास्कः, 'यस्कादिभ्योऽण्'। यास्कस्य युवापत्यं पुमान् यास्कायनिः। 'अणो द्व्यचः' इति फिञ्।<br>यास्कायनेश्छात्राः इत्यर्थे छप्रत्यये विवक्षिते फिञ्प्रत्ययस्य लुकि यास्कशब्दादेव छप्रत्यये कृते यास्कीयाश्छात्राः इति रूपं भवति। पक्षे- यास्कायनिशब्दात् छप्रत्यये कृते यास्कायनीयाः छात्राः इति रूपं भवति। | |

| | ६२. तस्यापत्यम्<br>तस्यापत्यमित्यर्थे 'प्राग्दीव्यतोऽण्' इत्यादिसूत्रैरुक्ताः प्रत्ययाः, अग्रिमैः सूत्रैः वक्ष्यमाणाश्च प्रत्यया वा भवन्ति।<br>उपगोरपत्यं पुमान् इति औपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः। | तस्यापत्यम्<br>४.१.१७६ |
|---|---|---|
| | ६३. एको गोत्रे<br>गोत्रापत्ये विवक्षिते एक एवापत्यप्रत्ययो भवति इति सूत्रार्थः ; गोत्रापत्ये विवक्षिते एक एव शब्दः= प्रथमा प्रकृतिः प्रत्ययमुत्पादयति इति  वासूत्रार्थः।<br>यथा गर्गस्यानन्तरापत्यमित्यर्थे गर्गशब्दात् अपत्यार्थप्रत्ययः तथैव गर्गस्य गोत्रापत्यम् इत्यर्थेऽपि गर्गशब्दादेव प्रत्ययो भवति। एवमेव गर्गस्य यद् गोत्रापत्यं तस्यापि गोत्रापत्ये गर्गशब्दादेव एक एव प्रत्ययः, न पुनः गोत्रप्रत्ययान्तात् पुनरपरो गोत्रप्रत्ययः इत्यर्थः।<br>गोत्रशब्देनेह 'अपत्यं पौत्रप्रभृति गोत्रम्'(४.१.६२) इति पारिभाषिकं गोत्रं गृह्यते। | |

| | | |
|---|---|---|
| | ९४. गोत्राद्यून्यस्त्रियाम्<br>सूत्रमिदं येगविभागेन एवं व्यख्यायते–<br>'गोत्राद् यूनि' इत्येको योगः, 'अस्त्रियाम्' इत्यपरो योगः।<br>तत्र प्रथमयोगस्य अयमर्थः–<br>युवापत्ये विवक्षिते गोत्रापत्यान्तादेव प्रत्ययो भवति, न तु गोत्रप्रत्यय इव परमप्रकृतेः अर्थात् मूलशब्दात्।<br>गर्गस्यापत्यं युवा गार्ग्यायणः, गर्गशब्दात् प्रथमं 'गर्गादिभ्यो यञ्' इति सूत्रेण यञ् प्रत्ययः, ततः 'यञिञोश्च' इत्यनेन युवापत्यें फक् प्रत्ययः। एवमेव वत्सस्यापत्यं युवा वात्स्यायनः। उपगोरपत्यं युवा औपगविः। उपगुशब्दात् प्रथमं गोत्रापत्ये 'प्राग्दीव्यतोऽण्' इति अण् ततः अकारान्तत्वात् औपगवशब्दात् युवापत्ये 'अत इञ्' इति इञ्।<br>'अस्त्रियाम्' इति द्वितीययोगस्यायमर्थः –<br>युवापत्ये यदुक्तं स्त्रियां तन्न भवति।<br>एवं हि युवसंज्ञैव स्त्रियां निषिध्यतेऽनेन। तेन स्त्रीत्वेन युवापत्ये विवक्षिते गोत्रप्रत्ययाः एव भवन्ति, न तु युवप्रत्ययाः।<br>दक्षस्यापत्यं चतुर्थं स्त्री इति दाक्षी।<br>अत्र 'अत इञ्' इति सूत्रेण इञ्प्रत्ययः, 'इतो मनुष्यजातेः' इति सूत्रेण स्त्रियां ङीष् प्रत्ययः। | |
| तस्यापत्यम् ९२ | ९५. अत इञ्<br>तस्यापत्यमित्यर्थे अकारान्तात् प्रातिपदिकाद् इञ् प्रत्ययो भवति।<br>अणोऽपवादः।<br>दक्षस्यापत्यं पुमान् दाक्षिः। | इञ् ९७ |
| तस्यापत्यम् ९२<br>इञ् ९५ | ९६. बाह्वादिभ्यश्च<br>तस्यापत्यामित्यर्थे 'बाहु' इत्येवमादिभ्यः शब्देभ्य इञ् प्रत्ययो भवति।<br>बाहविः। औपबाहविः | |

| | | |
|---|---|---|
| तस्यापत्यम् ९२<br>इञ् ९५ | ९७. सुधातुरकङ् च<br>तस्यापत्यमित्यर्थे सुधातृशब्दाद् इञ् प्रत्ययो भवति, तत्सन्नियोगेन च तस्य अकङ् इत्यादेशो भवति।<br>सुधातुरपत्यं सौधातकिः।<br>अकङो ङकार इत्, ककारोत्तराकार उच्चारणार्थः।<br>(वा०) व्यास-वरुड-निषाद-चण्डाल- बिम्बानामिति वक्तव्यम्।<br>वैयासकिः। वारुडकिः। नैषादकिः। चाण्डालकिः। बैम्बकिः। | |
| तस्यापत्यम् ९२<br>इञ् ९५ | ९८. गोत्रे कुञ्जादिभ्यश्च्फञ्<br>गोत्रापत्ये विवक्षिते कुञ्जादिभ्यः च्फञ् प्रत्ययो भवति। इञोऽपवादः।<br>कुञ्चस्य गोत्रापत्यं पुमानु कौञ्जायन्यः। कुञ्जशब्दात् च्फञ्प्रत्यये, आयन्नादेशे च कृते 'कौञ्जायन' इत्यवस्थायां 'व्रात-च्फञोरस्त्रियाम्' (५.३.११३) इतिसूत्रेण स्वार्थिकः ञ्यप्रत्ययः। | गोत्रे १११ |
| तस्यापत्यम् ९२<br>गोत्रे ९८ | ९९. नडादिभ्यः फक्<br>गोत्रापत्ये विवक्षिते 'नड' इत्येवमादिभ्यः प्रातिपदिकेभ्यः फक् प्रत्ययो भवति।<br>नडस्य गोत्रापत्यं नाडायनः।<br>चरस्य गोत्रापत्यं चारायणः।<br>अनन्तरापत्ये तु नाडिः। | फक् १०३ |
| फक् ९९ गोत्रे ९८ | १००. हरितादिभ्योऽञः<br>युवापत्ये विवक्षिते अञ्प्रत्ययान्तेभ्यो हरितादिभ्यः फक् प्रत्ययो भवति, गोत्राधिकारेऽपि सामर्थ्याद् युवापत्येऽयं प्रत्ययः, न हि गोत्रादपरो गोत्रप्रत्ययो भवति।<br>हरितादिः विदाद्यन्तर्गणः।<br>हरितस्य युवापत्यं हारितायनः। | |
| फक् ९९ गोत्रे ९८ | १०१. यञिञोश्च<br>अनुवृत्तं 'गोत्रे' इतिपदं यञिञोः विशेषणम्। गोत्रे यौ यञिञौ प्रत्ययौ तदन्तात्प्रातिपदिकाद् युवापत्ये फक् प्रत्ययो भवति।<br>यञन्तात् – गार्ग्यायणः। वात्स्यायनः।<br>इञन्तात् – दाक्षायणः। प्लाक्षायणः।<br>'गोत्राद्यूनि' (४.१.९४) इति वचनाद् युवापत्येऽयं प्रत्ययः। | |

| | | |
|---|---|---|
| फक् ९९ गोत्रे ९८ | १०२. शरद्वच्छुनक-दर्भाद् भृगु-वत्साग्रायणेषु<br>गोत्रापत्ये विवक्षिते शरद्वत्, शुनक, दर्भ- इत्येतेभ्यः फक् प्रत्ययो भवति यथासंख्यं भार्गव, वात्स्य, आग्रायण- इत्येतेष्वर्थेषु अपत्यविशेषेषु।<br>भृगुवत्सशब्दाभ्यामत्र तद्वंश्या विवक्षिताः।<br>शरद्वतो गोत्रापत्यं शारद्वतायनः भार्गवश्चेत्।<br>शारद्वतोऽन्यः,विदादित्वादञ्।<br>शुनकस्य गोत्रापत्यं शौनकायनो वात्स्यश्चेत्।<br>शौनकोऽन्यः, विदादित्वादञ्।<br>दर्भस्य गोत्रापत्यं दार्भायणः, आग्रायणश्चेत्। दार्भिः अन्यः,'अत इञ्' इति इञ्। | |
| फक् ९९ गोत्रे ९८ | १०३. द्रोण-पर्वत-जीवन्तादन्यतरस्याम्<br>गोत्रापत्ये विवाक्षिते गोत्र, पर्वत, जीवन्त- इत्येतेभ्यः शब्देभ्योऽन्यतरस्यां फक् प्रत्ययो भवति।<br>पक्षे 'अत इञ्' इति इञ्।<br>द्रौणायनः,द्रौणिः। पार्वतायनः, पार्वतिः। जैवन्तायनः, जैवन्तिः। | |
| गोत्रे ९८ | १०४. अनृष्यानन्तर्ये बिदादिभ्योऽञ्<br>गोत्रापत्ये विवक्षिते 'बिद' इत्येवमादिभ्यः प्रातिपदिकेभ्योऽञ् प्रत्ययो भवति, ये पुनरत्र अनृषिशब्दाः पुत्रादयः पठितास्तेभ्योऽनन्तरापत्ये एव अञ् प्रत्ययो भवति।<br>अनृषीति लुप्तपञ्चमीक पदम्।<br>बिदस्य गोत्रापत्यं बैदः। उर्वस्य गोत्रापत्यं और्वः।<br>अनृषिभ्योऽनन्तरापत्ये एव- पुत्रस्यापत्यं पौत्रः।<br>दुहितुरपत्यं दौहित्रः। | |
| गोत्रे ९८ | १०५. गर्गादिभ्यो यञ्<br>गोत्रापत्ये विवक्षिते गर्गादिभ्यो यञ् प्रत्ययो भवति।<br>गर्गस्य गोत्रापत्यं गार्ग्यः। वत्सस्य गोत्रापत्यं वात्स्यः। | यञ् १०६ |
| गोत्रे ९८ यञ् १०५ | १०६. मधु-बभ्र्वोर्ब्राह्मणकौशिकयोः<br>गोत्रापत्ये विवक्षिते मधुशब्दाद् बभ्रुशब्दाच्च यञ् प्रत्ययो भवति यथासंख्यं ब्राह्मणे, कौशिके च वाच्ये।<br>माधव्यो ब्राह्मणश्चेत्। माधवोऽन्यः, प्राग्दीव्यतोऽण्।<br>बाभ्रव्यः कौशिकश्चेत्। बाभ्रवोऽन्यः, प्राग्दीव्यतोऽण्। | |

| | | |
|---|---|---|
| गोत्रे ९८ यञ् १०५ | १०७. कपिबोधादाङ्गिरसे<br>गोत्रापत्ये विवक्षिते कपिशब्दाद्, बोधशब्दाच्च यञ् प्रत्ययो भवति, आङ्गिरसे वाच्ये।<br>कपेर्गोत्रापत्यं काप्यः, आङ्गिरसश्चेत्।<br>कापेयोऽन्यः,'इतश्चानिञः' इति ढक्।<br>बोधस्य गोत्रापत्यं बौध्यः, आङ्गिरसश्चेत्।<br>बौधिरन्यः, अनृषित्वाद् 'अत इञ्' इति इञ् अथवा बाह्वादित्वादिञ्। | आङ्गिरसे १०९ |
| आङ्गिरसे १०७<br>गोत्रे ९८ यञ् १०५ | १०८. वतण्डाच्च<br>गोत्रापत्ये विवक्षिते वतण्डशब्दाद् यञ् प्रत्ययो भवति, आङ्गिरसे वाच्ये।<br>वतण्डस्य गोत्रापत्यं वातण्ड्यः अङ्गिरसश्चेत्।<br>अनाङ्गिरसे तु गर्गादौ, शिवादौ च पाठाद् यञणौ।<br>वातण्ड्यः, वातण्डः। | वतण्डात् १०९ |
| आङ्गिरसे १०७<br>गोत्रे ९८ यञ् १०५<br>वतण्डात् १०८ | १०९. लुक् स्त्रियाम्<br>'वतण्डाच्च' इति विहितस्य यञ्प्रत्ययस्य लुग्भवति स्त्रियाम्, आङ्गिरसे वाच्ये।<br>वतण्डस्य गोत्रापत्यं स्त्री वतण्डी, यञो लुकि शार्ङ्गरवादित्वाद् ङीन्।<br>अनाङ्गिरसे तु वातण्ड्यायनी, लोहितादित्वात् ष्फः।<br>शिवादित्वादणि तु वातण्डी। | |
| गोत्रे ९८ | ११०. अश्वादिभ्यः फञ्<br>गोत्रापत्ये विवक्षिते अश्वादिभ्यः फञ् प्रत्ययो भवति।<br>अश्वस्य गोत्रापत्यम् आश्वायनः।<br>अश्मनो गोत्रापत्यम् आश्मायनः। | फञ् १११ |
| गोत्रे ९८ फञ् ११० | १११. भर्गात् त्रैगर्त्ते<br>गोत्रापत्ये विवक्षिते भर्गशब्दात् फञ् प्रत्ययो भवति, त्रैगर्त्ते गोत्रे वाच्ये।<br>त्रिगर्त्तो नाम देशः, तत्र भवे गोत्रे इत्यर्थः।<br>भार्गायणः त्रैगर्त्तश्चेत्। भार्गिरन्यः, 'अत इञ्'। | |
| तस्यापत्यम् ९२ | ११२. शिवादिभ्योऽण्<br>'तस्यापत्यम्' इत्यर्थे शिवादिभ्योऽण्प्रत्ययो भवति।<br>'गोत्रे' इति निवृत्तम्।<br>शिवस्यापत्यं शैवः। प्रोष्ठस्यापत्यं प्रौष्ठः। | अण् ११९ |

| | | |
|---|---|---|
| अपत्ये९२ अण्११२ | **११३. अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः**<br>तस्यापत्यम् इत्यर्थे अवृद्धसंज्ञकेभ्यो नदीनामभ्यः, मानुषीनामभ्यश्च अण् प्रत्ययो भवति।<br>स्त्रीभ्यो ढक्' इति ढकोऽपवादः। वृद्धशब्देनात्र 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति वृद्धसंज्ञकशब्दो गृह्यते।<br>नदीनामभ्यः – यमुनायाः अपत्यं यामुनः। नार्मदः।<br>मानुषीनामभ्यः – शिक्षितायाः अपत्यं शैक्षितः। चिन्तितायाः अपत्यं चैन्तितः। | |
| अपत्ये९२ अण्११२ | **११४. ऋष्यन्धक–वृष्णि–कुरुभ्यश्च**<br>तस्यापत्यमित्यर्थे ऋष्यन्धक–वृष्णि–कुरुभ्यश्च अण् प्रत्ययो भवति।<br>ऋषयो मन्त्रद्रष्टारो वसिष्ठादयः। अन्धकाः, वृष्णयः, कुरवश्चेति वंशाख्याः।<br>इञोऽपवादः।<br>ऋषिभ्यः – वासिष्ठः। वैश्वामित्रः।<br>अन्धकेभ्यः – श्वफल्कस्यापत्यं श्वाफल्कः।<br>वृष्णिभ्यः – वसुदेवस्यापत्यं वासुदेवः।<br>अनिरुद्धस्यापत्यम् आनिरुद्धः।<br>कुरुभ्यः – नकुलस्यापत्यं नाकुलः। सहदेवस्यापत्यं साहदेवः। | |
| अपत्ये९२ अण्११२ | **११५. मातुरुत् संख्या–सं–भद्रपूर्वायाः**<br>तस्यापत्यमित्यर्थे संख्यापूर्वात्, सम्पूर्वाद्, भद्रपूर्वाच्च मातृशब्दादण् प्रत्ययो भवति, उकारश्चान्तादेशः।<br>संख्यापूर्वात् – द्वयोः मात्रोरपत्यं द्वैमातुरः। षण्णां मातॄणामपत्यं षाण्मातुरः। तद्धितविषये समासादण्।<br>सम्पूर्वात् – साम्मातुरः। प्रादिसमासात् तद्धितः।<br>भद्रपूर्वात् – भाद्रमातुरः। विशेषणसमासादण्। | |
| अपत्ये९२ अण्११२ | **११६. कन्यायाः कनीन च**<br>तस्यापत्यमित्यर्थे कन्याशब्दादण् प्रत्ययो भवति, तत्सन्नियोगेन कन्याशब्दस्य कनीन इत्यादेशश्च भवति।<br>ढकोऽपवादः।<br>कन्याया अपत्यं कानीनो व्यासः, कर्णश्च। अनूढाया एवापत्यमित्यर्थः। | |

| | | |
|---|---|---|
| अपत्ये ९२<br>अण् ११२ | ११७. विकर्णशुङ्ग-च्छगलाद्वत्स-भरद्वाजात्रिषु<br>विकर्ण, शुङ्ग, छगल इत्येतेभ्यः शब्देभ्योऽण् प्रत्ययो भवति, यथासंख्यं वत्सवंश्ये, भरद्वाजवंश्ये, अत्रिवंश्ये चापत्ये वाच्ये।<br>वत्सादिशब्दैस्तद्वंश्याः विवक्षिताः।<br>वैकर्णो वात्स्यश्चेत्। वैकर्णिः अन्यः।<br>शौङ्गो भारद्वाजश्चेत्। शौङ्गिः अन्यः।<br>छागलः आत्रेयश्चेत्। छागलिः अन्यः। | |
| अपत्ये९२ अण्११२ | ११८. पीलाया वा<br>तस्यापत्यमित्यर्थे पीलाशब्दादण्प्रत्ययो वा भवति।<br>पीलाया अपत्यं पैलः। पक्षे 'द्व्यचः (४.१.१२१) इति ढकि कृते पैलेयः। पीला नाम काचिन्मानुषी। | वा ११९ |
| अपत्ये९२ अण्११२<br>वा ११८ | ११९. ढक् च मण्डूकात्<br>तस्यापत्यमित्यर्थे मण्डूकशब्दाद् ढक् प्रत्ययः, चकारादण्प्रत्ययश्च वा भवति। पक्षे इञ्। मण्डूको नाम ऋषिः, तस्यापत्यं माण्डूकेयः, माण्डूकः, माण्डूकिः। | |
| अपत्ये ९२ | १२०. स्त्रीभ्यो ढक्<br>तस्यापत्यमित्यर्थे स्त्रीप्रत्ययान्तेभ्यः शब्देभ्यो ढक् प्रत्ययो भवति।<br>इह स्त्रीशब्देन स्त्रीप्रत्ययान्ताः शब्दाः गृह्यन्ते।<br>विनता नाम गरुडमाता। तस्या अपत्यं वैनतेयः।<br>सुपर्णाया अपत्यं सौपर्णेयः।'<br>बाह्वादित्वात्सौमित्रिः। शिवादित्वात्सापत्नः। | स्त्रीभ्यः १२१<br>ढक् १२७ |
| स्त्रीभ्यः १२०<br>ढक्१२०<br>अपत्ये ९२ | १२१. द्व्यचः<br>द्व्यचः स्त्रीप्रत्ययान्तादपत्येऽर्थे ढक् प्रत्ययो भवति।<br>तन्नामिकाणोऽपवादः।<br>दत्ताया अपत्यं दात्तेयः।<br>पृथाया अपत्यं पार्थ इत्यत्र तु शिवादित्वादण् ज्ञेयः, शिवादेराकृतिगणत्वात्। | द्व्यचः १२२ |
| द्व्यचः१२१<br>अपत्ये९२<br>ढक् १२० | १२२. इतश्चानिञः<br>तस्यापत्यमित्यर्थे द्व्यचः इञ्प्रत्ययान्तभिन्नादिकारान्तात्प्रातिपदिकाद् ढक् प्रत्ययो भवति।<br>अत्रेरपत्यम् आत्रेयः। निधेरपत्यं नैधेयः। | |

| | | |
|---|---|---|
| अपत्ये६२ढक्१२० | १२३. शुभ्रादिभ्यश्च<br>तस्यापत्यमित्यर्थे 'शुभ्र' इत्येवमादिभ्यः प्रतिपदिकेभ्यो ढक् प्रत्ययो भवति। यथायोगमिञादीनामपवादः।<br>शुभ्रस्यापत्यं शौभ्रेयः। विष्टपुरस्यापत्यं वैष्टपुरेयः।<br>शुभ्रादिराकृतिगण इति सूत्रे चकारो बोधयति। तेन गाङ्गेयः, पाण्डवेय इत्यादि सिद्धं भवति। | |
| अपत्ये६२ढक्१२० | १२४. विकर्णकुशीतकात्काश्यपे<br>तस्यापत्यमित्यर्थे विकर्णशब्दात्, कुषीतकशब्दाच्च ढक् प्रत्ययो भवति काश्यपे वाच्ये।<br>विकर्णस्यापत्यं वैकर्णेयः काश्यपश्चेत्, वैकर्णिरन्यः।<br>कुषीतकस्यापत्यं कौषीतकेयः काश्यपश्चेत्, कौषीतकिरन्यः। बाह्वादित्वादिञ्, बाह्वादेराकृतिगणत्वात्। | |
| अपत्ये६२ढक्१२० | १२५. भ्रुवो वुक् च<br>तस्यापत्यमित्यर्थे भ्रूशब्दादपत्ये ढक्प्रत्ययो भवति, तत्सन्नियोगेन च वुगागमः।<br>भ्रूर्नाम काचित्, तस्या अपत्यं भ्रौवेयः। | |
| अपत्ये६२ढक्१२० | १२६. कल्याण्यादीनामिनङ् च<br>तस्यापत्यमित्यर्थे 'कल्याणी' इत्येवमादिभ्यः शब्देभ्यः ढक् प्रत्ययो भवति, तत्सन्नियोगेन तेषां च इनङादेशः।<br>कल्याण्या अपत्यं काल्याणिनेयः। | इनङ् १२७ |
| अपत्ये६२ढक्१२०<br>इनङ् १२६ | १२७. कुलटाया वा<br>तस्यापत्यमित्यर्थे कुलटाशब्दाद् ढक् प्रत्ययो भवति, तत्सन्नियोगेन च इनङादेशो वा भवति।<br>कुलटायाः अपत्यं कौलटिनेयः। पक्षे-'स्त्रीभ्यो ढक्' इति ढक् प्रत्ययः- कौलटेयः।<br>अत्र कुलटाशब्दस्य सती भिक्षुकी इत्यर्थः।<br>या तु व्यभिचारार्थं कुलान्यटति तस्याः अपत्यम् इत्यर्थे क्षुद्राभ्यो वा' इति सूत्रेण द्रक् प्रत्ययो विकल्पेन भवति, पक्षे च 'स्त्रीभ्याो ढक्' इति सूत्रेण ढक् प्रत्ययः इति कौलटेरः, कौलटेयो वा भवति। | |
| अपत्ये ६२ | १२८. चटकाया ऐरक्<br>तस्यापत्यमित्यर्थे चटकाशब्दात् ऐरक् प्रत्ययो भवति।<br>चटकाया अपत्यं चाटकैरः।<br>(वा०) चटकाच्चेति वक्तव्यम्।<br>चटकस्यापत्यं चाटकैरः।<br>(वा०) स्त्रियामपत्ये लुग्वक्तव्यः।<br>चटकाया अपत्यं स्त्री चटका। | |

| | | |
|---|---|---|
| अपत्ये ९२ | १२९. गोधाया ढ्रक्<br>तस्यापत्यमित्यर्थे गोधाशब्दाद् ढ्रक् प्रत्ययो भवति।<br>गोधाया अपत्यं गौधेरः।<br>शुभ्रादिगणेऽपि गोधाशब्दस्य पाठाद् गोधाशब्दात् 'शुभ्रादिभ्यश्च (४.१.१२३) इति सूत्रेण ढक् प्रत्ययोऽपि भवति- गौधेयः। | गोधायाः १३०<br>ढ्रक् १३१ |
| गोधायाः १२९<br>अपत्ये ९२ | १३०. आरगुदीचाम्<br>तस्यापत्यामित्यर्थे गोधाशब्दाद् उदीचामाचार्याणां मते आरक् प्रत्ययो भवति।<br>गोधाया अपत्यं गौधारः।<br>रका सिद्धे आकारोच्चारणमन्यतो विधानार्थम्- जडस्यापत्यं जाडारः। | |
| अपत्ये९२ ढ्रक् १३१ | १३१. क्षुद्राभ्यो वा<br>तस्यापत्यमित्यर्थे क्षुद्रार्थवाचकेभ्यः स्त्रीलिङ्गशब्देभ्यो ढ्रक् प्रत्ययो वा भवति। पक्षे 'स्त्रीभ्यो ढक्' इति सूत्रेण ढक्।<br>काणाया अपत्यं काणेरः, काणेयः।<br>दास्या अपत्यं दासेरः, दासेयः। | |
| अपत्ये९२ ढ्रक् १३१ | १३२. पितृष्वसुश्छण्<br>तस्यापत्यमित्यर्थे पितृष्वसृशब्दात् छण् प्रत्ययो भवति।<br>अणोऽपवादः।<br>पितृष्वसुरपत्यं पैतृष्वस्रीयः। | पितृष्वसुः १३४<br>छण् १३४ |
| अपत्ये ९२<br>पितृष्वसु १३२ | १३३. ढकि लोपः<br>तस्यापत्यमित्यर्थे पितृष्वसृशब्दस्य ढकि परे लोपो भवति। अत एवं ज्ञापकाद् ढक्।<br>पितृष्वसुरपत्यं पैतृष्वसेयः। | ढकि लोपः १३४ |
| छण् १३२<br>अपत्ये९२<br>ढकि लोपः१३३ | १३४. मातृष्वसुश्च<br>पितृष्वसुर्यदुक्तं तन्मातृष्वसुरपि भवति - छण्प्रत्ययः, ढकि लोपश्च।<br>मातृष्वसुरपत्यं मातृष्वस्रीयः मातृष्वसेयः। | |
| अपत्ये ९२ | १३५. चतुष्पाद्भ्यो ढञ्<br>चतुष्पादः = पशुः, तद्विशेषवाचिभ्यः शब्देभ्यः तस्यापत्यमित्यर्थे ढञ् प्रत्ययो भवति।<br>अणादीनामपवादः।<br>कमण्डलूरिति कश्चिन्मृगः, तस्यापत्यं कामण्डलेयः।<br>जम्बुः = शृगालः, तस्यापत्यं जाम्बेयः। | ढञ् १३६ |

| | | |
|---|---|---|
| अपत्ये९२ ढञ्<br>१३५ | १३६. गृष्ट्यादिभ्यश्च<br>तस्यापत्यमित्यर्थे 'गृष्टि' इत्येवमादिशब्देभ्योऽपि ढञ् प्रत्ययो भवति।<br>गृष्टेरपत्यं गार्ष्टेयः।<br>गृष्टिः सकृत्प्रसूता मानुष्यादिरपि, न तु गौरेव। ततः 'चतुष्पाद्भ्यो ढञ्' इति पूर्व सूत्रेण न प्राप्तिः।<br>चतुष्पाद्वाचकात्तु पूर्वेणैव ढञ् सिद्धः।<br>मानुष्यादिवाचकात्तु प्रकृतसूत्रेण। | |
| अपत्ये ९२ | १३७. राजश्वशुराद्यत्<br>तस्यापत्यमित्यर्थे राजन्शब्दात्, श्वशुरशब्दाच्च यत्प्रत्ययो भवति। यथाक्रममणिञोरपवादः।<br>राज्ञोऽपत्यं राजन्यः। श्वशुरत्यापत्यं श्वशुर्यः 'राजन्यः इत्यत्र 'ये चाभावकर्मणोः' इति प्रकृतिभावः।<br>(वा०) राज्ञोऽपत्ये जातिग्रहणम्।<br>राजन्यो भवति, क्षत्रियश्चेत्।<br>राजानोऽन्यः। राजानः इत्यत्र 'प्रादीव्यतोऽण्' इत्यण्, 'अन्' इति सूत्रेण प्रकृतिभावश्च। | |
| अपत्ये ९२ | १३८. क्षत्राद् घः<br>तस्यापत्यमित्यर्थे क्षत्रशब्दाद् घप्रत्ययो भवति। अयमपि जातिशब्द एव।<br>क्षत्रस्यापत्यं क्षत्रियो जातिः।<br>क्षात्रिरन्यः। 'अत इञ्' इतीञ्। | |
| अपत्ये ९२ | १३९. कुलात्खः<br>तस्यापत्यमित्यर्थे कुलशब्दात्, तदन्ताच्च ख प्रत्ययो भवति।<br>उत्तरसूत्रे 'अपूर्वपदात् इति पूर्वपदप्रतिषेधादिह कुलशब्देन तदन्तस्य, केवलस्य च ग्रहणम्।<br>प्रशस्तो वंशः कुलम्; तस्यापत्यं कुलीनः।<br>आढ्यकुलस्यापत्यम् आढ्यकुलीनः। | कुलात् १४० |
| अपत्ये ९२<br>कुलात् १३९ | १४०. अपूर्वपदादन्यतरस्यां यड्ढकञौ<br>तस्यापत्यमित्यर्थे अपूर्वपदात् कुलशब्दादन्यतरस्यां यत्, ढकञ् इत्येतौ प्रत्ययो वा भवतः। ताभ्यां मुक्ते पूर्वसूत्रेण ख प्रत्ययोऽपि।<br>कुल्यः, कौलेयः, कुलीनः। | अपूर्वपदादन्य-तरस्यां१४२ |
| अपत्ये ९२<br>अन्यतरस्याम् १४० | १४१. महाकुलादञ्खञौ<br>तस्यापत्यमित्यर्थे महाकुलशब्दाद् अञ्, खञ् इत्येतौ प्रत्ययौ वा भवतः। पक्षे खप्रत्ययोऽपि।<br>महाकुलस्यापत्यं माहाकुलः, माहाकुलीनः, महाकुलीनः। | |

| | | |
|---|---|---|
| अपत्ये ९२<br>अन्य० १४० | १४२. दुष्कुलाड्ढक्<br>तस्यापत्यमित्यर्थे दुष्कुलशब्दाद् ढक् प्रत्ययो वा भवति। पक्षे खप्रत्ययोऽपि।<br>दुष्कुलस्यापत्यं दौष्कुलेयः, दुष्कुलीनः। | |
| अपत्ये ९२<br>अन्य० १४० | १४३. स्वसुश्छः<br>तस्यापत्यमित्यर्थे स्वसृशब्दाच्छप्रत्ययो भवति।<br>अणोऽपवादः।<br>स्वसुरपत्यं स्वस्रीयः। | छः १४४ |
| अपत्ये ९२ छः १४३ | १४४. भ्रातुर्व्यच्च<br>तस्यापत्यमित्यर्थे भ्रातृशब्दाद् व्यत्प्रत्ययो भवति, चकाराच्छश्च।<br>अणोऽपवादः।<br>भ्रातुरपत्यं भ्रातृव्यः, भ्रात्रीयः। | भ्रातुः १४५ |
| भ्रातुः १४४ | १४५. व्यन्त्सपत्ने<br>भ्रातृशब्दाद् व्यन् प्रत्ययो भवति, प्रकृतिप्रत्यय समुदायेन सपत्ने = शत्रौ वाच्ये।<br>भ्रातृव्यः शत्रुः।<br>अपत्यार्थोऽत्र नास्ति। एवं हि व्यत्प्रत्ययान्तो भ्रातृव्यशब्दो भ्रातुष्पुत्र इत्यर्थस्य वाचको भवति, व्यन्प्रत्ययान्तो भ्रातृव्यशब्दस्तु शत्रुः इत्यर्थवाचकः। तेन यत्र भ्रातुष्पुत्र एव शत्रुर्भवति तत्र भ्रातृव्यो भ्रातृव्य इत्यनयोः सहप्रयोगोऽपि भवति। | |
| अपत्ये ९२ | १४६. रेवत्यादिभ्यष्ठक्<br>तस्यापत्यमित्यर्थे 'रेवती' इत्येवमादिभ्यः शब्देभ्यः ठक् प्रत्ययो भवति।<br>रेवत्या अपत्यं रैवतिकः। अश्वपाल्या अपत्यम् आश्वपालिकः। | ठक् १४७ |
| ठक्१४६<br>अपत्ये ९२ | १४७. गोत्रस्त्रियाः कुत्सने ण च<br>गोत्रं या स्त्री तद्वाचकाच्छब्दाद् णप्रत्ययो भवति, चकाराट्ठक् च कुत्सने गम्यमाने।<br>गोत्रशब्देनात्र 'अपत्यं पौत्रप्रभृति गोत्रम्' (१.४.१६२) इति पारिभाषिकं गोत्रं गृह्यते।<br>पितुरसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य कुत्सा।<br>गर्गस्य गोत्रापत्यं स्त्री गार्गी। गार्ग्याः अपत्यं पुमान् गार्गो जाल्मः, गार्गिको वा।<br>'गोत्राद्यून्यस्त्रियाम्'(४.१.९४) इति वचनाद् अत्र युवापत्ये प्रत्ययः। | कुत्सने १४८<br>गोत्रात् १५० |

| | | |
|---|---|---|
| गोत्रात् १४७<br>कुत्सने १४७<br>अपत्ये ९२ | १४८. वृद्धाट्ठक् सौवीरेषु बहुलम्<br>वृद्धसंज्ञकात् सुवीरदेशोद्भवगोत्राद् बहुलं ठक् प्रत्ययो भवति, कुत्सने गम्यमाने।<br>अत्र वृद्धशब्देन 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' (१.१.७३) इति परिभाषिकं वृद्धं गृह्यते। सौवीरेषु इत्यस्य सुवीरनामकदेशोद्भवेषु इत्यर्थः। तच्च प्रकृतिविशेषणम्।<br>अत्रापि 'गोत्राद्यून्यस्त्रियाम्'(४.१.९४) इति वचनाद् युवापत्ये प्रत्ययः।<br>भगवित्तस्य सौवीरं गोत्रापत्यं भागवित्तिः, तस्यापत्यं युवा भागवित्तिकः। पक्षे 'यञिञोश्च' इति सूत्रेण फक् प्रत्ययः - भागवित्तायनिः। | ठक् १४९<br>सौवीरेषु<br>बहुलम् १५० |
| ठक् १५०<br>सौवीरेषु १५०<br>बहुलम् १५०<br>गोत्रात् १४७ | १४९. फेश्छ च<br>फिञन्तात् सौवीरगौत्रादपत्ये छप्रत्ययो भवति, चकाराट्ठक् च कुत्सने गम्ये।<br>यमुन्दस्यापत्यं यामुन्दायनिः, तिकादित्वात् फिञ्।<br>तस्यापत्यं यामुन्दायनीयः, यामुन्दायनिको वा।<br>अत्रापि 'गोत्राद्यून्यस्त्रियाम्'(४.१.९४) इति वचनाद् युवापत्ये प्रत्ययः। | |
| ठक् १५०<br>सौवीरेषु १५०<br>बहुलम् १५०<br>गोत्रात् १४७ | १५०. फाण्टाहृति-मिमताभ्यां णफिञौ<br>सौवीरगोत्रात् फाण्टाहृतिशब्दात्, मिमतशब्दाच्च अपत्ये ण, फिञ् - इत्येतौ प्रत्ययौ भवतः। सौवीरगोत्रे इत्यस्य सम्बन्धः फाण्टाहृतिशब्देन न तु मिमतशब्देनेति लघुशब्देन्दुशेखरे नागेशः।<br>फाण्टाहृतस्य गोत्रापत्यं फाण्टाहृतिः, 'अत इञ्' इति इञ्। तस्यापत्यं युवा फाण्टाहृतः, फाण्टाहृतायनिः।<br>अत्रापि 'गोत्राद्यून्यस्त्रियाम्'(४.१.९४) इति वचनाद् युवापत्ये प्रत्ययः।<br>मिमतस्यापत्यं मैमतः, मैमतायनिः। | |

| | | |
|---|---|---|
| अपत्ये ९२ | **१५१. कुर्वादिभ्यो ण्यः**<br>तस्यापत्यमित्यर्थे 'कुरु' इत्येवमादिभ्यः शब्देभ्यो ण्यप्रत्ययो भवति।<br>कुरोरपत्यं कौरव्यः। गर्गस्यापत्यं गार्ग्यः।<br>यद्यपि कुरुशब्दात् 'कुरु-नादिभ्यो ण्यः' (४.१.१७०) इति सूत्रेणापि ण्यप्रत्ययोऽपत्ये एव विहितः , तथापि स क्षत्रियाद् भवतीति तद्राजसंज्ञकः, तस्य बहुषु 'तद्राजस्य बहुषु तेनैवास्त्रियाम्'(२.४.६२) इति सूत्रेण बहुषु लुग्भवति। प्रकृतसूत्रेण विहितस्य तु तद्राजसंज्ञकत्वाभावात् तस्य बहुषु लुग् न भवति इत्ययं बहुष्वपि श्रूयते एव-कौरव्याः ब्राह्मणाः। क्षत्रिये तु कुरवः क्षत्रियाः इति। अयमेव अनयोर्भेदः। | ण्यः १५२ |
| अपत्ये ९२<br>ण्यः १५२ | **१५२. सेनान्त-लक्षण-कारिभ्यश्च**<br>तस्यापत्यमित्यर्थे सेनान्तात् प्रातिपदिकाद्, लक्षणशब्दात्, कारिवाचकेभ्यश्च शब्देभ्यो ण्यप्रत्ययो भवति।<br>कारिः = शिल्पी।<br>सेनान्त- हरिषेणस्यापत्यं हारिषेण्यः।<br>लक्षण- लक्षणशब्देऽत्र लक्षणमस्यास्तीत्यर्थे अर्शआद्यच् इति तस्य लक्षणवानित्यर्थः। लक्षणस्यापत्यं लाक्षण्यः।<br>कारिवाचकेभ्यः -तन्तुवायस्यापत्यं तान्तुवाय्यः। कुम्भकारस्यापत्यं कौम्भकार्यः। नापितस्यापत्यं नापित्यः। | से-भ्यः १५३ |
| सेनान्त-लक्षण-कारिभ्यः १५२<br>अपत्ये ९२ | **१५३. उदीचामिञ्**<br>तस्यापत्यमित्यर्थे सेनान्तात् प्रातिपदिकात्, लक्षणशब्दात्, कारिवाचकेभ्यश्च शब्देभ्यः इञ् प्रत्ययो भवति, उदीचामाचार्याणां मतेन।<br>हारिषेणिः। लाक्षणिः। तान्तुवायिः। कौम्भकारिः।<br>(वा०) तक्ष्णोऽण उपसंख्यानम्।<br>तक्ष्णोऽपत्यं ताक्ष्णः।<br>'षपूर्वहन्धृतराज्ञामणि' इति सूत्रेण अल्लोपः।<br>पक्षे 'सेनान्त' इति पूर्वसूत्रेण ण्यः - ताक्ष्ण्यः।<br>'ये चाभावकर्मणोः' इति प्रकृतिभावः। | |
| अपत्ये ९२ | **१५४. तिकादिभ्यः फिञ्**<br>तस्यापत्यमित्यर्थे 'तिक' इत्येवमादिशब्देभ्यः फिञ् प्रत्ययो भवति।<br>तिकस्यापत्यं तैकायनिः। कितवस्यापत्यं कैतवायनिः। | फिञ् १५९ |

| | | |
|---|---|---|
| अपत्ये ९२<br>फिञ् १५४ | १५५. कौशल्य-कार्मार्याभ्यां च<br>कौशल्य-कार्मार्याभ्यां च अपत्ये फिञ् प्रत्ययो भवति। परमप्रकृतेः कोशलशब्दात्, कर्मारशब्दाच्चायं प्रत्ययः इष्यते। प्रत्ययसन्नियोगेन कोशलशब्दस्य कौशल्य इति प्रकृतिरूपं, कर्मारशब्दस्य कार्मार्य इति प्रकृतिरूपं च निपात्येते।<br>कोशलस्यापत्यं कौशल्यायनिः।<br>कर्मारस्यापत्यं कार्मार्यायणिः। | |
| अपत्ये ९२<br>फिञ् १५४ | १५६. अणो द्व्यचः<br>तस्यापत्यमित्यर्थे अणन्ताद् द्व्यचः प्रातिपदिकात् फिञ् प्रत्ययो भवति.।<br>इञोऽपवादः।<br>कर्तुश्छात्रः कार्त्रः 'तस्येदम्' इत्यण्। कार्त्रस्यापत्यं कार्त्रायणिः। एवमेव हार्त्रायणिः। | |
| अपत्ये ९२<br>फिञ् १५४ | १५७. उदीचां वृद्धादगोत्रात्<br>तस्यापत्यमित्यर्थे वृद्धसंज्ञकादगोत्रप्रत्ययान्तात् फिञ् प्रत्ययो भवति, उदीचां मते। आम्रगुप्तस्यापत्यम् आम्रगुप्तायनिः। ग्रामरक्षस्यापत्यं ग्रामरक्षायणिः। प्राचां मते तु आम्रगुप्तिः, ग्रामरक्षिः।<br>'अत इञ्' इति इञ् प्रत्ययः। | उदीचां<br>वृद्धादगोत्रात् १५९ |
| उदीचाम् ५७<br>अपत्ये ९२<br>फिञ् १५४ | १५८. वाकिनादीनां कुक् च<br>तस्यापत्यमित्यर्थे 'वाकिन' इत्येवमादिभ्यः शब्देभ्यः फिञ् प्रत्ययो भवति, तत्सन्नियोगेन चैषां कुगागमो भवति, उदीचामाचार्याणां मते।<br>वाकिनायनिः।<br>वचनम्=वाकः, सोऽस्यास्तीति वाकिनः, अत एव निपातनाद् इनन्। वाकिनस्यापत्यं वाकिनायनिः। | कुक् १५९ |
| उदीचां १५७<br>कुक् १५८<br>वृद्धादगोत्रात् १५७<br>अपत्ये ९२<br>फिञ् १५४ | १५९. पुत्रान्तादन्यतरस्याम्<br>तस्यापत्यमित्यर्थे वृद्धसंज्ञकादगोत्रप्रत्ययान्तात् पुत्रशब्दान्तप्रातिपदिकात् फिञ् प्रत्ययो भवति, तस्मिन्परे कुगागमोऽन्यतरस्यां भवति, उदीचां मते। गार्गीपुत्रस्यापत्यं गार्गीपुत्रकायणिः, गार्गीपुत्रायणिः। प्राचां मते गार्गीपुत्रिः। | |
| अपत्ये ९२ | १६०. प्राचामवृद्धात् फिन् बहुलम्<br>तस्यापत्यमित्यर्थे अवृद्धसंज्ञकात् प्रातिपदिकात् फिन् प्रत्ययो भवति, बहुलम्, प्राचामाचार्याणां मतेऽपि। ग्लुचुकस्यापत्यं ग्लुचुकायनिः। बहुलग्रहणात्क्वचिन्नापि भवति- दक्षस्यापत्यं दाक्षिः। प्लक्षस्यापत्यं प्लाक्षिः। | |

| | | |
|---|---|---|
| | १६१. मनोर्जातावञ्यतौ षुक् च<br>मनुशब्दाद् अञ्, यत्- इत्येतौ प्रत्ययौ भवतः, तत्सन्नियोगेन पुगागमश्च, समुदायेन चेज्जातिर्गम्यते।<br>मानुषः। मनुष्यः।<br>जातिवाचकौ शब्दावेतौ।<br>अपत्यार्थोऽत्र नास्तीति 'तस्यापत्यम्' इति न सम्बध्यतेऽत्र।<br>अपत्यविवक्षायां तु 'मानवी प्रजा' इत्यत्र अण् एव। | |
| | १६२. अपत्यं पौत्रप्रभृति गोत्रम्<br>पौत्रप्रभृति यदपत्यं तद् गोत्रसंज्ञं भवति।<br>गर्गस्यापत्यं पौत्रप्रभृति गार्ग्यः।<br>'गर्गादिभ्यो यञ्' (४.१.१०५) इति सूत्रेण गोत्रे यञ् प्रत्ययः। | अपत्यं पौत्र-प्रभृति१६५ |
| अपत्यं पौत्र-प्रभृति१६२ | १६३. जीवति तु वंश्ये युवा<br>वंश्ये = पित्रादौ जीवति सति, पौत्रप्रभृतेर्यदपत्यं चतुर्थादि, तद्युवसंज्ञमेव भवति, न तु गोत्रसंज्ञम्।<br>वंशः = उत्पादकपितृपितामहादिपरम्परा, तत्र भवो वंश्यः = पित्रादिः। पूर्वसूत्रादनुवृत्तं 'पौत्रप्रभृति' इति प्रथमान्तं पदं षष्ठ्या विपरिणम्यते।<br>गार्ग्यायणः।<br>गर्गस्य पौत्रप्रभृतेस्तदपत्यं यस्य पित्रादिः जीवति इत्यर्थः। | जीवति १६५<br>युवा १६५ |
| अपत्यं १६२<br>पौत्रप्रभृति १६२<br>जीवति १६३<br>युवा१६३ | १६४. भ्रातरि च ज्यायसि<br>ज्येष्ठे भ्रातरि जीवति कनीयान् भ्राता युवसंज्ञो भवति, पौत्रप्रभृतेरपत्यम्।<br>गार्ग्यस्य द्वौ पुत्रौ, तयोः कनीयान् मृते पित्रादौ वंश्येऽपि ज्येष्ठे भ्रातरि जीवति सति युवसंज्ञकः एव भवति। | |

| | | |
|---|---|---|
| अपत्यं १६२<br>पौत्रप्रभृति १६२<br>जीवति १६३<br>युवा१६३ | १६५. वान्यस्मिन् सपिण्डे स्थविरतरे जीवति<br>भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेर्यदपत्यं तच्चेद् जीवति तदा तद् युवसंज्ञं वा भवति।<br>पितृव्ये, पितामहभ्रातरि, मातुले वा जीवति गर्गस्य पौत्रप्रभृतेः जीवदपत्यं गार्ग्यायणः, गार्ग्यो वा।<br>'सप्तपुरुषावधि पितृकुले सपिण्डाः, मातृकुले च पञ्चपुरुषावधि' इति लघुशब्देन्दुशखरे। स्थविरतरः = स्थानेन (सम्बन्धेन, पदेन वा) वयसा च वृद्धः।<br>'जीवति' इति शत्रन्तं सप्तम्यन्तमनुवर्तते, तच्च सपिण्डे इत्यस्य विशेषणम्, सूत्रे उच्चारितं च 'जीवति' इति पदं तिङन्तम्, तच्च अपत्येऽन्वेति। एवं हि सूत्रस्योक्तार्थः सम्पद्यते।<br>अस्मिन् सूत्रे सपिण्डपदेन पितृव्यादयः, मातुलादयश्च गृह्यन्ते न तु पित्रादयः, 'जीवति तु वंश्ये युवा'(४.१.१६३) इति पूर्वसूत्रेण जीवति वंश्ये पित्रादौ पौत्रप्रभृतेर्यदपत्यं तस्य नित्यं युवसंज्ञायाः विधानात्।<br>(वा०) वृद्धस्य च पूजायाम्।,<br>वृद्धमिति गोत्रस्य प्राचां संज्ञा। एवं हि वार्तिकस्यार्थो भवति-पूजायां गम्यमानायां गोत्रस्य युवसंज्ञा भवति। तत्रभवान् गार्ग्यायणः। गार्ग्य इत्यर्थः।<br>(वा०) यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम्।<br>गार्ग्यो जाल्मः। | |

| | | |
|---|---|---|
| अपत्ये ९२ | **१६६. जनपदशब्दात्क्षत्रियादञ्**<br>यः जनपदशब्दः क्षत्रियवाचकोऽपि तस्मात् तस्यापत्यमित्यर्थेऽञ् प्रत्ययो भवति।<br>पञ्चालो नाम देशो, राजा च। तस्य राज्ञोऽपत्यं पाञ्चालः। इक्ष्वाकुर्नाम देशो, राजा च, तस्य राज्ञोऽपत्यम् ऐक्ष्वाकवः। विदेहो नाम देशो, राजा च , तस्य राज्ञोऽपत्यं वैदेहः।<br>(वा०) क्षत्रियसमानशब्दाज्जनपदशब्दात् तस्य राजन्यपत्यवत्।<br>पञ्चालानां राजा पाञ्चालः। इक्ष्वाकूणां राजा ऐक्ष्वाकवः। विदेहानां राजा वैदेहः।<br>(वा०) पूरोरण् वक्तव्यः।<br>पूरोरपत्यं पौरवः।<br>पूरुशब्दो न जनपदवाचीति प्राग्दीव्यतीयेऽणि सिद्धे 'ते तद्राजाः' (४.१.१७२) इति सूत्रेण तद्राजसंज्ञार्थं वचनमिदं भाष्ये पठितम्।<br>(वा०) पाण्डोर्जनपदशब्दात् क्षत्रियाड्ड्यण्।<br>पाण्डोरपत्यं, पाण्डुदेशस्य वा राजा पाण्ड्यः।<br>पाण्डुशब्दो नात्र युधिष्ठिरपितृवाचकः जनपदादित्युक्तेः, तत्र पाण्डव इत्येव। | जनपदशब्दात्<br>क्षत्रियात् १७६<br>अञ् १६७ |
| जनपदशब्दात् १६६<br>क्षत्रियात् १६६<br>अञ् १६७<br>अपत्ये ९२ | **१६७. साल्वेय-गान्धारिभ्यां च**<br>जनपदक्षत्रिययोर्वाचकाभ्यां साल्वेय-गान्धारिभ्यां च तस्यापत्यमित्यर्थे, तस्य राजा इत्यर्थे च अण् प्रत्ययो भवति।<br>साल्वेयस्यापत्यं, साल्वेयानां राजा वा साल्वेयः। गान्धारेरपत्यं, गान्धारीणां राजा वा गान्धारः। | |
| जनपदशब्दात् १६६<br>क्षत्रियात् १६६<br>अपत्ये ९२ | **१६८. द्व्यञ्-मगध-कलिङ्ग-सूरमसादण्**<br>जनपदक्षत्रिययोर्वाचकेभ्यः द्व्यच्कप्रातिपदिकेभ्यः, मगध, कलिङ्ग, सूरमस-इत्येतेभ्यश्च प्रातिपदिकेभ्यः तस्यापत्यमित्यर्थे, तस्य राजा इत्यर्थे च अण् प्रत्ययो भवति।<br>द्व्यच्केभ्यः - अङ्गस्यापत्यं, अङ्गानां राजा वा आङ्गः। बङ्गस्यापत्यं, बङ्गानां राजा वा बाङ्गः। मगधदिभ्यः - मागधः। कालिङ्गः। सौरमसः। | |

| | | |
|---|---|---|
| जनपदशब्दात् १६६<br>क्षत्रियात् १६६<br>अपत्ये ९२ | १६९. वृद्धेत्कोसलाजादाञ्ञ्यङ्<br>जनपदक्षत्रिययोर्वाचकेभ्यः वृद्धसंज्ञकशब्देभ्यः, इकारान्तात्, कोसल,अजाद- इत्येताभ्यां शब्दाभ्यां च तस्यापत्यमित्यर्थे, तस्य राजेत्यर्थे च ञ्यङ् प्रत्ययो भवति।<br>वृद्ध - आम्बष्ठस्यापत्यं, आम्बष्ठानां राजा वा आम्बष्ठ्यः।<br>इत् - अवन्तेरपत्यम्, अवन्तीनां राजा वा आवन्त्यः।<br>कोसल -कोसलस्यापत्यं, कोसलानां राजा वा कौसल्यः।<br>अजाद - अजादस्यापत्यम्, अजादानां राजा वा आजाद्यः। | |
| जनपदशब्दात् १६६<br>क्षत्रियात् १६६<br>अपत्ये ९२ | १७०. कुरु-नादिभ्यो ण्यः<br>जनपद-क्षत्रिययोर्वाचकात् कुरुशब्दाद्, नकारादिशब्दाच्च तस्यापत्यमित्यर्थे, तस्य राजेत्यर्थे च ण्यप्रत्ययो भवति।<br>कुरोरपत्यं, कुरूणां राजा वा कौरव्यः।<br>नकारादिशब्दात् - निषधस्यापत्यं, निषधानां राजा वा नैषध्यः। | |
| जनपदशब्दात् १६६<br>क्षत्रियात् १६६<br>अपत्ये ९२ | १७१. साल्वावयव-प्रत्यग्रथ-कलकूटाश्मकादिञ्<br>जनपद-क्षत्रिययोर्वाचकेभ्यः साल्वावयवेभ्यः, प्रत्यग्रथ, कलकूट, अश्मक- इत्येतेभ्यः शब्देभ्यश्च तस्यापत्यमित्यर्थे, तस्य राजेत्यर्थे च इञ् प्रत्ययो भवति।<br>एते हि साल्वावयवाः -<br>उदुम्बरास्तिलखलाः मद्रकारा युगन्धराः।<br>भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः।<br>उदुम्बरस्यापत्यम्, उदुम्बराणां राजा वा औदुम्बरिः।<br>एवमेव - तैलखलिः। माद्रकारिः। यौगन्धरिः। भौलिङ्गिः। शारदण्डिः।<br>प्रत्यग्रादिभ्यः - प्रात्यग्रथिः। कालकूटिः। आश्मकिः। | |

| | | |
|---|---|---|
| | **१७२. ते तद्राजाः**<br>ते = अञादयः प्रत्ययाः तद्राजसंज्ञकाः भवन्ति।<br>'जनपदशब्दात् क्षत्रियादञ्' (४.१.१६६) इत्यारभ्य साल्वावयवप्रत्यग्रथ-कलकूटाश्मकादिञ्, (४.१.१७१) इति सूत्रपर्यन्तं ये प्रत्ययाः उक्तास्ते तदिति सर्वनाम्ना गृह्यन्ते, न तु पूर्वैः सूत्रैः विहिताः प्रत्ययाः, गोत्र-युवसंज्ञाप्रकरणेन व्यवहितत्वात्।<br>तद्राजसंज्ञकप्रत्ययानां बहुत्वेऽर्थे लुग्भवति 'तद्राजस्य बहुषु तेनैवाऽस्त्रियाम्' (२.४.६२) इति सूत्रेण।<br>पञ्चालस्यापत्यानि बहूनि इति पञ्चालाः। एवमेव इक्ष्वाकवः, बङ्गाः, मगधाः इत्यादि। | तद्राजाः १७६ |
| तद्राजस्य १७२ | **१७३. कम्बोजाल्लुक्**<br>कम्बोजशब्दात्परस्य तद्राजस्य लुग्भवति। अबहुत्वार्थं सूत्रम्।<br>कम्बोजस्यापत्यं कम्बोजः। कम्बोजौ। 'जनपदशब्दात्' इति सूत्रेण विहितस्याञो लुक्।<br>(वा०) कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम्।<br>चोल-शकौ देशविशेषौ, राजविशेषौ च।<br>चोलस्यापत्यं, चोलानां राजा वा चोलः। शकस्यापत्यं, शकानां राजा वा शकः। द्व्यज्लक्षणस्याणो लुक्।<br>एवमेव केरलः। यवनः। 'जनपदशब्दात्' इति सूत्रेण विहितस्याञो लुक्। | लुक् १७६ |
| तद्राजस्य १७२<br>लुक् १७३ | **१७४. स्त्रियामवन्ति-कुन्ति-कुरुभ्यश्च**<br>अवन्ति-कुन्ति-कुरुशब्देभ्य उत्पन्नस्य तद्राजस्य स्त्रियामभिधेयायां लुग्भवति।<br>अवन्तेरपत्यं स्त्री, राज्ञी वा अवन्ती। 'वृद्धेत्कोसले' ति ञ्यङोऽनेन लुकि 'इतो मनुष्यजातेः इत्यनेन ङीष्।<br>कुरोरपत्यं स्त्री, राज्ञी वा कुरूः।<br>'कुरु-नादिभ्यो ण्यः' इति सूत्रेण विहितस्य ण्यस्य लुकि 'ऊङुतः' इति सूत्रेण ऊङ्। | स्त्रियाम् १७६ |
| तद्राजस्य १७२<br>लुक् १७३<br>स्त्रियाम् १७४ | **१७५. अतश्च**<br>तद्राजसंज्ञकस्य अकारप्रत्ययस्य स्त्रियामभिधेयायां लुग्भवति।<br>शूरसेनस्यापत्यं स्त्री, राज्ञी वा शूरसेनी।<br>'जनपदशब्दात्क्षत्रियादञ्' (४.१.१६६) इति सूत्रेण विहितस्य अञो लुकि प्रत्ययलक्षणेन अञन्तत्वात् राज्ञी इत्यर्थे 'टिड्ढाणञ् इति सूत्रेण ङीप्, अपत्यार्थे तु 'जातेरस्त्री' इति ङीष्। एवमेव मद्री। | |

| | | |
|---|---|---|
| तद्राजस्य १७२<br>लुक् १७३<br>स्त्रियाम् १७४ | १७६. न प्राच्य-भर्गादि-यौधेयादिभ्यः<br>प्राच्य-भर्गादि-यौधेयादिभ्यो विहितस्य तद्राजसंज्ञकप्रत्ययस्य लुग् न भवति, स्त्रियामभिधेयायाम्।<br>प्राच्येभ्यः - पञ्चालस्यापत्यं स्त्री, राज्ञी वा पाञ्चाली। एवमेव- वैदेही। आङ्गी। बाङ्गी। मागधी।<br>भर्गादिभ्यः - भर्गस्यापत्यं स्त्री, राज्ञी वा भार्गी। एवमेव- कारुशी। कैकेयी।<br>यौधेयादिभ्यः - यौधेयी। शौभ्रेयी। शौक्रेयी। युधा, शुभ्रा, शुक्रा- इत्येतेभ्यः 'द्व्यचः'(४.१.१२१) इति सूत्रेण ढक्, ततः स्वार्थे 'पार्श्वादियौधेयादिभ्यो ऽणञौ'(५.३.११६) इति सूत्रेण अञ्। तस्य च 'ञ्यादस्तद्राजाः' इति सूत्रेण तद्राजसंज्ञा, तस्य पूर्वसूत्रेण प्राप्तो लुक् प्रतिषिध्यते ऽनेन। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां चतुर्थाध्यायस्य प्रथमः पादः ।।

।। श्रीः ।।

# ।। अथ चतुर्थाध्यायस्य द्वितीयः पादः ।।

| | | |
|---|---|---|
| अणू ४.१.८३ | १. तेन रक्तं रागात्<br>'तेन रक्तम्' इत्यर्थे रञ्जनद्रव्यवाचकात् शब्दाद् यथाविहितं प्रत्ययो भवति।<br>रज्यतेऽनेनेति रागः रञ्जनद्रव्यमित्यर्थः।<br>कषायो धातुविशेषः रञ्जनद्रव्यम्, कषायेण रक्तं काषायम् वस्त्रम्। माञ्जिष्ठम्। कौसुम्भम्।<br>प्राग्दीव्यतोऽण्।<br>रागादिति किम् ? देवदत्तेन रक्तं वस्त्रम्। | तेन १३<br>रक्तं रागात् २ |
| तेन १ रक्तं १<br>रागात्१ | २. लाक्षारोचनाट्ठक्<br>रञ्जनद्रव्यवाचकाभ्यां लाक्षा, रोचना-इति शब्दाभ्यां तेन रक्तमित्यर्थे ठक् प्रत्ययो भवति।<br>अणोऽपवादः।<br>लाक्षया रक्तं वस्त्रं लाक्षिकम्। रोचनया रक्तं रौचनिकम्।<br>(वा०) शकल-कर्दमाभ्यामुपसंख्यानम्।<br>शकलं रञ्जनद्रव्यविशेषः, तेन रक्तं शाकलिकम्।<br>कर्दमः = पङ्कः, तेन रक्तं कार्दमिकम्।<br>आभ्यामणपीति वृत्तिकारः।<br>शाकलम्। कार्दमम्।<br>(वा०) नील्या अन् वक्तव्यः।<br>नीली ओषधिविशेषः। नील्या रक्तं नीलं वस्त्रम्।<br>(वा०) पीतात्कन् वक्तव्यः।<br>पीतं हरितातिकादि द्रव्यम्, तेन रक्तं पीतकम्।<br>(वा०) हरिद्रा-महारजनाभ्यामञ् वक्तव्यः।<br>हरिद्रा प्रसिद्धा, तया, रक्तं हारिद्रम्। महारजनं नाम रञ्जनद्रव्यविशेषः, तेन रक्तं माहारजनम्। | |

| | | |
|---|---|---|
| तेन १ अण् ४.१.८३ | ३. नक्षत्रेण युक्तः कालः<br>अश्विन्यादिनक्षत्रयुक्तेन चन्द्रमसा युक्तः कालः इत्येतस्मिन्नर्थे नक्षत्रविशेषवाचकात् शब्दाद् यथाविहितं प्रत्ययो भवति।<br>नक्षत्रकालयोर्नित्यत्वात्, कालस्य च सर्वगतत्वाद् अप्राप्तिपूर्वकप्राप्तिरूपयोगस्य असम्भवात् सूत्रेऽस्मिन् नक्षत्रशब्देन लक्षणया नक्षत्रयुक्तचन्द्रमसो ग्रहणम्।<br>पुष्येण = पुष्यनक्षत्रयुक्तचन्द्रमसा युक्तमहः, पौषमहः। पौषी रात्रिः।<br>प्राग्दीव्यतोऽण्। | नक्षत्रेण युक्तः कालः ६ |
| नक्षत्रेण ३ युक्तः ३ कालः ३ | ४. लुबविशेषे<br>पूर्वसूत्रेण विहितस्य लुब् भवति, षष्टि दण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते।<br>अद्य पुष्यः। अद्य कृत्तिकाः। | लुप् ५ |
| लुप् ५ नक्षत्रेण ३ युक्तः ३ कालः ३ | ५. संज्ञायां श्रवणाश्वत्थाभ्याम्<br>श्रवणशब्दाद्, अश्वत्थशब्दाच्चोत्पन्नस्य प्रत्ययस्य लुब् भवति, संज्ञायां विषये।<br>श्रवणेन = श्रवणयुक्तचन्द्रमसा युक्ता रात्रिः श्रवणा रात्रिः।<br>अश्वत्थो नाम अश्विनीनक्षत्रम्, तेन युक्तो मुहूर्तः अश्वत्थो मुहूर्तः। | |
| नक्षत्रेण ३ युक्तः ३ कालः ३ | ६. द्वन्द्वाच्छः<br>तेन युक्तः कालः इत्यर्थे नक्षत्रद्वन्द्वाच्छप्रत्ययो भवति।<br>तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू ताभ्यां युक्तमहः तिष्यपुनर्वसवीयमहः।<br>राधा (विशाखा) च अनुराधाश्च राधानुराधाः तद्युक्ता रात्रिः राधानुराधीया रात्रिः। | |
| तेन १ अण् ४.१.८३ | ७. दृष्टं साम<br>तेन दृष्टं सामेत्यर्थे तृतीयान्ताद् यथाविहितं प्रत्ययो भवति।<br>वसिष्ठेन दृष्टं साम वासिष्ठम्। विश्वामित्रेण दृष्टं साम वैश्वामित्रम्।<br>प्राग्दीव्यतोऽण्।<br>(वा०) अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः।<br>उशनसा दृष्टम् - औशनम्, औशनसम् वा साम। | दृष्टं साम ६ |

| | | |
|---|---|---|
| तेन १ दृष्टं ७<br>साम ७ | ८. कलेर्ढक्<br>तेन दृष्टं सामेत्यर्थे कलिशब्दाद् ढक् प्रत्ययो भवति।<br>कलिना दृष्टं कालेयं साम।<br>(वा०) सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः।<br>प्राग्दीव्यतीयेषु सर्वेष्वर्थेषु अग्निशब्दात्, कलिशब्दाच्च ढक्प्रत्ययो भवति।<br>अग्निना दृष्टम् आग्नेयम्। एवमग्नौ भवम्, अग्नेरागतम्, अग्नेः स्वम् इति सर्वत्र ढगेव भवति। तथैव कलिना दृष्टम्, कालेयम्। कलौ भवम्, कलेरागतम्, कलेः स्वम् इति सर्वत्र ढगेव भवति। | |
| तेन १ दृष्टं ७<br>साम ७ | ९. वामदेवाड् ड्यड्ड्यौ<br>तेन दृष्टं सामेत्यर्थे वामदेवशब्दाद् ड्यत्, ड्य इत्येतौ प्रत्ययौ भवतः।<br>तित्करणं स्वरार्थम्।<br>वामदेवेन दृष्टं साम वामदेव्यं साम। | |
| तेन १ अण्४.१.८३ | १०. परिवृतो रथः<br>तेन परिवृतो रथः इत्यर्थे तृतीयान्ताद् यथाविहितं प्रत्ययो भवति।<br>वस्त्रेण परिवृतो रथः वास्त्रो रथः। कम्बलेन परिवृतो रथः काम्बलो रथः।<br>प्राग्दीव्यतोऽण्। | परिवृतः रथः १२ |
| तेन १ परिवृतः १०<br>रथः १० | ११. पाण्डुकम्बलादिनिः<br>तेन परिवृतो रथ इत्यर्थे पाण्डुकम्बलशब्दाद् इनिप्रत्ययो भवति।<br>पाण्डुकम्बलशब्दो राजास्तरणस्य वर्णकम्बलस्य वाचकः।<br>पाण्डुकम्बलेन परिवृतो रथः पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिनः। | |
| तेन १ परिवृतः १०<br>रथः १० | १२. द्वैपवैयाघ्रादञ्<br>तेन परिवृतो रथ इत्यर्थे द्वैपशब्दाद्, वैयाघ्रशब्दाच्च अञ् प्रत्ययो भवति।<br>द्वैपेन =व्याघ्रचर्मणा परिवृतो रथो द्वैपो रथः।<br>एवमेव वैयाघ्रेण = व्याघ्रचर्मणा परिवृतो रथो वैयाघ्रो रथः।<br>द्वीपी = व्याघ्रः, तस्य विकारश्चर्मेत्यर्थे 'प्राणिरजतादिभ्योऽञ्' इति अञ् प्रत्यये कृते निष्पन्नस्य द्वैपशब्दस्य व्याघ्रचर्मेत्यर्थः | |

| | | |
|---|---|---|
| अण् ४.१.८३ | १३. कौमारापूर्ववचने<br>अपूर्ववचने वर्तमानात् कुमारीशब्दाद् अण् प्रत्ययं कृत्वा 'कौमार' इति शब्दो निपात्यतेऽनेन।<br>कौमार इति लुप्तप्रथमाकं पदम्।<br>अपूर्वपतिं कुमारीं पतिरुपपन्नः इति कौमारः पतिः।<br>अत्र कुमारीशब्दाद् द्वितीयासमर्थादुपयन्तरि प्रत्ययः।<br>अपूर्वपतिः कुमारी पतिमुपपन्ना इतिं कौमारी भार्या।<br>अत्र प्रथमान्तादेव कुमारीशब्दात् उपयमनविशिष्टे स्वार्थे प्रत्ययः अपूर्वत्वद्योतनाय। | |
| अण् ४.१.८३ | १४. तत्रोद्धृतममत्रेभ्यः<br>'तत्रोद्धृतम्' इत्येतस्मिन्नर्थे अमत्रवाचकेभ्यः शब्देभ्यः सप्तम्यन्तेभ्यः यथाविहितं प्रत्ययो भवति।<br>उद्धरतिरिहोद्धरणपूर्वके निधाने वर्तते। अमत्रम् = भाजनं, पात्रमुच्यते।<br>शरावेषु उद्धृत ओदनः शाराव ओदनः।<br>स्थाल्यादिपात्रविशेषाद् उद्धृत्य शरावेषु निहित ओदन इत्यर्थः। प्राग्दीव्यतोऽण्। | तत्र २० |
| तत्र १४<br>अण् ४.१.८३ | १५. स्थण्डिलाच्छयितरि व्रते<br>'तत्र शयिता' इत्यर्थे स्थण्डिल इति सप्तम्यन्ताद् यथविहितं प्रत्ययो भवति, प्रकृतिप्रत्ययसमुदायेन चेद् व्रतं गम्यते।<br>स्थण्डिले शेते स्थाण्डिलो भिक्षुः।<br>प्राग्दीव्यतोऽण्। | |
| तत्र १४<br>अण् ४.१.८३ | १६. संस्कृतं भक्षाः<br>'तत्र संस्कृतम्' इत्यर्थे सप्तम्यन्ताद् यथाविहितं प्रत्ययो भवति, यत्संस्कृतं, भक्षाश्च ते स्युः।<br>भक्ष्यन्ते इति भक्षाः, कर्मणि घञ्।<br>भोजनादिरूपोपयोगफला क्रिया संस्कारः, न तु गुणाधानमेवेति लघुशब्देंनुशेखरे नागेशः।<br>भ्राष्ट्रे संस्कृता भ्राष्ट्रा यवाः। अष्टसु कपालेषु संस्कृतः पुरोडाशः, अष्टाकपालः पुरोडाशः।<br>प्राग्दीव्यतोऽण्।<br>अष्टाकपाल इत्यत्र 'तद्धितार्थोत्तरपदसमाहारे च' इति द्विगुसमासः, 'द्विगोर्लुगनपत्ये' इति तद्धितस्याणो लुक्। | संस्कृतं भक्षाः २० |

| | | |
|---|---|---|
| तत्र १४ संस्कृतम् १६ भक्षाः १६ | १७. शूलोखाद्यत्<br>तत्र संस्कृतमित्यर्थे शूलशब्दाद्, उखाशब्दाच्च सप्तम्यन्ताद् यत् प्रत्ययो भवति, यत्संस्कृतं भक्षाश्च ते स्युः।<br>शूलं = तीक्ष्णाग्रं लौहदण्डम्, तत्र संस्कृतं मांसं शूल्यं मांसम्।<br>उखा = पात्रविशेषः, तस्यां संस्कृतम् उख्यम्। | |
| तत्र १४ संस्कृतम् १६ भक्षाः १६ | १८. दध्नष्ठक्<br>तत्र संस्कृतमित्यर्थे सप्तम्यन्ताद् दधिशब्दात् ठक् प्रत्ययो भवति, यत्संस्कृतं भक्षाश्च ते स्युः।<br>दध्नि संस्कृतं दाधिकम्। | ठक् १६ |
| तत्र १४ संस्कृतम् १६ भक्षाः १६ ठक् १८ | १९. उदश्वितोऽन्यतरस्याम्<br>तत्र संस्कृतमित्यर्थे उदश्वित् इति शब्दात् सप्तम्यन्ताद् ठक् प्रत्ययो वा भवति।<br>पक्षे यथाप्राप्तं प्राग्दीव्यतोऽण्।<br>उदश्वित् = तक्रम्। तस्मिन् संस्कृतम् औदश्वित्कम्। औदश्वितम्। | |
| तत्र १४ संस्कृतम् १६ भक्षाः १६ ठक् १८ | २०. क्षीराड्ढञ्<br>तत्र संस्कृतमित्यर्थे सप्तम्यन्तात् क्षीरशब्दाद् ढञ् प्रत्ययो भवति, यत्संस्कृतं भक्षाश्च ते स्युः।<br>क्षीरे संस्कृता क्षैरेयी यवागूः। | |
| अण् ४.१.८३ संज्ञायाम् २१ | २१. सास्मिन् पौर्णमासीति संज्ञायाम्<br>सा पौर्णमासी अस्मिन् इत्यर्थे प्रथमान्ताद् यथाविहितं प्रत्ययो भवति संज्ञायाम्।<br>पुष्येण युक्ता पौषी पौर्णमासी, पौषी पौर्णमासी अस्मिन् मासे इति पौषो मासः। माघी पौर्णमासी अस्मिन् मासे इति माघो मासः। एवमेव फाल्गुनः, चैत्रः इत्यादयः।<br>प्राग्दीव्यतोऽण्। | सम्पूर्णसूत्रम् २३ |

| | | |
|---|---|---|
| सास्मिन् २१<br>पौर्णमासीति २१<br>संज्ञायाम् २१ | **२२. आग्रहायण्यश्वत्थाट्ठक्**<br>सा पौर्णमासी अस्मिन् इत्यर्थे प्रथमान्ताद् आग्रहायणीशब्दात्, अश्वत्थशब्दाच्च ठक् प्रत्ययो भवति।<br>अग्रे हायनमस्या इति आग्रहायणी प्रज्ञादेराकृतिगणत्वादण्, 'पूर्वपदात्संज्ञायाम्' इति णत्वम्। आग्रहायणी पौर्णमासी अस्मिन् इति आग्रहायणिको मासः।<br>अश्वत्वेन युक्ता पौर्णमासी इति अश्वत्थः, निपातनात्पौर्णमास्यामपि 'नक्षत्रेण युक्तः कालः' इति सूत्रेण विहितस्याणो लुप्। अश्वत्थः पौर्णमासी अस्मिन् इति आश्वत्थिको मासः।<br>आश्विनो मास इत्यर्थः। | ठक् २३ |
| सास्मिन् २१<br>ठक् २२<br>पौर्णमासीति २१<br>संज्ञायाम् २१ | **२३. विभाषा फाल्गुनी-श्रवणा-कार्तिकी-चैत्रीभ्यः**<br>सा पौर्णमासी अस्मिन् इत्यर्थे फाल्गुन्यादिभ्यः प्रथमान्तेभ्यः विभाषा ठक् प्रत्ययो भवति। पक्षे यथाप्राप्तमण्।<br>फाल्गुनी पौर्णमासी अस्मिन् मासे इति फाल्गुनिको मासः, फाल्गुनो वा।<br>एवमेव श्रावणिको मासः श्रावणो वा। कार्तिकिको मासः, कार्तिको वा। चैत्रिको मासः, चैत्रो वा। | |
| अण् ४.१.८३ | **२४. साऽस्य देवता**<br>सा देवता अस्येत्यर्थे प्रथमान्ताद् यथाविहितं प्रत्ययो भवति।<br>इन्द्रो देवताऽस्य इति ऐन्द्रं हविः।<br>प्राग्दीव्यतोऽण्।<br>एवमेव पाशुपतम्।<br>'अश्वपत्यादिभ्यश्च' इत्यण्।<br>वार्हस्पत्यम्। 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यः।<br>आदित्यो देवता अस्य इति आदित्यं हविः।<br>'दित्यदित्यादित्य०' इति ण्यः, 'हलो यमां यमि लोपः' इति सूत्रेण एकस्य यकारस्य लोपः।<br>'सा' इति प्रकृते पुनरत्र 'सा' इति समर्थविभक्ति निर्देशः संज्ञानिवृत्यर्थः। | साऽस्य देवता ३५ |

| | | |
|---|---|---|
| साऽस्य २४<br>देवता २४ | २५. कस्येत्<br>'साऽस्य देवता' इत्यर्थे कशब्दाद् यथाविहितम् अण्प्रत्यये कृते तत्सन्नियोगेन 'क' इति प्रकृतेरिकारान्तादेशो भवति।<br>कः = ब्रह्मा देवताऽस्येति कायं हविः। | |
| सास्य २४<br>देवता २४ | २६. शुक्राद्घन्<br>'साऽस्य देवता' इत्यर्थे शुक्राद् घन् प्रत्ययो भवति।<br>शुक्रियं हविः। शुक्रियोऽध्यायः। | |
| साऽस्य २४<br>देवता २४ | २७. अपोनप्त्रपान्नप्तृभ्यां घः<br>'साऽस्य देवता' इत्यर्थे अपोनपात्, अपान्नपात् -इति शब्दाभ्यां घप्रत्ययो भवति। प्रत्ययसन्नियोगेन च अपोनपात् शब्दस्य अपोनप्तृ, अपान्नपात् शब्दस्य च अपान्नप्तृ इति निपातनं भवति।<br>अपोनपाद् देवताऽस्येति अपोनप्त्रियं हविः।<br>अपान्नपाद् देवताऽस्येति अपान्नप्त्रियं हविः। | अपोनप्त्र-<br>पान्नप्तृभ्याम् २८ |
| साऽस्य २४<br>देवता २४<br>अपोनप्त्रपान्न-<br>प्तृभ्याम्२७ घः २७ | २८. छ च<br>पूर्वसूत्रविषये छप्रत्ययोऽपि भवति।<br>योगविभागः संख्यातानुदेशपरिहारार्थः।<br>अपोनप्त्रीयं हविः। अपान्नप्त्रीयं हविः।<br>(वा०) शतरुद्राद् घश्च।<br>चकाराच्छः।<br>शतं रुद्रा देवता अस्येति शतरुद्रियम्।<br>शतरुद्रीयम्।<br>(वा०) छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम्।<br>पैङ्गाक्षीपुत्रीयम्।<br>तार्णविन्दवीयम्। तार्णबिन्दुः देवताऽस्येति विग्रहः।<br>(वा०) शंतरुद्राद्घश्च।<br>चकाराच्छः।<br>शतं रुद्रा देवता अस्येति शतरुद्रियम्। शरुद्रीयम्।<br>उभयत्र 'तद्धितार्थ' इति द्विगुसमासः।<br>घच्छयोर्विधानसामर्थ्याद् 'द्विगोर्लुगनपत्ये' इति न लुक्। | छ २९ |
| साऽस्य २४<br>देवता २४<br>अपोनप्त्रपान्नप्तृ-<br>भ्याम् २७ घः २७<br>छ २८ | २९. महेन्द्राद् घाणौ च<br>सास्य देवता इत्यर्थे महेन्द्राद् घ,अण्-इत्येतौ च प्रत्ययौ भवतः, चकारच्छश्च।<br>महेन्द्रियम्, माहेन्द्रम्, महेन्द्रीयम् वा हविः। | |

| | | |
|---|---|---|
| साऽस्य २४<br>देवता २४ | ३०. सोमाट् ट्यण्<br>'साऽस्य देवता' इत्यर्थे सोमात् ट्यण् प्रत्ययो भवति।<br>सौम्यं हविः। | |
| साऽस्य २४<br>देवता २४ | ३१. वाय्वृतुपित्रुषसो यत्<br>'साऽस्य देवता' इत्यर्थे वाय्वृतुपित्रुषसो यत् प्रत्ययो भवति।<br>वायव्यम्। ऋतव्यम्। पित्र्यम्। उषस्यम्।<br>'पित्र्यम्' इत्यत्र पितरो देवता अस्य इत्यर्थे पितृशब्दात् यत्प्रत्यये कृते 'रीङृतः' इति ऋकारस्य रीङ् इत्यादेशः, पित्री य इत्यवस्थायां 'यस्येति च' इति ईकारस्य लोपः। | यत् ३२ |
| साऽस्य २४<br>देवता २४ यत् ३१ | ३२. द्यावापृथिवी-शुनासीर-मरुत्वदग्नीषोम-वास्तोष्पति-गृहमेधाच्छ च<br>'साऽस्य देवता' इत्यर्थे द्यावापृथिवी, शुनासीर, मरुत्वत्, अग्नीषोम, वास्तोष्पति, गृहमेध, इत्येतेभ्यः छप्रत्ययश्च भवति। चकाराद् यच्च।<br>द्यावापृथिवीयम्, द्यावापृथिव्यम्। शुनासीरीयम्, शुनासीर्यम्। मरुत्वतीयम्, मरुत्वत्यम्। अग्नीषोमीयम्, अग्नीषोम्यम्। वास्तोष्पतीयम्, वास्तोष्पत्यम्। गृहमेधीयम्, गृहमेध्यम्। | |
| साऽस्य २४<br>देवता २४ यत् ३१ | ३३. अग्नेर्ढक्<br>'साऽस्य देवता' इत्यर्थे अग्नेर्ढक् प्रत्ययो भवति।<br>आग्नेयम्।<br>(वा०) सर्वत्राग्निकलिभ्यां ढग्वक्तव्यम्।<br>व्याख्यातमिदं 'कलेर्ढक्' (४.२.८) इति सूत्रे। | |
| साऽस्य २४<br>देवता २४ यत् ३१ | ३४. कालेभ्यो भववत्<br>'साऽस्य देवता' इत्यर्थे कालेभ्यो भववत् प्रत्ययाः भवन्ति।<br>मासो देवताऽस्य इति मासिकम्। अर्द्धमासिकम्। सांवत्सरिकम्। वासन्तम्। प्रावृषेण्यम्। | |

| | | |
|---|---|---|
| साऽस्य २४<br>देवता २४ यत् ३१ | ३५. महाराज-प्रोष्ठपदाट्ठञ्<br>'साऽस्य देवता' इत्यर्थे महाराज-प्रोष्ठपदात् ठञ् प्रत्ययो भवति।<br>माहाराजिकम्। प्रौष्ठपदिकम्।<br>(वा०) ठञ् प्रकरणे तदस्मिन् वर्तते इति नवयज्ञादिभ्य उपसंख्यानम्।<br>नवयज्ञो = नूतनधान्यद्रव्यको यज्ञः आग्रयणाख्यः, वर्ततेऽस्मिन् काले इति नावयज्ञिकः कालः।<br>पाकयज्ञः = औपासनाग्निसाध्यः - पार्वणस्थालीपाकादिः, वर्ततेऽस्मिन् काले इति पाकयज्ञिकः कालः।<br>(वा०) पूर्णमासादण्<br>पूर्णमासोऽस्यां वर्तते इति पौर्णमासी तिथिः। | |
| | ३६. पितृव्य-मातुल-मातामह-पितामहाः<br>एते निपात्यन्ते।<br>(वा०) पितुर्भ्रातरि व्यत्।<br>पितुर्भ्राता पितृव्यः।<br>(वा०) मातुर्डुलच्।<br>मातुर्भ्राता मातुलः।<br>(वा०) मातृपितृभ्यां पितरि डामहच्<br>मातुः पिता मातामहः। पितुः पिता पितामहः।<br>(वा०) मातरि षिच्च।<br>मातामही। पितामही। षित्त्वान्ङीष्। | |
| अण् ४.१.८३ | ३७. तस्य समूहः<br>'तस्य समूहः' इत्यर्थे षष्ठ्यन्ताद् यथाविहितं प्रत्ययो भवति।<br>काकानां समूहः काकम्। शुकानां समूहः शौकम्। बकानां समूहो बाकम्।<br>प्राग्दीव्यतोऽण्।<br>(वा०) गुणादिभ्यो ग्रामज्वक्तव्यः।<br>गुणानां समूहः गुणग्रामः। करणानां समूहः करणग्रामः।<br>गुण, करण, तत्त्व, शब्द, इन्द्रिय- इति गुणादिः। आकृतिगणोऽयम्। | तस्य ५४<br>समूहः ५१ |

| | | |
|---|---|---|
| तस्य समूहः ३७ | ३८. भिक्षादिभ्योऽण्<br>तस्य समूहः इत्यर्थे भिक्षादिगणपठितेभ्यः शब्देभ्योऽण् प्रत्ययो भवति।<br>अण्ग्रहणं बाधकबाधनार्थम्।<br>भिक्षाणां समूहो भैक्षम्।<br>गर्भिणीनां समूहो गार्भिणम्।<br>इह 'भस्याढे' इति पुंवद्भावे कृते 'इनण्यनपत्ये' इति सूत्रेण प्रकृतिभावः, तेन 'नस्तद्धिते' इति टिलोपो न। | |
| तस्य समूहः ३७ | ३९. गोत्रोक्षोष्ट्रोरभ्र-राज-राजन्य-राजपुत्र-वत्स-मनुष्याजाद् वुञ्<br>तस्य समूह इत्यर्थे गोत्रवाचकेभ्यः शब्देभ्यः, उक्षन्, उष्ट्र, उरभ्र, राजन्, राजन्य, राजपुत्र, वत्स, मनुष्य, अज- इत्येतेभ्यश्च शब्देभ्यो वुञ् प्रत्ययो भवति।<br>अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते अपत्यमात्रं न तु 'अपत्यं पौत्रप्रभृति गोत्रम्' इति सूत्रेण पारिभाषिकं पौत्रप्रभृति।<br>गोत्र- औपगवानां समूहः औपगवम्।<br>उक्षन् - उक्ष्णाम्= वृषभाणां समूहः औक्षकम्।<br>उष्ट्र - उष्ट्राणां समूहः औष्ट्रकम्।<br>उरभ्र - उरभ्राणां = मेषाणां समूहः औरभ्रम्।<br>(वा०) वृद्धाच्चेति वक्तव्यम्।<br>वृद्धानां समूहो वार्द्धकम्। | |
| तस्य समूहः ३७<br>वुञ् ३९ | ४०. केदाराद्यञ् च<br>तस्य समूह इत्यर्थे केदारशब्दाद् यञ् प्रत्ययो भवति, चकाद् वुञ्।<br>केदाराणां समूहः कैदार्यम्। कैदारकम्।<br>(वा०) गणिकाया यञिति वक्तव्यम्।<br>गणिकानां समूहो गाणिक्यम्। | केदारात् ४१ |
| तस्य समूहः ३७<br>केदारात् ४० | ४१. ठञ् कवचिनश्च<br>तस्य समूह इत्यर्थे कवचिन् इति शब्दात् ठञ् प्रत्ययो भवति, चकारात् केदारशब्दाच्च।<br>कवचिनां समूहः कावचिकम्।<br>केदाराणां समूहः कैदारिकम्। | |

| | | |
|---|---|---|
| तस्य समूहः ३७ | **४२. ब्राह्मण-माणव-वाडवाद्यन्**<br>तस्य समूह इत्यर्थे ब्राह्मण, माणव, वाडव इत्येतेभ्यः शब्देभ्यो यन् प्रत्ययो भवति।<br>ब्राह्मणानां समूहः ब्राह्मण्यम्। माणवानां समूहः माणव्यम्। वाडवानां समूहः वाडव्यम्। | |
| तस्य समूहः ३७ | **४३. ग्राम-जन-बन्धुभ्यस्तल्**<br>तस्य समूह इत्यर्थे ग्राम, जन, बन्धु इत्येतेभ्यः शब्देभ्यस्तल् प्रत्ययो भवति।<br>ग्रामाणां समूहः ग्रामता। जनानां समूहः जनता। बन्धूनां समूहः बन्धुता।<br>(वा०) गजसहायाभ्यां चेति वक्तव्यम्।<br>गजानां समूहः गजता।<br>सहायानां समूहः सहायता।<br>(वा०) अह्नः खः क्रतौ।<br>अह्नां समूहः अहीनः क्रतुः।<br>खस्य ईनादेशः, 'अह्नष्टखोरेव' इति टिलोपः।<br>अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः।<br>(वा०) वातादूलः।<br>वातानां समूहो वातूलः। | |
| तस्य समूहः ३७ | **४४. अनुदात्तादेरञ्**<br>तस्य समूह इत्यर्थे अनुदात्तादेः प्रातिपदिकाद् अञ् प्रत्ययो भवति।<br>कपोतानां समूहः कापोतम्। मयूराणां समूहः मायूरम्। | अञ् ४५ |
| तस्य समूहः ३७<br>अञ् ४४ | **४५. खण्डिकादिभ्यश्च**<br>तस्य समूह इत्यर्थे खण्डिकादिगणपठितेभ्यः शब्देभ्योऽपि अञ् प्रत्ययो भवति।<br>खण्डिकानां समूहः खाण्डिकम्। वडवाया समूह वाडवम्। | |

| | | |
|---|---|---|
| तस्य समूहः ३७ | ४६. चरणेभ्यो धर्मवत्<br>चरणाः = शाखाध्येतारः कठकलापादयः। तेभ्यः तस्य समूहः इत्यर्थे ते एव प्रत्यया भवन्ति ये प्रत्ययाः 'गोत्रचरणाद् वुञ्'(४.३.१२६) इति प्रकरणे 'चरणाद्धर्माम्नाययोः' इति वार्तिकेन धर्मेऽर्थे वक्ष्यन्ते।<br>वतिः सर्वसादृश्यार्थः। तेन यस्याः प्रकृतेर्यः प्रत्ययो धर्मेऽर्थे वक्ष्यते, स एव तस्याः प्रकृतेः समूहेऽपि भवति।<br>तेन यथा कठानां धर्मः काठकम्, कलापानां धर्मः कालापकम्, छन्दोगानां धर्मः छान्दोग्यम् इत्यादि भवति तथैव कठादीनां समूहः इत्यर्थे अपि काठकमित्यादिप्रयोग।ः भवन्ति। | |
| तस्य समूहः ३७ | ४७. अचित्त-हस्ति-धेनोष्ठक्<br>अचित्ताः = अप्राणिनः, तद्वाचकेभ्यः, हस्तिशब्दाद्, धेनुशब्दाच्च तस्य समूह इत्यर्थे ठक् प्रत्ययो भवति।<br>अचित्त - अपूपानां समूहः आपूपिकम्।<br>हस्ति - हस्तिनां समूहः हास्तिकम्।<br>धेनु - धेनूनां समूह धैनुकम्।<br>धैनुकमित्यत्र 'इसुसुक्तान्तात्कः' इति सूत्रेण ठस्य कादेशः।<br>(वां०) धेनोरनञ् इति वक्तव्यम्।<br>अधेनूनां समूहः आधेनवम्।<br>अत्र 'उत्सादिभ्योऽञ् इति अञ्। | |
| तस्य समूहः ३७ | ४८. केशाश्वाभ्यां यञ्छावन्यतरस्याम्<br>तस्य समूह इत्यर्थे केश, अश्व-इत्येताभ्यां यञ्, छः - इत्येतौ प्रत्ययौ यथासंख्यं भवतः, अन्यतरस्याम्।<br>अन्यतरस्यांग्रहणात्पक्षे केशशब्दात् 'अचित्तहस्तिधेनोष्ठक्, इति ठक् प्रत्ययः, अश्वशब्दाच्च 'प्राग्दीव्यतोऽण्' इति अण् प्रत्ययोऽपि भवति।<br>केशानां समूहः कैश्यम्, कैशिकं वा।<br>अश्वानां समूहः अश्वीयम्, आश्वं वा। | |
| तस्य समूहः ३७ | ४९. पाशादिभ्यो यः<br>तस्य समूह इत्यर्थे पाशादिभ्यो यप्रत्ययो भवति।<br>पाशानां समूहः पाश्या। तृणानां समूहः तृण्या।<br>धूमानां समूहः धूम्या। वातानां समूहः वात्या।<br>स्त्रीत्वं लोकात्। | यः ५० |

| | | |
|---|---|---|
| तस्य समूहः ३७<br>यः ४९ | ५०. खल-गो-रथात्<br>तस्य समूह इत्यर्थे खल, गो, रथ-इत्येतेभ्यः शब्देभ्यो यप्रत्ययो भवति।<br>खलानां समूहः खल्या।<br>गवां समूहो गव्या।<br>रथानां समूहो रथ्या।<br>स्त्रीत्वं लोकात्।<br>पाशादिष्वपाठ उत्तरार्थः। | खलगोरथात् ५१ |
| तस्य ३७ समूहः ३७<br>खल-गो-रथात् ५० | ५१. इनि-त्र-कट्यचश्च<br>तस्य समूह इत्यर्थे खल, गो, रथ इत्येतेभ्यः शब्देभ्यो यथासंख्यं इनि, त्र, कट्यच् इत्येते प्रत्यया अपि भवन्ति।<br>खलानां समूहः खलिनी।<br>गवां समूहो गोत्रा।<br>रथानां समूहो रथकट्या।<br>स्त्रीत्वं लोकात्।<br>(वा०) खलादिभ्य इनिर्वक्तव्यः।<br>डाकिनी। कुण्डलिनी। कुटुम्बिनी।<br>(वा०) कमलादिभ्यः खण्डच् प्रत्ययो भवति।<br>कमलखण्डम्। अम्भोजखण्डम्।<br>(वा०) नर-करि-तुरङ्गाणां स्कन्धच् प्रत्ययः।<br>नरस्कन्धः। करिस्कन्धः। तुरङ्गस्कन्धः।<br>(वा०) पूर्वादिभ्यः काण्डः प्रत्ययो भवति।<br>पूर्वकाण्डम्। तृणकाण्डम्। कर्मकाण्डम्। | |
| तस्य ३७<br>अण् ४.१.८३ | ५२. विषयो देशे<br>तस्य विषयः इत्यर्थे षष्ठ्यन्ताद् यथाविहितं प्रत्ययो भवति, देशेऽभिधेये।<br>देशः = ग्रामसमुदायः।<br>शिवीनां विषयो देशः शैवः।<br>प्राग्दीव्यतोऽण्। | विषयः देशे ५४ |
| तस्य ३७ विषयः ५४<br>देशे ५४ | ५३. राजन्यादिभ्यो वुञ्<br>तस्य विषयः इत्यर्थे राजन्यादिशब्देभ्यो वुञ् प्रत्ययो भवति, देशेऽभिधेये।<br>राजन्यानां विषयो देशः राजन्यकः। देवयानानां विषयो देशः दैवयानकः।<br>आकृतिगणश्चायम्।<br>मालवानां विषयो देशः मालवकः। | |

| | | |
|---|---|---|
| तस्य ३७<br>विषयः ५४<br>देशे ५४ | ५४. भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ<br>तस्य विषयः इत्यर्थे भौरिकि इत्येवमादिभ्यः शब्देभ्यः, ऐषुकारि इत्येवमादिभ्यश्च शब्देभ्यश्च यथासंख्यं विधल्, भक्तल्- इत्येतौ प्रत्ययो भवतः।<br>भौरिक्यादि - भौरिकीणां विषयो देशः भौरिकिविधः। वैपेयानां विषयो देशः वैपेयविधः।<br>ऐषुकार्यादि - ऐषुकारीणां विषयो देशः ऐषुकारिभक्तः। सारस्यायनानां विषयो देशः सारस्यायनभक्तः। | |
| अण् ४.१.८३ | ५५. सोऽस्यादिरिति छन्दसः प्रगाथेषु<br>'सोऽस्यादिः' इत्यर्थे<br>अनुष्टुबादिछन्दोविशेषवाचकेभ्यः प्रथमान्तेभ्यः अण् प्रत्ययो भवति, प्रगाथेष्वभिधेयेषु।<br>यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्ते, स प्रगथनात्, प्रकर्षगानाद्वा 'प्रगाथ' इत्युच्यते।<br>पङ्क्तिः (छन्दोविशेषः) अस्य आदिरिति पाङ्क्तः प्रगाथः।<br>अनुष्टुप् (छन्दोविशेषः) अस्य आदिरिति आनुष्टुभः प्रगाथः।<br>जगती (छन्दोविशेषः) अस्य आदिरिति जागतः प्रगाथः।<br>(वा०) छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसंख्यानम्।<br>त्रिष्टुबेव त्रैष्टुभम्।<br>जगती एव जागतम्। | सोऽस्य ५६ |
| सोऽस्य ५५<br>अण् ४.१.८३ | ५६. संग्रामे प्रयोजन-योद्धृभ्यः<br>सोऽस्य प्रयोजनम्, सोऽस्य योद्धा इत्यर्थे प्रयोजनवाचिभ्यः, योद्धृवाचिभ्यश्च शब्देभ्यः प्रथमान्तेभ्यः यथाविहितं प्रत्ययो भवति, संग्रामेऽभिधेये।<br>प्रयोजनेभ्यः - भद्रा प्रयोजनमस्य संग्रामस्येति भाद्रः संग्रामः। सुभद्रा प्रयोजनमस्य संग्रामस्येति सौभद्रः संग्रामः।<br>योद्धृभ्यः - अहिमालाः योद्धारोऽस्य संग्रामस्य आहिमालः।<br>भरता योद्धारोऽस्य संग्रामस्य भारतः संग्रामः।<br>प्राग्दीव्यतोऽण्। | |

| | | |
|---|---|---|
| | **५७. तदस्यां प्रहरणमिति क्रीडायां णः**<br>तदस्यां प्रहरणमित्यर्थे प्रहरणवाचिभ्यः प्रथमान्तेभ्यः शब्देभ्यः णः प्रत्ययो भवति, क्रीडायामभिधेयायाम्।<br>प्रह्रियतेऽनेनेति प्रहरणम् = आयुधम्।<br>दण्डः प्रहरणमस्यां क्रीडायामिति दाण्डा क्रीडा।<br>मुष्टिः प्रहरणमस्यां क्रीडायामिति मौष्टा क्रीडा। | |
| | **५८. घञः साऽस्यां क्रियेति ञः**<br>सा क्रिया अस्याम् (मृगयादिक्रियायाम्) इत्यर्थे घञन्तात् क्रियावाचिनः प्रथमान्तेभ्यः शब्देभ्यः ञः प्रत्ययो भवति।<br>श्येनपातोऽस्यां मृगयायामिति श्यैनम्पाता मृगया।<br>श्येनपातशब्दात् ञप्रत्यये कृते 'श्येनतिलस्य पाते ञे' इति सूत्रेण मुमागमः।<br>एवमेव तिलपातोऽस्यामिति तैलम्पाता स्वधा।<br>दण्डपातोऽस्यां तिथौ इति दाण्डपाता तिथिः।<br>एवमेव मौसलपाता तिथिः। | |
| अण् ४.१.८३ | **५९. तदधीते तद्वेद**<br>तदधीते, तद्वेद इत्यनयोरर्थयोः द्वितीयान्तात् शब्दाद् यथाविहितं प्रत्ययो भवति।<br>'शब्दपाठोऽध्ययनम्, तदर्थज्ञानं वेदनम्' इति लघुशब्देनुशेखरे नागेशः।<br>छन्दोऽधीते वेद (वेत्ति) वा छान्दसः।<br>व्याकरणमधीते वेद (वेत्ति) वा वैयाकरणः।<br>निरुक्तमधीते वेद (वेत्ति) वा नैरुक्तः।<br>प्राग्दीव्यतोऽण्। | तदधीते तद्वेद६६ |

| | | |
|---|---|---|
| तदधीते ५९<br>तद्वेद ५९ | **६०. क्रतूक्थादि-सूत्रान्ताट्ठक्**<br>तदधीते, तद्वेद इत्यनयोरर्थयोः क्रतुविशेषवाचिभ्यः, उक्थादिभ्यः, सूत्रान्ताच्च ठक् प्रत्ययो भवति।<br>क्रतु - अग्निष्टोममधीते,वेद (वेत्ति) वा आग्निष्टोमिकः। वाजपेयममधीते,वेद (वेत्ति) वा वाजपेयिकः।<br>उक्थादि - उक्थं सामविशेषः, तल्लक्षणपरो ग्रन्थविशाषोऽपि लक्षणया उक्थम्। तदधीते, वेद वा औक्थिकः। लोकायतममधीते, वेद वा लौकायतिकः। न्यायमधीते, वेद वा नैयायिकः।<br>सूत्रान्त - वृत्तौ साधु वार्त्तिकम्, 'कन्यादिभ्यष्ठक्' इति ठक्। वार्त्तिकं च तत्सूत्रमिति च वार्त्तिकसूत्रमधीते, वेद वा वार्त्तिकसूत्रिकः। संग्रहाख्यं सूत्रं संग्रहसूत्रम्, संग्रहसूत्रमधीते, वेद वा सांग्रहसूत्रिकः।<br>(वा०) सूत्रान्तादकल्पादेरिष्यते।<br>कल्पसूत्रमधीते, वेद वा काल्पसूत्रः।<br>अत्र अण् प्रत्यय एव न तु ठक्।<br>(वा०) विद्या-लक्षण-कल्प-सूत्रान्तादिति वक्तव्यम्।<br>विद्यान्तात् - वायसविद्यामधीते, वेद वा वायसविद्यिकः। सर्पविद्यामधीते, वेद वा सार्पविद्यिकः।<br>लक्षणान्तात् - गोलक्षणमधीते, वेद वा गौलक्षणिकः। अश्वलक्षमधीते, वेद वा आश्वलक्षणिकः।<br>कल्पान्तात् - मातृकल्पमधीते, वेद वा मातृकल्पिकः। पराशरकल्पमधीते, वेद वा पाराशरकल्पिकः। | |

| | | |
|---|---|---|
| | (वा०) विद्या च नाङ्ग-नक्षत्र-धर्म- संसर्ग-त्रिपूर्वा।<br>अङ्गविद्यामधीते आङ्गविद्यः।<br>क्षात्रविद्यः। धार्मविद्यः। सांसर्गविद्यः। त्रैविद्यः।<br>त्रिविधा विद्या इति त्रिविद्या, तामधीते, वेद वेति विग्रहः।<br>एषु औत्सर्गिकः प्राग्दीव्यतोऽण्।<br>(वा०)आख्यानाख्यायिकेतिहास-पुराणेभ्यष्ठग्वक्तव्यः।<br>आख्यानाख्यायिकयोरर्थग्रहणम्, इतिहासपुराणयोः स्वरूपग्रहणम्।<br>आख्यानं नाम कथा प्रबन्धः - यवक्रीतमधिकृत्य कृतमाख्यानमुपचाराद् यवक्रीतं, तदधीते, वेद वा यावक्रीतिकः।<br>आख्यायिका - वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता। 'अधिकृत्य कृते ग्रन्थे' इत्यर्थे वृद्धाच्छः। तस्य 'लुबाख्यायिकाभ्यो बहुलम्' इति सूत्रेण लुप्। वासवदत्तामधीते वेद वा वासवदत्तिकः।<br>इतिहासमधीते, वेद वा ऐतिहासिकः। पुराणमधीते, वेद वा पौराणिकः। | |

| | | |
|---|---|---|
| | (वा०) सर्व-सादेर्द्विगोश्च लः।<br>सर्वादेः, सादेः, द्विगोश्चोत्पन्नस्य प्रत्ययस्य लो भवति = लुग्भवतीति वार्तिकार्थः।<br>सर्वादेः - सर्ववेदानधीते, वेद वा सर्ववेदः। अणो लुक्।<br>सादेः - सवार्तिकमधीते, वेद वा सवार्तिकः। अणो लुक्।<br>द्विगोः - द्वौ वेदौ अधीते वेद वा द्विवेदः। पञ्च व्याकरणानि अधीते, वेद वा पञ्चव्याकरणः। अणो लुक्।<br>(वा०) अनुसूर्लक्ष्यलक्षणे च।<br>अनुसूशब्दष्ठकमुत्पादयति, लक्ष्यलक्षणशब्दौ चेति वार्तिकार्थः।<br>अनुसूः ग्रन्थविशेषः, तमधीते, वेद वा आनुसुकः। 'इसुसु्' इति ठस्य कः, 'केऽणः' इति ह्रस्वः।<br>लक्ष्यमधीते, वेद वा लाक्ष्यिकः।<br>लक्षणमधीते, वेत्ति वा लाक्षणिकः।<br>(वा०) शतषष्टेः षिकन् पथो बहुलम्।<br>शतशब्दात्, षष्टिशब्दाच्च परो यः पथिन् शब्दस्तदन्तात् षिकन् प्रत्ययो बहुलं भवति। षकारो ङीषर्थः।<br>शतपथमधीते, वेद वा शतपथिकः।<br>स्त्रियां - शतपथिकी। एवमेव षष्टिपथिकः।<br>स्त्रियाम् - षष्टिपथिकी।<br>बहुलग्रहणादणपि भवति - शातपथः। षाष्टिपथः।<br>(वा०) इकन् पदोत्तरपदात्।<br>पूर्वपदमधीते, वेद वा पूर्वपदिकः। उत्तरपदमधीते, वेद वा उत्तरपदिकः। | |
| तदधीते ५९<br>तद्वेद ५९ | ६१. क्रमादिभ्यो वुन्<br>तदधीते, तद्वेद - इत्यर्थयोः क्रमादिभ्यो वुन् प्रत्ययो भवति।<br>क्रममधीते, वेद वा क्रमकः।<br>पदमधीते वेद वा पदकः।<br>शिक्षामधीते, वेद वा शिक्षकः।<br>मीमांसामधीते वेद मीमांसकः। | |
| तदधीते ५९<br>तद्वेद ५९ | ६२. अनुब्राह्मणादिनिः<br>तदधीते, तद्वेद इत्यनयोरर्थयोः अनुब्राह्मण शब्दाद् इनिः प्रत्ययो भवति।<br>ब्राह्मणसदृशोऽयं ग्रन्थः, अनुब्राह्मणम्, तदधीते ,वेद वा अनुब्राह्मणी, अनुब्राह्मणिनौ अनुब्राह्मणिनः। | |

| | | |
|---|---|---|
| तदधीते ५९<br>तद्वेद ५९ | ६३. वसन्तादिभ्यष्ठक्<br>तदधीते, तद्वेद इत्यनयोरर्थयोः वसन्तादिभ्यष्ठक् प्रत्ययो भवति।<br>यत्र वसन्तो वर्ण्यते, यो वा वसन्तेऽध्येयः स ग्रन्थः वसन्तः। तमधीते, वेद वा वासन्तिकः। अथर्वणा प्रोक्तो वेदो लक्षणया अथर्वा। अथर्वाणमधीते वेद वा आथर्वणिकः। | |
| तदधीते ५९<br>तद्वेद ५९ | ६४. प्रोक्ताल्लुक्<br>प्रोक्तार्थकप्रत्ययात्परस्याध्येतृवेदितृप्रत्ययस्य लुग्भवति।<br>पाणिनिना प्रोक्तम् पाणिनीयम्, तेन प्रोक्तमित्यर्थे वृद्धाच्छः। पाणिनीयमधीते, वेत्ति वा पाणिनीयः। पाणिनीयशब्दात् अध्येत्रर्थकस्य, वेदित्रर्थस्य वाऽण् प्रत्ययस्य लुक्।<br>स्त्रियां तु पाणिनीया इति। | सम्पूर्णसूत्रम् |
| तदधीते ५९<br>तद्वेद ५९<br>लुक् ६५ | ६५. सूत्राच्च कोपधात्<br>ककारोपधात् सूत्रवाचिनः परस्याध्येतृवेदितृप्रत्ययस्य लुग्भवति।<br>अष्टौ अध्याया परिमाणमस्य इति अष्टकम् = पाणिनेः सूत्रम्। 'संख्याया अतिशदन्तायाः कन्' इति सूत्रेण सूत्ररूपेऽर्थे कन्। अष्टकमधीयते, विदुर्वा अष्टकाः पाणिनीयाः।<br>अध्येतृ-वेदितृप्रत्ययस्य लुक्।<br>एवमेव दशका-वैयाघ्रपदीयाः। त्रिकाः काशकृत्स्नाः। | |

| | | |
|---|---|---|
| प्रोक्तात् ६४ | ६६. छन्दोब्राह्मणनि च तद्विषयाणि<br>प्रोक्तप्रत्ययान्तानि छन्दांसि, ब्राह्मणानि तद्विषयाण्येव = अध्येतृवेदितृप्रत्ययसंयुक्तान्येव प्रयोज्यानि।<br>छन्दः पदेन गायत्र्यादिछन्दोयुतमन्त्राणां ग्रहणम्, ब्राह्मणशब्देन च विधिवाक्यानाम्।<br>अयमाशयः - यथा 'कृत्रिमम्' इत्यादौ मप्प्रत्ययं विना क्त्र्यन्तं न प्रयुज्यते तथैव प्रोक्तप्रत्ययान्तानि छन्दांसि, ब्राह्मणानि च अध्येतृ-वेदितृप्रत्ययं विना न प्रयुज्यन्ते।<br>छन्दांसि -कठेन प्रोक्तमधीयते इति कठाः।<br>अत्र प्रोक्तार्थे 'वैशम्पायनान्तेवासिभ्यश्च' इति सूत्रेण णिनिः, तस्य 'कठचरकाल्लुक्' इति सूत्रेण लुक्। पुनः अध्येतरि,वेदितरि च विहितस्य अणः 'प्रोक्ताल्लुक्' इति सूत्रेण लुक्।<br>ब्राह्मणानि - ताण्ड्येन प्रोक्तमधीयते इति ताण्डिनः।<br>अत्र प्रोक्तार्थे 'वैशम्पायनान्तेवासिभ्यश्च' इति सूत्रेण णिनिः, 'आपत्यस्य च तद्धितेऽनाति' इति सूत्रेण यकारस्य लोपः। पुनः ताण्डिन् शब्दात् उत्पन्नस्य अध्येतृवेदितृप्रत्ययस्य 'प्रोक्ताल्लुक्' इति सूत्रेण लुक्। | |
| अण् ४.१.८३ | ६७. तदस्मिन्नस्तीति देशे तन्नाम्नि<br>'तदस्मिन्नस्ति' इत्यर्थे प्रथमान्ताद् यथविहितं प्रत्ययो भवति, प्रत्ययान्तश्चेद् देशस्य नाम।<br>उदुम्बराः सन्त्यस्मिन् देशे इति औदुम्बरो देशः।<br>प्राग्दीव्यतोऽण्। | देशे तन्नाम्नि८३ |
| देशे तन्नाम्नि ६७<br>अण् ४.१.८३ | ६८. तेन निर्वृत्तम्<br>तेन निर्वृत्तम् (सम्पादितम्) इत्यर्थे तृतीयान्ताद् यथाविहितं प्रत्ययो भवति, प्रत्ययान्तश्चेद् देशस्य नाम।<br>कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी।<br>प्राग्दीव्यतोऽण्। | तस्य ७० |
| देशे तन्नाम्नि ६७<br>अण् ४.१.८३ | ६९. तस्य निवासः<br>तस्य निवासः इत्यर्थे षष्ठ्यन्ताद् यथविहितं प्रत्ययो भवति, प्रत्ययान्तश्चेद् देशस्य नाम।<br>शिबीनां निवासो देशः शैबः।<br>प्राग्दीव्यतोऽण्। | तस्य ७० |

| | | |
|---|---|---|
| देशे तन्नाम्नि ६७<br>अण् ४.१.८३<br>तस्य ६६ | ७०. अदूरभवश्च<br>अदूरम् = निकटं, तत्र भवः इति समासः।<br>तस्य अदूरभवः इत्यर्थे षष्ठयन्ताद् यथाविहितं प्रत्ययो भवति, प्रत्ययान्तश्चेद् देशस्य नाम।<br>विदिशाया अदूरभवं नगरं वैदिशम्।<br>प्राग्दीव्यतोऽण्।<br>'अदूरभवश्च' इति सूत्रे चकारः पूर्वेषां त्रयाणामर्थानामिह सन्निधानार्थः। तेन उत्तरेषु सूत्रेषु चत्वारोऽप्यर्थाः सम्बद्ध्यन्ते।<br>इमे हि चत्वारोऽर्थाः-<br>१. तदस्मिन्नस्तीति देशे तन्नाम्नि<br>२. तेन निर्वृत्तम्<br>३. तस्य निवासः<br>४. अदूरभवश्च<br>एष्वर्थेषु विधीयमानाः प्रत्ययाः चातुरर्थिकाः प्रत्ययाः कथ्यन्ते। चतुर्णाम् सूत्राणाम् अर्थाः इति चतुरर्थाः, तत्र भवाः चातुरर्थिकाः इति व्युत्पत्तिः। | |
| चातुरर्थिकः६७-७० | ७१. ओरञ्<br>उवर्णान्ताद् अञ्प्रत्ययो भवति उक्तेषु चतुर्ष्वर्थेषु।<br>अरडु- आरडवम्।<br>कक्षतु - काक्षतवम्।<br>अरडुः = क्षत्रियविशेष इति पदमञ्जरी, वृक्षविशेष इति शब्दकौस्तुभः।<br>कक्षतुशब्दस्यार्थोऽनुसन्धेयः। | अञ् ७६ |
| चातुरर्थिकः ६७-७०<br>अण् ७१ | ७२. मतोश्च बह्वजङ्गात्<br>बह्वच् अङ्गं यस्य मतुपस्तदन्ताद् अञ् प्रत्ययो भवति, उक्तेषु चतुर्ष्वर्थेषु।<br>इषुकाः सन्ति अस्यां नद्यामिति इषुकावती नदी।<br>तस्या अदूरभवं नगरम् ऐषुकावतम्।<br>सिध्रकाः वृक्षविशेषाः, ते सन्ति अस्मिन् वने इति सिध्रकावत् वनम्। तस्यादूरभवं नगरम् सैध्रकावतम्। | |
| चातुरर्थिकः ६७-७०<br>अण् ७१ | ७३. बह्वचः कूपेषु<br>बह्वचः प्रातिपदिकादञ् प्रत्ययो भवति चातुरार्थिकः, कूपेष्वभिधेयेषु।<br>दीर्घवरत्रेण निर्वृत्तः कूपः दैर्घवरत्रः कपिलवरत्रेण निर्वृत्तः कूपः कापिलवरत्रः।। | कूपेषु ७४ |

| | | |
|---|---|---|
| चातुरर्थिकः ६७-७० अण् ७१ कूपेषु ७३ | ७४. उदक्च विपाशः<br>विपाश् इतिनामिकायाः नद्या उत्तरभागस्थितेषु कूपेष्वभिधेयेषु अञ् प्रत्ययो भवति।<br>विपाश्शब्दः शकारान्तो नदीविशेषवाची। तस्य षष्ठ्येकवचने विपाशः इति रूपम्। उदक् इत्यस्य उत्तरभागे स्थित इत्यर्थः। एवंचास्य सूत्रस्योक्तार्थः सम्पद्यते<br>अबह्वजर्थ आरम्भः।<br>दत्तेन निर्वृत्तः कूपो दात्तः कूपः। गुप्तेन निर्वृत्तः कूपः गौप्तः कूपः। | |
| चातुरर्थिकः ६७-७० अण् ७१ | ७५. संकलादिभ्यश्च<br>उक्तेषु चतुर्ष्वर्थेषु 'सङ्कल' इत्येवमादिभ्यः शब्देभ्योऽञ् प्रत्ययो भवति।<br>यथासम्भवमर्थसम्बन्धः।<br>संकलेन निर्वृत्तः सांकलः। पुष्कलेन निर्वृत्तः पौष्कलः। | |
| चातुरर्थिकः ६७-७० अण् ७१ | ७६. स्त्रीषु सौवीर-साल्व-प्राक्षु<br>उक्तेषु चतुर्ष्वर्थेषु ङ्याप्प्रातिपदिकादञ् प्रत्ययो भवति, प्रत्ययान्ताश्चेत्स्त्रीलिङ्गाः सौवीर-साल्व-प्राच्यदेशवाचकाश्च।<br>सौवीरे तावत् - दत्तामित्रेण निर्वृत्ता नगरी दात्तमित्री नगरी।<br>साल्वे - विधूमाग्निना निर्वृत्ता नगरी वैधूमाग्नी नगरी।<br>प्राचि - ककन्देनं निर्वृत्ता नगरी काकन्दी नगरी। | |
| चातुरर्थिकः ६७-७० अण् ७१ | ७७. सुवास्त्वादिभ्योऽण्<br>उक्तेषु चतुर्ष्वर्थेषु 'सुवास्तु' इत्येवमादिभ्योऽण् प्रत्ययो भवति।<br>उवर्णान्तलक्षणस्य, कूपलक्षणस्य च अञः अपवादोऽयम्।<br>सुवास्तोरदूरभवं नगरं सौवास्तवम् नगरम्।<br>वर्णोरदूरभवं वार्णवम्। | अण् ७६ |

| | | |
|---|---|---|
| चातुरर्थिकः ६७-७०<br>अण् ७७ | ७८. रोणी<br>रोणीशब्दात्, तदन्ताच्च अण् प्रत्ययो भवति उक्तेषु चतुर्ष्वर्थेषु ।<br>रोणी इति लुप्तपञ्चमीकं पदम्।<br>कूपलक्षणस्याञो ऽपवादः।<br>रोण्या निर्वृत्तः कूप रौणः।<br>'येनविधिः' इति सूत्रस्थभाष्यादिह प्रत्ययविधावपि तदन्तविधिः।<br>अजकरोण्या निर्वृत्तः कूपः आजकरौणः। | |
| चातुरर्थिकः ६७-७०<br>अण् ७७ | ७९. कोपधाच्च<br>उक्तेषु चतुर्ष्वर्थेषु ककारोपधात् प्रातिपदिकादण्प्रत्ययो भवति।<br>उवर्णान्तलक्षणस्य, कूपलक्षणस्य च अञोऽपवादोऽयम्। यथासम्भवमर्थसम्बन्धः।<br>कर्णच्छिद्रकेण निर्वृत्तः कूपः कार्णच्छिद्रिकः।<br>कृकवाकुना निर्वृत्तं कार्कवाकवम् त्रिशङ्कुना निर्वृतं त्रैशङ्कवम्। | |

<table>
<tr>
<td>चातुरर्थिकः ६७-७०<br>अण् ७७</td>
<td>८०. वुञ्-छण्-क-ठजिल-सेनि-र-ढञ्-ण्य-य-फक्-फिञिञ्-ञ्य-कक्-ठको ऽरीहण-कृशाश्वर्श्य-कुमुद-काश-तृण-प्रेक्षाश्म-सखि-संकाश-बल-पक्ष-कर्ण-सुतङ्गम-प्रगदिन्-बराह-कुमुदादिभ्यः<br>अरीहणादिप्रभृतिभ्यः सप्तदशभ्यः प्रातिपदिकगणेभ्यः यथासंख्यं वुञादयः सप्तदश प्रत्ययाः भवन्ति उक्तेषु चतुर्ष्वर्थेषु।<br>यथासम्भवमर्थसम्बन्धः।<br>१. अरीहणादिभ्यः वुञ् - आरीहणकम्। द्रौघणकम्।<br>२. कृशाश्वादिभ्यः छण् - कार्शाश्वीयः। आरिष्टीयः।<br>३. ऋश्यादिभ्यः कः- ऋश्यकः। न्यग्रोधकः।<br>४. कुमुदादिभ्यः ठच् - कुमुदिकम्। शर्करिकम्।<br>५. काशादिभ्यः इलः -काशिलम्। वाशिलम्।<br>६. तृणादिभ्यः शः - तृणशम्, नडशम्।<br>७. प्रेक्षादिभ्यः इनिः - प्रक्षी। हलकी<br>८. अश्मादिभ्यः रः - अश्मरः।<br>९. सख्यादिभ्यः ढञ् - साखेयम् । दत्तेयम्।<br>१०. संकाशादिभ्यः ण्यः - सांकाश्यम्। कापिल्यम्।<br>११. बलादिभ्यः यः- बल्यम्। कुल्यम्।<br>१२. पक्षादिभ्यः फक्- पाक्षायणः। तौषायणः।<br>१३. कर्णादिभ्यः फिञ्- कार्णायणिः। वासिष्ठायनिः।<br>१४. सुतङ्गमादिभ्यः इञ्- सौतङ्गमिः। मौनिचित्तिः।<br>१५. प्रगदिनादिभ्यः ञ्यः- प्रागद्यम्<br>१६. बराहादिभ्यः कक्- बाराहकम्। पालाशकम्।<br>१७. कुमुदादिभ्यः ठक् - कौमुदिकम्।</td>
<td></td>
</tr>
</table>

| देशे<br>तन्नाम्नि६७,७०<br>चातुरर्थिकस्य६७-७० | ८१. जनपदे लुप्<br>जनपदेऽभिधेये चातुरर्थिकस्य लुब्भवति, लुबन्तं चेद् देशस्य नाम।<br>पञ्चालानां निवासो जनपदः पञ्चालाः। कुरूणां निवासो जनपदः कुरवः।<br>अङ्गानां निवासो जनपदः अङ्गाः। बङ्गानां निवासो जनपदः बङ्गाः। कलिङ्गानां निवासो जनपदः कलिङ्गा।<br>सर्वेषूदाहरणेषु 'तस्य निवास' इति विहितस्याणः 'प्रकृतसूत्रेण लुपि कृते 'लुपि युक्तवद्व्यक्तिवचने' इति प्रकृतिवद् बहुवचनम्। | लुप् ८३ |
|---|---|---|
| देशे<br>तन्नाम्नि६७,७०<br>चातुरर्थिकस्य६७-७०<br>लुप् ८१ | ८२. वरणादिभ्यश्च<br>वरणा इत्येवमादिभ्यः शब्देभ्यः परस्य चातुरर्थिकस्य प्रत्ययस्य लुब्भवति।<br>वरणानाम् अदूरभवं नगरं वरणाः। | |
| चातुरर्थिकस्य६७,७०<br>लुप् ८१ | ८३. शर्कराया वा<br>शर्कराशब्दात्परस्य चातुरर्थिकस्य प्रत्ययस्य लुब्वा भवति।<br>शर्कराः = क्षुद्रपाषाणखण्डाः सन्त्यस्मिन् देशे इति १. शर्करा देशः।<br>प्राग्दीव्यतोऽणः लुप्।<br>पक्षे<br>प्राग्दीव्यतोऽणि - २. शार्करम्।<br>कुमुदादित्वात् ठचि- ३. शर्करिकम्।<br>बराहादित्वात् ककि- ४.शार्करकरम्।<br>अग्रिमेण सूत्रेण ठकि- ५. शार्करिकम्<br>अग्रिमेणैव सूत्रेणैव छे- ६. शर्करीयम्।<br>एवं हि षड् रूपाणि भवन्ति। | शर्करायाः ८४ |
| चातुरर्थिकस्य६७-७०<br>शर्करायाः ८३ | ८४. ठक्छौ च<br>उक्तेषु चतुर्ष्वर्थेषु शर्कराशब्दात् ठक्, छ- इत्येतौ प्रत्ययौ भवतः।<br>शार्करिकम्। शर्करीयम्। | |

| | | |
|---|---|---|
| चातुरर्थिकस्य६७-७० | ८५. नद्यां मतुप्<br>नद्यामभिधेयायां तदस्मिन्नस्तीत्यादिषु चतुर्ष्वर्थेषु मतुप् प्रत्ययो भवति।<br>उदुम्बराः सन्ति अस्यां नद्याम् (नदीतटे) इति उदुम्बरावती नदी।<br>एवमेव- मशकावती। वीरणावती।<br>'मतौ बह्वचोऽनजिरादीनाम्(६.३.११८) इति सूत्रेण पूर्वपदस्य दीर्घः। | मतुप् ८६ |
| चातुरर्थिकस्य६७-७०<br>मतुप् ८५ | ८६. मध्वादिभ्यश्च.<br>उक्तेषु चतुर्ष्वर्थेषु मध्वादिभ्योऽपि मतुप्प्रत्ययो भवति, मतुबन्तश्चेद्देशस्य नाम।<br>अनद्यर्थ आरम्भः।<br>मधूनां निवासो मधुमान् देशः। | |
| चातुरर्थिकस्य६७-७० | ८७. कुमुद-नड-वेतसेभ्यो ड्मतुप्<br>उक्तेषु चतुर्ष्वर्थेषु कुमुद, नड, वेतस इत्येतेभ्यो ड्मतुप् प्रत्ययो भवति।<br>कुमुद्वान् देशः। नड्वान् देशः। वेतस्वान् देशः।<br>(वा०) महिषाच्चेति वक्तव्यम्।<br>महिषाः सन्त्यस्मिन् देशे इति महिष्मान्। नाम देशः। | |
| चातुरर्थिकस्य६७-७० | ८८. नड-शादाड् ड्वलच्<br>उक्तेषु चतुर्ष्वर्थेषु नड-शादशब्दाभ्यां ड्वलच् प्रत्ययो भवति, प्रत्ययान्तेश्चेद् देशस्य नाम।<br>नड्वलं नगरम्। शाद्वलं नगरम्। | |
| चातुरर्थिकस्य६७-७० | ८९. शिखाया वलच्<br>उक्तेषु चतुर्ष्वर्थेषु शिखाशब्दाद् वलच् प्रत्ययो भवति, प्रत्ययान्तश्चेद् देशस्य नाम। शिखा नाम कश्चिन्मनुष्यः, तेन निर्वृत्तं नगरं शिखावलम्। | |
| चातुरर्थिकस्य६७-७० | ९०. उत्करादिभ्यश्छः<br>उक्तेषु चतुर्ष्वर्थेषु 'उत्कर' इत्येवमादिभ्यः शब्देभ्यः छः प्रत्ययो भवति।<br>उत्करेण निर्वृत्तम, तस्य निवासः, तस्य अदूरभव इति वा उत्करीयम्। | छः ९१ |
| छः ९० | ९१. नडादीनां कुक् च<br>उक्तेषु चतुर्ष्वर्थेषु नडादीनां कुक् इत्यागमो भवति, तेभ्यश्छप्रत्ययोऽपि।<br>नडाः सन्त्यस्मिन् नगरे इति नडकीयं नगरम्।<br>प्लक्षाः सन्त्यस्मिन् नगरे इति प्यलक्षकीयं नगरम्। | |

| | | |
|---|---|---|
| अण् ४.१.८३ | ९२ शेषे<br>अपत्यादिचतुरर्थ्यन्यन्तादन्योऽर्थः शेषस्तत्र यथाविहितमणादय, वक्ष्यमाणाश्च प्रत्ययाः भवन्ति।<br>चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। दृषदि पिष्टाः दार्षदा सक्तवः। उलूखले क्षुण्णः औलूखलः यावकः। अश्वैरुह्यते आश्वो रथः। | शेषे (तस्य विकारः४.३.१३२ इत्यतः प्राक्) |
| शेषे ९२ | ९३. राष्ट्रावारपाराद् घखौ<br>राष्ट्र, अवारपार- इत्येताभ्यां यथासंख्यं घ, ख- इत्येतौ प्रत्ययौ भवतः शेषेऽर्थे।<br>राष्ट्रे भवः, राष्ट्रे जातः, राष्ट्रादागतः, राष्ट्रस्यायम् इत्यादिषु सर्वेषु अर्थेषु राष्ट्रशब्दात् घप्रत्यये राष्ट्रिय इति प्रयोगः सिध्यति।<br>एवमेव - अवारपारे भवः इत्यादिष्वर्थेषु अवारपारीणः।<br>(वा०) अवारपाराद् विगृहीतादपि, विपरीताच्चेति वक्तव्यम्।<br>अवारीणः। पारीणः। पारावारीणः। | |
| शेषे ९२ | ९४. ग्रामाद्य-खञौ<br>ग्रामशब्दाद् य, खञ् इत्येतौ प्रत्ययौ भवतः शेषे।<br>ग्रामे जातः इत्यादिष्वर्थेषु ग्राम्यः, ग्रामीणो वा। | |
| शेषे ९२ | ९५. कत्त्र्यादिभ्यो ढकञ्<br>कत्त्र्यादिभ्यो ढकञ् प्रत्ययो भवति शेषे।<br>कुत्सितास्त्रयः कत्त्रयः अस्मादेव निपातनात्कोः कद्भावः।<br>कत्त्रिषु जातः इत्यादिष्वर्थेषु कात्त्रेयकः। नगरे जातः इत्यादिष्वर्थेषु नागरेयकः।<br>ग्रामे जातः इत्यादिष्वर्थेषु ग्रामेयकः। | ढकञ् ९६ |
| ढकञ् ९५ | ९६. कुल-कुक्षि-ग्रीवाभ्यः श्वास्यलंकारेषु<br>कुलादिभ्यः शेषे ढकञ् प्रत्ययो भवति यथासंख्यं श्वन्, असिं, अलङ्कार- इत्यर्थेषु विशेष्येषु।<br>कुले जातादिः कौलेयकः श्वा। कौलोऽन्यः।<br>कौक्षेयकोऽसिः। कौक्षोऽन्यः।<br>ग्रीवासु भवः ग्रैवेयकोऽलङ्कारः। ग्रैवोऽन्यः। | |
| शेषे ९२ | ९७. नद्यादिभ्यो ढक्<br>'नदी' इत्येवमादिभ्यो ढक् प्रत्ययो भवति, शेषे।<br>नद्यां जातादि नादेयम्। मह्यां जातादि माहेयम्।<br>वाराणस्यां जातादि वाराणसेयम्। | |

| | | |
|---|---|---|
| शेषे ९२ | ९८. दक्षिणा-पश्चात्पुरसस्त्यक्<br>दक्षिणा, पश्चात्, पुरस्- इत्येतेभ्यस्त्यक् प्रत्ययो भवति शेषे।<br>पश्चात्पुरसोरव्ययत्वात् साहचर्याद् 'दक्षिणा' शब्दोऽपि 'दक्षिणादाच्' इत्याजन्तमव्ययमेव गृह्यते।<br>दाक्षिणात्यः। पाश्चात्त्यः। पौरस्त्यः। | |
| शेषे ९२ | ९९. कापिश्याः ष्फक्<br>कापिशीशब्दात् ष्फक् प्रत्ययो भवति, शेषे। षकारो ङीषर्थः।<br>कापिशी नाम देशविशेषः। तत्र जातादि कापिशायनं मधु। कापिशायनी द्राक्षा। | ष्फक् १०० |
| शेषे ९२ ष्फक् ९९ | १००. रङ्कोरमनुष्येऽण् च<br>अमनुष्येऽभिधेये रङ्कुशब्दाद् अण् प्रत्ययो भवति, चकात् ष्फक् च शेषे।<br>रङ्कुर्नाम देशविशेषः। तत्र जातादिः राङ्कवो गौः। राङ्कवायणो गौः। | |
| शेषे ९२ | १०१. द्यु-प्रागपागुदक्-प्रतीचो यत्<br>दिव्, प्राञ्च्, अपाञ्च्, उदञ्च, प्रत्यञ्च्- इत्येतेभ्यो यत्प्रत्ययो भवति, शेषे।<br>दिवि जातादि दिव्यम्।<br>प्राचि जातादि प्राच्यम्।<br>अपाचि जातादि अपाच्यम्।<br>उदीचि जातादि उदीच्यम्।<br>प्रतीचि जातादि प्रतीच्यम्। | |
| शेषे ९२ | १०२. कन्थायाष्ठक्<br>कन्थायाष्ठक् प्रत्ययो भवति शेषे।<br>तिर्यक्स्यूतबहुवस्त्रखण्डसमूहः कन्था। देशोविशेष इत्यन्ये।<br>तत्र जातादिः कान्थिकः। | कन्थायाः १०३ |
| शेषे ९२<br>कन्थायाः१०२ | १०३. वर्णौ वुक्<br>वर्णुः = नदः, तस्य समीपदेशोऽपि लक्षणया वर्णुः, तद्विषयार्थवाचि कन्थाशब्दाद् वुक् प्रत्ययो भवति।<br>'तथा हि जातं हिमवत्सु कान्थकम्।' | |

| | | |
|---|---|---|
| शेषे ९२ | १०४. अव्ययात्त्यप्<br>अव्ययात्त्यप् प्रत्ययो भवति शेषे।<br>(वा०) अमेह-क्व-तसि-त्रेभ्य एव।<br>'अमाऽन्तिकसहार्थयोः'।<br>अमा = समीपे, सह वा जातादिः अमात्यः।<br>इह जातादिः इहत्यः।<br>क्व जातादिः क्वत्यः।<br>ततः जातादिः ततस्त्यः।<br>तत्र जातादिः तत्रत्यः।<br>(वा०) त्यब्नेर्ध्रुव इति वक्तव्यम्।<br>नित्यः।<br>(वा०) निसो गते।<br>निस् इत्यव्ययात्त्यप् वक्तव्यो गते गम्ये इति वार्तिकार्थः।<br>वर्णाश्रमेभ्यो निर्गत इति निष्ट्यः चाण्डालादिः।<br>'निस् त्य' इत्यवस्थायां 'ह्रस्वात्तादौ तद्धिते' (८.३.१०१) इति सूत्रेण निसः सकारस्य षत्वे, कृते, ष्टुत्वम्।<br>(वा०) अरण्याण्णो वक्तव्यः।<br>अरण्ये भवाः आरण्याः सुमनसः।<br>(वा०) दूरादेत्यः।<br>दूरे भवः, दूरादगतो वा दूरेत्यः पथिकः।<br>(वा०) उत्तरादाहञ्।<br>उत्तरस्मादागतः, उत्तरस्मिन् वा भव इति औत्तराहः। | त्यप् १०५ |
| शेषे ९२ त्यप् १०४ | १०५. ऐषमो-ह्यः-श्वसोऽन्यतरस्याम्<br>ऐषमस्, ह्यस्, श्वस् इत्येतेभ्यो वा त्यप् प्रत्ययो भवति शेषे।<br>ऐषमः इत्यव्ययं वर्तमाने संवत्सरे वर्तते, तत्र भवम् ऐषमस्त्यम्।<br>ह्यस् इत्यव्ययं गतेऽह्नि, तत्र भवं ह्यस्त्यम्।<br>श्वस् इत्यव्ययम् अनागतेऽह्नि, तत्र भवं श्वस्त्यम्।<br>पक्षे 'सायंचिरम्' इत्यादिना ट्यु-ट्युलौ, तुडागमश्च- ऐषमस्तनम्। ह्यस्तनम्। श्वस्तनम्।<br>'श्वसस्तुट् च' इति सूत्रेण ठञि, तुडागमे च श्वःशब्दस्य शौवस्तिकम् इति रूपमपि भवति। | |

| | | |
|---|---|---|
| शेषे ९२ | १०६. तीररुप्योत्तरपदादञ्-ञौ<br>तीरोत्तरपदाद्, रूप्योत्तरपदाच्च प्रातिपदिकात् यथासंख्यम् अञ् प्रत्ययः, ञप्रत्ययश्च भवतः, शेषे।<br>तीरोत्तरपदात् काकतीरे भवं काकतीरम्।<br>पल्वलतीरे भवं पाल्वलतीरम्।<br>रूप्योत्तरपदात् - शिवरूप्ये भवम् शैवरूप्यम्। | |
| शेषे ९२ | १०७. दिक्पूर्वपदादसंज्ञायां ञः<br>दिक्पूर्वपदात् प्रातिपदिकादसंज्ञाविषयाद् ञः प्रत्ययो भवति, शेषे।<br>पूर्वस्यां शालायां भवः पौर्वशालः। दक्षिणस्यां शालायां भवः दाक्षिणशालः। 'तद्धितार्थोत्तर पदसमाहारे च' इति सूत्रेण समासः, 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति वार्तिकेन पुंवद्भावः, 'यस्येति च, इति सूत्रेण आकारस्य लोपः। | दिक्पूर्वपदात्१०८ |
| शेषे ९२<br>दिक्पूर्वपदात् १०७ | १०८. मद्रेभ्योऽञ्<br>दिक्पूर्वपदान्मद्रशब्दादञ् प्रत्ययो भवति, शेषे।<br>पूर्वेषु मद्रेषु भवः पौर्वमद्रः। | अञ् १०९ |
| अञ् १०८ | १०९. उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्<br>उदीच्यग्रामवाचिनः प्रातिपदिकाद् बह्चोऽन्तोदात्ताद् अञ् प्रत्ययो भवति, शेषे।<br>उत्तरदेशे शिवपुरं नाम ग्रामविशेषः, तत्र भवं शैवपुरम्। | |
| शेषे ९२ | ११०. प्रस्थोत्तरपद-पलद्यादि-कोपधादण्<br>प्रस्थोत्तरपदात्, पलदि इत्येवमादिभ्यः, ककारोपधाच्च प्रातिपादिकदण् प्रत्ययो भवति, शेषे।<br>उदीच्यग्रामादिति अञोऽपवादः।<br>महिकिप्रस्थो नाम ग्रामविशेषः, तत्र भवः माहिकिप्रस्थः।<br>पलदी नाम ग्रामविशेषः, तत्र भवः पालदः।<br>निलीनको नाम ग्रामविशेषः, तत्र भवः, नैलीनकः। | अण् ११३ |
| शेषे ९२ अण् ११० | १११. कण्वादिभ्यो गोत्रे<br>गोत्रमिह न प्रत्ययार्थः, न च प्रकृतिविशेषणम्। तर्ह्येवं संबध्यते कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्योऽणु प्रत्ययो भवति, शेषे। वृद्धाच्छ इति छस्यापवादः।<br>कण्वस्य गोत्रापत्यं काण्व्यः,गर्गादित्वाद् यञ्।<br>काण्व्यस्य छात्राः काण्वाः।<br>'आपत्स्य च तद्धितेऽनाति' इति यकारस्य लोपः। | गोत्रे ११३ |

| | | |
|---|---|---|
| शेषे ९२ अण् ११०<br>गोत्रे १११ | ११२. इञश्च<br>गोत्रे य इञ् विहितस्तदन्तात् प्रातिपदिकादण् प्रत्ययो भवति, शेषे।<br>छस्यापवादः।<br>दक्षस्य गोत्रापत्यं दाक्षिः, दाक्षेश्छात्राः दाक्षाः। | इञ् ११३ |
| | ११३. न द्व्यचः प्राच्यभरतेषु<br>प्राच्यगोत्रेषु , भरतगोत्रेषु च य इञ्विहितस्तदन्ताद् द्व्यच्कात् प्रातिपदिकादण् प्रत्ययो न भवति, शेषे।<br>प्राच्याश्च भरताश्चेतिविग्रहे इतरेतरयोगद्वन्द्वे प्राच्यभरताः, तेषु प्राच्यभरतेषु।<br>पूर्वेण प्राप्तः प्रतिषिध्यते।<br>प्राच्यगोत्रेषु – प्रौष्ठस्य छात्राः प्रौष्ठीयाः। अत्र वृद्धाच्छः।<br>भरतगोत्रेषु – काशेः छात्राः काशीयाः।<br>अत्रापि वृद्धाच्छः।<br>भरतानां प्राच्यत्वेऽपि पृथगुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणं ज्ञापयति। तेन 'इञः प्राचाम्'(२.४.६०)इति सूत्रेण भरतेभ्यो युवप्रत्ययस्य लुग् न भवति, औद्दालकिः पिता, औद्दालकायनः पुत्रः इति 'आर्हादगोपुच्छ०'(५.१.६०) इति सूत्रे कैयटः। | |
| शेषे ९२ | ११४. वृद्धाच्छः<br>वृद्धसंज्ञकात्प्रातिपदिकाच्छप्रत्ययो भवति, शेषे।<br>शालायां जातादिः शालीयः। मालायां जातादिः मालीयः।<br>एणीपचनीयः। गोनर्दीयः।<br>एणीपचन, गोनर्दशब्दयोः 'एङ् प्राचां देशे' (१.१.७५) इति सूत्रेण वृद्धसंज्ञा। | वृद्धात् ११८ |
| शेषे ९२<br>वृद्धात् ११४ | ११५. भवतष्ठक्छसौ<br>भवत् इति वृद्धसंज्ञकात् प्रातिपदिकात् ठक्, छस्- इत्येतौ प्रत्ययौ भवतः, शेषे।<br>भवत अयमिति भावत्कः। भवदीयः।<br>ठकि 'इसुसुक्तान्तात् कः' इति सूत्रेण ठस्य कादेशः। छप्रत्यये तु 'आयनेयी०' इति सूत्रेण छस्य ईयादेशः। | |

| | | |
|---|---|---|
| शेषे ९२वृद्धात् ११४ | **११६. काश्यादिभ्यष्ठञ्-ञिठौ**<br>'काशि' इत्येवमादिभ्यः वृद्धसंज्ञेकभ्यः अञ्, ञिठ- इत्येतौ प्रत्ययौ भवतः, शेषे।<br>काश्यां जाता इत्यादिरिति काशिकी, काशिका। ठञ् प्रत्यये कृते 'टिड्ढाणञ्' इति ङीप्, ञिठ्प्रत्यये तु टाबिति विशेषः। बेदिर्देशविशेषः, तत्र जाता इत्यादिः, बैदिकी, बैदिका। | ठञ्ञिठौ ११८ |
| शेषे ९२वृद्धात् ११४<br>ठञ्ञिठौ ११६ | **११७. वाहीकग्रामेभ्यश्च**<br>वाहीकग्रामवाचिभ्यो वृद्धसंज्ञकेभ्यः प्रातिपदिकेभ्यः ठञ्, ञिठ- इत्येतौ प्रत्ययौ भवतः, शेषे।<br>कास्तीरं नाम वाहीकग्रामः। तत्र जाता इत्यादिः - कास्तीरिकी। कास्तीरिका। | वाहीकग्रामेभ्यः११८ |
| शेषे ९२<br>ठञ्ञिठौ ११६<br>वाहीकग्रामेभ्यः ११७ | **११८. विभाषोशीनरेषु**<br>उशीनरेषु ये वाहीकग्रामवाचिनस्तेभ्यः वृद्धसंज्ञकेभ्यः प्रातिपदिकेभ्य ठञ्,ञिठ- इत्येतौ प्रत्ययौ वा भवतः, शेषे।<br>पक्षे छः।<br>सौदर्शनो नाम उशीनरदेशे कश्चिद्ग्रामः, तत्र जाता इत्यादिः - सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया। | |
| | **११९. ओर्देशे ठञ्**<br>उवर्णान्ताद्देशवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति, शेषे।<br>निषदकर्षूः इति कश्चिदग्रामः, तत्र जातादिः, नैषादकर्षुकः।<br>'इसुसुक्तान्तात्कः' इति ठस्य कः, केऽणः' इति ह्रस्वः। | ओः ठञ् १२०<br>देशे १४५ |
| शेषे ९२ ओः ११९<br>ठञ् ११९ देशे ११९ | **१२०. वृद्धात्प्राचाम्**<br>प्राग्देशवचिनः उवर्णान्ताद् वृद्धसंज्ञकादेव प्रातिपदिकात्ठञ् प्रत्ययो भवति, शेषे।<br>आढकजम्बूर्नाम कश्चिद्ग्रामः, तत्र जातादिः - आढकजम्बुकः।<br>ठस्य कादेशः,'केऽणः' इति सूत्रेण ऊकारस्य ह्रस्वश्च। | वृद्धात् १२६ |

| | | |
|---|---|---|
| शेषे ९२ देशे ११९<br>वृद्धात् १२० | १२१. धन्वयोपधाद्वुञ्<br>धन्ववाचिनो, योपधाच्च देशवाचिनो वृद्धसंज्ञकात्प्रातिपदिकाद् वुञ् प्रत्ययो भवति, शेषे।<br>धन्वशब्दो मरुदेशवचनः।<br>धन्वात् - ऐरावतं नाम धन्वः। तत्र जातादिः ऐरावतकः।<br>योपधात् - संकाश्ये जातादिः सांकाश्यकः।<br>काम्पिल्ये जातादिः काम्पिल्यकः। | वुञ् १३० |
| शेषे ९२ देशे ११९<br>वृद्धात् १२०<br>वुञ् १२१ | १२२. प्रस्थ-पुर-वहान्ताच्च<br>प्रस्थ, पुर, वह- इत्येवमन्ताद् देशवाचिनो वृद्धसंज्ञकात्प्रातिपदिकाद् वुञ् प्रत्ययो भवति, शेषे।<br>पुरान्तग्रहणमप्रागर्थम्, प्राग्देशे तु (४.२.१२३) इत्युत्तरसूत्रेण सिद्धम्।<br>मालाप्रस्थे जातादिः मालाप्रस्थकः।<br>नान्दीपुरं नाम वाहीकेषु ग्रामः, तत्र जातादिः नान्दीपुरकः। | |
| शेषे ९२ देशे ११९<br>वृद्धात् १२०<br>वुञ् १२१ | १२३. रोपधेतोः प्राचाम्<br>रोपधाद्, ईकारान्ताच्च प्राग्देशवाचिनो वृद्धसंज्ञकात् प्रातिपदिकाद् वुञ् प्रत्ययो भवति।<br>रोपधात् - पाटलिपुत्रे जातादिः पाटलिपुत्रकः।<br>ईकारान्तात् - काकन्दी नाम देशः, तत्र जातादिः काकन्दकः। | |
| शेषे ९२ देशे ११९<br>वृद्धात् १२०<br>वुञ् १२१ | १२४. जनपद-तदवध्योश्च<br>जनपदवाचिनः, जनपदावधिवाचिनश्च वृद्धसंज्ञकात् प्रातिपदिकाद् वुञ्प्रत्ययो भवति, शेषे।<br>यः प्रसिद्धो जनपदः जनपदान्तराणाम् अवधित्वेन गृह्यते स जनपदावधिवाची भवति।<br>जनपदात् - आदर्शो नाम जनपदः, तत्र जातादिः आदर्शकः।<br>जनपदावधिवाचिनः - त्रिगर्तो नाम जनपदविशेषस्यावधिः, जनपदश्च, तत्र जातादिः त्रैगर्तकः। | जनपदतदवध्योः१२५ |

| | | |
|---|---|---|
| शेषे ९२ देशे ११९<br>वृद्धात् १२०<br>वुञ् १२१<br>जनपदतदवध्योः१२४ | १२५. अवृद्धादपि बहुवचनविषयात्<br>जनपदवाचिनः, जनपदावधिवाचिनश्च अवृद्धसंज्ञकात्,अपिना वृद्धसंज्ञकादपि बहुवचनविषयात् प्रातिपदिकाद् वुञ्प्रत्ययो भवति, शेषे।<br>अवृद्धसंज्ञकाद् जनपदवाचिनः – अङ्गेषु, बङ्गेषु, कलिङ्गेषु वा जातादिः आङ्गकः, बाङ्गकः, कालिङ्गकः।<br>अवृद्धसंज्ञकाद् जनपदावधिवाचिनः – अजमीढा नाम जनपदो जनपदानामवधिः,तत्र जातादिः आजमीढकः।<br>वृद्धसंज्ञकाद् जनपदवाचिनः – दार्वा इति बहुवचनान्तोऽयं जनपदे, तत्र जातादिः दार्वकः।<br>वृद्धसंज्ञकाद् जनपदावधिवाचिनः – कालञ्जराः नाम जनपदो जनपदानामवधिः, तत्र जातादिः कालञ्जरकः। | अवृद्धात् १२६ |
| शेषे ९२ देशे ११९<br>वृद्धात् १२०<br>वुञ् १२१<br>अवृद्धात् १२५ | १२६. कच्छाग्नि–वक्त्र–वर्तोत्तरपदात्<br>कच्छ, अग्नि, वक्त्र, वर्त इत्येवमुत्तरपदाद् देशवाचिनो वृद्धसंज्ञकाद्, अवृद्धसंज्ञकाच्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति शेषे।<br>कच्छोत्तरपदात्<br>वृद्धात् – दारुकच्छे जातादिः दारुकच्छकः।<br>अवृद्धात् – पिप्पलीकच्छे जातादिः पैप्पलीकच्छकः।<br>अग्न्युत्तरपदात्<br>वृद्धात् – काण्डाग्नौ जातादिः काण्डाग्नकः।<br>अवृद्धात् – विभुजाग्नौ जातादिः वैभुजाग्नकः।<br>वक्त्रोत्तरपदात्<br>वृद्धात् – ऐन्द्रवक्त्रे जातादिः ऐन्द्रवक्त्रकः।<br>अवृद्धात् – सिन्धुवक्त्रे जातादिः सैन्धुवक्त्रकः।<br>वर्तोत्तरपदात्<br>वृद्धात् – बाहुवर्ते जातादिः बाहुवर्तकः।<br>अवृद्धात् – चक्रवर्ते जातादिः चाक्रवर्तकः। | |
| शेषे ९२ देशे ११९<br>वुञ् १२१ | १२७. धूमादिभ्यश्च<br>'धूम' इत्येवमादिभ्यो देशवाचिभ्यः प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति, शेषे।<br>धूमे जातादिः धौमकः।<br>खण्डे जातादिः खाण्डकः। | |

| | | |
|---|---|---|
| शेषे ६२ वुञ् १२१ | १२८. नगरात्कुत्सन-प्रावीण्ययोः<br>नगरशब्दाद् वुञ् प्रत्ययो भवति, कुत्सने, प्रावीण्ये च गम्यमाने, शेषे।<br>कुत्सनम् = निन्दनम्।<br>प्रावीण्यम् = नैपुण्यम्।<br>नगरे जातादिः नागरकश्चौरः, शिल्पी वा।<br>कुत्सन-प्रावीण्ययोः इति किम् ? नगरे जातादिः नागरो ब्राह्मणः।<br>अत्र औत्सर्गिकोऽण्। | |
| शेषे ६२ वुञ् १२१ | १२९. अरण्यान्मनुष्ये<br>अरण्यशब्दाद् वुञ् प्रत्ययो भवति, शेषे, मनुष्येऽभिधेये।<br>अरण्ये जातादिः आरण्यको मनुष्यः।<br>(वा०) पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम्।<br>आरण्यकः पन्थाः, अध्यायो, न्यायो, विहारो, मनुष्यो, हस्ती वा।<br>विहारः = क्रीडा।<br>आरण्यकोऽध्यायः - योऽरण्येऽधीयते उपनिषद्भागः स उच्यते।<br>(वा०) वा गोमयेषु।<br>आरण्यका गोमयाः, पक्षे आरण्या इति 'अरण्याण्णो वक्तव्यः' इति 'अव्ययात्त्यप्' (४.२.१०४) इति पठितेन वार्तिकेन णः। | |
| शेषे ६२ वुञ् १२१<br>देशे ११६ | १३०. विभाषा करु-युगन्धराभ्याम्<br>देशवाचिभ्यां कुरु-युगन्धरशब्दाभ्यां विभाषा वुञ् प्रत्ययो भवति, शेषे।<br>कुरुषु जातादिः कौरवकः।<br>पक्षे कच्छादित्वादणपि - कौरवः।<br>युगन्धरेषु जातादिः यौगन्धरकः।<br>पक्षे प्रादीव्यतोऽण् - यौगन्धरः। | |
| शेषे ६२ देशे ११६ | १३१. मद्र-वृज्योः कन्<br>देशवाचिभ्यां मद्र-वृजिशब्दाभ्यां कन् प्रत्ययो भवति।<br>मद्रेषु जातादिः मद्रकः<br>वृजिषु जातादि वृजिकः। | |

| | | |
|---|---|---|
| शेषे ९२ देशे ११९ | १३२. कोपधादण्<br>देशवाचिनः कोपधात्प्रातिपदिकादण् प्रत्ययो भवति।<br>जनपदवुञो ऽपवादः।<br>ऋषिकेषु जातादिः आर्षिकः। माहिषिकाः जनपदः, तत्र जातादिः माहिषिकः। | अण् १३३ |
| शेषे ९२ देशे ११९<br>अण् १३२ | १३३. कच्छादिभ्यश्च<br>कच्छ इत्येवमादिभ्यो देशवाचिभ्यो ऽपि अण् प्रत्ययो भवति, शेषे।<br>वुञादेरपवादः।<br>कच्छेजातादिः काच्छः। सिन्धौ जातादिः सैन्धवः। | कच्छादिभ्यः १३४ |
| शेषे ९२ देशे ११९<br>अण् १३२<br>कच्छादिभ्यः १३३ | १३४. मनुष्य-तत्स्थयोर्वुञ्<br>मनुष्ये, मनुष्यस्थे च जातादौ प्रत्ययार्थे कच्छादिभ्यः वुञ् प्रत्ययो भवति।<br>अणो ऽपवादः।<br>काच्छको मनुष्यः। काच्छमस्य हसितं, जल्पितम्। काच्छिका चूडा।<br>सैन्धवको मनुष्यः। सैन्धवकमस्य हसितं, जल्पितम्। सैन्धविका चूडा।<br>मनुष्य-तत्स्थयोरिति किम् ? काच्छो गौः। | |
| शेषे ९२ देशे ११९<br>वुञ् १३४ | १३५. अपदातौ साल्वात्<br>अपदातावेव मनुष्ये, मनुष्यस्थे च जातादौ प्रत्ययार्थे साल्वशब्दाद् वुञ् प्रत्ययो भवति। साल्वशब्दः कच्छादिषु पठ्यते इति ततः कच्छादित्वात्पूर्वसूत्रेणैव वुञि सिद्धे नियमार्थमिदम्।<br>साल्वको मनुष्यः। साल्वकमस्य हसितं, जल्पितम्।<br>अपदाताविति किम् ? साल्वः पदातिः व्रजति। 'कच्छादिभ्यश्च' (४.२.१३३) इत्यण्। | साल्वात् १३६ |
| शेषे ९२ देशे ११९<br>वुञ्१३४<br>साल्वात् १३६ | १३६. गो-यवाग्वोश्च<br>गवि, यगाग्वां च जातादौ प्रत्ययार्थे साल्वशब्दाद् वुञ्प्रत्ययो भवति, शेषे।<br>साल्वको गौः। साल्विका यवागूः। अन्यस्मिन्नर्थे साल्वमिति।<br>'कच्छादिभ्यश्च' (४.२.१३३) इत्यण्। | |
| शेषे ९२ देशे ११९ | १३७. गर्त्तोत्तरपदाच्छः<br>गर्त्तोत्तरपदाद् देशवाचिनः प्रातिपदिकात् छः प्रत्ययो भवति, शेषे।<br>वृकगर्त्तीयम्।<br>वृकगर्त्तो नाम देशः; तत्र जातादीत्यर्थः। | छः ४.३.१ |

| | | |
|---|---|---|
| शेषे ६२ देशे ११६ छः १३७ | १३८. गहादिभ्यश्च<br>गह इत्येवमादिभ्यः प्रातिपदिकेभ्यः छः प्रत्ययो भवति, शेषे।<br>गहीयम्। गहो नाम देशः, तत्र जातादीत्यर्थः।<br>(गणसूत्रम्) कुग्जनस्य परस्य च।<br>जनकीयम्। परकीयम्।<br>(गणसूत्रम्) देवस्य च।<br>देवकीयम्।<br>(गणसूत्रम्) स्वस्य च।<br>स्वकीयम्।<br>(गणसूत्रम्) वेणुकादिभ्यश्छण् वक्तव्यः।<br>वैणुकीयम्। वैत्रकीयम्। | |
| शेषे ६२ देशे ११६ छः १३७ | १३९. प्राचां कटादेः<br>प्राग्देशवाचिनः कटादेश्छः प्रत्ययो भवति, शेषे।<br>कटादिरिति नास्ति कटादिगणोऽपितु यस्य शब्दस्य आदौ कट इति शब्दः स कटादिः, यथा कटनगरशब्दः।<br>कटनगरो नाम प्राच्यो देशः, तत्र जातादि कटनगरीयम्।<br>एवमेव -कटघोषीयम्। कटपल्वलीयम्। | |
| शेषे ६२ छः १३७ | १४०. राज्ञः क च<br>राजन् इतिशब्दस्य ककारश्चान्तादेशो भवति, छ प्रत्ययश्च।<br>राज्ञः इदम् राजकीयम्। | |
| शेषे ६२ देशे ११६ छः १३७ | १४१. वृद्धादकेकान्त-खोपधात्<br>अक, इक- इत्येतदन्तात्, खोपधाच्च वृद्धसंज्ञकाद्देशवाचिनः प्रातिपदिकात् छः प्रत्ययो भवति, शेषे।<br>अकान्तात् - ब्राह्मणको नाम जनपदो यत्र ब्राह्मणाः आयुधजीविनः, तत्र जातो ब्राह्मणकीयः।<br>इकान्तात् - शाल्मलिको नाम देशः, तत्र भवः शाल्मलिकीयः।<br>खोपधात् - आयोमुखो नाम बाहीकग्रामः, तत्र जातादि आयोमुखीयम्। | वृद्धात् १४२ |

| | | |
|---|---|---|
| शेषे ९२ देशे ११९<br>छः १३७<br>वृद्धात् १४१ | १४२. कन्था-पलद-नगर-ग्राम-ह्रदोत्तरपदात्<br>कन्था, पलद, नगर, ग्राम, ह्रद- इत्येतदुत्तरपदाद् वृद्धसंज्ञकाद् देशवाचिनः प्रातिपदिकात् छः प्रत्ययो भवति, शेषे।<br>दाक्षिकन्थायां जातादि दाक्षिकन्थीयम्।<br>दाक्षिपलदे जातादि दाक्षिपलदीयम्।<br>दाक्षिनगरे जातादि दाक्षिनगरीयम्।<br>दाक्षिग्रामे जातादि दाक्षिग्रामीयम्।<br>दाक्षिह्रदे जातादि दाक्षिह्रदीयम्। | |
| शेषे ९२ छः १३७ | १४३. पर्वताच्च<br>पर्वतशब्दाच्छप्रत्ययो भवति, शेषे।<br>पर्वतीयो राजा। पर्वतीयः पुरुषः। | पर्वतात् १४४ |
| शेषे ९२<br>पर्वतात् १४३<br>छः १३७ | १४४. विभाषाऽमनुष्ये<br>पर्वतशब्दाच्छप्रत्ययो वा भवति, अमनुष्ये वाच्ये, शेषे।<br>पर्वते जातानि पर्वतीयानि फलानि।<br>पक्षेऽण् - पार्वतानि फलानि।<br>अमनुष्ये इति किम् ? पर्वतीयो मनुष्यः। | |
| शेषे ९२ देशे ११९<br>छः १३७ | १४५. कृकण-पर्णाद् भारद्वाजे<br>भारद्वाजदेशवासिनः कृकणशब्दात्, पर्णशब्दाच्च छप्रत्ययो भवति, शेषे।<br>कृकणे जातादि कृकणीयम्।<br>पर्णे जातादि पर्णीयम्।<br>भारद्वाजे इति किम् ? कार्कणम्। पार्णम्। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां चतुर्थाध्यायस्य द्वितीयः पादः ।।

।। श्रीः ।।

## ।। अथ चतुर्थाध्यायस्य तृतीयः पादः ।।

| | | |
|---|---|---|
| शेषे ४.२.९२<br>छः १३७<br>अण् ४.१.८३<br>ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | १. युष्मदस्मदोरन्यतरस्यां खञ् च<br>युष्मद्, अस्मद्-इत्येताभ्यां शब्दाभ्यां खञ् प्रत्ययो भवति, चकारात् छप्रत्ययश्च अन्यतरस्याम्, शेषे। पक्षेऽण्।<br>युष्मदस्मदोरिति षष्ठीनिर्देश उत्तरार्थः।<br>युवयोर्युष्माकं वा अयं यौष्माकीणः, युष्मदीयः, यौष्माको वा ।<br>आवयोरस्माकं वा अयम् आस्माकीनः, अस्मदीयः, आस्माको वा । | |
| युष्मदस्मदोः १ | २. तस्मिन्नणि च युष्माकास्माकौ -<br>तस्मिन् = खञि, अणि च परे<br>युष्मदस्मदोर्यथासंख्यं युष्माक, अस्माक - इत्येतौ आदेशौ भवतः।<br>खञि - यौष्माकीणः। आस्माकीनः।<br>अणि - यौष्माकः। आस्माकः।<br>छप्रत्यये तु आदेशौ न - युष्मदीयः। अस्मदीयः। | तस्मिन्नणि ३ |
| तस्मिन्नणि २<br>युष्मदस्मदोः १ | ३. तवकममकावेकवचने<br>एकार्थवाचिनोर्युष्मदस्मदोः खञि, अणि च परे यथासंख्यं तवक, ममक-इत्येतावादेशौ भवतः।<br>खञि- तव अयं तावकीनः। ममायं मामकीनः।<br>अणि- तव अयं तावकः। मम अयं मामकः।<br>छप्रत्यये तु आदेशौ न - त्वदीयः। मदीयः। | |
| शेषे ४.२.९२ | ४. अर्धाद्यत्<br>अर्धशब्दाद् यत्प्रत्ययो भवति, शेषे।<br>अर्धे जातादिः अर्ध्यः। | अर्धात्७ यत् ६ |
| शेषे ४.२.९२<br>अर्धात् ४ यत् ४ | ५. परावराधमोत्तम-पूर्वाच्च<br>पर, अवर, अधम, उत्तम- इत्येवंपूर्वाच्च अर्धशब्दाद् यत्प्रत्ययो भवति शेषे।<br>परार्ध्यम्। अवरार्ध्यम्। अधमार्ध्यम्, उत्तमार्ध्यम्। | |

| | | |
|---|---|---|
| शेषे ४.२.६२<br>अर्धात् ४ यत् ४ | ६. दिक्-पूर्वपदाट्ठञ् च<br>दिक्पूर्वपदाद् अर्धशब्दात् ठञ् प्रत्ययो भवति, चकाराद् यत्प्रत्ययश्च शेषे।<br>पौर्वार्धिकम् पूर्वार्ध्यम्।<br>दाक्षिणार्धिकम्, दक्षिणार्ध्यम्। | दिक्पूर्वपदात् ७ |
| शेषे ४.२.६<br>अर्धात् ४<br>दिक्पूर्वपदात् ७ | ७. ग्राम-जनपदैकदेशादञ्-ठञौ<br>दिक्पूर्वपदाद् ग्रामैकदेशवाचिनो, जनपदैकदेशवाचिनश्च अर्धान्तात् प्रातिपदिकाद् अञ्, ठञ्- इत्येतौ प्रत्ययौ भवतः शेषे।<br>इमे खल्वस्माकं ग्रामस्य, जनपदस्य वा पौर्वार्धाः, पौर्वार्धिका वा। | |
| शेषे ४.२.६ | ८. मध्यान्मः<br>मध्यान्मः प्रत्ययो भवति शेषे।<br>मध्ये भवः मध्यमः।<br>(वा०) आदेश्चेति वक्तव्यम्।<br>आदिमः।<br>(वा०) अवोऽधसोर्लोपश्च।<br>अवरस्मिन् भवम् अवमम्।<br>अधरस्मिन् भवम् अधमम्। | मध्यात् ६ |
| शेषे ४.२.६<br>मध्यात् ६ | ६. अ साम्प्रतिके<br>मध्यशब्दाद् 'अ' इति प्रत्ययो भवति साम्प्रतिके=न्याय्यार्थे।<br>सूत्रे 'अ' इति लुप्तप्रथमाकं पदम्। 'सम्प्रति' एव सांप्रतिकम्, स्वार्थे विनयादत्वाट्ठक्।<br>सम्प्रति इत्यव्ययस्य द्वौ अर्थो - न्याय्यम्, इदानीं चेति। अत्र साम्प्रतंशब्दः न्याय्यार्थको विवक्षितः। अतः सूत्रस्योक्तार्थः सम्पद्यते।<br>मध्ये भवं मध्यं काष्ठम्, नातिह्रस्वं नातिदीर्घमित्यर्थः।<br>मध्ये भवो मध्यो वैयाकरणः, नात्युत्कृष्टो, नात्यवकृष्ट इत्यर्थः। | |

| | | |
|---|---|---|
| शेषे ४.२.९ | १०. द्वीपादनुसमुद्रं यञ्<br>समुद्रसमीपे यो द्वीपस्तस्माद् यञ्प्रत्ययो भवति, शेषे।<br>सूत्रे अनुसमुद्रमिति पदे समुद्रं समया इति विग्रहे अनर्यत्समया (२.१.१५) इत्यनेनाव्ययीभावः।<br>समुद्रस्य समीपे यो द्वीपः तत्र जातादि द्वैप्यम् इति।<br>अनुसमुद्रमिति किम्? यो द्वीपः समुद्रस्य समीपे नास्ति तत्र जातादि द्वैपम्, कच्छादिभ्यश्च(४.२.१३३) इति सूत्रेणाण्।<br>मनुष्ये, तत्स्थे चाऽर्थे द्वैपकम्।<br>मनुष्य-तत्स्थयोर्वुञ्(४.२.१३४) इति वुञ्। | |
| शेषे ४.२.९ | ११. कालाट्ठञ्<br>कालविशेषवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति, शेषे।<br>मासे जातादि मासिकम्। संवत्सरे जातादि सांवत्सरिकम्। सायंप्रातर्भवः सायंप्रातिकः।<br>पुनःपुनः भवः पौनःपुनिकः। | कालात् २४ |
| शेषे ४.२.९<br>कालात् ११<br>ठञ् ११ | १२. श्राद्धे शरदः<br>शरच्छब्दात् ठञ्प्रत्ययो भवति, श्राद्धेऽभिधेये, शेषे।<br>ऋत्वणोऽपवादः।<br>शरदि भवं शारदिकं श्राद्धम्। शारदमन्यत्।<br>'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' (४.३.१६) इत्यण्। | शरदः १३ |
| शेषे ४.२.९<br>कालात् ११<br>ठञ् ११ शरदः १२ | १३. विभाषा रोगातपयोः<br>रोगे, आतपे चाभिधेये शरच्छब्दाट्ठञ् प्रत्ययो वा भवति, शेषे।<br>ऋत्वणोऽपवादः।<br>शरदि भवो शारदिको रोगः, शारदो वा।<br>शारदिक आतपः, शारदो वा।<br>रोगातापयोरिति किम् ? शारदं दधि। | विभाषा १५ |
| शेषे ४.२.९<br>कालात् ११<br>ठञ् ११ विभाषा १३ | १४. निशा-प्रदोषाभ्यां च<br>निशा-प्रदोषाभ्यां च ठञ् प्रत्ययो वा भवति।<br>नैशिकम्, नैशम्। प्रादोषिकम्, प्रादोषम्।<br>पक्षेऽण्। | |

| | | |
|---|---|---|
| शेषे ४.२.९<br>कालात्११<br>ठञ् ११ विभाषा १३ | १५. श्वसस्तुट् च<br>श्वःशब्दात् ठञ् प्रत्ययो वा भवति, तस्य (ठञ् प्रत्ययस्य) च तुडागमो भवति।<br>'ऐषमो ह्यःश्वसोऽन्यतरस्याम्' इत्यनेन श्वःशब्दात् त्यप् प्रत्ययोऽपि विहितः। एताभ्यां मुक्ते 'सायंचिरंप्राह्णे'(४.३.२३) इत्यनेन ट्यु-ट्युलावपि भवतः। अतः श्वः भवः इत्यर्थे त्रीणि रूपाणि भवन्ति-<br>ठञि, तुडागमे च-शौवस्तिकः।<br>त्यपि- श्वस्त्यम्।<br>ट्यु-ट्युलोः -श्वस्तनः। इति। | |
| शेषे ४.२.९<br>कालात्११ | १६. सन्धिवेलाद्यृतु-नक्षत्रेभ्योऽण्<br>कालवाचकेभ्यः सन्धिवेला इत्येवमादिभ्यः शब्देभ्यः, ऋतुवाचकेभ्यः शब्देभ्यः, नक्षत्रवाचकेभ्यश्च शब्देभ्यः अण् प्रत्ययो भवति, शेषे।<br>ठञोऽपवादः।<br>सन्धिवेलादिभ्यः- सन्धिवेलायां जातादि सान्धि वेलम्। सन्ध्यायां जातादि सान्ध्यम्।<br>ऋतुभ्यः - ग्रीष्मे जातादि ग्रैष्मम्। शिशिरे जातादि शैशिरम्।<br>नक्षत्रेभ्यः - तिष्ये भवादि तैषम्।<br>पुष्ये भवादि पौषम्।<br>तिष्य-पुष्यशब्दाभ्यां अणि कृते 'तिष्य पुष्ययोर्नक्षत्राणि यलोपः' इति यलोपः।<br>(गणसूत्रम्) संवत्सरात्फल-पर्वणोः।<br>सांवत्सरं फलं, पर्व वा।<br>सांवत्सरिकमन्यत्। कालाट्ठञ्' इति ठञ् । | |
| शेषे ४.२.९<br>कालात्११ | १७. प्रावृष एण्यः<br>प्रावृष् इतिशब्दाद् एण्यः प्रत्ययो भवति, शेषे।<br>ऋत्वणोऽपवादः।<br>प्रावृषि भवः प्रावृषेण्यो बलाहकः।<br>जातार्थे तु 'प्रावृषष्ठप्' (४.३.२६) इति ठप्प्रत्ययो वक्ष्यते। | |

| | | |
|---|---|---|
| शेषे ४.२.६<br>कालात् ११ | **१८. वर्षाभ्यष्ठक्**<br>वर्षाशब्दाट्ठक् प्रत्ययो भवति, शेषे।<br>ऋत्वणोऽपवादः।<br>वर्षासु साधु वार्षिकं वासः।<br>'कलात्साधु-पुष्प्यत्पच्यमानेषु' (४.३.४३) इति सूत्रानुसारेण साध्वर्थे ठक्।<br>एवमेव वार्षिकमनुलेपनम्। | वर्षाभ्यः १६ |
| शेषे ४.२.६<br>कालात् ११<br>वर्षाभ्यः १८ | **१६. छन्दसि ठञ्**<br>वर्षाशब्दाच्छन्दसि विषये ठञ् प्रत्ययो भवति, शेषे।<br>ठकोऽपवादः।<br>नभश्च नभ्यस्यश्च वार्षिकावृतू।<br>तस्येदमित्यर्थे प्रत्ययः, ऋतुशब्दश्चात्र ऋत्ववयवमासपरः। एवमेव अग्रिमयोः सूत्रोदाहरणयोरपि। | छन्दसि ठञ् २१ |
| शेषे ४.२.६<br>कालात् ११<br>छन्दसि १६ ठञ् १६ | **२०. वसन्ताच्च**<br>वसन्तशब्दाच्च छन्दसि विषये ठञ् प्रत्ययो भवति, शेषे।<br>ऋत्वणोऽपवादः।<br>मधुश्च माधवश्च वासन्तिकावृतू। | |
| शेषे ४.२.६<br>कालात् ११<br>छन्दसि १६ ठञ् १६<br>सर्वत्र<br>२२ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | **२१. हेमन्ताच्च**<br>हेमन्तशब्दाच्च छन्दसि विषये ठञ् प्रत्ययो भवति, शेषे।<br>ऋत्वणोऽपवादः।<br>सहश्च सहस्यश्च हैमन्तिकावृतू।<br>योगविभाग उत्तरार्थः। | हेमन्तात् २२ |

| | | |
|---|---|---|
| शेषे ४.२.६<br>कालात् ११<br>हेमन्तात् २१<br>ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | २२. सर्वत्राण् च तलोपश्च<br>सर्वत्र = छन्दसि, भाषायां च हेमन्तशब्दाद् अण् प्रत्ययो भवति, तत्सन्नियोगेन चास्य तकारलोपः। चकारात् 'सन्धिवेलाद्यृतु नक्षत्रेभ्योऽण् (४.३.१६) इति सूत्रेणाऽपि अण्। उभयोरणोरयं विशेषः - प्रकृतसूत्रेण अणि कृते तत्सन्नियोगेन तलोपो भवति। ऋत्वणि तु तलोपो न भवति।<br>हेमन्ते साधु हैमनम्, हैमन्तम् इति वा।<br>काशिकावृत्त्यनुसारेण हेमन्तशब्दाद् भाषायां ठञ् इत्यपि इति हैमन्तिकमिति तृतीयमपि रूपम्। | सर्वत्र२१ |

| | | |
|---|---|---|
| शेषे ४.२.९<br>कालात् ११ | २३. सायंचिरम्प्राह्णे-प्रगेऽव्ययेभ्यष्ट्यु-ट्युलौ तुट् च<br>कालवाचकेभ्यः सायम्, चिरम्, प्राह्णे, प्रगे- इत्येतेभ्यः चतुर्भ्यः शब्देभ्यः, अव्ययसंज्ञकेभ्यश्च ट्यु , ट्युल्- इत्येतौ प्रत्ययौ भवतः, तयोस्तुडागमश्च।<br>तुटः प्राक् 'युवोरनाकौ' इत्यनादेशः, 'अनद्यतने' इत्यादिनिर्देशात्।<br>सायशब्दो दिवसावसाने रूढः। तत्र भवम् सायन्तनम्। प्रकृतेर्मान्तत्वं निपातनात्।<br>चिरे भवम् चिरन्तनम्। अत्रापि प्रकृतेर्मान्तत्वं निपातनात्।<br>प्राह्णः = पूर्वाह्णः, स सोढोऽस्य इति प्राह्णेतनम्। प्रकृतेरेदन्तत्वं निपातनात्।<br>प्राह्णे जातादि इत्यर्थे तु प्राह्णे इति सप्तम्यन्तात्प्रत्ययौ, तुडागमश्च, तत्र 'घकालतनेषु कालनाम्नः' (६.३.१६) इति सूत्रेण सप्तम्या अलुकैव एदन्तत्वं सिद्धम्।<br>प्रगः = प्रातःकालः। स सोढोऽस्य इति प्रगेतनम्। प्रकृतेरेदन्तत्वं निपातनात्।<br>प्रगे जातादि इत्यर्थे तु प्रगे इति सप्तम्यन्तात्प्रत्ययौ, तुडागमश्च, तत्र 'घकालतनेषु कालनाम्नः' (६.३.१६) इति सूत्रेण सप्तम्या अलुकैव एदन्तत्वं सिद्धम्।<br>अव्ययेभ्यः - दोषातनम्। 'दोषा' इत्याकारान्तमव्ययं रात्रिवाचकम्।<br>दिवातनम्। 'दिवा' इत्याकारान्तमव्ययं दिवसवाचकम्।<br>सनातनम्। 'सना' इत्याकारान्तमव्ययं नित्यार्थे।<br>(वा०) चिर-परुत्-परारिभ्यस्त्नो वक्तव्यः।<br>चिरत्नम्। परुत्नम्। परारित्नम्।<br>'परुत्' इति, 'परारि' इति चाव्ययं पूर्वस्मिन्, पूर्वतरे च वत्सरे क्रमाद् वर्तते।<br>(वा०) प्रगस्य छन्दसि गलोपश्च।<br>प्रत्नम्।<br>(वा०) अग्रपश्चाड्डिमच्।<br>अग्रिमम्। पश्चिमम्।<br>(वा०) अन्ताच्चेति वक्तव्यः। अन्तिमम्। | ट्यु-ट्युलौ<br>तुट् २४ |

| | | |
|---|---|---|
| शेषे ४.२.६<br>कालात् ११<br>ट्यु-ट्युलौ २३<br>तुट् २३ | २४. विभाषा पूर्वाह्णापराह्णाभ्याम्<br>पूर्वाह्ण, अपराह्ण- इत्येताभ्यां शब्दाभ्यां विभाषा ट्यु, ट्युलौ प्रत्ययौ भवतस्तयोस्तुडागमश्च।<br>पक्षे 'कालाट्ठञ्' (६.३.१६) इति सप्तम्या अलुक्।<br>पूर्वाह्णे भवम् पूर्वाह्णेतनम्।<br>अपराह्णे भवम् अपराह्णेतनम्।<br>'घकालतनेषु कालनाम्नः (६.३.१६) इति सूत्रेण सप्तम्या अलुक<br>पक्षे ठञि कृते - पौर्वाह्णिकम्, आपराह्णिकम्।<br>'राष्ट्रावारपाराद् घखौ' (४.२.६३) इत्यारभ्य 'विभाषा पूर्वाह्णापराह्णाभ्याम्'(४.३.२४) इत्यन्तैः सूत्रैः राष्ट्रादिप्रकृतिविशेषेभ्यो घञादयः प्रत्ययविशेषा उक्ताः । अथ तेषां प्रत्ययानामर्थविशेषाः, प्रकृतीनां च समर्थविभक्तिविशेषाः - 'तत्र जातः(४.२.२५) इत्यतः आरभ्य तस्य विकारः (४.३.१३२) इति यावत्कथ्यन्ते। | |
| अण् ४.१.८३ | २५. तत्र जातः<br>तत्र जातः इत्येतस्मिन्नर्थे तत्रेति सप्तमीसमर्थाद् यथाविहितं प्रत्ययो भवति।<br>स्रुघ्ने जातः स्रौघ्नः।<br>प्राग्दीव्यतोऽण् (४.१.८३) इत्यण्।<br>उत्सः =निर्झरतत्र जातः औत्सः।<br>उत्सादिभ्योऽञ् (४.१.८६) इत्यञ्।<br>राष्ट्रे जातः राष्ट्रियः।<br>'राष्ट्रावारपाराद् घखौ'(४.२.६३) इति घः।<br>अवारपारे जातः अवारपारीणः।<br>'राष्ट्रावारपाराद् घखौ'(४.२.६३) इति खः।<br>ग्रामे जातः ग्राम्यः, ग्रामीणो वा।<br>'ग्रामाद्यखञौ'(४.२.६४) इति य-खञौ। | तत्र ५१<br>जातः ३७ |
| तत्र २५ जातः २५ | २६. प्रावृषष्ठप्<br>'तत्र जातः' इत्यर्थे प्रावृष् इतिशब्दात् सप्तम्यन्तात् ठप्प्रत्ययो भवति।<br>प्रावृषि = वर्षर्तौ जातः प्रावृषिकः। | |

| | | |
|---|---|---|
| तत्र २५ जातः २५ | २७. संज्ञायां शरदो वुञ्<br>तत्र जातः इत्यर्थे शरद् इतिशब्दात् सप्तम्यन्तात् वुञ् प्रत्ययो भवति, प्रकृतिप्रत्ययसमुदायेन चेत्संज्ञा गम्यते।<br>शरदि जाताः शारदका दर्भाः। शारदका मुद्गाः।<br>दर्भविशेषस्य, मुद्गविशेषस्य चेयं संज्ञा।<br>संज्ञायामिति किम्? शारदं सस्यम्।<br>'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' (४.३.१६) इत्यण्। | संज्ञायाम् २८ |
| संज्ञायाम् २७<br>तत्र २५ जातः २५ | २८. पूर्वाह्णापराह्णार्द्रा-मूल-प्रदोषावस्कराद्वुन्<br>पूर्वाह्ण, अपराह्ण, आर्द्रा, मूल, प्रदोष, अवस्कर- इत्येतेभ्यो 'तत्र जात' इत्यर्थे वुन् प्रत्ययो भवति, प्रकृतिप्रत्ययसमुदायेन संज्ञा चेद् गम्यते।<br>पूर्वाह्णे जातः - पूर्वाह्णकः। अपराह्णकः। आर्द्रकः। मूलकः। प्रदोषकः। अवस्करकः।<br>अवस्करशब्दो विष्ठावाचकः।<br>असंज्ञायान्तु यथाप्राप्तं ठञादयः।<br>तद्यथा पूर्वाह्णे , अपराह्णे च जातः पूर्वाह्णेतनः, पौर्वाह्णिकः। अपराह्णेतनः, आपराह्णिकः।<br>'विभाषा पूर्वाह्णापराह्णाभ्याम्' इत्यनेन ट्यु-ट्युलौ, पक्षे कालाट्ठञ्' इति ठञ्।<br>आर्द्रायाम्, मूले वा जातः आर्द्रम्, मौलम्।<br>'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् इत्यण्।<br>प्रदोषे जातम् प्रादोषिकम्, प्रादोषम्।<br>'निशाप्रदोषाभ्यां च' इति ठञ्, पक्षेऽण्।<br>अवस्करे जातः आवस्करः।<br>'प्राग्दीव्यतोऽण्' इत्यौत्सर्गिकोऽण्। | वुन् ३० |
| तत्र २५ जातः २५<br>वुन् २८ | २९. पथः पन्थ च<br>'तत्र जातः' इत्यर्थे 'पथिन्' इति शब्दाद् वुन् प्रत्ययो भवति, प्रत्ययसन्नियोगेन पथः पन्थ इत्यादेशश्च।<br>पथि जाति पन्थकः। | |

| | | |
|---|---|---|
| तत्र २५ जातः २५<br>वुन् २८ | **३०. अमावास्याया वा**<br>'तत्र जातः' इत्यर्थे अमावास्याशब्दात् वुन् प्रत्ययो वा भवति।<br>अमावास्याशब्दस्य सन्धिवेलादिषु पाठाद् अणोऽपवादोऽयम्।<br>अमावास्यकः।<br>पक्षेऽण्- आमावास्यः। | अमावास्यायाः ३१ |
| तत्र २५ जातः २५<br>वुन् २८<br>अमावास्यायाः ३० | **३१. अ च**<br>तत्र जात इत्यर्थे अमावस्याशब्दात् 'अ' इति प्रत्ययोऽपि भवति।<br>अमावास्यः।<br>एवं हि अमावास्यायां जातः इति विग्रहे रूपत्रयम् – अमावास्यकः, आमावास्यः, अमावास्यः। | |
| तत्र २५ जातः २५ | **३२. सिन्ध्वपकराभ्यां कन्**<br>तत्र जात इत्यर्थे सिन्धुशब्दाद्, अपकरशब्दाच्च कन् प्रत्ययो भवति।<br>सिन्धुशब्दः कच्छादिः, ततोऽणि, मनुष्यवुञि च प्राप्ते जातार्थे विधानम्, अपकरशब्दादा-दप्यौत्सर्गिकेऽणि प्राप्ते विधानमिदम्।<br>सिन्धौ जातः सिन्धुकः।<br>अपकरे जातः अपकरकः। | सिन्ध्वपकराभ्यां३३ |
| तत्र २५ जातः २५<br>सिन्ध्वपकराभ्यां ३२ | **३३. अणञौ च**<br>तत्र जात इत्यर्थे सिन्धु, अपकर- इत्येताभ्यां शब्दाभ्यां यथासंख्यम् अण्, अञ्-इत्येतौ प्रत्ययौ भवतः।<br>सैन्धवः। आपकरः।<br>योगविभागो यथासंख्यार्थः। | |

| | | |
|---|---|---|
| तत्र २५ जातः २५ | **३४. श्रविष्ठा-फल्गुन्यनुराधा-स्वाति-तिष्य-पुनर्वसु-हस्त-विशाखाषाढा-बहुलाल्लुक्**<br>श्रविष्ठा, फल्गुनी, अनुराधा, स्वाति, तिष्य, पुनर्वसु, हस्त, विशाखा, अषाढा, बहुला-इत्येतेभ्यो नक्षत्रवाचकेभ्यः शब्देभ्यः तत्र जात इत्यर्थे उत्पन्नस्य प्रत्ययस्य लुग्भवति।<br>श्रविष्ठाः = धनिष्ठाः। तिष्यः = पुष्यः।<br>बहुला=कृत्तिका।<br>श्रविष्ठासु जातः श्रविष्ठः।<br>ऋत्वणो लुकि 'लुक्तद्धितलुकि'(१.२.४९) इत्यनेनं स्त्रीप्रत्ययस्यापि लुक्। एवमेव अन्येष्वपि उदाहरणेषु।<br>फल्गुन्योर्जातः फल्गुनः।<br>अनुराधासु जातः अनुराधः।<br>स्वात्यां जातः स्वातिः।<br>तिष्ये जातः तिष्यः।<br>पुनर्वस्वोर्जातः पुनर्वसुः।<br>हस्ते जातः हस्तः।<br>विशाखयोर्जातः विशाखः।<br>अषाढासु जातः अषाढः।<br>बहुलासु जातः बहुलः।<br>(वा०) लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः। स्त्रियामुपसंख्यानम्।<br>चित्रायां जाता चित्रा। रेवत्यां जाता रेवती। रोहिण्यां जाता रोहिणी। रेवतीरोहिणीभ्यां परस्य जातार्थप्रत्ययस्य 'लुक्तद्धितलुकि' इति लुकि कृते पिप्पल्यादेराकृतिगणत्वात् पुनर्ङीष्। पिप्पल्यादिः गौराद्यन्तर्गणः।<br>(वा०) फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ।<br>फल्गुनीशब्दात्, अषाढाशब्दाच्च जातार्थे यथासंख्यं ट, अन् इत्येतौ प्रत्ययौ भवतः स्त्रियाम् इति वार्तिकार्थः।<br>फल्गुन्योर्जाता फल्गुनी। अषाढासु जाता अषाढा।<br>(वा.)श्रविष्ठाषाढाभ्यां छणपि वक्तव्यः। अस्त्रियामपि।<br>श्रविष्ठासु= धनिष्ठासु जातः श्राविष्ठीयः।<br>अषाढासु जातः आषाढीयः। | लुक् ३७ |

| | | |
|---|---|---|
| तत्र २५ जातः २५<br>लुक् ३४ | ३५. स्थानान्त-गोशाल-खरशालाच्च।<br>स्थानान्त, गोशाल, खरशाल- इत्येतेभ्यः शब्देभ्यः जातार्थे विहितस्य प्रत्ययस्य लुग्भवति।<br>गोस्थाने जातः गोस्थानः। अश्वस्थानः। गोशालः। खरशालः।<br>सर्वत्र अणो लुक्। | |
| तत्र २५ जातः २५<br>लुक् ३४ | ३६. वत्सशालाभिजिदश्वयुक्छतभिषजो वा<br>वत्सशाल, अभिजित्, अश्वयुज्, शतभिषज्- इत्येतेभ्यः शब्देभ्यो जातार्थे विहितस्य प्रत्ययस्य लुग्वा भवति।<br>वत्सशाले जातः वत्सशालः, वात्सशालो वा।<br>अभिजिति जातः अभिजित्, आभिजितो वा।<br>अश्वयुक्= अश्विनीनक्षत्रम्। अश्वयुजोर्जातः अश्वयुक्, आश्वयुजो वा।<br>शतभिषक् = शतभिषा नक्षत्रम्। शतभिषजि जातः शतभिषक्, शातभिषजः। | |
| तत्र २५ जातः २५<br>लुक् ३४ | ३७. नक्षत्रेभ्यो बहुलम्<br>नक्षत्रेभ्यो जातार्थे विहितस्य प्रत्ययस्य बहुलं लुग्भवति। रोहिण्यां जातः रोहिणः, रौहिणः।<br>नक्षत्रवाचको रोहिणीशब्दोऽव्युत्पन्नः न तु रोहितशब्दान्ङीषि कृते रोहिणी इति शब्दः।<br>तेन अणि परे 'यस्येति च' इति सूत्रेणेकारस्य लोपेऽपि णकारस्य श्रवणं भवति। | |
| तत्र२५ अण्४.१.८३ | ३८. कृत-लब्ध-क्रीत-कुशलाः<br>तत्र कृतम्, तत्र लब्धम्, तत्र क्रीतम्, तत्र कुशलः - इत्यर्थेषु सप्तम्यन्ताद् यथाविहितं प्रत्ययो भवति।<br>स्रुघ्ने कृतो, लब्धः, क्रीतः, कुशलो वा स्रौघ्नः। एवमेव- माथुरः। राष्ट्रियः। | |

| | | |
|---|---|---|
| तत्र२५ अणू४.१.८३ | ३९. प्रायभवः<br>तत्र प्रायेण भवतीत्यर्थे सप्तम्यन्ताद् यथाविहितं प्रत्ययो भवति।<br>साकल्यस्य किञ्चिन्न्यूनतायामर्थे प्रायशब्दः प्रयुज्यते। भवतीति भवः, प्रायेण भवः इति प्रायभवः 'कर्तृकरणे कृता बहुलम्' इति समासः। अतः सूत्रस्योक्तार्थः सम्पद्यते।<br>स्रुघ्ने प्रायेण = बाहुल्येन भवति इति स्रौघ्नः। माथुरः। राष्ट्रियः। | प्रायभवः ४० |
| तत्र २५ प्रायभवः३९ | ४०. उपजानूपकर्णोपनीवेष्ठक्<br>तत्र प्रायेण भवतीत्यर्थे उपजानु, उपकर्ण, उपनीवि- इत्येतेभ्यः शब्देभ्यः ठक् प्रत्ययो भवति।<br>जानुनः समीपम् उपजानु तत्र प्रायेण भवतीति औपजानुकः।<br>कर्णस्य समीपम् उपकर्णम् तत्र प्रायेण भवतीति औपकर्णिकः।<br>नीव्याः समीपम् उपनीवि, तत्र प्रायेण भवतीति औपनीविकः। | |
| तत्र२५ अणू४.१.८३ | ४१. सम्भूते<br>तत्र सम्भूतः इत्यर्थे सप्तम्यन्ताद् यथाविहितं प्रत्ययो भवति।<br>सम्पूर्वकभूधातुरत्र 'इदमेवं भवेदिति बुद्धिरूपा सम्भावना' इत्यर्थकः।<br>स्रुघ्ने सम्भवति इति स्रौघ्नः। माथुरः। राष्ट्रियः। | सम्भूते ४२ |
| तत्र २५ सम्भूते ४१ | ४२. कोशाड्ढञ्<br>तत्र सम्भूतः इत्यर्थे सप्तम्यन्तात् कोशशब्दाद् ढञ्प्रत्ययो भवति।<br>कोशे सम्भूतं कौशेयं वस्त्रम्। | |

| | | |
|---|---|---|
| तत्र२५ अण्४.१.८३ | ४३. कालात्साधु-पुष्प्यत्पच्यमानेषु<br>तत्र साधुः, तत्र पुष्प्यति, तत्र पच्यते इत्येतेषु अर्थेषु कालविशेषवाचकशब्देभ्यः सप्तम्यन्ताद् यथाविहितं प्रत्ययो भवति।<br>हेमन्ते साधुः हैमनः प्राकारः।<br>'सर्वत्राण्च तलोपश्च' (४.३.२२) इति सूत्रेणाण्, तलोपश्च।<br>वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः।<br>'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' (४.३.१६) इत्यण्, अणन्तत्वान्ङीप्।<br>शरदि पच्यन्ते शारदाः शालयः। ऋत्वण्। | कालात् ५२ |
| तत्र२५ अण्४.१.८३<br>कालात् ४३ | ४४. उप्ते च<br>तत्र उप्तम् इत्यर्थे कलविशेषवाचिनः सप्तम्यन्ताद् यथाविहितं प्रत्ययो भवति।<br>हेमन्ते उप्यन्ते हैमन्ता यवाः।<br>औत्सर्गिकोऽण्।<br>योगविभाग उत्तरार्थः। | उप्ते ४६ |
| कालात्४३ उप्ते ४४<br>तत्र २५ | ४५. आश्वयुज्या वुञ्<br>तत्र उप्तम् इत्यर्थे 'आश्वयुजी' इति कालवाचिनः शब्दात्सप्तम्यन्ताद् वुञ् प्रत्ययो भवति।<br>अश्वनीपर्यायोऽश्वयुक्शब्दः।<br>अश्वयुजा युक्ता पौर्णमासी आश्वयुजी।<br>आश्वयुज्यामुप्ता आश्वयुजका माषाः। | |
| कालात्४३ उप्ते ४४<br>तत्र २५ वुञ् ४५ | ४६. ग्रीष्म-वसन्तादन्यतरस्याम्<br>तत्र उप्तम् इत्यर्थे ग्रीष्मवसन्ताभ्यां वुञ् प्रत्ययो वा भवति।<br>ऋत्वणोऽपवादः।<br>ग्रीष्मे उप्तम् ग्रैष्मकं, ग्रैष्मं वा सस्यम्। | |
| कालात् ४३<br>तत्र२५ अण्४.१.८३ | ४७. देयमृणे<br>तत्र देयम् इत्यर्थे सप्तम्यन्तात् कालवाचिनः यथाविहितं प्रत्ययो भवति, यद् देयं तद् ऋणं चेद् भवति।<br>मासे देयमृणं मासिकम्।<br>'कालाट्ठञ्' इति ठञ्। | देयमृणे ५० |

| | | |
|---|---|---|
| कालात् ४३<br>तत्र२५ देयमृणे ४७ | ४८. कलाप्यश्वत्थ-यवबुसाद्वुन्<br>तत्र देयमित्यर्थे कलापिन्, अश्वत्थ, यववुस- इत्येतेभ्यः कालवाचिभ्यः सप्तम्यन्ताद् वुन् प्रत्ययो भवति, यद्देयं तदृणं चेद् भवति।<br>कलाप्यादयः शब्दाः साहचर्यात् काले वर्तन्ते। यस्मिन् काले मयूराः कलापिनो भवन्ति स कलापी। यस्मिन्नश्वत्थाः फलन्ति सोऽश्वत्थः। यस्मिन् यववुसं सम्पद्यते स युववुसशब्देनोच्यते।<br>कलापिनि काले देयमृणं कलापकम्।<br>अश्वत्थकम्। यवबुसकम्।<br>अपकृष्टो यवो यवबुसं जात्यन्तरम्, यवानामेव वा बुसं यवबुसम्। | |
| कालात् ४३<br>तत्र२५ देयमृणे ४७ | ४९. ग्रीष्मावरसमाद्वुञ्<br>तत्र देयमित्यर्थे ग्रीष्म, अवरसम- इत्येताभ्यां शब्दाभ्यां सप्तम्यन्ताभ्यां वुञ् प्रत्ययो भवति, यद्देयं तदृणं चेद् भवति।<br>ग्रीष्मे देयमृणं ग्रैष्मकम्।<br>अवरासु समासु देयमृणम् आवरसमकम्।<br>समाशब्दो वत्सरे नित्यस्त्रीलिङ्गबहुवचनः। तद्धितार्थोत्तरेति समासः, ततः वुञ्।<br>'अतीते वत्सरे देयं यदद्यापि न दत्तं तद् आवरसमकम्' इति व्याकरणमिताक्षरायाम् अन्नम्भट्टः। | वुञ् ५० |
| कालात् ४३ वुञ्४९<br>तत्र२५ देयमृणे ४७ | ५०. संवत्सराग्रहायणीभ्यां ठञ् च<br>तत्र देयमित्यर्थे संवत्सर, अग्रहायणी- इत्येताभ्यां शब्दाभ्यां सप्तम्यन्ताभ्यां ठञ् प्रत्ययो भवति, चकाराद् वुञ् च, यद् देयं तदृणं चेद् भवति।<br>संवत्सरे देयमृणं सांवत्सरिकम्, सांवत्सरकं वा।<br>अग्रहायण्यां देयमृणम् आग्रहायणिकम्, आग्रहायणकं वा। | |

| | | |
|---|---|---|
| कालात् ४३ तत्र २५<br>अण् ४.१.८३ | ५१. व्याहरति मृगः<br>तत्र व्याहरति = शब्दायते इत्यर्थे कालवाचिनः शब्दात् सप्तम्यन्ताद् यथाविहितं प्रत्ययो भवति, यो व्याहरति स मृगश्चेत्।<br>निशायां व्याहरति = शब्दं करोति इति नैशिकः, नैशो वा मृगः। 'निशाप्रदोषाभ्यां च' इति वा ठञ्।<br>मृग इति किम्? निशायां व्याहरत्युलूकः। | |
| कालात् ४३<br>अण् ४.१.८३ | ५२. तदस्य सोढम्<br>'तदस्य सोढम्' इत्यर्थे कालवाचिनः शब्दात् प्रथमान्ताद् यथाविहितं प्रत्ययो भवति।<br>सोढम् इत्यस्य अभ्यस्तमित्यर्थः।<br>निशा = निशाकालिकमध्ययनं सोढम् = अभ्यस्तमस्य छात्रस्य इति नैशिकः छात्रः, नैशो वा।<br>निशायां यदध्ययनं तदपि साहचर्यमूलकलक्षणया निशा इत्युच्यते।<br>'निशाप्रदोषाभ्यां च' इति वा ठञ्। | |
| अण् ४.१.८३ | ५३. तत्र भवः<br>'तत्र भवः' इत्यर्थे सप्तम्यन्ताद् यथाविहितं प्रत्ययो भवति।<br>भवतिरत्र सत्तार्थको गृह्यते, न जन्म, 'तत्र जातः' इति गतार्थत्वात्।<br>स्रुघ्ने भवः स्रौघ्नः। माथुरः। राष्ट्रियः। | तत्र भवः ७३ |
| तत्र ५३ भवः ५३ | ५४. दिगादिभ्यो यत्<br>तत्र भव इत्यर्थे दिश् इत्येवमादिभ्यः शब्देभ्यः सप्तम्यन्तेभ्यः यत्प्रत्ययो भवति।<br>दिशिभवं दिश्यम्। वर्गे भवं वर्ग्यम्। | यत् ५५ |
| तत्र ५३ भवः ५३<br>यत् ५४ | ५५. शरीरावयवाच्च<br>तत्र भव इत्यर्थे शरीरावयववाचिनः शब्दात् सप्तम्यन्ताद् यत्प्रत्ययो भवति।<br>दन्तेषु भवं दन्त्यम्। कर्ण्यम्। ओष्ठ्यम्। | |

| | | |
|---|---|---|
| तत्र ५३ भवः ५३ | ५६. दृति-कुक्षि-कलशि-वस्त्यस्त्यहेर्ढञ्<br>तत्र भव इत्यर्थे दृति, कुक्षि, कलशि, वस्ति, अस्ति,अहि- इत्येतेभ्यः शब्देभ्यः सप्तम्यन्तेभ्यो ढञ् प्रत्ययो भवति।<br>दृतिश्चर्मविकारः शरीरावयवविशेषश्च, तत्र भवं दार्तेयम्।<br>कुक्षिः = उदरम्, तत्र भवं कौक्षेयम्।<br>वस्तिः = नाभेरधः शरीरावयवः, तत्र भवं वास्तेयम्।<br>'अस्ति' इति तिङन्तप्रतिरूपको निपातः, स च तिङन्तेन समानार्थः, भिन्नार्थश्च। आद्यो यथा - अस्तिक्षीरा गौः। द्वितीयो यथा - अस्तिमान्, धनवान् इत्यर्थः। तदिहोभयमपि गृह्यते। अस्ति = विद्यमाने, धने वा भवम् आस्तेयम्।<br>अहिः = सर्पः, तत्र भवम् आहेयं विषम्। | ढञ् ५७ |
| तत्र ५३ भवः ५३<br>ढञ् ५६ | ५७. ग्रीवाभ्योऽण् च<br>तत्र भव इत्यर्थे ग्रीवाशब्दात् सप्तम्यन्ताद् अण् प्रत्ययो भवति, चकाराद् ढञ् च।<br>ग्रीवासु, ग्रीवायां वा भवं ग्रैवम्, ग्रैवेयम्।<br>ग्रीवाशब्दोऽयं धमनीसङ्घाते वर्तते। तत्र उद्भूतावयवसंघातविवक्षायां सूत्रे ग्रीवाभ्यः इति बहुवचनम्। तिरोहितावयवसंघातविवक्षायां त्वेकवचनान्तादप्यण्ढञौ भवत एव। | |
| तत्र ५३ भवः ५३ | ५८. गम्भीराञ्ञ्यः<br>तत्र भव इत्यर्थे गम्भीरशब्दात् सप्तम्यन्ताद् ञ्यप्रत्ययो भवति।<br>गम्भीरे भवं गाम्भीर्यम्।<br>(वा०) बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्।<br>बहिर्भवम् बाह्यम्। देवे भवं दैव्यम्।<br>पञ्चजने =दैत्यभेदे, पाताले वा भवः पाञ्चजन्यः। | ञ्यः ५९ |

| तत्र ५३ भवः ५३ ञ्यः ५८ | ५९. अव्ययीभावाच्च<br>तत्र भव इत्यर्थे अव्ययीभावाद् ञ्यप्रत्ययो भवति।<br>परिमुखं भवम् पारिमुख्यम्। परिहनु भवम् पारिहनव्यम्।<br>(वा०) परिमुखादिभ्य एवेष्यते।<br>नेह- औपकूलः।<br>परिमुखादिगणः दिगादिभ्यो यत् (४.३.५४) इति दिगादेरनन्तरं पठितो विद्यते गणपाठे। | अव्ययीभावात् ६१ |
|---|---|---|

| | | |
|---|---|---|
| तत्र ५३ भवः ५३<br>अव्ययीभावात् ५८ | ६०. अन्तःपूर्वपदाट्ठञ्<br>तत्र भव इत्यर्थे अन्तःपूर्वपदादव्ययीभावात् ठञ् प्रत्ययो भवति।<br>वेश्मनि इति अन्तर्वेश्मम्, तत्र भवम् आन्तर्वेश्मिकम्। गेहे इति अन्तर्गेहम्, तत्र भवम् आन्तर्गेहिकम्।<br>(वा०) समानशब्दाट्ठञ् वक्तव्यः।<br>समाने भवं सामानिकम्।<br>(वा०) तदादेश्च।<br>सामानग्रामिकम्। सामानदेशिकम्।<br>(वा०)अध्यात्मादिभ्यश्च।<br>आत्मनि इति अध्यात्मम्, तत्र भवम् आध्यात्मिकम्। देवे इति अधिदेवम्, तत्र भवम् आधिदेविकम्। भूते इति अधिभूतम्, तत्र भवम् आधिभौतिकम्। 'अनुशतकादीनां च' इत्युभयपदवृद्धिः।<br>(वा०) ऊर्ध्वंदमाच्च ठञ् वक्तव्यः।<br>और्ध्वंदमिकः।<br>ऊर्ध्वशब्दस्य योऽर्थः स एव ऊर्ध्वंदमशब्दस्यापि, ऊर्ध्वंदमशब्दस्य स्वतन्त्ररूपेण नास्ति प्रयोगोऽपि तु भवार्थक तद्धितप्रत्ययेन सहैवास्य प्रयोगो भवति।<br>(वा०) ऊर्ध्वदेहाच्च।<br>और्ध्वदेहिकम्।<br>(वा०) लोकोत्तरपदाच्च।<br>ऐहलौकिकम्। पारलौकिकम्।<br>'अनुशतिकादीनां च' इत्युभयपदवृद्धिः।<br>(वा०) जनपदयोः कुक् च।<br>जनकीयम्। परकीयम्।<br>एतदपि वचनं गहादिगणे अन्तर्गणसूत्ररूपेण पठितं दृश्यते। | ठञ् ६१ |

| | | |
|---|---|---|
| | (वा०)मध्यशब्दादीयः।<br>मध्यीयः।<br>(वा०) मण्मीयौ च प्रत्ययौ वक्तव्यौ।<br>मध्ये भवम् माध्यमम्। मध्यमीयम्।<br>(वा०) मध्यो मयं दिनण् चास्मात्।<br>मध्ये भवमित्यर्थे मध्यशब्दो 'मध्यम्' इति मान्तादेशं लभते, ततः दिनण् इति प्रत्ययश्चेति वार्तिकार्थः।<br>मध्ये भवं माध्यन्दिनम्।<br>(वा०) स्थाम्नो लुग्वक्तव्यः।<br>भवार्थकप्रत्ययस्य लुगित्यर्थः।<br>अश्वस्येव स्थाम= बलं यस्य सः अश्वत्थामा, पृषोदरादित्वात् सकारस्य तकारः।<br>अश्वत्थाम्नि भवोऽपि अश्वत्थामा।<br>भवार्थे उत्पन्नस्याण् प्रत्ययस्य प्रकृतसूत्रेण लुक्। | |
| तत्र ५३ भवः ५३<br>अव्ययीभावात् ५९<br>ठञ् ६० | ६१. ग्रामात्पर्यनुपूर्वात्<br>तत्र भव इत्यर्थे परिपूर्वकग्रामात्, अनुपूर्वक ग्रामाच्चाव्ययीभावात् ठञ् प्रत्ययो भवति।<br>परिग्रामं भवः पारिग्रामिकः।<br>'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः।<br>अनुग्रामं भव आनुग्रामिकः। | |
| तत्र ५३ भवः ५३ | ६२. जिह्वामूलाङ्गुलेश्छः<br>तत्र भवम् इत्यर्थे जिह्वामूलशब्दाद, अङ्गुलिशब्दाच्च छः प्रत्ययो भवति।<br>जिह्वामूले भवं जिह्वामूलीयम्।<br>अङ्गुलौ भवम् अङ्गुलीयम्। | छः ६३ |
| तत्र ५३ भवः ५३<br>छः ६२ | ६३. वर्गान्ताच्च<br>तत्र भव इत्यर्थे वर्गान्ताच्च प्रातिपदिकात् छः प्रत्ययो भवति।<br>कवर्गे भवं कवगीर्यम्। चवर्गे भवं चवर्गीयम्। | वर्गान्तात् ६४ |

| | | |
|---|---|---|
| तत्र ५३ भवः ५३ वर्गान्तात् ६३ | ६४. अशब्दे यत्खावन्यतरस्याम्<br>शब्दभिन्नेऽभिधेये तत्र भव इत्यर्थे वर्गान्त शब्दात् सप्तम्यन्ताद् य, ख इत्येतौ प्रत्ययौ वा भवतः। पक्षे छप्रत्ययोऽपि।<br>वासुदेववर्गे भवः वासुदेववर्ग्यः, वासुदेववर्गीणः वासुदेववर्गीयः।<br>एवमेव युधिष्ठिरवर्ग्यः, युधिष्ठिरवर्गीणः, युधिष्ठिरवर्गीयः।<br>अशब्द इति किम् ? कवर्गीयो वर्णः। | |
| तत्र ५३ भवः ५३ | ६५. कर्ण-ललाटात् कनलंकारे<br>तत्र भव इत्यर्थे कर्णशब्दाद्, ललाटशब्दाच्च कन् प्रत्ययो भवति, अलंकारेऽभिधेये।<br>कर्णे भवा कर्णिका। ललाटे भवा ललाटिका। | |
| अण् ४.१.८३ तत्र ५३ भवः ५३ | ६६. तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः<br>'तस्य व्याख्यानः' इत्यर्थे, 'तत्र भवः' इत्यर्थे च व्याख्यातव्यग्रन्थवाचकात् शब्दाद् यथा विहितं प्रत्ययो भवति।<br>व्याख्यायतेऽनेनेति व्याख्यानो ग्रन्थः , करणे ल्युट्। इतिशब्देन 'तस्य व्याख्यानः' इत्यस्य ग्रहणम्, सूत्रे चकारेण 'तत्र भवः' इति वाक्यार्थस्य ग्रहणम्। व्याख्यातव्यनाम्नः इति- व्याख्यातव्यस्य = ग्रन्थस्य, नाम = प्रतिपादकम्, तस्मात्। एवं हि सूत्रस्योक्तार्थः सम्पद्यते।<br>सुपां व्याख्यानः सौपो ग्रन्थः। तिङां व्याख्यानः तैङो ग्रन्थः। कृतां व्याख्यानः कार्त्तो ग्रन्थः। सुप्सु भवं सौपम्। तिङ्क्षु भवं तैङम्। कृत्सु भवं कार्त्तम्। | तस्य व्याख्यानः व्याख्यातव्य-नाम्नः ७३ |
| तस्य व्याख्यानः व्याख्यातव्यनाम्नः ६६ तत्र ५३ भवः ५३ | ६७. बह्वचोऽन्तोदात्ताट्ठञ्<br>तस्य व्याख्यानः इत्यर्थे, तत्र भव इत्यर्थे च बह्वचोऽन्तोदात्ताद् व्याख्यातव्यग्रन्थवाचकात् शब्दात् ठञ् प्रत्ययो भवति।<br>षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वं, तस्य व्याख्यानः, तत्र भवो वा षात्वणत्विकः। | |

| | | |
|---|---|---|
| तस्य व्याख्यानः<br>व्याख्यातव्यनाम्नः६६<br>तत्र ५३ भवः ५३ | ६८. क्रतु-यज्ञेभ्यश्च<br>तस्य व्याख्यानः इत्यर्थे, तत्र भव इत्यर्थे च क्रतुविशेषवाचिभ्यः, यज्ञविशेषवाचिभ्यश्च व्याख्यातव्यग्रन्थेभ्यः ठञ् प्रत्ययो भवति।<br>क्रतु-यज्ञशब्दौ सोमसाध्येषु यागेषु प्रसिद्धौ इति अन्यतरोपादानेन सिद्धे अत्र उभयोरुपादानसामर्थ्यादत्र क्रतुशब्देन सोमसाध्ययागानां ग्रहणम्, यज्ञशब्देन तदितरयागानाम्।<br>क्रतुभ्यस्तावत्- अग्निष्टोमस्य व्याख्यानः तत्र भवो वा आग्निष्टोमिकः। वाजपेयिकः। राजसूयिकः।<br>यज्ञेभ्यः - पाकयज्ञानां व्याख्यानः, तत्र भवो वा पाकयज्ञिकः। नवयज्ञस्य व्याख्यानः, तत्र भवो वा नावयज्ञिकः। | |
| तस्य व्याख्यानः<br>व्याख्यातव्यनाम्नः६६<br>तत्र ५३ भवः ५३ | ६९. अध्यायेष्वेवर्षेः<br>तस्य व्याख्यानः इत्यर्थे, तत्र भव इत्यर्थे च व्याख्येयग्रन्थविशेषे वर्तमानेभ्यः ऋषिवाचकशब्देभ्यः ठञ् प्रत्ययो भवति, अध्यायश्चेद् विशेष्यः।<br>वसिष्ठेन दृष्टो मन्त्रो लक्षणया वसिष्ठः, तस्य व्याख्यानस्तत्र भवो वा वासिष्ठोऽध्यायः।<br>अध्यायेष्विति किम्? वासिष्ठी ऋक्। भवार्थेऽण्। | |
| तस्य व्याख्यानः<br>व्याख्यातव्यनाम्नः६६<br>तत्र ५३ भवः ५३ | ७०. पौरोडाश-पुरोडाशात् ष्ठन्।<br>तस्य व्याख्यानः, इत्यर्थे तत्र भव इत्यर्थे च पौरोडाशशब्दात्, पुरोडाशशब्दाच्च ष्ठन् प्रत्ययो भवति।<br>पुरोडाशाः = पिष्टपिण्डाः। तेषां संस्कारको मन्त्रः पौरोडाशः, तस्य व्याख्यानस्तत्र भवो वा पौरोडाशिकः।<br>पुरोडाशसहचरितो ग्रन्थः पुरोडाशः, तस्य व्याख्यानस्तत्र भवो वा पुरोडाशिकः। | |
| तस्य व्याख्यानः<br>व्याख्यातव्यनाम्नः६६<br>तत्र ५३ भवः ५३ | ७१. छन्दसो यदणौ<br>तस्य व्याख्यानः इत्यर्थे, तत्र भव इत्यर्थे च छन्दस् इतिशब्दाद् यत्, अण् इत्येतौ प्रत्ययौ भवतः।<br>छन्दसः व्याख्यानः, तत्र भवो वा छन्दस्यः। छान्दसः। | |

| | | |
|---|---|---|
| तस्य व्याख्यानः<br>व्याख्यातव्यनाम्नः६६<br>तत्र ५३ भवः ५३ | ७२. द्व्यजृद्ब्राह्मणर्क-प्रथमाध्वर-पुरश्चरण-नामाख्याताट्ठक्<br>द्व्यच्, ऋत् (ऋकारान्त), ब्राह्मण, ऋच्, प्रथम, अध्वर, पुरश्चरण, नामाख्यात- इत्येतेभ्यः शब्देभ्यः तस्य व्याख्यान इत्यर्थे, तत्र भव इत्यर्थे च ठक् प्रत्ययो भवति।<br>द्व्यचः - ऐष्टिकः। पाशुकः।<br>पशुयागप्रतिपादकग्रन्थः पशुः, तस्य व्याख्यानस्तत्र भवो वेत्यर्थः। उकः परत्वात् ठस्य कः। ।<br>ऋतः - चतुर्होतॄणां व्याख्यानः, तत्र भवो वा चातुर्होतृकः।<br>ब्राह्मण - ब्राह्मणिकः।<br>ऋच्- आर्चिकः।<br>प्रथम-प्राथमिकः।<br>अध्वर- आध्वरिकः।<br>पुरश्चरण- पौरश्चरणिकः।<br>नामाख्यातग्रहणं सङ्घातविगृहीतार्थम्।<br>नामन्- नामिकः। आख्यात- आख्यातिकः।<br>नामाख्यात- नामाख्यातिकः। | |
| तस्य व्याख्यानः<br>व्याख्यातव्यनाम्नः६६<br>तत्र ५३ भवः ५३ | ७३. अणृगयनादिभ्यः<br>तस्य व्याख्यान इत्यर्थे, तत्र भव इत्यर्थे च ऋगयन इत्येवमादिभ्यः शब्देभ्योऽण् प्रत्ययो भवति।<br>ठञादेरपवादः।<br>ऋगयनम् - ऋक्संहिता, तस्य व्याख्यानस्तत्र भवो वा आर्गयनः। उपनिषदो व्याख्यानस्तत्र भवो वा औपनिषदः। एवमेव व्याकरणस्य व्याख्यानस्तत्र भवो वा वैयाकरणः। | |
| अण् ४.१.८३ | ७४. तत आगतः<br>तत आगतः इत्यर्थे पञ्चम्यन्ताद् यथाविहितं प्रत्ययो भवति।<br>स्रुघ्नादागतः स्रौघ्नः। माथुरः। राष्ट्रियः। | ततः८४<br>आगतः८२ |

| | | |
|---|---|---|
| तत ७४ आगतः ८२ | ७५. ठगायस्थानेभ्यः<br>तत आगत इत्यर्थे आयस्थानवाचकेभ्यः पञ्चम्यन्तात् ठक् प्रत्ययो भवति।<br>'आयः' इति स्वामिग्राह्यो भाग उच्यते, स यस्मिन्नुत्पद्यते तद् आयस्थानम्।<br>शुल्कशालाया आगतः शौल्कशालिकः। | |
| तत ७४ आगतः ८२ | ७६. शुण्डिकादिभ्योऽण्<br>तत आगत इत्यर्थे शुण्डिक इत्येवमादिभ्योऽण् प्रत्ययो भवति।<br>आयस्थानठकोऽपवादः।<br>शुण्डिकमायस्थानविशेषः, ततः आगतः शौण्डिकः। | |
| तत ७४ आगतः ८२ | ७७. विद्या-योनिसबन्धेभ्यो वुञ्<br>विद्याच योनिश्च विद्यायोनी, ताभ्यां कृतः विद्यायोनिकृतः। विद्यायोनिकृतः सम्बन्धो येषां ते विद्या-योनिसम्बन्धास्तद्वाचकेभ्य शब्देभ्यो वुञ् प्रत्ययो भवति, तत आगत इत्यर्थे।<br>विद्यासम्बन्धेभ्यस्तावत् -- उपाध्यायादागतम् औपाध्यायकम्। शैष्यकम्। आचार्यकम्।<br>योनिसम्बन्धेभ्यः- मातामहादागतः मातामहकः। पैतामहकः। मातुलकः। | विद्यायोनि-सम्बन्धेभ्यः ७८ |
| तत ७४ आगतः ८२<br>विद्यायोनि-सम्बन्धेभ्यः७७ | ७८. ऋतष्ठञ्<br>तत आगतः इत्यर्थे ऋकारान्तेभ्यो विद्यासम्बन्धवाचकेभ्यः,योनिसम्बन्धवाचकेभ्यश्च शब्देभ्यः ठञ् प्रत्ययो भवति।<br>विद्यासम्बन्धवाचिभ्यः -होतुरागतं हौतृकम्। पौतृकम्।<br>योनिसम्बन्धवाचिभ्यः- भ्रातुरागतं भ्रातुरागतं भ्रातृकम्। | ठञ् ७९ |
| तत ७४ आगतः ८२<br>ठञ् ७८ | ७९. पितुर्यच्च<br>तत आगत इत्यर्थे पितृशब्दाद् यत्प्रत्ययो भवति, चकारात् ठञ् च।<br>पितुरागतं पित्र्यम्। पैतृकम्। | |

| | | |
|---|---|---|
| तत ७४ आगतः ८२ | ८०. गोत्रादङ्कवत्<br>'तत आगत' इत्यर्थे गोत्रप्रत्ययान्तात् प्रातिपदिकाद् अङ्कवत्प्रत्ययाः भवन्ति। व्याख्यानादनेन 'गोत्रचरणद्वुञ्'(४.३.१२६) 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्(४.३.१२७) इति विहितयोः वुञणोरतिदेशः क्रियते। अतः सूत्रस्य निष्कृष्टार्थो भवति- यथा 'तस्येदम्' (४.३.१२०) इति प्रकरणे अङ्केऽर्थे गोत्रप्रत्ययान्ताद् वुञ् प्रत्ययो भवति, अञन्ताद्, यञन्ताद्, इञन्ताच्च अणुप्रत्ययो भवति तथैव तत आगत इत्यर्थेऽपि। यथा औपगवानामङ्कः औपगवकः, इत्यत्र वुञ्प्रत्ययः। विदानामङ्कः वैदः इत्यत्राञन्तादण्, गर्गाणामङ्कः गार्गः इत्यत्र यञन्तादण्, दाक्षीणामङ्कः दाक्षः इत्यत्र इञन्तादण् भवति तथैव तत आगतम् इत्यर्थेऽपि औपगवेभ्य आगतम् औपगवकम्, विदेभ्य आगतम् वैदम्, गर्गेभ्य आगतम् गार्गम्, दाक्षिभ्य आगतम् दाक्षमित्यत्रापि वुञ्, अण् च भवति। | |
| तत ७४ आगतः ८२ | ८१. हेतु-मनुष्येभ्योऽन्यतरस्यां रूप्यः<br>तत आगत इत्यर्थे हेतुभ्यो, मनुष्येभ्यश्चान्यतरस्यां रूप्यः प्रत्ययो भवति। मनुष्यग्रहणमहेत्वर्थम्। हेतुः = कारणम्। हेतुभ्यस्तावत् - समादागतं समरूप्यम्। पक्षे गहादित्वाच्छः। समीयम्। मनुष्येभ्यः - देवदत्तादागतं देवदत्तरूप्यम्। पक्षे औत्सर्गिकोऽण्। दैवदत्तम्। | सम्पूर्णसूत्रम् ८२ |
| तत ७४ आगतः ८२ हेतुमनुष्येभ्यो-ऽन्यतरस्याम् ८१ | ८२. मयट् च<br>तत आगत इत्यर्थे हेतुभ्यो, मनुष्येभ्यश्च मयट् प्रत्ययोऽपि भवति। समादागतं सममयम्। देवदत्तादागतं देवदत्तमयम्। योगविभागो यथासंख्यनिरासार्थः। | |

| | | |
|---|---|---|
| ततः ७४<br>अण् ४.१.८३ | ८३. प्रभवति<br>ततः भवतिं इत्यर्थे पञ्चम्यन्तात् यथाविहितं प्रत्ययो भवति।<br>प्रभवति = प्रकाशते, प्रथमत उपलभ्यते इत्यर्थः।<br>हिमवतः प्रभवतीति हैमवती गङ्गा। | प्रभवति ८४ |
| ततः ७४<br>प्रभवति ८३ | ८४. विदूराञ्ञ्यः<br>ततः प्रभवति इत्यर्थे विदूरशब्दाद् ञ्यः प्रत्ययो भवति।<br>विदूरात्प्रभवति वैदूर्यो मणिः। | |
| ततः ७४<br>प्रभवति ८३ | ८५. तद् गच्छति पथि-दूतयोः<br>तद् (कर्म) गच्छति इत्यर्थे द्वितीयान्ताद् यथाविहितं प्रत्ययो भवति, यः गच्छति स चेत् पन्थाः, दूतो वा भवेत्।<br>स्रुघ्नं गच्छति स्रौघ्नः पन्थाः, दूतो वा। | तद् ८८ |
| तद् ८५<br>अण् ४.१.८३ | ८६. अभिनिष्क्रामति द्वारम्<br>तद् अभिनिष्क्रामति इत्यर्थे द्वितीयान्ताद् यथाविहितं प्रत्ययो भवति, यदभिनिष्क्रमति तच्चेद् द्वारम्।<br>सुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम्।<br>अभिनिष्क्रामति इत्यस्य आभिमुख्येन निर्गच्छतीत्यर्थः। | |
| तद् ८५<br>अण्४.१.८३ | ८७. अधिकृत्य कृते ग्रन्थे<br>'तदधिकृत्य कृतः' इत्यर्थे द्वितीयान्ताद् यथाविहितं प्रत्ययो भवति, यत्तत्कृतं ग्रन्थश्चेत्स भवति।<br>सुभद्रामाश्रित्य कृतो ग्रन्थः सौभद्रः।<br>(वा०) लुबाख्यायिकार्थस्य प्रत्ययस्य।<br>आख्यायिका नाम गद्यरूपो ग्रन्थविशेषः।<br>आख्यायिकाभिधानाय यः प्रत्ययः उत्पद्यते तस्य लुब्भवतीति वार्तिकार्थः।<br>वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता। | अधिकृत्य कृते ग्रन्थे ८८ |

| | | |
|---|---|---|
| तद् ८५<br>अधिकृत्य ८७<br>कृते ८७ ग्रन्थे ८७ | ८८. शिशुक्रन्द-यमसभ-द्वन्द्वेन्द्रजननादिभ्यश्छः<br>'तदधिकृत्य कृतः' इत्यर्थे शिशुक्रन्द, यमसभ, द्वन्द्व, इन्द्रजननादि इत्येतेभ्यश्छः प्रत्ययो भवति, यत्तत्कृतं ग्रन्थश्चेत्स भवति।<br>शिशुक्रन्दमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः।<br>यमस्य सभा यमसभम्, क्लीबत्वं निपातनात्।<br>तदधिकृत्य कृतो ग्रन्थः यमसभीयः।<br>द्वन्द्वात् - किरातश्च अर्जुनश्च किरातार्जुनौ, तावधिकृत्य कृतं काव्यं (ग्रन्थः) किरातार्जुनीयम्।<br>वाक्यं च पदं च वाक्यपदे ते अधिकृत्य कृतं शास्त्रं (ग्रन्थः) वाक्यपदीयम्।<br>इन्द्रजननादिभ्यः - इन्द्रजननीयम्।<br>इन्द्रजननादिराकृतिगणः, गणपाठे इन्द्रजननादिगणो न पठितः।<br>(वा०)द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः।<br>दैवासुरम्। राक्षोऽसुरम्। गौणमुख्यम्। | |
| अण् ४.१.८३ | ८९. सोऽस्य निवासः<br>सोऽस्य निवासः इत्यर्थे प्रथमान्ताद् यथाविहितं प्रत्ययो भवति।<br>निवसन्त्यस्मिन्नितिनिवासः देशः उच्यते।<br>स्रुघ्नो निवासोऽस्य स्रौघ्नो देवदत्तः। माथुरः। राष्ट्रियः। | सोऽस्य १०० |
| सोऽस्य ८९<br>अण् ४.१.८३ | ९०. अभिजनश्च<br>'सोऽस्य अभिजनः' इत्यर्थेऽपि प्रथमान्ताद् यथाविहितं प्रत्ययो भवति।<br>स्रुघ्नोऽभिजनोऽस्य स्रौघ्नो देवदत्तः। माथुरः। राष्ट्रियः।<br>यत्र स्वयं वसति स निवासः। यत्र पूर्वैः = पूर्वबान्धवैः पित्रादिभिरुषितं सोऽभिजन इति निवासाभिजनयोर्भेदः।<br>योगविभाग उत्तरार्थः। | अभिजनः ९४ |

| | | |
|---|---|---|
| सोऽस्य ८९<br>अभिजनः ९० | ९१. आयुधजीविभ्यश्छः पर्वते<br>सोऽस्य अभिजन इत्यर्थे पर्वतवाचिनः प्रथमान्तात् प्रातिपदिकाद् आयुधजीविनोऽभिधातुं छः प्रत्ययो भवति।<br>सूत्रे 'आयुधजीविभ्यः' इति पदे तादर्थ्ये चतुर्थी, 'पर्वते' इति प्रकृतिविशेषणमिति सूत्रस्योक्तार्थः सम्पद्यते।<br>हृद्गोलः पर्वतः, सोऽभिजन एषाम् आयुधजीविनाम् इति हृद्गोलीयाः आयुधजीविनः।<br>आयुधजीविभ्य इति किम्? ऋक्षोदः पर्वतः, सोऽभिजनः एषां ब्राह्मणानामिति आर्क्षोदा ब्राह्मणाः। | |
| सोऽस्य ८९<br>अभिजनः ९० | ९२. शण्डिकादिभ्यो ञ्यः<br>सोऽस्य अभिजन इत्यर्थे 'शण्डिक' इत्येवमादिभ्यः ञ्यः प्रत्ययो भवति।<br>शण्डिकः पर्वतः। सोऽस्याभिजन इति शाण्डिक्यः। | |
| सोऽस्य ८९<br>अभिजनः ९० | ९३. सिन्धु-तक्षशिलादिभ्योऽणञौ<br>आदिशब्दः प्रत्येकमभिसम्बध्यते।<br>सोऽस्य अभिजन इत्यर्थे सिन्ध्वादिभ्यः, तक्षशिलादिभ्यश्च यथासंख्यम् अण्, अञ्, इत्येतौ प्रत्ययौ भवतः।<br>सिन्धुः अभिजनोऽस्य सैन्धवः। तक्षशिला अभिजनोऽस्य ताक्षशिलः। | |
| सोऽस्य ८९<br>अभिजनः ९० | ९४. तूदी-शलातुर-वर्मती-कूचवाराड्<br>ढक्-छण्-ढञ्-यकः<br>सोऽस्य अभिजन इत्यर्थे तूदी, शलातुर, वर्मती, कूचवार इत्येतेभ्यः शब्देभ्यः यथासंख्यं ढक्, छण्, ढञ्, यक्- इत्येते प्रत्यया भवन्ति।<br>तूदी अभिजनोऽस्य तौदेयः।<br>एवमेव - शालातुरीयः। वार्मतेयः। कौचवार्यः। | |

| | | |
|---|---|---|
| सोऽस्य ८९<br>अणू ४.१.८३ | ९५. भक्तिः<br>सोऽस्य भक्तिः इत्यर्थे प्रथमान्ताद् यथाविहितं प्रत्ययो भवति।<br>भज्यते सेव्यते इति भक्तिः। कर्मणि क्तिन्।<br>स्रुघ्नो भक्तिरस्य स्रौघ्नो देवदत्तः। माथुरः। राष्ट्रियः। | भक्तिः १०० |
| सोऽस्य ८९<br>भक्तिः ९५ | ९६. अचित्ताददेशकालाट्ठक्<br>सोऽस्य भक्तिरित्यर्थे देश काल व्यतिरिक्ताद् अचित्तवाचिनः प्रातिपदिकाट्ठक् प्रत्ययो भवति।<br>अपूपा भक्तिरस्य आपूपिकः। पयो भक्तिरस्य पायसिकः।<br>अचित्तादिति किम्? दैवदत्तः।<br>अदेशादिति किम्? स्रौघ्नः।<br>अकालादिति किम्? ग्रैष्मः। | |
| सोऽस्य ८९<br>भक्तिः ९५ | ९७. महाराजाट्ठञ्<br>सोऽस्य भक्तिरित्यर्थे महाराजाट्ठञ् प्रत्ययो भवति।<br>महाराजो भक्तिरस्य माहाराजिकः। | |
| सोऽस्य ८९<br>भक्तिः ९५ | ९८. वासुदेवार्जुनाभ्यां वुन्<br>सोऽस्य भक्तिरित्यर्थे वासुदेवार्जुनाभ्यां वुन् प्रत्ययो भवति।<br>वासुदेवकः। अर्जुनकः। | |
| सोऽस्य ८९<br>भक्तिः ९५ | ९९. गोत्र-क्षत्रियाख्येभ्यो बहुलं वुञ्<br>सोऽस्य भक्तिरित्यर्थे गोत्राख्येभ्यः, क्षत्रियाख्येभ्यश्च बहुलं वुञ् प्रत्ययो भवति।<br>गोत्राख्येभ्यः - ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः।<br>क्षत्रियाख्येभ्यः - नकुलो भक्तिरस्य नाकुलकः।<br>आख्याग्रहणं प्रसिद्धक्षत्रियशब्दपरिग्रहार्थम् यथाकथञ्चित् क्षत्रियवृत्तिभ्यो मा भूत्।<br>बहुलग्रहणान्नेह - पाणिनो भक्तिरस्य पाणिनीयः। अत्र 'वृद्धाच्छः' इति छप्रत्ययः। | |

| सोऽस्य ८६<br>भक्तिः ९५ | १००. जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने<br>सोऽस्य भक्तिरित्यर्थे जनपदिस्वामिवाचकेभ्यः शब्देभ्यस्तत्सर्वं भवति, यद् 'जनपदतदवध्योश्च' (४.२.१२४) इत्यादि सूत्रैः जनपदवाचकेभ्यः शब्देभ्यो भवति, ते जनपदिवाचिनः शब्दा बहुवचने चेत् जनपदिवाचकशब्देन समानश्रुतयो भवेयुः।<br>अर्थात् जनपदेऽर्थे, जनपदस्वामिन्यर्थे च ये शब्दाः प्रयुज्यन्ते तेभ्यः प्रकृतसूत्रेण प्रत्ययो भवति।<br>यथा अङ्गशब्दः जनपदेऽर्थेऽपि प्रयुज्यते, जनपदस्वामिनि क्षत्रियेऽर्थेऽपि। तत्र अङ्गाः जनपदोऽस्य भक्तिः इत्यर्थे यथा आङ्गकः इति रूपं भवति, तथैव अङ्गा = जनपदस्वामिनः क्षत्रियाः, अस्य भक्तिरित्यर्थेऽपि आङ्गक इत्येव रूपं भवति। 'जनपदतदवध्योश्च'(४.२.१२४) इति सूत्रेण अङ्गशब्दाद् वुञ्प्रत्ययः। | |
|---|---|---|
| अण् ४.१.८३ | १०१. तेन प्रोक्तम्<br>तेन प्रोक्तमित्यर्थे यथाविहितं प्रत्ययो भवति।<br>प्रकर्षेणोक्तम् = प्रोक्तमित्युच्यते, न तु कृतम्, कृते ग्रन्थे इत्यनेन गतार्थत्वात्।<br>पाणिनिना प्रोक्तं पाणिनीयं व्याकरणम्।<br>'वृद्धाच्छः इति छः।<br>आपिशलिना प्रोक्तम् आपिशलं व्याकरणम्।<br>काशकृत्स्निना प्रोक्तम् काशकृत्स्नं व्याकरणम्।<br>आपिशलि-काशकृत्स्निशब्दाभ्याम् 'इञश्च' (४.२.११२) इत्यण्। | तेन प्रोक्तम् १११ |

| | | |
|---|---|---|
| छन्दसि १०६<br>तेन प्रोक्तम् १०१ | १०२. तित्तिरि-वरतन्तु-खण्डिकोखाच्छण्<br>तेन प्रोक्तमित्यर्थे तित्तिरि, वरतन्तु, शण्डिक, उख- इत्येतेभ्यश्छण् प्रत्ययो भवति छन्दसि विषये।<br>इत आरभ्य 'कर्मन्दकृशाश्वादिनिः'(४.३.१११) इतिपर्यन्तैः सूत्रैः छन्दोब्राह्मणविषये प्रत्यया भवन्ति, अतः एभिः सूत्रैर्विहिताः ये छणादिप्रत्ययाः, तदन्तानां स्वतन्त्ररूपेण प्रयोगो न भवति, किन्तु अध्येतृ-वेदितृप्रत्ययैः सहैव। तथा हि सूत्रमस्ति - 'छन्दोब्राह्मणानि च तद्विषयाणि'(४.२.६६) इति।<br>त्तित्तिरिणा प्रोक्तमधीयते इति तैत्तिरीयाः। प्रोक्ते छण्, अध्येतृवेदित्रोः अण्, अणः 'प्रोक्ताल्लुक्' इति लुक्।<br>एवमेव वरतन्तुना प्रोक्तमधीयते इति वारतन्तवीयाः। खण्डिकेन प्रोक्तमधीयते इति खण्डिकीयाः। उखेन प्राक्तमधीयते इति औखीयाः। | |
| छन्दसि १०६<br>तेन प्रोक्तम् १०१ | १०३. काश्यप-कौशिकाभ्यामृषिभ्यां णिनिः<br>तेन प्रोक्तमित्यर्थे ऋषिवाचकाभ्यां काश्यप-कौशिकशब्दाभ्यां णिनिः प्रत्ययो भवति, छन्दस्यभिधेये।<br>काश्यपेन प्रोक्तं कल्पमधीयते इति काश्यपिनः।<br>कौशिकेन प्रोक्तमधीयते इति कौशिकिनः। | णिनिः ११० |

| | | |
|---|---|---|
| छन्दसि १०६<br>णिनिः१०३<br>तेन प्रोक्तम् १०१ | १०४. कलापि-वैशम्पायनान्तेवासिभ्यश्च<br>तेन प्रोक्तमित्यर्थे कलाप्यन्तेवासिनां, वैशम्पायनान्तेवासिनां च वाचकाः ये शब्दाः तेभ्यो णिनिः प्रत्ययो भवति, छन्दस्यभिधेये।<br>**कलाप्यन्तेवासिभ्यः**<br>हरिद्रुणा प्रोक्तमधीयते इति हारिद्रविणः।<br>तुम्बुरुणा प्रोक्तमधीयते तौम्बुरविणः। उलपेन प्रोक्तमधीयते औलपिनः।<br>छगली अपि कलाप्यन्तेवासी, ततस्तु 'छगलिनो ढिनुक्' (४.३.१०६) इति ढिनुकं वक्ष्यति।<br>कलाप्यन्तेवासिनश्चत्वारः।<br>**वैशम्पायनान्तेवासिभ्यः**<br>आलम्बिना प्रोक्तमधीयते इति आलम्बिनः।<br>पलङ्गेन प्रोक्तमधीयते पालङ्गिनः।<br>कमलेन प्रोक्तमधीयते इति कामलिनः।<br>ऋचाभेन प्रोक्तमधीयते इति आर्च्चाभिनः।<br>अरुणिना प्रोक्तमधीयते इति आरुणिनः।<br>ताण्ड्येन प्रोक्तमधीयते इति ताण्डिनः।<br>'आपत्यस्य च तद्धितेऽनाति' ' इति यलोपः।<br>श्यामायनेन प्रोक्तमधीयते श्यामायनिनः।<br>कठकलापिनावपि वैशम्पायनान्तेवासिनौ। तत्र कठात् 'कठचरकाल्लुक' (४.३.१०७) इति लुकं वक्ष्यति, कलापिनश्च 'कलापिनोऽण्' (४.३.१०८) इति अणम्।<br>वैशम्पायनान्तेवासिनो नव। | |

| | | |
|---|---|---|
| छन्दसि १०६<br>णिनिः १०३<br>तेन प्रोक्तम् १०१ | १०५. पुराणप्रोक्तेषु ब्राह्मण-कल्पेषु<br>तेन प्रोक्तमित्यर्थे तृतीयान्तेभ्यः णिनिः प्रत्ययो भवति, यत्प्रोक्तं तच्चेत् पुराणप्रोक्तानि ब्राह्मणानि, पुराणप्रोक्ताः कल्पाश्च स्युः।<br>पुराणेन = चिरन्तनेन मुनिना प्रोक्ताः इति पुराणप्रोक्ताः।<br>ब्राह्मणेषु तावत्<br>भाल्लवेन, (इति न्यासानुसारेण) भल्लुना (इति पदमञ्जरीग्रन्थानुसारेण) प्रोक्तं ब्राह्मणमधीयते इति भाल्लविनः। शाट्यायनेन प्रोक्तं ब्राह्मणमधीयते इति शाट्यायनिनः ।<br>ऐतरेयेण प्रोक्तं ब्राह्मणमधीयते इति ऐतरेयिणः।<br>कल्पेषु तावत्<br>पिङ्गेन प्रोक्तः पैङ्गी कल्पः। अरुणपराजिना प्रोक्तः आरुणपराजी कल्पः।<br>पुराणप्रोक्तेषु किम्? याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्कानि ब्राह्मणानि।<br>'कण्वादिभ्यो गोत्रे'(४.२.१११) इत्यण्, 'आपत्यस्य च तद्धितेऽनाति' इति यलोपः। | |
| णिनिः १०३<br>तेन प्रोक्तम् १०१ | १०६. शौनकादिभ्यश्छन्दसि<br>तेन प्रोक्तमित्यर्थे शौनक इत्येवमादिभ्यो णिनिः प्रत्ययो भवति, छन्दस्यभिधेये।<br>शौनकेन प्रोक्तं छन्दोऽधीयते इति शौनकिनः।<br>वाजसनेयेन प्रोक्तं छन्दोऽधीयते इति वाजसनेयिनः।<br>छन्दसीति किम्? शौनकीया शिक्षा।<br>वृद्धत्वाच्छः। | छन्दसि १११ |
| छन्दसि १०६<br>तेन प्रोक्तम् १०१ | १०७. कठ-चरकाल्लुक्<br>छन्दस्यभिधेये तेन प्रोक्तमित्यर्थे विहितस्य प्रत्ययस्य लुग्भवति।<br>कठेन प्रोक्तमधीयते कठाः।<br>प्रोक्तार्थे 'कलापिवैशम्पायनान्तेवासिभ्यश्च(४.३.१०४) इति णिनिः, तस्यानेन लुक्। पुनः अध्येतरि अर्थे विहितस्याणः 'प्रोक्ताल्लुक्' इति लुक्।<br>चरकेण प्रोक्तमधीयते इति चरकाः।<br>प्रोक्ताणोऽनेन लुक्, अध्येत्रणस्तु 'प्रोक्ताल्लुक्' इति सूत्रेण। | |

| | | |
|---|---|---|
| छन्दसि १०६<br>तेन प्रोक्तम् १०१ | १०८. कलापिनोऽण्<br>तेन प्रोक्तमित्यर्थे 'कलापिन्' इति शब्दादण्प्रत्ययो भवति, छन्दस्यभिधेये।<br>कलापिना प्रोक्तमधीयते इति कालापाः।<br>'नस्तद्धिते' (६.४.१४४) इति सूत्रे पठितेन 'नान्तस्य टिलोपे सब्रह्मचारि०' इत्यादिना वार्तिकेन टिलोपः। | |
| छन्दसि १०६<br>तेन प्रोक्तम् १०१ | १०९. छगलिनो ढिनुक्<br>तेन प्रोक्तमित्यर्थे, छन्दस्यभिधेये छगलिनो ढिनुक् प्रत्ययो भवति।<br>कलाप्यन्तेवासित्वात् प्राप्तस्य णिनेरपवादः।<br>छगलिना प्रोक्तमधीयते छागलेयिनः। | |
| छन्दसि १०६<br>तेन प्रोक्तम् १०१<br>णिनिः १०३ | ११०. पाराशर्य-शिलालिभ्यां भिक्षु-नटसूत्रयोः<br>तेन प्रोक्तमित्यर्थे पाराशर्य, शिलालिन्-इत्येताभ्यां शब्दाभ्यां णिनिः प्रत्ययो भवति, यथासंख्यं भिक्षुसूत्रे, नटसूत्रे चाभिधेये।<br>पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते इति पाराशरिणो भिक्षवः। 'आपत्यस्य च तद्धितेऽनाति' इति यलोपः।<br>शिलालिना प्रोक्तं नटसूत्रमधीयते इति शैलालिनो नटाः। | भिक्षुनटसूत्रयोः१११ |
| छन्दसि १०६<br>तेन प्रोक्तम् १०१<br>भिक्षुनटसूत्रयोः ११० | १११. कर्मन्द-कृशाश्वादिनिः<br>तेन प्रोक्तमित्यर्थे कर्मन्द, कृशाश्व-इत्येताभ्याम् इनिः प्रत्ययो भवति यथासंख्यं भिक्षुसूत्रे, नटसूत्रे चाभिधेये।<br>कर्मन्देन प्रोक्तमधीयते इति कर्मन्दिनो भिक्षवः। कृशाश्वेन प्रोक्तमधीयते इति कृशाश्विनो नटाः। | |

| अणू ४.१.८३ | ११२. तेनैकदिक्<br>'तैनेकदिग्' इत्यर्थे तृतीयान्ताद् यथाविहितं प्रत्ययो भवति।<br>एका = तुल्या, दिक् = दिशा यस्य स एकदिक् इति बहुव्रीहिः।<br>सुदाम्ना तुल्या दिग् यस्याः सा सौदामनी विद्युत्।<br>अणि 'अन्' इति प्रकृतिभावान्न टिलोपः।<br>सुदामनामकः पर्वतः यस्यां दिशि, तस्यामेव दिशि विद्योतमाना विद्युत् इत्यर्थः। | तेन ११६<br>एकदिक् ११४ |
|---|---|---|
| तेनैकदिक् ११२ | ११३. तसिश्च<br>तेनैकदिक् इत्यर्थे तसिः प्रत्ययोऽपि भवति।<br>सुदाम्ना तुल्या दिक् सुदामतः। | तसिः ११४ |
| तेनैकदिक् ११२<br>तसिः ११३ | ११४. उरसो यच्च<br>तेनैकदिक् इत्यर्थे उरस्शब्दाद् यत्प्रत्ययो भवति, चकारात्तसिश्च।<br>उरसा तुल्या दिग् यस्य स उरस्यः। उरस्तः। | |
| तेन ११२<br>अणू ४.१.८३ | ११५. उपज्ञाते<br>'तेनोपज्ञातम्' इत्यर्थे तृतीयान्ताद् यथाविहितं प्रत्ययो भवति।<br>विनोपदेशेन ज्ञातम् = उपज्ञातम्, स्वयमभिसम्बद्धमित्यर्थः।<br>पाणिनिनोपज्ञातं पाणिनीयमकालकं व्याकरणम्।<br>वृद्धत्वाच्छः। अकालकमित्यस्य कालपरिभाषारहितमित्यर्थः। | |
| तेन ११२<br>अणू ४.१.८३ | ११६. कृते ग्रन्थे<br>तेन कृतमित्यर्थे तृतीयान्ताद् यथाविहितं प्रत्ययो भवति, यत्कृतं ग्रन्थश्चेत् स भवति।<br>वररुचिना कृता वाररुचाः श्लोकाः।<br>उत्पादितम् = कृतम्, विद्यमानमेव ज्ञातम् = उपज्ञातम्, इत्यनयोर्विशेषः। | कृते ११६ |
| तेन ११२ कृते ११६<br>अणू ४.१.८३ | ११७. संज्ञायाम्<br>तेन कृतमित्यर्थ यथाविहितं प्रत्ययो भवति, प्रकृतिप्रत्ययसमुदायेन संज्ञा चेद् गम्यते।<br>मक्षिकाभिः कृतं माक्षिकं मधु। | संज्ञायाम् ११६ |

| | | |
|---|---|---|
| संज्ञायाम् ११७<br>तेन ११२ कृते ११६<br>अण् ४.१.८३ | ११८. कुलालादिभ्यो वुञ्<br>तेन कृतमित्यर्थे कुलालादिभ्यो वुञ्प्रत्ययो भवति, संज्ञायां गम्यमानायाम्।<br>कुलालेन कृतं कौलालकम्। | |
| संज्ञायाम् ११७<br>तेन ११२ कृते ११६<br>अण् ४.१.८३ | ११९. क्षुद्रा-भ्रमर-वटर-पादपादञ्<br>तेन कृतमित्यर्थे क्षुद्रा, भ्रमर, वटर, पादप-इत्येतेभ्योऽञ् प्रत्ययो भवति, संज्ञायां गम्यमानायाम्।<br>क्षुद्राः = मधुमक्षिकाः, ताभिः कृतं क्षौद्रं मधु। भ्रामरम्। वाटरम्। पादपम्। | |
| अण् ४.१.८३ | १२०. तस्येदम्<br>तस्येदमित्यर्थे षष्ठ्यन्ताद् यथाविहितम् अणादयः पञ्च महोत्सर्गाः प्रत्ययाः, घादयश्च प्रत्ययाः भवन्ति।<br>पञ्चमहोत्सर्गा इत्यस्यार्थः<br>'प्राग्दीव्यतोऽण्'(४.१.८३) सूत्रस्य व्याख्याने प्रदर्शितः।<br>उपगोरिदम् औपगवम्। राष्ट्रस्येदं राष्ट्रियम्। अवारपारस्येदम् अवारपारीणम्।<br>(वा०) अग्नीधः शरणे रण्, भत्वं च।<br>शरणम् इत्यर्थे अग्नीध् इति शब्दात् षष्ठ्यन्ताद् रण् प्रत्ययो भवति, तस्मिन् परे भसंज्ञा चेति वार्तिकार्थः।<br>शरणम् = गृहम्।<br>अग्नीधः शरणम् इति आग्नीध्रम्।<br>(वा०)समिधामाधाने षेण्यण्।<br>आधीयतेऽनेनेति आधानो मन्त्रः। आधानः= मन्त्र, इत्यर्थे षष्ठ्यन्तात्समिध् इति शब्दात् षेण्यण् प्रत्ययो भवतीति वर्तिकार्थः।<br>षित्त्वं ङीषर्थम्।<br>यया समिध्यतेऽग्निः सा समित्, सम्पदादित्वात्करणे क्विप्। सा समिदाधीयते येन सः सामेधिन्यो मन्त्रः। सा समिदाधीयते यया सा सामिधेनी ऋक्, षित्वान्ङीष्, 'हलस्तद्धितस्य' इति यलोपः। | तस्येदम् १३१ |
| तस्येदम् १२० | १२१. रथाद्यत्<br>तस्येदमित्यर्थे रथाद् यत्प्रत्ययो भवति।<br>रथस्येदं रथ्यं चक्रं, युगं वा।<br>रथाङ्ग एवेष्यते, नान्यत्र, अनभिधानात्। | रयात् १२२ |

| | | |
|---|---|---|
| तस्येदम् १२०<br>रथात् १२१ | **१२२. पत्त्रपूर्वादञ्**<br>तस्येदमित्यर्थे पत्त्रविशेषवाचिपूर्वपदाद्रथाद् अञ् प्रत्ययो भवति।<br>पत्त्रं वाहनमश्वादिः।<br>अश्वरथस्येदम् आश्वरथं चक्रम्। | अञ् १२३ |
| तस्येदम् १२०<br>अण् १२२ | **१२३. पत्त्राध्वर्यु-परिषदश्च**<br>तस्येदमित्यर्थे पत्त्रविशेषवाचकाच्छब्दात्, अध्वर्युशब्दात्, परिषद् इति शब्दाच्च अञ् प्रत्ययो भवति।<br>अध्वर्योरिदम् आध्वर्यवम्। परिषद इदं पारिषदम्।<br>(वा०) पत्त्राद्वाह्ये।<br>अश्वस्येदं वहनीयम् आश्वम्। | |
| तस्येदम् १२०<br>अण् १२२ | **१२४. हल-सीराट्ठक्**<br>तस्येदमित्यर्थे हल-सीराट्ठक् प्रत्ययो भवति।<br>हलस्येदं हालिकम्। सीरस्येदं सैरिकम्। | |
| तस्येदम् १२०<br>अण् १२२ | **१२५. द्वन्द्वाद्वुन् वैर-मैथुनिकयोः**<br>तस्येदमित्यर्थे द्वन्द्वसंज्ञकाद् वुन् प्रत्ययो भवति, वैरे, मैथुनिकायां चार्थे।<br>वैरम् = विरोधः। मिथुनं = दम्पती, तयोः कर्म = क्रियानिष्पादनं, विवाह इत्यर्थः, मनोज्ञादित्वाद् वुञ्।<br>वैरे - काकोलूकस्य वैरम्, काकोलूकिका।<br>वुनि स्त्रीत्वं लोकात्।<br>मैथुनिकायाम् - कुत्सकुशिकयोः मैथुनिका विवाहः इति कुत्सकुशिकिका।<br>वुनि स्त्रीत्वं लोकात्।<br>(वा०) वैरे देवासुरादिभ्यः प्रतिषेधः।<br>देवासुरस्येदं वैरं दैवासुरम्।<br>रक्षोऽसुरयोर्वैरं राक्षोऽसुरम्।<br>औत्सर्गिकोऽण्। | |
| तस्येदम् १२० | **१२६. गोत्रचरणाद्वुञ्**<br>तस्येदमित्यर्थे गोत्रप्रत्ययान्तात्, शाखाध्येतृ वाचिनश्च षष्ठ्यन्ताद् वुञ् प्रत्ययो भवति।<br>औपगवस्येदम् औपगवकम्।<br>(वा०) चरणाद्धर्माम्नाययोरिति वक्तव्यम्।<br>कठेन प्रोक्तमधीयते कठाः, तेषां धर्मः, आम्नायो वा काठकम्। आम्नायो वेदाभ्यासः। | गोत्रचरणात्१३१<br>वुञ्१३० |

| | | |
|---|---|---|
| गोत्रात् १२६<br>तस्येदम् १२० | १२७. सङ्घाङ्क-लक्षणेष्वञ्यञिञामण्<br>तस्येदमित्यर्थे अञन्तेभ्यः, यञन्तेभ्यः, इञन्तेभ्यश्च गोत्रप्रत्ययान्तेभ्यः अण् प्रत्ययो भवति, सङ्घे, अङ्के, लक्षणे चार्थेऽभिधेये।<br>(वा०) घोषग्रहणमत्र कर्त्तव्यम्।<br>घोषेऽर्थेऽपि उक्तेभ्योऽणूप्रत्ययो भवतीति वार्तिकार्थः।<br>अञन्तात् - वैदानां सङ्घः वैदः। वैदानाम् अङ्कः वैदः। वैदानाम् लक्षणम् वैदम्। वैदानां घोषः वैदः।<br>यञन्तात् - गर्गाणां सङ्घः गार्गो सङ्घः इत्यादि।<br>गार्ग्य शब्दाद् अणि कृते 'आपत्यस्य च तद्धितेऽनाति' इति सूत्रेण यलोपः।<br>इञन्तात्- दाक्षीणां सङ्घः दाक्षः सङ्घः इत्यादि।<br>लक्ष्यभूतस्य स्वकीयं चिह्नं लक्षणम्, यथा विद्या विद्यावताम्। अन्येन कृतं चिह्नम् अङ्कः कथ्यते। यथा गवादिषु स्वामिद्वारा कृतः तप्तमुद्राविशेषोऽङ्कः। | सङ्घाङ्क-लक्षणेषु १२८ |
| चरणात् १२६<br>अण्१२७<br>तस्येदम् १२० | १२८. शाकलाद्वा<br>तस्येदमित्यर्थे शाखाध्येतृवाचिनः शाकलशब्दाद् अण् प्रत्ययो वा भवति, सङ्घे, अङ्के, लक्षणे चाऽभिधेये। पक्षे चरणत्वाद् वुञ्।<br>अत्रापि घोषग्रहणं सम्बध्यते।<br>शाकलेन प्रोक्तमधीयते शाकलाः, तेषां सङ्घोऽङ्को घोषो वा शाकलः, शाकलको वा।<br>लक्षणे-शाकलं, शाकलकं वा। | |
| गोत्रात् १२६<br>तस्येदम् १२० | १२९. छन्दोगौक्थिक-याज्ञिक-बह्वृच-नटाञ्ञ्यः<br>तस्येदमित्यर्थे छन्दोग, औक्थिक, याज्ञिक, बह्वृच, नट- इत्येतेभ्यो ञ्यः प्रत्ययो भवति, धर्मे, आम्नाये चाऽर्थेऽभिधेये।<br>छन्दोगानां धर्मः, आम्नायो वा छान्दोग्यम्। औक्थिक्यम्। याज्ञिक्यम्। बाह्वृच्यम्। नाट्यम्। अन्यत्र छान्दोगं कुलमित्यादि। | |

| | | |
|---|---|---|
| गोत्रात् १२६<br>वुण् १२६<br>चरणात् १२६<br>तस्येदम् १२० | १३०. न दण्डमाणवान्तेवासिषु<br>दण्डप्रधाना माणवाः दण्डमाणवाः,<br>अन्तेवासिनः = शिष्याः, तेष्वभिधेयेषु तस्येदमित्यर्थे गोत्रप्रत्ययान्तेभ्यो वुञ् प्रत्ययो न भवति।<br>'गोत्रचरणाद् वुञ्'(४.३.१२६) इति सूत्रेण प्राप्तो वुञ् निषिध्यते।<br>दाक्षीणामिमे दाक्षाः, दण्डमाणवाः, शिष्या वा।<br>दाक्षिशब्दादौत्सर्गिकोऽण्। | |
| गोत्रात् १२६<br>तस्येदम् १२० | १३१. रैवतिकादिभ्यश्छः<br>तस्येदमित्यर्थे गोत्रप्रत्ययान्तेभ्यो रैवतकादिभ्यश्छः प्रत्ययो भवति।<br>रैवतकस्यायमिति रैवतकीयः। वैजवापेरयमिति वैजवापीयः।<br>(वा०) कौपिञ्जलहास्तिपदादण्।<br>कुपिञ्जलस्यापत्यं कौपिञ्जलः।<br>अत एव निर्देशादिञं बाधित्वाऽण्।<br>कौपिञ्जलस्यायमिति कौपिञ्जलः।<br>हस्तिन इव पादौ अस्य इति हस्तिपादः तस्यापत्यं हास्तिपादः।<br>अतएव निर्देशादिञं बाधित्वाऽण्।<br>हास्तिपादस्यायं हास्तिपादः।<br>(वा०) आथर्वणिकस्येकलोपश्च।<br>तस्येदमित्यर्थे आथर्वणिकशब्दाद् अण् प्रत्ययो भवति, तत्सन्नियोगेन च इकलोपः।<br>अथर्वणा प्रोक्तमधीयते इति आथर्वणिकः, तस्य धर्मः, आम्नायो आथर्वणः। | |
| अण् ४.१.८३ | १३२. तस्य विकारः<br>तस्य विकारः इत्यर्थे षष्ठ्यन्ताद् यथाविहितं प्रत्ययो भवति।<br>प्रकृतेरवस्थान्तरं विकारः।<br>भस्मनो विकारः भास्मनः।<br>मृत्तिकाया विकार इत्यर्थे मार्त्तिकः।<br>औत्सर्गिकोऽण्।<br>अश्मनो विकारः आश्मः, आश्मनो वा।<br>'नस्तद्धिते'(६.४.१४४) इति सूत्रपठितेन 'अश्मनो विकारे' इति वार्तिकेन विकल्पेन टिलोपः। | तस्यविकारः१६६ |

| | | |
|---|---|---|
| तस्य१३२ विकारः१३२<br>अण् ४.१.८३ | १३३. अवयवे च प्राण्योषधि-वृक्षेभ्यः<br>प्राण्योषधिवृक्षवाचिभ्यः शब्देभ्यः षष्ठ्यन्तेभ्यः 'तस्य अवयवः' इत्यर्थे यथाविहितं प्रत्ययो भवति, चकाराद् 'तस्य विकारः' इत्यर्थे च।<br>एवं हि प्राण्योषधिवृक्षवाचिभ्यः अवयवे, विकारे च उक्ता वक्ष्यमाणाश्च प्रत्ययाः भवन्ति, अन्येभ्यस्तु केवलं विकारे एवं इत्युक्तं भवति।<br>प्राणिभ्यः - मयूरस्यावयवो, विकारो वा मायूरः।<br>'प्राणिरजतादिभ्यो ऽञ्' इति वक्ष्यमाणो ऽञ् प्रत्ययः।<br>ओषधिभ्यः - मूर्वा ओषधिविशेषः, तस्यावयवो, विकारो वा मौर्वं काण्डं, भस्म वा।<br>वृक्षेभ्यः - पिप्पलस्यावयवो, विकारो वा पैप्पलम्। | अवयवे १६६ |
| तस्य१३२ विकारः१३२<br>अवयवे च १३३ | १३४. बिल्वादिभ्यो ऽण्<br>विकारावयवयोरर्थयोः बिल्वादिभ्यो ऽणु प्रत्ययो भवति।<br>बिल्वस्यावयवो विकारो वा बैल्वः। | अण् १३६ |
| तस्य१३२ विकारः१३२<br>अवयवे च १३३<br>अण् १३४ | १३५. कोपधाच्च<br>कोपधात्प्रातिपदिकादण्प्रत्ययो भवति, यथायोगं विकारावयवयोरर्थयोः।<br>तत्र प्राण्योषधिवृक्षेभ्यो विकारे, अवयवे च, इतरेभ्यस्तु विकारे एव।<br>तर्कुर्नाम वृक्षविशेषः, तस्यावयवो, विकारो वा तार्कवम्।<br>'ओरञ्' इत्यस्यापवादो ऽयम्। | |
| तस्य१३२ विकारः१३२<br>अवयवे च १३३<br>अण् १३४ | १३६. त्रपु-जतुनोः षुक्<br>त्रपु - जतुभ्यामण् प्रत्ययो भवति, 'तस्य विकार' इत्यर्थे, तत्सन्नियोगेन तयोः षुगागमश्च भवति।<br>ओरञो ऽपवादः।<br>त्रपुणो विकारः त्रापुषम्। जतुनो विकारो जातुषम्।<br>अप्राण्यादित्वान्नावयवे। | |

| | | |
|---|---|---|
| तस्य१३२ विकारः१३२<br>अवयवे च १३३ | १३७. ओरञ्<br>उवर्णान्तात्प्रातिपदिकादञ् प्रत्ययो भवति, विकारावयवयोरर्थयोः।<br>देवदारोरवयवो विकारो वा दैवदारवम्। | अञ् १३९ |
| तस्य१३२ विकारः१३२<br>अवयवे च १३३<br>अण् १३७ | १३८. अनुदात्तादेश्च<br>अनुदात्तादेः प्रातिपदिकादञ् प्रत्ययो भवति, विकारावयवयोरर्थयोः।<br>अणोऽपवादः।<br>दधित्थस्यावयवो विकारो वा दाधित्थम्।<br>कपित्थस्यावयवो विकारो वा कापित्थम्। | |
| तस्य१३२ विकारः१३२<br>अवयवे च १३३<br>अण् १३७ | १३९. पलाशादिभ्यो वा<br>पलाशादिभ्योऽञ् प्रत्ययो वा भवति।<br>पलाशस्यावयवो, विकारो वा पालाशम्।<br>खदिरस्यावयवो विकारो वा खादिरम्। | |
| तस्य१३२ विकारः१३२<br>अवयवे च १३३<br>अण् १३७ | १४०. शम्याष्ट्लञ्<br>शमीशब्दात् ट्लञ् प्रत्ययो भवति, विकारावयवयोरर्थयोः।<br>'अनुदात्तादेः' इति प्राप्तस्य अञोऽपवादः।<br>विकारे- शम्या विकारः शामीलं भस्म।<br>टित्त्वाद् ङीप् - शामीली स्रुक्।<br>अवयवे - शामीली शाखा। | |
| तस्य१३२ विकारः१३२<br>अवयवे च १३३<br>अण् १३७ | १४१. मयड्वैतयोर्भाषाया-<br>मभक्ष्याच्छादनयोः<br>एतयोः = विकारावयवयोरर्थयोः सर्वेभ्यः प्रातिपदिकेभ्यः मयट्प्रत्ययो वा भवति, भाषायां, यौ च विकारावयवौ, तौ भक्ष्यम्, आच्छादनं च न स्याताम्।<br>अश्मनो विकारः अश्ममयम्, आश्मनम्, आश्मं वा। मूर्वायाः विकारः, अवयवो वा मूर्वामयम्, मौर्वं वा।<br>अभ्यक्ष्याच्छादनयोरिति किम्? मौद्गः सूपः।<br>कार्पासमाच्छानदम्। | मयट् १४९<br>भाषायाम्<br>अभक्ष्याच्छा-<br>दनयोः १४२ |

| | | |
|---|---|---|
| मयट्१४१ विकारः१३२<br>अवयवे च १३३<br>अभक्ष्याच्छादनयोः१४१<br>भाषायाम् १४१ | **१४२. नित्यं वृद्धशरादिभ्यः**<br>वृद्धसंज्ञकेभ्यः प्रातिपदिकेभ्यः, शरादिभ्यश्च अभक्ष्याच्छादनयोर्विकारावयवयोर्भाषायां विषये नित्यं मयट् प्रत्ययो भवति।<br>वृद्धेभ्यस्तावत् - आम्रस्यावयवः, विकारो वा आम्रमयम्।<br>शरादिभ्यः - शरमयम्। दर्भमयम्। मृण्मयम्।<br>(वा०) एकाचो नित्यम्।<br>त्वङ्मयम्। वाङ्मयम्। | |
| तस्येदम्१२०<br>मयट्१४१ | **१४३. गोश्च पुरीषे**<br>तस्येदम् इत्यर्थे गोशब्दात्पुरीषेऽभिधेये मयट् प्रत्ययो भवति।<br>पुरीषं न विकारो,न चावयवः। अतः पुरीषेऽभिधेये 'तस्येदम्' इत्यर्थे प्रत्ययो विधीयते।<br>गोः पुरीषम् गोमयम्।<br>पुरीषे इति किम्? गव्यं पयः।<br>अत्र 'गोपयसोर्यत्'(४.३.१६०) इति सूत्रेण यत्प्रत्ययः। | |
| तस्य विकारः १३२<br>मयट् १४१ | **१४४. पिष्टाच्च**<br>पिष्टशब्दान्नित्यं मयट्प्रत्ययो भवति, 'तस्य विकारः' इत्यर्थे। अणोऽपवादः।<br>पिष्टमयं भस्य। | पिष्टात् १४५ |
| तस्य विकारः १३२<br>पिष्टात् १४४ | **१४५. संज्ञायां कन्**<br>पिष्टशब्दात्कन् प्रत्ययो भवति विकारेऽर्थे संज्ञायां विषये।<br>मयटोऽपवादः।<br>पिष्टस्य विकारः पिष्टकः।<br>'पूपोऽपूपः पिष्टकः स्यात्' इत्यमरः। | |
| तस्य विकारः १३२<br>मयट् १४१ | **१४६. व्रीहेः पुरोडाशे**<br>व्रीहिशब्दान्मयट् प्रत्ययो भवति पुरोडाशे विकारे।<br>बिल्वाद्यणोऽपवादः।<br>व्रीहेः विकारः व्रीहिमयः पुरोडाशः।<br>व्रैहमन्यत्। | |

| | | |
|---|---|---|
| तस्य विकारः १३२<br>मयट् १४१ | १४७. असंज्ञायां तिलयवाभ्याम्<br>तिलयवामसंज्ञायां विषये मयट् प्रत्ययो भवति, विकारावयवयोरर्थयोः।<br>तिलस्यावयवो, विकारो वा तिलमयम्।<br>यवस्यावयवो, विकारो वा यवमयम्।<br>असंज्ञायामिति किम्? तैलम्। यावकः।<br>विकारेऽण्। यावक इत्यत्र अणन्तात् 'यावादिभ्यः कन्'(५.४.२९) इति अत्यन्तस्वार्थिकः कन्। | |
| तस्य विकारः १३२<br>मयट् १४१ | १४८. द्व्यचश्छन्दसि<br>द्व्यचः प्रातिपदिकाच्छन्दसि विषये मयट् प्रत्ययो भवति, विकारावयवयोरर्थयोः।<br>यस्य पर्णमयी जुहूर्भवति। दर्भमयं वासो भवति। शरमयं बर्हिर्भवति। | द्व्यचः<br>छन्दसि१४८ |
| तस्य विकारः १३२<br>मयट् १४१<br>अवयवे१३३ | १४९. नोत्वद्वर्ध्रबिल्वात्<br>उकारवतः प्रातिपदिकाद्, वर्ध्रशब्दाद्, बिल्वशब्दाच्च मयट्प्रत्ययो न भवति।<br>'द्व्यचश्छन्दसि' इति प्राप्तः प्रतिषिध्यते।<br>उकारवतः - मुञ्ज - मौञ्जं शिक्यम्।<br>गर्मुत् - गार्मुतं चक्रम्।<br>वर्ध्रशब्दात् - वार्ध्री = बालप्रगथिता भवति।<br>बिल्वशब्दात् - बैल्वो ब्रह्मवर्चसकामेन कार्यः। | |
| तस्य विकारः १३२ | १५०. तालादिभ्योऽण्<br>विकारावयवयोरर्थयोस्तालादिभ्योऽण्प्रत्ययो भवति।<br>अञ्मयटोरपवादः।<br>(गणसूत्रम्) तालाद्धनुषि। तालं धनुः।<br>'नित्यं वृद्ध०' इति मयटोऽपवादः।<br>अन्यत्र-तालमयम्।<br>बार्हिणम्। ऐन्द्रालिशम्।<br>बार्हिण,इन्द्रालिश इतिशब्दाभ्यामण्। | अण् १५१ |

| तस्य विकारः १३२<br>अण् १५० | १५१. जातरूपेभ्यः परिमाणे<br>जातरूपं = सुवर्णम्, तद्वाचिभ्यः शब्देभ्योऽण् प्रत्ययो भवति, परिमाणे विकारे गम्ये।<br>जातरूपस्य विकारः जातरूपम्। हाटकस्य विकारः हाटको निष्कः। हाटकं कार्षापणम्।<br>तपनीयस्य विकारः तापनीयम्।<br>परिमाण इति किम्? यष्टिरियं हाटकमयी। | |
|---|---|---|
| तस्य विकारः १३२<br>अवयवे १३३ | १५२. प्राणिरजतादिभ्योऽञ्<br>प्राणिवाचिभ्यः प्रातिपदिकेभ्यो, रजतादिभ्यश्चाञ् प्रत्ययो भवति, विकारावयवयोरर्थयोः।<br>प्राणिभ्यस्तावत् – शुकस्यावयवो विकारो वा शौकम्। एवमेव – बाकम्। कापोतम्। मायूरम्। तैत्तिरम्।<br>रजतादिभ्यः – रजतस्य विकारो राजतम्। लोहस्य विकारो लौहम्। | अञ् १५३ |
| तस्य विकारः १३२<br>अवयवे १३३<br>अञ् १५२ | १५३. ञितश्च तत्प्रत्ययात्<br>विकारे, अवयवे च विहितो यः ञित्प्रत्ययः, तदन्तात् प्रातिपदिकाद् अञ्प्रत्ययो भवति, विकारावयवयोरर्थयोः।<br>तदित्यनेन विकारावयवयोरर्थयोर्ग्रहणम्। अनेनाऽपि विकारावयवयोरर्थयोरेव अञ्प्रत्ययो विधीयते।<br>'नित्यं वृद्धशरादिभ्यः' इति सूत्रेण प्राप्तस्य मयटोऽपवादोऽयम्।<br>देवदारोः विकारो, अवयवो वा दैवदारवम्, दैवदारवस्यापि विकारो, अवयवो वा दैवदारवम्।<br>प्रथमं देवदारुशब्दाद् 'ओरञ्' इति सूत्रेण अञ्, ततः दैवदारवशब्दात् प्रकृतसूत्रेणापि अञ्। | |

| | | |
|---|---|---|
| तस्य विकारः १३२<br>अवयवे १३३ | १५४. क्रीतवत्परिमाणात्<br>परिमाणवाचकात् प्रातिपदिकात् 'तस्य विकारः' इत्यर्थेऽपि क्रीत इव प्रत्ययाः भवन्ति।<br>'प्राग्वतेष्ठञ्'(५.१.१८) इत्यतः आरभ्य क्रीतार्थे ये प्रत्ययाः परिमाणवाचकात् शब्दाः विहितास्ते एव प्रत्ययाः विकारेऽर्थेऽपि अतिदिश्यन्तेऽनेन।<br>अत्र संख्यापि परिमाणग्रहणेन गृह्यते, न रूढिपरिमाणमेव।<br>यथा निष्केण क्रीतं नैष्किकम् इत्यत्र क्रीतार्थे 'असमासे निष्कादिभ्यः' (५.१.२०) इत्यनेन ठक् प्रत्ययो भवति तथैव निष्कस्य विकार नैष्किकम् इत्यत्र विकारेऽर्थेऽपि ।<br>एवमेव शतेन क्रीतमित्यर्थे यथा शत्यं, शतिकं वेति भवति तथैव शतस्य विकारेऽपि। | |
| तस्य विकारः १३२<br>अवयवे १३३ | १५५ः उष्ट्राद्वुञ्<br>उष्ट्रशब्दाद् वुञ् प्रत्ययो भवति, विकारे, अवयवे चार्थे।<br>प्राण्यञोऽपवादः।<br>उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः। | |
| तस्य विकारः १३२<br>अवयवे१३३ वुञ्१५२ | १५६. उमोर्णयोर्वा<br>उमाशब्दाद्, ऊर्णाशब्दाच्च वा वुञ् प्रत्ययो भवति, विकारावयवयोरर्थयोः।<br>पक्षे औत्सर्गिकोऽण्।<br>उमा = सस्यविशेषः, तस्याः विकारोऽवयवो वा औमकम्, औमं वा।<br>ऊर्णा = मेषादिलोम। ऊर्णायाः विकारोऽवयवो वा और्णकम्, और्णम्। | |
| तस्य विकारः १३२<br>अवयवे १३३ | १५७. एण्या ढञ्<br>विकारावयवयोरर्थयोः एणीशब्दाद् ढञ्प्रत्ययो भवति।<br>एण्या विकारोऽवयवो वा ऐणेयं मांसम्।<br>'एण्याः' इति स्त्रीलिङ्गशब्देन निर्देशात् पुंसि प्राणित्वादञेव - एणस्य मांसम् ऐणम्। | |

| | | |
|---|---|---|
| तस्य विकारः १३२<br>अवयवे १३३ | १५८. गोपयसोर्यत्<br>गो, पयस्- इत्येताभ्यां शब्दाभ्यां यत्प्रत्ययो भवति, विकारावयवयोरर्थयोः।<br>गोर्विकारोऽवयवो वा गव्यम्।<br>पयसो विकारः पयस्यम्। | यत् १५९ |
| तस्य विकारः १३२<br>अवयवे १३३ यत्१५८ | १५९. द्रोश्च<br>द्रुशब्दाद् यत्प्रत्ययो भवति, विकारावयवयोरर्थयोः।<br>ओरञोऽपवादः, 'एकाचो नित्यम' इति वार्तिकेन प्राप्तस्य मयटश्च।<br>द्रुः = वृक्षः। द्रोर्विकारोऽवयवो वा द्रव्यम्। | द्रोः १६० |
| तस्य विकारः १३२<br>अवयवे १३३ द्रोः | १६०. माने वयः<br>द्रुशब्दाद् माने विकारविशेषे वयः प्रत्ययो भवति। यतोऽपवादः।<br>द्रोर्विकारभूतं प्रस्थादिपरिमाणमिति द्रुवयम्। | |
| तस्य विकारः १३२<br>अवयवे १३३ | १६१. फले लुक्<br>विकारे, अवयवे चार्थे उत्पन्नस्य प्रत्ययस्य लुग्भवति, फलेऽभिधेये।<br>आमलक्याः फलम् आमलकम्।<br>'नित्यं वृद्धशरादिभ्यः', इति सूत्रेण आमलकीशब्दाद् विहितस्य मयटो लुक्।<br>'लुक्तद्धितलुकि' इत्यनेन ङीषो लुक्।<br>फलमिति नपुंसकशब्दापेक्षया आमलकमित्यत्र नपुंसकत्वम्।<br>फलितस्य वृक्षस्य फलमवयवो भवति, विकारश्च, पल्लवितस्य पल्लव इव। | फले १६५ |
| तस्य १३२ फले १६१ | १६२. प्लक्षादिभ्योऽण्<br>प्लक्षादिभ्यः प्रातिपदिकेभ्यः विकारावयत्वेन फले विवक्षितेऽण् प्रत्ययो भवति।<br>अञोऽपवादः। विधानसामर्थ्यात्तस्य 'फले लुक्' इत्यनेन लुग्न भवति।<br>प्लक्षस्य विकारोऽवयवो वा प्लाक्षं फलम्।<br>न्यग्रोधस्य विकारोऽवयवो वा नैयग्रोधं फलम्। | अण् १६३ |

| | | |
|---|---|---|
| तस्य १३२ फले१६१<br>अण् १६२ | १६३. जम्ब्वा वा<br>जम्बूशब्दात्फलेऽभिधेये वाऽण् प्रत्ययो भवति। पक्षेऽञ्।<br>अत्राप्यणो विधानसामर्थ्यात् 'फले लुक्' इति लुग्नभवति, अञस्तु लुग्भवत्येन, तस्य विधानसामर्थ्याभावात्।<br>जम्ब्वा फलानि जाम्बवानि फलानि। पक्षे जम्बूनि। | जम्ब्वाः वा १६४ |
| तस्य १३२<br>जम्ब्वाः१६३<br>फले १६१ वा १६३ | १६४. लुप् च<br>जम्बूशब्दात् फलेऽभिधेये प्रत्ययस्य वा लुब्भवति।<br>लुपि 'लुपि युक्तवद् व्यक्तिवचने' इति सूत्रेण प्रकृतिवल्लिङ्गवचने भवतः, लुकि तु नेति लुब्लुकोर्विशेषः।<br>जम्ब्वाः फलं जम्बूः फलम् इति अञो लुपि।<br>जम्ब्वाः फलं जम्बु फलम्, इति लुकि।<br>(वा०) लुप्प्रकरणे फलपाकशुषामुपसंख्यानम्।<br>फलपाकेन शुष्यन्ति ये ते फलपाकशुषाः, तद्वाचिभ्यः परस्य फलार्थे विहितस्य प्रत्ययस्य लुपः उपसंख्यानं कर्त्तव्यमिति वार्तिकार्थः।<br>व्रीहीनां फलानीति व्रीहयः। यवानां फलानीति यवाः। माषाणां फलानीति माषाः। एवमेव मुद्गाः, तिलाः।<br>(वा०) पुष्पमूलेषु बहुलम्।<br>विकारावयवप्रत्ययस्य बहुलं लुब्भवति, पुष्पेषु, मूलेषु चाभिधेयेषु इति वार्तिकार्थः।<br>मल्लिकायाः पुष्पं मल्लिका।<br>विदार्याः मूलं विदारी।<br>बहुलग्रहणान्नापि भवति - पाटलानि पुष्पाणि। शाल्वानि मूलानि। बहुलग्रहणात् क्वचिल्लुब् न भवति, अपितु लुगेव भवति - अशोकस्य पुष्पम् अशोकम्, करबीरस्य पुष्पं करवीरं पुष्पम्। लुपि तु प्रकृतिवल्लिङ्गवचनातिदेशेन अशोकः पुष्पम्, करवीरः पुष्पम् इति प्रयोगापत्तिः स्यात्। | लुप् १६५ |

| | | |
|---|---|---|
| तस्य १३२ फले१६१<br>लुप् १६४ | १६५. हरीतक्यादिभ्यश्च<br>'हरीतकी' इत्येवमादिभ्यः शब्देभ्यः फले विहितस्य प्रत्ययस्य लुब्भवति।<br>लुकि प्राप्ते लुपो विधानं युक्तवद्भावार्थम्।<br>हरीतक्याः फलं हरीतकी।<br>हरीतक्यादीनां लिङ्गमेव प्रकृतिवत्, वचनं त्वभिधेयानुसारि भवत्येव हरीतक्याः फलानि हरीतक्यः। तथा चास्ति वार्तिकम्–<br>'हरीतक्यादिषु व्यक्तिः' इति। | |
| तस्य१३२ विकारः१३२ | १६६. कंसीय-परशव्ययोर्यञञौ लुक् च<br>कंसीय-परशव्यशब्दाभ्यां यथासंख्यं यञ्, अञ्-इत्येतौ प्रत्ययौ भवतः, तस्य विकारः इत्यर्थे, तत्संन्नियोगेन च कंसीयपरशव्ययोर्यौ प्रत्ययौ, छयतौ तयोः लुग्भवति।<br>कंसीयस्य विकारः कांस्यः।<br>परशव्यस्य विकारः पारशवः।<br>कांस्यः - कंसो नाम धातुर्लोहविशेषः। कंसाय हितमित्ययर्थे 'तस्मै हितम्' इत्यर्थे छप्रत्यये कृते कंसीयशब्दः सिद्ध्यति। तस्य विकार इत्यर्थे यञि कृते तस्मिन् परे छस्य लुक्।<br>पारशव्यः - परशुः= कुठारः, तस्मै हितम् इत्यर्थे 'उगवादिभ्यो यत्(५.१.२) इति सूत्रेण यत्प्रत्यये कृते परशव्य इति शब्दस्य सिद्धिः। तस्य विकार इत्यर्थे परशव्यशब्दाद् अञ् प्रत्यये परे यत्प्रत्ययस्य लुक्। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां चतुर्थाध्यायस्य तृतीयः पादः ।।

।। श्रीः ।।

# ।। अथ चतुर्थाध्यायस्य चतुर्थः पादः ।।

| | | |
|---|---|---|
| ङ्याप्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | १. प्राग्वहतेष्ठक्<br>'तद्वहति०'(४.४.७६) इत्यतः प्राक् ठक् प्रत्ययस्यधिकारो वेदितव्यः।<br>तेन 'तेन दीव्यति खनति जयति जितम्' (४.४.२)इति सूत्रेण अक्षैर्दीव्यतीति 'आक्षिकः' इत्यत्र ठक् प्रत्ययो भवति, ठक् प्रत्ययस्य तत्राधिकारात्।<br>(वा०) ठक्प्रकारणे तदाहेति माशब्दादिभ्य उपसंख्यानम्। इति शब्दो व्युत्क्रमेण तच्छब्दानन्तरं द्रष्टव्यम्। तदिति आहेत्यर्थे माशब्द, स्वागत इत्यादिशब्देभ्यष्ठक उपसंख्यानं कर्त्तव्यमिति वार्त्तिकार्थः। तदिति शब्देन वाक्यार्थो विवक्षित इति वाक्यादनेन प्रत्ययविधानम्।<br>माशब्द इत्याह इति माशब्दिकः। स्वागतमित्याह स्वागतिकः।<br>(वा०) आहौ प्रभूतादिभ्यः।<br>प्रभूतमाह प्राभूतिकः। पर्याप्तमाह पार्याप्तिकः।<br>(वा०) पृच्छतौ सुस्नातादिभ्यः।<br>सुस्नातं पृच्छति सौस्नातिकः।<br>(वा०) गच्छतौ परदारादिभ्यः।<br>परदारान् गच्छति पारदारिकः। | तद्वहति<br>४.४.७६<br>ठक् ७४ |
| ठक् १ | २. तेन दीव्यति-खनति जयति जितम्<br>तेन दीव्यति, इत्याद्यर्थेषु तृतीयान्तात् ठक् प्रत्ययो भवति।<br>अक्षैर्दीव्यति आक्षिकः।<br>अभ्रिः = कुद्दालः, तया खनति आभ्रिकः।<br>अक्षैर्जयति आक्षिकः।<br>अक्षैर्जितम् आक्षिकं द्रव्यम्। | तेन २७ |
| तेन २ ठक् १ | ३. संस्कृतम्<br>तेन संस्कृतमित्यर्थे तृतीयान्तात् ठक् प्रत्ययो भवति।<br>दध्ना संस्कृतं दाधिकम्।<br>उत्कर्षाधानं संस्कारः। | संस्कृतम् ४ |

| | | |
|---|---|---|
| तेन २<br>संस्कृतम् ३ | ४. कुलत्थकोपधादण्<br>तेन संस्कृतमित्यर्थे कुलत्थशब्दात्, ककारोपध शब्दाच्च अण् प्रत्ययो भवति।<br>कुलत्थैः संस्कृतं कौलत्थम्।<br>ककारोपधात् - तित्तिडीकेन संस्कृतं तैत्तिडीकिकम्। | |
| तेन २ ठक् १ | ५. तरति<br>'तेन तरति' इत्यर्थे ठक् प्रत्ययो भवति।<br>तरति इत्यस्य प्लवते, गच्छतीत्यर्थः।<br>उडुपेन तरति औडुपिकः। | तरति ७ |
| तेन २ तरति ५ | ६. गोपुच्छाट्ठञ्<br>'तेन तरति' गोपुच्छाट्ठञ् भवति।<br>गोपुच्छेन तरति गौपुच्छिकः। | |
| तेन २ तरति ५ | ७. नौद्व्यचष्ठन्<br>'तेन तरति' इत्यर्थे नौशब्दाद्, द्व्यचः प्रातिपदिकाच्च ठन् प्रत्ययो भवति।<br>नौशब्दाद्- नावा तरति नाविकः।<br>द्व्यचः - घटेन तरति घटिकः। | |
| तेन २ ठक् १ | ८. चरति<br>तेन चरति इत्यर्थे तृतीयान्तात् ठक् प्रत्ययो भवति।<br>चरतिर्भक्षणे, गतौ च वर्तते।<br>दध्ना चरति (भक्षयति) दाधिकः।<br>शकटेन चरति (गच्छति) शाकटिकः। | चरति ११ |
| तेन २ चरति ८ | ९. आकर्षात् ष्ठल्<br>'तेन चरति इत्यर्थे आकर्षात् ष्ठल् प्रत्ययो भवति।<br>आकर्षेण चरति आकर्षिकः।<br>आकर्ष इति सुवर्णपरीक्षार्थो निकषोपल उच्यते। | |
| तेन २ चरति ८ | १०. पर्पादिभ्यः ष्ठन्<br>'तेन चरति' इत्यर्थे पर्पादिभ्यः ष्ठन् प्रत्ययो भवति।<br>पर्पेण चरति पर्पिकः। येन पीठेन पङ्गवश्चरन्ति स पर्पः।<br>(गणसूत्रम्) पादः पच्च।<br>पादेन चरति पदिकः। | ष्ठन् ११ |
| तेन २ ष्ठन् १० | ११. श्वगणाट्ठञ् च<br>तेन चरति इत्यर्थे श्वगणशब्दात् ठञ्प्रत्ययो भवति, चकारात् ष्ठन् च।<br>श्वगणेन चरति श्वागणिकः। ष्ठन् प्रत्यये तु- श्वगणिकः। | |

| | | |
|---|---|---|
| तेन २ ठक् १ | १२. वेतनादिभ्यो जीवति<br>'तेन जीवति' इत्यर्थे वेतनादिशब्देभ्यः ठक् प्रत्ययो भवति।<br>वेतनेन जीवति वैतनिकः कर्मकरः। वेतनादिगणे धनुर्दण्डग्रहणं संघातविगृहीतार्थम्-धानुर्दण्डिकः। धानुष्कः। दाण्डिकः। | जीवति १४ |
| तेन २ जीवति १२ | १३. वस्न-क्रयविक्रयाट्ठन्।<br>'तेन जीवति' इत्यर्थे वस्नशब्दात्, क्रयविक्रयशब्दाच्च ठन् प्रत्ययो भवति।<br>वस्नम् = मूल्यम्, तेन जीवति वस्निकः।<br>क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम् - क्रयविक्रयिकः।<br>क्रयेण जीवति क्रयिकः। विक्रयेण जीवति विक्रयिकः। | ठन्१४ |
| तेन २ जीवति १२<br>ठन् १३ | १४. आयुधाच्छ च<br>'तेन जीविति' इत्यर्थे आयुधशब्दात् छप्रत्ययो भवति चकारात् ठन् च।<br>आयुधेन जीवति आयुधीयः।<br>ठनि - आयुधिकः। | |
| तेन २ ठक् १ | १५. हरत्युत्संगादिभ्यः<br>'तेन हरति' इत्यर्थे उत्सङ्गादिशब्देभ्यः ठक् प्रत्ययो भवति।<br>हरतिर्देशान्तरप्रापणे वर्तते।<br>उत्सङ्गेन हरति =नयति औत्सङ्गिकः। उत्सङ्गः = क्रोडम्, अङ्को वा। | हरति १८ |
| तेन २ हरति १५ | १६. भस्त्रादिभ्यः ष्ठन्<br>तेन हरति इत्यर्थे भस्त्रा इत्येवमादिभ्यः शब्देभ्यः ष्ठन् प्रत्ययो भवति।<br>भस्त्रया हरति = नयति भस्त्रिकः। | ष्ठन् १७ |
| तेन २ हरति १५<br>ष्ठन् १६ | १७. विभाषा विवधात्<br>'तेन हरति' इत्यर्थे विवधशब्दाद्, वीवध शब्दाच्च विभाषा ष्ठन् प्रत्ययो भवति। पक्षे ठक्।<br>विवधेन हरति = नयति विवधिकः। ठकि वैवधिकः।<br>एकदेशविकृतस्यानन्यत्वाद् वीवधशब्दादपि ष्ठन् वीवधिकः, वैवधिकः।<br>विवध-वीवधशब्दौ उभयतो बद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तेते। | |

| | | |
|---|---|---|
| तेन २ हरति १५ | १८. अण् कुटिलिकायाः<br>तेन हरति इत्यर्थे कुटिलिकाशब्दादण् प्रत्ययो भवति।<br>कुटिलिका व्याधानां गतिविशेषः, कर्माराणामुपकरणभूतं लोहं च।<br>कुटिलिकया हरति मृगान्, अङ्गारान्वा कौटिलिको व्याधः, कर्मारश्च। | |
| तेन २ ठक् १ | १९. निर्वृत्तेऽक्षद्यूतादिभ्यः<br>तेन निर्वृतम् इत्यर्थे 'अक्षद्यूत' इत्येवमादिभ्यः शब्देभ्यः ठक् प्रत्ययो भवति।<br>अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकं वैरम्। | निर्वृत्ते २१ |
| तेन २ निर्वृत्ते १९ | २०. त्रेर्मम्नित्यम्<br>त्रेः इति पदे 'त्रि' इतिशब्देन 'ड्वितः क्त्रिः' इति सूत्रेण विहितः क्त्रिप्रत्ययो गृह्यते।<br>तेन निर्वृत्तम् इत्यर्थे क्त्रिप्रत्ययान्तेभ्यः मप्प्रत्ययो नित्यं भवति। कृत्या, करणेन वा निर्वृत्तं कृत्रिमम्। 'डुकृञ् करणे' इति धातोः 'ड्वितः क्त्रिः' (४.४.२० ) इति सूत्रेण भावे क्त्रिप्रत्ययः, ततः प्रकृतसूत्रेण मप्प्रत्ययः।<br>सूत्रे नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थम्। तेन त्र्यन्तं नित्यं मप्प्रत्यायान्तमेव प्रयुज्यते।<br>(वा०) भावप्रत्ययान्तादिमब्वक्तव्यः।<br>पाकेन निर्वृत्तं पाकिमम्। त्यागिमम्। | |
| तेन २ निर्वृत्ते १९<br>ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | २१. अपमित्य-याचिताभ्यां कक्कनौ<br>अपमित्य निर्वृतमित्यर्थे अपमित्यशब्दात् कक् प्रत्ययो, याचितेन निर्वृत्तम् इत्यर्थे च याचितशब्दात् कन् प्रत्ययो भवति।<br>'अपमित्य' इति ल्यबन्तम्।<br>अपमित्य निर्वृत्तम् आपमित्यकम्।<br>याचितेन = याचनेन निर्वृत्तम् याचितकम्। | |
| तेन २ ठक् १ | २२. संसृष्टे<br>तेन संसृष्टम् इत्यर्थे तृतीयान्तात् ठक् प्रत्ययो भवति।<br>संसृष्टम् = एकीभूतम्, अभिन्नमित्यर्थः।<br>दध्ना संसृष्टं दाधिकम्। | संसृष्टे २५ |
| तेन २ संसृष्टे २२ | २३. चूर्णादिनिः<br>तेन संसृष्टम् इत्यर्थे चूर्णादिनिः प्रत्ययो भवति। चूर्णैः संसृष्टा एकीभूता इति चूर्णिनोऽपूपाः। | |

| | | |
|---|---|---|
| तेन२ संसृष्टे २२<br>ठक् १ | २४. लवणाल्लुक्<br>तेन संसृष्टम् इत्यर्थे लवणशब्दाद् विहितस्य ठक् प्रत्ययस्य लुग्भवति।<br>लवणेन संसृष्टः लवणः सूपः। एवमेव लवणं शाकम्।<br>लवणा यवागूः। | |
| तेन २ संसृष्टे २२ | २५. मुद्गादण्<br>तेन संसृष्टम् इत्यर्थे मुद्गशब्दादण् प्रत्ययो भवति।<br>मुद्गैः संसृष्टा मौद्गी यवागूः। | |
| तेन २ ठक् १ | २६. व्यञ्जनैरुपसिक्ते<br>तेन उपसिक्तम् इत्यर्थे व्यञ्जनविशेषवाचिभ्यष्ठक् प्रत्ययो भवति।<br>ओदनादिषु रसो येन व्यज्यते तद् व्यञ्जनं दध्यादि।<br>क्लेचनेन मृदुकरणमुपसेचनम्।<br>दध्ना उपसिक्तं दाधिकम्।<br>व्यञ्जनैरिति किम्? उदकेनोपसिक्त ओदनः। | |
| तेन २ ठक् १ | २७. ओजःसहोऽम्भसा वर्तते<br>तेन वर्तते इत्यर्थे ओजस्, सहस्, अम्भस्- इत्येतेभ्यः शब्देभ्यस्तृतीयान्तेभ्यः ठक् प्रत्ययो भवति।<br>ओजसा वर्तते औजसिकः शूरः।<br>सहसा वर्तते साहसिकश्चौरः।<br>अम्भसा वर्तते आम्भसिको मत्स्यः। | वर्तते २८ |
| वर्तते २७ ठक् १ | २८. तत्प्रत्यनुपूर्वमीप-लोम-कूलम्<br>तद् वर्तते इत्यर्थे प्रति, अनु- इत्येवंपूर्वेभ्यः ईप, लोम, कूल-इत्येतेभ्यः शब्देभ्यो द्वितीयान्तेभ्यः ठक् प्रत्ययो भवति।<br>तदिति द्वितीयान्तं नपुंसके।<br>प्रतीपं = प्रतिकूलं वर्तते प्रातीपिकः।<br>अन्वीपम् = अनुकूलं वर्तते आन्वीपिकः।<br>प्रतिलोमं= प्रतिकूलं वर्तते प्रातिलोमिकः।<br>प्रतिकूलं वर्तते प्रातिकूलिकः।<br>अनुकूलं वर्तते आनुकूलिकः।<br>अनुलोमं वर्तते आनुलोमिकः।<br>प्रतीपमित्यादयः क्रियाविशेषणमिति कर्मणि द्वितीयान्तम्। | तत् ४६ |

| | | |
|---|---|---|
| तेन २ ठक् १<br>वर्तते २७ | २९. परिमुखं च<br>तद् वर्तते इत्यर्थे परिमुखशब्दात् ठक् प्रत्ययो भवति।<br>परिमुखं वर्तते पारिमुखिकः।<br>पारिमुखिक इत्यस्य यः स्वामिनं प्रति अनुकूलः, प्रतिकूलो वा इति अर्थद्वयम्।<br>सूत्रे चकारोऽनुक्तसमुच्चयार्थस्तेन परिपार्श्वं वर्तते इति पारिपार्श्विक इत्यपि सिद्ध्यति। | |
| तेन २ ठक् १ | ३०. प्रयच्छति गर्ह्यम्<br>तत्प्रयच्छति इत्यर्थे द्वितीयान्तात् ठक् प्रत्ययो भवति, यत्प्रत्यच्छति गर्ह्यं चेत्तत्।<br>द्विगुणार्थं = द्विगुणम्, तादर्थ्यात्ताच्छब्द्यम्। द्विगुणम्, प्रयच्छति इति द्वैगुणिकः उत्तमर्णः।<br>एकगुणं दत्त्वा द्विगुणं गृह्णाति, अत एव तद्गर्ह्यं भवति। | प्रयच्छति गर्ह्यम् ३१ |
| तत् २८<br>प्रयच्छति ३०<br>गर्ह्यम् ३० | ३१. कुसीद-दशैकादशात् ष्ठन्ष्ठचौ<br>तत् प्रच्छति इत्यर्थे कुसीदशब्दाद्, दशैकादशशब्दाच्च यथासंख्यं ष्ठन्, ष्ठच् इत्येतौ प्रत्ययौ भवति, यत्प्रयच्छति गर्ह्यं चेत्तत्।<br>कुसीदं प्रयच्छति कुसीदिकः।<br>दशैकादशान् प्रयच्छति दशैकादशिकः उत्तमर्णः।<br>दशैकादशशब्दे दश च एकादश चेति विग्रहे कर्मधाये, अकारः समासान्तः इहैव सूत्रे निपात्यते इति दशैकादशशब्दोऽकारान्तः। | |
| तत् २८ ठक् १ | ३२. उञ्छति<br>तद् उच्छति इत्यर्थे द्वितीयान्तात् ठक् प्रत्ययो भवति।<br>भूमौ पतितस्यैकैकस्य कणस्योपादानम् = उञ्छः।<br>बदराण्युञ्छति बादरिकः। | |
| तत् २८ ठक् १ | ३३. रक्षति<br>तद् रक्षिति इत्यर्थे द्वितीयान्तात् ठक् प्रत्ययो भवति।<br>समाजं रक्षति सामाजिकः। | |
| तत् २८ ठक् १ | ३४. शब्ददर्दुरं करोति<br>तत्करोति इत्यर्थे शब्द-दर्दुरशब्दाभ्यां ठक् प्रत्ययो भवति।<br>शब्दं करोति शाब्दिको वैयाकरणः।<br>करोतिरिह ज्ञाने वर्तते, प्रकृत्यादिविभागेन जानातीत्यर्थः करोतीत्यस्य। एतच्चाभिधानस्वाभाव्याद् लभ्यते। तेनेह न भवति- शब्दं करोति खरः।<br>दर्दुरः = वाद्यभाण्डवाचकः। दर्दुरं करोति = रचयति इति दार्दुरिकः कुम्भकारः। | |

| | | |
|---|---|---|
| तत् २८ ठक् १ | ३५. पक्षि-मत्स्य-मृगान् हन्ति<br>तद् हन्ति इत्यर्थे पक्षि, मत्स्य, मृग- इत्येतेभ्यः ठक् प्रत्ययो भवति।<br>(वा०) स्वरूपस्य, पर्यायाणां, विशेषाणां च ग्रहणम्।<br>(मत्स्यपर्यायेषु मीनस्यैव ग्रहणम्)<br>पक्षि- पक्षिणो हन्ति पाक्षिकः। शकुनीन् हन्ति शाकुनिकः। मयूरान् हन्ति मायूरिकः।<br>मत्स्य- मात्स्यिकः। मैनिकः। शाफरिकः। शफरी= मत्स्य विशेषः, तां हन्तीत्यर्थः।<br>मृग- मार्गिकः। हारिणिकः। सौकरिकः। | हन्ति ३६ |
| तत् २८ ठक् १<br>हन्ति ३५ | ३६. परिपन्थं च तिष्ठति<br>तत् तिष्ठति इत्यर्थे परिपन्थशब्दात् ठक् प्रत्ययो भवति।<br>परिपथशब्दपर्यायः परिपन्थशब्दः।<br>परिपन्थं तिष्ठति पारिपन्थिकश्चौरः। यश्चौरः पन्थानं वर्जयित्वा तिष्ठति, यो वा पन्थानं व्याप्नोति स पारिपन्थिक इत्युच्यते।<br>परिपन्थशब्दे 'अकर्मकधातुभिर्योगे देशः, कालो, भावो गन्तव्योऽध्वा' चेति वार्तिकेन कर्मत्वमिति द्वितीया। | |
| तत् २८ ठक् १ | ३७. माथोत्तरपद-पदव्यनुपदं धावति<br>तद् धावति इत्यर्थे माथोत्तरपदात् प्रातिपदिकात्, पदवी, अनुपद-इत्येताभ्यां च शब्दाभ्यां ठक् प्रत्ययो भवति।<br>माथशब्दः पथिन् पर्यायः।<br>दण्डाकारो माथः = पन्थाः इति दण्डमाथः, ऋजुमार्ग इत्यर्थः तं धावति दाण्डमथिकः।<br>पदवीं धावति पादविकः।<br>अनुपदं धावति आनुपदिकः। | धावति ३८ |
| तत् २८<br>धावति ३७<br>ठक् १ | ३८. आक्रन्दाट्ठञ् च।<br>तद् धावति इत्यर्थे आक्रन्दशब्दात् ठञ् प्रत्ययो भवति, चकारात् ठक् च।<br>स्वरे विशेषः।<br>आक्रन्द्रः = दुःखिनां रोदनस्थानम्। तं धावति आक्रन्दिकः। | |
| तत् २८ ठक् १ | ३९. पदोत्तरपदं गृह्णाति<br>तद् गृह्णाति इत्यर्थे पदोत्तरपदात् प्रातिपदिकात् ठक्प्रत्ययो भवति।<br>पूर्वपदं गृह्णाति पौर्वपदिकः।<br>प्रतिपदं गृह्णाति प्रातिपदिकम्। | गृह्णाति ४० |

| | | |
|---|---|---|
| तत् २८<br>गृह्णाति३६<br>ठक् १ | ४०. प्रतिकण्ठार्थ-ललामं च<br>तद् गृहणाति इत्यर्थे प्रतिकण्ठ, अर्थ, ललाम- इत्येतेभ्यः शब्देभ्यः ठक् प्रत्ययो भवति।<br>कण्ठं कण्ठं प्रति प्रतिकण्ठम्। तद् गृह्णाति प्रातिकण्ठिकः।<br>अर्थं गृह्णाति आर्थिकः।<br>ललामं = चिह्नम्, तद्गृह्णाति लालामिकः। | |
| तत् २८ ठक् १ | ४१. धर्मं चरति<br>तच्चरति इत्यर्थे धर्मशब्दाद् द्वितीयान्तात् ठक् प्रत्ययो भवति।<br>धर्मं चरति धार्मिकः।<br>चरतिरिह आसेवायां वर्तते न त्वनुष्ठानमात्रे। आसेवा हिं स्वारसिकी प्रवृत्तिः। तेन दैववशाद्धर्मे प्रवृत्तो दुर्वत्तः धार्मिक इति नोच्यते। एवं दैववशादधर्मे प्रवृत्तो यः सद्वृत्तः स आधर्मिक इति नोच्यते।<br>(वा०) अधर्माच्चेति वक्तव्यम्।<br>अधर्मं चरति आधर्मिकः।<br>अधर्मशब्दे नञ् विरोधिवाचकः, तेन अधर्मशब्दस्य पापम् इत्यर्थः। | |
| तत् २८ ठक् १ | ४२. प्रतिपथमेति ठंश्च<br>तद् एति = गच्छति, इत्यर्थे प्रतिपथशब्दात् ठन् प्रत्ययो भवति, चकाराट्ठक् च।<br>प्रतिपथमेति प्रतिपथिकः। ठकि तु- प्रातिपथिकः। यः सर्वान् पथ एति स प्रतिपथिकः, प्रातिपथिको वोच्यते।<br>प्रतिपथशब्दे पन्थानं पन्थानं प्रति इति वीप्सायामव्ययीभावः। | |
| तत् २८ ठक् १ | ४३. समवायान् समवैति<br>तत्समवैति इत्यर्थे समवायवाचकेभ्यः शब्देभ्यः ठक् प्रत्ययो भवति।<br>समवायः = समूहः। समवैति = आगत्य तदेकदेशी भवति। तत्र गुणभूतसमागमापेक्षया समवायान् इति द्वितीया निर्देशः।<br>समवायान् समवैति सामवायिकः। समवायं समागत्य तदेकदेशी भवति यः स सामवायिकः।<br>एंवमेव समाजम्= जनसमूहं, समवैति=इति सामाजिकः।<br>समूहं समवैति सामूहिकः। | समवैति ४५ |

| | | |
|---|---|---|
| तत् २८<br>समवैति ४३ | ४४. परिषदो ण्यः<br>तत्समवैति इत्यर्थे परिषद् इतिशंब्दाद् ण्यः प्रत्ययो भवति।<br>परिषदं समवैति पारिषद्यः। | ण्यः ४५ |
| तत् २८<br>समवैति ४३<br>ण्यः ४४ | ४५. सेनाया वा<br>तत्समवैति इत्यर्थे सेनाशब्दात् ण्यः प्रत्ययो वा भवति।<br>पक्षे ठक्।<br>सेनां समवैति सैन्यः। ठकि - सैनिकः। | |
| तत् २८ ठक् १ | ४६. संज्ञायां ललाट- कुक्कुट्यौ पश्यति<br>'तत्पश्यति' इत्यर्थे ललाट, कुक्कुटी- इत्येताभ्यां शब्दाभ्यां ठक् प्रत्ययो भवति, संज्ञायां विषये।<br>ललाटं पश्यति लालाटिकः सेवकः। दूरे स्थित्वा प्रभोर्ललाटं पश्यति, न तु कार्येषूपतिष्ठते, यः सेवकः स लालाटिक उच्यते, कार्याक्षम इत्यर्थः। ''लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः'' इत्यमरः।<br>कुक्कुटीं पश्यति कौक्कुटिको भिक्षुः।<br>कुक्कुटीशब्देन तत्पतनदेशो लक्ष्यते, तद्देशस्याल्पतया यः पादविक्षेपपर्याप्तदेशपर्यन्तमेव चक्षुः संयम्य गच्छति स कौक्कुटिको भिक्षुरुच्यते।<br>अनयोरेवार्थविशेषयोः ग्रहणार्थं सूत्रे संज्ञाग्रहणं, न तु रूढ्यर्थम्। | |
| ठक् १ | ४७. तस्य धर्म्यम्<br>तस्य धर्म्यम् इत्यर्थे षष्ठ्यन्तात् ठक् प्रत्ययो भवति।<br>अनुवृत्त आचारो धर्मः, ततोऽनपेतं धर्म्यम्, न्याय्यमित्यर्थः।<br>शुल्कशालाया धर्म्यं शौल्कशालिकम्। आपणस्य धर्म्यम् आपणिकम्। | तस्य ५०<br>धर्म्यम् ४९ |
| तस्य ४७<br>धर्म्यम् ४७ | ४९. ऋतोऽञ्<br>तस्य धर्म्यम् इत्यर्थे ऋकारान्तात् प्रातिपदिकाद् अञ्प्रत्ययो भवति।<br>पोतुर्धर्म्यं पौत्रम्। उद्गातुर्धर्म्यम् औद्गात्रम्।<br>(वा०) नराच्चेति वक्तव्यम्।<br>नरस्य धर्म्या नारी। 'टिड्ढाणञ्' इति ङीप्। | |
| तस्य ४७ ठक् १ | ५०. अवक्रयः<br>तस्य अवक्रयः इत्यर्थे षष्ठ्यन्तात् ठक् प्रत्ययो भवति।<br>राजग्राह्यं द्रव्यमवक्रय इत्युच्यते।<br>शुल्कशालाया अवक्रयः शौल्कशालिकः। आपणस्य अवक्रयः आपणिकः। | |

| | | |
|---|---|---|
| ठक् १ | ५१. तदस्य पण्यम्<br>'तदस्य पण्यम्' इत्यर्थे प्रथमान्तात् ठक् प्रत्ययो भवति।<br>हट्टे विक्रयाय प्रसारितं द्रव्यं पण्यमित्युच्यते।<br>अपूपाः पण्यमस्य आपूपिकः। मोदकं पण्यमस्य मौदिकिकः। | तदस्य ६५<br>पण्यम् ५४ |
| तदस्य ५१<br>पण्यम् ५१ | ५२. लवणाट्ठञ्<br>तदस्य पण्यम् इत्यर्थे लवणशब्दात् प्रथमान्तात् ठञ् प्रत्ययो भवति।<br>लवणं पण्यमस्य लावणिकः। | |
| तदस्य ५१<br>पण्यम् ५१ | ५३. किसरादिभ्यः ष्ठन्<br>तदस्य पण्यम् इत्यर्थे 'किसर' इत्येवमादिभ्यः शब्देभ्यः प्रथमान्तेभ्यः ष्ठन् प्रत्ययो भवति।<br>किसरादिगणे पठिताः शब्दा गन्धविशेषवचनाः तद्वति वर्तन्ते।<br>किसरं पण्यमस्य किसरिकः। | ष्ठन् ५४ |
| तदस्य ५१<br>ष्ठन् ५३ | ५४. शलालुनोऽन्यतरस्याम्<br>तदस्य पण्यमित्यर्थे शलालुशब्दात् ष्ठन् प्रत्ययो वा भवति।<br>पक्षे ठक्।<br>शलालुशब्दो गन्धविशेषवचनस्तद्वति वर्तते।<br>शलालु पण्यमस्य शलालुकः।<br>ठकि–शालालुकः। | |
| तदस्य ५१ ठक् १ | ५५. शिल्पम्<br>तदस्य शिल्पम् इत्यर्थे प्रथमान्तात् ठक्प्रत्ययो भवति।<br>शिल्पम् = अभ्यासपूर्वं क्रियासु कौशलम्।<br>मृदङ्गः शिल्पमस्य मार्दङ्गिकः।<br>मृदङ्गशब्दस्यात्र लक्षणया मृदङ्गवादनम् इत्यर्थः। | शिल्पम् ५६ |
| तदस्य ५१<br>शिल्पम्५५ | ५६. मड्डुक-झर्झरादणन्यतरस्याम्<br>तदस्य पण्यमित्यर्थे मड्डुक, झर्झर- इत्येताभ्यां शब्दाभ्याम् अण् प्रत्ययोऽन्यतरस्यां भवति।<br>पक्षे ठक्।<br>मड्डुकः शिल्पमस्य माड्डुकः। ठकि- माड्डुकिकः।<br>मड्डुकशब्दस्यात्र लक्षणया मड्डुकवादनमित्यर्थः<br>एवमेव झार्झरः, झार्झरिकः। | |

| | | |
|---|---|---|
| तदस्य ५१ ठक् १ | ५७. प्रहरणम्<br>तदस्य प्रहरणमित्यर्थे प्रथमान्तात् ठक्प्रत्ययो भवति।<br>प्रहरणम् = आयुधम्।<br>असिः प्रहरणमस्य आसिकः। धनुः प्रहरणमस्य धानुष्कः। 'इसुसुक्तान्तात्कः' इत्यनेन ठकः कादेशः। 'इणः षः' इति षः। | प्रहरणम् ५९ |
| तदस्य ५१<br>प्रहरणम्५७<br>ठक् १ | ५८. परश्वधाट्ठञ् च<br>तदस्य प्रहरणमित्यर्थे परश्वधशब्दात् ठक् प्रत्ययो भवति।<br>परश्वधः प्रहरणमस्य पारश्वधिकः। परश्वधः = परशुः। | |
| तदस्य ५१<br>प्रहरणम्५७ | ५९. शक्ति-यष्ट्योरीकक्<br>तदस्य प्रहरणमित्यर्थे शक्तियष्टिशब्दाभ्याम् ईकक् प्रत्ययो भवति।<br>शक्तिः प्रहरणमस्य शाक्तीकः। यष्टिः प्रहरणमस्य याष्टीकः। | |
| तदस्य ५१ ठक् १ | ६०. अस्ति नास्ति दिष्टं मतिः<br>अस्ति, नास्ति, दिष्टम् इति मतिः अस्य इत्यर्थे अस्त्यादिशब्देभ्यः प्रथमान्तेभ्यः ठक् प्रत्ययो भवति।<br>परलोकः अस्ति इति मतिरस्य इति आस्तिकः।<br>परलोको नास्ति इति मतिरस्य इति नास्तिकः।<br>दिष्टम् इति मतिरस्य इति दैष्टिकः। | |
| तदस्य ५१ ठक् १ | ६१. शीलम्<br>तदस्य शीलम् इत्यर्थे प्रथमान्तात् ठक् प्रत्ययो भवति।<br>शीलम् = स्वभावः।<br>अपूपः शीलमस्य आपूपिकः।<br>अपूपशब्दस्यात्र लक्षणया अपूपभक्षणम् इत्यर्थः। | शीलम् ६२ |
| तदस्य ५१<br>शीलम् ६१ | ६२. छत्रादिभ्यो णः<br>तदस्य शीलमित्यर्थे 'छत्र' इत्येवमादिभ्यः शब्देभ्यः प्रथमान्तेभ्यो णः प्रत्ययो भवति।<br>गुरोर्दोषाणामावरणं छत्रम्, तच्छीलमस्य छात्रः। चुरा शीलमस्य चौरः। | |

| | | |
|---|---|---|
| तदस्य ५१ ठक् १ | ६३. कर्माध्ययने वृत्तम्<br>'तदस्य अध्ययनविषयकं कर्म वृत्तम्' इत्यर्थे प्रथमान्तात् ठक् प्रत्ययो भवति।<br>कर्मपदस्यात्रार्थः क्रिया, वृत्तमित्यस्य जातम्, अभूदित्यर्थः।<br>एकमन्यद् वृत्तमस्य अध्ययनविषयकं कर्म इति ऐकान्यिकः।<br>यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकं जातं स ऐकान्यिकः उच्यते।<br>अत्र 'एकमन्यद्' इति विगृह्य 'तद्धितार्थ' इति समासः, ततश्च ठक् प्रत्ययः। 'अध्ययने कर्म वृत्तम्' इत्येतत्सर्वं तद्धितवृत्तावन्तर्भवति। | सम्पूर्णसूत्रम् ६४ |
| तदस्य ५१<br>कर्माध्ययने ६३<br>वृत्तम् ६३ | ६४. बह्वच्पूर्वपदाट्ठच्<br>'तदस्य अध्ययनविषयकं कर्म वृत्तम्' इत्यर्थे बह्वच्पूर्वपदात्प्रातिपदिकात् षष्ठ्यन्तात् ठच् प्रत्ययो भवति।<br>द्वादशान्यानि वृत्तानि अस्य अध्ययनविषयकाणि कर्माणि द्वादशान्यिकः।<br>द्वादश अपपाठा अस्य जाता इत्यर्थः। अत्रापि पूर्ववत् द्वादशान्यशब्दयोः तद्धितार्थेति समासः, ततोऽनेन ठच्। | |
| तदस्य ५१ ठक् १ | ६५. हितं भक्षाः<br>'तदस्मै हितं भक्षाः' इत्यर्थे प्रथमान्तात् ठक् प्रत्ययो भवति।<br>'तदस्य' इत्यनुवृत्तं हितपदानुरोधात् अस्येति पदं चतुर्थ्या विपरिणम्यते।<br>अपूपः हितमस्मै आपूपिकः।<br>अपूपशब्दस्य लक्षणया अपूपभक्षणमित्यर्थः।<br>मोदकं हितमस्मै मोदकिकः।<br>मोदकशब्दस्य लक्षणया मोदकभक्षणमित्यर्थः। | |
| ठक् १ | ६६. तदस्मै दीयते नियुक्तम्<br>तदस्मै नियुक्तम् (नियतरूपेण) दीयते इत्यर्थे प्रथमान्ताद्त् ठक् प्रत्ययो भवति।<br>नियुक्तमित्यस्य नियतमित्यर्थः।<br>अग्रभोजनं नियतं दीयतेऽस्मै आग्रभोजनिकः। अपूपः नियतं दीयतेऽस्मै आपूपिकः। | सम्पूर्णसूत्रम् ६८ |

| | | |
|---|---|---|
| तदस्मै ६६<br>दीयते ६६<br>नियुक्तम् ६६ | ६७. श्राणा-मांसौदनाट्टिठन्<br>तदस्मै नियुक्तम् (नियतरूपेण) दीयते इत्यर्थे श्राणा शब्दाद्, मांसौदनशब्दाच्च टिठन् प्रत्ययो भवति। इकार उच्चारणार्थः, टकारो ङीबर्थः।<br>श्राणा = यवागूः नियुक्तं = नियतरुपेण दीयतेऽस्मै श्राणिकः, स्त्रियां श्राणिकी।<br>मांसौदनग्रहणं संघातार्थं विगृहीतार्थं च। मांसमिश्र ओदनः मांसौदनः, स नियुक्तं दीयतेऽस्मै मांसौदनिकः। मांसं नियुक्तं दीयतेऽस्मै मांसिकः। ओदनो नियुक्तं दीयतेऽस्मै औदनिकः। | |
| तदस्मै ६६<br>दीयते ६६<br>नियुक्तम् ६६ | ६८. भक्तादणन्यतरस्याम्<br>तदस्मै नियुक्तम् (नियतरूपेण) दीयते इत्यर्थे भक्तशब्दादण्प्रत्ययो वा भवति। पक्षे ठक्। भक्तमस्मै नियुक्तं दीयते भाक्तः। ठकि भाक्तिकः। | |
| ठक् १ | ६९. तत्र नियुक्तः<br>तत्र नियुक्त इत्यर्थे सप्तम्यन्तात् ठक् प्रत्ययो भवति। नियुक्तः इत्यस्य अधिकृतैः, व्यापारित इति वार्थः।<br>शुल्कशालायां नियुक्तः शौल्कशालिकः। आपणे नियुक्तः आपणिकः। द्वारे नियुक्तो दौवारिकः। द्वारादीनां च (७.३.४) इति सूत्रेण ऐजागमः। | तत्र ७४<br>नियुक्तः ७० |
| तत्र ६९<br>नियुक्तः ६९ | ७०. अगारान्ताट्ठन्<br>तत्र नियुक्तः इत्यर्थे अगारशब्दान्तात् प्रातिपदिकात् ठन् प्रत्ययो भवति।<br>देवागारे नियुक्तः देवागारिकः। भाण्डागारे नियुक्तः भाण्डागारिकः। | |
| तत्र ६९ ठक् १ | ७१. अध्यायिन्यदेशकालात्<br>सप्तम्यन्ताद् अदेशवाचिनः, अकालवाचिनश्च प्रातिपदिकात् ठक् प्रत्ययो भवति, अध्यायिनि वाच्ये। अध्येतुं शीलमस्येत्यध्यायी, अध्येता इत्यर्थः, ताच्छीलिके णिनिः।<br>अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते, तत इदं प्रत्ययविधानम्।<br>अदेशवाचिनः- श्मशानेऽधीते श्माशानिकः। चतुष्पथेऽधीते चातुष्पथिकः।<br>अकालवाचिनः- चतुर्दश्यामधीते चातुर्दशिकः। अमावास्यायामधीते आमावास्यिकः।<br>अदेशकालादिति किम्? स्रुघ्नेऽधीते। पूर्वाह्णेऽधीते। | |

| | | |
|---|---|---|
| तत्र ६६ ठक् १ | **७२. कठिनान्त-प्रस्तार-संस्थानेषु व्यवहरति**<br>तत्र व्यवहरति इत्यर्थे कठिनान्तात् प्रातिपदिकात्. प्रस्तार, संस्थान-इत्येतच्छब्दाभ्यां च ठक् प्रत्ययो भवति।<br>व्यवहारः = क्रियातत्त्वम्, यत्र देशे या क्रिया यथा अनुष्ठेया तस्याः क्रियायास्तथानुष्ठानमित्यर्थः।<br>वंशकठिनो नाम देशः, तत्र तद्देशस्थव्यवहारानुसारेण व्यवहरति इति वांशकठिनिकश्चक्रचरः।<br>प्रस्तार-संस्थानशब्दौ अवयवसन्निवेशपर्यायौ।<br>प्रस्तारे व्यवहरति अवयवसंन्निवेशानुसारेण तत्र क्रियां निष्पादयति इति प्रास्तारिकः।<br>एवमेव संस्थाने व्यवहरति इति सांस्थानिकः। | |
| तत्र ६६ ठक् १ | **७३. निकटे वसति**<br>तत्र वसति इत्यर्थे निकटशब्दात् ठक् प्रत्ययो भवति।<br>निकटे वसति नैकटिको भिक्षुः।<br>'भिक्षुणा ग्रामात्क्रोशे वस्तव्यम्' इतिशास्त्रं, तदनादृत्य निकटे वसति। अत्रैवायं साधुः।' इति लघुशब्देन्दुशेखरे नागेशः। | वसति ७४ |
| तत्र ६६<br>वसति ७३ | **७४. आवसथात् ष्ठल्**<br>तत्र वसति इत्यर्थे आवसथशब्दात् ष्ठल्प्रत्ययो भवति।<br>आवसथम् = गृहम्, तत्र वसति आवसथिकः। स्त्रियां षित्त्वाङीष् आवसथिकी। | |
| | **७५. प्रग्घिताद्यत्**<br>'तस्मै हितम्' (५.१.५) इत्यतः प्राक् यत्प्रत्ययोऽधिकृतः।<br>यथा 'तद् वहति रथ-युग-प्रासङ्गम्' (४.४.७६) इति सूत्रेण रथं वहतीत्यर्थे 'रथ्यः' इत्यत्र यत्प्रत्ययो भवति, यत्प्रत्ययस्य तत्राधिकारात्। | तस्मै हितम्र<br>५.१.५<br>यत् १४४ |
| यत् ७५ | **७६. तद्वहति-रथ-युग-प्रासङ्गम्**<br>'तद् वहति' इत्यर्थे रथ, युग, प्रासङ्ग- इत्येतेभ्यः शब्देभ्यो द्वितीयान्तेभ्यो यत्प्रत्ययो भवति। रथं वहति रथ्यः। युगम् = रथादिवहनकाले अश्वादिस्कन्धे आसज्यमानं काष्ठम्, तद्वहति युग्यः।<br>प्रासङ्गः - वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते स प्रासङ्गः, तं वहति प्रासङ्ग्यः। | तत् ८६ वहति ८२ |
| तद्वहति ७६ | **७७. धुरो यड्ढकौ**<br>'तद् वहति' इत्यर्थे धुर् इति शब्दाद् द्वितीयान्ताद् यत्, ढक्- इत्येतौ प्रत्ययौ भवतः।<br>धुरं वहति धुर्यः, धौरेयः। | |

| | | |
|---|---|---|
| तद्वहति ७६ | **७८. खः सर्वधुरात्**<br>'तद् वहति' इत्यर्थे सर्वधुरा इति शब्दाद् द्वितीयान्तात् खः प्रत्ययो भवति।<br>सर्वा चासौ धूः सर्वधुरा, तां वहति सर्वधुरीणः।<br>सूत्रे 'सर्वधुरायाः' इति स्त्रीलिङ्गनिर्देशस्य न्याय्यत्वेऽपि 'सर्वधुरा' शब्दे यत्प्रातिपदिकस्वरूपं सर्वधुर इति तदपेक्षया 'सर्वधुरात्' इति निर्देशः कृतः सूत्रकारेण। एवमेव 'एकधराल्लुक्' च इत्यग्रिमे सूत्रेऽपि। सर्वधुरा, एकधुरा इति टाबन्तयोः न प्रातिपदिकत्वमपि तु 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया प्रातिपदिकसंज्ञाप्रयुक्तकार्याय तयोः प्रातिपदिकग्रहणेन ग्रहणं भवति।<br>खः इति योग विभागात् – उत्तरधुरीणः। दक्षिणधुरीणः इत्यत्रापि खः। | खः ७६ |
| तद्वहति ७६<br>खः ७८ | **७९. एकधुराल्लुक् च**<br>'तद् वहति' इत्यर्थे 'एकधुरा' शब्दाद् द्वितीयान्ताद् खः प्रत्ययो भवति। तस्य खप्रत्ययस्य लुगपि भवति।<br>वचनसामर्थ्यात् पक्षे लुग्भवतीत्यर्थो लभ्यते।<br>एकाधुरां वहति एकधुरीणः, एकधुरः। | |
| तद्वहति ७६ | **८०. शकटादण्**<br>'तद् वहति' इत्यर्थे शकटादण् प्रत्ययो भवति।<br>शकटं वहति शाकटो गौः। | |
| तद्वहति ७६ | **८१. हलसीराट्ठक्**<br>'तद् वहति' इत्यर्थे हल-सीरशब्दाभ्यां ठक् प्रत्ययो भवति।<br>हलं वहति हालिकः। सीरं वहति सैरिकः। | |
| तद्वहति ७६<br>यत् ७५ | **८२. संज्ञायां जन्याः**<br>'तद् वहति' इत्यर्थे जनीशब्दाद् द्वितीयान्ताद् यत्प्रत्ययो भवति, प्रकृतिप्रत्ययसमुदायेन चेत्संज्ञा गम्यते।<br>जनी = वधूः, तां वहति = प्रापयति या सा जन्या। वध्वाः सा सखी जन्या इत्युच्यते या विवाहादिषु तां जामातृसमीपं प्रापयति । | |
| तत् ७६ यत् ७५ | **८३. विध्यत्यधनुषा**<br>'तद् विध्यति' इत्यर्थे द्वितीयान्तात् यत्प्रत्ययो भवति, न चेद् धनुष्करणं भवति।<br>पादौ विध्यन्ति पद्याः शर्कराः।<br>शर्कराः = पाषाणस्य क्षुद्रखण्डाः।<br>अधनुषेति किम्? पादौ विध्यति धनुषा। | |

| | | |
|---|---|---|
| तत् ७६ यत् ७५ | ८४. धनगणं लब्धा<br>तद् 'लब्धा' इत्यर्थे धनशब्दात्, गणशब्दाच्च द्वितीयान्ताद् यत्प्रत्ययो भवति।<br>'लब्धा' इति तृन्नन्तं, तेन धनगणम् इत्यत्र द्वितीया, 'न लोकाव्यय' इति षष्ठ्याः निषेधात्।<br>धनं लब्धा धन्यो बालकः। गणं लब्धा गण्यो मृगः। | लब्धा ८५ |
| तत् ७६<br>लब्धा ८४ | ८५. अन्नाण्णः<br>'तद् लब्धा' इत्यर्थे अन्नशब्दाद् द्वितीयान्ताद् णः प्रत्ययो भवति। अन्नं लब्धा आन्नः। | |
| तत् ७६ यत् ७५ | ८६. वशङ्गतः<br>तद् गत इत्यर्थे वशशब्दाद् द्वितीयान्ताद् यत्प्रत्ययो भवति।<br>वशम् = अधीनत्वं गतः= प्राप्तः इति वश्यः।<br>(अमरकोषस्य रामाश्रमी व्याख्या)<br>'वश्यः सर्वो जनः स्त्रीणाम्' इत्युदाहरणं भाषावृत्तौ। | |
| यत् ७५ | ८७. पदमस्मिन् दृश्यम्<br>'पदं दृश्यमस्मिन्' इत्यर्थे पदम् इतिप्रथमान्ताद् यत्प्रत्ययो भवति।<br>पदं दृश्यमस्मिन् पद्यः कर्दमः।<br>तादृशः कर्दमः यस्मिन् पादचिह्नं द्रष्टुं शक्यते, स कर्दमो नातिद्रवो नातिशुष्को भवति इति पद्यः इति प्रयोगेण कर्दमावस्थायाः ज्ञानं भवति।<br>एवमेव पद्याः पांसवः। | |
| यत् ७५ | ८८. मूलमस्याबर्हि<br>मूलम् आबर्हि = उत्पाटनयोग्यम्, अस्येत्यर्थे मूलशब्दात् प्रथमान्ताद् यत्प्रत्ययो भवति।<br>मूलम् आबर्हि एषामिति मूल्याः माषाः।<br>एवमेव मूल्या मुद्गाः। | |
| | ८९. संज्ञायां धेनुष्या<br>धेनुष्या इति निपात्यते संज्ञायां विषये।<br>धेनोः षुगागमो, यश्च प्रत्ययो निपात्यते।<br>या धेनुरुत्तमर्णाय ऋणप्रदानाद् दोहार्थं दीयते सा धेनुष्या। | संज्ञायाम् ९८ |
| संज्ञायाम् ८९ | ९०. गृहपतिना संयुक्ते ञ्यः<br>गृहपतिना संयुक्ते इत्यर्थे गृहपतिशब्दात्तृतीयान्ताद् ञ्यः प्रत्ययो भवति।<br>संयुक्तः=सम्बद्धः।<br>गृहपतिना संयुक्तो गार्हपत्योऽग्निः।<br>संज्ञाधिकाराद् गृहपतिना संयुक्तोऽग्निविशेष एव गार्हपत्यः कथ्यते न तु गृहपतिना संयुक्तोऽन्योऽपि पदार्थः। | |

| | | |
|---|---|---|
| यत् ७५<br>संज्ञायाम् ८९ | ९१. नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्यस्तार्य-तुल्य-प्राप्य-वध्यानाम्य-सम-समित-संमितेषु<br>नौ, वयस्, धर्म, विष, मूल, मूल, सीता, तुला- इत्यतेभ्योऽष्टभ्यः यथासंख्यं तार्ये, तुल्ये, प्राप्ये, वध्ये, आनाम्ये, समे, समिते, सम्मिते चार्थे यत्प्रत्ययो भवति, संज्ञायां विषये।<br>नौ- नावा तार्यं नाव्यं जलम्। नाव्या नदी।<br>वयः - वयसा तुल्यैः वयस्यः सखा।<br>संज्ञाधिकरोऽभिधेयनियमार्थस्तेन वयसा तुल्ये शत्रौ अर्थे यत्प्रत्ययो वयस्शब्दान्न भवति।<br>धर्म - धर्मेण प्राप्यो धर्म्यो भोगः।<br>विष- विषेण वध्यो विष्यः शत्रुः। विषेण वधमर्हतीत्यर्थः।<br>मूल - मूलेन आनाम्यं मूल्यम्। वस्त्रादिनिर्माणाय वाणिग्भिर्विनियुक्तं द्रव्यं मूलम्। तन्मूलद्रव्येण सह यदधिकं द्रव्यम् आनम्यते=विक्रेत्रा सम्मतीकरणेन लभ्यते तन्मूल्यमित्यर्थः। लोकास्तु विक्रेत्रा लब्धं सर्वं द्रव्यं मूल्यमिति व्यवहरन्ति, तत्र लक्षणा बोध्या। या च सम्प्रति निरूढा वा।<br>द्वितीयमूलशब्दः - मूलेन समो मूल्यः पटो जातः।<br>सीता - सीतया संमितं सीत्यं क्षेत्रम्<br>कृष्टक्षेत्रसमीकरणार्थः काष्ठविशेषः सीता। तया समितं = सङ्गतम्, निम्नोन्नतादिरहितं कृतमित्यर्थः, समीकृतमिति यावत्।<br>तुला - तुलया संमितं= परिच्छिन्नम् तुल्यम्, सदृशमित्यर्थः। संज्ञाधिकारात् तुल्यमित्यस्य सदृशमित्यर्थः न तु तुलया परिच्छिन्नमित्यर्थः। | |
| यत् ७५<br>संज्ञायाम्८९ | ९२. धर्म-पथ्यर्थ-न्यायादनपेते<br>धर्म, पथिन्, अर्थ, न्याय- इत्येतेभ्योऽनपेतमित्यर्थे यत्प्रत्ययो भवति, संज्ञायां विषये।<br>अनपेतमित्यस्य अविचलितमित्यर्थः।<br>धर्मादनपेतो धर्म्यो नृपः।<br>पथः अनपेतम् पथ्यम्।<br>अर्थादनपेतम् अर्थ्यम्।<br>न्यायानपेतम् न्याय्यम्। | |

| | | |
|---|---|---|
| यत् ७५<br>संज्ञायाम् ८९ | ९३. छन्दसो निर्मिते<br>प्रत्ययार्थसामर्थ्यलभ्याऽत्र समर्थविभक्तिः।<br>छन्दःशब्दात् तृतीयान्ताद् 'निर्मिते' इत्यर्थे यत्प्रत्ययो भवति संज्ञायां विषये।<br>छन्दसा = इच्छया निर्मितम् छन्दस्यम्।<br>संज्ञाधिकाराद् इष्टपर्यायश्छन्दः शब्दो गृह्यते न वेदवचनः, नापि त्रिष्टुबादिवचनः। | निर्मिते ९४ |
| यत् ७५<br>निर्मिते ९३<br>संज्ञायाम् ८९ | ९४. उरसोऽण् च<br>'उरसा निर्मितम्' इत्यर्थे उरःशब्दात् तृतीयान्ताद् अण् प्रत्ययो भवति, चकाराद् यत्प्रत्ययश्च।<br>उरसा निर्मित औरसः, उरस्यो वा पुत्रः।<br>संज्ञाधिकारादन्यस्मिन्नर्थे अण्प्रत्ययः, यत्प्रत्ययो वाऽनेन न भवति।<br>यथा – उरसा निर्मितं सुखमित्यत्र। | |
| यत् ७५<br>संज्ञायाम् ८९ | ९५. हृदयस्य प्रियः<br>'हृदयस्य प्रियः' इत्यर्थे हृदयशब्दात्षष्ठयन्ताद् यत्प्रत्ययो भवति, संज्ञायां विषये।<br>हृदयस्य प्रियो हृद्यो देशः।<br>हृद्यं वनम्। हृदयम् = अन्तः करणम्, प्रियं =प्रीतिकंरणम्। 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः।<br>संज्ञाधिकारादत्र न भवति – हृदयस्य प्रियः पुत्र इति। | हृदयस्य ९६ |
| हृदयस्य ९५<br>यत् ७५ | ९६. बन्धने चर्षौ<br>हृदयस्य बन्धनम् इत्यर्थे हृदयशब्दात् षष्ठयन्ताद्यत्प्रत्ययो भवति, वेदेऽभिधेये।<br>बध्यते येन तद्बन्धनम्। ऋषिशब्देनात्र वेदो गृह्यते।<br>हृदयस्य बन्धनमृषिः हृद्यः। परहृदयस्य येन बध्यते = वशीक्रियते स वशीकरणमन्त्रः हृद्य इत्युच्यते। | |
| यत् ७५ | ९७. मत-जन-हलात् करण-जल्पकर्षेषु<br>मत, जन, हल- इत्येतेभ्यः षष्ठयन्तेभ्यः यथासंख्यं करणे, जल्पे, कर्षे चार्थे यत्प्रत्ययो भवति।<br>प्रत्ययार्थसामर्थ्याल्लब्धा षष्ठी समर्थविभक्तिः।<br>मतम् = ज्ञानम्, तस्य करणं = भावः, साधनं वा मत्यम्। ज्ञानस्य जननक्रिया, जननसाधनं वेत्यर्थः। जनस्य जल्पो जन्यः।<br>हलस्य कर्षः भावः, साधनं वा हल्यम्। हलस्य कर्षणम् हलस्य कर्षणसाधनं वेत्यर्थः। | |

| | | |
|---|---|---|
| यत् ७५<br>संज्ञायाम् ८६ | ९८. तत्र साधुः<br>तत्र साधुः इत्यर्थे सप्तम्यन्ताद् यत्प्रत्ययो भवति।<br>सामसु साधुः सामन्यः। कर्मणि साधुः कर्मण्यः। शरणे साधुः शरण्यः। | तत्र ११६<br>साधुः १०६ |
| तत्र ९८<br>साधुः ९८ | ९९. प्रतिजनादिभ्यः खञ्<br>'तत्र साधुः' इत्यर्थे प्रतिजन इत्येवमादिभ्यः शब्देभ्यः सप्तम्यन्तेभ्यः खञ् प्रत्ययो भवति।<br>साधुः = प्रवीणो, योग्यो वा।<br>प्रतिजने साधुः प्रातिजनीनः। इदंयुगे साधुः ऐदंयुगीनः। परयुगे साधुः पारयुगीणः। | |
| तत्र ९८<br>साधुः ९८ | १००. भक्ताण्णः<br>तत्र साधुरित्यर्थे भक्ताण्णः प्रत्ययो भवति।<br>भक्ते साधुः भाक्तः शालिः। भाक्तास्तण्डुलाः। | |
| तत्र ९८<br>साधुः ९८ | १०१. परिषदो ण्यः<br>'तत्र साधुः' इत्यर्थे परिषद् इतिशब्दाण्ण्यः प्रत्ययो भवति।<br>परिषदि साधुः पारिषद्यः।<br>णप्रत्ययोऽप्यत्रेष्यते। तदर्थं योगविभागः क्रियते। 'परिषदः' णो भवति। परिषदि साधुः पारिषदः, ततः 'ण्यः' परिषदि भवः पारिषद्यः। | |
| तत्र ९८<br>साधुः ९८ | १०२. कथादिभ्यष्ठक्<br>'तत्र साधुः' इत्यर्थे 'कथा' इत्येवमादिभ्यः शब्देभ्यः ठक् प्रत्ययो भवति।<br>कथायां साधुः काथिकः।<br>वृत्तौ साधु वार्त्तिकम्। | |
| तत्र ९८<br>साधुः ९८ | १०३. गुडादिभ्यष्ठञ्<br>'तत्र साधुः' इत्यर्थे 'गुड' इत्येवमादिभ्यः ठञ् प्रत्ययो भवति।<br>गुडे साधुः गौडिकः इक्षुः।<br>सक्तौ साधुः साक्तवः यवः। | |
| तत्र ९८<br>साधुः ९८ | १०४. पथ्यतिथि-वसति-स्वपतेर्ढञ्<br>तत्र साधुः इत्यर्थे पथिन्, अतिथि, वसति, स्वपति इत्येतेभ्यो ढञ्प्रत्ययो भवति।<br>पथि साधु पाथेयम्। अतिथौ साधु आतिथेयम्। वसनम् = वसतिः, तत्र साधुः वासतेयी रात्रिः। स्वपतौ साधु स्वापतेयम्। | |

| | | |
|---|---|---|
| तत्र ९८<br>साधुः ९८ | १०५. सभाया यः<br>'तत्र साधुः' इत्यर्थे सभाशब्दात् सप्तम्यन्ताद् यः प्रत्ययो भवति।<br>सभायां साधुः सभ्यः। | सभायाः १०६ |
| सभायाः १०५<br>तत्र९८<br>साधुः ९८ | १०६. ढश्छन्दसि<br>'तत्र साधुः' इत्यर्थे सभाशब्दात् ढः प्रत्ययो भवति, छन्दसि।<br>सभेयोऽस्य युवा यजमानस्य वीरो जायताम्। | |
| तत्र ९८ यत् ७५ | १०७. समानतीर्थे वासी<br>'तत्र वासी' इत्यर्थे समानतीर्थशब्दाद् यत्प्रत्ययो भवति।<br>वसतीति वासी।<br>समाने तीर्थे वासीति सतीर्थ्यः।<br>समानोपाध्याय इत्यर्थः। तीर्थशब्देनेह गुरुरुच्यते न तु प्रयागादितीर्थम्। | |
| तत्र ९८ यत् ७५ | १०८. समानोदरे शयित ओ चोदात्तः<br>'तत्र शयित' इत्यर्थे समानोदरशब्दाद् यत्प्रत्ययो भवति, ओकारश्चोदात्तः।<br>शयितः इत्यस्य स्थितः इत्यर्थः।<br>समानोदरे शयितः = स्थितः इति समानोदर्यः भ्राता। | शयितः १०९ |
| तत्र ९८<br>शयितः १०८ | १०९. सोदराद्यः<br>'तत्र शयित' इत्यर्थे सोदरशब्दाद् यः प्रत्ययो भवति।<br>समानोदरे शयितः इति सोदर्यः भ्राता।<br>'विभाषोदरे' इति सूत्रेण यकारादौ प्रत्यये विवक्षिते प्रागेव समानस्य सभावः। | |
| तत्र ९८ यत् ७५ | ११०. भवे च छन्दसि<br>तत्र भवः इत्यर्थे सप्तम्यन्ताद् यत् प्रत्ययो भवति, छन्दसि।<br>नमो मेघ्याय च विद्युत्याय च नमः। | भवे ११८<br>छन्दसि १४४ |
| तत्र ९८ भवे ११०<br>छन्दसि ११० | १११. पाथो-नदीभ्यां ड्यण्<br>'तत्र भवः' इत्यर्थे पाथःशब्दाद्, नदीशब्दाच्च ड्यण्प्रत्ययो भवति, छन्दसि।<br>पाथः = अन्तरिक्षम्। पाथसि भवः पाथ्यो वृषा। नाद्यो गिरो मे। | |
| तत्र ९८ भवे ११०<br>छन्दसि ११० | ११२. वेशन्त-हिमवद्भ्यामण्<br>'तत्र भव' इत्यर्थे वेशन्त-हिमवद्भ्यामण् प्रत्ययो भवति, छन्दसि।<br>वेशन्तः = पल्लवम्।<br>वैशन्तीभ्यः स्वाहा। हैमवतीभ्यः स्वाहा। | |

| | | |
|---|---|---|
| तत्र ९८ भवे ११० छन्दसि ११० | ११३. स्रोतसो विभाषा ड्यड्ड्यौ<br>'तत्र भव' इत्यर्थे स्रोतस् इति शब्दाद् ड्यत्, ड्य इत्येतौ प्रत्ययौ विभाषा भवतः छन्दसि। पक्षे यत् प्रत्ययोऽपि।<br>स्रोतसि भवः स्रोत्यः, स्रोतस्यः।<br>ड्यड्ड्ययोः स्वरे विशेषः। | |
| तत्र ९८ भवे ११० छन्दसि ११० | ११४.सगर्भ-सयूथ-सनुताद्यन्<br>'तत्र भव' इत्यर्थे सगर्भ-सयूथ-सनुताद्यन् प्रत्ययो भवति छन्दसि।<br>अनुभ्राता सगर्भ्यः। अनु सखा सयूथ्यः। योनः सनुत्यः।<br>सर्वत्र 'समानस्य छन्दसि०' इति सभावः। | |
| तत्र ९८ भवे ११० छन्दसि ११० | ११५. तुग्राद् घन्<br>तत्र भव इत्यर्थे तुग्राद् घन् प्रत्ययो भवति छन्दसि।<br>त्वमग्ने वृषभस्तुग्रियाणाम्।<br>अन्नाकाशयज्ञवरिष्ठेषु तुग्रशब्दः। | घन् ११७ |
| तत्र ९८ भवे ११० छन्दसि ११० | ११६. अग्राद्यत्<br>तत्र भवः इत्यर्थे अग्राद्यत् प्रत्ययो भवति छन्दसि।<br>अग्रे भवमग्रचम्। | अग्रात् ११७ |
| तत्र ९८ भवे ११० छन्दसि ११० घन् ११५ | ११७. घच्छौ च<br>तत्र भव इत्यर्थे अग्रशब्दाद् घप्रत्ययः, छः प्रत्ययः, चकाराद् घन् प्रत्ययश्चापि भवति छन्दसि।<br>अग्रे भवम् अग्र्यम्, अग्रियम्, अग्रीयम्।<br>घघनोः स्वरे विशेषः। | |
| तत्र ९८ भवे ११० छन्दसि ११० | ११८. समुद्राभ्राद् घः<br>'तत्र भवः' इत्यर्थे समुद्रशब्दाद्, अभ्रशब्दाच्च घः प्रत्ययो भवति, छन्दसि।<br>समुद्रियाणां नदीनाम्। अभ्रियस्येव घोषाः। | |
| तत्र ९८ यत् ७५ छन्दसि ११० | ११९. बर्हिषि दत्तम्<br>'तत्र दत्तम्' इत्यर्थे 'बर्हिष्' इतिशब्दाद् यत्प्रत्ययो भवति, छन्दसि।<br>बर्हिष्येषु निधिषु प्रियेषु। | |
| यत् ७५ छन्दसि ११० | १२०. दूतस्य भागकर्मणी<br>दूतस्य भागे, कर्मणि चाभिधेये दूतशब्दाद् यत्प्रत्ययो भवति, छन्दसि।<br>भागः = अंशः। कर्म = क्रिया।<br>यदग्ने यासि दूत्यम्। दूतस्यांशः, दूतस्य कर्म वा। | |

| | | |
|---|---|---|
| यत् ७५ छन्दसि ११० | १२१. रक्षोयातूनां हननी<br>रक्षसां, यातूनां च हननी इत्यर्थे रक्षःशब्दाद्, यातुशब्दाच्च यत्प्रत्ययो भवति छन्दसि।<br>हन्यतेऽनया हननी।<br>या ते अग्ने रक्षस्या तनूः। यातव्या। | |
| यत् ७५ छन्दसि ११० | १२२. रेवती-जगती-हविष्याभ्यः प्रशस्ये<br>रेवत्यादिकर्मकप्रशंसनेऽर्थे रेवती, जगती, हविष्या इत्येतेभ्यः षष्ठ्यन्तेभ्यो यत्प्रत्ययो भवति, छन्दसि।<br>'प्रशस्ये' इत्यत्र 'शंसु स्तुतौ' इत्यस्मात् कृत्यल्युटो बहुलम्' इति बहुलग्रहणाद् भावे क्यप् इति कृत्यप्रत्ययः। तद्योगे कर्मणि षष्ठी भवति। अतः सूत्रस्योक्तार्थः सम्पद्यते।<br>यद्वो रेवती रेवत्यम्। यद्वो जगती जगत्यम्। यद्वो हविष्या हविष्यम्।<br>हविष्यम् इत्यत्र 'यस्येति च' इति लोपे कृते 'हलां यमां यमि' इति लोपः। | |
| यत् ७५ छन्दसि ११० | १२३. असुरस्य स्वम्<br>'असुरस्य स्वम्' इत्यर्थे असुरशब्दाद् यत्प्रत्ययो भवति, छन्दसि।<br>असुर्यं वा एतत्पात्रम्, यत् कुलालकृतं चक्रवृत्तम्। | असुरस्य १२४ |
| असुरस्य १२३ छन्दसि ११० | १२४. मायायामण्<br>'असुरस्य स्वम्' इत्यर्थे असुरशब्दादण् प्रत्ययो भवति, मायायाम् अभिधेयायाम्, छन्दसि।<br>आसुरी माया स्वधया कृतासि। असदर्थप्रकाशनशक्तिः माया। | |
| यत् ७५ छन्दसि ११० | १२५. तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः<br>'तद्वान् आसाम्' इत्यर्थे मत्वन्तप्रकृतिकात् प्रथमान्ताद् उपधानकरणीभूतमन्त्रार्थकाद् यत्प्रत्ययो भवति, इष्टकायामभिधेयायां, मतोः लुक् च भवति छन्दसि।<br>उपधीयते येन स उपधानः, चयनवचन इत्यर्थः। चयनमित्यस्य रचनमित्यर्थः।<br>वर्चः शब्दो यस्मिन् मन्त्रे स वर्चस्वान् उपधानमन्त्रः। वर्चस्वान् उपधानो मन्त्रः आसामिष्टकानां वर्चस्याः।<br>एवमेव- पयस्वान् उपधानो मन्त्र आसामिष्टकानां पयस्याः।<br>सूत्रे इतिकरणो नियमार्थः। अनेकपदसम्भवेऽपि केनचिदेव पदेन तद्वान् मन्त्रो गृह्यते, न सर्वेण। | सम्पूर्णसूत्रम् १२७ |

| | | |
|---|---|---|
| तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् मतौः १२५ छन्दसि ११० | **१२६. अश्विमानण्**<br>'तद्वानामासाम्' इत्यर्थे 'अश्विमान्' इति शब्दात् अण् प्रत्ययो भवति, इष्टकायामभिधेयायाम्, मतोः लुक् च भवति छन्दसि।<br>अश्विनीरुपदधाति।<br>अश्विन् इति शब्दोऽस्ति यस्मिन् उपधानमन्त्रे स अश्विमान्, अश्विमान् उपधानो मन्त्र आसामिति विग्रहे अण् प्रत्ययः, 'इनण्यनपत्ये' इति प्रकृतिभावः, अणन्तत्वान्ङीप्। | |
| तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् मतौः १२५ छन्दसि११० | **१२७. वयस्यासु मूर्ध्नो मतुप्**<br>'तद्वान् आसाम्' इत्यर्थे मतुप्प्रत्ययान्ताद् मूर्धन्वत् इति शब्दात् मतुप् प्रत्ययो भवति प्रथमस्य मतोर्लक् च भवति या इष्टकास्ताश्चेद् वयस्याः भवेयुः छन्दसि।<br>मूर्द्धन्वतीर्भवन्ति। याः वयस्याः ता एव मूर्द्धन्वत्यः।<br>'तद्वानासाम्' इति सर्वं सूत्रमनुवर्ततेऽत्र। ततः अनुवृत्तं 'मतोः' इति पदमावर्त्त्य पञ्चम्यन्ततया विपरिणम्यते, तस्य च मूर्ध्नः इत्यनेन सम्बन्धः। वयस्वान् उपधानो मन्त्र यासां ताः वयस्याः, तासु वयस्यासु। एवं हि सूत्रस्योक्तार्थः सम्पद्यते।<br>यस्मिन् मन्त्रे वयःशब्दो, मूर्द्धन्शब्दश्च विद्यते, स वयस्वानपि भवति, मूर्द्धन्वानपि, यथा- 'मूर्द्धावयः प्रजापतिच्छन्दः' इति मन्त्रः। तत्र वयस्वच्छब्दादिव मूर्धन्वच्छब्दादपि यति प्राप्ते मूर्द्धन्वत् इति शब्दाद् मतुप् प्रत्ययो विधीयते अनेन।<br>वयस्यास्विति किम्? यत्र मूर्द्धन्शब्द एव केवलो न वयःशब्दः तत्र मा भूत्।<br>सूत्रे मूर्द्धन्वतः इति वक्तव्ये 'मूर्ध्नः' इत्युक्तम्, मतुपो लुकं भाविनं चित्ते कृत्वा। | |

| | | |
|---|---|---|
| छन्दसि ११० <br> यत् ७५ | १२८. मत्वर्थे मासतन्वोः <br> छन्दसि मत्वर्थे यत्प्रत्ययो भवति, मासेऽभिधेये, तन्वां चाऽभिधेयायाम्। <br> मत्वर्थीयानामपवादः। <br> नभोऽभ्रम्। नभांसि विद्यन्ते यस्मिन् मासे नभस्यो मासः। <br> ओजोऽस्यां विद्यते ओजस्या तनूः। <br> (वा०) लुगकारेकाररेफाश्च। <br> छन्दसि मत्वर्थे मत्वर्थीयप्रत्ययस्य लुक्, अकारप्रत्ययः, इकारप्रत्ययः, रेफप्रत्ययश्च भवतीति वार्तिकार्थः। <br> लुक् - मधुः। तपः। नभः। <br> अन्त्ययोः क्लीबत्वमार्षम्। <br> अकारः - इषः। ऊर्जः। इट्= अन्नम्, ऊर्जः=बलम्, तद्वानित्यर्थः। <br> इकारः - शुचिर्मासः। शुच् इतिशब्दाद् इप्रत्ययः। <br> रेफः - शुक्रः। शुच् इतिशब्दाद् रप्रत्ययः। | मत्वर्थे१३२ <br> मासतन्वोः <br> १२९ |
| मत्वर्थे १२८ <br> यत् ७५ <br> मासतन्वोः १२८ <br> छन्दसि ११० | १२९. मधोर्ञ च <br> छन्दसि मधुशब्दान्ञः प्रत्ययो भवति, मासेऽभिधेये, तन्वां चाभिधेयायाम्, चकारायच्च। <br> पूर्वसूत्रोक्तोपसंख्यानाल्लुगपि। <br> माधवः, मधव्यः, मधुः मासः। माधवा, मधव्या, मधुः तनूः। | |
| मत्वर्थे १२८ <br> यत् ७५ <br> छन्दसि ११० | १३०. ओजसोऽहनि यत्खौ <br> छन्दसि मत्वर्थे ओजस्शब्दाद्यत्खौ प्रत्ययौ भवतोऽहन्यभिधेये। <br> ओजस्यमहः। ओजसीनमहः। | |
| मत्वर्थे १२८ <br> यत् ७५ <br> छन्दसि ११० | १३१. वेशो-यशआदेर्भगाद्यल् <br> छन्दसि मत्वर्थे वेशो-यशसी आदौ यस्य प्रातिपदिकस्य तस्माद् भगान्तात् प्रातिपदिकाद् यल् प्रत्ययो भवति। <br> वेशोभगो विद्यते यस्य स वेशोभग्यः। <br> यशोभगो विद्यते यस्य स यशोभग्यः। | सम्पूर्णसूत्रम् <br> १३२ |
| मत्वर्थे १२८ <br> यत् ७५ <br> छन्दसि ११० <br> वेशोयश-आदेर्भगात् १३१ | १३२. ख च <br> छन्दसि मत्वर्थे वेशोयश आदेर्भगान्तात् प्रातिपदिकात् ख प्रत्ययोऽपि भवति, चकाराद् यत्प्रत्ययश्च। <br> वेशोभगीनः, वेशोभग्यः। <br> यशोभगीनः, यशोभग्यः। <br> योगविभागो यथासंख्यनिरासार्थः, उत्तरार्थश्च। | ख १३३ |

| | | |
|---|---|---|
| छन्दसि ११० <br> खः १३२ | १३३. पूर्वैः कृतमिनयौ च <br> पूर्वैः कृतमित्यर्थे पूर्वशब्दात् तृतीयान्ताद् इन, य- इत्येतौ प्रत्ययौ भवतः, चकारात्ख च। <br> पथिभिः पूर्विणेभिः। पूर्व्यैः। पूर्वीणैः। | |
| छन्दसि ११० <br> यत् ७५ | १३४. अद्भिः संस्कृतम् <br> अद्भिः संस्कृतमित्यर्थे 'अप्' इति शब्दात् तृतीयान्ताद् यत्प्रत्ययो भवति छन्दसि। <br> यस्येदमप्यं हविः। | |
| छन्दसि १० | १३५. सहस्रेण संमितौ घः <br> संमितिः = सादृश्यं, लक्षणयाऽत्र संमितिशब्दस्यार्थः संमितः = सदृश इति। <br> सहस्रेण संमितिः (लक्षणया संमित) इत्यर्थे सहस्रशब्दात् तृतीयान्ताद् घप्रत्ययो भवति, छन्दसि। <br> अयमग्निः सहस्रियः। सहस्रतुल्य इत्यर्थः। <br> 'सहस्रेण संमिते घः' इति पाठान्तरम्। | सहस्रेण <br> घः१३८ |
| सहस्रेण १३५ <br> घः१३५ <br> छन्दसि १० | १३६. मतौ च <br> छन्दसि मत्वर्थे च सहस्रशब्दाद् घः प्रत्ययो भवति। <br> सहस्रमस्यास्ति सहस्रियः। | |
| छन्दसि १० | १३७. सोममर्हति यः <br> 'सोममर्हति' इत्यर्थे 'सोम' इति शब्दाद् द्वितीयान्ताद् यः प्रत्ययो भवति, छन्दसि। <br> सोममर्हन्ति सोम्या ब्राह्मणाः। यज्ञार्हा इत्यर्थः। | सोमम् यः <br> १३८ |
| छन्दसि १० <br> सोमम्१३७ <br> यः १३७ | १३८. मये च <br> छन्दसि मयट्प्रत्ययार्थे सोमशब्दाद् यः प्रत्ययो भवति। <br> आगतविकारावयकाः मयडर्थाः। तत्र यथायोगं समर्थविभक्तिः। <br> पिबाति सोम्यं मधु। सोममयमित्यर्थः। | मये १४० |
| मये १३८ यत् ७५ <br> छन्दसिं १० | १३९. मधोः <br> छन्दसि मयडर्थे मधुशब्दाद् यत्प्रत्ययो भवति। <br> मधव्यान् स्तोकान्। मधुमयानित्यर्थः। | |
| मये १३८ <br> यत् ७५ <br> छन्दसि ११० | १४०. वसोः समूहे च <br> छन्दसि समूहे वाच्ये यत्प्रत्ययो भवति, चकारान्मयडर्थे च। <br> यथायोगं समर्थविभक्तिः। <br> वसव्यः, समूहः, मयडर्थो वा। | |
| छन्दसि ११० | १४१. नक्षत्राद् घः <br> छन्दसि नक्षत्रशब्दाद् घः प्रत्ययो भवति, स्वार्थे। <br> नक्षत्रियेभ्यः स्वाहा। | |

| | | |
|---|---|---|
| छन्दसि ११० | १४२. सर्वदेवात् तातिल्<br>छन्दसि सर्वशब्दाद्, देवशब्दाच्च तातिल् प्रत्ययो भवति, स्वार्थे।<br>सविता नः सवतु सर्वतातिम्।<br>प्रदक्षिणि देवतातिमुराणः। | तातिल् १४४ |
| छन्दसि ११०<br>तातिल् १४२ | १४३. शिव-शमरिष्टस्य करे<br>शिव, शम्, अरिष्ट- इत्येतेभ्यः षष्ठ्यन्तेभ्यः 'करः' इत्यर्थे तातिल् प्रत्ययो भवति छन्दसि।<br>करोतीति करः प्रत्ययार्थः। कृद्योगलक्षणा कर्मणि षष्ठीह समर्थविभक्तिः।<br>शिवं करोतीति शिवतातिः।<br>शं करोतीति शन्तातिः।<br>अरिष्टं करोतीति अरिष्टतातिः। | शिव-शमरिष्टस्य १४४ |
| छन्दसि ११०<br>तातिल् १४२<br>शिवशमरिष्टस्य१४३ | १४४. भावे च<br>छन्दसि शिवादिभ्यः भावेऽपि तातिल् प्रत्ययो भवति।<br>शिवस्य भावः शिवतातिः।<br>शन्तातिः। अरिष्टतातिः। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां चतुर्थाध्यायस्य चतुर्थः पादः ।।

।। समाप्तश्चायं चतुर्थाध्यायः।।

।। श्रीः ।।

## ।। अथ पञ्चमाध्यायस्य प्रथमः पादः ।।

| | | |
|---|---|---|
| | १. प्राक्क्रीताच्छः<br>'तेन क्रीतम्'(५.१.३७) इत्यतः प्राक् छः प्रत्ययोऽधिकृतः। यथा 'तस्मै हितम्'(५.१.५) इति सूत्रेण वत्सेभ्यो हितो गोधुक् गोवत्सीयः इत्यत्र छः प्रत्ययो भवति, छप्रत्ययस्य तत्राधिकारात्। | छः ३६<br>(तेनक्रीतम् ३७) |
| | २. उगवादिभ्यो यत्<br>उवर्णान्ताद् प्रातिपदिकाद्, 'गो' इत्येवमादिभ्यः प्रातिपदिकेभ्यश्च यत् प्रत्ययो भवति, प्राक्कीतीयेष्वर्थेषु।<br>छस्यापवादः।<br>उवर्णान्तात् - शङ्कु-शङ्कव्यं दारु।<br>शङ्कवे हितमित्यर्थः।<br>गवादिभ्यः - गव्यम् तृणादिकम्।<br>गवे हितमित्यर्थः। | यत् ४ |
| यत् २ | ३. कम्बलाच्च संज्ञायाम्<br>प्राक्क्रीतीयार्थेषु कम्बलशब्दादपि यत्प्रत्ययो भवति, संज्ञायां विषये।<br>कम्बलाय हितं कम्बल्यमूर्णापलशतम्।<br>संज्ञायामिति किम् ? कम्बलेभ्यो हिता कम्बलीया ऊर्णाः। | |
| यत् २ | ४. विभाषा हविरपूपादिभ्यः<br>प्राक्क्रीतीयार्थेषु हविर्विशेषवाचिभ्यः, अपूपादिभ्यश्च प्रातिपदिकेभ्यो यत्प्रत्ययो वा भवति। पक्षे छः।<br>हविषः - आमिक्षायै हितम् आमिक्ष्यम्, आमिक्षीयं वा दधि।<br>तप्ते पयसि दध्नि निक्षिप्ते सति यद् घनीभूतं द्रव्यं निष्पद्यते सा आमिक्षा इत्युच्यते।<br>अपूपादिभ्यः - अपूपेभ्यो हितं चूर्णं अपूप्यम्, अपूपीयं वा।<br>एवमेव - तण्डुल्यं, तण्डुलीयं वा। | |

| छः १ | ५. तस्मै हितम्<br>'तस्मै हितम्' इत्यर्थे चतुर्थ्यन्ताद् यथाविहितं प्रत्ययो भवति।<br>वत्सेभ्यो हितो गोधुक् वत्सीयः। शङ्कवे हितं शङ्कव्यं दारु। गवे हितं गव्यं तृणादिकम्। हविषे हितं हविष्यं दधि।<br>कम्बलेभ्यो हितं कम्बल्यमूर्णापलशतम्। आमिक्षायै हितम् आमिक्ष्यम्, आमिक्षीयं वा दधि।<br>अपूपेभ्यो हितम् अपूप्यम्, अपूपीयं वा चूर्णम्। | तस्मै हितम् ११ |
|---|---|---|
| तस्मै ५ हितम् ५ | ६. शरीरावयवाद्यत्<br>शरीरम् = प्राणिकायः।<br>तस्मै हितमित्यर्थे शरीरावयववाचिनः प्रातिपदिकाद् यत्प्रत्ययो भवति।<br>दन्तेभ्यो हितं दन्त्यम्। कण्ठाय हितं कण्ठ्यम्। नाभये हितं नाभ्यम्। नासिकायै हितं नस्यम्। नस्यमित्यत्र 'पद्दन्नोमास्०' इत्यादिसूत्रेण नासिकाशब्दस्य स्थाने नस् इत्यादेशः, तत्र प्रभृतिग्रहणस्य प्रकरार्थत्वात्। | यत् ७ |
| तस्मै ५ हितम् ५<br>यत् २ | ७. खल-यव-माष-तिल-वृष-ब्रह्मणश्च<br>'तस्मै हितम्' इत्यर्थे खलादिशब्देभ्यो यत् प्रत्ययो भवति।<br>खलाय हितं खल्यम्। एवमेव - यव्यम्। माष्यम्। तिल्यम्। वृष्यम्। ब्रह्मण्यम्। | |
| तस्मै ५ हितम् ५ | ८. अजाविभ्यां थ्यन्<br>'तस्मै हितम्' इत्यर्थे अज, अवि इत्येताभ्यां थ्यन् प्रत्ययो भवति।<br>अजेभ्योऽजाभ्यो वा हिता अजथ्या यूथिः।<br>लिङ्गविशिष्टपरिभाषया अजाशब्दादपि थ्यन्, तसिलादिष्विति पुंवत्त्वम्।<br>अविभ्यो हिता अविथ्या।<br>अविर्मेषः। | |
| तस्मै ५ हितम् ५ | ९. आत्मन्विश्वजन-भोगोत्तरपदात् खः<br>तस्मै हितमित्यर्थे आत्मन्, विश्वजन- इत्येताभ्यां, भोगोत्तरपदाच्च प्रातिपदिकात् खः प्रत्ययो भवति।<br>आत्मने हितम् आत्मनीनम्।<br>'आत्माध्वानौ खे' इति प्रकृतिभावः। विश्वजनेभ्यो हितं विश्वजनीनम्। कर्मधारयादेवेष्यते- तेन षष्ठीसमासाद्, बहुव्रीहेश्च छ एव भवति - विश्वजनाय हितं विश्वजनीयम्। | |

| | | |
|---|---|---|
| तस्मै ५ हितम् ५ | १०. सर्वपुरुषाभ्यां णढञौ<br>'तस्मै हितम्' इत्यर्थे सर्वशब्दात्, पुरुषशब्दाच्च यथासंख्यं ण, ढञ्- इत्येतौ प्रत्ययौ भवतः।<br>सर्वस्मै हितं सार्वम्। ।<br>(वा०) सर्वाण्णस्य वा वचनम्।<br>सर्वीयम्।<br>(वा०) पुरुषाद् वध-विकार-समूह-तेन कृतेष्विति वक्तव्यम्।<br>पुरुषशब्दाद् वध-विकार-समूहेष्वर्थेषु, तेन कृतम् इत्यर्थे चैव ढञ्प्रत्ययो भवतीति वार्तिकस्याशयः। तत्र भाष्यकारप्रयोगात् 'तेन' इत्यस्य द्वन्द्वमध्ये निवेशः। योग्यताबलादिह षष्ठीसमर्थविभक्तिः, तेन कृतमित्यत्र, तु तृतीया समर्थविभक्तिरुपात्ता एव।<br>पुरुषस्य वधः पौरुषेयः।<br>पुरुषस्य विकारः पौरुषेयः।<br>पुरुषस्य समूहः पौरुषेयः।<br>पुरुषेण कृतः पौरुषेयः। | |
| तस्मै ५ हितम् ५ | ११. माणव-चरकाभ्यां खञ्<br>'तस्मै हितम्' इत्यर्थे माणव-चरकशब्दाभ्यां खञ् प्रत्ययो भवति।<br>मनोः कुत्सितमपत्यं माणवः, तस्मै हितं माणवीनम्।<br>चरकाय हितं चारकीणम्। | |
| छः १ | १२. तदर्थं विकृतेः प्रकृतौ<br>प्रकृतिः = उपादानकारणम्, तस्यैव उत्तरमवस्थान्तरं विकृतिः।<br>तदर्थमित्यर्थे विकृतिवाचिनः शब्दाद् यथाविहितं प्रत्ययो भवति, प्रकृतौ वाच्यायाम्।<br>अङ्गारेभ्य एतानि काष्ठानि इति अङ्गरीयाणि काष्ठानि।<br>औत्सर्गिकः छः प्रत्ययः।<br>प्राकोरभ्य इमाः प्राकारीया इष्टकाः।<br>शङ्कवे इदम् शङ्कव्यं दारु।<br>'उगवादिभ्यो यत्' इति यत्प्रत्ययः। | तदर्थं विकृतेः प्रकृतौ १५ |

| | | |
|---|---|---|
| तदर्थं विकृतेः प्रकृतौ १२ | १३. छदिरुपधि-बलेर्ढञ्<br>तदर्थमित्यर्थे छदिष्, उपधि, बलि-इत्येतेभ्यश्चतुर्थ्यन्तेभ्यो ढञ् प्रत्ययो भवति, प्रकृतौ वाच्यायाम्।<br>छदिः = तृणपटलः। तस्मै इमानि छादिषेयाणि तृणानि। छदिष् शब्दाद् ढञ्।<br>(इष्टिः) उपधिशब्दात्स्वार्थे इष्यते।<br>उपधीयते इति उपधिः=रथाङ्गम्। उपधिरेव औपधेयम्।<br>बलिशब्दाद् ढञ् - बलेः इमे बालेयाः तण्डुलाः। | |
| तदर्थं विकृतेः प्रकृतौ १२ | १४. ऋृषभोपानहोर्ञ्यः<br>तदर्थम् इत्यर्थे विकृतिवाचिनः ऋषभशब्दात्, उपानह्शब्दाच्च चतुर्थ्यन्ताद् ञ्यः प्रत्ययो भवति प्रकृतौ वाच्यायाम्।<br>ऋषभायायं आर्षभ्यो वत्सः।<br>उपानहे अयम् औपानह्यो मुञ्जः। औपानह्यं चर्म। | |
| तदर्थं विकृतेः प्रकृतौ १२ | १५. चर्मणोऽञ्<br>तदर्थम् इत्यर्थे चर्मणो या विकृतिस्तद्वाचिनः शब्दाच्चतुर्थ्यन्ताद् अञ् प्रत्ययो भवति।<br>वर्ध्री = चर्मरज्जुः। वर्ध्र्यै इदं वार्ध्रं चर्म।<br>वरत्रा = चर्मरज्जुः। वरत्रायै इदं वारत्रं चर्म। | |
| छः १ | १६. तदस्य तदस्मिन्स्यादिति<br>तदस्य स्यादित्यर्थे, तदस्मिन् स्यादित्यर्थे च प्रथमान्तात् यथाविहितं प्रत्ययो भवति।<br>प्राकारः आसामिष्टकानां स्यादिति प्राकारीया इष्टकाः।<br>प्राकारः अस्मिन् देशे स्यादिति प्राकारीयो देशः।<br>इतिशब्दो लौकिकीं विवक्षामनुसारयति।<br>तेनेह न - प्रासादो देवदत्तस्य स्यादिति। | तदस्य तदस्मिन् स्यात् १७ |
| तदस्य १६<br>तदस्मिन्१६<br>स्यात्१६ | १७. परिखाया ढञ्<br>तदस्य स्यादित्यर्थे, तदस्मिन् स्यादित्यर्थे च परिखाशब्दात् प्रथमान्ताद् ढञ् प्रत्ययो भवति।<br>परिखा अस्याः स्यात्, अस्यां वा स्यात् इति पारिखेयी भूमिः। | |

| | | |
|---|---|---|
| | १८. प्राग्वतेष्ठञ्<br>'तेन तुल्यं क्रिया चेद् वतिः'(५.१.११५) इत्यतः प्राक् ठञ् प्रत्ययोऽधिकृतः। तेन 'तेन तुल्यं क्रियाचेद्वतिः'(५.१.११५) इत्यतः प्रागपवादविषयं परित्यज्य सर्वेषु सूत्रेषु ठञ् इत्यस्योपस्थितिर्भवति। यथा 'पारायण-तुरायण-चान्द्रायणं वर्त्तयति' (५.१.७२) इति सूत्रेण पारायणं वर्तयति इति पारायणिकः इत्यत्र ठञ् प्रत्ययो भवति, ठञ्प्रत्ययस्य तत्राधिकारात्। | ठञ् ११५ |
| | १९. आर्हादगोपुच्छ-संख्या-परिमाणाट्ठक्<br>इत आरभ्य 'तर्दर्हति' (५.१.६३) इति सूत्रस्य प्रकरणं यावत् अर्थात् 'यज्ञर्त्विग्भ्यां घ खञौ' (५.१.७१) इति सूत्रं यावत् ठक् प्रत्ययोऽधिकृतः।<br>ठञधिकारस्यापवादोऽयमधिकारः।<br>वक्ष्यति 'तेन क्रीतम्'(५.१.३७) इति। तत्र ठकोऽधिकाराद् निष्केण क्रीतमिति नैष्किकम् इत्यत्र ठक्प्रत्ययो भवति।<br>अगोपुच्छ-संख्या-परिमाणादिति किम् ? गोपुच्छेन क्रीतं गौपुच्छिकम्।<br>षष्ट्या क्रीतं षाष्टिकम्।<br>प्रस्थेन क्रीतं प्रास्थिकम्।<br>एषु स्थलेषु ठञ् प्रत्यय एव भवति। | ठक् ७१ |
| ठक् १९<br>आर्हीयेषु१९ | २०. असमासे निष्कादिभ्यः<br>निष्क इत्येवमादिभ्यः शब्देभ्योऽसमासे ठक् प्रत्ययो भवति, आर्हीयेष्वर्थेषु।<br>निष्केण क्रीतं नैष्किकम्।<br>यथायोगं क्रीताद्यर्थान्वयः। समासे तु ठञ् एव।<br>परमनिष्कादिशब्दात्, परमनैष्किकम्। उत्तमनैष्किकम्। | असमासे २१ |
| आर्हीयेषु १९<br>असमासे २० | २१. शताच्च ठन्यतावशते<br>शतशब्दाच्च ठन्यतौ प्रत्ययौ भवतः अंशतेऽभिधेये, आर्हीयेष्वर्थेषु चकारादसमासे एव।<br>उत्तरसूत्रेण प्राप्तस्य कनोऽपवादः।<br>शतेन क्रीतं शतिकम्, शत्यं वा।<br>अशते इति किम् ? शतं परिमाणमस्य शतकः सङ्घः।<br>असमासे इत्येव - द्विगुणं शतं द्विशतम्, तेन क्रीतं द्विशतकम्। त्रिशतकम्। | |

| | | |
|---|---|---|
| आर्हीयेषु १९ | २२. संख्याया अतिशदन्तायाः कन्<br>अत्यन्तायाः, अशदन्तायाश्च संख्यायाः कन् प्रत्ययो भवति, आर्हीयेष्वर्थेषु।<br>पञ्चभिः क्रीतः पञ्चकः। शतं परिमाणस्य शतकः सङ्घः। एवमेव दशकः।<br>त्यन्तायास्तु -साप्ततिकः।<br>शदन्तायाः - चात्वारिंशत्कः।<br>औत्सिर्गिकः ठञ्,'इसुसुक्तान्तात् कः' इति ठस्य कादेशः। | कन् २३ |
| आर्हीयेषु १९<br>कन् २२ | २३. वतोरिड्वा<br>वत्वन्तात्परस्य कनः इडागमो वा भवति।<br>तावता क्रीतः तावतिकः, तावत्कः। | |
| आर्हीयेषु १९ | २४. विंशति-त्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्<br>योगविभागोऽत्र क्रियते।<br>**'विंशतित्रिंशद्भ्याम्'** इत्येको योगः। अत्र कन् अनुवर्तते। अतः प्रथमयोगस्यार्थो भवति-विंशति, त्रिंशत्- इत्येताभ्यां कन् प्रत्ययो भवति, आर्हीयेष्वर्थेषु।<br>विंशत्या क्रीतः विंशतिकः।<br>त्रिंशता क्रीतः त्रिंशत्कः। विंशतिकः, त्रिंशत्कः इति संज्ञायाम्।<br>**'ड्वुन्नसंज्ञायाम्'** इत्यपरो योगः। अत्र 'विंशति-त्रिंशद्भ्याम्' इत्यनुवर्तते। अतः अस्य योगस्यार्थो भवति- विंशति-त्रिंशद्भ्यां ड्वुन्प्रत्ययो भवति असंज्ञायाम्, आर्हीयेष्वर्थेषु।<br>विंशत्या क्रीतः विंशकः।<br>अत्र 'ति विंशतेर्डिति' इति सूत्रेण तिशब्दस्य लोपः।<br>त्रिंशता क्रीतः त्रिंशकः।<br>अत्र 'टेः' इति सूत्रेण टिलोपः। | |

| | | |
|---|---|---|
| आर्हीयेषु १६ | २५. कंसाट्टिठन्<br>कंसशब्दात् टिठन् प्रत्ययो भवति, आर्हीयेष्वर्थेषु।<br>कंसः परिमाणविशेषः। तेन क्रीतः कंसिकः। स्त्रियां कंसिकी।<br>(वा०) अर्द्धाच्चेति वक्तव्यम्।<br>अर्द्धिकः। अर्द्धिकी।<br>(वा०) कार्षापणाट्टिठन्वक्तव्यः, प्रतिरादेशश्च वा।<br>कार्षापणेन क्रीतः कार्षापणिकः। स्त्रियाम् - कार्षापणिकी।<br>कार्षापणस्य स्थाने प्रति इत्यादेशे तु प्रतिकः। स्त्रियाम् - प्रतिकी। | |
| आर्हीयेषु १६ | २६. शूर्पादञन्यतरस्याम्<br>शूर्पाद् अञ् प्रत्ययोऽन्यतरस्यां वा भवति, आर्हीयेष्वर्थेषु। पक्षे ठञ्।<br>शूर्पः परिमाणविशेषः। तेन क्रीतम् शौर्पम्। शौर्पिकम्। | |
| आर्हीयेषु १६ | २७. शतमान-विंशतिक-सहस्र-वसनादण्<br>शतमान, विंशतिक, सहस्र, वसन- इत्येतेभ्यः अण् प्रत्ययो भवति, आर्हीयेष्वर्थेषु।<br>शतमानं परिमाणविशेषः, तेन क्रीतम् शातमानं शतम्।<br>विंशत्या क्रीतं विंशतिकम्, तेन क्रीतं वैंशतिकम्।<br>सहस्रेण क्रीतं साहस्रम्।<br>वसनम् = वस्त्रम्, तेन क्रीतं वासनम्। | |
| आर्हीयेषु १६ | २८. अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्<br>अध्यर्धपूर्वात्प्रातिपदिकात्, द्विगोश्च परस्य आर्हीयस्य लुग् भवति, असंज्ञायां विषये। अध्यर्धेन कंसेन क्रीतमिति अध्यर्धकंसम्। अध्यारूढमर्धं यस्मिन् तद् अध्यर्धम्, सार्द्धमित्यर्थः। अध्यर्धेन कंसेन क्रीतमिति विगहे, तद्धितार्थेति समासः, 'कंसाट्टिठन्' (५.१.२५) इति सूत्रेण टिठन् प्रत्ययः, तस्य चानेन लुक्।<br>द्विगोः - द्वाभ्यां कंसाभ्यां क्रीतं द्विकंसम्।<br>अत्रापि 'कंसाट्टिठन्' (५.१.२५) इति सूत्रेण टिठन् प्रत्ययः, तस्य चानेन लुक्। | अध्यर्ध-द्विगोः ३५<br>लुक ३१ |

| | | |
|---|---|---|
| अध्यर्धपूर्वद्विगोः २८<br>लुक्२८ आर्हीयेषु१९ | २९. विभाषा कार्षापण-सहस्राभ्याम्<br>कार्षापण-सहस्रान्ताद् अध्यर्धपूर्वाद्, द्विगोश्च परस्य आर्हीयस्य विभाषा लुग्भवति।<br>कार्षापणान्तात् – अध्यर्धेन कार्षापणेन क्रीतम् अध्यर्धकार्षापणम्। 'कार्षापणाट्टिठन् वक्तव्यः' इति वार्तिकेन विहितस्य टिठनो लुक्। लुगभावे अध्यर्धकार्षापणिकम्।<br>एवमेव – द्विकार्षापणम्। द्विकार्षापणिकम्।<br>सहस्रान्तात् – अध्यर्धेन सहस्रेण क्रीतम् अध्यर्धसहस्रम्। अध्यर्धसाहस्रम्।<br>'शतमान-विंशति०' इति सूत्रेण विहितस्य अणो लुक्। लुगभावे 'संख्यायाः संवत्सरसंख्यस्य च'(७.३.१५) इति सूत्रेण उत्तरपदवृद्धिः।<br>एवमेव – द्विसहस्रम्। द्विसाहस्रम्। | विभाषा ३१ |
| द्विगोः २८ वा २९<br>आर्हीयेषु१९ लुक्२८ | ३०. द्वित्रिपूर्वान्निष्कात्<br>द्वि-त्रिपूर्वाद् निष्कशब्दान्तात् द्विगोः परस्याऽऽर्हीयस्य विभाषा लुग्भवति।<br>द्वाभ्यां निष्काभ्यां क्रीतं द्विनिष्कम्।<br>असमासे एव 'निष्कादिभ्योऽसमासे' इत्यनेन ठको विधानादत्र 'प्राग्वतेष्ठञ्' इति ठञ्, तस्य लुक्। पक्षे द्विनैष्किकम्। 'परिमाणान्तस्य०'(७.३.१७) इत्यादिनोत्तरपदवृद्धिः।<br>एवमेव त्रिनिष्कम्। त्रिनैष्किकम्। | सम्पूर्णसूत्रम् ३१ |
| द्वित्रिपूर्वान्निष्कात्३०<br>द्विगोः २८ वा २९<br>आर्हीयेषु१९ लुक्२८ | ३१. बिस्ताच्च<br>द्वित्रिपूर्वाद् बिस्तान्ताद् द्विगोः परस्याऽऽर्हीयस्य विभाषा लुग्भवति।<br>बिस्तशब्दः परिमाणवाची।<br>द्विबिस्तम्, द्विबैस्तिकम्।<br>त्रिबिस्तम्, त्रिबैस्तिकम्।<br>बहुबिस्तम्, बहुबैस्तिकम्। | |
| आर्हीयेषु १९<br>अध्यर्धपूर्वद्विगोः २८ | ३२. विंशतिकात् खः<br>अध्यर्धपूर्वाद् प्रातिपदिकाद्, द्विगोश्च विंशतिकशब्दान्ताद् आर्हीयेष्वर्थेषु खः प्रत्ययो भवति।<br>अध्यर्धेन विंशतिकेन क्रीतं अध्यर्धविंशतिकीनम्।<br>त्रिभिः विंशतिकैः क्रीतं त्रिविंशतिकीनम्।<br>विधानसमर्थ्यादस्य 'अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्' इति लुग्न। | |

| | | |
|---|---|---|
| आर्हीयेषु १९<br>अध्यर्धपूर्वद्विगोः २८ | ३३. खार्या ईकन्<br>अध्यर्धपूर्वाद्, द्विगोश्च खारीशब्दान्तात् प्रातिपदिकाद् ईकन् प्रत्ययो भवति, आर्हीयेष्वर्थेषु।<br>खारीशब्दः परिमाणवाची।<br>अध्यर्धया खार्या क्रीतं अध्यर्धखारीकम्।<br>द्वाभ्यां खारीभ्यां क्रीतम् द्विखारीकम्।<br>(वा०) केवलायाश्चेति वक्तव्यम्।<br>खार्या क्रीतं खारीकम्। | |
| आर्हीयेषु १९<br>अध्यर्धपूर्वद्विगोः २८ | ३४. पण-पाद-माष-शताद्यत्<br>अध्यर्धपूर्वाद्, द्विगोश्च पण, पाद, माष, शत-इत्येतदन्ताद् यत्प्रत्ययो भवति, आर्हीयेष्वर्थेषु।<br>पणादिशब्दाः परिमाणवाचकाः, शतशब्दश्च संख्यावाचकः।<br>अध्यर्धपण्यम्, द्विपण्यम्।<br>अध्यर्धपाद्यम्, द्विपाद्यम्।<br>अध्यर्धमाष्यम्, द्विमाष्यम्।<br>अध्यर्धशत्यम्, द्विशत्यम्। | यत् ३६ |
| आर्हीयेषु१९ यत्३४<br>अध्यर्धपूर्वद्विगोः२८ | ३५. शाणाद्वा<br>अध्यर्धपूर्वाद्, द्विगोश्च शाणान्तात् प्रातिपदिकाद् यत्प्रत्ययो वा भवति, आर्हीयेष्वर्थेषु। पक्षे ठञ्,तस्य च लुक्। शाणशब्दः परिमाणवाचकः।<br>अध्यर्धशाण्यम्। अध्यर्धशाणम्।<br>द्विशाण्यम्, द्विशाणम्।<br>(वा०) शताच्चेति वक्तव्यम्।<br>अध्यर्धशत्यम्, अध्यर्धशतम्।<br>द्विशत्यम्। द्विशतम्। | शाणात् ३६ |
| शाणात् ३५ यत्३४<br>आर्हीयेषु १९ | ३६. द्वित्रिपूर्वादण् च<br>द्वित्रिपूर्वाच्छाणान्तात्प्रातिपदिकादार्हीयेष्वर्थेषु अण् प्रत्ययो भवति; चकाराद् विकल्पेन यच्च।<br>यत्प्रत्ययाभावे ठञ्, तस्य च लुक्।<br>एवं हि त्रैरूप्यं सम्पद्यते- द्वैशाणम्। द्विशाण्यम्। द्विशाणम्।<br>त्रैशाणम्। त्रिशाण्यम्। त्रिशाणम्।<br>'परिमाणान्तस्याऽसंज्ञाशाणयोः'(७.३.१७) इति पर्युदासाद् अणि आदिवृद्धिरेव,नोत्तरपदवृद्धिः। | |

| | | |
|---|---|---|
| ठञ् १८ | ३७. तेन क्रीतम्<br>प्राग्वतेष्ठञ् (५.१.१८) इत्यतः 'द्वित्रिपूर्वादण् च' (५. १.३६) इति सूत्रपर्यन्तं ठञादयस्त्रयोदश प्रत्यया उक्ताः। तेषामितः प्रभृति समर्थविभक्तयः, प्रत्ययार्थाश्च निर्दिश्यन्ते।<br>सूत्रार्थः – 'तेन क्रीतम्' इत्यर्थे तृतीयान्ताद् यथाविहितं ठञादयः प्रत्ययाः भवन्ति। गोपुच्छेन क्रीतं गौपुच्छिकम्। सप्तत्या क्रीतं साप्ततिकम्। प्रस्थेन क्रीतं प्रास्थिकम्।<br>एषु 'प्राग्वतेष्ठञ्' इति ठञ् प्रत्ययः<br>निष्केण क्रीतं नैष्किकम्।<br>अत्र 'असमासे निष्कादिभ्यः' इति ठक् प्रत्ययः। | |
| यथाविहितं ठञादयः१ | ३८. तस्य निमित्तं संयोगोत्पातौ<br>तस्य निमित्तं संयोगः, उत्पातो वेत्यर्थे षष्ठ्यन्ताद् यथाविहितं ठञादयः प्रत्ययाः भवन्ति।<br>संयोगः सम्बन्धः। प्राणिनं शुभाशुभसूचकः महाभूतपरिणामः उत्पातः।<br>शतस्य निमित्तं धनपतिना संयोगः इति शत्यः, शतिको वा। साहस्रः।<br>शतस्य निमित्तमुत्पातो दक्षिणाक्षिस्पन्दनमिति शत्यम्, शतिकं वा। साहस्रम्। | सम्पूर्णसूत्रम् ४१ |
| तस्य ३८<br>निमित्तं ३८<br>संयोगोत्पातौ ३८ | ३९. गोद्व्यचोऽसंख्या-परिमाणाश्वादेर्यत्<br>तस्य निमित्तं संयोगः, उत्पातो वेत्यर्थे गोशब्दाद्, द्व्यच्कप्रातिपदिकाच्च यत्प्रत्ययो भवति, न तु संख्यापरिमाणाश्वादिभ्यः शब्देभ्यः।<br>गोर्निमित्तं संयोगः, उत्पातो वा गव्यः।<br>द्व्यचः खल्वपि – धनस्य निमित्तं संयोगः उत्पातो वा धन्यः।<br>असंख्या-परिमाणाश्वादेरिति किम् ? पञ्चानां निमित्तं पञ्चकम्। सप्तकम्। अष्टकम्। परिमाण- प्रास्थिकम्। खारीकम्। अश्वादि- आश्विकः। | यत् ४० |
| तस्य ३८<br>निमित्तं ३८<br>संयोगोत्पातौ ३८<br>यत् ३९ | ४०. पुत्राच्छ च<br>तस्य निमित्तं संयोगः , उत्पातो वेत्यर्थे पुत्राच्छप्रत्ययो भवति, चकाराद् यच्च।<br>पुत्रस्य निमित्तं संयोग, उत्पातो वा पुत्रीयम्, पुत्र्यम्। | |

| | | |
|---|---|---|
| तस्य ३८<br>निमित्तं ३८<br>संयोगोत्पातौ ३८ | ४१. सर्वभूमि-पृथिवीभ्यामणञौ<br>तस्य निमित्तं संयोग, उत्पातो वेत्यर्थे सर्वभूमिशब्दात्, पृथिवीशब्दाच्च यथासंख्यम् अण, अञ्- इत्येतौ प्रत्ययौ भवतः।<br>सर्वभूमेर्निमित्तं संयोग, उत्पातो वा सार्वभौमः। पार्थिवः। सर्वभूमेरनुशतिकादिषु पाठादुभयपदवृद्धिः। | सम्पूर्णसूत्रम् ४३ |
| सर्वभूमि-<br>पृथिवीभ्यामणञौ ४१ | ४२. तस्येश्वरः<br>तस्येश्वर इत्यर्थे सर्वभूमि-पृथिवीशब्दाभ्यां षष्ठ्यन्ताभ्यां यथासंख्यम् अण्, अञ्- इत्येतौ प्रत्ययौ भवतः।<br>सर्वभूमेरीश्वरः सार्वभामः।<br>पृथिव्या ईश्वरः पार्थिवः। | |
| सर्वभूमि-<br>पृथिवीभ्यामणञौ ४१ | ४३. तत्र विदित इति च<br>तत्र विदितः इत्यर्थेऽपि सर्वभूमिपृथिवीशब्दाभ्यां सप्तम्यन्ताभ्यां यथासंख्यम् अणञ्प्रत्ययौ भवतः।<br>विदितः = ज्ञातः, प्रकाशित इत्यर्थः।<br>सर्वभूमौ विदितः सार्वभौमः।<br>पृथिव्यां विदितः पार्थिवः। | तत्र विदितः ४४ |
| तत्र विदितः ४३ | ४४. लोक-सर्वलोकाट्ठञ्<br>'तत्र विदित' इत्यर्थे लोकशब्दात्, सर्वलोकशब्दाच्च सप्तम्यन्तात् ठञ् प्रत्ययो भवति।<br>लोके विदितः लौकिकः।<br>सर्वलोकेषु विदितः सार्वलौकिकः।<br>अनुशतिकत्वादुभयपदवृद्धिः। | |
| यथाविहितं<br>ठञादयः१ | ४५. तस्य वापः<br>तस्य वापः इत्यर्थे षष्ठ्यन्ताद् यथाविहितं प्रत्ययो भवति।<br>उप्यतेऽस्मिन् इति वापः, क्षेत्रमुच्यते।<br>प्रस्थस्य वापः प्रास्थिकं क्षेत्रम्। | तस्य वापः ४६ |
| तस्य वापः ४५ | ४६. पात्रात् ष्ठन्<br>तस्य वापः इत्यर्थे पात्रशब्दात् षष्ठ्यन्तात् ष्ठन् प्रत्ययो भवति।<br>पात्रशब्दः परिमाणवाची।<br>पात्रस्य वापः पात्रिकं क्षेत्रम्। | |

| | | |
|---|---|---|
| यथाविहितं ठञादयः१ | ४७. तदस्मिन् वृद्ध्याय-लाभ-शुल्कोपदा दीयते<br>तदस्मिन् दीयते इत्यर्थे प्रथमान्ताद् यथाविहितं प्रत्ययो भवति, यद्दीयते तच्चेद् वृद्धिः, आयः, लाभः, शुल्कः, उपदा वा भवेत्।<br>उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः। ग्रामादिषु स्वामिग्राह्यो भागः आयः।<br>विक्रेत्रा मूल्यादधिकं ग्राह्यं लाभः।<br>रक्षानिर्वेशो राजभागः = शुल्कः।<br>उत्कोचः = उपदा।<br>पञ्चाऽस्मिन् वृद्धिः, आयः, लाभः, शुल्कः, उपदा वा दीयते इति पञ्चकः। | सम्पूर्णसूत्रम् ४६ |
| तदस्मिन् वृद्ध्यायलाभ-शुल्कोपदा दीयते४७ | ४८. पूरणार्धाट्ठन्<br>पूरणवाचिनः शब्दाद्, अर्धशब्दाच्च ठन् प्रत्ययो भवति, पूर्वसूत्रोक्तार्थे।<br>द्वितीयो वृद्ध्यादिरस्मिन् दीयते इति द्वितीयिकः।<br>अर्धशब्दो रूपकस्यार्धे रूढः, रूपकं हि कार्षापणम्।<br>अर्धं वृद्ध्यादिरस्मिन् दीयते इति अर्धिकः। | ठन् ४६ |
| तदस्मिन् वृद्ध्यायलाभ-शुल्कोपदा दीयते४७ ठन् ४८ | ४६. भागाद्यच्च<br>भागशब्दाद् यत् प्रत्ययो भवति, चकारात् ठंश्च, पूर्वसूत्रोक्तार्थे।<br>भागो वृद्ध्यादिरस्मिन् दीयते इति भाग्यम्, भागिकं वा शतम्।<br>भागशब्दोऽपि रूपकस्यार्धवाचकः। | |
| यथाविहितंप्रत्ययाः १ | ५०. तद्धरति वहत्यावहति भाराद्वंशादिभ्यः<br>तद् हरति, वहति, आवहति इत्यर्थे भारशब्दाद् द्वितीयान्ताद् यथाविहितं प्रत्ययो भवति, स भारशब्दश्चेद् वंशादिभ्यः परो भवेत्।<br>वंशभारं हरति, वहति, आवहति वा वांशभारिकः।<br>हरति = देशान्तरं प्रापयति, चोरयति वेत्यर्थः। वहति = उत्क्षिप्य धारयतीत्यर्थः।<br>आवहति = उत्पादयतीत्यर्थः। | तद्५५ हरति५१ |
| तद्धरति ५० | ५१. वस्न-द्रव्याभ्यां ठन्कनौ<br>तद् हरतीत्याद्यर्थेषु वहन-द्रव्यशब्दाभ्यां द्वितीयान्ताभ्यां यथासंख्यं ठन्, कन्- इत्येतौ प्रत्ययौ भवतः।<br>वस्नम् = मूल्यम्।<br>वस्नं हरति, वहति, आवहति वा वस्निकः।<br>द्रव्य हरति, वहति, आवहति वा द्रव्यकः। | |

| | | |
|---|---|---|
| तत् ५० <br> यथाविहितं प्रत्ययाः१ | ५२. संभवत्यवहरति-पचति <br> तत् संभवति, अवहरति, पचति इत्येतेष्वर्थेषु द्वितीयान्ताद् यथाविहितं प्रत्ययो भवति। <br> सम्भवतीत्यस्य स्वस्मिन् समावेशयतीत्यर्थः, उपसर्गवशात्। अवहरतीत्यस्य उपसंहरतीत्यर्थः, आनयतीत्यर्थो वा। <br> पचतीत्यस्य विक्लेदयतीत्यर्थः। <br> प्रस्थं सम्भवति = समावेशयति यः स प्रास्थिकः कटाहः। <br> प्रस्थमवहरति, पचति वा या सा प्रास्थिकी ब्राह्मणी। | संभवत्यवहरति पचति ५५ |
| तत् ५० पचति ५२ <br> संभवत्यवहरति ५२ | ५३. आढकाचित-पात्रात् खोऽन्यतरस्याम् <br> तत्सभवतीत्याद्यर्थेषु आढकाचित-पात्रात् खोऽन्यतरस्यां भवति। <br> पक्षे प्राग्वतेष्ठञ्। <br> आढकं संभवति, अवहरति, पचति वा आढकीना, आढकिकी। <br> आचितीना, आचितिकी। <br> पात्रीणा, पात्रिकी। | आढकाचित-पात्रात् ५४ |
| तत् ५० <br> आढकाचितपात्रात्५३ <br> संभवत्यवहरति ५२ | ५४. द्विगोः ष्ठंश्च <br> तत्सभवतीत्याद्यर्थेषु आढकाचित-पात्रान्ताद् द्विगोः ष्ठन् प्रत्ययो भवति, चकारात् खः, अन्यतरस्याम्। <br> पक्षे ठञ्, तस्य च 'अध्यर्धपूर्वद्विगोः' इति सूत्रेण लुक्। <br> द्व्याढकिकी, द्व्याढकीना, द्व्याढकी। <br> 'द्विगोः' इति ङीप्। <br> द्व्याचितिकी, द्व्याचितकीना, द्व्याचिता। <br> 'अपरिमाणविस्ताचित' इति निषेधाद् ङीब्न। | द्विगोः ष्ठन् ५५ |
| तत् ५० ष्ठन् ५४ <br> संभवत्यवहरति ५२ <br> द्विगोः ५४ | ५५. कुलिजाल्लुक्खौ च <br> तत्सम्भवतीत्याद्यर्थेषु कुलिजशब्दान्ताद् द्विगोः लुक्, खप्रत्ययश्च वा भवतः, चकारात् ष्ठन् प्रत्ययश्च। <br> लुगभावे ठञः श्रवणाम्। तेन - द्वे कुलिजे सम्भवति, अवहरति, पचति वा इति विग्रहे चातूरूप्यं सम्पद्यते - ठञि,तस्य लुकि च-द्विकुलजी। 'द्विगोः' इति ङीप्। <br> ठञो लुगभावे- द्वैकुलुजिकी। <br> खप्रत्यये- द्विकुलुजीना। <br> ष्ठन्प्रत्यये- द्विकुलुजिकी इति। | |

| | | |
|---|---|---|
| यथाविहितं प्रत्ययाः१ | ५६. सोऽस्यांश-वस्न-भृतयः<br>सोऽस्य इत्यर्थे प्रथमान्ताद् यथाविहितं प्रत्ययो भवति, यत्तत् प्रथमासमर्थम् अंश- वस्न-भृतयश्चेत्ताः भवन्ति।<br>अंशः=भागः। वस्नम्= मूल्यम्। भृतिः= वेतनम्।<br>पञ्च अंशो,वस्नं, भृतिर्वा अस्य इति पञ्चकः।<br>सप्तकः। साहस्रः। | |
| यथाविहितं प्रत्ययाः१ | ५७. तदस्य परिमाणम्<br>तदस्य परिमाणम् इत्यर्थे प्रथमान्ताद् यथाविहितं प्रत्ययो भवति।<br>प्रस्थः परिमाणमस्य प्रास्थिको राशिः। | तदस्य परिमाणम् ६२ |
| तदस्य ५७<br>परिमाणम् ५७<br>यथाविहितं प्रत्ययाः१ | ५८. संख्यायाः संज्ञा-संघ-सूत्राध्ययनेषु<br>तदस्य परिमाणम् इत्यर्थे संख्यावाचकात् शब्दात्प्रथमान्ताद् यथाविहितं प्रत्ययो भवति, संज्ञयां विषये, सङ्घे, सूत्रे, अध्ययने च वाच्ये।<br>(वा०) संज्ञायां स्वार्थे प्रत्ययो वाच्यः।<br>पञ्चैव इति पञ्चकाः शकुनयः।<br>संघे- पञ्च परिमाणमस्य इति पञ्चकः संघः।<br>सूत्रे-अष्टौ (अध्यायाः) परिमाणमस्य इति अष्टकं पाणिनीयम्।<br>अध्ययने- पञ्च परिमाणमस्य इति पञ्चकम् अध्ययनम्।<br>पञ्च रूपाणि अस्य अध्ययनम्। | |

| | | |
|---|---|---|
| तदस्य ५७<br>परिमाणम् ५७<br>यथाविहितं प्रत्ययाः१ | ५९. पंक्ति-विंशति-त्रिंशत्- चत्वारिंशत्-पञ्चाशत्-षष्टि-सप्तत्यशीति-नवति-शतम्<br>'तदस्य परिमाणम्' इत्यर्थे एते रूढिशब्दा निपात्यन्ते।<br>पंक्तिः- पञ्च परिमाणमस्य इति पङ्क्तिश्छन्दः। अत्र पञ्चन्शब्दात् तिप्रत्ययः, टिलोपश्च निपात्यते।<br>विंशतिः- द्वौ दशतौ (दशत् इत्यस्य दशानां वर्गः इत्यर्थः) परिमाणमस्य इति विंशतिः। अत्र शतिप्रत्ययः, द्विदशत्शब्दस्य स्थाने विन् इत्यादेशः।<br>त्रिंशत्- त्रयो दशतः परिणामस्य इति त्रिंशत्। अत्र शत्प्रत्ययः, त्रिदशत्शब्दस्य स्थाने त्रिन् इत्यादेशः।<br>चत्वारिंशत्- चत्वारः दशतः परिमाणमस्य इति चत्वारिंशत्। अत्र शत् प्रत्ययः, चतुर्दशत्शब्दस्य स्थाने चत्वारिन् इत्यादेशः।<br>एवमेव- पञ्चाशत्, षष्टिः, सप्ततिः, अशीतिः, नवतिः, शतम् इति।<br>एषु यथालक्ष्यं तिप्रत्ययः, शत्प्रत्यय, तप्रत्ययश्च निपात्यते। पञ्चदशत्शब्दस्य स्थाने पञ्चा इत्यादेशः, षड्दशत्शब्दस्य षष् इत्यादेशः, षष्शब्दस्य अपदत्वं च निपात्यते। सप्तदशत्शब्दस्य स्थाने सप्त इत्यादेशः, अष्टदशत्शब्दस्य स्थाने अशी इत्यादेशः, नवदशत्शब्दस्य स्थाने नव इत्यादेशः, दशदशत्शब्दस्य स्थाने श इत्यादेशश्च निपात्यते। | |
| | ६०. पञ्चद्दशतौ वर्गे वा<br>पञ्चत्, दशत् - इत्येतौ वा निपात्येते 'तदस्य परिमाणम्' इत्यर्थे, वर्गेऽभिधेये।<br>पञ्च परिमाणमस्य वर्गस्य पञ्चद् वर्गः।<br>पक्षे 'संख्याया अतिशदन्तायः कन - इति कन् प्रत्यये पञ्चको वर्गो वा।<br>एवमेव दश परिमामणस्येत्यर्थे दशत्, दशको वा वर्गः। | वर्गे ६१ |
| वर्गे ६० तदस्य ५७<br>परिमाणम् ५७ | ६१. सप्तनोऽञ् छन्दसि<br>तदस्य परिमाणमित्यर्थे सप्तन् इति शब्दाच्छन्दसि विषये वर्गेऽभिधेये अञ् प्रत्ययो भवति।<br>सप्त साप्तान्यसृजन्। | |

| | | |
|---|---|---|
| तदस्य ५७<br>परिमाणम् ५७ | ६२. त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्<br>तदस्य परिमाणमित्यर्थे त्रिशत्शब्दात्,चत्वारिशत् शब्दाच्च डण्प्रत्ययो भवति, संज्ञायां विषये, ब्राह्मणे चाऽभिधेये।<br>त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रैंशानि ब्राह्मणानि।<br>एवमेव चात्वारिंशानि ब्राह्मणानि। | |
| यथाविहितं प्रत्ययाः१ | ६३. तदर्हति<br>तद् अर्हति इत्यर्थे द्वितीयान्ताद् यथाविहितं प्रत्ययो भवति। 'अर्हति' इत्यस्य लब्धुं योग्यो भवतीत्यर्थः।<br>श्वेतच्छत्रमर्हति श्वैतछत्रिकः। वस्त्रयुग्ममर्हति वास्त्रयुग्मिकः। शतमर्हति शत्यः, शतिको वा। | तद्७६अर्हति७१ |
| तत् ६३ अर्हति ६३<br>यथाविहितं प्रत्ययाः१ | ६४. छेदादिभ्यो नित्यम्<br>'तदर्हति नित्यम्' इत्यर्थे 'छेद' इत्येवमादिभ्यो द्वितीयान्तेभ्यो यथाविहितं प्रत्ययो भवति।<br>छेदं नित्यमर्हति छैदिका वेतसः। भेदं नित्यमर्हति भैदिकः। आर्हीयष्ठक्। | नित्यम् ६५ |
| तत् ६३ नित्यम ६४<br>अर्हति ६३ | ६५. शीर्षच्छेदाद्यच्च<br>तदर्हति नित्यमित्यर्थे शीर्षच्छेदशब्दाद् द्वितीयान्ताद् यत्प्रत्ययो भवति, चकाराद् यथाविहितं च।<br>शिरश्छेदं नित्यमर्हति शीर्षच्छेद्यः, शैर्षच्छैदिको वा।<br>प्रत्ययसन्नियोगेन शिरसः शीर्षभावो निपात्यते। | यत् ७० |
| तद् ६३ अर्हति ६३ | ६६. दण्डादिभ्यो यत्<br>तदर्हति इत्येर्थे 'दण्ड' इत्येवमादिभ्यः शब्देभ्यो द्वितीयान्तेभ्यो यत्प्रत्ययो भवति।<br>दण्डमर्हति दण्ड्यः।<br>उपायविशेषः= दण्डः, हस्तावलम्बश्च। | |
| तद् ६३ अर्हति ६३<br>यत् ६५ | ६७. छन्दसि च<br>तदर्हति इत्यर्थे छन्दसि प्रातिपदिकमात्राद् यत्प्रत्ययो भवति।<br>उदक्यः वृत्तयः। यूप्यः पलाशः। गर्त्यो देशः। | |
| तदर्हति ६३<br>यत् ६५ | ६८. पात्राद्घंश्च<br>तदर्हति इत्यर्थे पात्रशब्दाद् द्वितीयान्ताद् घन् प्रत्ययो भवति, चकाराद् यच्च।<br>पात्रमर्हति पात्रियः, पात्र्यः। | |

| | | |
|---|---|---|
| तदर्हति ६३<br>यत् ६५ | ६९. कडङ्कर-दक्षिणाच्छ च<br>तदर्हति इत्यर्थे कडङ्कर शब्दाद्, दक्षिणाशब्दाच्च छः प्रत्ययो भवति, चकारद् यच्च।<br>कडङ्गरेति पाठभेदः काशिकावृत्तौ।<br>कडङ्करम्= माषमुद्गादिकाष्ठं, बुसं वा, तदर्हति इति कडङ्करीयो, कडङ्कर्यो वा गौः। | छः ७० |
| तदर्हति ६३ छः ६९<br>यत् ६५ | ७०. स्थालीबिलात्<br>तदर्हति इत्यर्थे स्थालीबिलशब्दाद् द्वितीयान्तात् छयतौ प्रत्ययौ भवतः।<br>स्थालीबिलम् = स्थाल्याः मुखम्, अर्हति इति स्थालीबिलीयाः, स्थालीबिल्या वा तण्डुलाः। पाकयोग्या इत्यर्थः। | |
| तदर्हति ६३ | ७१. यज्ञर्त्विग्भ्यां घखञौ<br>'तदर्हति' इत्यर्थे यज्ञशब्दाद्, ऋत्विक्शब्दाच्च द्वितीयान्ताद् यथासंख्यं घ, खञ्-इत्येतौ प्रत्ययौ भवतः।<br>यज्ञमर्हति इति यज्ञियो ब्राह्मणः।<br>ऋत्विजमर्हति इति आर्त्विजीनो ब्राह्मणः। | |
| तत् ६३ ठञ् १८ | ७२. पारायण-तुरायण-चान्द्रायणं वर्तयति<br>तद् वर्तयति इत्यर्थे पारायण, तुरायण, चान्द्रायण-इत्येतभ्यः शब्देभ्यो द्वितीयान्तेभ्यः ठञ् प्रत्ययो भवति।<br>पारायणं वर्तयति पारायणिकश्छात्रः।<br>पारायणम् = आदितः आरभ्यान्तपर्यन्तम् अविच्छेदेन वेदाध्ययनम्। वर्तयति इत्यस्यात्र अधीते इत्यर्थः। | |
| तत् ६३ ठञ् १८ | ७३. संशयमापन्नः<br>'संशयमापन्नः' इत्यर्थे संशयशब्दाद् द्वितीयान्तात् ठञ् प्रत्ययो भवति।<br>संशयमापन्नः सांशयिकः।<br>संशयविषयीभूतोऽर्थः इत्यर्थः। अत्र यद्विषयकः संशयस्तत्रैव प्रत्ययो भवति, न तु कर्तरि पुरुषे, अनभिधानात्। | |
| तत् ६३ ठञ् १८ | ७४. योजनं गच्छति<br>योजनं गच्छतीत्यर्थे योजनशब्दाद् द्वितीयान्तात् ठञ् प्रत्ययो भवति।<br>योजनं गच्छति यौजनिकः। | गच्छति ७७ |

| | | |
|---|---|---|
| तत् ६३ गच्छति७४ | ७५. पथः ष्कन्<br>तद् गच्छतीत्यर्थे पथिन्शब्दाद् द्वितीयान्तात् ष्कन् प्रत्ययो भवति।<br>पन्थानं गच्छति पथिकः।<br>स्त्रियां षित्त्वान्ङीष् – पथिकी। | पथः ७६ |
| तत् ६३ गच्छति७४<br>पथः ७५ | ७६. पन्थो ण नित्यम्<br>तद् नित्यं गच्छतीत्यर्थे पथिन्शब्दाद् द्वितीयान्ताद् णः प्रत्ययो भवति, पथः पन्थ इत्यादेशश्च।<br>पन्थानं नित्यं गच्छति पान्थो भिक्षां याचते।<br>नित्यमिति किम् ? पथिकः। अत्र पूर्वसूत्रेण ष्कन्। | |
| गच्छति ७४<br>ठञ् १८ | ७७. उत्तरपथेनाहृतं च<br>उत्तरपथेन आहृतम् इत्यर्थे उत्तरपथशब्दात् तृतीयान्तात् ठञ् प्रत्ययो भवति, चकाराद् उत्तरपथेन गच्छति इत्यर्थेऽपि।<br>उत्तरपथेन आहृतं , गच्छति वा इति औत्तरपथिकम्। | |
| | ७८. कालात्<br>'व्युष्टादिभ्योऽण् (५.१.९७) इत्यतः प्राक् 'कालात्' इत्यस्याधिकारः।<br>तेन 'तेन निर्वृत्तम् (५.१.७९) इत्यनेन मासेन निर्वृत्तं मासिकम् इत्यत्र कालवाचकान्मासशब्दात् प्रत्ययो दृश्यते। | कालात् ९६ |
| कालात् ७८<br>ठञ् १८ | ७९. तेन निर्वृत्तम्<br>तेन निर्वृत्तम् इत्यर्थे कालवाचकाद तृतीयान्तात् ठञ् प्रत्ययो भवति। अह्ना निर्वृत्तम् = निष्पादितम् इति आह्निकम्। मासेन निर्वृत्तं मासिकम्। | तेन निर्वृत्तम्९२ |
| कालात् ७८<br>ठञ् १८ | ८०. तमधीष्टो भृतो भूतो भावी<br>तम् अधीष्टः, भृतः, भूतः, भावी वेत्यर्थे कालवाचकाद् द्वितीयान्तात् ठञ्प्रत्ययो भवति।<br>अधीष्टः= सत्कारपूर्वको व्यापारितः। भृतः= वेतनेन क्रीतः। भूतः= स्वसत्तया व्याप्तकालः। भावी स्वसत्तया व्याप्स्यमानकालः।<br>मासमधीष्टो मासिकोऽध्यापकः।<br>मासं भृतो मासिकः कर्मकरः।<br>मासं भूतो मासिको व्याधिः।<br>मासं भावी मासिक उत्सवः। | सम्पूर्णसूत्रम्९२ |

| | | |
|---|---|---|
| तम् ८० भूतः ८० | ८१. मासाद्वयसि यत्खञौ<br>अत्र 'भूतः' इत्येवानुवर्तते, न ह्यर्थान्तरे प्रत्यये तदन्तेन वयो गम्यते।<br>सूत्रार्थः - तम् भूतः इत्यर्थे मासशब्दाद् यत्, खञ्-इत्येतौ प्रत्ययौ भवतः, वयस्यभिधेये। मासं भूतो मास्यः, मासीनः। | मासात् ८२ |
| तम् ८० मासात् ८१ वयसि ८१ भूतः ८० | ८२. द्विगोर्यप्<br>तम् भूत इत्यर्थे मासान्ताद् द्विगोर्यप् प्रत्ययो भवति, वयस्यभिधेये।<br>द्वौ मासौ भूतो द्विमास्यः। | यप् ८३ |
| वयसि ८१ तम् ८० भूतः ८० यप् ८२ ठञ् १८ | ८३. षण्मासाण्ण्यच्च<br>तम् भूत इत्यर्थे षण्मासशब्दाद् ण्यत्प्रत्ययः, यप् प्रत्ययः, ठञ् प्रत्ययश्च भवति, वयस्यभिधेये।<br>षण्मासान् भूतं षाण्मास्यः,<br>षण्मास्यः, षाण्मासिकः। | षण्मासात् ण्यत्८४ |
| तम् ८० षण्मासात् ८३ ण्यत् ८३ | ८४. अवयसि ठंश्च<br>तम् भूत इत्यर्थे षण्मासशब्दाद् ठन्प्रत्ययो भवति, चकाराद् ण्यच्च अवयस्यभिधेये।<br>षण्मासिको रोगः। षाणमास्यः। | |
| तम् ८० अधीष्टादिषु८० | ८५. समायाः खः<br>तमधीष्टो, भृतो, भूतो, भावी वेत्यर्थे 'समा' इति कालवाचकाद् द्वितीयान्तात् खः प्रत्ययो भवति।<br>समाशब्दः संवत्सरवाचकः।<br>समामधीष्टो, भृतो, भूतो, भावी वा समीनः। | समायाः८६ खः८८ |
| तेन ७९ तम् ८० समायाः ८५ निर्वृत्तादिषु पञ्चसु ७९.८० खः ८५ | ८६. द्विगोर्वा<br>समाशब्दान्ताद् द्विगोः खः प्रत्ययो वा भवति, तेन निवृत्तमित्याद्यर्थेषु।<br>पक्षे ठञ्।<br>'तेन परिजय्यलभ्यकार्यसुकरम्' (५.१.९३) इत्यतः प्राक् तेन निर्वृत्तम्, तमधीष्टः, तं भृतः, तं भूतः, तं भावी इति पञ्चस्वर्थेषु यथायोगं प्रत्ययाः भवन्ति।<br>द्विसमीनः। द्वैसामिकः। भृतः,<br>द्वाभ्यां समाभ्यां निर्वृत्तः, द्वे समे अधीष्टः, भृतः, भूतः, भावी वा इति विग्रहः। | द्विगोः८९ वा ८८ |

| | | |
|---|---|---|
| तेन ७६ तम् ८०<br>द्विगोः ८६<br>निर्वृत्तादिषु<br>पञ्चसु ७६.८०<br>खः८५ वा ८६ | ८७. रात्र्यहः-संवत्सराच्च<br>रात्रि, अहन्, संवत्सर - इत्येवमन्ताद् द्विगोः 'तेन निर्वृत्तम्' इत्यादिष्वर्थेषु खः प्रत्ययो वा भवति। पक्षे ठञ्।<br>द्विरात्रीणः, द्वैरात्रिकः।<br>द्व्यहीनः, द्वैयह्निकः।<br>द्विसंवत्सरीणः, द्विसांवत्सरिकः।<br>'संख्यायाः संवत्सरसंख्यस्य च' इत्युत्तरपदवृद्धिः। | |
| तम् ८० तेन ७६<br>द्विगोः ८६<br>निर्वृत्तादिषु पञ्चसु<br>७६.८०<br>खः८५<br>वा ८६ | ८८. वर्षाल्लुक् च<br>वर्षशब्दान्ताद् द्विगोः खप्रत्ययो वा भवति, पक्षे ठञ्, वा च तयोर्लुक्, निर्वृत्तादिष्वर्थेषु।<br>द्विवर्षीणः,द्विवार्षिकः, द्विवर्षो वा व्याधिः। | वर्षात् ८६ |
| तम् ८० तेन ७६<br>द्विगोः ८६<br>निर्वृत्तादिषु पञ्चसु<br>७६.८० खः८५<br>वा ८६ वर्षात् ८८<br>लुक् ८८ | ८९. चित्तवति नित्यम्<br>वर्षशब्दान्ताद् द्विगोः परस्य खस्य, ठञश्च नित्यं लुग्भवति, निर्वृत्तादिष्वर्थेषु, प्रत्ययान्तेन चित्तवति = प्रणिनि अभिधेये।<br>द्विवर्षो दारकः। दारकः=बालकः। | |
| | ९०. षष्टिकाः षष्टिरात्रेण पच्यन्ते<br>षष्टिरात्रेण पच्यन्ते इत्यर्थे 'षष्टिक' इति शब्दो निपात्यते।<br>सूत्रे बहुवचनमतन्त्रम्।<br>षष्टिरात्रेण पच्यन्ते इति षष्टिकाः।<br>धान्यविशेषस्य संज्ञैषा। | |
| तेन ७६ तम् ८०<br>निर्वृत्तादिषु ७६.८० | ९१. वत्सरान्ताच्छश्छन्दसि<br>वत्सरान्तात्प्रातिपदिकाद् निर्वृत्तादिष्वर्थेषु छः प्रत्ययो भवति।<br>इद्वत्सरीयः। इदावत्सरीयः।<br>"इद्वत्सर-इदावत्सरशब्दौ पञ्चवर्षे युगे द्वयोर्वषयोः संज्ञे। एवं संवत्सर-परिवत्सरशब्दावपि" इति पदमञ्जरी। | सम्पूर्णसूत्रम् ९२ |
| तेन ७६ तम् ८०<br>निर्वृत्तादिषु ७६.८०<br>छः ९१<br>वत्सरान्तात्९१<br>छन्दसि ९१ | ९२. संपरिपूर्वात्ख च<br>संपरिपूर्वाद् वत्सरान्तात् प्रातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः प्रत्ययो भवति, चकाराच्छश्च।<br>संवत्सरीणः, संवत्सरीया।<br>परिवत्सरीणम्, परिवत्सरीया। | |

| | | |
|---|---|---|
| ठञ् १८ कालात् ७८ | ९३. तेन परिजय्य-लभ्य-कार्य-सुकरम्<br>तेन परिजय्यम्, लभ्यम्, कार्यम्, सुकरम्-इत्येतेष्वर्थेषु कालवाचकात् तृतीयान्तात् ठञ् प्रत्ययो भवति।<br>मासेन परिजय्यः = परिजेतुं शक्यः मासिको व्याधिः।<br>मासेन लभ्यः मासिकः पटः।<br>मासेन कार्यं मासिकं चान्द्रायणम्।<br>मासेन सुकरो मासिकः प्रासादः। | |
| ठञ् १८ कालात् ७८ | ९४. तदस्य ब्रह्मचर्यम्<br>तदस्येत्यर्थे कालवाचकात् प्रथमान्तात् ठञ् प्रत्ययो भवति, ब्रह्मचर्यं चेद् विशेष्यम्।<br>मासो ब्रह्मचर्यमस्येति मासिकं ब्रह्मचर्यम्।<br>(वा०) महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम्।<br>माहानामिकम्। गौदानिकम्। आदित्यव्रतिकम्।<br>(वा०) अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः।<br>अवान्तरदीक्षां चरति अवान्तरदीक्षी। तिलव्रती। | |
| ठञ् १८ | ९५. तस्य च दक्षिणा-यज्ञाख्येभ्यः<br>तस्य दक्षिणा इत्यर्थे यज्ञविशेषवाचिभ्यः शब्देभ्यः षष्ठ्यन्तेभ्यः ठञ् प्रत्ययो भवति।<br>अग्निष्टोमस्य दक्षिणा इति आग्निष्टोमिकी दक्षिणा। | |
| कालात् ७८ | ९६. तत्र च दीयते कार्यं भववत्<br>तत्र दीयते इत्यर्थे, तत्र कार्यम् इत्यर्थे च कालवाचकाच्छब्दात् सप्तम्यन्ताद् भववत् प्रत्ययो भवति।<br>अर्थात् 'तत्र भवः'(४.३.५३) इतिप्रकरणे 'तत्र भव' इत्यर्थे कालवाचकात् यः प्रत्ययः यस्याः प्रकृतेर्विहितः स प्रत्ययः, तस्याः प्रकृतेश्च तत्र दीयते, तत्र कार्यमित्यर्थेऽपि भवति।<br>मासे दीयते, मासे कर्यं वा मासिकम्।<br>एवमेव-सांवत्सरिकम्,प्रावृषेण्यम्, वासन्तिकम्,वासन्तम् इत्यादि। | तत्र ९७ दीयते कार्यम् ९८ |
| तत्र दीयते कार्यम्९६ | ९७. व्युष्टादिभ्योऽण्<br>तत्र दीयते, कार्यम् वेत्यर्थे 'व्युष्ट' इत्येवमादिभ्यः शब्देभ्यः सप्तम्यन्तेभ्योऽण् प्रत्ययो भवति।<br>व्युष्टम्= प्रभातम्, तत्र दीयते, तत्र कार्यं वा वैयुष्टम्।<br>(वा०) अण्प्रकरणे अग्निपदादिभ्य उपसंख्यानम्।<br>आग्निपदम्। पैलुपदम्। | |

| | | |
|---|---|---|
| दीयते९६ कार्यम्९६ | ९८. तेन यथाकथाच-हस्ताभ्यां णयतौ<br>तेन दीयते, कार्यं वेत्यर्थे यथाकथाच, हस्त-इत्येताभ्यां तृतीयान्ताभ्यां यथासंख्यं णयतौ प्रत्ययौ भवतः।<br>यथाकथाचशब्दोऽव्ययसंघातः अनादरेऽर्थे वर्तते।<br>यथाकथाच दीयते, कार्यं वा याथाकथाचम्। हस्तेन दीयते, कार्यं वा हस्त्यम्। | |
| तेन ९८ ठञ् १८ | ९९ संपादिनि<br>तेन सम्पादी (अवश्यं शोभते) इत्यर्थे तृतीयान्तात् ठञ् प्रत्ययो भवति।<br>कर्णवेष्टकाभ्यां सम्पादि मुखं कार्णवेष्टिकम् मुखम्।<br>कर्णवेष्टकम् कर्णाभरणम्।<br>कार्णवेष्टिकम् मुखम् इत्यस्य कर्णाभरणाभ्यां मुखम् अवश्यं शोभते इत्यर्थः। | सम्पादिनि १०० |
| तेन९८<br>सम्पादिनि९९ | १००. कर्मवेषाद्यत्<br>'तेन सम्पादी' इत्यर्थे कर्मन्, वेष-इत्येताभ्यां तृतीयान्ताभ्यां यत्प्रत्ययो भवति।<br>कर्मणा सम्पद्यते= अवश्यं शोभते इति कर्मण्यं शरीरम्। कर्म= व्यायामः।<br>वेषेण सम्पद्यते अवश्यं शोभते इति वेष्यो नटः। | |
| ठञ् १८ | १०१. तस्मै प्रभवति सन्तापादिभ्यः<br>तस्मै प्रभवति इत्यर्थे सन्तापादिभ्यः शब्देभ्यः चतुर्थ्यन्तेभ्यः ठञ् प्रत्ययो भवति।<br>प्रभवति=समर्थो भवति।<br>सन्तापाय प्रभवति सान्तापिकः।<br>संग्रामाय प्रभवति सांग्रामिकः। | तस्मै<br>प्रभवति १०३ |
| तस्मै १०१<br>प्रभवति१०१<br>ठञ् १८ | १०२. योगाद्यच्च<br>तस्मै प्रभवतीत्यर्थे योगशब्दाच्चतुर्थ्यन्ताद् यत्प्रत्ययो भवति, चकाराट्ठञ् च।<br>योगः=सम्बन्धः।<br>योगाय प्रभवति योग्यः, यौगिकः। | |
| तस्मै १०१<br>प्रभवति१०१<br>ठञ् १८ | १०३. कर्मण उकञ्<br>'तस्मै प्रभवति' इत्यर्थे कर्मन् शब्दाद् उकञ् प्रत्ययो भवति।<br>कर्मणे प्रभवति कार्मुकं धनुः।<br>धनुषोऽन्यत्र न भवति, अनभिधानात्। | |

| | | |
|---|---|---|
| ठञ् १८ | १०४. समयस्तदस्य प्राप्तम्<br>'तदस्य प्राप्तम्' इत्यर्थे समयशब्दात् प्रथमान्तात् ठञ् प्रत्ययो भवति।<br>समयः प्राप्तोऽस्य कार्यस्य सामयिकं कार्यम्। | तदस्य ११४<br>प्राप्तम् १०७ |
| तदस्य प्राप्तम् १०४ | १०५. ऋतोरण्<br>'तदस्य प्राप्तम्' इत्यर्थे ऋतुशब्दात् प्रथमान्तात् ठक् प्रत्ययो भवति।<br>ऋतुः प्राप्तोऽस्य आर्त्तवं पुष्पम्।<br>(वा०) ऋतोरण्प्रकरणे उपवस्त्रादिभ्य उपसंख्यानम्।<br>उपवस्ता प्राप्तोऽस्य औपवस्त्रम्। प्राशिता प्राप्तोऽस्य प्राशित्रम्। | ऋतोः १०६ |
| तदस्य प्राप्तम् १०४<br>ऋतोः १०५ | १०६. छन्दसि घस्<br>'तदस्य प्राप्तम्' इत्यर्थे ऋतुशब्दाच्छन्दसि विषये घस् प्रत्ययो भवति।<br>अयं ते योनिर्ऋत्वियः। | |
| तदस्य प्राप्तम् १०४ | १०७. कालाद्यत्<br>'तदस्य प्राप्तम्' इत्यर्थे कालशब्दाद् यत्प्रत्ययो भवति।<br>कालः प्राप्तोऽस्य काल्यस्तापः।<br>कालः प्राप्तोऽस्य काल्यं शीतम्। | कालात् १०८ |
| तदस्य १०४<br>कालात् १०७ | १०८. प्रकृष्टे ठञ्<br>तदस्य प्राप्तम् इत्यर्थे प्रकर्षे वर्तमानात् कालशब्दात् प्रथमान्तात् ठञ् प्रत्ययो भवति।<br>प्रकृष्टो = दीर्घः, कालोऽस्येति कालिकमृणम्।<br>ठञधिकारे पुनष्ठञ्ग्रहणं स्पष्टार्थम्। | |
| तदस्य १०४ ठञ्१८ | १०९. प्रयोजनम्<br>'तदस्य प्रयोजनम्' इत्यर्थे प्रथमान्तात् ठञ् प्रत्ययो भवति।<br>इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम्।<br>इन्द्रमहः = इन्द्रोत्सवः। प्रयोजनम् = फलं, कारणं च। | प्रयोजनम् ११४ |

| | | |
|---|---|---|
| तदस्य १०४<br>प्रयोजनम् १०९ | **११०. विशाखाषाढादण् मन्थदण्डयोः**<br>'तदस्य प्रयोजनम्' इत्यर्थे विशाखाशब्दात् आषाढशब्दाच्च प्रथमान्ताद् अण् प्रत्ययो भवति, यथासंख्यं मन्थे, दण्डे चाऽभिधेये।<br>विशाखा प्रयोजनमस्य वैशाखो मन्थः।<br>मन्थः=विलोडनदण्डाधारः काष्ठविशेषः।<br>आषाढः प्रयोजनमस्य आषाढो दण्डः।<br>आषाढः = व्रतिनां दण्डः।<br>(वा०) चूडादिभ्य उपसंख्यानम्।<br>चूडा प्रयोजनमस्य चौडम्। श्रद्धा प्रयोजनमस्य श्राद्धम्। | |
| तदस्य १०४<br>प्रयोजनम् १०९ | **१११. अनुप्रवचनादिभ्यश्छः**<br>तदस्य प्रयोजनम् इत्यर्थे अनुप्रवचन इत्येवमादिभ्यः शब्देभ्यः प्रथमान्तेभ्यः छः प्रत्ययो भवति।<br>अनुप्रवचनं नाम उपनयनाङ्गं किञ्चित् कर्म आश्वलायनसूत्रे प्रसिद्धम्, तत्प्रयोजनमस्य अनुप्रवचनीयम्।<br>(वा०) स्वर्गादिभ्यो यद्वक्तव्यः।<br>स्वर्गः प्रयोजनमस्य स्वर्ग्यम्। आयुष्यम्। काम्यम्। धन्यम्।<br>(वा०) पुण्याहवाचनादिभ्यो लुग्वक्तव्यः।<br>पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम्।<br>स्वस्तिवाचनम्। शान्तिवाचनम्। | छः ११२ |
| तदस्य १०४<br>प्रयोजनम् १०९<br>छः१११ | **११२. समापनात्सपूर्वदात्**<br>'तदस्य प्रयोजनम्' इत्यर्थे सपूर्वपदात् = विद्यमानपूर्वपदात् समापनशब्दात् प्रथमान्ताच्छः प्रत्ययो भवति।<br>व्याकरणसमापनं प्रयोजनमस्य व्याकरणसमापनीयम्। | |
| तदस्य १०४<br>प्रयोजनम् १०९ | **११३. ऐकागारिकट् चौरे**<br>एकागारं प्रयोजनमस्येत्यर्थे 'ऐकागारिट्' इति निपात्यते, चौरेऽभिधेये।<br>एकागारशब्दाद् इकट्प्रत्ययः आदेरचो वृद्धिश्च निपात्यते। टो ङीबर्थः।<br>एकागारं प्रयोजनमस्य ऐकागारिकश्चौरः। स्त्रियां तु ऐकागारिकी। | |

| | | |
|---|---|---|
| तदस्य १०४<br>प्रयोजनम् १०६ | ११४. आकालिकडाद्यन्तवचने<br>समानकालौ आद्यन्तौ अस्येत्यर्थे 'आकालिकट्' इति निपात्यते। तत्र समानकालशब्दस्य 'आकाल' इत्यादेशः, इकट् प्रत्ययश्च निपात्यते।<br>समानकालौ आद्यन्तौ अस्य इति आकालिकः स्तनयित्नुः। आकालिकी विद्युत्।<br>जन्मना तुल्यकालविनाशा इत्यर्थः। | |
| | ११५. तेन तुल्यं क्रिया चेद्वतिः<br>तेन तुल्यमित्यर्थे तृतीयान्ताद् वतिः प्रत्ययो भवति, यत् तुल्यं क्रिया चेत्सा भवति।<br>ब्राह्मणेन तुल्यं वर्त्तते ब्राह्मणवत्। | वतिः ११८ |
| वतिः ११५ | ११६. तत्र तस्येव<br>'तत्र इव' इत्यर्थे सप्तम्यन्ताद्, तस्येव इत्यर्थे च षष्ठ्यन्ताद् वतिः प्रत्ययो भवति।<br>मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः। देवदत्तस्येव देवदत्तवद् यज्ञदत्तस्य गावः। | |
| वतिः ११५ | ११७. तदर्हम्<br>तदिति द्वितीयान्ताद् अर्हम् इत्यर्थे वतिः प्रत्ययो भवति।<br>अर्हम् इत्यस्य अर्हति इत्यर्थः, पचाद्यच, सूत्रे तदित्यत्र कर्मणि अर्हमिति कृदन्तयोगे यद्यपि पष्ठी प्राप्ता तथापि सौत्रत्वाद् द्वितीया।<br>विधिम् अर्हति = लब्धुं योग्यं भवति इति विधिवत्पूज्यते हरिः। | |

| वतिः ११५ | ११८. उपसर्गाच्छन्दसि धात्वर्थे<br>ससाधने धात्वर्थे वर्तमानाद् उपसर्गात्स्वार्थे वतिः प्रत्ययो भवति।<br>सूत्रस्यायमाशयः - उपसर्गाः प्रादयः, ते चैवमात्मकाः भवन्ति - क्रियाया विशेषकाः, ससाधनक्रियावाचकाश्च। यत्र उपसर्गेण सह क्रियावाचकशब्दस्यापि प्रयोगो भवति, तत्र उपसर्गाः क्रियाया विशेषका भवन्ति। यथा आग्च्छति, प्रगच्छति इत्यादौ।<br>यत्र क्रिया न प्रयुज्यतेऽपि तु केवलमुपसर्गा एव प्रयुज्यन्ते तत्र उपसर्गाः ससाधनक्रियावाचकाः भवन्ति। यथा- निष्कौशाम्बिः, अतिमाल इत्यादौ निर् इति निंष्क्रान्तवाचकः, अति इति च अतिक्रान्तवाचकः। अनेन सूत्रेण ससाधनक्रियावाचकेभ्यः वतिप्रत्ययो विधीयते।<br>सूत्रस्योदाहरणम् - यदुद्वतो निवतो यासि वत्सद्। अत्र उद् इत्यस्य उद्गतानि, नि इत्यस्य निगतानि इत्यर्थः। | |
|---|---|---|
| | ११९. तस्य भावस्त्वतलौ<br>तस्य भाव इत्यर्थे षष्ठ्यन्तात् त्व, तल् - इत्येतौ प्रत्ययौ भवतः।<br>प्रकृतिजन्यबोधे प्रकारो भावः। प्रकार एव शब्दस्य प्रवृत्तिनिमित्तमिति शब्दस्य प्रवृत्तिनिमितं भावशब्देनोच्यते।<br>अश्वस्य भावः अश्वत्वम्, अश्वता।<br>गोत्वम्, गोता। | सम्पूर्णसूत्रम्१३६ |
| | १२०. आ च त्वात्<br>'ब्रह्मणत्वः' (५.१.१३६) इति यावद् त्वतलौ अधिक्रियेते।<br>वचनमिदम् अपवादैः सह समावेशार्थं, कर्मणि च विधानार्थम्। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। तेन पृथोर्भावः प्रथिमा, पार्थवम्, पृथुत्वम्, पृथुता इत्यादौ इमनिजाद्यपवादैः सह त्वतलौ प्रत्ययावपि भवतः। | |

| | | |
|---|---|---|
| | **१२१. न नञ्पूर्वात्तत्पुरुषादचतुर-संगत-लवण-वट-युध-कत-रस-लसेभ्यः**<br>अधिकारसूत्रमेतत्। आपादमस्याधिकारः।<br>सूत्रार्थः - इत उत्तरे ये भावप्रत्ययास्ते नञ्पूर्वात् तत्पुरुषान्न भवन्ति, चतुर, सङ्गत, लवण, वट, बुध, कत, रस, लस इत्येतदन्तान् तत्पुरुषान् वर्जयित्वा।<br>अपतित्वम्, अपतिता।<br>अत्र 'पत्यन्तपुरोहितादिभ्यो यक् (५.१.१२८) इति वक्ष्यमाणेन सूत्रेण यक् प्रत्ययो न भवति।<br>नञ्पूर्वादितिकिम् ? वार्हस्पत्यम्। अत्र 'पत्यन्त (५.१.१२८) इत्यनेन यक्प्रत्ययो भवत्येव। | |
| तस्य भावः ११९ | **१२२. पृथ्वादिभ्य इमनिज्वा**<br>'तस्य भाव' इत्यर्थे 'पृथु' इत्येवमादिभ्यः षष्ठ्यन्तेभ्यः इमनिच् प्रत्ययो वा भवति। वावचनमणादेः समावेशार्थम्।<br>पृथोर्भावः प्रथिमा, पार्थवम्। म्रदिमा, मार्दवम्। | इमनिच् १२३ |
| तस्य भावः ११९<br>इमनिच् १२२ | **१२३. वर्ण-दृढादिभ्यः ष्यञ् च**<br>तस्य भावः इत्यर्थे वर्णविशेषवाचिभ्यः, दृढादिभ्यश्च ष्यञ् प्रत्ययो भवति, चकाराद् इमनिच् च।<br>वर्णात् - शुक्लस्य भावः शौक्ल्यम्, शुक्लिमा, शुक्लत्वम्, शुक्लता।<br>दृढादिभ्यः- दृढस्य भावः दार्ढ्यम्, द्रढिमा, दृढत्वम्, दृढता। | ष्यञ् १२४ |

| | | |
|---|---|---|
| तस्य भावः ११९<br>इमनिच् १२२ | १२४. गुणवचन-ब्राह्मणादिभ्यः कर्मणि च<br>गुणवचनेभ्यो, ब्राह्मणादिभ्यश्च षष्ठ्यन्तेभ्यः कर्मणि ष्यञ् प्रत्ययो भवति, चकाराद् भावे च।<br>कर्मात्र क्रिया।<br>गुणवचनेभ्यः - जडस्य भावः, कर्म वा जाड्यम्।<br>मूढस्य भावः मौढ्यम्।<br>ब्राह्मणादिभ्यः -ब्राह्मणस्य भावः, कर्म वा ब्राह्मण्यम्।<br>(वा०) चातुवर्ण्यादीनां स्वार्थ उपसंख्यानम्।<br>चत्वार एव वर्णाः चातुवर्ण्यम्। त्रैलोक्यम्।<br>षाड्गुण्यम्। सैन्यम्। सान्निध्यम्। सामीप्यम्।<br>औपम्यम्। सौख्यम्।<br>(वा०) अर्हतो नुम् च।<br>अर्हतो भावः आर्हन्त्यम्। आर्हन्ती।<br>षित्त्वान्ङीप्,'हलस्तद्धितस्य' इति यलोपः।<br>(वा०) चतुर्वेदादिभ्य उभयपदवृद्धिश्च।<br>चातुर्वैद्यम्। | कर्मणि १३६ |
| तस्य ११९<br>भावकर्मणोः<br>११९,१२४ | १२५. स्तेनाद्यन्नलोपश्च<br>स्तेनशब्दात्षष्ठ्यन्ताद् भावकर्मणोर्यत्प्रत्ययो भवति, नशब्दस्य लोपश्च।<br>'न' इति सङ्घातग्रहणम्।<br>स्तेनस्य भावः,कर्म वा स्तेयम्।<br>स्तेनः = चौरः। | |
| तस्य ११९<br>भावकर्मणोः<br>११९,१२४ | १२६. सख्युर्यः<br>सखि शब्दाद् यः प्रत्ययो भवति, भावकर्मणोरर्थयोः।<br>सख्युर्भावः, कर्म वा सख्यम्। | |
| तस्य ११९<br>भावकर्मणोः<br>११९,१२४ | १२७. कपि-ज्ञात्योर्ढक्<br>कपि-ज्ञातिशब्दाभ्यां ढक्प्रत्ययो भवति, भावकर्मणोरर्थयोः।<br>कपेर्भावः, कर्म वा कापेयम्।<br>ज्ञातेर्भावः, कर्म वा ज्ञातेयम्। | |
| तस्य ११९<br>भावकर्मणोः<br>११९,१२४ | १२८. पत्यन्त-पुरोहितादिभ्यो यक्<br>पत्यन्तात् प्रातिपदिकात्, पुरोहितादिभ्यश्च यक् प्रत्ययो भवति, भावकर्मणोरर्थयोः।<br>पत्यन्तात्- सेनापतेर्भावः, कर्म वा सैनापत्यम्।<br>गार्हपत्यम्। प्राजापत्यम्।<br>पुरोहितादिभ्यः- पुरोहितस्य भावः, कर्म वा पौरोहित्यम्। | |

| | | |
|---|---|---|
| तस्य ११६<br>भावकर्मणोः<br>११६,१२४ | १२६. प्राणभृज्जाति-वयोवचनोद्गात्रादिभ्यो ऽञ्<br>प्राणभृज्जातिवाचिभ्यः प्रातिपदिकेभ्यो, वयोवचनेभ्यः, उद्गातृ इत्येवमादिभ्यश्च अञ् प्रत्ययो भवति, भावकर्मणोरर्थयोः।<br>प्राणभृत् - अश्वस्य भावः, कर्म वा आश्वम्। औष्ट्रम्।<br>वयोवचनेभ्यः - कुमारस्य भावः, कर्म वा कौमारम्। कैशोरम्।<br>उद्गात्रादिभ्यः - उद्गातुर्भावः, कर्म वा औद्गात्रम्। उन्नेतुर्भावः, कर्म वा औद्गात्रम्। | |
| तस्य ११६<br>भावकर्मणोः<br>११६,१२४ | १३०. हायनान्त-युवादिभ्यो ऽण्<br>हायनान्तेभ्यः, 'युवन्' इत्येवमादिभ्यश्च प्रातिपदिकेभ्यश्च अण् प्रत्ययो भवति, भाव कर्मणोरर्थयोः।<br>हायनान्तेभ्यः - द्वैहायनम्। त्रैहायनम्।<br>युवादिभ्यः - यौवनम्। स्थाविरम्। | अण् १३१ |
| तस्य ११६<br>भावकर्मणोः<br>११६,१२४<br>अण् १३० | १३१. इगन्ताच्च लघुपूर्वात्<br>लघुपूर्वो य इक् तदन्तात्प्रातिपदिकाद् अण् प्रत्ययो भवति, भावकर्मणोरर्थयोः।<br>शुचेर्भावः, कर्म वा शौचम्।<br>मुनेर्भावः, कर्म वा मौनम्।<br>एवमेव लाघवम्, गौरवम्, पाटवम् इत्यादि।<br>कथं काव्यमिति ? ब्राह्मणादिषु कविशब्दो द्रष्टव्यः। | |
| तस्य ११६<br>भावकर्मणोः<br>११६,१२४<br>अण् १३० | १३२. योपधाद्गुरूपोत्तमाद् वुञ्<br>यकारोपधाद् गुरूपोत्तमाद् वुञ् प्रत्ययो भवति।<br>रमणीयस्य भावः, कर्म वा रामणीयकम्।<br>अभिधानीयस्य भावः, कर्म वा आभिधानीयकम्। | वुञ् १३४ |
| तस्य ११६<br>भावकर्मणोः<br>११६,१२४<br>वुञ् १३२ | १३३. द्वन्द्व-मनोज्ञादिभ्यश्च<br>द्वन्द्वसंज्ञकसमासेभ्यः, 'मनोज्ञ' इत्येवमादिभ्यश्च वुञ् प्रत्ययो भवति, भावकर्मणोः।<br>द्वन्द्वात्- गोपालपशुपालानां भावः,कर्म वा गौपालपशुपालिका।<br>मनोज्ञादिभ्यः - मनोज्ञस्य भावः, कर्म वा मानोज्ञकम्। | |

| | | |
|---|---|---|
| तस्य ११६<br>भावकर्मणोः<br>११६,१२४<br>वुञ् १३२ | १३४. गोत्र-चरणाच्छ्लाघात्याकार-तदवेतेषु<br>गोत्रवाचिनः, चरणवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति, भावकर्मणोरर्थयोः, श्लाघादिषु गम्येषु।<br>श्लाघा = विकत्थनं, प्रशंसा वा।<br>अत्याकारः = अधिक्षेपः, तिरस्कारो वा।<br>तदवेतः = तत्प्राप्तः, तज्ज्ञश्च।<br>तदिति गोत्रचरणयोर्भावकर्मणी निर्दिश्येते।<br>गोत्रात्- गार्ग्यस्य भावः गार्गिका।<br>चरणात्- कठस्य भावः काठिका। | |
| तस्य ११६<br>भावकर्मणोः<br>११६,१२४ | १३५. होत्राभ्यश्छः<br>ऋत्विग्विशेषवाचिभ्यः छः प्रत्ययो भवति, भाकर्मणोः।<br>होत्राशब्दः ऋत्विग्विशेषवाची स्त्रीलिङ्गः।<br>बहुवचनाद्विशेषग्रहणम्।<br>अच्छावाकस्य भावः, कर्म वा अच्छावाकीयम्। | होत्राभ्यः१३६ |
| तस्य ११६<br>भावकर्मणोः ११६,<br>१२४<br>होत्राभ्यः१३५ | १३६. ब्रह्मणस्त्वः<br>होत्रावाचिनः ब्रह्मन् इति शब्दात् त्वः प्रत्ययो भवति, भावकर्मणोः ।<br>ब्रह्मणो भावः, कर्म वा ब्रह्मत्वम्।<br>'न' इति वक्तव्ये त्ववचनं तलो बाधनार्थम्।<br>यस्तु जातिशब्दो ब्राह्मणपर्यायो ब्रह्मन्शब्दः, ततस्त्वतलौ भवत एव - ब्रह्मत्वम्, ब्रह्मता।<br>भवनावधिकयोर्नञ्स्नञोरधिकारः समाप्तः। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां पञ्चमाध्यायस्य प्रथमः पादः ।।

।। श्रीः ।।

## ।। अथ पञ्चमाध्यायस्य द्वितीयः पादः ।।

| | | |
|---|---|---|
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः४.१.७६ | १. धान्यानां भवने क्षेत्रे खञ्<br>धान्यानां भवनं क्षेत्रमित्यर्थे धान्यविशेषवाचिभ्यः प्रातिपदिकेभ्यः खञ् प्रत्ययो भवति।<br>भवनम्= उत्पत्तिस्थानम्।<br>मुद्गाानां भवनं क्षेत्रम् मौद्गीनम्। | भवने क्षेत्रे ४ |
| भवने १ क्षेत्रे १ | २. व्रीहिशाल्योर्ढक्<br>धान्यानां भवनं क्षेत्रमित्यर्थे व्रीहि-शालि शब्दाभ्यां ठक् प्रत्ययो भवति।<br>व्रीहीणां भवनं क्षेत्रं व्रैहेयं क्षेत्रम्।<br>शालीनां भवनं क्षेत्रं शालेयं क्षेत्रम्। | |
| भवने १ क्षेत्रे १ | ३. यव-यवक-षष्टिकाद्यत्<br>धान्यानां भवनं क्षेत्रमित्यर्थे यव, यवक, षष्टिक इत्येतेभ्यः यत् प्रत्ययो भवति।<br>यवानां भवनं क्षेत्रं यव्यम्। यवक्यम्। षष्टिक्यम्। | यत् ४ |
| भवने १ क्षेत्रे१<br>यत्३ | ४. विभाषा तिल-माषोमा-भङ्गाणुभ्यः<br>धान्यानां भवनं क्षेत्रमित्यर्थे तिल, माष, उमा, भङ्गा, अणु इत्येतेभ्यो विभाषा यत्प्रत्ययो भवति। पक्षे खञ्।<br>तिल्यम्, तैलीनम्। माष्यम् ,माषीणम्। उम्यम्, औमीनम्। आणव्यम्, आणवीनम्। | |
| | ५. सर्वचर्मणः कृतः खखञौ<br>सर्वः चर्मणा कृत इत्यर्थे सर्वचर्मन् शब्दात् तृतीयान्तात् इत्येतौ खखञौ प्रत्ययौ भवतः। सूत्रे 'सर्वचर्मणः' इत्यत्र असामर्थ्येऽपि निपातनात्समासः।<br>सर्वश्चर्मणा कृतः सर्वचर्मीणः। सार्वचर्मीणः। | |

| | | |
|---|---|---|
| | ६. यथामुख-संमुखस्य दर्शनः खः<br>यथामुखशब्दात्, सम्मुखशब्दाच्च 'तयोः दर्शनः' इत्यर्थे खः प्रत्ययो भवति।<br>दृश्यतेऽस्मिन्निति दर्शनः = आदर्शादिः। मुखस्य सदृशं यथामुखम् = प्रतिबिम्बम्,<br>निपातनात्सादृश्येऽव्ययीभावः। यथामुखं दर्शनो यथामुखीनः आदर्शः, प्रतिबिम्बाश्रय इत्यर्थः।<br>समम्=सर्वं मुखम् इति सम्मुखम्, निपातनाद् समशब्दस्यान्तलोपः, सम्मुखस्य दर्शनः सम्मुखीनः। | खः १५ |
| खः ६ | ७. तत्सर्वादेः पथ्यङ्ग-कर्म-पत्र-पात्रं व्याप्नोति<br>तद् व्याप्नोति इत्यर्थे सर्वशब्दपूर्वकेभ्यः पथिन्, अङ्ग, कर्मन् पत्र, पात्र-इत्येतेभ्यः द्वितीयान्तेभ्यः खः प्रत्ययो भवति।<br>सर्वपथं व्याप्नोति सर्वपथीनो रथः। सर्वाङ्गीणस्तापः। सर्वकर्मीणः पुरुषः। सर्वपत्रीणः सारथिः। सर्वपात्रीण ओदनः। | तद् १७ |
| तद् ७ खः ६ | ८. आप्रंपदं प्राप्नोति<br>तत्प्राप्नोति इत्यर्थे आप्रपदशब्दाद् द्वितीयान्तात् खः प्रत्ययो भवति।<br>आप्रपदं प्राप्नोति इति आप्रपदीनः पटः। | |
| तद् ७ खः ६ | ९. अनुपद-सर्वान्नायानयं बद्धाभक्षयति-नेयेषु<br>अनुपद, सर्वान्न, अयानय इत्येतेभ्यः शब्देभ्यो द्वितीयान्तेभ्यः यथासंख्यं बद्धा, भक्षयति, नेय इत्येतेष्वर्थेषु खः प्रत्ययो भवति।<br>अनुपदं बद्धा इति अनुपदीनः।<br>सर्वान्नानि भक्षयति इति सर्वान्नीनो भिक्षुः।<br>अयानयं नेयः इति अयानयीयः। अयानयः स्थलविशेषो द्यूतक्रीडार्थकफलकविशेषः। | |
| तद् ७ खः ६ | १०. परोवर-परम्पर-पुत्रपौत्रमनुभवति<br>तद् अनुभवति इत्यर्थे परोवर, परम्पर, पुत्रपौत्र-इत्येतेभ्यः शब्देभ्यः द्वितीयान्तेभ्यः खः प्रत्ययो भवति।<br>परांश्चावरांश्चानुभवति परोवरीणः।<br>निपातनादवरस्योत्वम्।<br>परांश्च परतरांश्च अनुभवति इति परम्पारीणः। प्रकृतेः परम्परभावो निपातनात्।<br>पुत्रपौत्रान् अनुभवति पुत्रपौत्रीणः। | |

| | | |
|---|---|---|
| तद् ७ खः ६ | ११. अवारपारात्यन्तानुकामंगामी<br>तद्गामीत्यर्थे अवारपार, अत्यन्त, अनुकाम इत्येतेभ्यः शब्देभ्यः द्वितीयान्तेभ्यः खः प्रत्ययो भवति।<br>अवारपारं गामी अवारपारीणः।<br>(इष्टिः) विगृहीतादपीष्यते।<br>विपरीताच्च।<br>अवारपारीणः,पारीणः,पारावारीणः।<br>अत्यन्तं गामी अत्यन्तीनः।<br>अनुकामं गामी अनुकामीनः। | |
| खः ६ | १२. समांसमां विजायते<br>'समायां समायां विजायते' इत्यर्थे सप्तम्यन्तद्वयात्मकसमुदायात् खः प्रत्ययो भवति।<br>समायां समायां विजायते= गर्भं मुञ्चति इति समांसमीना गौः।<br>पूर्वपदे यलोपोऽवशिष्टविभक्तेरलुक् च निपातनात् सिद्ध्यति।<br>'समांसमीना सा यैव प्रतिवर्षं प्रसूयते' इत्यमरः। (अमरकोषः २.९.७२)<br>उक्तविग्रहविषये अत्रत्यं भाष्यम्, वार्तिकं च द्रष्टव्यम्। | विजायते १३ |
| खः ६<br>विजायते १२ | १३. अद्यश्वीनावष्टब्धे<br>'अद्य श्वो वा विजायते' इत्यर्थे 'अद्यश्वीना' इति शब्दा निपात्यते, अवष्टब्धे गम्ये। अवष्टब्धम् = आसन्नम्।<br>अद्य श्वो वा विजायते इति अद्यश्वीना वडवा। | |
| खः ६ | १४. आगवीनः<br>आङ्पूर्वाद् गो शब्दात् ख प्रत्ययो निपात्यते, स्वामिने गोः प्रत्यपर्णपर्यन्तं यः गोसम्बन्धिकार्यं करोति, तस्मिन्नर्थे।<br>आगवीनः। गोः प्रत्यर्पणपर्यन्तं यः कर्म करोति सः कर्मकरः आगवीनः इत्युच्यते। | |
| खः ६ | १५. अनुग्वलंगामी<br>अनुगु इत्यविभक्तिको निर्देशः। अनुगुशब्दात् खः प्रत्ययो भवति, अलंगामी इत्यर्थे। अलमित्यस्य पर्याप्तमित्यर्थः।<br>गोः पश्चादिति अनुगु, अनुगु पर्याप्तं गच्छतीति अनुगवीनो गोपालकः।<br>'ओर्गुणः' इति गुणः। | अलङ्गामी १७ |

| | | |
|---|---|---|
| तद् ७<br>अलङ्गामी १५ | १६. अध्वनो यत्खौ<br>तद् अलङ्गामीत्यर्थे अध्वन्शब्दाद् द्वितीयान्ताद् यत्, ख प्रत्ययौ भवतः।<br>अध्वानमलङ्गामी अध्वन्यः , अध्वनीनः।<br>'ये चाऽभावकर्मणोः, 'आत्माध्वानौ खे' इति प्रकृतिभावः। | यत्खौ १७ |
| तद् ७<br>अलङ्गामी १५<br>यत्खौ १६ | १७. अभ्यमित्राच्छ च<br>तद् अलङ्गामी इत्यर्थे अभ्यमित्रशब्दात् छः प्रत्ययो भवति, चकाराद् यत्खौ च।<br>अभ्यमित्रम् = अमित्राभिमुखम् अलङ्गामी इति अभ्यमित्रीयः, अभ्यमित्र्यः, अभ्यमित्रीणः।<br>अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः। | |
| | १८. गोष्ठात् खञ् भूतपूर्वे<br>भूतपूर्वोपाधिकाद् गोष्ठशब्दात् स्वार्थे खञ् प्रत्ययो भवति।<br>भूतपूर्व इति प्रकृतिविशेषणम्।<br>गोष्ठो भूतपूर्व इतिं गौष्ठीनो देशः।<br>भूतपूर्वग्रहणं किम् ? गोष्ठो वर्तते। | खञ् २३ |
| खञ् १८ | १९. अश्वस्यैकाहगमः<br>'अश्वस्यैकाहगमः' इत्यर्थेअश्वशब्दात्षष्ठ्यन्तात् खञ् प्रत्ययो भवति।<br>एकाहेन गम्यते इति एकाहागमः।<br>अश्वस्यैकाहगमोऽध्वा इति आश्वीनः। | |
| खञ् १८ | २०. शालीन-कौपीने अधृष्टाकार्ययोः<br>शालीन, कौपीन-इत्येतौ शब्दौ निपात्येते यथा संख्यमधृष्टे, अकार्ये चाभिधेये।<br>अधृष्टः = अप्रगल्भः। अकार्यम् = अकरणार्हं विरुद्धम्।<br>शालाप्रवेशमर्हति इति शालीनोऽधृष्टः।<br>कूपपतनमर्हति इति कौपीनं पापम्। | |
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः४.१.७६<br>खञ् १८ | २१. व्रातेन जीवति<br>व्रातेन जीवति इत्यर्थे व्रातशब्दात् तृतीयान्तात् खञ् प्रत्ययो भवति।<br>व्रातेन = शरीरायासेन जीवति न तु बुद्धिवैभवेन स व्रतीनः। | |

| | | |
|---|---|---|
| खञ् १८ | **२२. साप्तपदीनं सख्यम्**<br>साप्तपदीनमिति शब्दः सख्येऽर्थे निपात्यते।<br>सप्तभिः पदैः = पदविक्षेपैः, अवाप्यते इति साप्तपदीनं सख्यम्। सप्तपदशब्दात् खञ्प्रत्ययोऽत्र निपात्यते। | |
| खञ् १८ | **२३. हैयङ्गवीनं संज्ञायाम्**<br>'हैयङ्गवीनम्' इति निपात्यते संज्ञायां विषये। अनेन ह्योगोदोहशब्दस्य हियङ्गुरादेशो, विकारार्थे खञ् च निपात्यते।<br>ह्योगोदोहस्य विकारो हैयङ्गवीनम्। | |
| खञ् १८ | **२४. तस्य पाकमूले पील्वादि-कर्णादिभ्यः कुणब्जाहचौ**<br>'तस्य पाकः' इत्यर्थे पील्वादिभ्यः, तस्य मूलमित्यर्थे च कर्णादिभ्यश्च यथासंख्यं कुणप् जाहच् प्रत्ययौ भवतः।<br>पीलूनां पाकः पीलुकुणः।<br>कर्णस्य मूलं कर्णजाहम्। | तस्य मूलम् २५ |
| तस्य २४<br>मूलम् २४ | **२५. पक्षात्तिः**<br>तस्य मूलमित्यर्थे पक्षशब्दात् तिः प्रत्ययो भवति।<br>पक्षस्य मूलं पक्षतिः = प्रतिपत्तिथिः , पक्षिणां पक्षमूलं च। | |
| | **२६. तेन वित्तश्चुञ्चुप्-चणपौ**<br>'तेनवित्तः' इत्यर्थे तृतीयान्तात् चुञ्चुप्, चणप् इत्येतौ प्रत्ययौ भवतः।<br>विद्यया वित्तः विद्याचुञ्चुः, विद्याचणः। | |
| | **२७. वि-नञ्भ्यां नानाञौ नसह**<br>नसह= पृथग्भावे वर्तमानाभ्यां वि-नञ्भ्यां स्वार्थे यथासंख्यं ना, नाञ्- इत्येतौ प्रत्ययौ भवतः।<br>विना। नाना। | |
| | **२८. वेः शालच्छङ्कटचौ**<br>ससाधने धात्वर्थे वर्तमानाद् 'वि' इत्युपसर्गात् स्वार्थे शालच्, शङ्कटच् इत्येतौ - प्रत्ययौ भवतः।<br>विशालम्। विशङ्कटम्।<br>विस्तृतमित्यर्थः।<br>'ससाधने धात्वर्थे' इत्यस्य विवरणम् 'उपसर्गाच्छन्दसि धात्वर्थे'(५.१.११८) सूत्रस्य व्याख्याने द्रष्टव्यम्। | वेः |

| | | |
|---|---|---|
| वेः २८ | २९. संप्रोदश्च कटच्<br>ससाधने धात्वर्थे वर्तमानेभ्यः सम्, प्र, उद्- इत्येतेभ्य उपसर्गेभ्यः, चकाराद् वेश्च कटच् प्रत्ययो भवति स्वार्थे।<br>सङ्कटम्, प्रकटम्,उत्कटम्,विकटम्। | कटच् ३० |
| कटच् २९ | ३०. अवात् कुटारच्च<br>ससाधने धात्वर्थे वर्तमानाद् अवेत्युपसर्गात् स्वार्थे कुटारच् प्रत्ययो भवति, चकारात्कटच् च।<br>अवकुटारम्, अवकटम्। अवाचीनम्, अधोमुखं वेत्यर्थः। | अवात् ३१ |
| अवात् ३० | ३१. नते नासिकायाः संज्ञायां टीटञ्-नाटञ्-भ्रटचः<br>ससाधने धात्वर्थे वर्तमानात् अवशब्दात् टीटच्, नाटच्, भ्रटच् इत्येते प्रत्ययाः भवन्ति, नासिकाया नमनेऽभिधेये, संज्ञायाम्।<br>नमनम् = नतम्।<br>नासिकाया नतम् अवटीटम् , अवनाटम्, अवभ्रटम्। | नते नासिकायाः ३३<br>संज्ञायाम् ३४ |
| नते नासिकायाः ३१<br>संज्ञायाम् ३१ | ३२. नेर्बिडज् बिरीसचौ<br>ससाधने धात्वर्थे वर्तमानाद् निशब्दाद् बिडच्, बिरीसच्-इत्येतौ प्रत्ययौ भवतः, नासिकायाः नतेऽभिधेये, संज्ञायाम्।<br>नासिकाया नतम् निबिडम्। निबिरीसम्। | नेः ३३ |
| नते नासिकायाः ३१<br>संज्ञायाम् ३१<br>नेः३२ | ३३. इनच्-पिटच् चिक-चि च<br>ससाधने धात्वर्थे वर्तमानाद् निशब्दात् इनच्, पिटच् इत्येतौ प्रत्ययौ भवतः, तत्संनियोगेन च निशब्दस्य यथासंख्यं चिक, चि- इत्येतौ आदेशौ भवतः, नासिकाया नतेऽभिधेये, संज्ञायाम्।<br>नासिकाया नतं चिकिनम्, चिपिटम्। | |
| संज्ञायाम् ३१ | ३४. उपाधिभ्यां त्यकन्नासन्नारूढयोः<br>यथासंख्यम् आसन्नारूढयोवर्तमानाभ्याम् उप, अधि इत्येताभ्यां स्वार्थे त्यकन् प्रत्ययो भवति, संज्ञायां विषये।<br>पर्वतस्यसन्नं स्थलम् उपत्यका।<br>पर्वतस्य आरूढम्= उच्चस्थलम् अधित्यका।<br>स्त्रीत्वं लोकात्। | |

| | | |
|---|---|---|
| | ३५. कर्मणि घटोऽठच्<br>कर्मणि घट इत्यर्थे कर्मन् शब्दात् सप्तम्यन्ताद्<br>अठच्प्रत्ययो भवति।<br>घटते = व्याप्रियते इति घटः। संलग्नो भवति इत्यर्थः।<br>कर्मणि घटते इति कर्मठः पुरुषः। | |
| | ३६. तदस्य संजातं तारकादिभ्य इतच्<br>तदस्य सञ्जातम् इत्यर्थे 'तारका' इत्येवमादिभ्यः<br>शब्देभ्यः प्रथमान्तेभ्यः इतच् प्रत्ययो भवति।<br>तारकाः सञ्जाता अस्य तारकितं नभः। पुष्पितो वृक्षः। | तदस्य ४७ |
| तदस्य ३६ | ३७. प्रमाणे द्वयसज्-दध्नञ्-मात्रचः<br>तदस्य प्रमाणम् इत्यर्थे प्रथमान्ताद् द्वयसच्, दध्नच्,<br>मात्रच् इत्येते प्रत्ययाः भवन्ति।<br>(श्लोकवार्तिकम्)<br>'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम।'<br>उक्तेषु त्रिषु प्रत्ययेषु प्रथमः,द्वितीयश्च प्रत्ययः<br>ऊर्ध्वमाने भवति,तृतीयश्च अविशषेण। ऊर्ध्वावस्थितेन<br>पदार्थेन यन्मीयते तदूर्ध्वमानम्।<br>ऊरुः प्रमाणमस्य ऊरुद्वयसम्। ऊरुदध्नम्। ऊरुमात्रम्।<br>जानुः प्रमाणमस्य जानुद्वयसम्। जानुदध्नम्। जानुमात्रम्<br>प्रस्थः प्रमाणमस्य प्रस्थमात्रम्।<br>(वा०) प्रमाणे लो वक्तव्यः।<br>लुको 'ल' इति पूर्वाचार्यप्रसिद्धा संज्ञा।<br>प्रमाणेऽर्थे वर्त्तमानात् शब्दांद् विहितस्य प्रत्ययस्य<br>लुग्भवति।<br>शमः प्रमाणमस्य शमः। दिष्टिः। वितस्तिः।<br>(वा०) द्विगोर्नित्यम्।<br>द्वौ शमौ प्रमाणमस्य द्विशमम्।<br>अत्र प्रमाणे विहितस्य मात्रचो लुक्। | प्रमाणे-मात्रचः३८ |
| तदस्य ३६<br>प्रमाणे३७<br>द्वयसज्दध्नञ्-<br>मात्रचः३७ | ३८. पुरुषहस्तिभ्यामण् च<br>'तदस्य प्रमाणम्' इत्यर्थे पुरुष, हस्तिन् इत्येताभ्यामण्<br>प्रत्ययो भवति, चकाराद् द्वयसजादयश्च।<br>पुरुषः प्रमाणमस्य पौरुषम्, पुरुषद्वयसम्। पुरुषदध्नम्।<br>पुरुषमात्रम्। | |
| तदस्य ३६ | ३९. यत्तदेतेभ्यः परिमाणे वतुप्<br>'तदस्य परिमाणम्' इत्यर्थे यद्, तद्, एतद् इत्येतेभ्यः<br>शब्देभ्यः प्रथमान्तेभ्यो वतुप् प्रत्ययो भवति।<br>यत्परिमाणस्य यावान्। तत्परिमाणमस्य तावान्।<br>एतत्परिमाणमस्य एतावान्। | वतुप् ४१ |

| | | |
|---|---|---|
| तदस्य ३६<br>परिमाणे ३९<br>वतुप् ३९ | ४०. किमिदंभ्यां वो घः<br>'तदस्य परिमाणम्' इत्यर्थे किम्, इदम् इत्येताभ्यां परस्य वतुपो वकारस्य घकारादेशो भवति।<br>कियान्। इयान्।<br>एतदेव चादेशविधानं ज्ञापकम्, 'किमिदंभ्यां वतुप्प्रत्ययो भवति' इति। अथवा योगविभागेन वतुपं विधाय पश्चाद् वो घो विधीयते। | वो घः ४१ |
| तदस्य ३६<br>वतुप् ३९<br>वो घः ४० | ४१. किमः संख्यापरिमाणे डति च<br>संख्यायाः परिमाणम्, संख्यापरिच्छेद इत्यर्थः।<br>सूत्रार्थः - संख्या परिमाणे वर्तमानात् किम्शब्दात् प्रथमान्तात् 'तदस्य परिमाणम्' इत्यर्थे डतिः प्रत्ययो भवति, चकाराद् वतुप् च।<br>का परिमाणमेषां ब्राह्मणानाम् इति कति ब्राह्मणाः।<br>कियन्तो ब्राह्मणाः। | |
| तदस्य ३६<br>वतुप् ३९<br>वो घः ४० | ४२. संख्याया अवयवे तयप्<br>अवयवे वर्तमानाया संख्यायाः अस्येति षष्ठ्यर्थे अवंयविनि तयप् प्रत्ययो भवति।<br>पञ्च अवयवाः अस्य पञ्चतयं दारु। चत्वारोऽवयवा अस्या चतुष्टयी रज्जुः। | |
| | ४३. द्वित्रिभ्यां तयस्यायज्वा<br>आभ्यां तयपोऽयच् इत्यादेशो वा भवति।<br>द्वौ अवयवौ अस्य द्वयम्, द्वितयम्।<br>त्रयोऽवयवाः अस्य त्रयम्, त्रितयम्। | तयस्यायच् ४४ |
| तयस्यायच् ४३ | ४४. उभादुदात्तो नित्यम्<br>उभशब्दात्परस्य तयपो नित्यमयजादेशो भवति, स चोदात्तः।<br>उभौ अवयवौ अस्य इति उभयो मणिः। | |
| | ४५. तदस्मिन्नधिकमिति दशान्ताड्डः<br>'तदस्मिन्नधिकम्' इत्यर्थे दशान्तशब्दात् प्रथमान्ताद् डः प्रत्ययो भवति।<br>एकादश अधिका अस्मिन् शते इति एकादशं शतम्।<br>एकादशं सहस्रम्। | तद-धिकम् ४६<br>डः ४६ |
| तदस्मिन्नधिकम् ४५<br>डः ४५ | ४६. शदन्तविंशतेश्च<br>'तदस्मिन्नधिकम्' इत्यर्थे शदन्तशब्दात्, विंशतिशब्दाच्च प्रथमान्ताद् डः प्रत्ययो भवति।<br>त्रिंशदधिका अस्मिन् शते इति त्रिंशं शतम्। त्रिंशं सहस्रम्।<br>विंशतिः अधिकाऽस्मिन् शते इति विंशं शतम्। | |

| | | |
|---|---|---|
| तदस्य ३६ | **४७. संख्याया गुणस्य निमाने मयट्**<br>भागस्य मूल्ये वर्तमानात् संख्यावाचिनः शब्दात् प्रथमान्तात् 'अस्य' इत्यर्थे मयट् प्रत्ययो भवति,भागस्य यद्धि मूल्यं तदपि चेद् भाग एव।<br>अत्र 'तदस्य' इत्यनुवर्तते, 'तदस्य सञ्जातम्' (५.२.३६) इत्यतः। निमानशब्दस्य मूल्यमित्यर्थः, निमीयते = क्रीयतेऽनेनेति निमानम् व्युत्पत्त्या। गुणशब्दस्यात्र भाग इत्यर्थः। मध्यमणिन्यायेन 'गुणस्य' इति पदस्य 'निमाने' इति पदेन सहापि सम्बन्धः, अनुवृत्तिलब्धेन 'अस्य' इति पदेन सहापि। अतः सूत्रस्य उक्तार्थो लभ्यते।<br>अस्य भागस्य मूल्यमियान् भागः इत्यर्थे संख्यावाचकात् शब्दान्मयट्प्रत्ययो भवति इति सूत्रस्य फलितार्थः।<br>यवानां द्वौ भागौ निमानमस्य  उदश्विद्भागस्य इति द्विमयम् उदश्विद् यवानाम्। उदश्विद्भागस्यापि उदश्वित्त्वाद् द्विमयमुदश्वित् इत्युक्तम्।<br>द्वौ इति संख्यावाची शब्दोऽत्र उदश्विद्भागस्य मूल्येऽर्थे वर्तते, स्वयं द्वावित्यपि यवानां भाग एवेति द्विशब्दान्मयट्प्रत्ययो भवति।<br>गुणस्य इति किम् ? द्वौ व्रीहियवौ निमानमस्य उदश्वितः। | |
| | **४८. तस्य पूरणे डट्**<br>तस्य पूरणम् इत्यर्थे संख्यावाचिनः शब्दात्षष्ठ्यन्ताद् डः प्रत्ययो भवति। पूर्यतेऽनेनेति पूरणम्। येन संख्या = संख्यानं पञ्चत्वादि, पूर्यते = सम्पद्यते स तस्याः पूरणः।<br>एकादशानां पूरणः एकादशः। त्रयोदशानां पूरणः त्रयोदशः। | डट् ५३ तस्य पूरणे ५८ |
| डटः ४८ | **४६. नान्तादसंख्यादेर्मट्**<br>असंख्यादेः नकारान्तात्संख्यावाचिनः, परस्य डटो मडागमो भवति।<br>पञ्चानां पूरणः पञ्चमः। सप्तमः। नान्तादितिकिम् ? विंशतेः पूरणः विंशः। असंख्यादेरिति किम् ? एकादशानां पूरण एकादशः। | नान्तात् ५० |

| | | |
|---|---|---|
| नान्तात् ४९<br>डटः ४८<br>मट् ४९ | **५०. थट् च छन्दसि**<br>नान्तादसंख्यादेः परस्य डटस्थडागमो भवति, छन्दसि, चकारात् पक्षे मडागमोऽपि।<br>थडागमः - पर्णमयानि पञ्चथानि भवन्ति।<br>मट् - पञ्चममिन्द्रियस्यापाक्रामत्। | |
| डटि ४८ | **५१. षट्-कति-कतिपय-चतुरां थुक्**<br>षष्, कति, कतिपय, चतुर् इत्येषां शब्दानां युगागमो भवति, डटि परे।<br>षण्णां पूरणः षष्ठः।<br>कतीनां पूरणः कतिथः।<br>कतिपयानां पूरणः कतिपयथः।<br>कतिपयशब्दस्य असंख्यात्वेऽपि अत एव ज्ञापकाद् डट्।<br>चतुर्णां पूरणः चतुर्थः।<br>(वा०) चतुरश्छयतावाद्यक्षरलोपश्च।<br>चतुर्णां पूरणः तुरीयः। तुर्यः। | |
| डटि ४८ | **५२. बहु-पूग-गण-संघस्य तिथुक्**<br>डटि परे एषां तिथुक् इत्यागमो भवति।<br>पूग-सङ्घयोरसंख्यात्वेऽप्यत एव ज्ञापकाड्डट्।<br>बहूनां पूरणः बहुतिथः। पूगतिथः। गणतिथः। सङ्घतिथः। | |
| डटि ४८ | **५३. वतोरिथुक्**<br>वतुप्प्रत्ययान्तस्य इथुक् इत्यागमो भवति, डटि परे।<br>यावतां पूरणः यावतिथः। तावतिथः। एतावतिथः। | |
| तस्य ४८<br>पूरणे ४८ | **५४. द्वेस्तीयः**<br>'तस्य पूरणम्' इत्यर्थे द्विशब्दात् तीयः प्रत्ययो भवति।<br>द्वयोः पूरणो द्वितीयः। | तीयः ५५ |
| तीयः ५४<br>तस्य ४८<br>पूरणे ४८ | **५५. त्रेः सम्प्रसारणं च**<br>तस्य पूरणमित्यर्थे त्रिशब्दात् तीयः प्रत्ययो भवति, तत्सन्नियोगेन त्रेः सम्प्रसारणं च। त्रयाणां पूरणः तृतीयः। | |
| डटः ४८ | **५६. विंशत्यादिभ्यस्तमडन्यतरस्याम्**<br>विंशत्यादिभ्यः परस्य डटः तमट् इत्यागमोऽन्यतरस्यां भवति।<br>विंशतेः पूरणः विंशतितमः, विंशः।<br>एकविंशतेः पूरणः एकविंशतितमः, एकविंशः।<br>एवमेव त्रिंशत्तमः, त्रिंशः इत्यादि। | तमट् ५८ |

| | | |
|---|---|---|
| डटः ४८ तमट् ५६ | ५७. नित्यं शतादि-मासार्धमास-संवत्सराच्च<br>शतादिभ्यः, मास, अर्धमास, संवत्सर- इत्येतेभ्यश्च परस्य डटः तमडागमो नित्यं भवति।<br>शतस्य पूरणः शततमः एकशततमः। सहस्रतमः।<br>मासस्य पूर्णः मासतमः। अर्धमासतमः। संवत्सरतमः।<br>मासादेरसंख्यात्वेऽपि अत एव ज्ञापकाद् डट्। | |
| डटः ४८ तमट् ५६ | ५८. षष्ट्यादेश्चासंख्यादेः<br>असंख्यादेः षष्ट्यादिसंख्यावचिनः परस्य डटो नित्यं तमडागमो भवति।<br>संख्यादेस्तु 'विंशत्यादिभ्यः' इति विकल्प एव।<br>षष्टितमः। सप्ततितमः इत्यादि।<br>संख्यादेस्तु -एकषष्टितमः, एकषष्टः इत्यादि।<br>प्राक्शतात् षष्ठ्यादयो विज्ञेयाः, शतादीनां 'नित्यं शतादि०'(५.२.५७) इत्यनेन तमटो विधानात्। | |
| | ५९. मतौ छः सूक्तसाम्नोः<br>मत्वर्थे प्रातिपदिकात् छः प्रत्ययो भवति सूक्ते, सामनि चाभिधेये।<br>अच्छावाकशब्दोऽस्त्यस्मिन्निति अच्छावाकीयं सूक्तम्।<br>मित्रावरुणशब्दोऽस्त्यस्मिन्निति मित्रावरुणीयं सूक्तम्। | मतौ ६२<br>छः ६० |
| मतौ ५९ छस्य ५९ | ६०. अध्यायानुवाकयोर्लुक्<br>मत्वर्थे उत्पन्नस्य छस्य लुग्भवति, अध्याये, अनुवाके चाऽभिधेये।<br>कस्यचिदपि प्रत्ययस्य विधानाभावात्, अत एव ज्ञापकात् प्रकरणलभ्यं छप्रत्ययं विधाय तस्य लुग्भवति।<br>विधानसामर्थ्याच्च विकल्पेन लुग्भवति।<br>गर्दभाण्डशब्दोऽस्त्यस्मिन्निति गर्दभाण्डोऽध्यायः, अनुवाको वा।<br>लुगभावे तु गर्दभाण्डीयः। | अध्याया-<br>नुवाकयोः ६२ |
| मतौ ५९ अध्याया-<br>नुवाकयोः६० | ६१. विमुक्तादिभ्योऽण्<br>मत्वर्थे 'विमुक्त' इत्येवमादिभ्योऽण् प्रत्ययो भवति, अध्याये, अनुवाके चाभिधेये।<br>विमुक्तशब्दोऽस्त्यस्मिन्निति वैमुक्तोऽध्यायः, अनुवाको वा। एवमेव देवासुरशब्दाद् दैवासुरः। | |

| | | |
|---|---|---|
| मतौ ५९ अध्याया-नुवाकयोः६० | ६२. गोषदादिभ्यो वुन्<br>मत्वर्थे 'गोषद' इत्येवमादिभ्यो वुन् प्रत्ययो भवति, अध्याये, अनुवाके चाऽभिधेये।<br>गोषदशब्दोऽस्त्यस्मिन्निति गोषदकोऽध्यायोऽनुवाको वा।<br>एवमेव इषेत्वशब्दाद् इषेत्वकः।<br>मातरिश्वन् शब्दात् मातरिश्वकः। | वुन् ६३ |
| वुन् ६२ | ६३. तत्र कुशलः पथः<br>तत्र कुशलः इत्यर्थे पथिन् शब्दात् सप्तम्यन्ताद् वुन् प्रत्ययो भवति।<br>पथि कुशलः पथकः। | तत्र६७<br>कुशलः६४ |
| तत्र ६३<br>कुशलः ६३ | ६४. आकर्षादिभ्यः कन्<br>तत्र कुशल इत्यर्थे 'आकर्ष' इत्येवमादिभ्यः सप्तम्यन्तेभ्यः कन् प्रत्ययो भवति।<br>आकर्षे कुशलः आकर्षकः। त्सरुः=खड्गमुष्टिः तत्र कुशलः त्सरुकः।<br>हरदत्तमते 'आकषादिभ्यः कन् ' इति रेफरहितोऽपि पाठः, इति तन्मते आकषकः इति। | कन् ८२ |
| तत्र ६३ कन् ६४ | ६५. धन-हिरण्यात्कामे<br>तत्र कामः इत्यर्थे धनशब्दाद्, हिरण्यशब्दाच्च सप्तम्यन्तात् कन् प्रतययो भवति।<br>कामः = इच्छा, अभिलाषो वा।<br>धने कामः धनको देवदत्तस्य।<br>हिरण्ये कामः हिरण्यको देवदत्तस्य। | |
| तत्र ६३ कन् ६४ | ६६. स्वाङ्गेभ्यः प्रसिते<br>तत्र प्रसितः इत्यर्थे स्वाङ्गवाचिभ्यः शब्देभ्यः सप्तम्यन्तेभ्यः कन्प्रत्ययो भवति।<br>प्रसितः = प्रसक्तः, तत्पर इत्यर्थः।<br>केशेषु प्रसितः केशकः। केशादिरचनायां प्रसक्तः पुरुषः एवमुच्यते। | प्रसिते ६७ |
| तत्र ६३<br>प्रसिते ६६ | ६७. उदराट्ठगाद्यूने<br>तत्र प्रसित इत्यर्थे उदरशब्दात् सप्तम्यन्तात् ठक् प्रत्ययो भवति, आद्यूने अभिधेये।<br>आद्यूनशब्दस्य अविजिगीषुः इत्यर्थः, 'दिवोऽविजिगीषायाम्' इति सूत्रेण अविजिगीषायामेव निष्ठानत्वविधानात्।<br>उदरे प्रसितः औदरिकः आद्यूनः।<br>यो बुभुक्षया अत्यन्तं पीडितः सन् उदरपरिमार्जने प्रसक्तः स औदरिक इत्युच्यते। | |

| | | |
|---|---|---|
| कन् ६४ | ६८. सस्येन परिजातः<br>'सस्येन परिजातः' इत्यर्थे सस्यशब्दात् तृतीयान्तात् कन् प्रत्ययो भवति।<br>सस्यशब्दोऽत्र गुणवाची न तु धान्यवाची, व्याख्यानात्।<br>परिशब्दः 'सर्वतोभावः' इत्यर्थकः। तेन 'परिजातः' इत्यस्य 'यः सर्वतोभावेन गुणैः सम्बद्धो जायते, यस्य किञ्चिदपि वैगुण्यं नास्ति' इत्यर्थः।<br>सस्येन = गुणेन, परिजातः = सर्वतो भावेन सम्बद्धो जातः इति सस्यकः साधुः। | |
| कन् ६४ | ६९. अंशं हारी<br>'अंशं हारी' इत्यर्थे अंशशब्दाद् द्वितीयान्तात् कन्प्रत्ययो भवति।<br>अंशं हारी अंशको दायादः। अंशकः पुत्रः। | |
| कन् ६४ | ७०. तन्त्रादचिरापहृते<br>'तन्त्राद् अचिरापहृतम्' इत्यर्थे तन्त्रशब्दात् पञ्चम्यन्तात् कन्प्रत्ययो भवति।<br>तन्त्रम् = तन्तुवायशलाका।<br>अचिरेण कालेन अपहृतः, निष्कासित इत्यर्थः।<br>तन्त्राद् अचिरापहृत इति तन्त्रकः पटः। नवः पट इत्यर्थः। | |
| कन् ६४ | ७१. ब्राह्मण-कोष्णिके संज्ञायाम्<br>ब्राह्मणक, उष्णिक इत्येतौ कन्प्रत्ययान्तौ शब्दौ निपात्येते, संज्ञायां विषये।<br>ब्राह्मणाः सन्त्यस्मिन्निति ब्राह्मणको देशः।<br>अत्र ब्राह्मणशब्दात् कन्प्रत्ययो निपात्यते।<br>यत्रायुधजीविनः ब्राह्मणाः सन्ति तद्देशस्य ब्राह्मणक इति संज्ञा।<br>उष्णिका यवागूः।<br>अल्पान्ना यवागूः उष्णिका इत्युच्यते। अत्र उष्णिका इत्यस्य अल्पमन्नं यस्यां सा इति व्युत्पत्तिः, तत्र अल्पान्नशब्दात् कन्प्रत्ययः, प्रकृतेः 'उष्ण' इत्यादेशश्च निपात्यते। | संज्ञायाम् ७६ |
| कन् ६४<br>संज्ञायाम् ७१ | ७२. शीतोष्णाभ्यां कारिणि<br>शीतोष्णशब्दाभ्यां कारिण्यभिधेये कन्प्रत्ययो भवति।<br>शीतं = मन्दं करोति इति शीतकः, अलस इत्यर्थः।<br>उष्णं = शीघ्रं करोतीति उष्णकः, शीघ्रकारी, दक्ष इत्यर्थः। | |

| | | |
|---|---|---|
| कन् ६४<br>संज्ञायाम्७१ | ७३. अधिकम्<br>'अधिकम्' इति निपात्यते।<br>अनेन सूत्रेण अध्यारूढ शब्दात् स्वार्थे कन् प्रत्ययः, उत्तरपदस्य लोपश्च निपात्यते।<br>अध्यारूढ एव अधिको द्रोणः खार्याम्। | |
| कन् ६४<br>संज्ञायाम्७१ | ७४. अनुकाभिकाभीकः कमिता<br>अनुक, अभिक, अभीक - इत्येते शब्दाः कन्प्रत्ययान्ता निपात्यन्ते, 'कमिता' इत्येतस्मिन्नर्थे।<br>कमिता इत्यस्य इच्छायुक्तः इत्यर्थः।<br>अनुकामयते इति अनुकः। अभिकामयते इति अभिकः, अभीकश्च। अनु, अभि - इत्येताभ्यां कन्प्रत्ययः, अभेः पक्षे दीर्घत्वं च निपात्यते। | |
| कन् ६४<br>संज्ञायाम्७१ | ७५. पार्श्वेनान्विच्छति<br>पार्श्वेनान्विच्छति इत्यर्थे पार्श्वशब्दात् तृतीयान्ताद् कन्प्रत्ययो भवति।<br>अन्विच्छति इत्यस्य गवेषयतीत्यर्थः, अनुपूर्व इष् धातुरन्वेषणे, प्रसिद्धत्वात्। पार्श्वम् इत्यस्य अनृजुरुपाय इत्यर्थः।<br>पार्श्वेन = अनृजूपायेन, अन्विच्छति = गवेषयति इति पार्श्वकः, मायावी इत्यर्थः। | अन्विच्छति ७६ |
| अन्विच्छति ७५<br>संज्ञायाम् ७१ | ७६. अयःशूल-दण्डाजिनाभ्यां ठक्-ठञौ<br>तेनान्विच्छति इत्यर्थे अयःशूल, दण्डाजिन - इत्येताभ्यां शब्दाभ्यां तृतीयान्ताभ्यां ठक्ठञ्- इत्येतौ प्रत्ययौ भवतः।<br>तीक्ष्ण उपायोऽयःशूलं, तेनान्विच्छति आयःशूलिकः, साहसिक इत्यर्थः।<br>दण्डाजिनम् = दम्भः, तेनान्विच्छति दाण्डाजिनिकः, दाम्भिक इत्यर्थः। | |

| | | |
|---|---|---|
| कन् ६४ | ७७. तावतिथं ग्रहणमिति लुग्वा<br>तृतीयान्तात् पूरणप्रत्ययान्तात् ग्रहणमित्यर्थे कन्प्रत्ययो भवति, पूरणप्रत्ययस्य च लुग्वा भवति।<br>द्वितीयेन रूपेण ग्रहणमिति द्वितीयकं, द्विकं वा ग्रहणं देवदत्तस्य।<br>तवतां पूरणमिति तावतिथम्, 'वतोरिथुक्' इति डटि प्रत्यये परे इथुगागमेन तावतिथमिति सिद्ध्यति।<br>यथा 'तस्यापत्यम्' इत्यत्र तस्येति षष्ठ्यन्तानां सामान्यनिर्देशस्तथात्र तावतिथमिति पूरणप्रत्ययान्तानां सामान्यनिर्देशः। ग्रहणमिति भावे ल्युट्। तच्च प्रत्ययार्थः। तावतिथमिति तृतीयार्थे प्रथमा। 'तावतिथेन गृह्णातीति कन्वक्तव्यो नित्यं च लुक्' इति प्रकृतसूत्रस्थे वार्तिके तृतीयाया एव समर्थविभक्तित्वस्य क्लृप्तत्वात्। अत एव सूत्रस्य उक्तार्थः सम्पद्यते।<br>(वा०) तावतिथेन गृह्णातीति कन्वक्तव्यो नित्यं च लुक्।<br>षष्ठेन रूपेण गृह्णातीति षट्को देवदत्तः। एवमेव पञ्चको देवदत्तः। | वा ८४ |
| कन् ६४ | ७८. स एषां ग्रामणीः<br>स एषां ग्रामणीः इत्यर्थे प्रथमान्तात् कन्प्रत्ययो भवति।<br>ग्रामणीः = प्रधानः मुख्य इत्यर्थः।<br>देवदत्तो ग्रामणीः एषामिति देवदत्तकाः। | |
| कन् ६४ | ७९. शृङ्खलमस्य बन्धनं करभे<br>शृङ्खलमस्य बन्धनमित्यर्थे शृङ्खलशब्दात्प्रथमान्तात् कन् प्रत्ययो भवति, करभेऽभिधेये।<br>शृङ्खलकः करभः।<br>उष्ट्राणां बालकाः = करभाः, तेषां काष्ठमयं पाशकं पादे व्यतिषज्यते, तदुच्यते शृङ्खलमिति। | |
| कन् ६४ | ८०. उत्क उन्मनाः<br>'उत्क' इति निपात्यते, उन्मनाश्चेत्स भवति। उद्गतं मनो यस्य स उन्मनाः।<br>ससाधनक्रिया वचनाद् 'उत्' इतिशब्दात् तद्वति कन्प्रत्ययो निपात्यते।<br>उत्को देवदत्तः। उत्कण्ठित इत्यर्थः। | |

| | | |
|---|---|---|
| कन् ६४<br>संज्ञायाम् ७१ | ८१. कालप्रयोजनाद्रोगे<br>कालात्, प्रयोजनाच्च यथायोगं समर्थविभक्ति युक्तात् कन्प्रत्ययो भवति, रोगेऽभिधेये।<br>कालः = दिवसादिः। प्रयोजनम्= रोगस्य कारणम्, फलं वा।<br>कालात् - द्वितीयेऽह्नि भवो द्वितीयको ज्वरः। चतुर्थकः।<br>प्रयोजनात् -विषपुष्पैर्जनितो ज्वरः विषपुष्पकः। अत्र विषपुष्पाणि कारणम्।<br>उष्णं कार्यमस्य उष्णको ज्वरः।<br>अत्र उष्णं फलम्। | |
| कन् ६४ | ८२. तदस्मिन्नन्नं प्राये संज्ञायाम्<br>तदन्नमस्मिन् प्रायेण इत्यर्थे अन्नशब्दात् प्रथमान्तात् कन् प्रत्ययो भवति, संज्ञायाम्। गुडापूपाः प्रायेणान्नमस्याम् इति गूडापूपिका पौर्णमासी। | सम्पूर्णसूत्रम् ८३<br>संज्ञायाम् ८१ |
| तदस्मिनन्नम् ८२<br>प्रायेण ८२<br>संज्ञायाम् ८२ | ८३. कुल्माषादञ्<br>'तदन्नमस्मिन् प्रायेण' इत्यर्थे कुल्माषशब्दात्प्रथमान्तात् अञ्प्रत्ययो भवति, संज्ञायाम्।<br>कुल्माषाः = मुद्गाः, प्रायेण अन्नमस्याम् इति कौल्माषी पौर्णमासी। | |
| वा ७७ | ८४. श्रोत्रियंश्छन्दोऽधीते<br>'श्रोत्रियन्' इति निपात्यते, छन्दोऽधीते इत्यर्थे। नकारः स्वरार्थः।<br>श्रोत्रियो ब्राह्मणः।<br>छन्दःशब्दाद् घन् प्रत्ययः, छन्दःशब्दस्य 'श्रोत्र' इत्यादेशश्च निपात्यते।<br>वेत्यनुवृत्तेः छन्दोऽधीते इत्यर्थे 'तदधीते तद्वेद' इत्यनेन छन्दस्शब्दाण्प्रत्ययोऽपि भवति। तेन छन्दोऽधीते इति 'छान्दसः' इत्यपि सिद्ध्यति। | अनेन ८८ |
| | ८५. श्रद्धमनेन भुक्तमिनि-ठनौ<br>श्राद्धं भुक्तमनेन इत्यर्थे श्राद्धशब्दाद् प्रथमान्ताद् इनि, ठन्-इत्येतौ प्रत्ययौ भवतः।<br>श्राद्धशब्दः कर्मनामधेयम्, लक्षणया अत्र श्राद्धसाधने द्रव्ये वर्तते।<br>श्राद्धम् = श्राद्धकर्मसाधनं द्रव्यं भुक्तमनेन श्राद्धी, श्राद्धिकः। | |

| | | |
|---|---|---|
| अनेन ८५ | ८६. पूर्वादिनिः<br>क्रियाविशेषणवाचिपूर्वशब्दाद् इनिः प्रत्ययो भवति।<br>पूर्वसूत्राद् 'अनेन' इति कर्तृबोधकपदमनु वर्तते। न च क्रियां विना कर्त्ता सम्भवतीति यां काञ्चित् क्रियामध्याहृत्य तां क्रियां प्रति यत् पूर्वमिति क्रियाविशेषणं ततः प्रत्ययो विधीयतेऽनेन। अतः सूत्रस्य उक्तार्थः सम्पद्यते।<br>पूर्वमनेन गतं , पीतं , भुक्तं वा पूर्वी, पूर्विणौ, पूर्विणः। | पूर्वात् ८७<br>इनिः ९१ |
| अनेन ८५<br>पूर्वात्८६<br>इनिः ८६ | ८७. सपूर्वाच्च<br>विद्यमानपूर्वात् क्रियाविशेषणवाचिपूर्वशब्दादपि इनिः प्रत्ययो भवति।<br>पूर्वं कृतमनेन कृतपूर्वी कटम्। पूर्वं भुक्तमनेन भुक्तपूर्वी ओदनम्।<br>'सुप्सुपा' इति समासं कृत्वा तद्धित उत्पाद्यते। | |
| अनेन ८५<br>इनिः ८६ | ८८. इष्टादिभ्यश्च<br>अनेन इष्टम् इत्यादिष्वर्थेषु 'इष्ट' इत्येवमादिभ्यः शब्देभ्यः प्रथमान्तेभ्यः इनिः प्रत्ययो भवति।<br>इष्मनेन इष्टी यज्ञे।<br>'क्तस्येन्विषयस्य कर्मणि' इति वार्तिकेन 'यज्ञे' इति पदे कर्मणि सप्तमी। | |
| इनिः ८६ | ८९. छन्दसि परिपन्थि-परिपरिणौ पर्यवस्थातरि<br>परिपन्थिन्, परिपटिन्- इत्येतौ शब्दौ छन्दसि विषये निपात्येते, पर्यवस्थातरि वाच्ये।<br>शत्रुपर्यायात् पर्यवस्थातृशब्दस्य स्थाने पन्थ,पर- इत्येतावादेशौ च निपात्येते।<br>'अपत्यं परिपन्थिनम्'। 'मा त्वा परिपरिणो विदन्'। | |
| इनिः ८६ | ९०. अनुपद्यन्वेष्टा<br>अनुपदी' इति निपात्यतेऽन्वेष्टा चेत्स भवति। पदस्य पश्चाद् अनुपदम्। अनुपदम् अन्वेष्टा इति अनुपदी गवाम्।<br>अनुपदशब्दादिनिः प्रत्ययो निपातितोऽनेन। | |

| | | |
|---|---|---|
| इनिः ८६ | ९१. साक्षाद् द्रष्टरि संज्ञायाम्<br>साक्षात्शब्दोऽव्ययम्, तस्मादिनिः प्रत्ययो भवति द्रष्टरि वाच्ये, संज्ञायाम्।<br>साक्षाद् द्रष्टा साक्षी, साक्षिणौ, साक्षिणः। 'अव्ययानां भमात्रे' इति टिलोपः।<br>संज्ञाग्रहणात् उपद्रष्टा एव साक्षीत्युच्यते, न दाता, ग्रहीता वा।<br>दातृग्रहीतृभ्यां योऽन्यो द्रष्टा समीपे तिष्ठति स उपद्रष्टा। | |
| | ९२. क्षेत्रियच् परक्षेत्रे चिकित्स्यः<br>'क्षेत्रियच्' इति निपात्यते 'परक्षेत्रे चिकित्स्यः' इत्येतस्मिन्नर्थे।<br>परक्षेत्रशब्दाद् घच् प्रत्ययः, परक्षेत्रघटकपरशब्दस्य लोपश्च निपात्यतेऽनेन।<br>परक्षेत्रे चिकित्स्यः क्षेत्रियो व्याधिः। क्षेत्रियं कुष्ठम्।<br>परक्षेत्रम्= जन्मान्तरशरीरम्, तत्र चिकित्स्यः क्षेत्रियः। असाध्योऽप्रत्याख्येयो व्याधिरुच्यते। नामृतस्य निवर्तते इत्यर्थः। क्षेत्रियशब्दस्य अन्येऽप्यर्था उक्ताः काशिकावृत्तौ। | |
| | ९३. इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिद्रजुष्टमिन्द्रदत्तमिति वा<br>इन्द्रशब्दात् घच्प्रत्ययं कृत्वा इन्द्रियमिति शब्दो निपात्यते, इन्द्रलिङ्गम्, इन्द्रदृष्टम् इन्द्रसृष्टम्, इन्द्रजुष्टम् इन्द्रदत्तमित्यादिष्वर्थेषु।<br>इन्द्रलिङ्गम् इत्यादिषु शब्देषु इन्द्रशब्दः आत्मवाचकः।<br><u>एवं चैतेषां विग्रहः</u><br>इन्द्रः आत्मा तस्य लिङ्गम् ज्ञापकम् इन्द्रियम्।<br>इन्द्रेण आत्माना दृष्टम् इन्द्रियम्।<br>इन्द्रेण =आत्मना सृष्टम् इन्द्रियम्। इन्द्रेण=आत्मना जुष्टम्=सेवितम् इन्द्रियम्।<br>इन्द्रेण = आत्मना दत्तं इन्द्रियम्।<br>सूत्रे इति शब्दः प्रकारार्थस्तेन इन्द्रियशब्दस्य व्युत्पतिरन्यथाऽपि कर्त्तुं शक्यते, रूढेः अनियमात्।<br>तेन इन्द्रियमिति शब्दस्य एवमपि व्युत्पत्तिः - इन्द्रेण दुर्जयम् इन्द्रियम्, इन्द्रेण विषया नीयन्ते=सम्बध्यन्ते इति इन्द्रियम् इति।<br>वाशब्द इन्द्रलिङ्गमित्यादिना प्रत्येकम् अभिसम्बध्यमानः सर्वेषां विकल्पानां स्वातन्त्र्यं दर्शयति। | |

| | | |
|---|---|---|
| | ९४. तदस्यास्त्यस्मिन्निति मतुप्<br>तदस्ति अस्य इत्यर्थे, तदस्ति अस्मिन् इत्यर्थे च प्रथमान्ताद् मतुप्प्रत्ययो भवति।<br>इतिशब्दो विषयविशेषलाभार्थः।<br>गावः सन्ति अस्य इति गोमान् देवदत्तः।<br>वृक्षाः सन्ति अस्मिन् इति वृक्षवान् पर्वतः।<br>सूत्रे इतिकरणाद् निम्नलिखितेष्वेव विषयेषु मत्वर्थीयाः प्रत्ययाः भवन्ति -<br>(श्लोकवार्तिकम्)<br>भूम-निन्दा-प्रशंसासु नित्ययोगेऽतिशायने।<br>संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः।।<br>अस्तिविवक्षायां ये मतुबादयः भवन्ति ते भूम्नि, निन्दायाम्, प्रशंसायाम्, नित्ययोगे,अतिशायने एव इति श्लोकवार्तिकस्यार्थः।<br>भूमा = बहुत्वम्। तत्र मतुब्यथा- गोमान्। धनवान्, धनिकः, धनी।<br>निन्दायाम् - ककुदावर्तिनी कन्या। ककुदम्=ग्रीवायाः अधस्ताद् पृष्ठभागः। तत्र आवर्तः=जलभ्रम इव इति ककुदावर्तः, सोऽस्ति अस्याः इति ककुदावर्तिनी कन्या।<br>ककुदावर्तस्य शरीरे निष्फलत्वात् तस्य निन्द्यत्वम्।<br>प्रशंसायाम् - रूपवती कन्या। प्रशस्तरूपयुक्ता इत्यर्थः।<br>नित्ययोगे - क्षीरिणो वृक्षाः।<br>अतिशायने - उदरिणी कन्या।<br>संसर्गे - दण्डी। संसर्गोऽत्र संयोगः, तेन संयुक्तदण्ड एव दण्डी इति कथ्यते,न तु गृहावस्थितदण्डोऽपि। | सम्पूर्णसूत्रम् १४० |
| तदस्यास्त्य-स्मिन्निति मतुप ९४ | ९५. रसादिभ्यश्च<br>रसादिगणपठितेभ्यः शब्देभ्यः मत्वर्थे मतुप् प्रत्यय एव भवति, नान्ये इन्यादयो मत्वर्थीयाः।<br>अन्यमत्वर्थीयनिवृत्त्यर्थमिदं सूत्रम्, पूर्वसूत्रेणैव रसादिभ्यः मतुपः सिद्धेः।<br>रसवान्। रूपवान्।<br>(वा०) एकाचः।<br>एकच्प्रातिपदिकादपि मतुप् प्रत्यय एव भवति, नान्यः।<br>स्ववान्। | |
| मत्वर्थे ९४ | ९६. प्राणिस्थादातो लजन्यतरस्याम्<br>प्राणिस्थवाचिनः आकारान्तात् प्रातिपदिकादन्यतरस्यां मत्वर्थे लच् प्रत्ययो भवति।<br>चूडालः, चूडावान्।<br>प्राणिस्थादितिकिम् ? चिकीर्षावान्। | लच् ९६<br>अन्यतरस्याम् ११६ |

| | | |
|---|---|---|
| मत्वर्थे ९४<br>लच् ९६<br>अन्यतरस्याम् ९६ | ९७. सिध्मादिभ्यश्च<br>सिध्मादिभ्यो लजन्यतरस्यां भवति मत्वर्थे।<br>अन्यतरस्यां ग्रहणं मतुप्समुच्चयार्थं, न तु प्रत्ययविकल्पार्थम्। तेनैतद् ज्ञापितं भवति - सिध्मादिषु ये अकारान्तास्तेभ्यो मत्वर्थे लच्, मतुप् इति द्वावेव प्रत्ययौ भवतः, न तु अन्योऽपि। तेन 'अत इनिठनौ' इत्यनेन इनि- ठन्प्रत्ययौ सिध्मादिगणपठितेभ्योऽकारान्तेभ्यो न भवतः।<br>सिध्मलः, सिध्मवान्। गडुलः, गडुमान्। | |
| मत्वर्थे ९४<br>लच् ९६ | ९८. वत्सांसाभ्यां काम-बले<br>वत्स, अंस इत्येताभ्यां शब्दाभ्यां लच् प्रत्ययो भवतः कामवति, बलवति चार्थे।<br>वत्सलः। अंसलः। | |
| मत्वर्थे ९४<br>लच् ९६<br>अन्यतरस्याम् ९६ | ९९. फेनादिलच्च<br>फेनशब्दाद् इलच् प्रत्ययो भवति मत्वर्थे, चकाराल्लच्।<br>अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थं सर्वत्रैवानु वर्तते।<br>फेनोऽस्ति अस्य, अस्मिन् वा फेनिलः, फेनलः, फेनवान्। | |
| मत्वर्थे ९४<br>अन्यतरस्याम् ९६ | १००. लोमादि-पामादि-पिच्छादिभ्यः शनेलचः<br>मत्वर्थे लोमादिभ्यः शः प्रत्ययः, पामादिभ्यः नः प्रत्ययः, पिच्छादिभ्यश्च इलच् प्रत्ययो भवति। लोमशः, लोमवान्।<br>पामनः, पामवान्।<br>पिच्छिलः, पिच्छवान्। | |
| मत्वर्थे ९४<br>अन्यतरस्याम् ९६ | १०१. प्रज्ञा-श्रद्धार्चाभ्यो णः<br>एभ्यो णप्रत्ययो भवति मत्वर्थे।<br>मतुप् सर्वत्र भवत्येव।<br>प्राज्ञः, प्रज्ञावान्।<br>श्राद्धः, श्रद्धावान्।<br>आर्चः, अर्चावान्। | |
| मत्वर्थे ९४ | १०२. तपःसहस्राभ्यां विनीनी<br>तपस्, सहस्र - इत्येताभ्यां मत्वर्थे यथासंख्यं विनि, इनि-इत्येतौ प्रत्ययौ भवतः।<br>तपस्वी। सहस्री। | तपः-<br>सहस्राभ्याम् १०३ |

| | | |
|---|---|---|
| | ९४. तदस्यास्त्यस्मिन्निति मतुप्<br>तदस्ति अस्य इत्यर्थे, तदस्ति अस्मिन् इत्यर्थे च प्रथमान्ताद् मतुप्प्रत्ययो भवति।<br>इतिशब्दो विषयविशेषलाभार्थः।<br>गावः सन्ति अस्य इति गोमान् देवदत्तः।<br>वृक्षाः सन्ति अस्मिन् इति वृक्षवान् पर्वतः।<br>सूत्रे इतिकरणाद् निम्नलिखितेष्वेव विषयेषु मत्वर्थीयाः प्रत्ययाः भवन्ति -<br>(श्लोकवार्तिकम्)<br>भूम-निन्दा-प्रशंसासु नित्ययोगेऽतिशायने।<br>संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः।।<br>अस्तिविवक्षायां ये मतुबादयः भवन्ति ते भूम्नि, निन्दायाम्, प्रशंसायाम्, नित्ययोगे,अतिशायने एव इति श्लोकवार्तिकस्यार्थः।<br>भूमा = बहुत्वम्। तत्र मतुब्यथा- गोमान्। धनवान्, धनिकः, धनी।<br>निन्दायाम् - ककुदावर्तिनी कन्या। ककुदम्=ग्रीवायाः अधस्ताद् पृष्ठभागः। तत्र आवर्तः=जलभ्रम इव इति ककुदावर्तः, सोऽस्ति अस्याः इति ककुदावर्तिनी कन्या। ककुदावर्तस्य शरीरे निष्फलत्वात् तस्य निन्द्यत्वम्।<br>प्रशंसायाम् - रूपवती कन्या। प्रशस्तरूपयुक्ता इत्यर्थः।<br>नित्ययोगे - क्षीरिणो वृक्षाः।<br>अतिशायने - उदरिणी कन्या।<br>संसर्गे - दण्डी। संसर्गोऽत्र संयोगः, तेन संयुक्तदण्ड एव दण्डी इति कथ्यते,न तु गृहावस्थितदण्डोऽपि। | सम्पूर्णसूत्रम् १४० |
| तदस्यास्त्य-स्मिन्निति मतुप ९४ | ९५. रसादिभ्यश्च<br>रसादिगणपठितेभ्यः शब्देभ्यः मत्वर्थे मतुप् प्रत्यय एव भवति, नान्ये इन्यादयो मत्वर्थीयाः।<br>अन्यमत्वर्थीयनिवृत्त्यर्थमिदं सूत्रम्, पूर्वसूत्रेणैव रसादिभ्यः मतुपः सिद्धेः।<br>रसवान्। रूपवान्।<br>(वा०) एकाचः।<br>एकच्प्रातिपदिकादपि मतुप् प्रत्यय एव भवति, नान्यः। स्ववान्। | |
| मत्वर्थे ९४ | ९६. प्राणिस्थादातो लजन्यतरस्याम्<br>प्राणिस्थवाचिनः आकारान्तात् प्रातिपदिकादन्यतरस्यां मत्वर्थे लच् प्रत्ययो भवति।<br>चूडालः, चूडावान्।<br>प्राणिस्थादितिकिम् ? चिकीर्षावान्। | लच् ९९<br>अन्यतरस्याम् ११६ |

| | | |
|---|---|---|
| मत्वर्थे ९४<br>लच् ९६<br>अन्यतरस्याम् ९६ | ९७. सिध्मादिभ्यश्च<br>सिध्मादिभ्यो लजन्यतरस्यां भवति मत्वर्थे।<br>अन्यतरस्यां ग्रहणं मतुप्समुच्चयार्थं, न तु प्रत्ययविकल्पार्थम्। तेनैतद् ज्ञापितं भवति - सिध्मादिषु ये अकारान्तास्तेभ्यो मत्वर्थे लच्, मतुप् इति द्वावेव प्रत्ययौ भवतः, न तु अन्योऽपि। तेन 'अत इनिठनौ' इत्यनेन इनि- ठन्प्रत्ययौ सिध्मादिगणपठितेभ्योऽकारान्तेभ्यो न भवतः।<br>सिध्मलः, सिध्मवान्। गडुलः, गडुमान्। | |
| मत्वर्थे ९४<br>लच् ९६ | ९८. वत्सांसाभ्यां काम-बले<br>वत्स, अंस इत्येताभ्यां शब्दाभ्यां लच् प्रत्ययो भवतः कामवति, बलवति चार्थे।<br>वत्सलः। अंसलः। | |
| मत्वर्थे ९४<br>लच् ९६<br>अन्यतरस्याम् ९६ | ९९. फेनादिलच्च<br>फेनशब्दाद् इलच् प्रत्ययो भवति मत्वर्थे, चकाराल्लच्।<br>अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थं सर्वत्रैवानु वर्तते।<br>फेनोऽस्ति अस्य, अस्मिन् वा फेनिलः, फेनलः, फेनवान्। | |
| मत्वर्थे ९४<br>अन्यतरस्याम् ९६ | १००. लोमादि-पामादि-पिच्छादिभ्यः शनेलचः<br>मत्वर्थे लोमादिभ्यः शः प्रत्ययः, पामादिभ्यः नः प्रत्ययः, पिच्छादिभ्यश्च इलच् प्रत्ययो भवति। लोमशः, लोमवान्।<br>पामनः, पामवान्।<br>पिच्छिलः, पिच्छवान्। | |
| मत्वर्थे ९४<br>अन्यतरस्याम् ९६ | १०१. प्रज्ञा-श्रद्धार्चाभ्यो णः<br>एभ्यो णप्रत्ययो भवति मत्वर्थे।<br>मतुप् सर्वत्र भवत्येव।<br>प्राज्ञः, प्रज्ञावान्।<br>श्राद्धः, श्रद्धावान्।<br>आर्चः, अर्चावान्। | |
| मत्वर्थे ९४ | १०२. तपःसहस्राभ्यां विनीनी<br>तपस्, सहस्र - इत्येताभ्यां मत्वर्थे यथासंख्यं विनि, इनि-इत्येतौ प्रत्ययौ भवतः।<br>तपस्वी। सहस्री। | तपः-सहस्राभ्याम् १०३ |

| | | |
|---|---|---|
| तपःसहस्राभ्याम१०२<br>मत्वर्थे ९४ | **१०३. अण् च**<br>तपः-सहस्राभ्यां मत्वर्थेऽणू प्रत्ययोऽपि भवति। तापसः। साहस्रः।<br>योगविभाग उत्तरार्थः, पूर्वसूत्रे यथासंख्यार्थश्च।<br>(वा०) ज्योत्स्नादिभ्य उपसंख्यानम्।<br>ज्योत्स्ना विद्यतेऽस्मिन् पक्षे ज्यौत्स्नः पक्षः। | अण् १०५ |
| मत्वर्थे ९४<br>अण्१०३ | **१०४. सिकता-शर्कराभ्यां च**<br>सिकता, शर्करा शब्दाभ्यामपि मत्वर्थेऽणू प्रत्ययो भवति।<br>सैकतो घटः। शार्करं मधु। | सिकता-<br>शर्कराभ्याम् १०५ |
| सिकता-<br>शर्कराभ्याम् १०४<br>मत्वर्थे ९४ | **१०५. देशे लुबिलचौ च**<br>देशेऽभिधेये सिकता-शर्कराशब्दाभ्यां परस्य मत्वर्थीयस्य प्रत्ययस्य लुब्भवति, ताभ्याम् इलच् प्रत्ययश्च, चकारादण् च, मतुप् च।<br>कस्य पुनरयं लुप्? मतुबादीनामन्यतमस्य, विशेषाभावत्।<br>सिकताः विद्यन्ते अस्मिन् इति सिकताः, सिकतिलः, सैकतः, सिकतावान् वा देशः।<br>लुपि युक्तवद्भावेन बहुवचनम्।<br>एवमेव- शर्कराः, शर्करिलः, शार्करः, शर्करावान् वा देशः। | |
| मत्वर्थे ९४ | **१०६. दन्त उन्नत उरच्**<br>उन्नत इति प्रकृतिविशेषणम्। उन्नतोपाधिकाद् दन्तशब्दान्मत्वर्थे उरच् प्रत्ययो भवति।<br>दन्ता उन्नता अस्य दन्तुरः। | |

| | | |
|---|---|---|
| मत्वर्थे ९४ | १०७. ऊष-सुषि-मुष्क-मधो रः<br>ऊष, सुषि, मुष्क, मधु- इत्येतेभ्यो मत्वर्थे रः प्रत्ययो भवति।<br>ऊषः = क्षारमृत्तिका अस्ति अस्य , अस्मिन् वा ऊषरं क्षेत्रम्।<br>सुषिः= छिद्रमस्ति अस्मिन् इति सुषिरं काष्ठम्।<br>मुष्कौ= अण्डौ, स्तः अस्येति मुष्करः पशुः।<br>मधु= माधुर्याख्यो रसविशेषः, न माक्षिकं, माध्वीकं वा, अनभिधानात्। मधु अस्ति अस्य, अस्मिन् वा मधुरो गुडः। मधुरं मधु।<br>'तदस्यास्त्यस्मिन्निति मतुप्'(५.२.९४) इति सूत्राद् इतिशब्दस्य सम्पूर्णे मत्वर्थप्रकरणे अनुवर्तनात् विवक्षितेऽर्थे एवं सर्वेषां मत्वर्थीयानां प्रवृत्तिः।<br>तेनेह न भवति- ऊषोऽस्मिन् घटे विद्यते। मध्वस्मिन् घटे विद्यते इति।<br>(वा०) रप्रकरणे ख-मुख-कुञ्जेभ्यः उपसंख्यानम्।<br>खम्= तदिव महत् कण्ठविवरम् अस्ति अस्य खरः गर्दभः।<br>तैक्ष्ण्ये खरशब्दस्त्वव्युत्पन्न एव।<br>मुखमस्ति अस्य मुखरः= वाचालः।<br>यस्य स्वाभिप्रायाभिव्यक्तये केवलं मुखमेवास्ति न च वक्तव्यावक्तव्यविवेकः स मुखरः इति उच्यते।<br>कुञ्जावस्य स्तः कुञ्जरः।<br>'हस्तिहनू कुञ्जशब्देनोच्येते' इति काशिकावृत्तिः।<br>(वा०) नग-पांसुपाण्डुभ्यश्चेति वक्तव्यम्।<br>नगाः= वृक्षाः, पर्वताश्च सन्ति अस्य नगरम्।<br>जातिवाचकोऽयं शब्दः, तेन नगरी इत्यत्र जातिलक्षणो ङीष् भवति।<br>पांसुः - धूलिरस्ति अस्य पांसुरः।<br>पाण्डुः= शुक्लो वर्णः अस्ति अस्य पाण्डुरः। | |
| मत्वर्थे ९४ | १०८. द्यु-द्रुभ्यां मः<br>दिव्शब्दाद्, द्रुशब्दाच्च मत्वर्थे मः प्रत्ययो भवति।<br>द्यौः अस्ति अस्येति द्युमः। 'दिव उत् इत्युत्वम्। द्युमः = सूर्यः।<br>द्रुः =वृक्षः, सोऽस्ति अस्य जनकतया इति द्रुमः।<br>द्रुमोऽपि वृक्ष एव।<br>रूढशब्दावेतौ, रूढिषु च पुनर्मतुब्न विकल्प्यते। | |

| | | |
|---|---|---|
| मत्वर्थे ९४<br>अन्यतरस्याम् ९६ | १०९. केशाद्वोऽन्यतरस्याम्<br>केशशब्दान्मत्वर्थे वः प्रत्ययो भवति अन्यतरस्याम्।<br>प्रकृतेनान्यतरस्यां ग्रहणेन मतुपि सिद्धे<br>पुनर्ग्रहणमिनिठनोरपि समावेशार्थम्। तेन चातूरूप्यं<br>भवति।<br>केशवः, केशवान्, केशी, केशिकः इति। | वः ११० |
| मत्वर्थे ९४<br>वः १०९ | ११०. गाण्डाण्डादीरन्नीरचौ<br>गाण्डि, गाण्डी, अजग- इत्येतेभ्यो वः प्रत्ययो भवति,<br>संज्ञायां विषये।<br>ह्रस्वदीर्घयोर्यणा तन्त्रेण निर्देशात् 'गाण्ड्यजगात्' इत्यत्र<br>ह्रस्वेकारान्त, गाण्डिशब्दस्यापि ग्रहणं दीर्घेकारान्त-<br>गाण्डीशब्दस्यापि, 'ख्यत्यात्परस्य' इतिवत्।<br>गाण्डिवं, गाण्डीवम् = अर्जुनस्य धनुः। अजगवं<br>पिनाकम्। | |
| मत्वर्थे ९४ | १११. काण्डाण्डादीरन्नीरचौ<br>काण्ड, अण्ड - इत्येताभ्यां यथासंख्यम् ईरन्, ईरच्<br>इत्येतौ प्रत्ययौ भवतः मत्वर्थ।<br>काण्डीरः। आण्डीरः। | |
| मत्वर्थे ९४ | ११२. रजः-कृष्यासुति-परिषदो वलच्<br>रजस्, कृषि, आसुति, परिषद् - इत्येतेभ्यो मत्वर्थे<br>वलच् प्रत्ययो भवति।<br>रजस्वला स्त्री।<br>कृषीवलः कुटुम्बी।<br>आसुतिः = अभिषवः साऽस्ति अस्य आसुतीवलः<br>शौण्डिकः। कृषीवलशब्दे, आसुतीवल शब्दे इकारस्य<br>दीर्घः 'वले' इति सूत्रेण।<br>परिषद्वलो राजा। पर्षदिति पाठान्तरम्। पर्षद्वलः।<br>इतिशब्दो विषय विशेषलाभार्थः सर्वत्र सम्बध्यते। तेनेह<br>न भवति-रजोऽस्मिन् ग्रामे विद्यते।<br>(वा०) वलच्प्रकरणेऽन्येभ्योऽभि दृश्यत इति वक्तव्यम्।<br>भ्राताऽस्ति अस्य भ्रातृवलः। पुत्रवलः। उत्साहवलः। | वलच् ११३ |

| मत्वर्थे ९४<br>वलच् ११२ | ११३. दन्त-शिखात्संज्ञायाम्<br>दन्त-शिखाशब्दाभ्यां वलच् प्रत्ययो भवति, मत्वर्थे संज्ञायां विषये।<br>दन्तौ स्तः अस्येति दन्तावलो हस्ती।<br>शिखावलः केकी।<br>'वले' इत्यनेन पूर्वपदस्थाकारस्य दीर्घः।<br>''शिखावलः शिखी केकी मेघनादानुलास्यपि'<br>(अमरकोषः २.५.३०) | संज्ञायाम् ११४ |
|---|---|---|
| | ११४ ज्योत्स्ना-तमिस्रा-शृङ्गिणोर्जस्वि-न्नूर्जस्वल-गोमिन्-मलिन-मलीमसाः<br>ज्योत्स्ना, तमिस्रा, शृङ्गिण, ऊर्जस्विन्, ऊर्जस्वल, गोमिन्, मलिन, मलीमस - इत्येते शब्दाः मत्वर्थे संज्ञायां विषये निपात्यन्ते।<br>ज्योत्स्ना - ज्योतिष् इतिशब्दाद् नः प्रत्ययः, उपधालोपश्च निपात्यते। ज्योत्स्ना= चन्द्रप्रभा।<br>तमिस्रा- तमस्शब्दाद् रः प्रत्ययः, उपधाया इकारादेशो, रेफागमश्च निपात्यते, स्त्रीत्वमविवक्षितम्। तमिस्रा = रात्रिः।<br>तमिस्रम् = नभः।<br>शृङ्गिण - शृङ्गशब्दाद् इनच् प्रत्ययो निपात्यते। शृङ्गिणः।<br>ऊर्जस्वी, ऊर्जस्विल- ऊर्ज्इतिशब्दाद् विनु-, इवलच् प्रत्ययौ, ऊर्जः असुक् इत्यागमश्च निपात्यते। ऊर्जस्वी, ऊर्जस्विलः।<br>गोमी- गोशब्दाद् मिनिः प्रत्ययो निपात्यते। गोमी।<br>मलिन, मलीमस- मलशब्दाद् इनच्, ईसच् प्रत्ययौ निपात्येते। मलिनः। मलीमसः। | |

| | | |
|---|---|---|
| मत्वर्थे ९४<br>अन्यतरस्याम् ९६ | ११५. अत इनिठनौ<br>अकारान्ताद् इनि, ठन्-इत्येतौ प्रत्ययौ भवतो मत्वर्थे।<br>दण्डी, दण्डिकः।<br>अन्यतरस्यामित्यधिकारान्मतुबपि भवति। दण्डवान्।<br>(श्लोकवार्तिकम्)<br>एकाक्षरात्, कृतो, जातेः,<br>सप्तम्यां च न तौ स्मृतौ।।<br>एकाच्कादिभ्यः इनिठनौ न भवतः इति वार्तिकार्थः।<br>एकाक्षरात्तावत् -स्ववान्।<br>कृतः - कारकवान्।<br>जातेः - व्याघ्रवान्।<br>सप्तम्याम् - दण्डाः सन्ति अस्यां दण्डवती शाला।<br>इतिशब्दो विषयविशेषलाभार्थः सर्वत्र सम्बध्यते इति<br>क्वचिद् एकाक्षरादिभ्योऽपि इनिठनौ भवत एव -<br>कार्यी, हार्यी, तण्डुली, तण्डुलिकः। | अतः १२८<br>इनिठनौ ११७ |
| मत्वर्थे ९४<br>इनिठनौ ११५ | ११६. व्रीह्यादिभ्यश्च<br>व्रीह्यादिभ्यः इनिठनौ भवतो मत्वर्थे। मतुब्भवत्येव।<br>व्रीही, व्रीहिकः, व्रीहिमान्।<br>मायी, मायिकः, मायावान्।<br>न च व्रीह्यादिभ्यः सर्वेभ्यः प्रत्ययद्वयमिष्यते किं तर्हि?<br>(श्लोकवार्तिकम्)<br>शिखादिभ्य इनिर्वाच्यः,<br>इकन् यवखदादिषु।।<br>परिशिष्टेभ्य उभयम्। | |
| मत्वर्थे ९४<br>अन्यतरस्याम् ९६<br>इनिठनौ ११५ | ११७. तन्तादिभ्य इलच् च<br>तुन्दादिभ्य इलच् प्रत्ययो भवति मत्वर्थे, चकाराद्<br>इनि-ठनौ, मतुप् च।<br>अतिशयितं तुन्दम् = उदरमस्ति अस्य तुन्दिलः, तुन्दी,<br>तुन्दिकः, तुन्दवान्।<br>(गणसूत्रम्) स्वाङ्गाद् विवृद्धौ।<br>विवृद्ध्युपाधिकात्स्वाङ्गवाचिनः इजलादयो भवन्ति।<br>विवृद्धौ कर्णौ यस्य स कर्णिलः, कर्णी, कर्णिकः,<br>कर्णवान्। | |
| मत्वर्थे ९४<br>इनिठनौ ११५<br>अतः११५ | ११८. एकगोपूर्वाट् ठञ् नित्यम्<br>नित्यं एकपूर्वाद्, गोपूर्वाच्च प्रातिपदिकात् ठञ् प्रत्ययो<br>भवति मत्वर्थे।<br>एकशतमस्ति अस्य ऐकशतिकः।<br>गोशतमस्ति अस्य गौशतिकः। | ठञ् ११९<br>नित्यम् १२०. |

| | | |
|---|---|---|
| मत्वर्थे ९४<br>ठञ् ११८<br>नित्यम् ११८ | **११९. शतसहस्रान्ताच्च निष्कात्**<br>निष्कात् परौ यौ शतसहस्रशब्दौ तदन्तात्प्रातिपदिकात् ठञ् प्रत्ययो भवति, मत्वर्थे।<br>निष्कशतमस्ति अस्य नैष्कशतिकः।<br>नैष्कसहस्रिकः। | |
| मत्वर्थे ९४<br>नित्यम्११८ | **१२०. रूपादाहत-प्रशंसयोर्यप्**<br>आहतविशिष्टार्थे, प्रशंसाविशिष्टार्थे च वर्तमानाद् नित्यं रूपशब्दाद् यप् प्रत्ययो भवति, मत्वर्थे।<br>आहत-प्रशंसे प्रकृत्युपाधी।<br>निघातिका-ताडनादिना दीनारादिषु रूपं यदुत्पद्यते तदाहतमित्युच्यते।<br>आहतं रूपमस्य रूप्यो दीनारः। रूप्यः केदारः। रूप्यं कार्षापणम्।<br>प्रशस्तं रूपमस्यास्ति रूप्यः पुरुषः। आहत-प्रशंसयोरिति किम्? रूपवान्।<br>(वा०)यप्प्रकारणेऽन्येभ्योऽपि दृश्यते।<br>हिममस्ति एषामिति हिम्याः पर्वताः। गुणाः सन्ति एषां गुण्या ब्राह्मणाः। | |
| मत्वर्थे ९४<br>अन्यतरस्याम् ९६ | **१२१. अस्माया-मेधा-स्रजो विनिः**<br>असन्तात् प्रातिपदिकात्, माया, मेधा, स्रज्- इत्येतेभ्यश्च प्रातिपदिकेभ्यः विनिः प्रत्ययो भवति, मत्वर्थे।<br>यशस्वी। तपस्वी। मायावी।<br>व्रीह्यादिपाठादिनिठनावपि - मायी, मायिकः। मेधावी। स्रग्वी। | विनिः १२२ |

| | | |
|---|---|---|
| मत्वर्थे ९४<br>विनिः१२१ | १२२. बहुलं छन्दसि<br>छन्दसि विषये बहुलं विनिः प्रत्ययो भवति, मत्वर्थे।<br>अग्ने तेजस्विन्।<br>नापि भवति- सूर्यो वर्चस्वान्।<br>(वा०) शृङ्ग-वृन्दारकाभ्यामारकन् वक्तव्यः।<br>शृङ्गारकः। वृन्दारकः।<br>(वा०) हृदयाच्चालुरन्यतरस्याम्।<br>हृदयालुः, हृदयी, हृदयिकः, हृदयवान्।<br>(वा०) शीतोष्ण-तृप्रेभ्यस्तन्न सहत इत्यालुज्वक्तव्यः।<br>शीतं न सहते शीतालुः। उष्णालुः। तृप्रालुः।<br>(वा०) तन्न सहत इति हिमाच्चेलुः।<br>हिमं न सहते हिमेलुः।<br>(वा०) बलादूलच्।<br>बलं न सहते बलूलः।<br>(वा०) वातात् समूहे च।<br>(वा०) वातं न सहत इति च।<br>वातानां समूहः, वातं न सहते इति वा वातूलः।<br>(वा०) पर्व-मरुद्भ्यां तन्वक्तव्यः।<br>पर्वतः। मरुत्तः।<br>(वा०) अर्थात्तदभावे इनिर्वक्तव्यः।<br>अर्थी।<br>तदभाव इत्येव - अर्थवान्। एतत्सर्वं बहुलग्रहणेन सम्पद्यते। | |
| मत्वर्थे ९४ | १२३. ऊर्णाया युस्<br>ऊर्णाशब्दाद् युस् प्रत्ययो भवति मत्वर्थे। सित्त्वाद् 'तसौ मत्वर्थे (१.४.१९) इत्यनेन पदत्वात् 'यस्येति च' इत्यनेन आकारलोपो न।<br>ऊर्णाऽस्य विद्यते ऊर्णायुः। | |
| मत्वर्थे ९४ | १२४. वाचो ग्मिनिः<br>वाच् इतिशब्दाद् ग्मिनिः प्रत्ययो भवति मत्वर्थे।<br>वाग्मी। | वाचः १२५ |
| मत्वर्थे ९४<br>वाचः १२४ | १२५. आलजाटचौ बहुभाषिणि<br>वाच् इतिशब्दाद् आलच्, आटच्- इत्येतौ प्रत्ययौ भवतो मत्वर्थे, बहुभाषिणि वाच्ये।<br>(वा०) कुत्सित इति वक्तव्यम्।<br>कुत्सितं यो बहु भाषते स वाचालः, वाचाटो वा।<br>यो हि सम्यग् बहु भाषते स वाग्मी इत्येव भवति। | |

| | | |
|---|---|---|
| मत्वर्थे ६४ | १२६. स्वामिन्नैश्वर्ये<br>'स्वामिन्' इति निपात्यते ऐश्वर्ये गम्यमाने।<br>ऐश्वर्यवाचिनः स्वशब्दाद् मत्वर्थे आमिन् प्रत्ययो निपात्यते।<br>स्वम् = ऐश्वर्यम्, अस्यास्तीति स्वामी, नियन्तेत्यर्थः।<br>स्वशब्दस्यैश्वर्यवाचित्वमेतद्वृत्तिविषयकमेव बोध्यम्।<br>ऐश्वर्य इति किम्? स्ववान्। धनवानित्यर्थः। | |
| मत्वर्थे ६४ | १२७. अर्शआदिभ्योऽच्<br>'अर्शस्' इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्प्रत्ययो भवति मत्वर्थे।<br>अर्शः = गुदरोगविशेषः। अर्शांसि विद्यन्तेऽस्य अर्शसः।<br>आकृतिगणोऽयम्। तेन यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत्सर्वमिह द्रष्टव्यम्। यथा 'पापोऽहं पापकर्माऽहम्' इत्यत्र पापशब्दे अच्प्रत्ययः। | |
| मत्वर्थे ६४<br>अतः ११५ | १२८. द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः<br>द्वन्द्वः = समासः, उपतापः = रोगः, गर्ह्यम् = निन्द्यम्, तद्विषयेभ्यः प्राणिस्थार्थवाचिभ्यः अदन्तेभ्यः इनिः प्रत्ययो भवति मत्वर्थे।<br>द्वन्द्वात् - कटकवलयिनी।<br>उपतापात् - कुष्ठी।<br>गर्ह्यात् - ककुदावर्ती।<br>ककुदं =ग्रीवाया अधस्तात्पृष्ठभागः, तत्र आवर्तः= जलभ्रमः इवेति ककुदावर्तः, सोऽस्ति अस्येति ककुदावर्ती पुरुषः, ककुदावर्तस्य शरीरे निष्फलत्वाद् गर्ह्यत्वम्।<br>प्राणिस्थादिति किम्? पुष्पफलवान् वृक्षः।<br>(वा०) प्राण्यङ्गान्न।<br>पाणिपादवती। | इनिः १३७ |
| मत्वर्थे ६४<br>इनिः १२८ | १२९. वातातिसाराभ्यां कुक् च<br>वात, अतिसार- इत्येताभ्यां शब्दाभ्याम् इनिः प्रत्ययो भवति, तत्सन्नियोगेन तयोः कुगागमश्च मत्वर्थे।<br>वातकी। अतिसारकी। | |

| | | |
|---|---|---|
| मत्वर्थे ९४<br>इनिः १२८ | १३०. वयसि पूरणात्<br>पूरणप्रत्ययान्तात् प्रतिपादिकाद् इनिः प्रत्यय एव भवति न तु ठन् मत्वर्थे, वयसि द्योत्ये। नियमार्थमिदं सूत्रम् अत इनिठनौ इत्येनेनैव इनेः सिद्धत्वात्।<br>पञ्चमो मासः, संवत्सरो वा अस्ति अस्य इति पञ्चमी उष्ट्रः।<br>वयसीति किम्<br>पञ्चमवान् ग्रामरागः। | |
| मत्वर्थे ९४<br>इनिः १२८ | १३१. सुखादिभ्यश्च<br>'सुख' इत्येवमादिभ्यः प्रातिपदिकेभ्यः इनिः प्रत्यय एव भवति मत्वर्थे।<br>'अत इनिठनौ' इत्येव सिद्धे इदमपि नियमार्थम्- सुखादिभ्य इनिरेव भवति न तु ठन्नपि।<br>सुखी। दुःखी। | |
| | १३२. धर्म-शील-वर्णान्ताच्च<br>धर्म, शील, वर्ण- इत्येतदन्तात् प्रातिपदिकादिनिः प्रत्यय एव भवति मत्वर्थे।<br>'अत इनिठनौ' इत्येव सिद्धे इदमपि नियमार्थम्।<br>ब्राह्मणानां धर्मो ब्राह्मणधर्मः, सोऽस्ति अस्य इति ब्राह्मणधर्मी।<br>ब्राह्मणानां शीलम्= स्वभावः ब्राह्मणस्वभावः, सोऽस्ति अस्य इति ब्राह्मणशीली।<br>ब्राह्मणानां वर्णः = जातिः, ब्राह्मणवर्णः, सोऽस्ति अस्य इति ब्राह्मणवर्णी। | |
| मत्वर्थे ९४<br>इनिः १२८ | १३३. हस्ताज्जातौ<br>हस्तशब्दादिनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेज्जातिरभिधीयते।<br>'अत इनिठनौ' इत्येव सिद्धे इदमपि नियमार्थम्।<br>हस्तोऽस्यास्तीति हस्ती गज इत्यर्थः।<br>जातावितिकिम् ? हस्तवान् पुरुषः। | |
| मत्वर्थे ९४<br>इनिः १२८ | १३४. वर्णाद् ब्रह्मचारिणि<br>वर्णशब्दादिनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेद् ब्रह्मचारी भण्यते।<br>'अत इनिठनौ' इत्येव सिद्धे इदमपि नियमार्थम्।<br>वर्णः = वेदाध्ययनार्थं ब्रह्मचर्यम्, सोऽस्ति अस्य वर्णी।<br>ब्रह्मचारिणीति किम् ? वर्णवान्। | |

| | | |
|---|---|---|
| मत्वर्थे ९४<br>इनिः १२८ | १३५. पुष्करादिभ्यो देशे<br>'पुष्कर इत्येवामादिभ्यः प्रातिपदिकेभ्यः इनिः प्रत्ययो भवति, समुदायेन चेद् देशोऽभिधीयते।<br>'अत इनिठनौ' इत्येव सिद्धे इदमपि नियमार्थम्।<br>पुष्करिणी। पद्मिनी।<br>देश इति किम् ? पुष्करवान् हस्ती।<br>(वा०) इनिप्रकरणे बलाद्बाहूरुपूर्वादुपसंख्यानम्।<br>बाहुबली। ऊरुबली।<br>(वा०) सर्वादेश्चेति वक्तव्यम्।<br>सर्वधनी। सर्वबीजी। सर्वकेशी नटः।<br>(वा०)अर्थाच्चासन्निहिते।<br>असन्निहितोपाधिकाद् अर्थशब्दाद् इनिः प्रत्ययो भवति, मत्वर्थे इति वार्तिकार्थः।<br>अर्थशब्दोऽत्र धनवाची। असन्निहितोऽर्थो धनमस्य इति अर्थी दरिद्रः।<br>सन्निहिते तु अर्थवान्।<br>(वा०)तदन्ताच्चेति वक्तव्यम्।<br>धान्यार्थी। हिरण्यार्थी। | |
| मत्वर्थे ९४<br>इनिः १२८ | १३६. बलादिभ्यो मतुबन्यतरस्याम्<br>बलादिभ्यः प्रातिपदिकेभ्यः मत्वर्थे मतुप् प्रत्ययो भवति।<br>अन्यतरस्यां ग्रहणेन 'द्वन्द्वोपताप' (५.२.१२८) इति प्रकृतस्येनेः समुच्चयार्थम्। तेनास्माट्ठन् न भवति।<br>बलमस्ति अस्य बलवान्, बली। उत्साहवान्, उत्साही। | |
| मत्वर्थे ९४<br>इनिः १२८ | १३७. संज्ञायां मन्माभ्याम्<br>मन्नन्ताद्, मशब्दान्ताच्च प्रातिपदिकाद् इनिः प्रत्ययो भवति, मत्वर्थे, समुदायेन चेत्संज्ञा गम्यते।<br>मन्नन्तात् - प्रथिमिनी। दामिनी।<br>मशब्दान्तात् - होमिनी। सोमिनी।<br>संज्ञायामिति किम् ? सोमवान्। होमवान्। | |

| | | |
|---|---|---|
| मत्वर्थे ६४ | **१३८. कंशम्भ्यां बभयुस्तितुतयसः**<br>कम्, शम् इति मकारान्तौ उदकसुखयोः वाचकौ, ताभ्यां ब, भ, युस्, ति, तु, त, यस्- इत्येते सप्त प्रत्ययाः भवन्ति मत्वर्थे।<br>सकारः पदसंज्ञार्थः, तेन युसि, मसि च परे अनुस्वार-परसवर्णौ भवतः।<br>कम्बः, शम्बः। कम्भः, शम्भः।<br>कंभुः, शंभुः। कन्तिः, शन्तिः।<br>कन्तुः, शन्तुः। कन्तः, शन्तः। कंयः, शंयः। | |
| मत्वर्थे ६४ | **१३९. तुन्दि-बलि-वटेर्भः**<br>तुन्दि, बलि, वटि - इत्येतेभ्यो भः प्रत्ययो भवति मत्वर्थे।<br>तुन्दिः = वृद्धा नाभिः। साऽस्ति अस्य तुन्दिभः।<br>बलिः =वृद्धावस्थया श्लथचर्म, साऽस्ति अस्य बलिभः।<br>वटिः= जटासमूहः, सोऽस्ति अस्येति वटिभो वृक्षः।<br>'वटिभो वृक्षः' इति भाषावृत्तौ।<br>बलिशब्दः पामादिषु पठ्यते, तेन बलिन इत्यपि। | |
| मत्वर्थे ६४ | **१४०. अहं-शुभमोर्युस्**<br>'अहम्' इति शब्दान्तरमहङ्कारे वर्तते, 'शुभम्' इत्यव्ययं शुभपर्यायः, ताभ्यां युस्प्रत्ययो भवति, मत्वर्थे।<br>सकारः 'तसौ मत्वर्थे' इति पदसंज्ञार्थः।<br>अहम् = अहङ्कारः, अस्ति अस्य अहंयुः।<br>शुभम्= कल्याणमस्ति अस्य शुभंयुः, कल्याणवानित्यर्थः। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां पञ्चमाध्यायस्य द्वितीयः पादः।।

।। श्रीः ।।

## ।। अथ पञ्चमाध्यायस्य तृतीयः पादः ।।

| | | |
|---|---|---|
| | १. प्राग्दिशो विभक्तिः<br>'दिक्शब्देभ्यः सप्तमी-पञ्चमी-प्रथमाभ्यः' (५.३.२६) इत्यतः प्राग् 'विभक्तिः' इत्यस्याधिकारः। तेन अतः परं ये केचन प्रत्ययाः विहितास्तेषां विभक्तिसंज्ञा भवति। यथा 'पञ्चम्यास्तसिल् (५.३.७) इत्यनेन तस्मादिति पदात् तसिल् प्रत्यये कृते, सुब्लुकि च तसेः विभक्तिसंज्ञा। तेन 'त्यदादीनामः' इत्यनेन विभक्तौ परतः अत्वं भवति, सकारस्य इत्वाभावश्च। ततः पररूपे, विभक्तिकार्ये च कृते 'ततः' इति रूपं सिद्ध्यति।<br>अतः परं प्रायेण स्वार्थिकाः प्रत्ययाः। तेन 'समर्थानाम्' इति 'प्रथमाद्' इति च निवृत्तम्। 'वा' इति तु अनुवर्तत एव। तेन विकल्पेन तसिलादयो भवन्ति - कुतः, कस्मात्। कुत्र, कस्मिन् इति।<br>अस्मिन् प्रकरणे विहिताः प्रत्ययाः प्राग्दिशीयाः प्रत्ययाः कथ्यन्ते। | विभक्तिः २६ |
| प्राग्दिशः१<br>प्रत्ययाः ३.१.१ | २. किं-सर्वनाम-बहुभ्योऽद्व्यादिभ्यः<br>किं-सर्वनाम-बहुभ्योऽद्व्यादिभ्यः इत्यपि 'दिक्शब्देभ्यः सप्तमी-पञ्चमी-प्रथमाभ्यः' (५.३.२६) इत्यतः प्राग् अधिक्रियते। तेन प्राग्दिशीयाः प्रत्ययाः किं-सर्वनाम-बहुभ्य एव प्रातिपदिकेभ्यः भवन्ति।<br>कस्मात् - कुतः। यस्मात्- यतः। तस्मात् = ततः।<br>बहोः = बहुतः। बहौ - बहुत्र।<br>(वा०)बहुग्रहणे संख्याग्रहणम्।<br>इह न भवति-बहोः सूपात्। बहौ सूपे। वैपुल्यवाची बहुशब्दोऽत्र।<br>'बहुगणवतुडति संख्या' इत्यनेन बहुशब्दस्य संख्यासंज्ञा तत्रैव भवति यत्र गणनायोग्यपदार्थानां विशेषणरूपेण बहुशब्दः प्रयुज्यते। यथा बहुत्र स्थलेषु इत्यादौ। | सम्पूर्णसूत्रम् २६ |

| | | |
|---|---|---|
| प्राग्दिशः१ | **३. इदम इश्**<br>इदमः इश् इत्ययमादेशो भवति प्राग्दिशीयेषु प्रत्ययेषु परतः।<br>शकारः सर्वादेशार्थः।<br>इह।<br>'इदमो हः' (५.३.११) इति सूत्रेण हप्रत्ययः। | इदमः ४ |
| प्राग्दिशः१<br>इदमः ३ | **४. एतेतौ रथोः**<br>रेफादौ, थकारादौ च प्राग्दिशीये प्रत्यये परे इदमः यथासंख्यम् एत, इत् इत्यादेशौ भवतः। 'र' इत्यत्राकार उच्चारणार्थः।<br>'इदमोर्हिल्' - एतर्हि।<br>'इदमस्थमुः - इत्थम्। | |
| प्राग्दिशः१ | **५. एतदोऽन्**<br>एतदः अन् इत्यादेशो भवति प्राग्दिशीये प्रत्यये परे।<br>अतः। अत्र।<br>'पञ्चम्यास्तसिल्(५.३.८) इति तसिल्।<br>सप्तम्यास्त्रल्(५.३.१०) इति त्रल्।<br>अनेकाल्त्वात्सर्वादेशः। नकारस्य 'नलोपः प्रातिपदिकान्तस्य' इति सूत्रेण लोपः, न त्वित्संज्ञा प्रयोजनाभावात्। | |
| प्राग्दिशः१ | **६. सर्वस्य सोऽन्यतरस्यां दि**<br>सर्वस्य स इत्ययमादेशो भवति दकारादौ प्राग्दिशीये परेऽन्यतरस्याम्।<br>सर्वदा, सदा।<br>'सर्वैकान्यकिंयत्तदः काले दा'(५.३.१५) इति दाप्रत्ययः। | |
| किंसर्वनामबहुभ्यो-ऽद्व्यादिभ्यः २<br>विभक्तिः१<br>प्रत्ययः३.१.१ | **७. पञ्चम्यास्तसिल्**<br>पञ्चम्यन्तेभ्यः किं-सर्वनाम-बहुभ्यः तसिल् प्रत्ययो भवति न तु द्व्यादिभ्यः।<br>कुतः। ततः। बहुतः।<br>द्व्यादेस्तु - द्वाभ्यामित्येव। | तसिल् ८ |
| तसिल् ७<br>विभक्तिः१<br>प्रत्ययः३.१.१ | **८. तसेश्च**<br>'प्रतियोगे पञ्चम्यास्तसिः' (५.४.४४) 'अपादाने चाहीयरुहोः' (५.४.४५) इति वक्ष्यति।<br>किं-सर्वनाम-बहुभ्यः परस्य तस्य तसेः तसिलादेशो भवति।<br>कुत आगतः। ततः आगतः। बहुत आगतः।<br>तसेस्तसिल्वचनं स्वरार्थं, विभक्त्यर्थं च। | |

| | | |
|---|---|---|
| तसिल् ७<br>विभक्तिः१<br>प्रत्ययः३.१.१ | ९. पर्यभिभ्यां च<br>परि, अभि-इत्येताभ्यां तसिल् प्रत्ययो भवति।<br>(वा०) सर्वोभयार्थाभ्यामेव।<br>परितः। सर्वत इत्यर्थः।<br>अभितः। उभयत इत्यर्थः। | |
| किंसर्वनाम-बहुभ्योऽद्व्यादिभ्यः२ | १०. सप्तम्यास्त्रल्<br>किं-सर्वनाम-बहुभ्यः सप्तम्यन्तेभ्यः त्रल् प्रत्ययो भवति।<br>कुत्र। यत्र। बहुत्र।<br>'कुत्र' इत्यत्र 'कु तिहोः' इत्यनेन किमः कु इत्यादेशः। | सप्तम्याः २२ |
| सप्तम्याः १० | ११. इदमो हः<br>सप्तम्यन्ताद् इदमः हः प्रत्ययो भवति। त्रलोऽपवादः।<br>इह।<br>'अत्र' इति तु एतद् इतिशब्दात्त्रलि रूपम्। | |
| सप्तम्याः १० वा१३ | १२. किमोऽत्<br>सप्तम्यन्तात् किमः अत् प्रत्ययो वा भवति।<br>उत्तरसूत्राद् वाग्रहणमपकृष्यते।<br>क्व। कुत्र।<br>सप्तम्यन्तात् किमः अत् प्रत्ययः। 'क्वाति' (७.३.१०५) इति किमः 'क्व' इत्यादेशः।<br>पक्षे 'कुतिहोः' इत्यनेन किमः कु इत्यादेशः। | किमः १३ |
| सप्तम्याः १०<br>किमः१२ | १३. वा ह च च्छन्दसि<br>सप्तम्यन्तात् किमः हः प्रत्ययो वा भवति छन्दसि विषये। चकाराद्यथाप्राप्तं च।<br>कुह। क्व। | वा १२ |

| | | |
|---|---|---|
| तसिलादयः ७.१३ | १४. इतराभ्योऽपि दृश्यन्ते<br>पञ्चमीसप्तमीतरविभक्त्यन्तेभ्योऽपि तसिलादयो दृश्यन्ते।<br>(वा०) दृशिग्रहणाद् भवदादियोग एव।<br>के पुनर्भवदादयः? भवान्, दीर्घायुः,आयुष्मान्, देवानाम्प्रिय इति।<br>स भवान् इति ततोभवान्, तत्रभवान्।<br>तं भवन्तमिति ततोभवन्तम्, तत्रभवन्तम्।<br>तेन भवतेति ततोभवता, तत्रभवता।<br>तस्मै भवते इति ततोभवते, तत्रभवते।<br>तस्माद् भवतः इति ततोभवतः, तत्रभवतः।<br>तस्य भवतः इति ततोभवतः, तत्रभवतः।<br>तस्मिन् भवति इति ततोभवति, तत्रभवति।<br>एवमेव दीर्घायुःप्रभृतिष्वप्युदाहार्यम्। | |
| सप्तम्याः १०.७ | १५. सर्वैकान्य-किं-यत्तदः काले दा<br>कालार्थेभ्यः सप्तम्यन्तेभ्यः सर्वादिभ्यः दा प्रत्ययो भवति।<br>सर्वस्मिन् काले सर्वदा। एकदा। अन्यदा। कदा। यदा। तदा।<br>काले इति किम ? सर्वत्र देशे। | काले २२ |
| सप्तम्याः १०.७<br>काले १५ | १६. इदमोर्हिल्<br>कालार्थात् सप्तम्यन्ताद् इदमः र्हिल् प्रत्ययो भवति।<br>अस्मिन् काले एतर्हि।<br>'एतेतौ रथोः' इति एतादेशः।<br>काल इति किम् ? इह देशे। | इदमः १८ |
| काले १५ | १७. अधुना<br>अस्मिन् काले इत्यर्थे अधुना इति निपात्यते।<br>इदमोऽश्भावो, धुना च प्रत्ययः।<br>अस्मिन् काले अधुना। | |
| इदमः १६<br>सप्तम्याः१०<br>काले १५ | १८. दानीं च<br>सप्तम्यन्ताद् इदमः काले वर्तमानाद् दानीम् प्रत्ययो भवति।<br>अस्मिन् काले इदानीम्।<br>'इदम इश्' इति इशादेशः। | दानीम् १६ |

| | | |
|---|---|---|
| सप्तम्याः १०.७<br>काले १५<br>दानीम् १८ | १९. तदो दा च<br>सप्तम्यन्तात् तदः काले वर्तमानाद् दा प्रत्ययो भवति, चकाराद् दानीं च।<br>तस्मिन्काले तदा, तदानीम्।<br>तदो दावचनमनर्थकम्, 'सर्वैकान्यकिंयत्तदः काले दा (५.३.१५) इति पूर्वसूत्रेणैव विहितत्वात्। | |
| दानीम् १८<br>काले १५ | २०. तयोर्दार्हिलौ च च्छन्दसि<br>तयोः = इदमः, तदश्च यथासंख्यं दा, र्हिल् प्रत्ययौ भवत छन्दसि विषये, चकाराद्यथाप्राप्तं च।<br>इदावत्सरीयः। इदं तर्हि। इदानीम्। तदानीम्। | |
| सप्तम्याः १०<br>काले १५<br>किंसर्वनाम्-<br>बहुभ्योऽद्व्यादिभ्यः२ | २१. अनद्यतने र्हिलन्यतरस्याम्<br>किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्योऽनद्यतने काल विशेषेभ्यो वर्तमानेभ्यो र्हिल् प्रत्ययो भवत्यन्यतरस्याम्।<br>कर्हि, कदा। यर्हि, यदा। तर्हि, तदा। | |

| | | |
|---|---|---|
| सप्तम्याः १०<br>काले १५ | २२.<br>सद्यः-परुत्-परार्यैषमः-परेद्यव्यद्य-पूर्वेद्युरन्येद्यु-रन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः<br>सद्यःप्रभृतय चतुर्दश शब्दाः निपात्यन्ते।<br>(वा०) समानस्य सभावोद्यश्चाहनि।<br>समानेऽहनीति सद्यः। (१)<br>(वा०) पूर्व-पूर्वतरयोः पर उदारी च संवत्सरे।<br>पूर्वस्मिन् संवत्सरे इति परुत्। (२)<br>पूर्वतरे संवत्सरे इति परारि। (३)<br>(वा०) इदम इश् समसण् प्रत्ययश्च संवत्सरे।<br>अस्मिन् संवत्सरे इति ऐषमः। (४)<br>(वा०) परस्मादेद्यव्यहनि।<br>परस्मिन्नहनि इति परेद्यवि। (५)<br>(वा०) इदमोऽश्भावः, द्यश्च।<br>अस्मिन्नहनि इति अद्य। (६)<br>(वा०) पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस्।<br>पूर्वस्मिन्नहनि इति पूर्वेद्युः। (७)<br>अन्यस्मिन्नहनि इति अन्येद्युः। (८)<br>अन्यतरस्मिन्नहनि इति अन्यतरेद्युः। (९)<br>इतरस्मिन्नहनि इति इतरेद्युः। (१०)<br>अपरस्मिन्नहनि इति अपरेद्युः। (११)<br>अधरस्मिन्नहनि इति अधरेद्युः। (१२)<br>उभयोरह्नोः उभयेद्युः। (१३)<br>उत्तरस्मिन्नहनि उत्तरेद्युः। (१४)<br>(वा०) द्युश्चोभयाद् वक्तव्यः।<br>उभयस्मिन्नहनीति उभयद्युः। | |
| किंसर्वनाम-<br>बहुभ्योऽद्व्यादिभ्यः२ | २३. प्रकारवचने थाल्<br>प्रकारवृत्तिभ्यः किंसर्वनामबहुभ्यः स्वार्थे थाल् प्रत्ययो भवति।<br>सामान्यस्य विशेषो भेदकः = प्रकारः।<br>प्रकृत्यर्थविशेषणं चैतत्।<br>तेन प्रकारेण तथा। येन प्रकारेण यथा। सर्वेण प्रकारेण सर्वथा।<br>'प्रकारवचने जातीयर् (५.३.६९) इत्यनेनापि प्रकारवचने जातीयर् प्रत्ययो भवति, स तु प्रकारवति वर्तते। थाल् प्रत्ययश्चायं प्रकार मात्रे । अयमेव अनयोर्भेदः। | प्रकारवचने २६ |

| | | |
|---|---|---|
| प्रकारवचने २३ | २४. इदमस्थमुः<br>इदम् इतिशब्दात्प्रकारवचने थमुः प्रत्ययो भवति।<br>थालोऽपवादः। उकारो मकारपरित्राणार्थः।<br>अनेन प्रकारेण इत्थम्।<br>'एततौ रथौ' इति इदमः इत् इत्यादेशः। | थमुः २५ |
| प्रकारवचने २३<br>थमुः २५ | २५. किमश्च<br>किंशब्दात् प्रकारवचने थमुः प्रत्ययो भवति।<br>केन प्रकारेण कथम्।<br>'किमः कः' इति कादेशः।<br>योगविभाग उत्तरार्थः। | किमः २६ |
| प्रकारवचने २३<br>किमः २५ | २६. था हेतौ च च्छन्दसि<br>हेतौ वर्तमानात् किंशब्दात् था प्रत्ययो भवति,<br>चकारात् प्रकारवचने च छन्दसि विषये।<br>हैतौ - कथा ग्रामं न पृच्छसि।<br>केन हेतुना न पृच्छसीत्यर्थः।<br>प्रकारवचने - कथा देवा आसन् पुराविदः।<br>विभक्तिसंज्ञायाः पूर्णोऽवधिः। | |
| ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः३.१.१ | २७. दिक्शब्देभ्यः सप्तमी-पञ्चमी-प्रथमाभ्यो दिग्देशकालेष्वस्तातिः<br>दिग्देशकालेषु वर्तमानेभ्यः<br>सप्तमी-पञ्चमी-प्रथमान्तेभ्यः दिग्वाचिभ्यः<br>प्रातिपदिकेभ्यः स्वार्थेऽस्तातिः प्रत्ययो भवति।<br>इकारस्तकारपरित्राणार्थः। यथासंख्यमत्र नेष्यते।<br>पूर्वस्यां दिशि वसति पुरस्ताद् वसति। पूर्वस्याः दिशः आगतः पुरस्तादागतः। पूर्वा दिग् रम्या पुरस्ताद् रम्या दिक्।<br>एवं देशे, काले च उदाहार्यम्।<br>दिक्शब्देभ्य इति किम्? ऐन्द्र्यां दिशि वसति।<br>सप्तमीपञ्चमीप्रथमाभ्य इति किम्? पूर्वं ग्रामं गतः।<br>दिग्देशकालेष्विति किम्? पूर्वस्मिन् गुरौ वसति।<br>'संख्याया विधार्थे धा'(५.३.४२) इति यावत् अस्तातिविषये विधिः। | सम्पूर्णसूत्रम् ४१<br>(अस्तातिं वर्जयित्वा) |

| | | |
|---|---|---|
| दिक्शब्देभ्यः सप्तमीपञ्चमी-प्रथमाभ्यो दिग्देशकालेषु २७ | २८. दक्षिणोत्तराभ्यामतसुच्<br>दिग्देशकालेषु वर्तमानाभ्यां सप्तमी-पञ्चमी-प्रथमान्ताभ्यां दिग्वाचिभ्यां दक्षिणोत्तराभ्यां प्रातिपदिकाभ्यां स्वार्थे अतसुच् प्रत्ययो भवति।<br>दक्षिणतो वसति।<br>दक्षिणतः आगतः।<br>दक्षिणतो रमणीयम्।<br>उत्तरतो वसति।<br>उत्तरत आगतः।<br>उत्तरतो रमणीयम्। | अतसुच् २९ |
| दिक्शब्देभ्यः सप्तमीपञ्चमी-प्रथमाभ्यो दिग्देशकालेषु २७ अतसुच् २८ | २९. विभाषा परावराभ्याम्<br>दिग्देशकालेषु वर्तमानाभ्यां सप्तमी-पञ्चमी-प्रथमान्ताभ्यां दिग्वाचिभ्यां दक्षिणोत्तराभ्यां प्रातिपदिकाभ्यां स्वार्थे विभाषा अतसुच् प्रत्ययो भवति।<br>परतः।<br>पक्षे अस्तातिः - परस्तात्।<br>अवरतः।<br>पक्षे अस्तातिः - अवरस्तात्, अवस्ताद् इति वा।<br>'विभाषाऽवरस्य(५.३.४१) इति सूत्रेण अवरशब्दस्य अव् इत्यादेशः। | |
| दिक्शब्देभ्यः सप्तमीपञ्चमी-प्रथमाभ्यो दिग्देशकालेषु २७ अस्तातेः २७ | ३०. अञ्चेर्लुक्<br>अञ्चत्यन्तेभ्यो दिक्शब्देभ्यः परस्यास्तातिप्रत्ययस्य लुग्भवति।<br>प्राच्यां दिशि वसति - प्राग् वसति।<br>'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्यापि लुक्। | |
| दिक्शब्देभ्यः सप्तमीपञ्चमी-प्रथमाभ्यो दिग्देशकालेषु २७ | ३१. उपर्युपरिष्टात्<br>उपरि, उपरिष्टात् - इत्येतौ शब्दौ निपात्येते अस्तातेरर्थे।<br>ऊर्ध्वशब्दस्य रिल्, रिष्टातिल् इत्यैतौ प्रत्ययौ निपात्येतेऽनेन।<br>ऊर्ध्वायाम्, ऊर्ध्वायाः, ऊर्ध्वा वेति उपरि, उपरिष्टात् वा वसति, आगतः, रमणीयं वा। | |

| | | |
|---|---|---|
| दिक्शब्देभ्यः सप्तमीपञ्चमी-प्रथमाभ्यो दिग्देशकालेषु २७ | **३२. पश्चात्**<br>'पश्चात्' इत्ययं शब्दो निपात्यते अस्तातेरर्थे।<br>अपरशब्दस्य पश्चभावः, आतिश्चः प्रत्ययो निपात्येते ऽनेन।<br>अपरस्याम्, अपरस्याः, अपरा वेति पश्चात्।<br>(वा०) दिक्पूर्वपदस्यापरस्य पश्चभावो वक्तव्यः, आतिश्च प्रत्ययः।<br>दक्षिणापरस्यां दिशि वसतीति दक्षिणपश्चाद् वसति।<br>एवमेव उत्तरपश्चात्।<br>(वा०) अर्धोत्तरपदस्य दिक्पूर्वपदस्य पश्चभावो वक्तव्यः।<br>अपरस्येति सम्बध्यते।<br>दक्षिणापरार्धः इति दक्षिणपश्चार्धः। उत्तरापरार्धः इति उत्तरपश्चार्धः।<br>(वा०) विनापि पूर्वपदेन पश्चभावो वक्तव्यः।<br>अर्धोत्तरपदस्य अपरशब्दस्येति शेषः।<br>अपरार्ध इति पश्चार्धः। | |
| दिक्शब्देभ्यः सप्तमीपञ्चमी-प्रथमाभ्यो दिग्देशकालेषु २७ | **३३. पश्च पश्चा च च्छन्दसि**<br>पश्च, पश्चा, इत्येतौ शब्दौ निपात्येते, छन्दसि विषये अस्तातेरर्थे, चकारात् पश्चादित्यपि भवति।<br>अपरस्य पश्चभावः, अकारः, आकारश्च प्रत्ययः निपात्यते।<br>पुरा व्याघ्रो जायते, पश्च सिंहः, पश्चा सिंहः, पश्चात् सिंहः। | |
| दिक्शब्देभ्यः सप्तमीपञ्चमी-प्रथमाभ्यो दिग्देशकालेषु २७ | **३४. उत्तराधर-दक्षिणादातिः**<br>उत्तर, अधर, दक्षिण- इत्येतेभ्यः शब्देभ्यः आतिः प्रत्ययो भवति अस्तातेरर्थे।<br>उत्तराद् वसति, उत्तरादागतः, उत्तराद् रमणीयम्।<br>अधराद् वसति, आगतः, रमणीयं वा। दक्षिणाद् वसति, आगतः, रमणीयं वा। | उत्तराधर-दक्षिणात् ३५ |
| उत्तराधरदक्षिणात् ३४ दिक्शब्देभ्यः सप्तमीपञ्चमी-प्रथमाभ्यो दिग्देशकालेषु २७ | **३५. एनबन्यतरस्यामदूरेऽपञ्चम्याः**<br>उत्तराधरदक्षिणशब्देभ्यः एनप् प्रत्ययो भवति, अन्यतरस्यामस्तातेरर्थे, अवध्यवधिमतोः अदूरे, पञ्चम्यन्तं विना।<br>उत्तरेण, अधरेण, दक्षिणेन वा वसति, रमणीयं वा।<br>पक्षे यथास्वं प्रत्ययाः - उत्तराद्, उत्तरतः। | अपञ्चम्याः ३८ |

| | | |
|---|---|---|
| अपञ्चम्याः ३५<br>दिक्शब्देभ्यः<br>सप्तमीपञ्चमी-<br>प्रथमाभ्यो<br>दिग्देशकालेषु २७ | ३६. दक्षिणादाच्<br>दक्षिणशब्दादाच्प्रत्ययो भवति, अस्तातेरर्थे,<br>अवध्यवधिमतोः अदूरे, पञ्चम्यन्तं विना।<br>दक्षिणा वसति, रमणीयं वा। | दक्षिणादाच् ३७ |
| अपञ्चम्याः ३५<br>दिक्शब्देभ्यः<br>सप्तमीपञ्चमी-<br>प्रथमाभ्यो<br>दिग्देशकालेषु २७<br>दक्षिणादाच् ३६ | ३७. आहि च दूरे<br>दक्षिणशब्दाद् आहिः प्रत्ययो भवति चकारादाच्,<br>अस्तातेरर्थे, अवध्यवधिमतोः दूरे, पञ्चम्यन्तं विना।<br>दक्षिणाहि, दक्षिणा वा वसति, रमणीयं वा। | आहि दूरे ३८ |
| अपञ्चम्याः ३५<br>दिक्शब्देभ्यः<br>सप्तमीपञ्चमी-<br>प्रथमाभ्यो<br>दिग्देशकालेषु २७<br>आच् ३६, आहि<br>३७<br>दूरे ३७ | ३८. उत्तराच्च<br>उत्तरशब्दादपि आहिप्रत्ययः, आच्प्रत्ययश्च भवति,<br>अवध्यवधिमतोर्दूरे, पञ्चम्यन्तं विना।<br>उत्तराहि, उत्तरा वा वसति, रमणीयं वा। | |
| दिक्शब्देभ्यः<br>सप्तमीपञ्चमी-<br>प्रथमाभ्यो<br>दिग्देशकालेषु २७ | ३९. पूर्वाधरावराणामसि पुरधवश्चैषाम्<br>पूर्व, अधर, अवर- इत्येतेभ्यः असिः प्रत्ययो भवति,<br>अस्तारेरर्थे, तत्सन्नियोगेन यथासंख्यं पुर्, अध्, अव्<br>इत्येते आदेशाश्चापि एषां भवन्ति।<br>पुरो वसति, आगतः, रमणीयं वा।<br>अधो वसति, आगतः, रमणीयं वा।<br>अवो वसति, आगतः, रमणीयं वा। | पूर्वाधरा-<br>वराणाम् ४०<br>पुरधवः ४० |
| पूर्वाधरापराणाम्<br>३९<br>पुरधवः ३९ | ४०. अस्ताति च<br>'अस्ताति' इति प्रत्यये परेऽपि पूर्वादीनां यथासंख्यं<br>पुरादय आदेशा भवन्तिं।<br>'अस्ताति' इति लुप्तसप्तमीकं, तकारान्तात्<br>सप्तम्येकवचनं वा। इदमादेशविधानं ज्ञापकम्अस्तातिः<br>एभ्यो भवति, असिप्रत्ययेन न बाध्यते इति भावः।<br>पुरस्ताद् वसति, आगतः, रमणीयं वा।<br>अधस्ताद् वसति, आगतः, रमणीयं वा।<br>अवरशब्दस्याव् इत्यादेशो विकल्पेन भवति अग्रिमेण<br>सूत्रेण। | अस्ताति ४१ |

| | | |
|---|---|---|
| अस्ताति ४०<br>अव् ३९<br>दिक्शब्देभ्यः सप्तमीपञ्चमी-प्रथमाभ्यो दिग्देशकालेषु २७ | ४१. विभाषाऽवरस्य<br>अवरशब्दस्यास्तातौ परतो विभाषा अव् इत्ययमादेशो भवति।<br>पूर्वेण नित्ये प्राप्ते विकल्प उच्यते।<br>अवस्ताद्, अवरस्ताद् वा वसति, आगतः, रमणीयं वा।<br>**अस्तात्यर्थप्रत्ययान्तशब्दानां सूची**<br>१. पूर्व- पुरस्तात्, पुरः।<br>२.पर- परस्तात्, परतः।<br>३.अवर- अवरस्तात्, अवस्तात्, अवः अवरतः।<br>४. दक्षिण - दक्षिणतः, दक्षिणात्। अदूरेऽपञ्चम्याः - दक्षिणेन, दक्षिणा च। दूरेऽपञ्चम्याः - दक्षिणा, दक्षिणाहि।<br>५.उत्तर - उत्तरतः, उत्तरात्।<br>अदूरेऽपञ्चम्याः - उत्तरेण।<br>दूरेऽपञ्चम्याः - उत्तरा, उत्तराहि।<br>६.अपर - पश्चात्।<br>छन्दसि - पश्च, पश्चा च।<br>७.अधर - अधस्तात्, अधरात्, अधः।<br>अदूरेऽपञ्चम्याः - अधरेण च।<br>८.ऊर्ध्व - उपरि, उपरिष्टात्।<br>९.प्राची इत्यादि - प्राक्, प्रत्यक् इत्यादि। | |
| | ४२. संख्याया विधार्थे धा<br>विधार्थे वर्तमानात् संख्यावाचकात् शब्दात्स्वार्थे धाप्रत्ययो भवति।<br>विधा = प्रकारः। प्रकारश्च सामान्यस्य भेदकविशेषरूपः, स चाभिधानस्वभावात् क्रियाविशेष एवेह गृह्यते। अतोऽनेन क्रियाप्रकारे वर्तमानायाः संख्याया धाप्रत्ययो भवति।<br>एकधा भुङ्क्ते।<br>एकप्रकारेण भुङ्क्ते इत्यर्थः।<br>द्विधा भुङ्क्ते।<br>द्वाभ्यां प्रकाराभ्यां भुङ्क्ते इत्यर्थः।<br>त्रिधा भुङ्क्ते।<br>त्रिभिः प्रकारैः भुङ्क्ते इत्यर्थः।<br>चतुर्धा गच्छति।<br>चतुर्भिः प्रकारैः गच्छति इत्यर्थः। | संख्यायाः धा ४३ |

| | | |
|---|---|---|
| संख्यायाः ४२<br>धा४२ | ४३. अधिकरणविचाले च<br>द्रव्यस्य संख्यान्तरापादने गम्यमानेऽपि संख्याया धाप्रत्ययो भवति।<br>अधिकरणम् = द्रव्यम्, तस्य विचालः = विचालनं, संख्यान्तरापादनम्= एकस्यानेकीकरणम्, अनेकस्य वा एकीकरणम्, अधिकरणविचालः।<br>एकं राशिं पञ्चधा कुरु।<br>अनेकं राशिम् एकधा कुरु। | |
| | ४४. एकाद्धो ध्यमुञन्यतरस्याम्<br>एकशब्दात्परस्य धाप्रत्ययस्य ध्यमुञ् इत्यादेशो वा भवति।<br>ऐकध्यं कुरु, एकधा वा।<br>ऐकध्यं भुङ्क्ते, एकधा वा। | धः ४६ ध्मुञन्य-तरस्याम्४६ |
| धः ४४<br>ध्मुञन्यतरस्याम्४४ | ४५. द्वित्र्योश्च धमुञ्<br>द्वित्रिसम्बन्धिनो धाप्रत्ययस्य धमुञ् इत्यादेशो वा भवति।<br>द्वैधम्, द्विधा वा। त्रैधम्, त्रिधा वा।<br>(वा०)धमुञन्तात्स्वार्थे डदर्शनम्।<br>मतिद्वैधानि संश्रयन्ते।<br>धमुञन्तस्यालिङ्गसंख्यत्वेऽपि तदन्तात्स्वार्थे विहितस्याप्यस्य स्वभावाल्लिङ्गसंख्यायोगः, तेनाव्ययत्वं नं भवति। | द्वित्र्योः ४६ |
| धः ४४ द्वित्र्योः ४५<br>ध्मुञन्यतरस्याम्४४ | ४६. एधाच् च<br>द्वित्र्योः सम्बन्धिनो धाप्रत्ययस्य एधाच् इत्यादेशो वा भवति।<br>द्वेधा, द्वैधम्, द्विधा। त्रेधा, त्रैधम्, त्रिधा। | |

| | | |
|---|---|---|
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१ | **४७. याप्ये पाशप्**<br>याप्ये वर्तमानात्प्रातिपदिकात्स्वार्थे पाशप् प्रत्ययो भवति।<br>याप्यः = कुत्सितः।<br>कुत्सितो वैयाकरणो वैयाकरणपाशः। याज्ञिकपाशः।<br>यद्यपि 'कुत्सिते (५.३.७४) इत्यनेनापि कनादयः प्रत्ययाः विहिता इति पाशप् प्रत्ययस्यापि तस्मिन् प्रकरणे एव पाठो युक्तः तथापि अनयोः कश्चिद् भेदोऽस्ति इति बोधनाय प्रकरणद्वयं कृतं सूत्रकारेण। स चायं भेदः – अस्य सूत्रस्य प्रवृत्तिः प्रवृत्तिनिमित्तस्य कुत्सितत्वे एव भवति; 'कुत्सिते'(५.३.७४)इति सूत्रस्य प्रवृत्तिस्तु अप्रवृत्तिनिमित्तकुत्सायामपि।<br>तेन यो व्याकरणशास्त्रे प्रवीणो दुःशीलो भवति, तत्र पाशप् प्रत्ययोऽनेन न भवति, वैयाकरणस्य प्रवृत्तिनिमित्तं यद् व्याकरणवेदितृत्वं तन्नास्ति कुत्सितम्। | |
| | **४८. पूरणाद् भागे तीयादन्**<br>भागे वर्तमानाद् तीयेतिपूरणप्रत्ययान्तशब्दात् स्वार्थे अन् प्रत्ययो भवति।<br>द्वितीयो भागः द्वितीयः। तृतीयः।<br>स्वरे विशेषः। | पूरणात् ४६<br>भागे ५१ अन्५१ |
| पूरणात् ४८<br>भागे४८<br>अन् ४८ | **४६. प्रागेकादशभ्योऽच्छन्दसि**<br>एकादशभ्यः प्राग् ये संख्यावाचकाः शब्दास्तत्प्रकृतिकपूरणप्रत्ययान्तेभ्यः भागे वर्तमानेभ्यः अन् प्रत्ययो भवति, अच्छन्दसि विषये।<br>स्वरार्थं वचनम्।<br>पञ्चमः। सप्तमः। नवमः। दशमः। | अच्छन्दसि ५० |
| पूरणात् ४८<br>भागे४८<br>अच्छन्दसि ४६<br>अन्४८ | **५०. षष्ठाष्टमाभ्यां ञ च**<br>षष्ठाष्टमाभ्यां भागे वर्तमानाभ्यां ञः प्रत्ययो भवति, अच्छन्दसि विषये चकारादन् प्रत्ययश्च। षष्ठो भागः षाष्ठः, षष्ठो वा। अष्टमो भागः आष्टमः, अष्टमः। | षष्ठाष्टमाभ्याम्५१ |
| पूरणात् ४८<br>भागे४८<br>षष्ठाष्टमाभ्याम् ५० | **५१. मानपश्वङ्गयोः कन्लुकौ च**<br>षष्ठाष्टमाभ्यां भागरूपे माने, पश्वङ्गे च वाच्ये यथासंख्यं कन् प्रत्ययः, ञ इत्यस्य, अन् इत्यस्य च लुग्भवति, चकाराद्यथाप्राप्तं च।<br>षष्ठको भागः मानं चेत्तद् भवति , षाष्ठः, षाष्ठो वा।<br>अष्टमः भागः मानं चेत्तद् भवति , आष्टमः , अष्टमो वा। | कन्लुकौ ५२ |

| | | |
|---|---|---|
| कन्लुकौ ५१<br>प्रत्ययः ३.१.१ | ५२. एकादाकिनिच्चासहाये<br>असहायार्थे वर्तमानाद् एकशब्दाद् आकिनिच् प्रत्ययो भवति, स्वार्थे, चकारात्कनूलुकौच।<br>विधानसामर्थ्याद् आकिनिचः, कनश्च विकल्पेन लुग्भवति।<br>एकः। एकाकी। एककः। | चरट् ५४ |
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः३.१.१ | ५३. भूतपूर्वे चरट्<br>भूतपूर्वेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे चरट् प्रत्ययो भवति।<br>भूतपूर्वे इति प्रकृतिविशेषणम्।<br>आढ्यो भूतपूर्वः आढ्यचरः। | भूतपूर्वे ५४ |
| भूतपूर्वे,चरट् ५३ | ५४. षष्ठ्या रूप्य च<br>षष्ठ्यन्तात् भूतपूर्वेऽर्थे रूप्यप्रत्ययो भवति, चकाराच्चरट् च।<br>देवदत्तस्य भूतपूर्वो गौः देवदत्तरूप्यो गौः। देवदत्तचरो गौः। | |
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः३.१.१ | ५५. अतिशायने तमबिष्ठनौ<br>अतिशायनविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे तमप्, इष्ठन्- इत्येतौ प्रत्ययौ भवतः।<br>सर्वे इमे आढ्याः; अयमेषाम् अतिशयेन आढ्य इति आढ्यतमः।<br>सर्वे इमे पटवः; अयमेषामतिशयेन पटुः इति पटिष्ठः पटुतमो वा। | अतिशायने ५७<br>तमबिष्ठनौ ५६ |
| अतिशायने ५५<br>तमप् ५५ | ५६. तिङश्च<br>तिङन्ताच्चातिशायने द्योत्ये तमप् प्रत्ययो भवति।<br>सर्वे इमे पचन्ति; अयमेषामतिशयेन पचति इति पचतितमाम्।<br>इष्ठन् नोदाह्रियते, 'अजादी गुणवचनादेव' (५.३.५८) इति सूत्रेण गुणवचने तस्य नियतत्वात्। | तिङश्च ६५ |

| | | |
|---|---|---|
| अतिशायने ५५<br>तिङश्च ५६ | **५७. द्विवचन-विभज्योपपदे तरबीयसुनौ**<br>द्विवचने = द्व्यर्थप्रतिपादके,विभज्ये= विभक्तव्यविषयके चोपपदे सुबन्तात्, तिङन्ताच्च अतिशायने द्योत्ये तरप्, ईयसुन्- इत्येतौ प्रत्ययौ भवतः।<br>अर्थाद् द्वयोरेकस्यातिशये प्रतिपादयितव्ये अतिशायनविशिष्टाद् एतौ प्रत्ययौ भवतः। द्विवचने उपपदे - द्वाविमौ आढ्यौ; अयमनयोरतिशयेन आढ्यः आढ्यतरः। द्वाविमौ पचतः। अयमनयोरतिशयेन पचति इति अयं पचतितराम्।<br>द्वाविमौ पटू, अयमनयोरतिशयेन पटुः पटीयान्।<br>विभज्ये उपपदे - माथुराः पाटलिपुत्रकेभ्यः आढ्यतराः, दर्शनीयतराः, पटीयांसः। | |
| | **५८. अजादी गुणवचनादेव**<br>इष्ठन्, ईयसुन् इत्यजादी प्रत्ययौ गुणवचनादेव भवतो नान्यस्मात्।<br>पटिष्ठः। पटीयान्।<br>यद्यपि प्रशस्यशब्दो न गुणवचनः अपि तु कृदन्तत्वाद् यौगिकः इति अजादी प्रत्ययौ अस्मान्न प्राप्नुतः तथापि तयोः परतः 'प्रशस्यस्य श्रः'(५.३.६०) इति सूत्रेण आदेश विधानसामार्थ्यात् एतत्सूत्रविषये 'अजादी गुणवचनादेव' इति नियमो न प्रवर्तते।<br>एवमेव 'ज्य च' (५.३.६१) वृद्धस्य च (५.३.६२), 'युवाल्पयोः कनन्यतरस्याम्'(५.३.६४), 'विन्मतोर्लुक्'(५.३.६५) इत्यग्रिमसूत्रेष्वपि व्याख्येयम्। | अजादी ६५ |
| अजादी ५८<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः३.१.१ | **५९. तुश्छन्दसि**<br>'तृ' इत्येतदन्तात् प्रातिपदिकाद् अगुणवचनादपि आजादी प्रत्ययौ भवतश्छन्दसि।<br>आसुतिं करिष्ठः। दोहीयसी धेनुः।<br>'भस्याऽढे तद्धिते' इति पुंवद्भावे कृते 'तुरिष्ठेमेयस्सु' इति तृचो निवृत्तिः। | |
| अजाद्योः ५८ | **६०. प्रशस्यस्य श्रः**<br>अजाद्योः प्रत्यययोः परतः प्रशस्यस्य श्रः भवति।<br>'अजादी' इति प्रकृतस्य सप्तमीविभक्तिः विपरिणम्यते।<br>अयमेषाम् अतिशयेन प्रशस्यः श्रेष्ठः।<br>अयमनयोः अतिशयेन प्रशस्यः श्रेयान्।<br>अयम् अस्मात् श्रेयान्। | प्रशस्यस्य ६१ |

| | | |
|---|---|---|
| अजाद्योः ५८<br>प्रशस्यस्य ६० | ६१. ज्य च<br>अजाद्योः प्रत्यययोः परतः प्रशस्यस्य ज्यः भवति।<br>अयमेषाम् अतिशयेन प्रशस्यः ज्येष्ठः।<br>अयमनयोः अतिशयेन प्रशस्यः ज्यायान्।<br>अयमस्माज्ज्यायान्।<br>'ज्यादादीयसः'(६.४.१६० ) इति सूत्रेण ईकारस्य आकारादेशः। | ज्य ६२ |
| अजाद्योः५८<br>ज्य ६१ | ६२. वृद्धस्य च<br>अजाद्योः प्रत्यययोः परतः वृद्धस्य ज्यः भवति।<br>अयमेषाम् अतिशयेन वृद्धः ज्येष्ठः।<br>अयमनयोः अतिशयेन वृद्धः ज्यायान्।<br>अयम् अस्माज्ज्यायान्। | |
| अजाद्योः ५८ | ६३. अन्तिक-बाढयोर्नेदसाधौ<br>अजाद्योः प्रत्यययोः परतः अन्तिक - बाढयोः स्थाने नेद,साध- इत्येतौ आदेशौ भवतः।<br>इदमेषामतिशयेनान्तिकम् नेदष्ठिम्। इदमनयोरतिशयेन अन्तिकं नेदीयः।<br>इदमस्मान्नेदीयः।<br>बाढमित्यस्य भृशं, नित्यमिति वार्थः। तच्च क्रियाविशेषणमिति प्रत्ययान्तोऽपि तथा स्यात्।<br>अयमेषां बाढमधीते इति साधिष्ठमधीतेऽयम्।<br>अयमनयोर्बाढमधीते इति साधीयोऽधीतेऽयम्।<br>अयममस्मात् साधीयोऽधीते।<br>साधीयान्, साधिष्ठः इत्यादि प्रयोगास्तु साधुशब्दाज्ज्ञेयाः। | |
| अजाद्योः ५८ | ६४. युवाल्पयोः कनन्यतरस्याम्<br>अजाद्योः प्रत्यययोः परतः युवाल्पयोः कन् इत्यादेशोऽन्यतरस्यां भवति।<br>अयमेषामतिशयेन युवा कनिष्ठः।<br>अयमनयोरतिशयेन युवा कनीयान्।<br>अयमस्माद् युवा कनीयान्।<br>पक्षे अल्पिष्ठः अल्पीयान्। | |

| | | |
|---|---|---|
| अजाद्योः ५८ | ६५. विन्मतोर्लुक्<br>अजाद्योः प्रत्यययोः परतः विन्मतोर्लुग् भवति।<br>अयमेषामतिशयेन स्रग्वी इति स्रजिष्ठः।<br>अयमनयोरतिशयेन स्रग्वी इति स्रजीयान्।<br>अयमस्मात् स्रजीयान्।<br>अयमेषामतिशयेन त्वग्वान् इति त्वचिष्ठः।<br>अयमनयोरतिशयेन त्वग्वान् त्वचीयान्।<br>अयमस्मात् त्वचीयान्। | |
| तिङश्च ५६<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः३.१.१ | ६६. प्रशंसायां रूपप्<br>प्रशंसाविशिष्टार्थे वर्तमानात् प्रतिपदिकात्, तिङन्ताच्च स्वार्थे रूपप्प्रत्ययो भवति।<br>स्वार्थिकाश्च प्रत्ययाः प्रकृत्यर्थविशेषस्य द्योतका भवन्ति।<br>प्रशस्तो वैयाकरणः वैयाकरणरूपः। याज्ञिकरूपः।<br>प्रशस्तं पचतीति पचतिरूपम्। पचतोरूपम्।<br>पचन्तिरूपम्। याज्ञिकरूपः।<br>प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसा, न तु स्तुतिः। तेनेहापि भवति –'चौररूपोऽयं यदक्ष्णोरप्यञ्जनं हरति'।<br>गुप्तवस्त्वपहरणेन चौर्यं परिपूर्यते। | |
| तिङश्च ५६<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः३.१.१ | ६७. ईषदसमाप्तौ कल्पब्-देश्य-देशीयरः<br>ईषदसमाप्तिविशिष्टार्थे वर्तमानात् प्रातिपदिकात्, तिङन्ताच्च कल्पप्, देश्य, देशीयर् – इत्येते प्रत्यया भवन्ति।<br>समाप्तिः = पदार्थानां संपूर्णता, सम्पन्नत्वम्, पूर्णभवनं वा। स्तोकेन असमाप्तिः = अपूर्णता इति ईषदसमाप्तिः।<br>ईषदूनः पटुः इति पटुकल्पः, पटुदेश्यः, पटुदेशीयः।<br>ईषत् पचति इति पचतिकल्पम्, पचतिदेश्यम्, पचतिदेशीयम्। | ईषदसमाप्तौ ६८ |
| ईषदसमाप्तौ ६७<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः३.१.१ | ६८. विभाषा सुपो बहुच् पुरस्तात्तु<br>ईषदसमाप्तिविशिष्टार्थे वर्तमानात् सुबन्ताद् विभाषा बहुच् प्रत्ययो भवति, स तु प्रकृतेः पुरस्तादेव भवति, न परतः।<br>ईषदूनः पटुः बहुपटुः।<br>पक्षे कल्पबादयोऽपि – पटुकल्पः, पटुदेश्यः, पटुदेशीयः।<br>सूत्रे सुब्ग्रहणं तिङन्तान्माभूदित्यर्थम्।<br>पाणिनीयाष्टके केवलम् अयमेव प्रत्ययः प्रकृतेः पूर्वो भवति नान्यः। | सुपः ७१ |

| | | |
|---|---|---|
| सुपः ६८ | ६९. प्रकारवचने जातीयर्<br>प्रकारविशिष्टार्थे वर्तमानात् प्रातिपदिकाद् जातीयर् प्रत्ययो भवति।<br>सामान्यस्य भेदको विशेषः = प्रकारः<br>पटुप्रकारः पटुजातीयः। तत्प्रकारः तज्जातीयः।<br>एतत्प्रकारः एतज्जातीयः। | |
| | ७०. प्रागिवात्कः<br>'इवे प्रतिकृतौ' (५.३.९६) इत्यतः प्राक् कप्रत्ययस्य अधिकारो ज्ञेयः। तेन 'अज्ञाते'(५.३.७३) इत्यत्र कप्रत्ययस्यानिर्देशेऽपि तेन कप्रत्ययो भवति - अज्ञातोऽश्वः अश्वकः। | कः ९५ |
| तिङश्च ५६<br>प्रातिपदिकात् ४.१.१<br>सुपः ६८ | ७१. अव्यय-सर्वनाम्नामकच् प्राक् टेः<br>अव्ययानाम्, सर्वनाम्नां च प्रागिवीयेष्वर्थेषु अज्ञातादिषु अकच् प्रत्ययो भवति, स च टेः प्राग् भवति, न परतः।<br>कस्यापवादः।<br>अव्ययानाम् - उच्चकैः। नीचकैः। शनकैः। सर्वनाम्नाम् - सर्वके। विश्वके। उभयके। तिङन्तानामपि टेः प्रागकच् - पचतकि।<br>(वा०) ओकार-सकार-भकारादौ सुपि सर्वमाम्नष्टेः प्रागकच्।<br>युवकयोः। आवकयोः।<br>युष्मकासु। अस्मकासु।<br>युष्मकाभिः। अस्मकाभिः।<br>'अकारसकारभकारादौ सुपि' इति कथनेन अन्यासु विभक्तिषु सुबन्तस्य टेः प्रागकच् भवति। त्वयका। मयका।<br>(वा०) अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः।<br>मित्त्वादन्त्यादचः परः। आगमोऽयं न तु प्रत्ययः, मित्त्वात्।<br>तूष्णींकामास्ते। तूष्णीकां तिष्ठति।<br>(वा०) शीले को मलोपश्च वक्तव्यः।<br>तूष्णींशीलः तूष्णीकः। | अकच् ७२<br>अव्ययस्य ७२ |
| अव्ययस्य ७१ | ७२. कस्य च दः<br>ककारान्तस्य प्रातिपदिकस्याकच्सन्नियोगेन दकारादेशो भवति। चकारः सन्नियोगार्थः।<br>ककारान्तस्य सर्वनाम्नोऽभावादत्र पूर्वसूत्रात् अव्ययग्रहणमनुवर्तते, न सर्वनामग्रहणम्।<br>धिक्- धकित्। हिरुक्- हिरकुत्। पृथक् - पृथकत्। | |

| | | |
|---|---|---|
| कः ७० अकच् ७१<br>तिङश्च ५६ | ७३. अज्ञाते<br>अज्ञातेऽर्थे वर्तमानात् प्रातिपदिकात्, तिङन्ताच्च यथाविहितं 'क' इत्यादयः प्रत्ययाः भवन्ति।<br>अज्ञातविशेषः = अज्ञातः।<br>कस्यायमश्व इति स्वस्वामिसम्बन्धेनाज्ञाते अर्थेऽयं प्रत्ययो भवति।<br>अज्ञातः अश्वः अश्वकः।<br>एवमन्यत्रापि यथायोगमज्ञातता विज्ञेया। उच्चकैः। सर्वके। पचतकि। | |
| कः ७० अकच् ७१<br>तिङश्च ५६ | ७४. कुत्सिते<br>कुत्सितेऽर्थे वर्तमानात् प्रातिपदिकात्, तिङन्ताच्च स्वार्थे यथाविहितं कादयः प्रत्यया भवन्ति।<br>कुत्सितः = गर्हितः, निन्दितः।<br>कुत्सितोऽश्वः अश्वकः। उष्ट्रकः। नीचकैः। कुत्सिताः सर्वे सर्वके।<br>कुत्सितं पचति पचतकि। | कुत्सिते ७५ |
| कुत्सिते ७४<br>ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः३.१.१ | ७५. संज्ञायां कन्<br>कुत्सितेऽर्थे वर्तमानात् प्रातिपदिकात् कन्प्रत्ययो भवति, प्रत्ययान्तेन चेत्संज्ञा गम्यते।<br>शूद्रकः। धारकः। पूर्णकः।<br>स्वरार्थं वचनम्। | |
| सुपः ६८<br>तिङश्च५६<br>कन् ७५ | ७६. अनुकम्पायाम्<br>अनुकम्पायां गम्यमानायां सुबन्तात्तिङन्ताच्च यथाविहितं प्रत्ययो भवति।<br>अनुकम्पा = कारुण्येन परस्य अनुग्रहः, उपकारो वा।<br>अनुकम्पा प्रयोक्तृधर्मः, न तु प्रकृत्यर्थविशेषणम्।<br>अनुकम्पितः पुत्रः पुत्रकः। वत्सकः। दुर्बलकः।<br>अनुकम्पायुक्त इत्यर्थः।<br>अनुकम्पितो भूत्वा स्वपिति स्वपितकि। | अनुकम्पायाम् ८४ |
| तिङश्च ५६<br>कन्७५<br>अकच् ७१ | ७७. नीतौ च तद्युक्तात्<br>नीतौ च गम्यमानायां तद्युक्तात् = अनुकम्पायुक्ताद् सुबन्तात्, तिङन्ताच्च यथाविहितं कादयः प्रत्ययाः भवन्ति।<br>सामदानादिरुपायः = नीतिः।<br>हन्त ते धानकाः। हन्त ते तिलकाः।<br>एहकि। अद्धकि। | नीतौ ८१<br>तद्युक्तात् ८१ |

| | | |
|---|---|---|
| अनुकम्पायाम् ७६<br>नीतौ ७७<br>तद्युक्तात् ७७ | ७८. बह्वचो मनुष्यनाम्नष्ठज्वा<br>बह्वचः प्रातिपदिकाद् मनुष्यनामवाचिनः अनुकम्पायां गम्यमानायां, नीतौ च ठच् प्रत्ययो वा भवति।<br>अनुकम्पितो देवदत्तः देविकः।<br>'ठाजादावूर्ध्वं द्वितीयादचः' इत्यनेन दत्तस्य लोपः।<br>पक्षे कः - देवदत्तकः। | बह्वचः ठज्वा ८०<br>वा ८१<br>मनुष्यनाम्नः ८४ |
| अनुकम्पायाम् ७६<br>बह्वचः ठज्वा ७८<br>मनुष्यनाम्नः ७८ | ७९. घनिलचौ च<br>बह्वचो मनुष्यनाम्नः प्रातिपदिकाद् घन्, इलच् - इत्येतौ प्रत्ययौ भवतः, अनुकम्पायां गम्यमानायां, नीतौ च।<br>चकाराद्यथाप्राप्तं च।<br>अनुकम्पितो देवदत्तः देवियः। देविलः। देविकः। देवदत्तकः। | घनिलचौ ८० |
| बह्वचः ठज्वा ७८<br>मनुष्यनाम्नः ७८<br>घनिलचौ ७९ | ८०. प्राचामुपादेरडज्वुचौ च<br>उपशब्द आदिर्यस्य तस्मादुपादेः बह्वचो मनुष्यनाम्नः प्रातिपदिकाद् अडच्, वुच्- इत्येतौ प्रत्ययौ भवतः।<br>चकाराद् घनिलचौ, ठच्च वा। अनुकम्पितः उपेन्द्रदत्त इति उपडः, उपकः, उपियः, उपिलः, उपिकः, उपेन्द्रदत्तकः। इति षड्रूपाणि।<br>प्राचांग्रहणं पूजार्थम्। 'वा' इति तु वर्तते एव। | |
| मनुष्यनाम्नः ७८<br>अनुकम्पायाम् ७६<br>नीतौ तद्युक्तात्७७<br>वा ७८ | ८१. जातिनाम्नः कन्<br>जातिवाचकः शब्दो यो मनुष्यनामधेयो व्याघ्र, सिंह-इत्येवमादिः, तस्माद् अनुकम्पायाम्, नीतौ च कन्प्रत्ययो भवति।<br>अनुकम्पितो व्याघ्रः व्याघ्रकः। सिंहकः।<br>'वा' इत्यस्यानुवृत्त्या यथालक्ष्यम् अन्योऽपि प्रत्ययो भवति - व्याघ्रिलः, सिंहिलः।<br>नामग्रहणं स्वरूपनिवृत्त्यर्थम्। | कन् ८२<br>जातिनाम्नः११८ |
| कन् ८१<br>मनुष्यनाम्नः ७८ | ८२. अजिनान्तस्योत्तरपदलोपश्च<br>अजिनान्ताद् मनुष्यनाम्नः कन्प्रत्ययो भवति, उत्तरपदलोपश्च, अनुकम्पायाम्।<br>अनुकम्पितो व्याघ्राजिनः व्याघ्रकः। अनुकम्पितः सिंहाजिनः सिंहकः। | लोपः ८४ |

| | | |
|---|---|---|
| लोपः ८२ | ८३. ठाजादावूर्ध्वं द्वितीयादचः<br>अस्मिन् प्रकरणे विहितो यः ठप्रत्ययः, अजादिश्च प्रत्ययस्तस्मिन् परतः प्रकृतेर्द्वितीयादचः ऊर्ध्वं यच्छब्दस्वरूपं तस्य लोपो भवति।<br>ऊर्ध्वग्रहणं सर्वलोपार्थम्।<br>अनुकम्पितो देवदत्तः देविकः, देवियः, देविलः।<br>(वा०) चतुर्थादचः ऊर्ध्वस्य लोपो वक्तव्यः।<br>अनुकम्पितो बृहस्पतिदत्तः बृहस्पतिकः। बृहस्पतियः, बृहस्पतिलः।<br>(वा०) अनजादौ विभाषा लोपो वक्तव्यः।<br>अनुकम्पितो देवदत्तो देवकः, देवदत्तकः।<br>(वा०) लोपः पूर्वपदस्य च ठाजादावनजादौ च वक्तव्यः।<br>अनुकम्पितो देवदत्तो दत्तिकः, दत्तियः, दत्तिलः, दत्तकः।<br>(वा०) विनापि प्रत्ययेन पूर्वोत्तरपदयोर्विभाषा लोपो वक्तव्यः।<br>देवदत्तो दत्तः देव इति वा। | ठाजादौ अचः ८४ |
| लोपः८२<br>ठाजादौ ८३<br>अनुकम्पायाम्७६<br>मनुष्यनाम्नः७८ | ८४. शेवल-सुपरि-विशाल-वरुणार्यमादीनां तृतीयात्<br>शेवल, सुपरि, विशाल, वरुण, अर्यमन् इत्येतदादिकपदानां तृतीयादचः ऊर्ध्वं यच्छब्दस्वरूपं तस्य लोपो भवति ठप्रत्यये, अजादौ प्रत्यये च परे।<br>पूर्वस्यापवादः।<br>अनुकम्पितः शेवलदत्तः इति शेवलिकः, शेवलियः, शेवलिलः।<br>एवमेव सुपरिकः, सुपरियः, सुपरिलः। विशालिकः, विशालियः, विशालिलः। वरुणिकः, वरुणियः, वरुणिलः। अर्यमिकः, अर्यमियः, अर्यमिलः। | |
| तिङश्च ५६<br>कः ७०<br>अकच् ७१ | ८५. अल्पे<br>अल्पत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात्, तिङन्ताच्च यथाविहितं 'क' इत्यादयः प्रत्ययाः भवन्ति।<br>अल्पं तैलम् तैलकम्। उच्चकैः। सर्वकम्। पचतकि।<br>परिमाणापचयेऽल्पशब्दः प्रयुज्यते, विशेष्यनिघ्नोऽयम्। | |

| | | |
|---|---|---|
| कः ७० <br> अकच् ७१ | ८६. ह्रस्वे <br> ह्रस्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकाद् यथाविहितं 'क' इत्यादयः प्रत्यया भवन्ति। <br> अल्पत्वं महत्त्वप्रतिद्वन्द्वि, ह्रस्वत्त्वं दीर्घत्वप्रतिद्वन्द्वीति भेदः। <br> ह्रस्वो वृक्षः वृक्षकः। | ह्रस्वे ९० |
| ह्रस्वे ८६ | ८७. संज्ञायां कन् <br> ह्रस्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् प्रत्ययो भवति। <br> वंशकः। <br> ह्रस्वस्य वेणुजातिविशेषस्य चेयं संज्ञा। <br> एवमेव वेणुकः। | |
| ह्रस्वे ८६ | ८८. कुटी-शमी-शुण्डाभ्यो रः <br> कुटी, शमी, शुण्डा- इत्येतेभ्यो ह्रस्वार्थे द्योत्ये रः प्रत्ययो भवति। <br> कस्यापवादः। <br> ह्रस्वा कुटी कुटीरः। शमीरः। शुण्डारः। <br> स्वार्थिकत्वेऽपि पुंल्लिङ्गता, लोकाश्रयत्वाल्लिङ्गस्य। | |
| ह्रस्वे ८६ | ८९. कुत्वा डुपच् <br> कुतूशब्दाद् ह्रस्वत्वे द्योत्ये डुपच् प्रत्ययो भवति। <br> ह्रस्वा कुतूः कुतुपम् = चर्ममयं स्नेहभाजनमुच्यते। | |
| ह्रस्वे ८६ | ९०. कासू-गोणीभ्यां ष्टरच् <br> कासू-गोणीभ्यां ह्रस्वत्वे द्योत्ये ष्टरच्प्रत्ययो भवति। <br> कासूरिति शक्तिः, आयुधविशेष उच्यते। <br> ह्रस्वा कासूः कासूतरी। <br> गोणी धान्यादिस्थापनाय पात्रमुच्यते, ह्रस्वा गोणी गोणीतरी। | ष्टरच् ९१ |

| | | |
|---|---|---|
| ष्टरच् ९० | ९१. वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे<br>तनुत्वे द्योत्ये वत्स, उक्षन्, अश्व, ऋषभ इत्येतेभ्यः ष्टरच् प्रत्ययो भवति।<br>तनुत्वम् = न्यूनत्वम्।<br>यस्य गुणस्य सद्भावेन द्रव्ये शब्दनिवेशः, तस्य गुणस्य न्यूनत्वेऽयं प्रत्ययो भवति।<br>न्यूनः वत्सः वत्सतरः। न्यूनः उक्षा उक्षतरः।<br>न्यूनः अश्वः अश्वतरः। न्यूनः ऋषभः ऋषभतरः।<br>वत्सः=प्रथमवयाः, तस्य न्यूनत्वं द्वितीयवयसः प्राप्तिः।<br>उक्षा = तरुणवत्सः वलीवर्दः, द्वितीयवयाः इत्यर्थः, तस्य तनुत्वं तृतीयवयसः प्राप्तिः। गर्दभेन अश्वायाम् उत्पन्नोऽश्वः, तस्य तनुत्वम् अन्यपितृकता। अनड्वान् ऋषभः, तस्य तनुत्वं भारोद्वहने मन्दशक्तिता। | |
| वा ४.१.८२ | ९२. किं-यत्तदो निर्धारणे द्वयोरेकस्य डतरच्<br>किम्, यद्, तद् इत्येतेभ्यः प्रातिपदिकेभ्यः द्वयोरेकस्य निर्द्धारणे डतरच् प्रत्ययो भवति।<br>निर्धार्यमाणवाचिभ्यः प्रातिपदिकेभ्यः अनेन स्वार्थे प्रत्ययो भवति। जात्या, क्रियया, गुणेन, संज्ञया वा समुदायादेकदेशस्य पृथक्करणं निर्धारणम्।<br>कतरो भवतोः कठः ?<br>कतरो भवतोः कारकः?<br>कतरो भवतोः पटुः?<br>कतरो भवतोः देवदत्तः?<br>'समर्थानां प्रथमाद्वा'(४.१.८२) इति सूत्राद् 'वा' इत्यनुवृत्त्या महाविभाषयाऽत्र प्रत्ययो भवति- को भवतोर्देवदत्तः? स आगच्छतु। | किं-यत्तदोः ९३<br>निर्धारणे एकस्य<br>डतरच् ९४ |
| किं-यत्तदोः ९२<br>निर्धारणे एकस्य<br>डतरच् ९२ | ९३. वा बहूनां जातिपरिप्रश्ने डतमच्<br>बहूनां मध्ये एकस्य निर्धारणे, किंयत्तदो वा डतमच् प्रत्ययो भवति, जातौ, परिप्रश्ने च गम्ये।<br>कतमो भवतां कठः ? यतमो भवतां कठः, ततम आगच्छतु।<br>वाग्रहणमकचः समुच्चयार्थम् - यको भवतां कठः, सक आगच्छतु। महाविभाषया डतमच् पक्षे नापि भवति - को भवतां कठः। | डतमच् ९४<br>बहूनाम् ९४ |

| | | |
|---|---|---|
| निर्धारणे ९२<br>बहूनाम् ९३<br>एकस्य९२<br>डतरचूडतमचौ ९३ | ९४. एकाच्च प्राचाम्<br>एकशब्दाद् डतमच् प्रत्ययो भवति, चकाराद् डतरच्च, स्वस्मिन् विषये। द्वयोरेकस्य निर्धारणे डतरच्, बहूनामेकस्य निर्धारणे डतमच् इत्याशयः।<br>एकतरो भवतोर्देवदत्तः। एकतमो भवतां देवदत्तः।<br>प्राचांग्रहणं पूजार्थम्, विकल्पोऽनुवर्तत एव। | |
| तिङश्च ५६ | ९५. अवक्षेपणे कन्<br>अवक्षेपणे वर्तमानात् प्रातिपदिकात् कन्प्रत्ययो भवति।<br>अवक्षिप्यते येन तदवक्षेपणम्।<br>व्याकरणकेन नाम त्वं गर्वितः।<br>येनेतरः कुत्स्यते तदिहोदाहरणम्, स्वतः कुत्सितं तु 'कुत्सिते'(५.३.७४) इत्यस्य।<br>प्रागिवीयानां पूर्णोऽवधिः। | कन् १०० |
| कन् ९५ | ९६. इवे प्रतिकृतौ<br>इवार्थोपमानत्ववति वर्तमानात् प्रातिपदिकात् कन्प्रत्ययो भवति, यदुपमेयं सा प्रतिकृतिश्चेत्। प्रतिकृतिः = मृदादिनिर्मिता प्रतिमा।<br>अश्व इवायम् अश्वप्रतिकृतिरिति अश्वकः। | इवे १११<br>प्रतिकृतौ १०० |
| कन् ९५ इवे ९६ | ९७. संज्ञायां च<br>इवार्थोपमानत्ववति वर्तमानात् प्रातिपदिकात् कन् प्रत्ययोभवति,प्रकृतिप्रत्ययसमुदायश्चेत्संज्ञा।<br>अप्रतिकृत्यर्थ आरम्भः।<br>अश्वसदृशस्य संज्ञा अश्वकः। उष्ट्रकः। गर्दभकः। | संज्ञायाम् १०० |
| संज्ञायाम् ९७<br>कनः९५ इवे ९६ | ९८. लुब्मनुष्ये<br>संज्ञायां विहितस्य कनो लुग्भवति मनुष्येऽभिधेये।<br>चञ्चेव मनुष्यश्चञ्चा।<br>चञ्चा= तृणमयः पुमान्।<br>चञ्चातुल्यो मनुष्योऽयं चञ्चासंज्ञक इत्यर्थः।<br>वर्ध्रिका इव मनुष्यो वर्ध्रिका।<br>वर्ध्रिका = चर्ममयी प्रतिकृतिः।<br>लुपि युक्तवद्भावः।<br>"युक्तवद्भावेन प्रकृतिवल्लिङ्गं भवति। वचनन्तु विशेष्यवदेव 'हरीतक्यादिषु व्यक्तिः' इत्यत्र पाठात्। तेन चञ्चे मनुष्यावित्येव" इति शेखरे नागेशः। | लुप् १०० |

| | | |
|---|---|---|
| संज्ञायाम् ९७<br>कनः९५ इवे ९६<br>लुप् ९८<br>प्रतिकृतौ९६ | ९९. जीविकार्थे चापण्ये<br>जीविकार्थं सदपि यदपण्यं तस्मिन्नभिधेये कनो लुब्भवति।<br>विक्रीयते यत्तत् पण्यम् = विक्रीयमाणं तद्भिन्नमपण्यम्।<br>वासुदेव इव वासुदेवप्रतिकृतिः वासुदेवः। शिव इव शिवप्रतिकृतिः शिवः। एवमेव स्कन्दः। विष्णुः। आदित्यः।<br>वासुदेवादीनां सा प्रतिमा वासुदेव इत्याद्युच्यते यां गृहीत्वा गृहाद् गृहं भिक्षमाणा देवलकादयः अटन्ति। यतो हि तया प्रतिमया जीविकार्जनं कुर्वन्ति ते देवलकादयः इति सा प्रतिमा जीविकार्था उच्यते। | |
| संज्ञायाम् ९७<br>कनः९५ इवे ९६<br>लुप् ९८<br>प्रतिकृतौ ९६ | १००. देवपथादिभ्यश्च<br>'देवपथ' इत्येवमादिभ्यः इवे प्रतिकृतौ, संज्ञायां च विहितस्य कनो लुब्भवति।<br>देवपथः। हंसपथः।<br>देवपथादिराकृतिगणः।<br>(काशिकावृत्तौश्लोकः)<br>अर्चासु पूजनार्थासु चित्रकर्म-ध्वजेषु च।<br>इवे प्रतिकृतौ लोपः कनो देवपथादिषु।।<br>अर्चासु = प्रतिमासु, पूजनार्थासु= गृहेषु,देवालयेषु वा याः पूज्यन्ते तासु इत्यर्थः। पूजनार्थासु अर्चासु तावत् - शिवः, विष्णुः।<br>चित्रकर्मणि - अर्जुनः, दुर्योधनः।<br>ध्वजेषु - कपिः, गरुडः, सिंहः। | |
| इवे ९६ | १०१. वस्तेर्ढञ्<br>वस्तिशब्दादिवार्थे द्योत्ये ढञ् प्रत्ययो भवति।<br>इतः प्रभृति प्रत्ययाः सामान्येन भवन्ति, प्रतिकृतौ, अप्रतिकृतौ च।<br>वस्तिरिव वास्तेयः। वास्तेयी।<br>नाभेरधो भागः वस्तिरुच्यते। तत्सदृशः वास्तेय इति।'टिड्ढाणञ् इति ङीप्।'<br>'वस्तिनाभेरधो द्वयोः' इत्यमरः(अमरकोषः २.६.७३) | |
| इवे ९६ | १०२. शिलाया ढः<br>शिलाशब्दादिवार्थे ढः प्रत्ययो भवति।<br>शिलेव शिलेयं दधि।<br>'शिलाया' इति योगविभागाद् ढञपीत्येके। तन्मते शैलेयम् इत्यपि। | |

| | | |
|---|---|---|
| इवे ९६ | १०३. शाखादिभ्यो यत्<br>'शाखा' इत्येवमादिभ्यो यत्प्रत्ययो भवति इवार्थे।<br>शाखेव शाख्यः। मुखमिव मुख्यः पुरुषः।<br>'शिखादिभ्यो यः' इति पाठान्तरम्। | यत् १०४ |
| इवे ९६ | १०४. द्रव्यं च भव्ये<br>द्रव्यशब्दो निपात्यते भव्येऽभिधेये। द्रुशब्दादिवार्थे यत् प्रत्ययो निपात्यते।<br>द्रुरिव द्रव्यम् = भव्यः, आत्मवानित्यर्थः।<br>अभिप्रेतानामर्थानां पात्रभूत उच्यते। द्रव्योऽयं राजपुत्रः। द्रव्योऽयं माणवकः। | |
| इवे ९६ | १०५. कुशाग्राच्छः<br>कुशाग्रशब्दादिवार्थे छः प्रत्ययो भवति।<br>कुशाग्रमिव सूक्ष्मत्वात् कुशाग्रीया बुद्धिः। कुशाग्रीयं शस्त्रम्। | छः १०६ |
| इवे ९६ छः १०५ | १०६. समासाच्च तद्विषयात्<br>तदित्यनेन प्रकृत इवार्थो निर्दिश्यते। इवार्थ विषयात्समासाद् अपरस्मिन्निवार्थे एव छः प्रत्ययो भवति।<br>काकतालीयम्। अजाकृपाणीयम्। अन्धकवर्त्तकीयम्।<br>काकतालीयमित्यादि शब्दानां प्रयोगः अतर्कितोपपन्ने विस्मयकारिणि कार्यविषये भवति। तत्कथम् ?<br>काकस्यागमनं यादृच्छिकम्, तालस्य पतनं च, तेन तालेन पतता काकस्य वधः कृतः; एवमेव देवदत्तस्य तत्रागमनम्, दस्यूनां चोपनिपातः, तैश्च तस्य वधः कृतः। तत्र यो देवदत्तस्य,दस्यूनां च समागमः, स काकसमागमसदृशः इत्येक उपमार्थः। अतश्च देवदत्तस्य वधः, स काकतालवधसदृशः इति द्वितीय उपमार्थः।<br>तत्र प्रथमे समासः, द्वितीये प्रत्ययः।<br>समासश्च अस्मादेव ज्ञापकात्। न ह्यस्यापरं लक्षणमस्ति। 'सुप्सुपा' इति वा समासः। स चैवंविषय एव। | |
| इवे ९६ | १०७. शर्करादिभ्योऽण्<br>'शर्करा' इत्येवमादिभ्यः इवार्थे अण् प्रत्ययो भवति।<br>शर्करेव शार्करम्। | |
| इवे ९६ | १०८. अङ्गुल्यादिभ्यष्ठक्<br>'अङ्गुली' इत्येवमादिभ्य इवार्थे ठक् प्रत्ययो भवति।<br>अङ्गुलिशब्दात् 'कृदिकारादक्तिनः' इति ङीष्, ततोऽनेन ठक्। | ठक् १०९ |

| इवे ९६ ठक् १०८ | १०९. एकशालायाष्ठजन्यतरस्याम्<br>एकशालाशब्दादिवार्थे ठच् प्रत्ययोऽन्यतरस्यां भवति।<br>अन्यतरस्यामिति शब्दोऽत्र समुच्चयार्थकस्तेन अनन्तरः ठक् प्रत्ययः समुच्चीयते। अतः ठगपि भवति।<br>एकशालेवेति एकशालिकः, ऐकशालिकः। | |
|---|---|---|
| इवे ९६ | ११०. कर्क-लोहितादीकक्<br>कर्क-लोहितशब्दाभ्यामिवार्थे ईकक् प्रत्ययो भवति।<br>कर्कः = शुक्लोऽश्वः, तेन सदृशः कार्कीकः। लोहित इव लौहितीकः स्फटिकः।<br>स्वयमलोहितोऽप्युपाश्रयवशात्तथा प्रतीयते। | |
| इवे ९६ | १११. प्रत्न-पूर्व-विश्वेमात् थाल् छन्दसि<br>प्रत्न, पूर्व, विश्व, इम- इत्येतेभ्यः इवार्थे थाल् प्रत्ययो भवति छन्दसि विषये।<br>'तं प्रत्नथ पूर्वथा विश्वथेमथा।'<br>''इमशब्द इदमा समानार्थः प्रकृत्यन्तरम्'' इति हरदत्तः। | |
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः३.१.१ | ११२. पूगाञ्ञ्योऽग्रामणीपूर्वात्<br>पूगवाचिनः प्रातिपदिकाद् अग्रामणीपूर्वात् स्वार्थे ञ्यः प्रत्ययो भवति।<br>नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगाः।<br>लोहिता ध्वजा यस्य पूगस्य स लोहितध्वजः, स एव लौहितध्वज्यः। द्विवचने लौहितध्वज्यौ। बहुवचने तु लोहितध्वजाः। 'ञ्यादयस्तद्राजाः' इत्यनेन 'ञ्य' इत्यस्य तद्राजसंज्ञा, 'तद्राजस्य बहुषु' इत्यादिना तस्य लुक् च।<br>अग्रामणीपूर्वादिति किम् ? देवदत्तो ग्रामणीः एषां त इमे देवदत्तकाः। अत्र 'स एषां ग्रामणीः' इति सूत्रेण कन्प्रत्ययः। | ञ्यः ११३ |

| | | |
|---|---|---|
| ञ्यः ११२ | **११३. व्रातच्फञोरस्त्रियाम्**<br>व्रातवाचिभ्यः, च्फञ्प्रत्यान्तेभ्यश्च प्रातिपदिकेभ्यः स्वार्थे ञ्यः प्रत्ययो भवति, न तु स्त्रियाम्।<br>व्रातवाचिभ्यः - कपोतान् = पक्षिविशेषान् भक्षणाय पचतीति कपोतपाकः सङ्घः, स एव कापोतपाक्यः। द्विवचने कापोतपाक्यौ। बहुवचने तु तद्राजत्वात्पूर्ववल्लुक् - कपोतपाकाः।<br>च्फञन्तेभ्यः - कौञ्जायन एव कौञ्जायन्यः। द्विवचने कौञ्जायन्यौ। बहुवचने तु कौञ्जायनाः।<br>कौञ्जायनशब्दे 'गोत्रे कुञ्जादिभ्यः' इति सूत्रेण कुञ्जशब्दात् च्फञ् प्रत्ययः। | |
| | **११४. आयुधजीविसंघाञ्ञ्यड्वाही-केष्वब्राह्मण-राजन्यात्**<br>वाहीकेषु य आयुधजीविसङ्घः तद्वाचिनः प्रातिपदिकात् स्वार्थे ञ्यट् प्रत्ययो भवति, ब्राह्मणं, राजन्यं च वर्जयित्वा।<br>ब्राह्मणे तद्विशेषग्रहणम्, राजन्ये तु स्वरूपग्रहणमेव।<br>टकारो ङीबर्थः, तेन 'अस्त्रियाम्' इति नानुवर्तते।<br>कौण्डीवृस एव कौण्डीवृस्यः। कौण्डीवृस्यौ, कौण्डीवृसाः।<br>स्त्रियामपि ञ्यट् प्रत्ययः - कौण्डीवृसी। टित्त्वान्ङीप्, 'हलस्तद्धितस्य' इति यलोपः।<br>अब्राह्मण-राजन्यादिति किम्? गोपालवाः ब्राह्मणाः। शालङ्कायनाः राजन्याः। | आजीविसंघात् ११७ |
| आयुधजीविसंघात् ११४ | **११५. वृकाट्टेण्यण्**<br>आयुधजीविसङ्घवाचकाद् वृकशब्दात् टेण्यण् प्रत्ययो भवति, स्वार्थे।<br>वृक एव वार्केण्यः, वार्केण्यौ, वृकाः। | |
| आयुधजीविसंघात् ११४ | **११६. दामन्यादि-त्रिगर्तषष्ठाच्छः**<br>'दामनि' इत्येवमादिभ्यः प्रातिपदिकेभ्यः, त्रिगर्तषष्ठेभ्यश्च आयुधजीविसङ्घवाचिभ्यः स्वार्थे छः प्रत्ययो भवति।<br>दामन्यादिभ्यः - दामनिरेव दामनीयः। दामनीयौ। दामनाः।<br>त्रिगर्तषष्ठैभ्यः - कौण्डौपरथ एव कौण्डौपरथीयः। कौण्डौपरथीयौ। कौण्डौपरथाः। | |

| | | |
|---|---|---|
| आयुधजीविसंघात् ११४ | ११७. पर्श्वादि-यौधेयादिभ्यो ऽणञौ<br>'पर्शु' इत्येवमादिभ्यः, 'यौधेय' इत्येवमादिभ्यश्चायुधजीविसङ्घवाचिभ्यः प्रातिपदिकेभ्यः यथासंख्यम् अण्, अञ्- इत्येतौ प्रत्ययौ स्वार्थे भवतः।<br>पर्शुरेव पाशर्वः। पार्शवौ। पर्शवः।<br>यौधेय एव यौधेयः। यौधेयौ। यौधेयाः। | |
| जातिनाम्नः८१ | ११८. अभिजिद्-विदभृच्छालावच्छिखावच्छमीव-दूर्णावच्छ्रुमदणो यञ्<br>अभिजित्,विदभृत् शालावत्, शिखावत्, शमीवत्, ऊर्णावत्, श्रुमत् -इत्येतेभ्यः अणन्तेभ्यो स्वार्थे यञ् प्रत्ययो भवति।<br>अभिजितोऽपत्यम् आभिजितः, आभिजित एव आभिजित्यः। आभिजित्यौ। आभिजिताः।<br>एवमेव - वैदभृत्यः। शालावत्यः। शैखावत्यः। शामीवत्यः। औणावर्त्यः। श्रौमत्यः।<br>अत्र मण्डूकप्लुत्या 'जातिनाम्नः' इत्यनुवर्तते इति आभिजितो मुहूर्तः, आभिजितः स्थलीपाकः इत्यत्र स्वार्थे यञ् प्रत्ययो न भवति। एकत्र 'नक्षत्रेण युक्तः कालः' इत्यण्; अपरत्र 'सास्य देवता' इत्यण्। | |
| | ११९. ञ्यादयस्तद्राजाः<br>'पूगाञ्ञ्योऽग्रामणीपूर्वात्'(५.३.११२) इत्यतः प्रभृति ये प्रत्ययाः ते तद्राजसंज्ञा भवन्ति।<br>तेन एषां प्रत्ययानां 'तद्राजस्य बहुषु तेनै वाऽस्त्रियाम्'(२.४.६२) इति सूत्रेण अस्त्रियां बहुषु लुग्भवति।<br>लोहितध्वजाः। कपोतपाकाः। कौञ्जायनाः। वृकाः। दामनयः। कौण्डोपरथाः। पर्शवः। यौधेयाः। आभिजिताः। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां पञ्चमाध्यायस्य तृतीयः पादः ।।

।। श्रीः ।।

# ।। अथ पञ्चमाध्यायस्य चतुर्थः पादः ।।

| | | |
|---|---|---|
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | **१. पादशतस्य च संख्यादेर्वीप्सायां वुन्लोपश्च**<br>संख्यावाचकपूर्वपदात् पादशब्दात्, शतशब्दाच्च वीप्सायां द्योत्यायां वुन् प्रत्ययो भवति, तत्सन्नियोगेन प्रकृतेः अन्त्यस्य लोपश्च।<br>द्वौ द्वौ पादौ कृत्वा ददाति इति द्विपदिकां ददाति।<br>द्वे द्वे शते कृत्वा ददाति द्विशतिकां ददाति।<br>'तद्धितार्थोत्तर०' इति समासः, ततः प्रत्ययः। वुन्नन्तं पदं स्वभावतः स्त्रियामेव वर्तते।<br>अस्य लोपस्य परनिमित्तकत्वाभावेन 'अचः परस्मिन् पूर्वविधौ' इत्यनेन स्थानिवद्भावोऽत्र न भवतीति द्विपदिका इत्युदाहरणे 'पादः पत्' इत्यनेन पद्भावो निर्बाधतया प्रवर्त्तते।<br>वीप्सायामिति किम्? द्वौ पादौ ददाति। द्वे शते ददाति।<br>(वा०) पाद-शतग्रहणमनर्थकमन्यत्रापि दर्शनात्।<br>द्वौ द्वौ मोदकौ ददाति द्विमोदिकां ददाति।<br>द्वौ द्वौ माषौ ददातीत्यादावतिप्रसङ्गस्तु न, अनभिधानात्। | पादशतस्य संख्यादेः वुन् लोपश्च २ |
| पादशतस्य १<br>संख्यादेः १<br>वुन् १ लोपश्च १<br>ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | **२. दण्ड-व्यवसर्गयोश्च**<br>दण्ड-व्यवसर्गयोर्गम्यमानयोः संख्यादेः पादान्तात्, शतान्ताच्च प्रातिपदिकाद् वुन् प्रत्ययो भवति, अन्तलोपश्च।<br>अवीप्सार्थमिदम्।<br>दण्डनं दण्डः = बलपूर्वकं दण्डग्रहणम्। व्यवसर्गो = दानम्।<br>द्वौ पादौ दण्डितः द्विपादिकां दण्डितः।<br>द्वौ पादौ व्यवसृजति द्विपादिकां व्यवसृजति। ददातीत्यर्थः।<br>एवमेव द्विशतिकां दण्डितः। द्विशतिकां व्यवसृजति। | |
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | **३. स्थूलादिभ्यः प्रकारवचने कन्**<br>प्रकारोऽत्र भेदः, सादृश्यं च, तद्वति वर्त्तमानेभ्यः 'स्थूल' इत्येवमादिभ्यः प्रातिपदिकेभ्यः कन् प्रत्ययो भवति स च तद्धितः।<br>स्थूलप्रकारः स्थूलकः। अणुकः। माषकः। | कन् ६ |

| | | |
|---|---|---|
| कन् ३<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ४. अनत्यन्तगतौ क्तात्<br>अनत्यन्तगतौ गम्यमानायाम् क्तान्तात् प्रातिपदिकात् कन् प्रत्ययो भवति स च तद्धितः।<br>अत्यन्तगतिः = अशेषावयवसम्बन्धः, तदभावः = अनत्यन्तगतिः।<br>भिन्नकम्।<br>ईषद्भिन्नमित्यर्थः।<br>अनत्यन्तगतौ इति किम्? भिन्नम्।<br>व्यापकतया भिन्नमित्यर्थः। | क्तात् ५ |
| क्तात् ४ कन् ३<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ५. न सामिवचने<br>सामिवचने उपपदे क्तान्तात् कन्प्रत्ययो न भवति।<br>सामि कृतम्। अर्धं कृतमित्यर्थः।<br>वचनग्रहणं पर्यायार्थम् - तेन अर्धकृतम्, नेमकृतम् इत्यत्रापि कन्प्रत्ययो न भवति।<br>अनत्यन्तगतेरिह सामि, अर्ध, नेम इति शब्दप्रयोगेण प्रकृत्यैव अभिहितत्वात् उक्तार्थानामप्रयोगः इति न्यायेन तदर्थद्योतनाय प्रत्ययस्याऽनावश्यकत्वात् पूर्वसूत्रेण कन् न प्राप्नोति, अतोऽनेन कृतो निषेधः व्यर्थः। अतः इदमेव निषेधसूत्रं व्यर्थीभूय ज्ञापयति- कन् प्रत्ययः अत्यन्तस्वार्थिकोऽपि भवति। तेन 'एवं हि सूत्रमभिन्नतरकं भवति' 'एतर्हि बहुतरकं व्याप्यते' इत्येवमादिप्रयोगेषु 'अभिन्नतरकम्' 'बहुतरकम्' इत्यादौ कृतः कन् प्रत्ययः उपपन्नो भवति। | |
| कन् ३<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ६. बृहत्या आच्छादने<br>आच्छादनेऽर्थे वर्तमानाद् बृहती इतिप्रातिपदिकात् स्वार्थे कन्प्रत्ययो भवति।<br>बृहती एव बृहतिका। प्रावार इत्यर्थः।<br>आच्छादनेइति किम्? बृहती छन्दः। | |

| ङ्याप्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ७. अषडक्षाशितङ्ग्वलङ्कर्मालंपुरुषाध्युत्तरपदात्खः<br>अषडक्ष, आशितङ्गु, अलङ्कर्मन्, अलम्पुरुष- इत्येतेभ्यः प्रातिपदिकेभ्यः, अध्युत्तरपदात् प्रातिपदिकाच्च स्वार्थे खः प्रत्ययो भवति।<br>अषडक्ष एव अषडक्षीणो मन्त्रः।<br>अविद्यमानानि षड् अक्षीणि=श्रोत्रेन्द्रियाणि यस्मिन् मन्त्रे इति विग्रहे बहुव्रीहिसमासः, 'बहुव्रीहौ सक्थ्यक्ष्णोः' (५.४.११३) इति समासान्ते षचि प्रत्यये कृते निष्पन्नात् अषडक्षशब्दात् स्वार्थे खः तस्य ईनादेशः।<br>द्वाभ्यां कृतं मन्त्रणम् अषडक्षीणो मन्त्र इत्युच्येते। त्रिभिः कृतो मन्त्रः षडक्षः कथ्यते।<br>आशिता गावोऽस्मिन् अरण्ये इति आशितङ्गवीनमरण्यम्। निपातनात् पूर्वपदस्य मुमागमः।<br>अलङ्कर्मणे इति अलङ्कर्मीणः।<br>अलम्पुरुषमिति अलम्पुरुषीणः।<br>अलङ्कर्मन्, अलम्पुरुष इति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति समासः।<br>अध्युत्तरपदस्तत्पुरुषः, शौण्डादिगणे अधिशब्दस्य पाठात्।<br>राज्ञि इति राजाधीनः।<br>नित्यश्चायं प्रत्ययः, उत्तरत्र विभाषाग्रहणात्<br>न केवलमयमेवस्वार्थिकः प्रत्ययो नित्यः अपि तु अन्येऽपि कतिपये स्वार्थिकाः प्रत्यया नित्या भवन्ति।<br>तथा चास्ति भाष्य वचनम्-<br>(भाष्यवचनम्) के पुनर्नित्यप्रत्ययाः ?<br>तमादयः प्राक्कनः। ञ्यादयः प्राग्वुनः। अमादयः प्राङ्मयटः। बृहतीजात्यन्ताः। समासान्ताश्चेति।<br>अस्य भाष्यवचनस्यायमर्थः -<br>तामादयः प्राक्कनः इति-'अतिशायने तमबिष्ठनौ' (५.३.५५) इत्यारभ्य 'युवाल्पयोः कनन्यतरस्याम्' (५.३.६४) इत्यतः प्राक्ये प्रत्ययास्ते नित्यतया प्रवर्तन्ते।<br>ञ्यादयः प्राग्वुनः - 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' (५.३.११२) इत्यादयः 'पादशतस्य' (५.४.१) इत्यतः प्राग् विहिताः प्रत्ययाः नित्यतया प्रवर्तन्ते। | खः ८ |
|---|---|---|

| | | |
|---|---|---|
| | आमादयः प्राङ्मयाः–'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे (५.४.११) इत्येवमादयः 'तत्प्रकृतवचने मयट्' (५.४.२१) इत्यतः प्राग्विहिताः प्रत्ययाः नित्यतया प्रवर्तन्ते।<br>वृहतीजात्यन्ताः– 'वृहत्या आच्छादेन (५.४.६) इत्यारभ्य 'जात्यन्ताच्छ बन्धुनि' (५.४.९)। इत्यन्तं यावत् कन्,ख,छ इति प्रत्ययास्ते नित्यतया प्रवर्तन्ते।<br>समासान्ताः– समासान्ताः (५.४.६८) इत्यधिकारस्थप्रत्ययाश्च नित्यतया प्रवर्तन्ते। | |
| खः ७<br>ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ८. विभाषाऽञ्चेरदिक्स्त्रियाम्<br>अदिक्स्त्रीवृत्तेरञ्चत्यन्तात् प्रातिपदिकात् खः प्रत्ययो विभाषा भवति स्वार्थे।<br>प्रागेव प्राचीनम्। अर्वागेव अर्वाचीनम्।<br>अदिक्स्त्रियामिति किम् ? प्राची दिक्। प्रतीची दिक्।<br>दिग्ग्रहणं किम्। प्राचीना ब्राह्मणी।<br>स्त्रीग्रहणं किम्? प्राचीनं दिग् रमणीयम्।<br>अत्र प्रत्युदाहरणे प्राचीनशब्दे प्राचीनशब्दात् प्रथमान्तात् दिग्वाचिनः प्रथमासमर्थाद् 'दिक्शब्देभ्यः' (५.३.२७) इतिसूत्रेण उत्पन्नस्य अस्तातेः 'अञ्चेर्लुक् (५.३.३०) इति लुक्, ङीपोऽपि 'लुक्तद्धितलुकि ' (१.२.४९) इति लुक्। ततः 'तद्धितश्चाऽसर्वविभक्तिः' इत्यव्ययत्वात्स्त्रीलिङ्गाभावः। खप्रत्यये तु स्वभावादेव नपुंसकत्वम्।<br>एवं हि अस्तातेरर्थे प्रयुज्यमाना ये दिगर्थाः प्राक् इत्यादयः शब्दाः ते नपुंसकलिङ्गाः, ततः खप्रत्ययः स्यादेवेत्यर्थम् सूत्रे स्त्रीग्रहणं कृतमित्याशयः। | |

| | | |
|---|---|---|
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ९. जात्यन्तांच्छ बन्धुनि<br>बन्धुनि = द्रव्येऽर्थे वर्तमानाज्जात्यन्तात् प्रातिपदिकात् स्वार्थे छः प्रत्ययो भवति।<br>यद्यपि बन्धुशब्द आप्तपरिजने प्रसिद्धस्तथापि तस्य पुल्लिङ्गतया सूत्रे च 'बन्धुनि' इति नपुंसकनिर्देशादत्र बन्धुशब्दः जातेर्व्यञ्जकद्रव्यस्य वाचकः, बध्यते = व्यज्यते ब्रह्मणत्वादिजातिरस्मिन् इति व्युत्पत्त्या।<br>ब्राह्मणजातिरेव ब्राह्मणजातीयः।<br>ब्राह्मणशब्दोऽत्र भावप्रधानः 'द्व्येकयोः' इतिवत्। ब्राह्मणः = ब्राह्मणत्वं जातिरस्येति विग्रहे बहुव्रीहिसमासे कृते निष्पन्नो जात्यन्तो ब्राह्मणजातिरिति शब्दः द्रव्यवाचकः अर्थात् व्यक्तिवाचकः, ततः स्वार्थे छप्रत्यये कृते ब्राह्मणजातीय इति रूपम्।<br>एवमेव क्षत्रियजातीयः, वैश्यजातीय इति।<br>बन्धुनीति किम् ? ब्राह्मणजातिः शोभना।<br>अत्र ब्राह्मणानां जातिरिति षष्ठीतत्पुरुषः, ब्राह्मणश्चासौ जातिश्चेति कर्मधारयो वा, एवं हि ब्राह्मणजातिशब्दोऽत्र नास्ति द्रव्यवाचकः, अपितु जातिवाचक एवेति नात्र स्वार्थे छप्रत्ययः। | छः १० |
| छः ९<br>ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | १०. स्थानान्ताद्विभाषा सस्थानेनेति चेत्<br>तुल्यरूपेणार्थेन यदि स्थानान्तं शब्दस्वरूपमर्थवद् भवति तदा तस्मात् स्थानान्तात् प्रातिपदिकात् छः प्रत्ययो विभाषा भवति।<br>सस्थानशब्दस्तुल्यवाची, समानं स्थानमस्येति व्युत्त्पत्या।<br>सूत्रे इतिशब्देन अर्थवदिति लभ्यते। एवं हि सूत्रस्योक्तार्थः सम्पद्यते।<br>पितृस्थानमिव स्थानं यस्य स पितृस्थानः, पित्रा तुल्य इत्यर्थः। पितृस्थान एव पितृस्थानीयः, पितृस्थानो वा।<br>पितृनिष्ठपूज्यत्वादितुल्यपूज्यत्वादिमानित्यर्थः।<br>सस्थानेनेति किम्? गोस्थानम्। गवां निवास इत्यर्थः।<br>अत्र तुल्यत्वाप्रतीतेर्न छप्रत्ययो न। | |

| | | |
|---|---|---|
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ११. किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे<br>किम्, एत् (एकारान्त), तिङ् (तिङन्त), अव्यय-इत्येतत्प्रकृतिको यः घस्तदन्तात् प्रातिपदिकात् स्वार्थे आमुप्रत्ययो भवति, अद्रव्यप्रकर्षे।<br>किमेत्तिङव्ययघादिति = किमेत्तिङव्ययप्रकृतिको घः इति किमेत्तिङव्ययघः, मध्यमपदलोपिसमासः, तस्मात्।<br>किन्तराम्। किंतमाम्।<br>पूर्वाह्णेतराम्। पूर्वाह्णेतमाम्।<br>पचतितराम्। पचतितमाम्।<br>उच्चैस्तराम्। उच्चैस्तमाम्।<br>अद्रव्यप्रकर्ष इति किम्? उच्चैस्तरः, उच्चैस्तमो वा पर्वतः। | सम्पूर्णसूत्रम् १२ |
| किमेत्तिङव्ययघात् ११<br>अद्रव्यप्रकर्षे ११<br>आमु ११ | १२. अमु च च्छन्दसि<br>किमेत्तिङव्ययघात् प्रातिपदिकात् अद्रव्यप्रकर्षे छन्दसि विषये अमुप्रत्ययो भवति, चकारादामु च।<br>प्रतरं न आयुः। प्रतरां न आयुः। प्रतरां नय। | |
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | १३. अनुगादिनष्ठक्<br>अनुगादिन् इतिप्रातिपदिकात् स्वार्थे ठक् प्रत्ययो भवति।<br>अनुगदतीत्यनुगादी, स एव आनुगादिकः।<br>अनुपूर्वाद्गद्धातोः कर्तरि णिनिः अस्मादेव निपातनात्, प्रकृतिस्वरूपप्रदर्शनपरं चैतत्, अनुगादिन् शब्दस्य स्वतन्त्ररूपेण प्रयोगो न भवति, ठको नित्यत्वात्। | |
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | १४. णचः स्त्रियामञ्<br>'कर्मव्यतिहारे णच् स्त्रियाम्' (३.३.४३) इति णज्विहितः, तदन्तात् प्रातिपदिकात् स्वार्थेऽञ् प्रत्ययो भवति, स्त्रियां विषये।<br>व्यावक्रोशी। व्यावहासी। | |
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | १५. अणिनुणः<br>'अभिविधौ भावे इनुण्'(३.३.४४) इति सूत्रेण इनुण् विहितः, तदन्तात् प्रातिपदिकात् स्वार्थेऽण् प्रत्ययो भवति।<br>सांराविणं वर्तते। सांकूटिनम्।<br>'इनण्यनपत्ये' इति प्रकृतिभावः। | अण् १६ |

| | | |
|---|---|---|
| अणू १५<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | १६. विसारिणो मत्स्ये<br>विसरतीति विसारी। विसारिन् इतिप्रातिपदिकात्<br>स्वार्थेऽणू प्रत्ययो भवति, मत्स्येऽभिधेये।<br>वैसारिणो मत्स्यः।<br>मत्स्येऽर्थे विपूर्वात् सृधातोः कर्तरि णिनिः अस्मादेव<br>निपातनाद् भवति। मत्स्येऽर्थे विसारिन्शब्दस्य<br>स्वतन्त्ररूपेण प्रयोगो न भवति, अणो नित्यत्वात्।<br>मत्स्य इति किम्? विसारी देवदत्तः।<br>अत्र ग्रहादित्वाण्णिनिः, आवश्यके वा, ताच्छील्ये वा। | |
| ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | १७. संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्<br>क्रियाभ्यावृत्तिगणने वर्त्तमानात् संख्यावाचिनः<br>प्रातिपदिकात् स्वार्थे कृत्वसुच् प्रत्ययो भवति।<br>अभ्यावृत्तिः = जन्म।<br>एककर्तृकाणां तुल्यजातीयानां क्रियाणां जन्मसंख्यानं<br>क्रियाभ्यावृत्तिगणनं तत्र प्रत्ययो भवत्यनेन। पञ्चवारान्<br>भुङ्क्ते पञ्चकृत्वः। सप्तकृत्वः।<br>संख्याया इति किम्? भूरीन् वारान् भुङ्क्ते।<br>नायं संख्यावाची, लोके गणनायामप्रसिद्धेः। | संख्यायाः २०<br>क्रियाभ्या-<br>वृत्तिगणने २० |
| संख्यायाः १७<br>क्रियाभ्यावृत्ति-<br>गणने १७ | १८. द्वि-त्रि-चतुर्भ्यः सुच्<br>क्रियाभ्यावृत्तिगणने वर्त्तमानेभ्यः द्वि, त्रि, चतुर्-<br>इत्येतेभ्यः संख्यावाचिप्रातिपदिकेभ्यः सुच् प्रत्ययो भवति।<br>कृत्वसुचोऽपवादः।<br>द्विर्भुङ्क्ते। त्रिर्भुङ्क्ते। चतुर्भुङ्क्ते।<br>चतुःशब्दे 'रात्सस्य' इति सूत्रेण सस्य लोपः। | सुच् १९ |
| क्रियाभ्यावृत्ति-<br>गणने १७<br>सुच् १८ | १९. एकस्य सकृच्च<br>क्रियाभ्यावृत्तिगणने वर्त्तमानस्य एकशब्दस्य सकृत्<br>इत्यादेशो भवति, सुच्च प्रत्ययः ।<br>कृत्वसुचोऽपवादः।<br>एकं वारं भुङ्क्ते सकृद् भुङ्क्ते।<br>'सकृत् स्' इत्यवस्थायां 'संयोगान्तस्य लोपः' इत्यनेन<br>सुचो लोपः, न तु 'हल्ङ्याप्' इति सूत्रेण,<br>अभैत्सीदित्यत्र सिच इव सुचोऽपि तदयोगात्। | |

| | | |
|---|---|---|
| क्रियाभ्यावृत्ति-गणने १७ | २०. विभाषा बहोर्धाऽविप्रकृष्टकाले क्रियाभ्यावृतिगणने वर्तमानाद् बहुशब्दाद् विभाषा धा प्रत्ययो भवति, क्रियाणामुत्पत्तयश्चेद् आसन्नकाला भवन्ति, न तु विप्रकृष्टकालाः।<br>पक्षे कृत्वसुच्।<br>बहुधा दिवसस्य भुङ्क्ते।<br>बहुकृत्वो दिवसस्य भुङ्क्ते।<br>अविप्रकृष्टकाले इति किम्। बहुकृत्वो मासस्य भुङ्क्ते। | |
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | २१. तत्प्रकृतवचने मयट्<br>अस्य सूत्रस्य अर्थद्वये तात्पर्यम्।<br>प्रथमोऽर्थः - तत् इति प्रथमा समर्थविभक्तिः, प्राचुर्येण प्रस्तुतम् = प्रकृतम्। प्रकृतोपाधिकेऽर्थे वर्तमानात् प्रथमान्तात्स्वार्थे मयट् प्रत्ययो भवति। अन्नं प्रकृतम् अन्नमयम्। अपूपमयम्।<br>द्वितीयोऽर्थः - प्रकृतमित्युच्यते अस्मिन्निति प्रकृतम्। तदिति प्रथमासमर्थात् प्रकृतवचनेऽभिधेये मयट् प्रत्ययो भवति।<br>अन्नं प्रकृतमस्मिन्निति अन्नमयो यज्ञः। अपूपमयं पर्व।<br>द्वयमपि प्रमाणम्, उभयथा सूत्रप्रणयनात्। | तत् प्रकृतवचने मयट् २२ |
| तत् प्रकृतवचने मयट् २१<br>ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | २२. समूहवच्च बहुषु<br>बहुषु प्रकृतेषूच्यमानेषु प्रथमान्ताद् समूहवत्प्रत्ययाः भवन्ति चकारान्मयट्च। तस्य समूहः (४.३.३७) इति प्रकरणे ये प्रत्ययाः याभ्यः प्रकृतिभ्यः विहितास्ते प्रत्ययाः ताभ्यः प्रकृतिभ्यः प्राचुर्येऽर्थेऽपि भवन्ति।<br>मोदकाः प्रकृताः = प्राचुर्येण प्रस्तुताः इति मौदकिकम्। शाष्कुलिकम्।<br>पक्षे मोदकमयम्। शष्कुलीमयम्।<br>पूर्ववद् सूत्रस्य द्वितीयेऽर्थे - मोदकाः प्रकृताः अस्मिन्यज्ञे इति मौदकिको यज्ञः। मोदकमयः। शाष्कुलिकः, शष्कुलीमयः।<br>मौदकिकम्। शाष्कुलिकम् इत्यत्र 'तस्य समूहः'(४.२.३७) इति प्रकरणे पठितेन 'अचित्तहस्तिधेनोष्ठक्'(४.२.४७) इति सूत्रेण अचित्तत्वात् ठक् प्रत्ययः। | |

| | | |
|---|---|---|
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | २३. अनन्तावसथेतिह-भेषजाञ्ञ्यः<br>अनन्त, आवसथ, इतिह, भेषज इत्येतेभ्यः प्रातिपदिकेभ्यः स्वार्थे ञ्यः प्रत्ययो भवति।<br>अनन्त एव आनन्त्यम्।<br>स्वार्थिकत्वेऽपि क्वचिलिङ्गव्यतिक्रमोऽपि भवतीति नपुंसकत्वमत्र।<br>एवमेव - आवसथ्यम् इत्यग्रिमोदाहरणेऽपि।<br>आवसथो = गृहम्। आवसथ एव आवसथ्यम्।<br>'इतिह' इति निपातसमुदायः उपदेशपारम्पर्ये वर्तते।<br>इतिह एव ऐतिह्यम्।<br>भेषजम् = औषधम्। भेषजमेव भैषज्यम्।<br>महाविभाषया विकल्पते प्रत्ययः। | |
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | २४. देवतान्तात्तादर्थ्ये यत्<br>तदर्थ एव तादर्थ्यम्, चातुर्वर्ण्यादित्वात्ष्यञ्। तादर्थ्ये चतुर्थी भवतीति सूत्रस्यार्थो भवति - 'तदर्थम्' इत्यर्थे देवतान्तात् प्रातिपदिकाच्चतुर्थ्यन्ताद् यत्प्रत्ययो भवति।<br>अग्निदेवतायै इदम् अग्निदेवत्यम्। वायुदेवत्यम्। | तादर्थ्ये २६<br>यत् २५ |

| | | |
|---|---|---|
| तादर्थ्ये २४<br>यत् २४<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | २५. पादार्घाभ्यां च<br>'तदर्थम्' इत्यर्थे पाद, अर्घ इति प्रातिपदिकाभ्यां चतुर्थ्यन्ताभ्यां यत् प्रत्ययो भवति।<br>पादार्थमुदकं पाद्यम्। अर्घार्थमुदकम् अर्घ्यम्।<br>अर्घः = पूजा।<br>सूत्रे चकारोऽनुक्तसमुच्चयार्थः।<br>तेन यथादर्शनमन्यत्रापि प्रत्ययो भवति - छन्दस्यः प्रजापतिः।<br>(वा०) नवस्य नू आदेशस्त्नप्-तन-खाश्च प्रत्ययाः वक्तव्यः।<br>अत्यन्तस्वार्थेऽयं प्रत्ययः।<br>नवमेव नूत्नम्, नूतनम्, नवीनम् वा।<br>(वा०) नश्च पुराणे प्रात्।<br>पुराणेऽर्थे वर्त्तमानात् प्रशब्दाद् 'न' इति प्रत्ययो भवति, चकारात् त्नप्-तन-खाश्च प्रत्ययाः भवन्तीति वार्तिकस्यार्थः।<br>प्रणम्, प्रत्नम्, प्रतनम्, प्रीणम्।<br>(वा०) भाग-रूप-नामभ्यो धेयः प्रत्ययो वक्तव्यः।<br>भागधेयम्। रूपधेयम्। नामधेयम्।<br>(वा) मित्राच्छन्दसि।<br>मित्रधेये यतस्त्व।<br>(वा) आग्नीध्र-साधारणदञ्।<br>आग्निध्रम्। साधारणम्।<br>अञन्तत्वात्स्त्रियां ङीपि - आग्नीध्री। साधारणी।<br>अग्नीध्रम् इत्यत्र अग्नीधः शरणम्-आग्नीध्रम्।<br>'अग्नीधः शरणे रण्, भं च' इति 'तस्येदम्'( ४.३.१२०) इतिसूत्रे पठितेन वार्तिकेन निष्पन्नात् आग्नीध्रशब्दादञ् प्रत्ययः। | |
| तादर्थ्ये २४<br>यत् २४<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | २६. अतिथेर्ञ्यः<br>'तदर्थम्' इत्यर्थे अतिथि इतिप्रातिपदिकात् ञ्यः प्रत्ययो भवति।<br>अतिथये इदम् आतिथ्यम्। | |
| ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | २७. देवात्तल्<br>देव इतिप्रातिपदिकात् स्वार्थे तल्प्रत्ययो भवति।<br>देव एव देवता। | |

| | | |
|---|---|---|
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | २८. अवेः कः<br>अवि इतिप्रातिपदिकात् स्वार्थे कः प्रत्ययो भवति।<br>अविरेव अविकः। अविः = मेषः। | |
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | २९. यावादिभ्यः कन्<br>'याव' इत्येवमादिभ्यः प्रातिपदिकेभ्यः कन्प्रत्ययो भवति।<br>यवानामयं यावः = ओदनादिः। स एव यावकः। मणिरेव मणिकः।<br>(गणसूत्रम्) स्नात वेदसमाप्तौ।<br>स्नातशब्दः कनमुत्पादयति, वेदसमाप्तौ विवक्षितायाम्।<br>स्नात एव स्नातकः। यस्य वेदः समाप्तः स स्नातक इत्युच्यते। अन्यत्र तु स्नात इत्येव, यथा नद्यां स्नात इति।<br>(गणसूत्रम्) पुत्र कृत्रिमे।<br>कृत्रिमः पुत्रः पुत्रकः। | कन् ३३ |
| कन् २९ | ३०. लोहितान्मणौ<br>मणौ वर्तमानाद् लोहितशब्दात् स्वार्थे कन्प्रत्ययो भवति।<br>लोहितो मणिः लोहितकः। अन्यत्र लोहित इत्येव। | लोहितात् ३२ |
| लोहितात् ३०<br>कन् २९ | ३१. वर्णे चानित्ये<br>अनित्ये वर्णे वर्तमानाद् लोहितशब्दात्स्वार्थे कन्प्रत्ययो भवति।<br>लोहितकः कोपेन देवदत्तः।<br>अनित्ये इति किम्? लोहितो गौः। लोहितं रुधिरम्।<br>(वा०) लोहितात्लिङ्गबाधनं वा वक्तव्यः।<br>लोहितशब्दात्परस्य स्त्रीलिङ्गबोधकप्रत्ययस्य कना बाधो वा भवतीति वार्तिकार्थः।<br>स्त्रीप्रत्ययस्य कना बाधे -लोहितिका इति रूपम्। पक्षे-स्त्रीप्रत्यये कृते कन्प्रत्यये तु लोहिनिका इति रूपम्।<br>'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीप्, तकारस्य नकारादेशश्च। | अनित्ये ३३<br>वर्णे ३३ |
| लोहितात् ३०<br>कन् २९ | ३२.रक्ते<br>लाक्षादिना रक्ते यो लोहितशब्दः तस्मात् कन्प्रत्ययो भवति।<br>लोहितकः कम्बलः। लोहितकः पटः।<br>लिङ्गबाधनं वेत्येव - लोहितिका, लोहिनिका शाटी। | रक्ते ३३ |

| | | |
|---|---|---|
| अनित्ये ३१<br>वर्णे३१ रक्ते३२<br>कन् २६ | ३३. कालाच्च<br>अनित्ये वर्णे, रक्ते च वर्तमानात् कालशब्दात्स्वार्थे कन्प्रत्ययो भवति।<br>अनित्ये वर्णे- कालकं मुखं वैलक्ष्येण = लज्जया।<br>रक्ते - कालकः पटः। कालिका शाटी। | |
| ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ३४. विनयादिभ्यष्ठक्<br>विनयादिभ्यः प्रातिपदिकेभ्यः स्वार्थे ठक् प्रत्ययो भवति।<br>विनय एव वैनयिकः। समय एव सामयिकः।<br>(गणसूत्रम्) उपायो ह्रस्वत्वं च।<br>उपाय एव औपयिकः।<br>अकस्माच्छब्दोऽत्र पठ्यते, स तु दान्तो न तु तान्तः।<br>तेन 'इसुसुक्तान्तात्कः' इति कादेशो न भवति।<br>'अव्ययानां भमात्रे टिलोपः' इति आकस्मिकम् इति रूपं भवति। | ठक् ३५ |
| ठक् ३४<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ३५. वाचो व्याहृतार्थायाम्<br>व्याहृतार्थायां वाचि वर्तमानाद् वाच् इतिप्रातिपदिकात्स्वार्थे ठक् प्रत्ययो भवति।<br>'इदमस्य वक्तव्यम्' इति दूतं प्रति योऽर्थः उच्यते स व्याहृतः, व्याहृतोऽर्थो यस्या वाचः सा व्याहृतार्था वाक् सन्देशवागित्यर्थः।<br>वाचिकं कथयति। वाचिकं श्रद्धधे।<br>'स्वार्थिकाः क्वचिल्लिङ्गमतिवर्तन्ते' इति नपुंसकत्वम्।<br>वाचिकं कथयति। वाचिकं श्रद्धधे। | व्याहृतार्थायाम्३६ |
| व्याहृतार्थायाम्३५<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ३६. तद्युक्तात्कर्मणोऽण्<br>व्याहृतार्थया वाचा यत्कर्म युक्तं, तदभिधायिनः कर्मशब्दात् स्वार्थेऽण् प्रत्ययो भवति।<br>कर्म एव कार्मणम्।<br>वाचिकं श्रुत्वा तथैव यत्कर्म क्रियते तत्कार्मणम् इत्युच्यते।<br>'अन्' इति प्रकृतिभावान्न टिलोपः।<br>(वा०) अण्प्रकरणे कुलाल-वरुड-निषाद-कर्मार-चाण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यानम्।<br>कुलाल एव कौलालः। वारुडः। नैषादः। कार्मारः।<br>चाण्डालः। मैत्रः। आमित्रः। | अण् ३८ |
| अण् ३६<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ३७. ओषधेरजातौ<br>अजातौ वर्तमानात् औषधि इतिप्रातिपदिकात्स्वार्थेऽण् प्रत्ययो भवति।<br>औषधं पिबति। औषधं ददाति। | |

| | | |
|---|---|---|
| अणु ३६<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ३८. प्रज्ञादिभ्यश्च<br>'प्रज्ञ' इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्वार्थेऽणु प्रत्ययो भवति।<br>प्रकृष्टं जानातीति प्रज्ञः। प्रज्ञ एव प्राज्ञः।<br>स्त्रियाम्- प्राज्ञी।<br>यस्यास्तु प्रज्ञा विद्यते सा प्राज्ञा भवति। 'प्रज्ञाश्रद्धार्चाभ्यो णः' इति णः।<br>मन एव मानसम्। चोर एव चौरः। रक्ष एव राक्षसः।<br>देवता एव दैवतः, दैवतं वा। बन्धुरेव बान्धवः। | |
| ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ३९. मृदस्तिकन्<br>'मृद्' इतिप्रातिपदिकात् स्वार्थे तिकन् प्रत्ययो भवति।<br>विकल्पः सर्वत्रानुवर्तते।<br>मृदेव मृत्तिका। | मृदः ४० |
| मृदः ३९<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ४०. सस्नौ प्रशंसायाम्<br>प्रशंसाविशिष्टार्थे वर्त्तमानाद् मृद् इतिप्रातिपदिकात् स, स्न इत्येतौ प्रत्ययौ भवतः।<br>'प्रशंसायां रूपप्' इत्यस्यापवादः।<br>प्रशस्ता मृत् - मृत्सा, मृत्स्ना वा।<br>नित्यश्चायं प्रत्ययः, उत्तरसूत्रेऽन्यतरस्यांग्रहणात्। | प्रशंसायाम् ४१ |
| प्रशंसायाम् ४०<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ४१. वृक-ज्येष्ठाभ्यां तिल्तातिलौ चच्छन्दसि<br>प्रशंसाविशिष्टेऽर्थे वर्तमानाभ्यां वृक-ज्येष्ठाभ्यां प्रातिपदिकाभ्यां यथासंख्यं तिल्, तातिल्- इत्येतौ प्रत्ययौ भवतश्छन्दसि। रूपपोऽपवादः।<br>वृकतिः। ज्येष्ठतातिः। | |

| | | |
|---|---|---|
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | **४२. बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्**<br>बह्वर्थात्, अल्पार्थाच्च कारकाभिधायिनः प्रातिपदिकात् स्वार्थे शस् प्रत्ययो भवति, अन्यतरस्याम्।<br>विशेषानभिधानाच्च सर्वं कर्मादिकारकं गृह्यते।<br>बहूनि ददाति बहुशो ददाति।<br>अल्पं ददाति, अल्पशो ददाति।<br>बहुभिर्ददाति बहुशो ददाति।<br>अल्पेन ददाति अल्पशो ददाति।<br>एवमेव - बहुभ्यः, बहुशः। अल्पाभ्यः, अल्पशः।<br>बह्वल्पार्थादिति किम्? गां ददाति।<br>कारकादिति किम्? बहूनां स्वामी।<br>अर्थग्रहणात् पर्यायेभ्योऽपि भवति - भूरिशो ददाति। स्तोकशो ददाति।<br>(वा०) बह्वल्पार्थान्मङ्गलामङ्गलवचनम्।<br>बह्वल्पार्थान्मङ्गलामङ्गले गम्ये एवायं शस्प्रत्ययो भवतीति वार्तिकार्थः।<br>बहुशो ददातीत्याभ्युदयिकेषु कर्मसु।<br>अल्पशो ददातीत्यनिष्टेषु कर्मसु। | शस् ४३<br>अन्यतरस्याम् ४९ |
| शस् ४२<br>अन्यतरस्याम् ४२<br>ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | **४३. संख्यैकवचनाच्च वीप्सायाम्**<br>संख्यावाचिभ्यः प्रातिपदिकेभ्यः, एकार्थाभिधायिनः प्रातिपदिकाच्च वीप्सायां द्योत्यायां शस् प्रत्ययो भवति, अन्यतरस्याम्।<br>एकोऽर्थ उच्यते येन तदेकवचनम्।<br>इति यौगिकोऽत्रैकवचनशब्दो न तु पारिभाषिकः।<br>कार्षापणादयः परिमाणशब्दा वृत्तावेकार्था एव भवन्तीति एकवचनशब्देन परिमाणविशेषवाचकाः शब्दा एव गृह्यन्तेऽत्र।<br>द्वौ द्वौ ददाति इति द्विशो ददाति।<br>माषं माषं ददाति इति माषशो ददाति। प्रस्थं प्रस्थं ददाति इति प्रस्थशो ददाति।<br>संख्यैकवचनादिति किम्? घटं घटं ददाति।<br>वीप्सायां किम्? द्वौ ददाति।<br>कारकादित्येव-द्वयोर्द्वयोः स्वामी। कार्षापणस्य कार्षापणस्य स्वामी। | |

| | | |
|---|---|---|
| अन्यतरस्याम् ४२<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | **४४. प्रतियोगे पञ्चम्यास्तसिः**<br>कर्मप्रवचनीयसंज्ञकेन प्रतिना योगे या पञ्चमी, विहिता, तदन्तात् प्रातिपदिकात् तसिः प्रत्ययो भवति।<br>प्रद्युम्नो वासुदेवतः प्रति।<br>अभिमन्युरर्जुनतः प्रति।<br>वाग्रहणानुवृत्तेर्विकल्पेन भवति - वासुदेवात् अर्जुनादित्यपि भवति।<br>(वा०) आद्यादिभ्य उपसंख्यानम्।<br>आदौ-आदितः। मध्यतः। अन्ततः। पृष्ठतः। पार्श्वतः।<br>आकृतिगणोऽयम्। तेन स्वरेण-स्वरतः। वर्णतः इत्यादि सिध्यति।<br>'अयमेव सार्वविभक्तितसिः' इति शेखरे नागेशः। | पञ्चम्याः ४५<br>तसिः ४६ |
| पञ्चम्याः ४४<br>तसिः ४४ वा ४२<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | **४५. अपादाने चाऽहीयरुहोः**<br>अपादाने या पञ्चमी, तदन्तात् प्रातिपदिकात् तसिः प्रत्ययो वा भवति, तच्चेदमपादानं हीय-रुहोः सम्बन्धि न भवेत्।<br>'हीय' इति 'ओहाक् त्यागे' इति धातोः कर्मणि लकारे, यगन्तं यद्रूपं हीयते इति तस्यैकदेशस्य अनुकरणम्।<br>ग्रामतः, ग्रामाद् वा गच्छति। चोरतः, चोराद् वा बिभेति।<br>अध्ययनतः, अध्ययनाद् वा पराजयते।<br>अहीय-रुहोरिति किम्? स्वर्गाद् हीयते।<br>पर्वताद् अवरोहति। | |
| वा ४२ तसिः ४४<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | **४६. अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः**<br>अतिग्रहादिविषये या तृतीया तदन्तात् प्रातिपदिकाद् वा तसिप्रत्ययो भवति, सा चेत् तृतीया कर्तरि न भवेत्।<br>अतिक्रम्य ग्रहः अतिग्रहः। अव्यथनम् = अचलनम्।<br>क्षेपः = निन्दा।<br>अतिग्रहे - चारित्रेणातिगृह्यते, चारित्रतोऽतिगृह्यते।<br>'चरेर्वृत्ते ह्रस्वश्च वा' (उणादिसूत्रम्-६११) इति णित्रन्प्रत्ययस्तेन चरित्रम्, चारित्रम् इत्युभयं भवति।<br>'चारित्रेण अन्यानतिक्रम्य वर्तते'।<br>अव्यथने - वृत्तेन न व्यथते, वृत्ततो वा।<br>वृत्तेन न चलतीत्यर्थः।<br>क्षेपे - वृत्तेन क्षिप्तः, वृत्ततो वा।<br>वृत्तेन निन्दित इत्यर्थः।<br>अकर्तरि इति किम्? देवदत्तेन क्षिप्तः। | अकर्तरि<br>तृतीयायाः ४७ |

| | | |
|---|---|---|
| अकर्तरि ४६<br>तृतीयायाः ४६<br>वा ४२ तसिः ४४<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ४७. हीयमान-पापयोगाच्च<br>हीयमानेन, पापेन च योगो यस्य तद्वाचिनः परा या अकर्तरि तृतीयाविभक्तिः, तदन्तात् प्रातिपदिकात् तसिः प्रत्ययो वा भवति।<br>हीयमानयोगात् - वृत्तेन, वृत्ततो वा हीयते।<br>चारित्रेण, चारित्रतो वा हीयते।<br>पापयोगात् - वृत्तेन, वृत्ततः वा पापः।<br>चारित्रेण, चारित्रतो वा पापः | |
| वा ४२ तसिः ४४<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ४८. षष्ठ्या व्याश्रये<br>व्याश्रये गम्यमाने षष्ठ्यन्तात् प्रातिपदिकात् तसिः प्रत्ययो वा भवति।<br>नानापक्षसमाश्रयः = व्याश्रयः।<br>देवा अर्जुनतोऽभवन्।<br>अर्जुनतः इत्यस्य अर्जुनस्य पक्षे इत्यर्थः।<br>आदित्या कर्णतोऽभवन्।<br>कर्णस्य पक्षे इत्यर्थः।<br>पक्षशब्दस्तु तसौ सति न प्रयुज्यते, गतार्थत्वात्, नानापक्षसमाश्रयण एवास्य विधानात्। | षष्ठ्याः ४६ |
| वा ४२ तसिः ४४<br>षष्ठ्याः ४८<br>ङ्याप्प्रातिपदिकात्<br>४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ४९. रोगाच्चापनयने<br>रोगवाचिनः शब्दाद् या षष्ठीविभक्तिस्तदन्तात् प्रातिपदिकात् तसिप्रत्ययो वा भवति, अपनयने गम्यमाने।<br>रोगः = व्याधिः। अपनयनम् = प्रतीकारः, चिकित्सेत्यर्थः।<br>प्रवाहिकातः कुरु।<br>प्रवाहिकायाः चिकित्सां कुरु इत्यर्थः।<br>अपनयने किम्? प्रवाहिकायाः कोपनं करोति। | |

| | | |
|---|---|---|
| ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ५०. कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः<br>(वा०) अभूततद्भाव इति वक्तव्यम्।<br>अभूततद्भावे गम्यमाने सति संपद्यकर्तरि वर्तमानात् प्रातिपदिकाद् कृ, भू, अस्ति इत्येतैः सह योगे च्विः प्रत्ययो भवति।<br>यद्यपि सम्पद्यस्य कर्ता प्रकृतिः, विकृतिश्चेत्युभयं भवति तथापि व्याख्यानादत्र विकारवाचकादेव प्रत्ययो भवति।<br>अशुक्लः शुक्लः सम्पद्यते, तं करोति इति शुक्लीकरोति।<br>अशुक्लः शुक्लः सम्पद्यमानो भवतीति शुक्लीभवति।<br>अशुक्लः शुक्लः सम्पद्यमानः स्यादिति शुक्लीस्यात्।<br>'अस्य च्वौ'(७.४.३२) इत्यनेन ईत्वम्। 'च्वि' इत्यस्यय सर्वापहारलोपः।<br>अभूततद्भाव इति किम्? शुक्लं करोति। नात्र प्रकृतिर्विवक्षिता।<br>कृभ्वस्तियोगे इति किम्? अशुक्लः शुक्लो जायते। | कृभ्वस्तियोगे ५७<br>संपद्यकर्तरि ५२<br>च्विः ५१<br>अभूततद्भावे ५३ |
| कृभ्वस्तियोगे ५०<br>संपद्यकर्तरि ५०<br>च्विः ५०<br>अभूततद्भावे ५०<br>ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | ५१. अरुर्मनश्चक्षुश्चेतो-रहो-रजसां लोपश्च<br>अरुष्, मनस्, चक्षुष्, चेतस्, रहस् रजस्- इत्येतेभ्यः च्विप्रत्ययस्य विषये च्विः प्रत्ययो भवत्येव पूर्वसूत्रेण, अनेनैषां शब्दानां लोपोऽपि भवति।<br>'अलोऽन्त्यस्य' इति सूत्रेण एषां शब्दानामन्त्यस्य लोपो भवति।<br>अरुष् - अनरुः अरुः सम्पद्यते, तत्करोति इति अरूकरोति। अरूभवति। अरूस्यात्।<br>अन्त्यलोपे कृते 'च्वौ च' इतिसूत्रेण दीर्घः।<br>मनस् - अनुन्मनाः उन्मनाः सम्पद्यते, तं करोतीति उन्मनीकरोति। उन्मनीभवति। उन्मनीस्यात्। च्वौ अन्त्यलोपः, 'अस्य च्वौ' इति सूत्रेण ईत्वं च।<br>चक्षुष्- अनुच्चचक्षुः उच्चचक्षुः सम्पद्यते, तं करोति उच्चचक्षूकरोति। उच्चचक्षू भवति। उच्चचक्षू स्यात्।<br>चेतस् - अविचेताः विचेताः सम्पद्यते, तं करोति विचेतीकरोति। विचेतीभवति। विचेतीस्यात्।<br>रहस्- अविरहः विरहः सम्पद्यते, तत्करोति विरहीकरोति। विरही भवति। विरहीस्यात्।<br>रजस् -अविरजाः विरजाः सम्पद्यते, तं करोति विरजीकरोति। विरजीभवति। विरजीस्यात्। | |

| | | |
|---|---|---|
| कृभ्वस्तियोगे ५० <br> संपद्यकर्तरि ५२ <br> अभूततद्भावे ५० <br> ङ्याप्प्रातिपदिकात् ४.१.१ <br> प्रत्ययः ३.१.१ <br> तद्धिताः ४.१.७६ | **५२. विभाषा साति कात्स्न्र्ये** <br> च्विविषये विकाररूपेण सम्पद्यमानवाचकात् प्रातिपदिकाद् विभाषा सातिः प्रत्ययो भवति, कात्स्न्र्ये गम्यमाने। <br> यत्र प्रकृतिः सर्वात्मना विकारं प्राप्नोति तत्रायं प्रत्ययः। <br> अनग्निः अग्निः सम्पद्यते, तं करोतीति अग्निसात्करोति शस्त्रम्। अग्निसाद् भवति। अग्निसात् स्यात्। <br> एवमेव – भस्मसात्करोति काष्ठम्। उदकसाद् भवति लवणम्। <br> पक्षे– अग्नीकरोति इत्यादौ च्विः प्रत्ययोऽपि भवति। <br> कात्स्न्र्ये इति किम्? एकदेशेन पटः शुक्लीभवति। | विभाषा ५३ <br> सातिः ५५ |
| कृभ्वस्तियोगे ५० <br> संपद्यकर्तरि ५२ <br> सातिः ५२ <br> अभूततद्भावे ५० <br> ङ्याप्प्रातिपदिकात् ४.१.१ <br> प्रत्ययः ३.१.१ <br> तद्धिताः ४.१.७६ | **५३. अभिविधौ संपदा च** <br> अभिविधौ गम्यमाने च्विविषये सातिः प्रत्ययो भवति, सम्पदायोगे, चकारात् कृभ्वस्तिभिश्च योगे। <br> अभिविधिः = अभिव्याप्तिः। <br> विभाषाग्रहणानुवृत्त्याऽत्र च्वेरपि समुच्चयः, स च्विप्रत्ययः कृभ्वस्तियोगे एव भवति, न तु सम्पदायोगेऽपि। <br> अग्निसात् सम्पद्यते। अग्निसात् करोति। अग्निसाद् भवति। अग्निसात् स्यात्। <br> पक्षे अग्नीकरोति इत्याद्यपि। <br> अभिविधौ, कात्स्न्र्ये च को विशेषः ? <br> यत्रैकदेशेनापि प्रकृतिर्विकारमापद्यते सोऽभिविधिः। <br> यथा– अस्यां सेनायामुत्पातेन सर्वं शस्त्रमग्निसात् सम्पद्यते, वर्षासु सर्वं लवणमुदकसात् सम्पद्यते, इति। <br> कात्स्न्र्यं तु सर्वात्मना द्रव्यस्य विकाररूपापत्तौ भवति। | संपदा ५५ |
| कृभ्वस्तियोगे ५० <br> संपदा ५३ <br> संपद्यकर्तरि ५२ <br> ङ्याप्प्रातिपदिकात् ४.१.१ <br> प्रत्ययः ३.१.१ <br> तद्धिताः ४.१.७६ | **५४. तदधीनवचने** <br> स्वामिविशेषवाचिभ्यः प्रातिपदिकेभ्यः तदधीनमित्यर्थे सातिः प्रत्ययो भवति, कृभ्वस्तिभिर्योगे, सम्पदा च योगे। <br> 'अभूततद्भावे' इति निवृत्तम्, अर्थान्तरोपादानात्। <br> तदधीनम् = तदायत्तम्, तत्स्वामिकमित्यर्थः। <br> राजाधीनं करोति राजसात् करोति। राजसाद् भवति। राजसात् स्यात्। राजसात् सम्पद्यते। | तदधीनवचने ५५ |

| | | |
|---|---|---|
| तदधीनवचने ५४<br>सातिः ५२<br>कृभ्वस्तियोगे ५०<br>संपदा ५३<br>ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | **५५. देये त्रा च**<br>देयं तदधीनमित्यर्थे स्वामिविशेषवाचिभ्यः प्रातिपदिकेभ्यः त्रा प्रत्ययो भवति,चकारात् सातिप्रत्ययश्च कृभ्वस्तिभिर्योगे, सम्पदा च योगे।<br>ब्राह्मणेभ्यो देयमिति यद् विज्ञातम् तद्यदा तेषां समर्पणेन तदधीनं क्रियते, तदा त्रा प्रत्ययो भवति।<br>ब्राह्मणाधीनं देयं करोति ब्राह्मणत्रा भवति। ब्राह्मणसात् करोति।<br>ब्राह्मणत्रा स्यात्। ब्राह्मणत्रा सम्पद्यते।<br>देये इति किम्? राजसाद् भवति राष्ट्रम्। | त्रा ५६ |
| कृभ्वस्तियोगे ५०<br>त्रा ५५<br>ङ्याप्प्रातिपदिकात् ४.१.१<br>प्रत्ययः ३.१.१<br>तद्धिताः ४.१.७६ | **५६. देव-मनुष्य-पुरुष-पुरु-मर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्**<br>देव, मनुष्य, पुरुष, पुरु, मर्त्य- इत्येतेभ्यो द्वितीयासप्तम्यन्तेभ्यः प्रातिपदिकेभ्यः बहुलं त्रा इतिप्रत्ययो भवति, स्वार्थे।<br>देवान्, देवत्रा वा गच्छति। देवेषु, देवत्रा वा वसति।<br>मनुष्यान्, मनुष्यत्रा वा गच्छति। मनुष्येषु, मनुष्यत्रा वा वसति।<br>पुरुषान्, पुरुषत्रा वा गच्छति। पुरुषेषु पुरुषत्रा वा वसति।<br>पुरून्, पुरुत्रा वा गच्छति। पुरुषु, पुरुत्रा वा वसति।<br>मर्त्यान्, मर्त्यत्रा वा गच्छति। मर्त्येषु, मर्त्यत्रा वा वसति।<br>बहुलवचनादन्यत्रापि भवति - बहुत्रा जीवतो मन इति। | |

| | | |
|---|---|---|
| कृभ्वस्तियोगे ५० | ५७. अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्<br>यस्य अव्यक्तानुकरणस्य अर्द्धभागो द्व्यच्कतो न्यूनो न भवेत्, तस्मादव्यक्तानुकरणाद् डाच् प्रत्ययो भवति कृभ्वस्तियोगे, न तु इतिशब्दे परे।<br>द्व्यच् अवरं = न्यूनमिति, द्व्यजवरम्, द्व्यजवरम् अर्द्धं यस्य अव्यक्तानुकरणस्य तद् द्व्यजवरार्द्धम्, तस्माद् द्व्यजवरार्द्धाद् अव्यक्तानुकरणात्।<br>(वा०) डाचि बहुलं द्वे भवतः।<br>डाचि विवक्षितेऽनुकरणस्य बहुलं द्वे भवतः इति वार्तिकार्थः।<br>अनेन वार्तिकेन डाचि विवक्षिते अनुकरणस्य द्वित्वं कृत्वा ततः प्रकृतसूत्रेण डाच् प्रत्ययो भवति।<br>पटपटाकरोति। पटपटाभवति। पटपटास्यात्।<br>पटपटाकरोति - पटत् इत्यव्यक्तस्यानुकरणं करोति इत्यर्थे डाचि विवक्षिते पटत् इत्यस्य द्वित्वम्, ततः डाच्प्रत्ययः, पटत् पटत् आ करोति इत्यवस्थायां 'नित्यमाम्रेडिते डाचीति वक्तव्यम्' इत्यनेन डाच्परे आम्रेडिते परे तकारपकारयोः स्थाने परसर्वणे पकारे कृते 'पटपटत् आ करोति' इति दशायां डित्वाट्टिलोपे पटपटाकरोतीति रूपं सिध्यति।<br>एवमेव- पटपटाभवति, पटपटास्यात् इति।<br>अव्यक्तानुकरणादिति किम्? दृषत्करोति। अत्रापि द्विर्वचने कृते द्व्यजवरार्धता भवति, परन्तु नात्राव्यक्तस्यानुकरणमिति डाच् प्रत्ययो न भवति।<br>द्व्यजवरार्धादिति किम्? श्रत्करोति।<br>अवरग्रहणं किम्? खरटखरटा करोति। अत्र डाच्प्रत्ययो भवत्येव। सूत्रे अवरग्रहणाभावे अनुकरणार्द्धभागस्य द्व्यच्कत्वाभावेन इष्टोऽपि डाच्प्रत्ययो न स्यात्।<br>खरटत् इत्यस्यानुकरणमत्र।<br>अनितौ इति किम्? पटिति करोति। | डाच् ६७ |

| | | |
|---|---|---|
| डाच् ५७ | ५८. कृञो द्वितीय-तृतीय-शम्ब-बीजात्कृषौ<br>द्वितीय, तृतीय, शम्ब, बीज-इत्येतेभ्यः प्रातिपदिकेभ्यः कृञ एव योगे डाच् प्रत्ययो भवति, कर्षणेऽर्थे।<br>पुनः कृञ्ग्रहणं भ्वस्त्योर्निवृत्यर्थम्।<br>द्वितीयाकरोति।<br>द्वितीयं कर्षणम् = विलेखनं करोतीत्यर्थः।<br>तृतीयाकरोति।<br>शम्बाकरोति।<br>शम्बाशब्दः प्रतिलोमे वर्तते। अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतीत्यर्थः।<br>बीजाकरोति।<br>सह बीजेन विलेखनं करोतीत्यर्थः।<br>कृषाविति किम्? द्वितीयं करोति पदम्। | कृञः६७<br>कृषौ५९ |
| कृञः ५८<br>कृषौ ५८<br>डाच् ५७ | ५९. संख्यायाश्च गुणान्तायाः<br>गुणशब्दान्तसंख्यावाचकात् शब्दाद् डाच् प्रत्ययो भवति, कृञो योगे, कर्षणेऽर्थे।<br>द्विगुणं विलेखनं करोति क्षेत्रस्य इति द्विगुणाकरोति।<br>त्रिगुणाकरोति।<br>कृषाविति किम्? द्विगुणां करोति रज्जुम्। | |
| कृञः ५८<br>डाच् ५७ | ६०. समयाच्च यापनायाम्<br>समय इतिप्रातिपदिकाच्च यापनायां गम्यमानायां डाच् प्रत्ययो भवति कृञो योगे।<br>कर्त्तव्यस्यावसरप्राप्तिः = समयः, तस्यातिक्रमणम् = यापना।<br>समयाकरोति।<br>समयं यापयति, कालक्षेपं करोतीत्यर्थः।<br>यापनायामिति किम्? समयं करोति। समयः=नियमः, सङ्गमो वा, समयनं समय इति। | |

| | | |
|---|---|---|
| कृञः ५८<br>डाच् ५७ | ६१. सपत्त्र-निष्पत्त्रादतिव्यथने<br>सपत्त्र-निष्पत्त्र इतिप्रातिपदिकाभ्यां कृञो योगे डाच् प्रत्ययो भवति, अतिव्यथने गम्यमाने।<br>अतिव्यथनम् = अतिपीडनम्।<br>सपत्त्राकरोति मृगं व्याधः।<br>सपत्त्रं शरं मृगस्य शरीरे प्रवेशयतीत्यर्थः।<br>निष्पत्त्राकरोति।<br>शरीराच्छरमपरपार्श्वे निष्क्रामयतीत्यर्थः।<br>अतिव्यथने किम्? सपत्त्रं, निष्पत्त्रं वा करोति भूतलम्।<br>पर्णमुक्तं, पर्णरहितं वेत्यर्थः। | |
| कृञः ५८<br>डाच् ५७ | ६२. निष्कुलान्निष्कोषणे<br>निष्कोषणे वर्तमानात् निष्कुलशब्दात् कृञो योगे डाच् प्रत्ययो भवति।<br>निष्कोषणम् = अन्तरवयवानां बहिर्निष्कासनम्।<br>निष्कुलाकरोति पशून्।<br>निष्कुष्णातीत्यर्थः।<br>निष्कोषणम् इति किम् ? निष्कुलान् करोति शत्रून्। | |
| कृञः ५८<br>डाच् ५७ | ६३. सुख-प्रियादानुलोम्ये<br>सुख-प्रियशब्दाभ्यामानुलोम्ये गम्यमाने कृञो योगे डाच्प्रत्ययो भवति।<br>आनुलोम्यम् = अनुकूलता, आराध्यचित्तानुवर्तनम्।<br>सुखाकरोति। प्रियाकरोति।<br>अनुकूलाचरणेन आनन्दयतीत्यर्थः।<br>आनुलोम्य इति किम्? सुखं करोति, प्रियं करोत्यौषधपानम्। | |
| कृञः ५८<br>डाच् ५७ | ६४. दुःखात्प्रातिलोम्ये<br>दुःखशब्दात् प्रातिलोम्ये गम्यमाने कृञो योगे डाच् प्रत्ययो भवति।<br>प्रातिलोम्यम् = प्रतिकूलता, स्वाम्यादेश्चित्तपीडनम्।<br>दुःखाकरोति स्वामिनम्। पीडयतीत्यर्थः।<br>प्रातिलोम्ये इति किम्? दुःखं करोति कदन्नम्। | |
| कृञः ५८<br>डाच् ५७ | ६५. शूलात्पाके<br>शूलशब्दात् पाकविषये डाच्प्रत्ययो भवति कृञो योगे।<br>शूलाकरोति मांसम्।<br>शूलेन पचतीत्यर्थः। करोतिरिह पाके वर्तते।<br>पाक इति किम्? शूलं करोति कदन्नम्।<br>अत्र शूलम् इत्यस्य उदरव्यथा इत्यर्थः। | |

| | | |
|---|---|---|
| कृञः ५८<br>डाच् ५७ | ६६. सत्यादशपथे<br>अशपथेऽर्थे वर्तमानात् सत्यशब्दात् कृञो योगे डाच् प्रत्ययो भवति।<br>सत्यशब्दोऽनृतप्रतिपक्षवचनः। क्वचित्तु शपथे च वर्तते – 'सत्येन शापयेद् विप्रम्' इति, तस्य प्रतिषेधः 'अशपथे' इत्यनेन क्रियते।<br>सत्याकरोति वणिक् भाण्डम्।<br>भाण्डम् = रत्नादिद्रव्यजातम्।<br>'एतावतैव मूल्येनेदं क्रयणार्हं नातोऽधिकमूल्येन' इत्येवं यथाभूतार्थं वदतीत्यर्थः।<br>अशपथे इति किम्? सत्यं करोति ब्राह्मणः। शपथं करोतीत्यर्थः। | |
| कृञः ५८<br>डाच् ५७ | ६७. मद्रात्परिवापणे<br>मद्रशब्दात्परिवापणे डाच् प्रत्ययो भवति, कृञो योगे।<br>परिवापणम् = मुण्डनम्। मद्रशब्दो मङ्गलार्थः।<br>मद्राकरोति कुमारम्। माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः।<br>(वा०) भद्राच्चेति वक्तव्यम्।<br>भद्राकरोति नापितः कुमारम्।<br>परिवापण इति किम्? मद्रं करोति। भद्रं करोति। | |
| | ६८. समासान्ताः<br>अधिकारोऽयम्, आपादपरिसमाप्तेः।<br>तेनातः परं ये प्रत्ययाः विहितास्ते समासस्यान्तावयवा भवन्ति। | समासान्ताः १६० |
| समासान्ताः ६८ | ६९. न पूजनात्<br>अयमप्यधिकारः।<br>यस्मात्परः समासान्तो भवति स चेत् पूजनात्परो भवेत्तर्हि तत्र समासान्तो न भवति इति सूत्रार्थः।<br>सु = शोभनः चासौ राजा सुराजा। अतिशयितश्चासौ राजा अतिराजा। अत्र 'राजाहःसखिभ्यष्टच्' इति समासान्तष्टच् प्रत्ययो न भवति।<br>(वा०) पूजायां स्वतिंग्रहणं कर्त्तव्यम्।<br>तेन परमराजः इत्यादौ समासान्तष्टज् भवत्येव।<br>(वा०) प्राग्बहुव्रीहिग्रहणं कर्त्तव्यम्।<br>'बहुव्रीहौ सक्थ्यक्ष्णोः (५.४.११३) इत्यतः प्रागयमधिकारः इति वक्तव्यम् इत्यर्थः। तेन सुसक्थः, अतिसक्थः इत्यादौ 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् (५.४.११३) इत्यनेन समासान्तः षच् भवत्येव। | न ७२ |

| | | |
|---|---|---|
| समासान्ताः ६८<br>न ६९ | ७०. किमः क्षेपे<br>अयमप्यधिकारः।<br>क्षेपे यः किं शब्दस्ततः परस्य समासान्तो न भवति।<br>किंराजा यो न रक्षति।<br>किंसखा योऽभिद्रुह्यति। किंगौर्यो न वहति।<br>सर्वत्र 'किं क्षेपे'(२.१.६४) इति समासः।<br>क्षेपे इति किम्? कस्य राजा किंराजः। किंसखः।<br>किंगवः। | |
| समासान्ताः ६८<br>न ६९ | ७१. नञस्तत्पुरुषात्<br>येभ्यः समासान्ता विहितास्ते चेन्नञः परे भवेयुः,<br>तदन्ताश्च चेत् तत्पुरुषसमासास्तर्हि तेभ्यः समासान्ता न भवन्ति। अराजा। असखा। अगौः।<br>तत्पुरुषादिति किम्? अनृचो माणवकः। अधुरं शकटम्।<br>बहुव्रीहिसमासोऽत्र। | नञः७२<br>तत्पुरुषात् ७२ |
| समासान्ताः ६८<br>न ६९<br>नञः ७१<br>तत्पुरुषात्७१ | ७२. पथो विभाषा<br>नञः परो यः पथिन् इतिशब्दस्तदन्तश्चेत्तत्पुरुषस्तर्हि,<br>तस्मात् समासान्तो विभाषा न भवति।<br>पूर्वेण नित्यः प्रतिषेधः प्राप्तो विकल्प्यते।<br>अपथम्, अपन्थाः।<br>अपथम् इत्यत्र 'अपथं नपुंसकम्' (२.४.३०) इति<br>सूत्रेण नपुंसकत्वम्। | |
| समासान्ताः ६८ | ७३. बहुव्रीहौ संख्येये डजबहुगणात्<br>संख्येये यो बहुव्रीहिः, तत्र बहु-गणशब्देतरशब्दात्<br>समासान्तो डच् प्रत्ययो भवति।<br>'संख्ययाव्ययासन्ना०' इति सूत्रेण यो बहुव्रीहिस्तस्येदं ग्रहणम्।<br>उपदशाः। उपविंशाः। आसन्नदशाः। अदूरदशाः।<br>अधिकदशाः। द्वित्राः।<br>संख्येये इति किम्? चित्रगुः।<br>अबहुगणादिति किम्? उपबहवः। उपगणाः। स्वरे विशेषः।<br>(वा०) डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं कर्त्तव्यं निंस्त्रिंशाद्यर्थम्।<br>निर्गतानि त्रिंशतः निस्त्रिंशानि वर्षाणि देवदत्तस्य।<br>निश्चत्वारिंशानि यज्ञदत्तस्य। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो<br>निस्त्रिंशः खड्गः। त्रिंशतोऽङ्गुलिभ्योऽपि दीर्घ इत्यर्थः। | |

| समासान्ताः ६८ | ७४. ऋक्पूरब्धूःपथामानक्षे<br>ऋच्, पुर्, अप्, धुर्, पथिन्-इत्येवमन्तानां समासानाम् अः प्रत्ययो भवति समासान्तो न तु अक्षे।<br>अनक्षे इत्यत्र अ अनक्षे इतिच्छेदः। अनक्षे इति सामर्थ्याद् धुर एव विशेषणं न तु ऋगादीनामपि।<br>ऋच् - अनृचः। बह्वृचः। अर्धचः।<br>पुर् - ललाटपुरम्। नान्दीपुरम्।<br>अप् - द्वीपम्।<br>द्विर्गता आपोऽस्मिन् इति विग्रहे बहुव्रीहिः, प्रकृतसूत्रेण अ प्रत्ययः, द्वि अप इत्यवस्थायाम् 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्यपस्य अकारस्य ईत्वम्, सवर्णदीर्घः।<br>धुर् - राजधुरा।<br>पथिन् -स्थलपथः, जलपथः।<br>अनक्षे इति किम्? अक्षस्य धूः अक्षधूः। दृढधूरक्षः। | |
|---|---|---|
| समासान्ताः ६८ | ७५. अच् प्रत्यन्वपूर्वात् साम-लोम्नः<br>प्रति, अनु, अव-इत्येवंपूर्वात् सामन् इतिशब्दाद्, लोमन् इतिशब्दाच्च अच् प्रत्ययो भवति, समासान्तः।<br>प्रतिसामम्, अनुसामम्। अवसामम्।<br>प्रतिलोमम्, अनुलोमम्, अवलोमम्।<br>'नस्तद्धिते' इति सूत्रेण टिलोपः।<br>कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः।<br>गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि।।<br>(काशिकावृत्तेः वचनम् )<br>कृष्ण, उदक्, पाण्डु-इत्येवंपूर्वाद् भूमिशब्दादच् प्रत्ययो भवति, संख्यायाः परः यः गोदावरीशब्दः, नदीशब्दश्च ततः परोऽपि समासान्तोऽच् प्रत्ययो भवतीति श्लोकार्थः।<br>कृष्णभूमः, उदभूमः, पाण्डुभूमः, पञ्चगोदावरम्, पञ्चनदम्।<br>(इष्टिः) भूमेरपि संख्यापूर्वाया अजिष्यते।<br>द्विभूमः प्रासादः।<br>अन्यत्रापि दृश्यते - पद्मनाभः। ऊर्णनाभः। दीर्घरात्रः। समरात्रः। अरात्रः।<br>तदेत्सर्वमिह 'अच्' इति योगविभागं कृत्वा सिद्ध्यति। | अच् ८७ |

| अच् ७५<br>समासान्ताः ६८ | ७६. अक्ष्णोऽदर्शनात्<br>दर्शनादन्यत्र योऽक्षिशब्दस्ततः समासान्तोऽच् प्रत्ययो भवति।<br>दृश्यतेऽनेन इति दर्शनं = चक्षुरिन्द्रियम्।<br>गवामक्षीव अक्षि यस्य स गवाक्षः।<br>पुंस्त्वं लोकात्।<br>अदर्शनादिति किम्? ब्राह्मणाक्षि। | |
|---|---|---|

| अच् ७५<br>समासान्ताः ६८ | ७७. अचतुर-विचतुर-सुचतुर-स्त्रीपुंस-धेन्वनडुहर्क्साम-वाङ्मनसाक्षिभ्रुव-दारगवोर्वष्ठीव- पदष्ठीव-नक्तंदिव-रात्रिन्दिवाहर्दिव-सरजस-निःश्रेयस-पुरुषायुष- द्व्यायुष-त्र्यायुषर्ग्यजुष-जातोक्ष-महोक्ष-वृद्धोक्षोपशुन-गोष्ठश्वाः<br>'अचतुर' इत्यादयः पञ्चविंशतिः अच्प्रत्ययान्ताः शब्दाः निपात्यन्ते।<br>एषु समासव्यवस्थापि निपातनादेव प्रतिपत्तव्या।<br>__आद्यास्त्रयः बहुव्रीहयः__<br>अविद्यमानि चत्वारि यस्य सोऽचतुरः(१)।<br>विगतानि चत्वारि यस्य स विचतुरः(२)।<br>शोभनानि चत्वारि यस्य स सुचतुरः(३)।<br>एष्वच्प्रत्ययो निपात्यते।<br>__ततः परे एकादश द्वन्द्वाः__<br>स्त्री च पुमांश्च स्त्रीपुंसौ (४)।<br>इह न भवति- स्त्रियाः पुमान् स्त्रीपुमानिति।<br>धेनुश्च अनड्वांश्च धेन्वनडुहौ (५)।<br>ऋक्च साम च ऋक्सामे (६)।<br>वाक्च च मनश्च वाङ्मनसे (७)।<br>अक्षि च भ्रुवौ च अक्षिभ्रुवम् (८)।<br>दाराश्च गावश्च दारगवम् (९)।<br>ऊरू=सक्थिनी च अष्ठीवन्तौ=जानुनी च ऊर्वष्ठीवम्(१०)।<br>निपातनाट्टिलोपः।<br>पादौ च अष्ठीवन्तौ च पदष्ठीवम् (११)।<br>निपातनाट्टिलोपः, पादस्य पद्भावः।<br>नक्तं च दिवा च नक्तन्दिवम् (१२)।<br>रात्रौ च दिवा च रात्रिन्दिवम् (१३)।<br>रात्रेर्मान्तत्वं निपात्यते।<br>अहनि च दिवा च अहर्दिवम् (१४)।<br>वीप्सायां द्वन्द्वो निपात्यते। अहन्यहनीत्यर्थः।<br>__एकोऽव्ययीभावः__<br>सरजसम्(१५) अभ्यवहरति।<br>साकल्येऽव्ययीभावः। बहुव्रीहौ तु सरजः पङ्कजम्।<br>__ततस्तत्पुरुषः__<br>निश्चितं श्रेयो निःश्रेयसम्(१६)।<br>नेह निःश्रेयान् पुरुषः। | |
|---|---|---|

| | | |
|---|---|---|
| | **ततः षष्ठीसमासः।**<br>पुरुषस्यायुः पुरुषायुषम् (१७)।<br>द्वन्द्वे तु पुरुषायुषी।<br>**ततो द्वौ द्विगू**<br>द्वयोरायुषोः समाहारः द्व्यायुषम्(१८)। त्र्यायुषम्(१९)।<br>इह न भवति - द्वयोरायुः द्व्यायुः, त्र्यायुरिति। | |
| | **ततो द्वन्द्वः**<br>ऋक्च यजुश्च ऋग्यजुषम्(२०)।<br>इह न भवति - ऋग्यजुरस्योन्मुग्धस्य ऋग्यजुः उन्मुग्धः।<br>**जातादिपूर्वपदा उक्षशब्दान्तास्त्रयः कर्मधारयाः**<br>जातश्चासौ उक्षा चेति जातोक्षः (२१)। महोक्षः(२२)।<br>वृद्धोक्षः (२३)।<br>उक्षा=बलीवर्दः।<br>**ततोऽव्ययीभावः**<br>शुनः समीपमुपशुनम् (२४)।<br>निपातनाट्टिलोपाभावः, सम्प्रसारणं च।<br>**ततः सप्तमीसमासः**<br>गोष्ठे श्वा गोष्ठश्वः (२५)।<br>(वा०) चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम्।<br>त्रयो वा चतुरो वा त्रिचतुराः।<br>चतुर्णां समीपे ये सन्ति ते उपचतुराः।<br>'संख्ययाव्ययासन्ना०' इतिसूत्रेण बहुव्रीहिः। तत्र 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डाचि प्राप्तेऽज् विधीयतेऽनेन वार्तिकेन। | |
| अच् ७५<br>समासान्ताः ६८ | **७८. ब्रह्म-हस्तिभ्यां वर्चसः**<br>ब्रह्म-हस्तिभ्यां वर्चसः समासान्तोऽच् प्रत्ययो भवति।<br>ब्रह्मवर्चसम्। हस्तिवर्चसम्।<br>(वा०) पल्य-राजभ्यां चेति वक्तव्यम्।<br>पलं मांसम्, तदर्हति पल्यः, मांसभोजीत्यर्थः।<br>पल्यस्य वर्चः पल्यवर्चसम्। राजवर्चसम्। | |
| अच् ७५<br>समासान्ताः ६८ | **७९. अव-समन्धेभ्यस्तमसः**<br>अव, सम्, अन्ध-इत्येतेभ्यः परस्मात् तमसः समासान्तोऽच् प्रत्ययो भवति।<br>अवहीनं तमः अवतमसम्। प्रादिसमासः।<br>सन्ततं तम इति सन्तमसम्। प्रादिसमासः।<br>अन्धं = अन्धकर्तृ, प्रगाढमित्यर्थः, तमः इति अन्धतमसम्। | |

| | | |
|---|---|---|
| अच् ७५<br>समासान्ताः ६८ | ८०. श्वसो वसीयः-श्रेयसः<br>श्वसः परस्माद् वसीयस् इतिशब्दात्, श्रेयस् इतिशब्दाच्च समासान्तोऽच् प्रत्ययो भवति।<br>श्वोवसीयम्। श्वःश्रेयसम्।<br>मयूरव्यंसकादित्वात्समासः।<br>वसुशब्दः प्रशस्तवाची, ततः ईयसुनि वसीयः। श्वः शब्दोऽत्र उत्तरपदार्थस्य आशीर्विषयां प्रशंसामाचष्टे, शब्दशक्तिस्वभावान्नतु सः कालवाचकः। अतः श्वोवसीयम् इत्यस्य शोभनं श्रेयस्ते भूयात् इत्यर्थः। श्वःश्रेयसम् इत्यस्यापि शोभनं श्रेयस्ते भूयादित्यर्थ एव। | |
| अच् ७५<br>समासान्ताः ६८ | ८१. अन्ववतप्ताद्रहसः<br>अनु, अव, तप्त- इत्येवंपूर्वाद् रहसः समासान्तोऽच् प्रत्ययो भवति।<br>अनुगतं रहः अनुरहसम्।<br>अवगतं रहः अवरहसम्।<br>तप्तं रहः तप्तरहसम्।<br>तप्तरहसमित्यस्य अत्यन्तं रहस्यमित्यर्थः। | |
| अच् ७५<br>समासान्ताः ६८ | ८२. प्रतेरुरसः सप्तमीस्थात्<br>प्रतिशब्दात् परो यः उरस् इतिशब्दः सप्तमीस्थः तस्मात्समासान्तोऽच् प्रत्ययो भवति।<br>उरसि इति प्रत्युरसम्।<br>विभक्त्यर्थेऽव्ययीभावः। प्रतिरत्र सप्तम्यर्थद्योतकः। | |
| अच् ७५<br>समासान्ताः ६८ | ८३. अनुगवमायामे<br>'अनुगवम्' इत्यच्प्रत्ययान्तं निपात्यते, आयामेऽभिधेये।<br>अनुगवं यानम्।<br>'यस्य चायामः' इति सूत्रेण समासः।<br>आयाम इति किम्? गवां पश्चाद् अनुगु। | |

| | | |
|---|---|---|
| अच् ७५<br>समासान्ताः ६८ | **८४. द्विस्तावा त्रिस्तावा वेदिः**<br>'द्विस्तावा' 'त्रिस्तावा' इति निपात्यते, वेदिश्चेदभिधेया भवति।<br>द्विस्तावा वेदिः। प्रकृतेरपेक्षया द्विगुणपरिमिता वेदिरित्यर्थः।<br>त्रिस्तावा वेदिः। प्रकृतेरपेक्षया त्रिगुणपरिमिता वेदिरित्यर्थः।<br>द्विः, त्रिः इति सुजन्ताभ्यां सह तावतीशब्दस्य समासः, अच्प्रत्ययः, टिलोपश्च निपात्यते। टिलोपस्तु यस्येति लोपानन्तरम्।<br>यावती वेदिः प्रकृतौ अग्निष्टोमे भवति तदपेक्षया द्विगुणा, त्रिगुणा वा तद्विकृतौ अश्वमेधादौ भवति इत्यर्थे द्विस्तावा, त्रिस्तावा इति शब्दयोर्निपातनं क्रियतेऽनेन सूत्रेण।<br>वेदिरिति किम् ? द्विस्तावती रज्जुः। त्रिस्तावती रज्जुः।<br>द्विस्तावती इति पदद्वयमत्र, त्रिस्तावती इत्यत्रापि पदद्वयं, न त्वेकपदम्, सापेक्षत्वेन सामर्थ्याभावेन समासस्य अभावात्। | |
| अच् ७५<br>समासान्ताः ६८ | **८५. उपसर्गादध्वनः**<br>उपसर्गात्परो योऽध्वन् इतिशब्दस्तस्मात् समासान्तोऽच् प्रत्ययो भवति।<br>प्रगतोऽध्वानं प्राध्वो रथः।<br>उपसर्गादिति किम्? परमाध्वा। उत्तमाध्वा। | |
| अच् ७५<br>समासान्ताः ६८ | **८६. तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः**<br>तत्पुरुषस्यावयवो योऽङ्गुलिशब्दः संख्यादिः, अव्ययादिश्च, तस्मात् समासान्तोऽच् प्रत्ययो भवति।<br>संख्यादेः - द्वे अङ्गुली प्रमाणस्य द्व्यङ्गुलम्।<br>तद्धितार्थेति समासः, प्रमाणे द्वयसजिति मात्रच्, 'प्रमाणे लो द्विगोर्नित्यम्' इति वार्तिकेन मात्रचो लुक्।<br>अव्ययादेः - निर्गतमङ्गुलिभ्यो निरङ्गुलम्।<br>अत्यङ्गुलम्। | तत्पुरुषस्य १०५<br>संख्याव्ययादेः८८ |

| | | |
|---|---|---|
| संख्याव्ययादेः८६<br>तत्पुरुषस्य ८६<br>अच् ७५<br>समासान्ताः ६८ | ८७. अहः-सर्वैकदेश-संख्यात-पुण्याच्च रात्रेः<br>तत्पुरुषस्यावयवो यः रात्रिशब्दः स चेत् अहन्, सर्व, एकदेशवाचकशब्द, संख्यात, पुण्य- इत्येतेभ्यः परो भवेत्, चकारात् संख्यादिः, अव्ययादिश्च परो भवेत, तर्हि तस्माद् रात्रिशब्दात् समासान्तोऽच् प्रत्ययो भवति।<br>'अहर्ग्रहणं द्वन्द्वार्थम्' इति भाष्यम्।<br>अहश्च रात्रिश्च अहोरात्रः सर्वा चासौ रात्रिश्च सर्वरात्रः।<br>एकदेशे – पूर्वं रात्रेः पूर्वरात्रः।<br>संख्याता रात्रिः संख्यातरात्रः।<br>पुण्या रात्रिः पुण्यरात्रः।<br>द्वयोः रात्र्योः समाहारः द्विरात्रम्।<br>अतिक्रान्तो रात्रिमतिरात्रः।<br>सर्वत्र 'रात्राह्नाहाः पुंसि इति पुंस्त्वम्। 'द्विरात्रम्' इत्यत्र तु 'संख्यापूर्वं रात्रं क्लीबम्' इति लिङ्गानुशासनसूत्रेण नपुंसकत्वम्। | |
| संख्याव्ययादेः८६<br>तत्पुरुषस्य ८६<br>सर्वैकदेश-<br>संख्यातेभ्यः ८७ | ८८. अह्नोऽह्न एतेभ्यः<br>सर्वैकदेश-संख्यातेभ्यः,संख्यावाचकात्, अव्ययसंज्ञकाच्च परस्याहन्शब्दस्य अह्न इत्यादेशो भवति, समासान्ते परे।<br>अहःशब्दः पूर्वत्वेन नाश्रीयते असम्भवात्। समासान्ते परे इति प्रकरणाल्लब्धम्।<br>सर्वं च तदहश्च सर्वाह्णः। अह्नः पूर्वम् पूर्वाह्णः।<br>'अह्नोऽदन्तात्' इति णत्वम्।<br>संख्यातं च तदहः इति संख्याताह्नः।<br>द्वयोरह्नोर्भवः द्व्यह्नः।<br>'कालाट्ठञ्' द्विगोर्लुगनपत्ये' इति ठञो लुक्।<br>स्त्रियामदन्तत्वाट्टाप्-द्व्यह्ना। अहः अतिक्रान्तः इति अत्यह्नः।<br>पुण्यशब्दात्परस्याहन्शब्दस्य अह्नादेशो न भवति 'उत्तमैकाभ्यां च'(५.४.९०) इत्यनेन प्रतिबन्धात्। | अह्नः अह्नः९० |
| तत्पुरुषस्य ८६<br>अह्नः८८<br>अह्नः८८ | ८९. न संख्यादेः समाहारे<br>समाहारे संख्यादेरहन्शब्दस्य अह्नादेशो न भवति।<br>द्वयोरह्नोः समाहारः द्व्यहः। त्र्यहः।<br>'रात्राह्नाहाः पुंसि'(२.४.२९) इति सूत्रेण पुंस्त्वम्। | |

| | | |
|---|---|---|
| अह्नः८८<br>अह्नः८८ | ६०. उत्तमैकाभ्यां च<br>पुण्यशब्दात्, एकशब्दाच्च परस्याहन् इतिशब्दस्य अह्न इत्यादेशो न भवति।<br>अत्र उत्तमशब्दोऽन्त्यवाचकः। अतः उत्तमशब्देन 'अहः सर्वैकदेश०' (५.४.८७) इति सूत्रे अन्ते पठितः पुण्यशब्दो गृह्यते। अतः सूत्रस्योक्तार्थः सम्पद्यते।<br>पुण्यं च तदहः इति पुण्याहम्।<br>'अपथं च नपुंसकम् इति सूत्रस्थभाष्यपठितेन 'पुण्यसुदिनाभ्यामह्नः' इति वार्तिकेन नपुंसकत्वम्।<br>तेनात्र 'रात्राह्नाहाः पुंसि' इत्यनेन पुंस्त्वं न भवति।<br>एकं च तदहः इति एकाहः।<br>उत्तमग्रहणमुपान्त्यस्य अर्थात् संख्यातशब्दस्यापि संग्रहार्थमिति केषाञ्चिन्मतम्। तन्मते संख्याताहः इत्यप्यस्योदाहरणम्। | |
| तत्पुरुषस्य ८६<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ६१. राजाहः-सखिभ्यष्टच्<br>तत्पुरुषस्यावयवाः ये राजन्, अहन्, सखि- इत्येते शब्दाः तेभ्यः समासान्तष्टच् प्रत्ययो भवति।<br>महाराजः। परमाहः। राजसखः। | टच् ११२ |
| तत्पुरुषस्य ८६<br>टच् ६१<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ६२. गोरतद्धितलुकि<br>तत्पुरुषस्यावयवो यो गोशब्दस्तस्मात् समासान्तष्टच् प्रत्ययो भवति, न तु तद्धितलुकि।<br>परमश्चासौ गौश्च परमगवः।<br>पञ्चानां गवां समाहारः पञ्चगवम्।<br>अतद्धितलुकि इति किम् ? पञ्चभिः गोभिः क्रीतः पञ्चगुः। दशगुः।<br>'तेन क्रीतम्' इत्यागतस्याऽऽर्हीयस्य 'अध्यर्द्धपूर्वद्विगोः' इति लुक्। | अतद्धितलुकि६६, १०२ |
| तत्पुरुषस्य ८६<br>टच्६१<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ६३. अग्राख्यायामुरसः<br>तत्पुरुषस्यावयवो यः उरस् इतिशब्दः स चेद् अग्रवाचकः तस्मात् समासान्तः टच् प्रत्ययो भवति।<br>अग्रम् = प्रधानमुच्यते। यथा शरीरावयवानामुच्यते उरः प्रधानम्, एवमन्योऽपि प्रधानभूतः यत्र लक्षणया उरः शब्देनोच्यते तत्रानेन प्रत्ययः।<br>अश्वानामुरः इति अश्वोरसम्।<br>प्रधानोऽश्व इत्यर्थः।<br>अग्राख्यायामिति किम्? देवदत्तस्योरः देवदत्तोरः। | |

| | | |
|---|---|---|
| तत्पुरुषस्य ८६<br>टच् ९१<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ९४. अनोश्मायःसरसां जातिसंज्ञयोः<br>तत्पुरुषस्य ये अनस्, अश्मन्, अयस्, सरस्- इत्येते शब्दास्तेभ्यः समासान्तष्टच् प्रत्ययो भवति, जातौ, संज्ञायां च विषये।<br>उपगतमन इति उपानसम्, इति जातिः।<br>प्रादिसमासः।<br>महदन इति महानसमिति संज्ञा।<br>अमृतश्चासौ अश्मा चेति अमृताश्मः इति जातिः।<br>पिण्डाश्म इति संज्ञा।<br>कालायसम् इति जातिः।<br>लोहितायसम् इति संज्ञा।<br>मण्डूकसरसमिति जातिः।<br>जलसरसमिति संज्ञा।<br>जातिसंज्ञयोरिति किम्? सदनः। सदश्मा। सत्सरः। | |
| तत्पुरुषस्य ८६<br>टच् ९१<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ९५. ग्रामकौटाभ्यां च तक्ष्णः<br>ग्राम-कौटशब्दाभ्यां परो यस्तत्पुरुषस्य तक्षन्शब्दस्तस्मात् समासान्तः टच् प्रत्ययो भवति।<br>ग्रामस्य तक्षा ग्रामतक्षः।<br>साधारणस्तक्षा इत्यर्थः।<br>कुट्यां भवः कौटः, तस्य तक्षा कौटतक्षः।<br>स्वतन्त्रः कर्मजीवी, न कस्यचित्प्रतिबद्ध इत्यर्थः।<br>ग्रामकौटाभ्यामिति किम् ? राज्ञस्तक्षा राजतक्षा। | |
| तत्पुरुषस्य ८६<br>टच् ९१<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ९६. अतेः शुनः<br>अतिशब्दात्परो यः तत्पुरुषस्य श्वन् इतिशब्दः तस्मात्समासान्तष्टच् प्रत्ययो भवति।<br>अतिक्रान्तः श्वानम् इति अतिश्वो वराहः।<br>जववानित्यर्थः।<br>अतिश्वः सेवकः।<br>सुष्ठु स्वामिभक्त इत्यर्थः।<br>अतिश्वी सेवा।<br>अतिनीचेत्यर्थः। | शुनः ९७ |
| तत्पुरुषस्य ८६<br>टच् ९१<br>शुनः ९६ | ९७. उपमानादप्राणिषु<br>अप्राणिविषयकोपमानवाचिनः शुनः समासान्तष्टच् प्रत्ययो भवति।<br>आकर्षः = पञ्चाङ्गुलो दारुविशेषः, स श्वेवेति आकर्षश्वः।<br>'उपमितं व्याघ्रादिभिः' इति समासः।<br>अप्राणिष्विति किम् ? वानरः श्वेव वानरश्वा। | उपमानात् ९८ |

| | | |
|---|---|---|
| उपमानात् ९७<br>तत्पुरुषस्य ८६<br>टच् ९१<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ९८. उत्तर-मृग-पूर्वाच्च सक्थ्नः<br>उत्तर, मृग, पूर्व - इत्येतेभ्यः परस्मात् सक्थिन् इतिशब्दात्, चकारादुपमानवाचिनश्च सक्थिन् इतिशब्दात् समासान्तष्टच् प्रत्ययो भवति, स चेत् श्वन्शब्दः तत्पुरुषस्य।<br>उत्तरं सक्थनः उत्तरसक्थम्।<br>मृगस्य सक्थि मृगसक्थम्।<br>पूर्वं सक्थ्नः पूर्वसक्थम्।<br>फलकमिव सक्थि फलकसक्थम्। | |
| टच् ९१<br>अतद्धितलुकि९२<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ९९. नावो द्विगोः<br>द्विगोर्यो नौशब्दस्तस्मात् समासान्तष्टच् प्रत्ययो भवति।<br>द्वयोर्नावोः समाहारः द्विनावम्। द्वे नावौ धनं यस्य द्विनावधनः।<br>अतद्धिलुकीत्येव - पञ्चभिर्नौभिः क्रीतः पञ्चनौः। दशनौः। आर्हीयस्य ठकः 'अध्यर्धपूर्वद्विगोः' इति लुक्। | नावः १००<br>द्विगोः १०२ |
| नावः ९९<br>तत्पुरुषस्य ८६<br>टच् ९१<br>द्विगोः ९९<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १००. अर्धाच्च<br>अर्धशब्दात् परो यः तत्पुरुषस्य नौशब्दः तस्मात् समासान्तष्टच् प्रत्ययो भवति।<br>अर्द्धं नावः अर्द्धनावम्।<br>'अर्द्धं नपुंसकम्' इति समासः। परवल्लिङ्गं न भवति, लोकाश्रयत्वाल्लिङ्गस्य। | अर्धात् १०१ |
| तत्पुरुषस्य ८६<br>टच् ९१<br>अर्धात् १००<br>द्विगोः ९९<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १०१. खार्याः प्राचाम्<br>द्विगोः, अर्द्धशब्दच्च परो यः खारीशब्दस्तस्मात् समासान्तष्टच् प्रत्ययो भवति, प्राचामाचार्याणां मतेन।<br>द्वयोः खार्योः समाहार इति द्विखारम्, द्विखारि वा।<br>खार्याः अर्द्धम् इति अर्द्धखारम्, अर्द्धखारी वा। | |
| तत्पुरुषस्य ८६<br>टच् ९१<br>द्विगोः ९९<br>अतद्धितलुकि९२<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १०२. द्वि-त्रिभ्यामञ्जलेः<br>द्विगोर्यो द्वि-त्रि-इत्येताभ्यां परोऽञ्जलिशब्दः तस्मात् समासान्तष्टच् प्रत्ययो भवति, प्राचामाचार्याणां मतेन।<br>द्वयोरञ्जल्योः समाहारः द्व्यञ्जलम्। त्र्यञ्जलम्।<br>अतद्धितलुकीत्येव - द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः। | |

| | | |
|---|---|---|
| तत्पुरुषस्य ८६<br>टच् ९१<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १०३. अनसन्तान्नपुंसकाच्छन्दसि<br>तत्पुरुषस्य अन्नन्ताद्, असन्ताच्च नपुंसकात्<br>समासान्तष्टच् प्रत्ययो भवति, छन्दसि विषये।<br>हस्तिचर्मे जुहोति।<br>देवच्छन्दसानि।<br>(वा०) अनसन्तान्नपुंसकाच्छन्दसि वा वचनम्।<br>ब्रह्मसाम, ब्रह्मसामम्।<br>देवच्छन्दः, देवच्छन्दसम्। | |
| तत्पुरुषस्य ८६<br>टच् ९१<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १०४. ब्रह्मणो जानपदाख्यायाम्<br>तत्पुरुषस्य यो ब्रह्मन् इतिशब्दस्तस्मात् समासान्तष्टच्<br>प्रत्ययो भवति, समासान्तेन चेद् जानपदत्वमाख्यायते।<br>सुराष्ट्रेषु ब्रह्मा सुराष्ट्रब्रह्मः।<br>'सप्तमी शौण्डैः' इति योगविभागात्समासः। ब्रह्मशब्दोऽत्र<br>ब्राह्मणपर्यायः पुल्लिँङ्गः। | ब्रह्मणः १०५ |
| तत्पुरुषस्य ८६<br>टच् ९१<br>ब्रह्मणः १०४<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १०५. कु-महद्भ्यामन्यतरस्याम्<br>तत्पुरुषस्य यः कुमहद्भ्यां परः ब्रह्मन्शब्दः<br>तस्मात्समासान्तष्टच् प्रत्ययो भवति अन्यतरस्याम्।<br>कुत्सितो ब्रह्मा कुब्रह्मः, कुब्रह्मा वा।<br>महांश्चासौ ब्रह्मा च महाब्रह्मः, महाब्रह्मा वा।<br>अत्रापि ब्राह्मणपर्यायो ब्रह्मशब्दः पुल्लिँङ्गः। | |
| टच् ९१<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १०६. द्वन्द्वाच्चु-द-ष-हान्तात्समाहारे<br>समाहारे यो द्वन्द्वसमासः, तस्य चवर्गान्ताद्, दकारान्तात्,<br>षकारान्ताद्, हकारान्ताच्च शब्दाद् समासान्तष्टच् प्रत्ययो<br>भवति।<br>वाक् च त्वक् चानयोः समाहारः वाक्त्वचम्। श्रीस्रजम्।<br>समिद्दृषदम्। सम्पद्विपदम्। वाग्विप्रुषम्।<br>छत्रोपानहम्। धेनुगोदुहम्।<br>समाहारे किम्? प्रावृट्शरदौ। | |

| | | |
|---|---|---|
| टच् ९१<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १०७. अव्ययीभावे शरत्प्रभृतिभ्यः<br>अव्ययीभावे 'शरद्' इत्येवमादिभ्यः समासान्तष्टच् प्रत्ययो भवति।<br>शरदः समीपमुपशरदम्।<br>(गणसूत्रम्) जराया जरस् च।<br>जराया समीपमुपजरसम्।<br>(गणसूत्रम्) प्रतिपरसमनुभ्योऽक्ष्णः।<br>अक्षिणी प्रतीति प्रत्यक्षम्।<br>'अक्ष्णोरभिमुखमित्यर्थः। 'लक्षणेत्थम्भूत०' इति कर्मप्रवचनीत्वाद् द्वितीया, 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावसमासः।<br>अक्ष्णः परं परोक्षम्।<br>समासान्तविधानसामर्थ्यादव्ययीभावसमासो निपातनात्, 'परोक्षे लिट्' इति निपातनाच्च परशब्दस्यौकारादेशः। 'परोक्षा क्रिया' इत्यादि त्वर्शआद्यचि।<br>अक्ष्णोः योग्यं समक्षम्।<br>यथार्थे योग्यतायामव्ययीभावः।<br>अक्ष्णोः पश्चादन्वक्षम्।<br>पश्चादर्थेऽव्ययीभावः। | अव्ययीभावे ११२ |
| अव्ययीभावे १०७<br>टच् ९१<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १०८. अनश्च<br>अव्ययीभावे अन्नन्तात् शब्दात् समासान्तष्टच् प्रत्ययो भवति।<br>राज्ञः समीपम् उपराजम्। आत्मनि इति अध्यात्मम्।<br>आत्मानं प्रति प्रत्यात्मम्।<br>प्रत्यात्मम् इत्यत्र आभिमुख्येऽव्ययीभावः। | अनः १०९ |
| अनः १०८<br>अव्ययीभावे १०७<br>टच् ९१<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १०९. नपुंसकादन्यतरस्याम्<br>अव्ययीभावे अन्नन्तान्नपुंसकात् समासान्तष्टच् प्रत्ययो भवति, अन्यतरस्याम्।<br>चर्मणः समीपमुपचर्मम्, उपचर्म वा। | अन्यतरस्याम्११२ |
| अव्ययीभावे १०७<br>टच् ९१<br>समासान्ताः६८<br>प्रत्ययः३.१.१<br>अन्यतरस्याम्<br>१०९ | ११०. नदी-पौर्णमास्याग्रहायणीभ्यः<br>अव्ययीभावे नदी, पौर्णमासी, आग्रहायणी इत्येतेभ्यः समासान्तष्टच् प्रत्ययो भवति, अन्यतरस्याम्।<br>नद्याः समीपमुपनदम्, उपनदि।<br>उपपौर्णमासम्, उपपौर्णमासि।<br>उपाग्रहायणम्, उपाग्रहायणि। | |

| | | |
|---|---|---|
| अव्ययीभावे १०७<br>टच् ९१<br>समासान्ताः६८<br>प्रत्ययः३.१.१<br>अन्यतरस्याम्<br>१०९ | १११. झयः<br>अव्ययीभावे झयन्तात् शब्दात् समासान्तष्टच् प्रत्ययोऽन्यतरस्यां भवति।<br>समिधः समीपमुपसमिधम्, उपसमित्। उपदृषदम्, उपदृषत्। | |
| अव्ययीभावे १०७<br>टच् ९१<br>अन्यतरस्याम्१०९<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ११२. गिरेश्च सेनकस्य<br>अव्ययीभावे गिरिशब्दात् समासान्तष्टच् प्रत्ययोऽन्यतरस्यां भवति। गिरेः समीपम्, उपगिरम्, उपगिरि।<br>सेनकग्रहणं पूजार्थम्, विकल्पोऽनुवर्तत एव। | |
| समासान्ताः६८<br>प्रत्ययः३.१.१ | ११३. बहुव्रीहौ सक्थ्यक्ष्णोःस्वाङ्गात् षच्<br>बहुव्रीहिसमासे स्वाङ्गवाची यः सक्थिशब्दोऽक्षिशब्दश्च तस्मात् समासान्तः षच् प्रत्ययो भवति।<br>दीर्घे सक्थिनी यस्य स दीर्घसक्थः।<br>जलजे इव अक्षिणी यस्याः सा जलजाक्षी।<br>स्वाङ्गात्किम्? दीर्घसक्थि शकटम्। दीर्घे सक्थिनी=सक्थिसदृशौ ईषादण्डौ यस्येति विग्रहः।<br>स्थूलाक्षा वेणुयष्टिः। अत्र अक्षिशब्दस्य पर्वग्रन्थिरित्यर्थः।<br>'अक्ष्णोऽदर्शनात्' (५.४.७६) इति समासान्तोऽच्।<br>बहुव्रीहिग्रहणमापादपरिसमाप्तेरनुवर्तते। | बहुव्रीहौ १६०<br>षच् ११४ |
| बहुव्रीहौ११३<br>षच्११३<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ११४. अङ्गुलेर्दारुणि<br>बहुव्रीहौ अङ्गुलिशब्दात् समासान्तः षच् प्रत्ययो भवति, दारुण्यर्थे।<br>पञ्च अङ्गुलयो यस्य तत् पञ्चाङ्गुलं दारु।<br>अङ्गुलिसदृशावयवं धान्यादीनां विक्षेपणकाष्ठमुच्यते।<br>दारुणीति किम्? पञ्चाङ्गुलिर्हस्तः। | |
| बहुव्रीहौ ११३<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ११५. द्वित्रिभ्यां ष मूर्ध्नः<br>बहुव्रीहौ द्वित्रिशब्दाभ्यां परो यः मूर्धन् इतिशब्दस्तस्मात् समासान्तः षः प्रत्ययो भवति।<br>द्वौ मूर्धानौ यस्य स द्विमूर्धः।<br>त्रयो मूर्धानो यस्य स त्रिमूर्धः। | |

| | | |
|---|---|---|
| बहुव्रीहौ ११३<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ११६. अप् पूरणी-प्रमाण्योः<br>बहुव्रीहौ पूरणप्रत्ययान्तस्त्रीलिङ्गशब्दात्, प्रमाणीशब्दाच्च समासान्तोऽप् प्रत्ययो भवति।<br>सूत्रे पूरणीशब्देन पूरणप्रत्ययान्ताः स्त्रीलिङ्गाः शब्दाः गृह्यन्ते। प्रमाणीशब्देन स्वरूपस्य ग्रहणम्। पूरणीप्रमाण्योः इत्यत्र षष्ठी पञ्चम्यर्थे। अतः सूत्रस्योक्तार्थः सम्पद्यते।<br>कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः।<br>स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः पुरुषः।<br>भार्याप्रधान इत्यर्थः।<br>(वा०)अपि प्रधानपूरणीग्रहणं कर्त्तव्यम्।<br>अप्प्रत्ययविधाने प्रधानं या पूरणी तस्याः ग्रहणं कर्त्तव्यमित्यर्थः।<br>यत्रान्यपदार्थे पूरण्यपि अनुप्रविशति तत्र पूरण्याः प्राधान्यम्। एवमेव 'स्त्रियाः भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु'(६.३.३४ ) इति पुंवद्भावप्रतिषेधेऽपि प्रधानपूरण्येव गृह्यते। तेनेह न भवति- कल्याणी पञ्चमी यस्मिन् पक्षे स कल्याण पञ्चमीकः पक्ष इति। अत्र तिरोहितावयवभेदस्य पक्षस्य अन्यपदार्थतया रात्रिरप्रधानम्।<br>(वा०) नेतुर्नक्षत्र उपसंख्यानम्।<br>मृगो नेता=नायकः यासां रात्रीणां ताः मृगनेत्रा रात्रयः।<br>मृगः= मृगशीर्षनक्षम्।<br>एवमेव पुष्यनेत्रा रात्रयः इति।<br>नक्षत्र इति किम्? देवदत्तनेतृकाः। | अप् ११७ |
| बहुव्रीहौ११३<br>अप्११६<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ११७. अन्तर्बहिर्भ्यां च लोम्नः<br>बहुव्रीहौ अन्तर्, बहिस्- इत्येताभ्यां परो यो लोमन् इतिशब्दः तस्मात् समासान्तोऽप् प्रत्ययो भवति।<br>अन्तर्गतानि लोमानि यस्य स अन्तर्लोमः प्रावारः।<br>बहिर्लोमः पटः। | |
| बहुव्रीहौ ११३<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ११८. अञ्नासिकायाः संज्ञायां नसं चास्थूलात्<br>बहुव्रीहौ स्थूलभिन्नशब्दात् परो यो नासिकाशब्दः तस्मात् समासान्तोऽच् प्रत्ययो भवति, नासिकाशब्दः 'नस्' इत्यादेशं च प्राप्नोति, संज्ञायां विषये।<br>द्रुः = वृक्षः, द्रुरिव नासिका यस्य स द्रुणसः।<br>'पूर्वपदात्संज्ञायामगः इति णत्वम्।<br>एवमेव खरस्य इव नासिका यस्य स खरणसः। | अच् १२१<br>नासिकायाः ११९ |

| | | |
|---|---|---|
| बहुव्रीहौ ११३<br>नासिकायाः ११८<br>अच् ११८<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | ११९. उपसर्गाच्च<br>बहुव्रीहौ उपसर्गात्परो यः नासिकाशब्दः तदन्तात् समासान्तोऽच्प्रत्ययो भवति, नासिकाशब्दश्च नसादेशं प्राप्नोति।<br>असंज्ञार्थं वचनम्।<br>उन्नता नासिका यस्य स उन्नसः। प्रणसः।<br>'उपसर्गादनोत्परः'(८.४.२८) इति सूत्रेण णत्वम्।<br>एवमेव खरस्य इव नासिका यस्य स खरणसः।<br>अस्थूलात् किम्? स्थूलनासिकः। | |
| अच् ११८<br>बहुव्रीहौ ११३<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १२०. सुप्रात-सुश्व-सुदिव-शारिकुक्ष-चतुरश्रैणीपदाजपद-प्रोष्ठपदाः<br>बहुव्रीहौ सुप्रात, सुश्व, सुदिव, शारिकुक्ष, चतुरश्र, एणीपद, अजपद, प्रोष्ठपद- इत्येते अच्प्रत्ययान्ता निपात्यन्ते।<br>यथाप्रयोगं टिलोपः, पादः पद्भावश्च निपातनादेव सिद्ध्यति।<br>शोभनं प्रातरस्य सुप्रातः।<br>शोभनं श्वोऽस्य सुश्वः।<br>शोभनं दिवाऽस्य सुदिवः।<br>शारिः पक्षिविशेषः। शारेरिव कुक्षिरस्य शारिकुक्षः।<br>चतस्रोऽश्रयः कोणा यस्य स चतुरश्रः।<br>एण्या इव पादावस्य एणीपदः। एणी = मृगी।<br>अजस्येव पादावस्य अजपदः।<br>प्रोष्ठः = गौः, तस्येव पादावस्य प्रोष्ठपदः। | |
| अच् ११८<br>बहुव्रीहौ ११३<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १२१. नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्<br>बहुव्रीहौ नञ्, दुः, सु-इत्येतेभ्यः परौ यौ हलिसक्थिशब्दौ ताभ्यां समासान्तोऽच् प्रत्ययो भवति, अन्यतरस्याम्।<br>महद् हलं हलिरित्युच्यते। अविद्यमाना हलिर्यस्य सः अहलः, अहलिः।<br>दुष्टा हलिर्यस्य स दुर्हलः, दुर्हलिः।<br>सु=शोभना हलिर्यस्य स सुहलः, सुहलिः।<br>एवमेव-अविद्यमानं सक्थ्यस्य असक्थः। दुःसक्थः। सुसक्थः।<br>अत्र 'हलिशक्त्योः' इति केचित् पठन्ति। तेषां मते अशक्तः, अशक्तिः। दुःशक्तः, दुःशक्तिः। सुशक्तः, सुशक्तिः इति प्रयोगा अपि साधवः। | नञ्दुःसुभ्यः १२२ |

| | | |
|---|---|---|
| नञ्दुःसुभ्यः १२२<br>बहुव्रीहौ ११३<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १२२. नित्यमसिच् प्रजामेधयोः<br>बहुव्रीहौ नञ्, दुः, सु- इत्येतेभ्यः परौ यौ प्रजामेधाशब्दौ ताभ्यां समासान्तोऽसिच् प्रत्ययो नित्यं भवति।<br>अविद्यमाना प्रजा अस्य अप्रजाः। दुष्प्रजाः। सुप्रजाः।<br>अविद्यमाना मेधाऽस्य अमेधाः। दुर्मेधाः। सुमेधाः।<br>काशिकावृत्त्यनुसारेण सूत्रे नित्यग्रहणमन्यतोऽपि विधानार्थम्। तेन 'अल्पमेधसः' इत्येवं प्रयोगाः अपि सिद्ध्यन्ति।<br>नागेशस्तु शेखरे 'नित्यग्रहणं स्पष्टार्थमिति भाष्यस्वरसः।'' इत्येवमाह। | असिच् १२३ |
| असिच् १२२<br>बहुव्रीहौ ११३<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १२३. बहुप्रजाश्छन्दसि<br>'बहुप्रजाः' इत्यसिच्प्रत्ययान्तः छन्दसि निपात्यते।<br>बहुप्रजा निर्ऋतिमाविवेश।<br>छन्सीति किम् ? बहुप्रजो ब्राह्मणः। | |
| बहुव्रीहौ ११३<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १२४. धर्मादनिच् केवलात्<br>बहुव्रीहौ धर्मशब्दात् समासान्तोऽनिच् प्रत्ययो भवति, स धर्मशब्दश्चेत् कस्माच्चित्केवलाद् पदात् परो भवेन्न तु पदसमुदायात्परः।<br>कल्याणो धर्मो यस्य स कल्याणधर्मा।<br>केवलादिति किम्? परमः स्वो धर्मो यस्य स परमस्वधर्मः, इति त्रिपदबहुव्रीहौ धर्मशब्दो न केवलात्पदात् परोऽपि तु 'परमस्व' इति पदसमुदायात् परः इति अनिच्प्रत्ययोऽत्र न भवति।<br>अत्रैव यदि परमश्चासौ स्वश्च इति कर्मधारयं कृत्वा परमस्वो धर्मो यस्येति विग्रहे बहुव्रीहिः क्रियते तर्हि धर्मशब्दः परमस्वेति केवलात्पदात् परो भवति, कर्मधारयसमासेन 'परमस्व' इत्यस्य एकपदीभवनात्।<br>अतोऽत्र अनिज्भविष्यत्येव। तेन परमस्वधर्मा इत्यपि रूपं साध्वेव, निवृत्तिधर्मा, अनुच्छितिधर्मा इत्यादिवत्। | अनिच् १२६ |
| अनिच् १२४<br>बहुव्रीहौ ११३<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १२५. जम्भा सु-हरित-तृण-सोमेभ्यः<br>बहुव्रीहौ सु, हरित, तृण, सोम-इत्येतेभ्यो 'जम्भा' इत्यनिच्प्रत्ययान्तो निपात्यते।<br>जम्भो भक्ष्ये, दन्ते च।<br>शोभनो जम्भोऽस्य सुजम्भा।<br>हरितो जम्भोऽस्य हरितजम्भा।<br>तृणं जम्भः = भक्ष्यं यस्य, तृणमिव जम्भः = दन्तो वा यस्य स तृणजम्भा।<br>सोमं = सोमलता, जम्भः = भक्ष्यं यस्य, सोमश्चन्द्रः इव जम्भः = दन्तो यस्य वा स सोमजम्भा। | |

| | | |
|---|---|---|
| अनिच् १२४<br>बहुव्रीहौ ११३<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १२६. दक्षिणेर्मा लुब्धयोगे<br>बहुव्रीहौ दक्षिणेर्मा इति अनिच् प्रत्ययान्तो निपात्यते, लुब्धयोगे।<br>लुब्धः = व्याधः।<br>दक्षिणे ईर्म = व्रणं यस्य स दक्षिणेर्मा मृगः।<br>व्याधेन कृतव्रण इत्यर्थः।<br>"कवयस्तु हिंसामात्रे प्रयुञ्जते - बाली हेमाब्जमाली गुणनिधिरिषुणा निर्मितो दक्षिणेर्मा।" इति पदमञ्जरी। | |
| बहुव्रीहौ ११३<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १२७. इच् कर्मव्यतिहारे<br>कर्मव्यतिहारे यो बहुव्रीहिस्तत्र समासान्तः इच् प्रत्ययो भवति।<br>'तत्र तेनेदमिति सरूपे' इत्ययं बहुव्रीहिर्गृह्यते।<br>केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं केशाकेशि।<br>मुसलैश्च मुसलैश्च प्रहृत्येदं युद्धं प्रवृत्तं मुसलामुसलि।<br>तिष्ठद्गुप्रभृतिषु अयम् इच्प्रत्ययः पठ्यते। तेन इच्प्रत्ययान्तस्य अव्ययीभावसंज्ञा भवति, अव्ययीभावश्च समासोऽव्ययसंज्ञो भवतीति ततः परस्य सुपो लुग्भवति। | इच् १२८ |
| इच् १२७<br>समासान्ताः६८<br>प्रत्ययः३.१.१ | १२८. द्विदण्ड्यादिभ्यश्च<br>तादर्थ्ये चतुर्थ्येषा।<br>द्विदण्ड्यादिशब्दसिद्ध्यर्थं समासान्तः इच् प्रत्ययो भवति।<br>द्वौ दण्डौ यस्मिन् प्रहरणे तद् द्विदण्डि प्रहरणम्।<br>द्विहस्ति। उभाहस्ति। उभयाहस्ति।<br>उभाहस्ति, उभयाहस्ति-इत्यत्र उभौ हस्तौ यस्मिन् प्रहरणे इति विग्रहः। 'उभयोऽन्यत्र' इति नित्यमयचि प्राप्ते निपातनेन विकल्प्यते, कर्मव्यतिहाराभावेऽपि 'अन्येषामपि दृश्यते' इत्यनेन दीर्घश्च। | |
| बहुव्रीहौ ११३<br>समासान्ताः६८ | १२९. प्रसम्भ्यां जानुनोर्ज्ञुः<br>बहुव्रीहौ प्र, सम् इत्येताभ्यां परस्य जानुशब्दस्य ज्ञुः आदेशो भवति, समासान्तः।<br>प्रकृष्टे जानुनी यस्य स प्रज्ञुः।<br>संगते जानुनी यस्य स संज्ञुः।<br>प्रत्ययाधिकारस्थत्वेऽपि 'जानुनोः' इति षष्ठीद्विवचननिर्देशादादेशोऽयं न तु प्रत्ययः। | जानुनोः ज्ञुः१३० |
| जानुनोः ११९<br>ज्ञुः ११९<br>बहुव्रीहौ ११३<br>समासान्ताः६८ | १३०. ऊर्ध्वाद्विभाषा<br>बहुव्रीहौ ऊर्ध्वशब्दात्परस्य जानुशब्दस्य विभाषा 'ज्ञुः' आदेशो भवति।<br>उर्ध्वे जानुनी यस्य स ऊर्ध्वज्ञुः, ऊर्ध्वजानुर्वा। | |

| | | |
|---|---|---|
| बहुव्रीहौ ११३<br>समासान्ताः६८ | १३१. ऊधसोऽनङ्<br>बहुव्रीहौ ऊधस् इतिशब्दस्य अनङ् इत्यादेशो भवति, समासान्तः।<br>कुण्डमिव ऊधोऽस्या इति कुण्डोध्नी। घटोध्नी।<br>ङित्वादन्त्यादेशः, 'ब्रहुव्रीहेरूधसो ङीष्' इति सूत्रेण ङीष्।<br>प्रत्ययाधिकारस्थत्वेऽपि ङित्वादादेशोऽयं न तु प्रत्ययः।<br>एवमग्रेऽपि।<br>(वा०) ऊधसोऽनङि स्त्रीग्रहणं कर्त्तव्यम्।<br>इह मा भूत् – महोधाः पर्जन्यः। घटोधो धैनुकम्।<br>धेनुसमूह इत्यर्थः। | अनङ् १३३ |
| बहुव्रीहौ ११३<br>अनङ्१३१<br>समासान्ताः६८ | १३२. धनुषश्च<br>बहुव्रीहौ धनुष् इतिशब्दस्य अनङ् इत्यादेशो भवति।<br>शार्ङ्गं धनुरस्य शार्ङ्गधन्वा। गाण्डीवधन्वा। पुष्पधन्वा।<br>अधिज्यधन्वा। | धनुषः १३३ |
| बहुव्रीहौ ११३<br>धनुषः१३२<br>अनङ् १३१ | १३३. वा संज्ञायाम्<br>बहुव्रीहौ संज्ञायां विषये धनुष् इतिशब्दस्य अनङ् इत्यादेशो वा भवति।<br>शतधन्वा, शतधनुः। | |
| बहुव्रीहौ ११३<br>समासान्ताः६८ | १३४. जायाया निङ्<br>बहुव्रीहौ जायाशब्दस्य निङ् इत्यादेशो भवति।<br>युवतिर्जाया यस्य युवजानिः। वृद्धजानिः।<br>जायाशब्दे यकारादाकारस्य 'ङिच्च' इति परिभाषासूत्रेण निङादेशे कृते, 'लोपो व्योर्वलि' इति सूत्रेण यकारस्य लोपः। | |

| | | |
|---|---|---|
| बहुव्रीहौ ११३<br>समासान्ताः६८ | १३५. गन्धस्येदुत्पूति-सु-सुरभिभ्यः<br>बहुव्रीहौ उत्, पूति, सु, सुरभि-इत्येतेभ्यः परस्य गन्धशब्दस्य इकारादेशो भवति, समासान्तः।<br>इत् इत्यत्र तकार उच्चारणार्थः।<br>उद्गतो गन्धोऽस्येति उद्गन्धिः।<br>पूतिः गन्धोऽस्य पूतिगन्धिः।<br>पूतिशब्दोऽसुरभौ वर्तते।<br>सु = शोभनो गन्धोऽस्य सुगन्धिः।<br>सुरभिर्गन्धोऽस्य सुरभिगन्धिः।<br>उदाहरणेषु 'अलोऽन्त्यस्य' इत्यनेन अन्त्यस्यादेशः। अत्र 'आदेः परस्य' इति न प्रवर्तते, 'समासान्ताः' इत्यधिकारादिति शेखरे नागेशः।<br>(वा०) गन्धस्येत्त्वे तदेकान्तग्रहणम्।<br>गन्धशब्दस्य इकारादेशे कर्त्तव्ये गन्धशब्देन तादृशगन्धस्य ग्रहणं कर्त्तव्यम्, योऽन्यपदार्थस्य एकान्तः= एकदेशः, अपृथक्त्वेन लक्ष्यमाणोऽवयव इव भवेत्।<br>यथा सुगन्धि पुष्पम्। सुगन्धि जलम्। सुगन्धिर्वायुः। इत्यादौ।<br>यत्र गन्धशब्दः सर्वथा अन्यपदार्थाद् पृथग्भवति तत्र इकारादेशो न भवति। यथा शोभनाः गन्धाः = गन्धवन्ति चन्दनादीनि द्रव्याणि अस्य इति सुगन्धः आपणिकः। अत्र गन्धः आपणिकस्य नास्ति कश्चिदवयवः इतीत्त्वं न भवति।<br>सुगन्धि पुष्पमित्यादौ तु गन्धः पुष्पादीनामवयव इव प्रतीयते इति तत्र इकारादेशो भवत्येव। | गन्धस्य इत्१३७ |
| बहुव्रीहौ ११३<br>गन्धस्य १३५<br>इत् १३५<br>समासान्ताः६८ | १३६. अल्पाख्यायाम्<br>अल्पवाचकस्य गन्धशब्दस्य इकारादेशो भवति समासान्तो बहुव्रीहौ।<br>गन्धशब्दः आमोदेऽर्थे प्रसिद्ध एव तस्य अल्पादयः अन्येऽपि अर्थाः भवन्ति। तद्यथा कौमुद्यामुक्तम् –''गन्धो गन्धक आमोदे, लेशे, सम्बन्धवर्गयोः इति विश्वः।''इति।<br>सूपस्य गन्धः लेशोऽल्पत्वं वा यस्मिन् तत् सूपगन्धि भोजनम्। एवं घृतगन्धि इत्यादि। | |

| | | |
|---|---|---|
| बहुव्रीहौ ११३<br>गन्धस्य १३५<br>इत् १३५<br>समासान्ताः६८ | १३७. उपमानाच्च<br>बहुव्रीहौ उपमानात्परो यो गन्धशब्दस्तस्येकारादेशो भवति समासान्तः।<br>पद्मस्य गन्धः पद्मगन्धः, पद्मगन्ध इव गन्धोऽस्य पद्मगन्धिः। उत्पलगन्धिः। करीषगन्धिः।<br>'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च' इति वार्तिकेन समासः। | उपमानात् १३८ |
| उपमानात् १३७<br>बहुव्रीहौ ११३<br>समासान्ताः६८ | १३८. पादस्य लोपोऽहस्त्यादिभ्यः<br>बहुव्रीहौ हस्तिन् इत्येवमादिवर्जितात् शब्दात् परस्य पादशब्दस्य लोपो भवति समासान्तः।<br>अलोऽन्त्यस्य लोपस्य समासान्तत्वं विज्ञायते।<br>व्याघ्रस्येव पादावस्य व्याघ्रपात्। सिंहपात्। | पादस्य लोपः१४० |
| बहुव्रीहौ ११३<br>पादस्य १३८<br>लोपः१३८<br>समासान्ताः६८ | १३९. कुम्भपदीषु च<br>'कुम्भपदी' इत्येवमादिषु शब्देषु पादस्य लोपो, नित्यं ङीप् च निपात्यते, स्त्रियाम्।<br>बहुवचननिर्देशाद्, गणपाठसामर्थ्याच्च आद्यर्थस्यावगतिर्भवति।<br>कुम्भस्येव पादौ यस्याः सा कुम्भपदी।<br>निपातनात् पादशब्दस्य दकारोत्तराकारस्य लोपः, नित्यं ङीप्, च। 'पादः पत्' इति पदादेशः। | |
| बहुव्रीहौ ११३<br>पादस्य १३८<br>लोपः१३८<br>समासान्ताः६८ | १४०. संख्या-सुपूर्वस्य<br>बहुव्रीहौ संख्यापूर्वस्य, सुपूर्वस्य च पादशब्दस्य लोपो भवति समासान्तः।<br>द्वौ पादौ यस्य स द्विपात्। त्रयः पादाः यस्य स त्रिपात्।<br>सु = शोभनौ पादौ यस्य स सुपात्। | सम्पूर्णसूत्रम्१४१ |
| संख्या १४०<br>सुपूर्वस्य १४०<br>समासान्ताः६८ | १४१. वयसि दन्तस्य दतृ<br>बहुव्रीहौ संख्यासुपूर्वस्य दन्तस्य दतृ इत्यादेशो भवति समासान्तो वयसि गम्यमाने।<br>संख्यापूर्वस्य- द्वौ दन्तौ यस्य स द्विदन्। चत्वारो दन्ता यस्य स चतुर्दन्। षड् दन्ता यस्य स षोडन्।<br>सर्वत्र शिशुत्वं गम्यते।<br>षोडन् इत्यत्र 'षष उत्वं दतृ-दश- धासूत्तरपदादेष्टुत्वं च भवति' इति वार्तिकेन उत्वं,ष्टुत्वं च।<br>सुपूर्वस्य - सुशोभनाः दन्ता यस्य स सुदन्।<br>स्त्रियामुगित्त्वाद् ङीप्- सुदती। युवावस्था गम्यते।<br>वयसि किम्? सुदन्तः करी। सुदन्तो नटः। | दन्तस्य दतृ १४५ |

| | | |
|---|---|---|
| दन्तस्य १४१<br>दतृ १४१<br>बहुव्रीहौ ११३<br>समासान्ताः ६८ | १४२. छन्दसि च<br>छन्दसि च दन्तस्य दतृ इत्यादेशो भवति समासान्तो बहुव्रीहौ।<br>'अवयोऽर्थम्, असंख्यापूर्वपदार्थं च वचनम्' इति न्यासः।<br>पत्रदतमालभेत। उभयदत आलभते। | |
| दन्तस्य १४१<br>दतृ १४१<br>बहुव्रीहौ ११३<br>समासान्ताः ६८ | १४३. स्त्रियां संज्ञायाम्<br>बहुव्रीहौ स्त्रियामन्यपदार्थे संज्ञायां विषये दन्तशब्दस्य दतृ इत्यादेशो भवति।<br>अच्छन्दोऽर्थं वचनम्।<br>अय इव दन्ता अस्या अयोदती।<br>अयः = लोहम्।<br>फाल इव दन्ता अस्य फालदती।<br>फाल इति हले लोहनिर्मितो भवतीति प्रसिद्धम्। | संज्ञायाम् १४४ |
| दन्तस्य १४१<br>दतृ १४१<br>बहुव्रीहौ ११३<br>संज्ञायाम् १४३<br>समासान्ताः ६८ | १४४. विभाषा श्यावारोकाभ्याम्<br>बहुव्रीहौ श्याव, अरोक-इत्येताभ्यां परस्य दन्तशब्दस्य दतृ इत्यादेशो विभाषा भवति समासान्तः।<br>श्यावाः = श्यामाः, कपिशा वा दन्ता यस्य स श्यावदन्, श्यावदन्तो वा।<br>अरोकाः = अनिर्दीप्ताः दन्ता यस्य स अरोकदन्, अरोकदन्तो वा।<br>संज्ञायामित्येव - श्यावदन्तः। अरोकदन्तः। | विभाषा १४५ |
| दन्तस्य १४१<br>दतृ १४१<br>बहुव्रीहौ ११३<br>विभाषा १४४<br>समासान्ताः ६८ | १४५. अग्रान्त-शुद्ध-शुभ्र-वृष-वराहेभ्यश्च<br>बहुव्रीहौ अग्रान्ताच्छब्दात्परः, शुद्ध, शुभ्र, वृष, वराह-इत्येतेभ्यश्च परो यो दन्तशब्दस्तस्य दतृ इत्यादेशो विभाषा भवति समासान्तः।<br>कुड्मलानाम् = मुकुलानाम्, अग्राणि, कुड्मलाग्राणि, तानीव दन्ता यस्य स कुड्मलाग्रदन्, कुड्मलाग्रदन्तो वा।<br>शुद्धदन्, शुद्धदन्तः। शुभ्रदन् शुभ्रदन्तः।<br>वृषदन्, वृषदन्तः। वराहदन्, वराहदन्तः।<br>सूत्रे चकारोऽनुक्तसमुच्चयार्थः। तेन अहिदन्, अहिदन्तः इत्यादावपि दतृ इत्यादेशो दृश्यते। | |

| | | |
|---|---|---|
| बहुव्रीहौ ११३<br>समासान्ताः६८ | १४६. ककुदस्यावस्थायां लोपः<br>बहुव्रीहौ ककुदस्य समासान्तो लोपो भवति, अवस्थायां गम्यमानायाम्।<br>कालादिकृता वस्तुधर्मा वयःप्रभृतयः =अवस्था इत्युच्यते।<br>असंजातं ककुदं यस्य स असंजातककुत्।<br>बाल इत्यर्थः।<br>स्थूलककुत्।<br>नातिस्थूलो, नातिकृश इत्यर्थः। | लोपः १४९ |
| बहुव्रीहौ ११३<br>लोपः१४६<br>समासान्ताः६८ | १४७. त्रिककुत्पर्वते<br>बहुव्रीहौ त्रिककुत् इति कृताकारलोपो निपात्यते पर्वतेऽभिधेये।<br>त्रीणि ककुदानि अस्य इति त्रिककुत्पर्वतः।<br>ककुदाकारपर्वतशृङ्गमत्र ककुदशब्देन गृह्यते लक्षणया, मुख्यार्थस्यासम्भवात्।<br>पर्वत इति किम् ? त्रिककुदोऽन्यः। | |
| बहुव्रीहौ ११३<br>लोपः१४६<br>समासान्ताः६८ | १४८. उद्विभ्यां काकुदस्य<br>बहुव्रीहौ उत्, वि-इत्येताभ्यां परस्य काकुदस्य समासान्तो लोपो भवति।<br>उद्गतं काकुदमस्य उत्काकुत्।<br>विकृतं काकुदं यस्य विकाकुत्।<br>तालु काकुदमुच्यते। | काकुदस्य १४९ |
| बहुव्रीहौ ११३<br>काकुदस्य १४८<br>लोपः१४६<br>समासान्ताः६८ | १४९. पूर्णाद्विभाषा<br>बहुव्रीहौ पूर्णशब्दात् परस्य काकुदस्य समासान्तो लोपो भवति।<br>पूर्णं काकुदं यस्य स पूर्णकाकुत्, पूर्णकाकुदः। | |
| | १५०. सुहृद्दुर्हृदौ मित्रामित्रयोः<br>बहुव्रीहौ सुहृद्, दुर्हृद् -इतिशब्दौ निपात्येते, यथासंख्यं मित्रेऽमित्रे चाभिधेये।<br>सुशब्दात्, दुःशब्दाच्च परस्य हृदय हृद् इत्यादेशो निपात्यते।<br>सु = शोभनं हृदयं यस्य स सुहृन्मित्रम्।<br>दुष्टं हृदयं यस्य स दुःर्हृद् अमित्रम्।<br>मित्रामित्रयोरिति किम्? सुहृदयः कारुणिकः।<br>दुर्हृदयश्चौरः। | |

| | | |
|---|---|---|
| बहुव्रीहौ ११३<br>समासान्ताः६८ | १५१. उरःप्रभृतिभ्यः कप्<br>बहुव्रीहौ उरःप्रभृतिभ्यः समासान्तः कप् प्रत्ययो भवति।<br>व्यूढमुरो यस्य स व्यूढोरस्कः।<br>व्यूढमित्यस्यात्र विशालमित्यर्थः।<br>प्रियाणि सर्पींषि यस्य व प्रियसर्पिष्कः।<br>उरःप्रभृतिगणे पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीरिति विभक्त्यन्ताः, पठ्यन्ते, न प्रातिपदिकानि। तत्रेदं प्रयोजनम् - एकवचनान्तामेव ग्रहणमिह। तेन द्विवचन-बहुवचनान्तानाम् एषां 'शेषाद्विभाषा' इत्यनेन विकल्पेन कप् भवति - द्विपुमान्, द्विपुंस्कः। बहुपुमान्, बहुपुंस्कः।<br>(गणसूत्रम्) अर्थान्नञः।<br>अविद्यमानोऽर्थो यस्य सोऽनर्थकः। | कप् १६० |
| बहुव्रीहौ ११३<br>कप् १५१<br>समासान्ताः६८ | १५२. इनः स्त्रियाम्<br>बहुव्रीहौ इन्नन्तात् शब्दात् समासान्तः कप् प्रत्ययो भवति, स्त्रियां विषये।<br>बहवः दण्डिनो यस्यां शालायां सा बहुदण्डिका शाला।<br>बहुच्छत्रिका। बहुस्वामिका नगरी। बहुवाग्गिमका सभा। | |
| बहुव्रीहौ ११३<br>कप् १५१<br>समासान्ताः६८ | १५३. नद्यृतश्च<br>बहुव्रीहौ नदीसंज्ञकाद्, ऋकारान्ताच्च शब्दात् समासान्तः कप् प्रत्ययो भवति।<br>बह्वयो ब्रह्मबन्धवः यस्मिन् देशे स ब्रह्मबन्धूकः।<br>बहवः कर्तारो यस्मिन् देशे बहुकर्तृको देशः। | |

| | | |
|---|---|---|
| बहुव्रीहौ ११३<br>कप् १५१<br>समासान्ताः६८ | १५४. शेषाद्विभाषा<br>यस्माच्छब्दात्कोऽपि समासान्तो नोक्तः स शेषः। 'शेषो बहुव्रीहिः'(२.२.२३) इति सूत्रात् शेषपदस्यानुवृत्त्या 'अनेकमन्यपदार्थे'(२.२.२४) इति सूत्रेण विहितो यो बहुव्रीहिसमासः सोऽपि शेषः। तन्त्रादिना शेषपदस्यात्र अर्थद्वये तात्पर्यम्।<br>तेनैवं भवति सूत्रार्थः - अनुक्तसमासान्ताच्छब्दाद् शेषाधिकारस्थे बहुव्रीहौ समासान्तः कप्प्रत्ययो विभाषा भवति।<br>महद् यशो यस्य स महायशस्कः, महायशो वा।<br>अनुक्तासमासान्तात् किम्? व्याघ्रपात्,सुगन्धिः। प्रियपथः। प्रियधुरः।<br>शेषाधिकारस्थे बहुव्रीहाविति किम्? उपबहवः। उत्तरपूर्वाः। सपुत्रः।<br>एषु क्रमेण 'संख्ययाव्यय०'(२.२.२५) इति सूत्रेण, 'दिङ्नामान्यन्तराले'(२.२.२६) इति सूत्रेण, 'तेन सहेति तुल्ययोगे'(२.२.२८) इति सूत्रेण च समासः, नैतेषु सूत्रेषु 'शेषः' इत्यनुवर्तते इति एभिः विहितो बहुव्रीहिर्न शेषाधिकारस्थः, अतो न कप्। | |
| बहुव्रीहौ ११३<br>कप् १५१<br>समासान्ताः६८ | १५५. न संज्ञायाम्<br>संज्ञायां विषये बहुव्रीहौ समासान्तः कप्प्रत्ययो न भवति<br>विश्वे देवा अस्य विश्वदेवः। विश्वयशाः। | न १६० |
| बहुव्रीहौ ११३<br>कप् १५१<br>न १५५<br>समासान्ताः६८ | १५६. ईयसश्च<br>बहुव्रीहौ ईयसन्तात् प्रातिपदिकात् समासान्तः कप् प्रत्ययो न भवति।<br>बहवः श्रेयांसो यस्य स बहुश्रेयान्। बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी।<br>'ईयसो बहुव्रीहेः प्रतिषेधो वक्तव्यः' इति वार्तिकेन 'गोस्त्रियोरुपसर्जनस्य' (१.२.४८) इति सूत्रेण प्राप्तस्य ह्रस्वस्य प्रतिषेधः। | |

| | | |
|---|---|---|
| बहुव्रीहौ ११३<br>कप् १५१<br>न १५५<br>समासान्ताः ६८ | १५७. वन्दिते भ्रातुः<br>बहुव्रीहौ पूजितेऽर्थे यो भ्रातृशब्दस्तस्मात्समासान्तः कप् प्रत्ययो न भवति।<br>प्रशस्तो भ्राता यस्य स प्रशस्तभ्राता। सुभ्राता।<br>'नद्यृतश्च' इति प्राप्तः कब्नभवति।<br>अत्र 'न पूजनात्'(५.४.६९) इति सूत्रेण निषेधस्तु न 'प्राग्बहुव्रीहिग्रहणं कर्त्तव्यम्' इति वार्तिकानुसारेण 'न पूजनात्'(५.४.६९) इत्यस्य प्रवृत्तिः प्राग्बहुव्रीहेरेवेत्युक्तत्वात्।<br>वन्दिते इति किम्? मूर्खभ्रातृकः। दुष्टभ्रातृकः। | |
| बहुव्रीहौ ११३<br>कप् १५१<br>न १५५<br>समासान्ताः ६८ | १५८. ऋतश्छन्दसि<br>बहुव्रीहौ ऋवर्णान्तात् प्रातिपदिकात् समासान्तः कप् प्रत्ययो न भवति।<br>हता माता अस्य हतमाता। हतस्वसा। सुहोता। | |
| बहुव्रीहौ ११३<br>कप् १५१<br>न १५५<br>समासान्ताः ६८ | १५९. नाडीतन्त्र्योः स्वाङ्गे<br>स्वाङ्गे वर्तमानो यः नाडीशब्दः, तन्त्रीशब्दश्च ताभ्यां समासान्तः कप्रत्ययो न भवति।<br>बह्व्यो नाड्यो यस्य स बहुनाडिः कायः।<br>बह्व्यः तन्त्र्यो यस्याः सा बहुतन्त्रीर्ग्रीवा।<br>तन्त्रीशब्दस्य स्त्रीप्रत्ययान्तत्वाभावाद् ह्रस्वो न। तन्त्रीत्यस्य धमनी इत्यर्थोऽत्र।<br>स्वाङ्गे किम्? बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा।<br>'नद्यृतश्च' इति कप्। 'केऽणः' इति ह्रस्वो न 'न कपि' इत्यनेन निषेधात्। | |
| | १६०. निष्प्रवाणिश्च<br>'निष्प्रवाणिः' इति शब्दो नदीलक्षणस्य कपः प्रतिषेधेन निपात्यते।<br>निर्गता प्रवाणी अस्मादिति निष्प्रवाणिः पटः। निष्प्रवाणिः कम्बलः। अपनीतशलाकः समाप्तवयनक्रियः, प्रत्यग्र, नव वा पटादिः निष्प्रवाणिः इत्युच्यते।<br>प्रवाणीशब्दे प्रोयतेऽस्याम्, अनया वा प्रवाणी इति विग्रहे अधिकरणे, करणे वा प्रपूर्वाद् 'वेञ् तन्तुसन्ताने' इति धातोर्ल्युट्। प्रवाणी = तन्तुवायशलाका। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां पञ्चमाध्यायस्य चतुर्थः पादः ।।

।। समाप्तश्चायं पञ्चमाध्यायः ।।

।। श्रीः ।।

# ।। अथ षष्ठाध्यायस्य प्रथमः पादः ।।

| | | |
|---|---|---|
| | १. एकाचो द्वे प्रथमस्य<br>अधिकारोऽयं 'चङि'(६.१.११) इत्यन्तं यावत्। | एकाचो द्वे प्रथमस्य ११ |
| द्वे १ एकाचः १ | २. अजादेर्द्वितीयस्य<br>अयमप्यधिकारः 'चङि'(६.१.११) इत्यन्तं यावत्। ।<br>प्रथमद्विर्वचनापवादोऽयम्। | अजादेः द्वितीयस्य ११ |
| द्वे १ एकाचः १ अजादेः २ द्वितीयस्य २ | ३. नन्द्राः संयोगादयः<br>अजादेर्द्वितीयस्यैकाचः संयोगादयो न्द्राः (न्, द् र्-इत्येते) द्विर्नोच्यन्ते।<br>उन्दिदिषति। अड्डिडिषति। अर्चिचिषति।<br>(वा०) यकारपरस्य रेफस्य प्रतिषेधो न भवतीति वक्तव्यम्।<br>'ऋ गतिप्रापणयोः' - अरार्यते।<br>'अट्यर्तिशूर्णोतीनामुपसंख्यानम्' इति यङ्। तत्र 'यङि च' इति गुणः। ततः 'अर्य' इत्यवस्थायां द्वित्वम्।<br>(वा०) ईर्ष्यतेस्तृतीयस्य द्वे भवतः इति वक्तव्यम्।<br>कस्य तृतीयस्य? केचिदाहुर्व्यञ्जनस्येति - ईर्ष्य - ईर्ष्यियिषति। अपरे पुनः 'तृतीयस्यैकाचः' इति व्याचक्षते - ईर्ष्यिषिषति।<br>(वा०) कण्ड्वादीनां तृतीयस्यैकाचो द्वे भवत इति वक्तव्यम्।<br>कण्डूयियिषति। असूयियिषति।<br>(वा०) वा नामधातूनां तृतीयस्यैकाचो द्वे भवत इति वक्तव्यम्।<br>अश्वीयियिषति। पक्षे - अशिश्वीयिषति।<br>अश्वशब्दात् क्यचि कृते निष्पन्नाद् 'अश्वीय' इति नामधातोः सनि रूपम्। | |
| द्वे १ | ४. पूर्वोऽभ्यासः<br>द्विरुक्तयोः पूर्वोऽभ्याससंज्ञको भवति।<br>पपाच। पिपक्षति। जुहोति। | |

| | | |
|---|---|---|
| द्वे १ | ५. उभे अभ्यस्तम्<br>द्विरुक्तयोः उभे अभ्यस्तसंज्ञके भवतः।<br>ददति। दधति। | अभ्यस्तम् ६ |
| अभ्यस्तम् ५ | ६. जक्षित्यादयः षट्<br>'जक्ष' इति धातुः, तदादयः षडन्ये धातवश्च अभ्यस्तसंज्ञकाः भवन्ति।<br>जक्षति। जाग्रति। दरिद्रति। चकासति। शासति। दीध्यते। वेव्यते।<br>दीध्यते, वेव्यते, इत्यत्र अभ्यस्तसंज्ञायाः 'अभ्यस्तानामादिः' इत्येष स्वरः प्रयोजनम्। | |
| | ७. तुजादीनां दीर्घोऽभ्यासस्य<br>तुजादीनाम् अभ्यासस्य दीर्घो भवति।<br>तूतुजानः। मामहानः। | |
| प्रथमैकाचः१<br>अजादेः २<br>द्वितीयस्य २ | ८. लिटि धातोरनभ्यासस्य<br>लिटि परे धातोरनभ्यासस्य प्रथमस्यैकाचो द्वे भवतः, अजादेस्तु द्वितीयस्य।<br>पपाच। ऊर्णुनाव। | धातोः ५९<br>अनभ्यासस्य ११ |
| धातोः ८<br>अनभ्यासस्य ८ द्वे १<br>प्रथमैकाचः१<br>अजादेः २<br>द्वितीयस्य २ | ९. सन्यङोः<br>सन्नन्तस्य, यङन्तस्य च धातोरनभ्यासस्य प्रथमस्यैकाचो द्वे भवतः, अजादेस्तु द्वितीयस्य।<br>पिपक्षति। अरिरिषति।<br>पापच्यते। अटाट्यते। | |
| धातोः ८<br>अनभ्यासस्य ८ द्वे १<br>प्रथमैकाचः१<br>अजादेः २<br>द्वितीयस्य २ | १०. श्लौ<br>श्लौ परे धातोरनभ्यासस्य प्रथमस्यैकाचो द्वे भवतः, अजादेस्तु द्वितीयस्य।<br>जुहोति। बिभेति। | |
| धातोः ८<br>अनभ्यासस्य ८ द्वे १<br>प्रथमैकाचः१<br>अजादेः २<br>द्वितीयस्य २ | ११. चङि<br>चङि परे धातोरनभ्यासस्य प्रथमस्यैकाचो द्वे भवतः, अजादेस्तु द्वितीयस्य।<br>अपीपचत्। आटिटत्। | |

| | | |
|---|---|---|
| | १२. दाश्वान्-साह्वान्-मीढ्वाँश्च<br>एते शब्दा निपातनात् साधवः भवन्ति।<br>दाश्वांसो दाशुषः सुतमिति। साह्वान् बलाहकः।<br>मीढ्वस्तोकाय तनयाय मृळ।<br>(वा०) कृञादीनां के द्वे भवतः इति वक्तव्यम्।<br>क्रियतेऽनेन चक्रम्। चिक्लिदम्।<br>(वा०) चरि-चलि-पति-वदीनां<br>द्वित्वमच्याक्चाभ्यासस्य।<br>चराचरः। चलाचलः। पतापतः। वदावदः।<br>आगागमविधानसामर्थ्याद् हलादिशेषो न भवति।<br>(वा०) वेति वक्तव्यम्।<br>तेन-चरः, चलः, पतः,वदः इत्यपि सिद्धं भवति।<br>(वा०) हन्तेर्घत्वं च।<br>घनाघनः क्षोभणश्चर्षणीनाम्। | |
| | १३. ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे<br>ष्यङः सम्प्रसारणं भवति पुत्रपत्योः परतः तत्पुरुषे।<br>कारीषगन्ध्यायाः पुत्रः कारीषगन्धीपुत्रः।<br>कारीषगन्ध्यायाः पतिः कारीषगन्धीपतिः।<br>सम्प्रसारणस्य(६.३.१३८) इति सूत्रेण सम्प्रसारणस्य दीर्घः। | ष्यङः १४<br>सम्प्रसारणम् ३१ |
| ष्यङः १३<br>सम्प्रसारणम् १३ | १४. बन्धुनि बहुव्रीहौ<br>ष्यङः सम्प्रसारणं भवति बन्धुशब्दे परतः बहुव्रीहौ।<br>कारीषगन्धीबन्धुः।<br>सूत्रे 'बन्धुनि' इति नपुंसकलिङ्गनिर्देशः शब्दरूपापेक्षया, पुंलिङ्गाभिधेयोऽयं ब्नधुशब्दः। | |
| सम्प्रसारणम् १३ | १५. वचि-स्वपि-यजादीनां किति<br>वचि-स्वपि-यजादीनां सम्प्रसारणं भवति किति परे।<br>उक्तः। सुप्तः। इष्टः। उप्तः। | वचि-स्वपि-<br>यजादीनाम् १७<br>किति १६ |

| | | |
|---|---|---|
| सम्प्रसारणम् १३<br>किति १५ | **१६. ग्रहि-ज्या-वयि-व्यधि-वष्टि-विचति-वृश्चति-पृच्छति-भृज्जतीनां ङिति च**<br>ग्रहि-ज्या-वयि-व्यधि-वष्टि-विचति-वृश्चति-पृच्छति-भृज्जतीनां ङिति, किति च परे सम्प्रसारणं भवति।<br>ग्रह उपादाने - गृहीतः, गृह्णाति।<br>ज्या वयोहानौ - जीनः, जिनाति।<br>'वेञो वयिः' - ऊयतुः।<br>'वेञ् तन्तुसन्ताने' इति धातोः लिटि 'वेञो वयिः' इति सूत्रेण लिटि परे तस्य 'वय्' इत्यादेशः, 'लिटि वयो यः' इति सूत्रेण यकारस्य सम्प्रसारणनिषेधाद् वकारस्य सम्प्रसारणम्।<br>व्यध ताडने - विद्धः, विध्यति।<br>वश कान्तौ - उशितः, उष्टः।<br>ओ व्रश्चू छेदने - वृक्णः, वृश्चति।<br>प्रच्छ ज्ञीप्सायाम् - पृष्टः, पृच्छति।<br>भ्रस्ज पाके - भृष्टः, भृज्जति। | ग्रहि-तीनाम् १७ |
| सम्प्रसारणम् १३<br>वच्यादीनाम् १५.१६<br>ग्रहि-तीनाम् १६ | **१७. लिट्यभ्यासस्योभयेषाम्**<br>लिटि उभयेषाम्= वच्यादीनां, ग्रह्यादीनां च अभ्यासस्य सम्प्रसारणं भवति।<br>उवाच। सुष्वाप। इयाज।<br>जग्राह। जिज्यौ। | |
| सम्प्रसारणम् १३ | **१८. स्वापेश्चङि**<br>स्वापेश्चङि परे सम्प्रसारणं भवति।<br>असूषुपत्।<br>परत्वाद् द्विर्वचनात्पूर्वमेव सम्प्रसारणं । कृते च सम्प्रारणे लघूपधगुणः, तस्य 'णौ चङ्युपधाया' इति ह्रस्वः, ततो 'दीर्घो लघोः' इति दीर्घत्वम्। | |
| सम्प्रसारणम् १३ | **१९. स्वपि-स्यमि-व्येञां यङि**<br>स्वपि-स्यमि-व्येञां सम्प्रसारणं भवति यङि परे ।<br>ञिष्वप् शये -सोषुप्यते।<br>स्यमु स्वन ध्वन शब्दे - सेसिम्यते।<br>व्येञ् संवरणे - वेवीयते। | यङि २१ |
| सम्प्रसारणम् १३<br>यङि १९ | **२०. न वशः**<br>यङि वशः सम्प्रसारणं न भवति।<br>वश कान्तौ - वावश्यते। | |

| | | |
|---|---|---|
| यङि १९ | २१. चायः की<br>यङि परे चायः की भवति।<br>चायृ पूजानिशामनयोः - चेकीयते। | |
| | २२. स्फायः स्फी निष्ठायाम्<br>स्फायः स्फी भवति निष्ठायां परतः।<br>स्फायी ओ प्यायी वृद्धौ - स्फीतः। स्फीतवान्। | निष्ठायाम् २८ |
| निष्ठायाम् २२<br>सम्प्रसारणम् १३ | २३. स्त्यः प्रपूर्वस्य<br>प्रपूर्वस्य स्त्यः सम्प्रसारणं भवति निष्ठायां परतः।<br>स्त्यै, ष्ट्यै शब्दसंघातयोः - प्रस्तीतः। प्रस्तीतवान्। | |
| निष्ठायाम् २२<br>सम्प्रसारणम् १३ | २४. द्रवमूर्ति-स्पर्शयोः श्यः<br>द्रवमूर्ति-स्पर्शयोः वर्तमानस्य श्यः सम्प्रसारणं भवति निष्ठायां परतः।<br>द्रवमूर्त्तिः=द्रवपदार्थानां काठिन्यमित्यर्थः।<br>द्रवावस्थायाः उत्तरावस्थाविशेषः द्रवकाठिन्यम्।<br>रूपादिसहचरितो गुणः स्पर्शः।<br>श्यैङ् गतौ- शीनं घृतम्। शीतो वायुः। | श्यः २६ |
| निष्ठायाम् २२<br>सम्प्रसारणम् १३<br>श्यः २४ | २५. प्रतेश्च<br>प्रतेः परस्य श्यः सम्प्रसारणं भवति निष्ठायां परतः।<br>प्रतिशीनः। प्रतिशीनवान्। | |
| निष्ठायाम् २२<br>सम्प्रसारणम् १३<br>श्यः २४ | २६. विभाषाऽभ्यवपूर्वस्य<br>अभ्यवपूर्वस्य श्यः सम्प्रसारणं विभाषा भवति निष्ठायाम्।<br>अभिशीनम्, अभिश्यानम्।<br>अवशीनम्, अवश्यानम्। | विभाषा २८ |
| विभाषा २६ | २७. शृतं पाके<br>पाके निष्ठायां शृतमिति रूपं विभाषा भवति।<br>शृतं क्षीरम्। शृतं हविः।<br>'श्रा पाके' इति धातोः ण्यन्तस्य, अण्यन्तस्य च शृभावो निपात्यतेऽनेन।<br>व्यवस्थितविभाषा चेयम् - श्राणा यवागूः। | |
| निष्ठायाम् २२<br>विभाषा २६ | २८. प्यायः पी<br>प्यायः पी भवति निष्ठायां परतः विभाषा।<br>ओ प्यायी वृद्धौ- पीनं मुखम्। पीनौ बाहू।<br>इयमपि व्यवस्थितविभाषा।<br>आप्यानश्चन्द्रमाः। | प्यायः पी २९ |

| | | |
|---|---|---|
| प्यायः २८ पी २८ | २९. लिड्यङोश्च<br>लिटि, यङि च परतः प्यायः पी भवति।<br>आपिप्ये। आपेपीयते। | लिड्यङोः ३० |
| लिड्यङोः २९<br>सम्प्रसारणम् १३ | ३०. विभाषा श्वेः<br>लिटि, यङि च परे श्वेः विभाषा सम्प्रसारणं भवति।<br>टु ओ श्वि गतिवृद्धौ - शुशाव। शोशूयते। | विभाषा श्वेः ३१ |
| सम्प्रसारणम् १३<br>विभाषा ३० श्वेः३० | ३१. णौ च संश्चङोः<br>सन्परे, चङ्परे च णौ परतः श्वेः विभाषा सम्प्रसारणं भवति।<br>अशूशवत्, अशिश्वयत्। | णौ संश्चङोः ३२ |
| णौ ३१ संश्चङोः ३१ | ३२. ह्वः सम्प्रसारणम्<br>सन्परे, चङ्परे च णौ परतः ह्वः सम्प्रसारणं भवति।<br>ह्वेञ् स्पर्द्धायां, शब्दे च - जुहावयिषति। अजूहवत्। | ह्वः ३४<br>सम्प्रसारणम् ४४ |
| ह्वः ३२<br>सम्प्रसारणम् ३२ | ३३. अभ्यस्तस्य च<br>अभ्यस्तस्य च ह्वः सम्प्रसारणं भवति।<br>जुहाव। जूहूयते। जुहूषति। | |
| ह्वः ३२<br>सम्प्रसारणम् ३२ | ३४. बहुलं छन्दसि<br>छन्दसि ह्वः सम्प्रसारणं भवति।<br>इन्द्राग्नी हुवे। न च भवति - ह्वयामि मरुतः शिवान्। | बहुलम् ३५<br>छन्दसि ३६ |
| बहुलम् ३४ छन्दसि३४ | ३५. चायः की<br>छन्दसि चायः की बहुलं भवति।<br>चायृ पूजानिशामनयोः- न्यन्यं चिक्युर्न निचिक्युरन्यम्। नापि भवति - अग्नेर्ज्योतिर्निचाय्यः। | |
| बहुलम् ३४ छन्दसि३४ | ३६. अपस्पृधेथामानृचुरानृहुश्चिच्युषे-तित्याज-श्राताः श्रितमाशीराशीर्ताः<br>अपस्पृधेथाम्, आनृचुः, आनृहुः, चिच्युषे, तित्याज, श्राताः, श्रितम्, आशीर्, आशीर्त - इत्येते शब्दाः कृतसम्प्रसारणाः बहुलं छन्दसि निपात्यन्ते। | |

| | | |
|---|---|---|
| | ३७. न सम्प्रसारणे सम्प्रसारणम्<br>सम्प्रसारणे परे सम्प्रसारणं न भवति।<br>व्यच व्याजीकरणे + क्तः - विचितः।<br>युवन् शस्- यूनः।<br>(वा०) ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि।<br>ऋचि परतः त्रेः सम्प्रसारणं भवति,<br>उत्तरपदादिलोपश्च छन्दसि विषये इति वार्तिकार्थः।<br>तिस्रः ऋचो यस्मिन् तत् तृचं सूक्तम्। तृचं साम।<br>'ऋक्पूरब्धूः' इति समासान्तोऽच्। | सम्प्रसारणम् ४४ |
| सम्प्रसारणम् ३७ न३७ | ३८. लिटि वयो यः<br>वयो यः सम्प्रसारणं न भवति लिटि परे।<br>'वेञ् तन्तुसन्ताने' इति धातोः लिटि 'वेञो वयिः'<br>इति सूत्रेण वयादेशः।<br>उवाय। ऊयतुः। ऊयुः। | लिटि ४० |
| सम्प्रसारणम् ३७<br>लिटि ३८ | ३९. वश्चास्यान्यतरस्यां किति<br>किति लिटि परे अस्य (वयो यकारस्य) वः भवति<br>अन्यतरस्याम्।<br>ऊवतुः, ऊयतुः। ऊवुः, ऊयुः। | |
| सम्प्रसारणम् ३७<br>लिटि ३८ न ३७ | ४०. वेञः<br>वेञः लिटि परे सम्प्रसारणं न भवति।<br>ववौ। ववतुः। ववुः। | वेञः ४१ |
| वेञः ४०<br>सम्प्रसारणम् ३७<br>लिटि ३८ न ३७ | ४१. ल्यपि च<br>ल्यपि परे च वेञः सम्प्रसारणं न भवति।<br>प्रवाय। 'वेञ् तन्तुसन्ताने'। | ल्यपि ४४ |
| सम्प्रसारणम् ३७<br>न ३७ ल्यपि ४१ | ४२. ज्यश्च<br>ल्यपि ज्यश्च सम्प्रसारणं न भवति।<br>प्रज्याय। 'ज्या वयोहानौ' | |
| सम्प्रसारणम् ३७<br>न ३७ ल्यपि ४१ | ४३. व्यश्च<br>ल्यपि व्यश्च सम्प्रसारणं न भवति।<br>'व्येञ् संवरणे' - उपव्याय। | व्यः ४४ |
| सम्प्रसारणम् ३७<br>न ३७ ल्यपि ४१<br>व्यश्च ४३ | ४४. विभाषा परेः<br>परेः(परिपूर्वस्य) व्यः ल्यपि परे विभाषा सम्प्रसारणं<br>न भवति।<br>परिवीय, परिव्यायं। | |

| | | |
|---|---|---|
| धातोः ८ | ४५. आदेच उपदेशेऽशिति<br>उपदेशे एजन्तो यो धातुः तस्य एचः आद् भवति अशिति परे।<br>ग्लै हर्षक्षये - ग्लाता। ग्लातुम्। ग्लातव्यम्।<br>शो तनूकरणे- निशाता। निशातुम्। निशातव्यम्। | आत् एचः ५७<br>उपदेशे ६४ |
| आत् ४५ धातोः ८ | ४६. न व्यो लिटि<br>लिटि परे व्य आद् न भवति।<br>व्येञ् संवरणे - संविव्याय। संविव्ययिथ। | |
| आत् ४५ एचः ४५ | ४७. स्फुरति-स्फुलत्योर्घञि<br>स्फुरति - स्फुलत्योरेच आद् भवति घञि परे।<br>स्फुर, स्फुल चलने - विस्फारः, विस्फालः। | |
| आत् ४५ एचः ४५ | ४८. क्रीङ्-जीनां णौ<br>क्रीङ्जीनामेच आद् भवति णौ परे।<br>डुक्रीञ् द्रव्यविनिमये- क्रापयति।<br>इङ् अध्ययने- अध्यापयति।<br>जि जये - जापयति।<br>आत्वे कृते 'अर्तिह्री०' इत्यादिना पुगागमः। | णौ ४९ |
| आत् ४५ एचः ४५<br>णौ ४८ | ४९. सिध्यतेरपारलौकिके<br>सिध्यतेरेच आद् भवति णौ अपारलौकिके।<br>षिधु हिंसासंराद्ध्योः - अन्नं साधयति।<br>पारलौकिके तु- तपस्तापसं सेधयति। | |
| आदेचः ४५ उपदेशे४५ | ५०. मीनाति-मिनोति-दीङां ल्यपि च<br>उपदेशे एव मीनाति - मिनोति - दीङां ल्यपि परे आद् भवति,चकारात् एज्विषयेऽपि।<br>मीञ् हिंसायाम् - प्रमाता, प्रमातव्यम्। प्रमाय।<br>डुमिञ् प्रक्षेपणे - निमाता, निमातव्यम्। निमाय।<br>दीङ् क्षये - उपदाता, उपदातव्यम्। उपदाय। | ल्यपि ५१ |
| ल्यपि ५० आदेचः४५<br>उपदेशे ४५ | ५१. विभाषा लीयतेः<br>उपदेशे एव लीयतेरादेचो भवति, ल्यपि परे च आद् भवति विभाषा।<br>'लीङ् श्लेषणे' इति दिवादिः, 'लि श्लेषणे'- इति क्र्यादिः तयोरुभयोरपि यका निर्देशः स्मर्यते।<br>विलाता, विलेता। विलाय, विलीय। | विभाषा ५६ |
| विभाषा ५१ आदेचः४५ | ५२. खिदेश्छन्दसि<br>खिदेरादेचो भवति छन्दसि विभाषा।<br>खिद दैन्ये - चित्तं चिखाद, चिखेद वा। | |

| | | |
|---|---|---|
| विभाषा ५१ आदेचः४५ | ५३. अपगुरो णमुलि<br>अपगुरः आदेचो भवति णमुलि परे विभाषा।<br>गुरी उद्यमने अपपूर्वः – अपगारमपगारम्।<br>अपगोरमपगोरम्। | |
| विभाषा ५१ आदेचः४५ | ५४. चिस्फुरोर्णौ<br>चि-स्फुरोरेच आद् भवति णौ परे विभाषा।<br>चिञ् चयने – चापयति, चाययति।<br>आत्त्वेकृते 'अर्तिह्री०' इत्यादिना पुगागमः।<br>स्फुर चलने – स्फारयति, स्फोरयति। | णौ ५७ |
| विभाषा ५१ आदेचः४५<br>णौ ५४ | ५५. प्रजने वीयतेः<br>वीयतेरेचः आद् भवति णौ परे विभाषा प्रजने।<br>प्रजनो हि जन्मन उपक्रमो गर्भग्रहणम्।<br>वी गतिप्रजनकान्त्यसनखादनेषु – पुरो वातो गाः<br>प्रवापयति, प्रवाययति वा।<br>गर्भं ग्राहयतीत्यर्थः। | |
| विभाषा ५१ आदेचः४५<br>णौ ५४ | ५६. बिभेतेर्हेतुभये<br>बिभेतेरेचः आद् भवति हेतुभये णौ परे विभाषा।<br>मुण्डो भापयते, भीषयते वा। | हेतुभये ५७ |
| णौ ५४ हेतुभये ५६<br>आत् ४५ | ५७. नित्यं स्मयतेः<br>स्मयतेरेचो नित्यम् आद् भवति हेतुभये णौ परे।<br>मुण्डो विस्मापयते। | |
| | ५८. सृजि-दृशोर्झल्यमकिति<br>सृजि-दृशोरम् भवति अकिति झलि।<br>स्रष्टा। द्रष्टा। | झलि अम्<br>अकिति ५९ |
| उपदेशे ४५<br>धातोः ८<br>झल्यमकिति ५८ | ५९. अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्<br>अनुदात्तस्य ऋदुपधस्य अन्यतरस्याम् अम् भवति<br>अकिति झलि परे।<br>तृप प्रीणने – त्रप्ता। पक्षे तर्पिता, तर्प्ता।<br>'रधादिभ्यश्च' इति विकल्पेन इडागमः। | |
| | ६०. शीर्षंश्छन्दसि<br>छन्दसि शीर्षन् इति शब्दोऽपि शिरस्शब्दस्य स्थाने<br>प्रयुज्यते।<br>शीर्ष्णा हि तत्र सोमं क्रीतं हरन्ति। | शीर्षन् ६१ |

| | | |
|---|---|---|
| शीर्षन् ६० | ६१. ये च तद्धिते<br>ये (यकारादौ) तद्धिते च परे शिरस्शब्दस्य स्थाने शीर्षन् इति शब्दः प्रयुज्यते।<br>शीर्षण्यः स्वरः।<br>(वा०) अचि शीर्षः<br>अजादौ तद्धिते परे शिरसः 'शीर्ष' इत्यादेशो भवतीति वार्तिकार्थः।<br>हस्तिशिरसोऽपत्यं हास्तिशीर्षिः। | |
| अन्यतरस्याम् ५६ | ६२. पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु<br>पद्, दत्, नस्, मास् हृद्, निश्, असन्, यूषन्, दोषन्, यकन्, शकन्, उदन्, आसन् - इत्येते शब्दा अपि यथा पादादिशब्दानां स्थाने शस्प्रभृतिषु परेषु प्रयुज्यन्ते, अन्यतरस्याम्।<br>पदः, पादान्। दतः, दन्तान्। नसः, नासिकाः। मासः, मासान्। हृन्दि, हृदयानि। निशः, निशाः। असानि, असृञ्जि। यूष्णः, यूषान्। दोष्णः, दोषान्। यकानि, यकृन्ति। शकानि, शकृन्ति। उदानि, उदकानि। आसानि, आसनानि।<br>(वा०) मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः।<br>मांस्पचन्या उखायाः। पृत्सु मर्त्यम्। न ते दिवो न पृथिव्या अधिस्नुषु। | |
| उपदेशे ४५ | ६३. धात्वादेः षः सः<br>धात्वादेः षकारस्य सकारो भवति।<br>षह मर्षणे - सहते।<br>(वा०) सुब्धातु-ष्ठिवु-ष्वष्कतीनां प्रतिषेधो वक्तव्यः।<br>षोडीयति। षण्डीयति।<br>ष्ठिवु निरसने - ष्ठीवति।<br>ष्वष्क धातुर्गत्यर्थः - ष्वष्कते। | धात्वादेः ६४ |
| उपदेशे ४५<br>धात्वादेः ६३ | ६४. णो नः<br>धात्वादेः णकारस्य नकारो भवति।<br>णीञ् प्रापणे - नयति। | |
| | ६५. लोपो व्योर्वलि<br>वकारयकारयोर्लोपो भवति वलि परतः।<br>वलोपः - दिदिवान्।<br>क्वसौ दिवेर्वकारस्य लोपः ।<br>यलोपः - ऊतम्।<br>ऊयी तन्तुसन्ताने, क्त प्रत्यये धातोर्यकारस्य लोपः। | लोपः ६६ |

| | | |
|---|---|---|
| लोपः ६५ | ६६. वेरपृक्तस्य<br>अपृक्तस्य (एकाल्प्रत्ययस्य) वेः (वकारस्य) लोपो भवति।<br>ब्रह्महा। घृतस्पृक्। अर्धभाक्। | |
| लोपः ६५ | ६७. हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्<br>हल्ङ्याब्भ्यः (हलन्तेभ्यः ङ्यन्तेभ्यः आबन्तेभ्यश्च) सुतिस्यपृक्तं (सु, ति, सि इत्येतेषाम् अपृक्तस्य) हल् लोपविषयो भवति, दीर्घात्।<br>सु – राजा। कुमारी। खट्वा।<br>ति – अबिभर्भवान्।<br>सि – अभिनोऽत्र। | हल् ६८ |
| लोपः ६५ हल् ६७ | ६८. एङ्ह्रस्वात्संबुद्धेः<br>एङ्ह्रस्वात् सम्बुद्धेर्हल् लोपविषयो भवति।<br>हे अग्ने ! हे वायो !<br>हे देवदत्त ! हे नदि ! | |
| लोपः ६५ | ६९. शेश्छन्दसि बहुलम्<br>छन्दसि शेर्लोपो बहुलं भवति।<br>या क्षेत्रा। या वना। | |
| | ७०. ह्रस्वस्य पिति कृति तुक्<br>ह्रस्वस्य पिति कृति परे तुग्भवति।<br>अग्निचित्।<br>अग्निम् चि+क्विप्।<br>प्रहृत्य।<br>प्र हृ क्त्वा ल्यप्। | ह्रस्वस्य ७२<br>तुक् ७५ |
| | ७१. संहितायाम्<br>अधिकारोऽयम् 'अनुदात्तं पदमेकवर्जम्'(६.१.१५४) इति यावत्। | संहितायाम् १५४ |
| संहितायाम् ७१<br>तुक् ७०<br>ह्रस्वस्य ७० | ७२. छे च<br>छकारे परे च ह्रस्वस्य तुग्भवति संहितायाम्।<br>इच्छति। गच्छति। | छे ७५ |
| संहितायाम् ७१<br>तुक् ७० छे ७२ | ७३. आङ्माङोश्च<br>आङ्माङोश्च छकारे परे तुग्भवति संहितायाम्।<br>आच्छादयति। माच्छैत्सीत्। | |
| संहितायाम् ७१<br>तुक् ७० छे ७२ | ७४. दीर्घात्<br>दीर्घात् छकारे तुग्भवति।<br>दीर्घस्यैवायं तुक्।<br>चेच्छिद्यते। | दीर्घात् ७५ |

| | | |
|---|---|---|
| संहितायाम् ७१<br>तुक् ७० छे ७२ | ७५. पदान्ताद्वा<br>पदान्ताद् दीर्घात् छकारे परे तुग्वा भवति संहितायाम्।<br>लक्ष्मीच्छाया,. लक्ष्मीछाया। | |
| संहितायाम् ७१ | ७६. इको यणचि<br>इको यण्भवति अचि परे संहितायाम्।<br>दध्यत्र। मध्वत्र। कर्त्रर्थम्। लाकृतिः। | अचि १२२ |
| संहितायाम् ७१<br>अचि ७६ | ७७. एचोऽयवायावः<br>एचोऽयवायावा भवन्ति अचि परे संहितायाम्।<br>चयनम्। लवनम्। चायकः। लावकः। | एचः ७६ |
| एचः ७७ | ७८. वान्तो यि प्रत्यये<br>यि(यकारादौ) प्रत्यये परे एचः स्थाने वान्तो (अव्, आव् इति आदेशः) भवति।<br>गव्यम्। नाव्यम्।<br>(वा०) गोर्यूतौ छन्दसि।<br>गव्यूतिः। लोके तु गोयूतिः।<br>(वा०) अध्वपरिमाणे च।<br>गव्यूतिमात्रमध्वानं गतः। | वान्तः ७६ यि प्रत्यये ८२ |
| एचः ७७ वान्तः ७८<br>यि प्रत्यये ७८ | ७६. धातोस्तन्निमित्तस्यैव<br>यप्रत्ययनिमित्तस्यैव धातोरेचः वान्तो भवति।<br>लव्यम्। अवश्यलाव्यम्। | धातोः ८२ |
| अय् यिप्रत्यये ७८ | ८०. क्षय्यजय्यौ शक्यार्थे<br>शक्यार्थे यि (यकारादौ) प्रत्यये परे क्षय्यजय्यौ निपात्येते।<br>क्षेतुं शक्यम् क्षय्यम्। जेतुं शक्यम् जय्यम्।<br>अन्यत्र- क्षेतुं योग्यं क्षेयम्, जेतुं योग्यं जेयम्। | |
| यि प्रत्यये ७८ | ८१. क्रय्यस्तदर्थे<br>यि (यकारादौ) प्रत्यये परे 'क्रय्यः' इति निपात्यते तदर्थे।<br>क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं द्रव्यं क्रय्यम्।<br>क्रेयम् अन्यत्; क्रयणार्हमित्यर्थः। | |
| यि प्रत्यये ७८ | ८२. भय्यप्रवय्ये च च्छन्दसि<br>यि (यकारादौ) प्रत्यये परे भय्य-प्रवय्ये चच्छन्दसि निपात्येते।<br>भी यत्- भय्यम्।<br>प्रपूर्वः 'वी गतिप्रजनकान्त्यसनखादनेषु'<br>'अजेर्व्यघञपोः' इति वीभावश्च यत्- प्रवय्या। | |

| | | |
|---|---|---|
| | ८३. एकः पूर्वपरयोः<br>अधिकारोऽयम् 'ख्यत्यात्परस्य'(६.१.११०) इति यावत्।<br>खट्वा+इन्द्रः = खट्वेन्द्रः। | एकः<br>पूर्वपरयोः११० |
| एकः८३<br>पूर्वपरयोः ८३<br>संहितायाम्-७१ | ८४. अन्तादिवच्च<br>एकः (एकादेशः) पूर्वपरयोः अन्तादिवच्च भवति।<br>ब्रह्मबन्धूः। वृक्षौ।<br>पूर्वान्तवद्भावेन 'ब्रह्मबन्धूः' इत्यत्र प्रातिपदिकत्वम्, 'वृक्षौ' इत्यत्र 'औ' इत्यस्य सुप्त्वम्। | |
| एकादेशः ८३<br>संहितायाम्-७१ | ८५. षत्वतुकोरसिद्धः<br>षत्वे, तुकि च कर्त्तव्ये एकः पूर्वपरयोरसिद्धो भवति।<br>कोऽसिचत्। अधीत्य। | |
| अचि ७६<br>एकादेशः ८३<br>संहितायाम्-७१ | ८६. आद्गुणः<br>अवर्णाद् अचि परे पूर्वपरयोरेको गुणो भवति।<br>तव + इदम् =तवेदम्।<br>माला+इन्द्रः=मालेन्द्रः।<br>तव+ उदकम् = तवोदकम्।<br>खट्वा+ उदकम् =खट्वोदकम्।<br><br>राज + ऋषिः = राजर्षिः।<br>तव + लृकारः = तवल्कारः। | आत् ६५ |
| आत्८६<br>एकादेशः ८३<br>संहितायाम्-७१ | ८७. वृद्धिरेचि<br>अवर्णाद् एचि परे पूर्वपरयोरेका वृद्धिर्भवति।<br>ब्रह्म+एडका=ब्रह्मैडका।<br>खट्वा +एडका =खट्वैडका।<br>ब्रह्म+ऐतिकायनः= ब्रह्मैतिकायनः।<br>खटवा+ ऐतिकायनः= खट्वैतिकायनः।<br>ब्रह्म+ओदनः= ब्रह्मौदनः।<br>खटवा+ ओदनः= खट्वौदनः।<br>ब्रह्म+ औपगवः =ब्रह्मौपगवः।<br>खटवा+ औपगवः =खट्वौपगवः। | वृद्धिः ६१<br>एचि ८८ |

| | | |
|---|---|---|
| आत् ८६<br>वृद्धिरेचि ८७ एकादेशः ८३<br>संहितायाम्-७१ | ८८. एत्येधत्यूठ्सु<br>अवर्णाद् एजादौ इण्धातौ, एध्धातौ, ऊठि च परे पूर्वपरयोः स्थाने एका वृद्धिर्भवति।<br>उप + एति = उपैति।<br>उप + एधते = उपैधते।<br>प्रष्ठ + ऊहः = प्रष्ठौहः।<br>(वा०) अक्षादूहिन्यामुपसंख्यानम्।<br>अक्ष + ऊहिनी = अक्षौहिणी सेना।<br>(वा०) स्वादीरेरिण्योर्वृद्धिर्वक्तव्या।<br>स्व + ईरम् = स्वैरम्।<br>स्व + ईरिणी = स्वैरिणी।<br>(वा०) प्रादूहोढोढ्येषैष्येषु।<br>प्रौढः। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः।<br>(वा०) ऋते च तृतीयासमासे।<br>सुखेन ऋतः सुखार्तः।<br>(वा०) प्रवत्सतर-कम्बल-वसनार्णदशानामृणे।<br>प्रार्णम्। वत्सतरार्णम्। कम्बलार्णम्। वसनार्णम्। ऋणार्णम्। दशार्णम्। | |
| अचि ७६ वृद्धि ८७<br>एकादेशः ८३ | ८९. आटश्च<br>आटश्च अचि परे पूर्वपरयोरेका वृद्धिर्भवति।<br>ऐक्षिष्ट। नद्यै। | |
| आत् ८६ वृद्धिः ८७<br>एकादेशः ८३ | ९०. उपसर्गादृति धातौ<br>अवर्णान्ताद् उपसर्गाद् ऋति (ऋकारादौ) धातौ परतः पूर्वपरयोरका वृद्धिर्भवति।<br>प्र+ऋच्छति = प्रार्च्छति। | उपसर्गादृति९१<br>धातौ ९३ |
| आत्८६<br>एकादेशः ८३<br>उपसर्गादृति ९०<br>धातौ ९० | ९१. वा सुप्यापिशलेः<br>अवर्णान्ताद् उपसर्गाद् ऋति सुपि (ऋकारादौ नामधातौ परतः) पूर्वपरयोरेका वृद्धिर्वा भवति आपिशलेः मतेन। उप + ऋषभीयति = उपार्षभीयति, उपर्षभीयति। | |
| आत्८६<br>एकादेशः ८३ | ९२. औतोऽम्शसोः<br>ओकारात् अम्शसोः परयोः पूर्वपरयोरेकः आ इत्यादेशो भवति।<br>गां पश्य। गाः पश्य।<br>सूत्रे 'आ ओतः अम्शसोः' इतिच्छेदः। | |

| | | |
|---|---|---|
| आत्८६<br>एकादेशः ८३<br>धातौ ९० | ९३. एङि पररूपम्<br>अवर्णान्ताद् उपसर्गाद् एङि (एङादौ) धातौ परे पूर्वपरयोरेकं पररूपं भवति।<br>उप+एलयति = उपेलयति।<br>(वा०) शकन्ध्वादिषु पररूपं वाच्यम्।<br>शक+अन्धुः = शकन्धुः। कुल+अटा = कुलटा।<br>मनस्+ईषा = मनीषा। पतत्+अञ्जलिः = पतञ्जलिः। पतन्नञ्जलिर्यस्मिन् नमस्कार्यत्वादिति विग्रहः।<br>(गणवार्तिकम्) सीमन्तः केशवेशे<br>सीम्नोऽन्तः सीमन्तः। केशविन्यास इत्यर्थः। अन्यत्र सीमान्तः। ग्रामान्तप्रदेश इत्यर्थः।<br>(गणवार्तिकम्) सारङ्गः पशुपक्षिणोः<br>साराणि = उत्कृष्टानि, अङ्गानि यस्य स सारङ्गः।<br>सार+अङ्ग इति स्थिते पररूपम्।<br>साराङ्गोऽन्यः। दृढाङ्गयुक्त इत्यर्थः।<br>शकन्ध्वादिराकृतिगणः। | पररूपम् ९८ |
| आत् ८६<br>पररूपम् ९३<br>एकादेशः ८३ | ९४. ओमाङोश्च<br>आद् ओमाङोश्च परयाः पूर्वपरयोरेकं पररूपं भवति।<br>शिवाय+ ओं नमः = शिवायों नमः।<br>शिवेहि। शिव+आ+इहि इतिच्छेदः। गुणे कृते पूर्वान्तवद्भावेन पररूपम्। | |
| आत् ८६<br>पररूपम् ९३<br>एकादेशः ८३ | ९५. उस्यपदान्तात्<br>अपदान्तादात् उसि परे पूर्वपरयोरेकं पररूपं भवति।<br>भिन्द्या + उस् = भिन्द्युः। 'झेर्जुस्' इति जुस्। | अपदान्तात् ९६ |
| अपदान्तात् ९५<br>पररूपम् ९३<br>एकादेशः ८३ | ९६. अतो गुणे<br>अपदान्तादकारात् गुणे परे पूर्वपरयोरेकं पररूपं भवति।<br>पच + अन्ति = पचन्ति।<br>पच + ए = पचे। | |
| पररूपम् ९३ | ९७. अव्यक्तानुकरणस्यात इतौ<br>अव्यक्तानुकरणस्यातः इतौ परे अचि पूर्वपरयोरेकं पररूपं भवति।<br>पटत् + इति = पटिति।<br>(वा०) अनेकाच इति वक्तव्यम्।<br>इह मा भूत् - श्रदिति। | अव्यक्तानुकरणस्य अत इतौ ९८ |

| | | |
|---|---|---|
| अव्यक्तानुकरणस्य<br>अत इतौ ९७ | ९८. नाम्रेडितस्यान्त्यस्य तु वा<br>अव्यक्तानुकरणस्य आम्रेडितान्त्यस्य इतौ परे पररूपं तु वा भवति। पटत्पटेति, पटत्पटदिति।<br>(वा०) नित्यमाम्रेडिते डाचि।।<br>डाचि परे यदाम्रेडितं तस्मिन् परे पूर्वस्याव्यक्तानुकरणस्याच्छब्दस्य योऽन्त्यस्तकारस्तस्य पूर्वस्य, परस्य चाद्यवर्णस्य नित्यं पररूपमेकादेशो भवतीति वार्तिकार्थः।<br>पटपटाकरोति।<br>पटदित्यस्मात् 'अव्यक्तानुकरणाद्' इति डाचि विहिते, 'डाचि बहुलं द्वे भवतः' इति द्विर्वचनम्, तच्च टिलोपात् पूर्वमेवेष्यते। | |
| अचि ७६<br>संहितायाम्-७१ | ९९. अकः सवर्णे दीर्घः<br>अकः सवर्णेऽचि परे पूर्वपरयोरेको दीर्घो भवति।<br>दैत्यारिः। श्रीशः। विष्णूदयः। होतॄकारः।<br>(वा०) ऋति सवर्णे ऋ वा।<br>होतृ+ऋकारः = होतृकारः, पक्षे होतॄकारः।।<br>(वा०) लृति सवर्णे लृ वा।<br>होतृ+लृकारः = होत्लृकारः। पक्षे होतॄकारः।<br>लृकारस्य दीर्घाभावात् ऋ-लृवर्णयोदीर्घः सावर्ण्यादॄकार एव। | अकः-१०५<br>दीर्घः १०४ |
| अकः ९९ दीर्घः ९९<br>संहितायाम्-७१ | १००. प्रथमयोः पूर्वसवर्णः<br>अकः प्रथमयोरचि परे पूर्वपरयोरेकः पूर्वसवर्णो दीर्घो भवति।<br>अग्नी। वायू। | पूर्वसवर्णः १०४ |
| | १०१. तस्माच्छसो नः पुंसि<br>तस्मात् = पूर्वसवर्णदीर्घात् परस्य शसः सकारस्य नकारो भवति पुंसि।<br>वृक्षान्। अग्नीन्। वायून्। कर्तॄन्। | |
| पूर्वसवर्णः १००<br>दीर्घः९९ | १०२. नादिचि<br>अवर्णाद् इचि परे पूर्वसवर्णदीर्घो न भवति।<br>वृक्षौ। खट्वे। | न इचि १०४ |
| इचि १०२ न १०२<br>पूर्वसवर्णः १००<br>दीर्घः९९ | १०३. दीर्घाज्जसि च<br>दीर्घाज्जसि, इचि च परे पूर्वसवर्णदीर्घो न भवति।<br>कुमार्यः। कुमार्यौ। | दीर्घात्<br>जसि १०४ |

| | | |
|---|---|---|
| दीर्घात् १०३ जसि१०३<br>इचि १०२<br>पूर्वसवर्णः १००<br>दीर्घः९९ न१०२ | १०४. वा छन्दसि<br>दीर्घाज्जसि, इचि च परे पूर्वसवर्णदीर्घश्छन्दसि वा न भवति।<br>मारुतीश्चतस्रः, मारुत्यश्चतस्रः। | |
| अकः ९९ अचि ७६<br>संहितायाम्-७१ | १०५. अमि पूर्वः<br>अकः अमि यः अच् तस्मिन् परे पूर्वपरयोः पूर्वरूपमेकादेशो भवति।<br>अग्निम्। वायुम्। | पूर्वः १०८ |
| अचि ७६<br>पूर्वः १०५ | १०६. सम्प्रसारणाच्च<br>सम्प्रसारणादचि परे पूर्वपरयोः पूर्वरूपमेकादेशो भवति।<br>यज् + क्त = इष्टम्। | |
| पूर्वः १०५ | १०७. एङः पदान्तादति<br>पदान्तादेङोऽति परे पूर्वपरयोः पूर्वरूपमेकादेशो भवति।<br>अग्नेऽत्र। वायोऽत्र। | एङः अति १२०<br>पदान्तात् १२६ |
| एङः १०७<br>अति १०७<br>पूर्वः १०५ | १०८. ङसिङसोश्च<br>एङो ङसिङसोरति परे पूर्वपरयोः पूर्वरूपमेकादेशो भवति।<br>अग्नेः आगच्छति। अग्नेः स्वम्। | ङसिङसोः ११० |
| ङसिङसोः १०८<br>अति १०७ | १०९. ऋत उत्<br>ऋतो ङसिङसोरति परे पूर्वपरयोरेकः उकारादेशो भवति।<br>होतुरागच्छति। होतुः स्वम्। | उत् ११२ |
| ङसिङसोः १०८<br>अति १०७ उत् १०९ | ११०. ख्यत्यात्परस्य<br>ख्यत्यात् परस्य ङसिङसोरकारस्य उकारादेशो भवति।<br>'ख्यत्यात्' इति खिशब्द-खीशब्दयोः, तिशब्द-तीशब्दयोश्च कृतयणादेशयोः पञ्चम्यां रूपम्।<br>सखि- सख्युः।<br>पति- पत्युः।<br>सखी- सख्युः। सह खेन वर्तते इति सखः, तस्मात् क्यचि, क्विपि च कृते सखी इति रूपम्।<br>लूनी- लून्युः। लूनमिच्छति इति विग्रहे क्यचि, क्विपि च लूनी इति रूपं भवति।<br>निष्ठानत्वस्यासिद्धत्वात् लूती इति रूपमतिदिश्य ङसौ,ङसि च लून्युः इति रूपं सिद्ध्यति। | |

| | | |
|---|---|---|
| अति १०७<br>उत् १०६ | १११. अतो रोरप्लुतादप्लुते<br>अप्लुतादतः परस्य रोरुकारादेशो भवति अप्लुतेऽकारे परे।<br>वृक्षोऽत्र। | अतः रो ११२ |
| अतो १११ रोः १११<br>उत् १०६ | ११२. हशि च<br>अतः रोरुत् हशि च परे भवति।<br>पुरुषो हसति, याति वा। | |
| एङः १०७<br>अति १०७ | ११३. प्रकृत्याऽन्तःपादमव्यपरे<br>अन्तःपादम् (पादस्य मध्ये) एङ् प्रकृत्या भवति अवकारयकारपरे अकारे परतः।<br>ते अग्रे अश्वमायुञ्जन्।<br>अव्यपरे इति किम्? तेऽवदन्। तेजोऽयस्मयम्। | प्रकृत्या १२८<br>अन्तःपादम् ११४ |
| एङः १०७<br>अति १०७<br>प्रकृत्या ११३<br>अन्तःपादम् ११३ | ११४. अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च<br>अन्तःपादम् (पादस्य मध्ये) एङ् प्रकृत्या भवति अव्यात्, अवद्यात्, अवक्रमुः, अव्रत, अयम्, अवन्तु, अवस्यु - इत्येतेषु वकारयकारपरेऽपि अकारे परतः।<br>अग्निः प्रथमो वसुभिर्नो अव्यात्। मित्रमहो अवद्यात्। मा शिवासो अवक्रमुः। ते नो अव्रताः। शतधारो अयं मणिः। ते नो अवन्तु पितरः। कुशिकासो अवस्यवः। | |
| एङः १०७<br>अति १०७<br>प्रकृत्या ११३ | ११५. यजुष्युरः<br>यजुषि एङ् (एङन्तः) उरः इति शब्दः अकारे परे प्रकृत्या भवति।<br>उरो अन्तरिक्षम्। | यजुषि ११६ |
| अति१०७<br>प्रकृत्या ११३<br>यजुषि ११५ | ११६. आपो जुषाणो वृष्णो वर्षिष्ठे अम्बे अम्बालेऽम्बिकेपूर्वे<br>यजुषि आपो, जुषाणो, वृष्णो, वर्षिष्ठे-इत्येते शब्दाः,अम्बिके इति शब्दात्पूर्वौ अम्बे, अम्बाले च इत्येतौ शब्दौ च प्रकृत्या भवन्ति अकारे परे।<br>आपो अस्मान्मातरः शुन्धयन्तु। जुषाणो अप्तुराज्यस्य। वृष्णो अंशुभ्यां गभस्तिपूतः। वर्षिष्ठे अधिनाके। अम्बे अम्बाले अम्बिके। | |
| अति१०७<br>प्रकृत्या ११३<br>यजुषि ११५ | ११७. अङ्ग इत्यादौ च<br>यजुषि 'अङ्गे' इति शब्दे यः एङ् स प्रकृत्या भवति अकारे परे, इत्यादौ = अङ्गे इति शब्दस्यादौ च यः अकारः तस्मिंश्च(परतः) एङ् प्रकृत्या भवति।<br>ऐन्द्रः प्राणो अङ्गे अङ्गे अदीध्यत्। | |

| | | |
|---|---|---|
| अति१०७<br>प्रकृत्या ११३<br>यजुषि ११५ | १९८. अनुदात्ते च कुधपरे<br>कवर्ग-धकारपरे अनुदात्तेऽकारे परे एङ् प्रकृत्या भवति यजुषि ।<br>अयं सो अग्निः। अयं सो अध्वरः। | अनुदात्ते ११९ |
| अनुदात्ते११८<br>यजुषि११५अति१०७<br>प्रकृत्या ११३<br>एङः १०७ | ११९. अवपथासि च<br>यजुषि एङ् प्रकृत्या भवति अवपथास् इति शब्दघटकेऽनुदात्तेऽकारे परतः।<br>अवपथासि च।<br>त्री रुद्रेभ्यो अवपथाः। | |
| अति१०७<br>प्रकृत्या ११३<br>एङः १०७ | १२०. सर्वत्र विभाषा गोः<br>सर्वत्र ( भाषायाम् , छन्दसि च) गोरेङ् प्रकृत्या विभाषा भवति।<br>भाषायाम् - गो अग्रम्, गोऽग्रम्।<br>छन्दसि - पशवो गो अश्वान्। | गोः १२२<br>विभाषा १२१ |
| अचि ७६ गोः १२० | १२१. अवङ् स्फोटायनस्य<br>गोरवङ् वा भवति अचि परे स्फोटायनस्य मतेन।<br>गवाग्रम्, गो अग्रम् गोऽग्रम्। गवौदनम्, गवोदनम्।<br>गवोष्ट्रम्, गवुष्ट्रम्। व्यवस्थितविभाषया गवाक्षः इत्यत्र नित्यमेवावङ् । | अवङ् १२२ |
| गोः १२०<br>अवङ् १२१ | १२२. इन्द्रे च<br>इन्द्रे च परे गोरवङ् भवति।<br>गवेन्द्रः।<br>विकल्पनिवत्त्यर्थः पुनरारम्भः। | |
| प्रकृत्या ११३ | १२३. प्लुत-प्रगृह्या अचि नित्यम्<br>प्लुतप्रगृह्याः (प्लुतसंज्ञकाः, प्रगृह्यसंज्ञकाश्च) नित्यं प्रकृत्या भवन्ति अचि परतः।<br>देवदत्त३ अत्र। 'दूराद्धूते च' इति प्लुतसंज्ञा।<br>अग्नी इति। 'ईदूदेद् द्विवचनं प्रगृह्यम्' इति प्रगृह्यसंज्ञा। | अचि १२८ |
| अचि १२३ प्रकृत्या११३ | १२४. आङोऽनुनासिकश्छन्दसि<br>आङ् प्रकृत्या भवति, तस्यानुनासिकश्च अचि परे छन्दसि।<br>अभ्र आँ अपः। | |
| अचि १२३ प्रकृत्या११३<br>पदान्तात्-१०७ | १२५. इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च<br>पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या भवन्ति, तेषां ह्रस्वश्च शाकल्यस्य मतेन।<br>दधि अत्र, दध्यत्र। कुमारि अत्र, कुमार्यत्र। | शाकल्यस्य<br>ह्रस्वः १२६ |

| | | |
|---|---|---|
| शाकल्यस्य १२५<br>ह्रस्वः१२५ प्रकृत्या११३<br>पदान्दात् १०७ | १२६. ऋत्यकः<br>पदान्ता अकः ऋति परे प्रकृत्या भवन्ति, तेषां ह्रस्वश्च, शाकल्यस्य मतेन।<br>खट्वा + ऋश्यः = खट्व ऋश्यः, खट्वर्श्यः। | |
| | १२७. अप्लुतवदुपस्थिते<br>उपस्थिते = अवैदिके इतिशब्दे परे प्लुतः अप्लुतवद् भवति।<br>सुश्लोक३+ इति = सुश्लोकेति।<br>"उपस्थिते इत्युच्यते, किमुपस्थितं नाम? अनार्ष इतिकरणः। सुश्लोक३ इति सुश्लोकेति।" इति भाष्येण 'उपस्थिते' इति शब्दस्य 'अवैदिके इतिशब्दे' इत्यर्थः। | अप्लुतवत् १२८ |
| अप्लुतवत् १२७<br>अचि १२३ | १२८. ई३ चाक्रवर्मणस्य<br>प्लुत ई३कारः अप्लुतवद् भवति, चाक्रवर्मणस्य मतेन।<br>चिनुहीदम्। चिनुहि३ इदम्। | |
| पदान्तात् १०७ | १२९. दिव उत्<br>दिवः पदस्य उकारादेशो भवति पदान्ते।<br>'अलोऽन्त्यस्य' इति परिभाषया अन्त्यस्य वकारस्य उकारादेशो भवति अनेन।<br>द्युभ्याम्। द्युकामः। | |
| | १३०. एतत्तदोः सुलोपोऽकोरनञ्समासे हलि<br>अकोः(ककाररहितयोः) एतत्ततदोः सोर्लोपो भवति हलि परे, न तु नञ्समासे।<br>एष ददाति। स ददाति।<br>अकोरिति किम्? एषको ददाति। सको ददाति। | सुलोपः १३२<br>हलि १३१ |
| सुलोपः १३० हलि१३० | १३१. स्यश्छन्दसि बहुलम्<br>'स्यसु' इत्येतस्य सोर्लोपो भवति छन्दसि बहुलम्।<br>एष स्य भानुः।<br>नापि भवति - यत्र स्यो निपतेत्। | |
| | १३२. सोऽचि लोपे चेत्पादपूरणम्<br>'ससु' इत्येतस्य सोर्लोपो भवति अचि परे , लोपे चेत् पादपूरणम्।<br>सैष दाशरथी रामः। | |

|  |  |  |
|---|---|---|
|  | १३३. सुट् कात्पूर्वः<br>अधिकारोऽयं 'पारस्करप्रभृतीनि च संज्ञायाम्'(६.१.१५३) इति सूत्रं यावत् ।<br>संस्कर्ता। परिष्कर्ता।<br>(वा०) अडभ्यासव्यवायेऽपि।<br>अड्व्यवाये, अभ्यासव्यवायेऽपि कात्पूर्वः सुड् भवतीति वार्तिकार्थः।<br>अड्व्यवाये - समस्करोत्। समस्कार्षीत्।<br>अभ्यासव्यवाये - सञ्चस्कार। परिचस्कार। | सुट् १५३<br>कात्पूर्वः १५३ |
| सुट् १३३<br>कात्पूर्वः १३३ | १३४. संपरिभ्यां करोतौ भूषणे<br>सम्परिभ्यां करोतौ परतः कात्पूर्वः सुड् भवति भूषणेऽर्थे।<br>संस्कर्ता। परिष्कर्ता। | संपरिभ्याम् १३५<br>करोतौ १३६ |
| संपरिभ्याम् १३४<br>करोतौ १३४<br>सुट १३३<br>कात्पूर्वः १३३ | १३५. समवाये च<br>सम्परिभ्यां करोतौ परतः कात्पूर्वः सुड् भवति समवाये।<br>समवायः = समुदायः।<br>तत्र नः संस्कृतं, परिष्कृतम्।<br>तत्र अस्माकं समुदाय इत्यर्थः, उदाहरणे भावे क्तः। |  |
| करोतौ १३४<br>सुट १३३<br>कात्पूर्वः १३३ | १३६. उपात् प्रतियत्न-वैकृत-वाक्याध्याहारेषु<br>उपात् करोतौ परतः सुट् कात्पूर्वो भवति प्रतियत्न-वैकृत-वाक्याध्याहारेषु चकाराद् भूषणे, समवाये च।<br>प्रतियत्नो गुणान्तराधानम्। विकृतमेव वैकृतम् गम्यमानार्थस्य स्वरूपेणोपादानं वाक्याध्याहारः।<br>प्रतियत्ने- एधो दकस्योपस्कुरुते।<br>वैकृते - उपस्कृतं भुङ्क्ते।<br>वाक्याध्याहारे - उपस्कृतं ब्रूते। वाक्याध्याहारेण ब्रूते इत्यर्थः।<br>भूषणे - उपस्कृता कन्या। अलंकृतेत्यर्थः।<br>समवाये - उपस्कृता ब्राह्मणाः।<br>समुदिता इत्यर्थः। | उपात् १३८ |
| उंपात् १३६<br>सुट् १३३<br>कात्पूर्वः १३३ | १३७. किरतौ लवने<br>उपात् किरतौ परतः सुट् कात्पूर्वो भवति लवने।<br>उपस्कारं काश्मीराः लुनन्ति।<br>उपस्कारमिति णमुलन्तम, उपस्कारं लुनन्तीत्यस्य विक्षिप्य लुनन्तीत्यर्थः। 'कॄ विक्षेपे'। | किरतौ १३८ |

| | | |
|---|---|---|
| सुट् १३३<br>कात्पूर्वः १३३<br>उपात्१३६ करोतौ१३४ | १३८. हिंसायां प्रतेश्च<br>प्रतेः, चकारात् उपाच्च किरतौ परतः सुट् कात्पूर्वो भवति हिंसायाम्।<br>उपस्कीर्णं हं ते वृषल भूयात्। हे वृषल! तथा ते विक्षेपो भूयाद् यथा हिंसामनुबध्नाति। | |
| सुट् १३३<br>कात्पूर्वः १३३ | १३९. अपाच्चतुष्पाच्छकुनिष्वालेखने<br>अपात् किरतौ परतः सुट् कात्पूर्वो भवति, चतुष्पादविषयके, शकुनिविषयके चालेखने।<br>अपस्किरते वृषभो हृष्टः।<br>अपस्किरते कुक्कुटो भक्ष्यार्थी।<br>आलिख्य विक्षिपतीत्यर्थः। | |
| सुट् १३३ | १४०. कुस्तुम्बुरुणि जातौ<br>कुस्तुम्बुरुशब्दे सुट् निपात्यते, जातिश्चेद् वाच्या।<br>कुस्तुम्बुरुः औषधिजातिविशेषः।<br>तत्फलान्यपि कुस्तुम्बुरूणि। | |
| सुट् १३३ | १४१. अपरस्पराः क्रियासातत्ये<br>अपरस्परा इत्यत्र क्रियासातत्ये सुड् निपात्यते।<br>अपरस्पराः सार्था गच्छन्ति। | |
| सुट् १३३ | १४२. गोष्पदं सेवितासेवित-प्रमाणेषु<br>सेवितासेवितप्रमाणेषु 'गोष्पदम्' इत्यत्र सुड् निपात्यते।<br>सेविते - गोष्पदो देशः।<br>असेविते - अगोष्पदान्यरण्यानि।<br>प्रमाणे - गोष्पदमात्रं क्षेत्रम्। | |
| सुट् १३३ | १४३. आस्पदं प्रतिष्ठायाम्<br>प्रतिष्ठायाम् 'आस्पदम्' इत्यत्र सुड् निपात्यते।<br>आस्पदम्।<br>आपद्यते यस्मिन् स्थाने तत् आस्पदम्।<br>आङ्पूर्वात्पदेः अधिकरणे घञ्। | |
| सुट् १३३ | १४४. आश्चर्यमनित्ये<br>अनित्ये = अद्भुते 'आश्चर्यम्' इत्यत्र सुड् निपात्यते।<br>आश्चर्यं यदि स भुञ्जीत। | |
| सुट् १३३ | १४५. वर्चस्केऽवस्करः<br>वर्चस्के 'अवस्कर' इत्यत्र सुड् निपात्यते।<br>कुत्सितं वर्चः वर्चस्कम्, अन्नमलमित्यर्थः।<br>अवकीर्यते इत्यवस्करः। अवस्करः = अन्नमलम्, तत्सम्बन्धाद् देशोऽपि तथोच्यते। | |

| | | |
|---|---|---|
| सुट् १३३ | १४६. अपस्करो रथाङ्गम्<br>अपस्करो निपात्यते रथाङ्गं चेद् भवति।<br>अपस्करो रथावयवः। | |
| सुट् १३३ | १४७. विष्किरः शकुनौ वा<br>शकुनौ विष्किरो वा निपात्यते।<br>विष्किरः, विकिरो वा शकुनिः। | |
| सुट् १३३ | १४८. ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे<br>ह्रस्वात्सुड् भवति चन्द्रोत्तरपदे परे मन्त्रे।<br>सुश्चन्द्रः युष्मान्। | |
| सुट् १३३ | १४९. प्रतिष्कशश्च कशेः<br>प्रतिष्कशश्च निपात्यते, कशेरेव प्रतिश्चेदुपसर्गः।<br>ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः।<br>वार्त्तापुरुषः, सहायः, पुरोयायी वा प्रतिष्कश<br>इत्यभिधीयते। सूत्रे 'कशेः' धातोरुपादानं यत्र<br>कशेरेव प्रतिरुपसर्गस्तत्रैव सुट् स्यात्<br>इत्यर्थबोधनार्थम्। तेन प्रतिगतः कशां प्रतिकशः<br>अश्व इत्यत्र सुड् न भवति। कशाशब्देऽपि<br>कशधातुरेव, प्रतिरुपसर्गस्तु गमेर्न तु कशेरिति<br>सूत्रमत्र न प्रवर्तते। | |
| सुट् १३३ | १५०. प्रस्कण्व-हरिश्चन्द्रावृषी<br>प्रस्कण्व-हरिश्चन्द्रौ निपात्येते ऋषी चेदभिधेयौ।<br>प्रस्कण्वः ऋषिः। हरिश्चन्द्रः राजर्षिः। | |
| सुट् १३३ | १५१. मस्कर-मस्करिणौ वेणु-परिव्राजकयोः<br>मस्कर-मस्करिणौ यथासंख्यं<br>वेणुपरिव्राजकयोर्निपात्येते।<br>मस्करो वेणुः। मस्करी परिव्राजकः। | |
| सुट् १३३ | १५२. कास्तीराजस्तुन्दे नगरे<br>कास्तीराजस्तुन्दे निपात्येते नगरे वाच्ये।<br>कास्तीरं नाम नगरम्। अजस्तुन्दं नाम नगरम्। | |

| | | |
|---|---|---|
| सुट् १३२ | **१५३. पारस्करप्रभृतीनि च संज्ञायाम्**<br>पारस्करप्रभृतीनि च शब्दस्वरूपाणि निपात्यन्ते संज्ञायां विषये।<br>पारस्करो देशः।<br>पारं करोतीति विग्रहे 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टः।<br>कारस्करो वृक्षः।<br>कारं करोतीति विग्रहे पूर्ववट्टः।<br>रथस्पा नदी। रथं पातीति विग्रहे 'आतोऽनुपसर्गे इति कः।<br>किष्किन्धा। गुहा। किमप्यन्तर्दधातीति विग्रहे किमुपपदाद् धाधातोः 'आतोऽनुपसर्गे' इति कः, किमो द्विर्वचनम्। वनस्पतिः=वनस्य पति रिति विग्रहः।<br>(वा०) तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च।<br>तस्करश्चोरः। तत्करोऽन्यः।<br>तत्करोतीति विग्रहे 'किंयत्तद्बहुषु' इत्यच् इति न्यासः।<br>बृहस्पतिर्देवता। बृहत्पतिरन्यः। बृहतां पतिरिति विग्रहः।<br>(वा०) प्रायस्य चित्तिचित्तयोः।<br>प्रायश्चित्तिः। प्रायश्चित्तम्।<br>प्रायस्यचित्तिः, चित्तं वेति विग्रहः।<br>''प्रायं पापं विजानीयाच्चित्तं तस्य शोधनम्'' इति स्मृतिः।<br>पारस्करप्रभृतिराकृतिगणः।<br>तेन शतात्पराणि परःशतानीत्यादि सिद्धम्। | |
| | **१५४. अनुदात्तं पदमेकवर्जम्**<br>यत्रान्यः स्वरः - उदात्तः, स्वरितो वा विधीयते तत्र 'अनुदात्तं पदमेकं वर्जयित्वा भवति' इत्येतदुपस्थितं द्रष्टव्यम्।<br>परिभाषेयम्।<br>यथा 'धातोः' इति सूत्रेण गोपायति इत्यत्र अन्तोदात्तो विधीयते इति तत्रास्योपस्थित्या अन्त्याचमुदात्तं वर्जयित्वा परिशिष्टमनुदात्तं भवति। | |

| | | |
|---|---|---|
| | १५५. कर्षात्वतो घञोऽन्त उदात्तः<br>कर्षतेर्धातोः, आकारवतश्च घञन्तस्यान्त उदात्तो भवति।<br>कर्ष - कर्षः।<br>आत्वतः (आकारवान्) - पाकः। त्यागः। दायः। धायः। | अन्तः १८१<br>उदात्तः २२० |
| अन्तोदात्तः १५५ | १५६. उञ्छादीनां च<br>उञ्छादीनां चान्त उदात्तो भवति।<br>उञ्छः। म्लेच्छः। | |
| अन्तोदात्तः १५५ | १५७. अनुदात्तस्य च यत्रोदात्तलोपः<br>यत्रोदात्तलोपो भवति तत्र अनुदात्तस्योदात्तो भवति।<br>कुमारी। पथः। | |
| अन्तोदात्तः १५५ | १५८. धातोः<br>धातोरन्त उदात्तो भवति।<br>पचति। पठति। | |
| अन्तोदात्तः १५५ | १५९. चितः<br>चितोऽन्त उदात्तो भवति।<br>भञ्जेः कुरच् - भङ्गुरम्। | चितः १६० |
| अन्तोदात्तः १५५<br>चितः १६० | १६०. तद्धितस्य<br>चितस्तद्धितस्यान्त उदात्तो भवति।<br>कुञ्ज + च्फञ् = कौञ्जायनाः। | तद्धितस्य १६१ |
| अन्तोदात्तः १५५<br>तद्धितस्य १६० | १६१. कितः<br>कितस्तद्धितस्यान्त उदात्तो भवति।<br>नड + फक् = नाडायनः। | |
| अन्तोदात्तः १५५ | १६२. तिसृभ्यो जसः<br>तिसृभ्यो जसोऽन्त उदात्तो भवति।<br>तिस्रस्तिष्ठन्ति। | |
| अन्तोदात्तः १५५ | १६३. चतुरः शसि<br>चतुरोऽन्त उदात्तो भवति शसि।<br>चतुरः पश्य। | |
| उदात्तः १५५ | १६४. सावेकाचस्तृतीयादिर्विभक्तिः<br>सौ (सप्तमीबहुवचने) य एकाच् ततः परा तृतीयादिः विभक्तिः उदात्ता भवति।<br>वाचा। वाग्भ्याम्।<br>सावेकाच इति किम्? राज्ञा। | एकाचः<br>तृतीयादिः १६५<br>विभक्तिः १८० |

| | | |
|---|---|---|
| एकाचः १६४<br>तृतीयादिः १६४<br>विभक्तिः १६४.<br>उदात्तः १५५ | १६५.<br>अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे<br>सावेकाचः अन्तोदात्तादुत्तरपदात् तृतीयादिविभक्तिः अन्यतरस्यामुदात्तो भवति, अनित्यसमासे।<br>परमवाचा। परमवाचे। | अन्तोदात्तात्<br>१७४ |
| विभक्तिः १६४<br>उदात्तः १५५ | १६६. अञ्चेश्छन्दस्यसर्वनामस्थानम्<br>अञ्चेश्छन्दस्यसर्वनामस्थानमुदात्तं भवति छन्दसि।<br>इन्द्रो दधीचो अस्थभिः। | असर्वनाम-<br>स्थानम् १७१ |
| असर्वनामस्थानम्१६६<br>उदात्तः १५५<br>अन्तोदात्तात्१६५ | १६७. ऊडिदंपदाद्यप्-पुम्रैद्युभ्यः<br>ऊठ्, इदम्, पदादि, अप्, पुम्, रै, दिव् - इत्येतेभ्योऽसर्वनामस्थानमुदात्तं भवति।<br>प्रष्ठौहः। आभ्याम्। निपदश्चतुरो जहि; या दतो धावते। अपः पश्य। पुंसः। रायः पश्य। दिवः पश्य। | |
| असर्वनामस्थानम्१६६<br>उदात्तः १५५ | १६८. अष्टनो दीर्घात्<br>दीर्घादष्टनोऽसर्वनामस्थानमुदात्तं भवति।<br>अष्टाभिः। | |
| असर्वनामस्थानम्१६६<br>उदात्तः १५६ | १६९. शतुरनुमो नद्यजादी<br>अनुमः शतुः परा नदी (नदीसंज्ञकः), अजादि असर्वनामस्थानं च उदात्तं भवति।<br>तुदती। तुदता। | नद्यजादी १७१ |
| नद्यजादी १६९<br>असर्वनामस्थानम्१६६ | १७०. उदात्तयणो हल्पूर्वात्<br>उदात्तस्थाने यो यण् हल्पूर्वः, तस्मात् परा नदी (नदीसंज्ञकः), अजादि असर्वनामस्थानं च उदात्तं भवति।<br>कर्त्री। कर्त्रा। | उदात्तयणः<br>हल्पूर्वात् १७१ |
| असर्वनामस्थानम्१६६<br>नद्यजादी १६९<br>उदात्तयणः १७०<br>हल्पूर्वात् १७० | १७१. नोङ्धात्वोः<br>ऊङः स्थाने यो यण् , धातोश्च य उदात्तस्थानिको यो यण्, तस्मात् परम् अजादि असर्वनामस्थानमुदात्तं भवति।<br>ब्रह्मबन्ध्वा। सकृल्ल्वा। | |
| उदात्तः १५५ | १७२. ह्रस्वनुड्भ्यां मतुप्<br>ह्रस्वनुड्भ्यां परः मतुब् उदात्तो भवति।<br>अग्निमान्। अक्षण्वता। | मतुप् १७३ |
| उदात्तः १५५ मतुप्१७२<br>ह्रस्वात्१७२ | १७३. नामन्यतरस्याम्<br>मतुपि यो ह्रस्वस्तस्मात् नाममन्यतरस्यामुदात्तो भवति।<br>अग्नीनाम्। | नाम् १७४ |

| | | |
|---|---|---|
| नाम् १७३<br>उदात्तः १५६ | १७४. ङ्याश्छन्दसि बहुलम्<br>ङ्याश्छन्दसि नाम् बहुलमुदात्तो भवति।<br>बह्वीनां पिता। | |
| उदात्तः १५५<br>विभक्तिः १६४ | १७५. षट्-त्रि-चतुर्भ्यो हलादिः<br>षट्संज्ञकेभ्यः, त्रिचतुर्भ्यां च परा या. हलादिः<br>विभक्तिः सा उदात्ता भवति छन्दसि।<br>षण्णाम्। त्रयाणाम्। चतुर्ण्णाम्। | षट-त्रि-<br>चतुर्भ्यः १७७ |
| षट्-त्रि-चतुर्भ्यः१७५<br>विभक्तिः१६४ | १७६. झल्युपोत्तमम्<br>षट्संज्ञकेभ्यः, त्रिचतुर्भ्यां च परा या झलादिः<br>विभक्तिः तदन्ते पदे उपोत्तममुदात्तं भवति।<br>पञ्चभिः। तिसृभिः। चतसृभिः। | झलि<br>उपोत्तमम् १७७ |
| झलि १७६<br>उपोत्तमम् १७६<br>षट्-त्रि-चतुर्भ्यः१७५<br>उदात्तः१५५विभक्तिः१६४ | १७७. विभाषा भाषायाम्<br>षट्संज्ञकेभ्यः, त्रिचतुर्भ्यां च परा या झलादिः<br>विभक्तिः तदन्ते पदे उपोत्तममुदात्तं विभाषा भवति<br>भाषायाम्।<br>पञ्चभिः। तिसृभिः। चतसृभिः। | |
| उदात्तः १५५ | १७८. न<br>गो-श्वन्-साववर्ण-राडङ्-क्रुङ्-कृद्भ्यः<br>गो-श्वन्-सावर्ण (सौ-प्रथमैकवचने यदवर्णान्तम्)<br>राट्-अङ्( क्विबन्तःअञ्च् इति धातुः)-क्रुङ्-कृद्भ्यो<br>यदुक्तं तन्न भवति।<br>गवा। शुना। येभ्यः। राजा।<br>एषु 'सावेकाचः' इति प्राप्तोदात्तो निषिध्यते।<br>अङ् - प्राञ्चा।<br>अत्र 'अञ्चेश्छन्दसि' इति प्राप्तोदात्तो निषिध्यते।<br>क्रुञ्चा। कृता।<br>अत्रापि 'सावेकाचः' इति प्राप्तोदात्तो निषिध्यते। | न १८१ |
| उदात्तः १५५ न १७८<br>विभक्तिः१६४ | १७९. दिवो झल्<br>दिवः परा झलादिर्विभक्तिरुदात्ता न भवति।<br>द्युभ्याम्। द्युभिः।<br>अत्र 'सावेकाचः' इति प्राप्तोदात्तो निषिध्यते,<br>'ऊडिदम्' इति प्राप्तो वा। | झल् १८० |
| उदात्तः १५५ न १७८<br>झल् १७९<br>विभक्तिः१६४ | १८०. नृ चान्यतरस्याम्<br>नृ इति लुप्त पञ्चमीकं पदम्। नृशब्दाद् झल्<br>(झलादिः) विभक्तिरुदात्ता न भवति।<br>नृभ्याम्। नृभिः। नृभ्यः। नृषु।<br>अत्र 'सावेकाचः' इति प्राप्तोदात्तो निषिध्यते। | |

| | | |
|---|---|---|
| | १८१. तित्स्वरितम्<br>तित्स्वरितं भवति।<br>कार्यम्। हार्यम्। | |
| | १८२. तास्यनुदात्तेन्ङिदुपदेशाल्ल-<br>सार्वधातुकमनुदात्तमह्न्विङोः<br>तासि, अनुदात्तेत्, ङित्, अदुपदेश - इत्येतेभ्यः लसार्वधातुकमनुदात्तं भवति, न तु ह्नु, इङ्-इत्येतयोः।<br>कर्ता। आस्ते। सूते। तुदतः।<br>अह्न्विङोः इति किम्? ह्नुते। यदधीते। | उपदेशात् १६१<br>लसार्वधातुकम् १८८ |
| उदात्तः १५५ | १८३. आदिः सिचोऽन्यतरस्याम्<br>सिचः (सिजन्तस्य) आदिरुदात्तोऽन्यतरस्यां भवति।<br>मा हि कार्ष्टाम्।<br>मा हि कार्ष्टाम्।<br>एकोऽत्राद्युदात्तः। पक्षेऽपरत्रान्तोदात्तः। | आदिः १८४<br>अन्यतरस्याम् १८४ |
| लसार्वधातुके १८२<br>आदिः १८३<br>अन्यतरस्याम् १८३<br>उदात्तः १५५ | १८४. स्वपादिहिंसामच्यनिटि<br>स्वपादि-हिंसाम् अनिटि अचि (अजादौ) लसार्वधातुके परतोऽन्यतरस्यामादिरुदात्तो भवति।<br>स्वपन्ति; श्वसन्ति। हिंसन्ति। | अच्यनिटि १८५ |
| लसार्वधातुके १८२<br>अनिटि१८४<br>उदात्तः१५५ | १८५. अभ्यस्तानामादिः<br>अचि(अजादौ) अनिटि लसार्वधातुके अभ्यस्तानामादिः उदात्तो भवति।<br>ददति। दधति। | अभ्यस्तानाम्१८८<br>आदिः १८७ |
| अभ्यस्तानाम् १८५<br>आदिः १८५<br>लसार्वधातुके १८२<br>उदात्तः१५५ | १८६. अनुदात्ते च<br>अनुदात्ते लसार्वधातुके च अभ्यस्तानामादिः उदात्तो भवति।<br>ददाति। जहाति। | |
| आदिः१८५<br>उदात्तः १५५ | १८७. सर्वस्य सुपि<br>सुपि सर्वस्य (सर्वशब्दस्य) आदिरुदात्तो भवति।<br>सर्वः, सर्वौ, सर्वे। | |

| | | |
|---|---|---|
| अभ्यस्तानाम् १८५<br>लसार्वधातुके१८२<br>उदात्तः१५५ | **१८८. भी-ह्री-भृ-हु-मद-जन-धन-दरिद्रा-जागरां प्रत्ययात्पूर्वं पिति**<br>भी-ह्री-भृ-हु-मद-जन-धन-दरिद्रा-जागराम् अभ्यस्तानां प्रत्ययात्पूर्वमुदात्तं भवति लसार्वधातुके पिति।<br>बिभेति। जिह्रेति। बिभर्ति।<br>जुहोति। ममत्तु नः परिज्मा।<br>जजनदिन्द्रम्। दधनत्। दरिद्रति। जागर्ति। | प्रत्यायात्<br>पूर्वम् १८९ |
| प्रत्यायात् १८८<br>पूर्वम् १८८ उदात्तः१५५ | **१८९. लिति**<br>लिति प्रत्ययात्पूर्वमुदात्तं भवति।<br>चिकीर्षकः। | |
| उदात्तः १५५ | **१९०. आदिर्णमुल्यन्यतरस्याम्**<br>णमुलि अन्यतरस्यामादिरुदात्तो भवति।<br>लोलूयं लोलूयम्।<br>आम्रेडितानुदात्तत्वे कृते पूर्वो यः 'लोलूयम्' इति शब्दः स प्रकृतसूत्रेणाद्युदात्तः; पक्षे लित्स्वरेण मध्योदात्तः। | आदिः १९२<br>अन्यतरस्याम्१९२ |
| उपदेशात् १८२<br>अन्यतरस्याम् १९०<br>आदिः१९० उदात्तः१५५ | **१९१. अचः कर्तृयकि**<br>अचः कर्तृयकि अन्यतरस्यामादिरुदात्तो भवति।<br>लूयते केदारः स्वयमेव।<br>पक्षे लसार्वधातुकानुदात्तत्वे कृते यकः एव 'आद्युदात्तश्च' इति सूत्रेणोदात्तस्वरः। | |
| आदिः१९० उदात्तः१५५ | **१९२. थलि च सेटीडन्तो वा**<br>सेटि थलि (थलन्ते पदे) इट्, अन्तः, आदिर्वा उदात्तो भवति, अन्यतरस्याम्।<br>लुलुविथ। अत्र इट्, आदिः, अन्तश्च पर्यायेण उदात्तो भवति।<br>पक्षे 'लिति' इति सूत्रेण द्वितीयलुशब्दस्योकारोऽपीति पर्यायेण चत्वारोऽपि स्वरा उदात्ता भवन्ति 'लुलुविथ' इति पदे। | |
| आदिः१९०<br>उदात्तः१५५ | **१९३. ञ्नित्यादिर्नित्यम्**<br>ञिति, निति च नित्यम् आदिरुदात्तो भवति।<br>ञ् च न् च ञ्नौ, तौ इतौ यस्य स ञ्नित्, तस्मिन् ञ्निति।<br>गार्ग्यः। 'गर्गादिभ्यो यञ्' इति यञ्।<br>वासुदेवकः, अर्जुनकः।<br>'वासुदेवार्जुनाभ्यां वुन्' इति वुन्प्रत्ययः। | आदिः २१२ |

| | | |
|---|---|---|
| आदिः१६०<br>उदात्तः१५५ | १९४. आमन्त्रितस्य च<br>आमन्त्रितस्य च आदिरुदात्तो भवति।<br>देवदत्त ! | |
| आदिः१६०<br>उदात्तः१५५ | १९५. पथिमथोः सर्वनामस्थाने<br>पथिमथोः सर्वनामस्थाने आदिरुदात्तो भवति।<br>पन्थाः। मन्थाः। | |
| आदिः१६०<br>उदात्तः१५५ | १९६. अन्तश्च तवै युगपत्<br>तवै (तवैप्रत्ययान्तः) युगपद् आदिः, अन्तश्च उदात्तो भवति।<br>कर्त्तवै। हर्त्तवै। | |
| आदिः१६०<br>उदात्तः१५५ | १९७. क्षयो निवासे<br>निवासेऽर्थे यः क्षयः स आद्युदात्तो भवति।<br>क्षयः। | |
| आदिः१६०<br>उदात्तः१५५ | १९८. जयः करणम्<br>करणवाची जयः आद्युदात्तो भवति।<br>जयन्त्यनेन जयोऽश्वः। | |
| आदिः१६०<br>उदात्तः१५५ | १९९. वृषादीनां च<br>वृषादीनामादिरुदात्तो भवति।<br>वृषः। जनः। ज्वरः। | |
| आदिः१६०<br>उदात्तः१५५ | २००. संज्ञायामुपमानम्<br>संज्ञायाम् उपमानम् आद्युदात्तं भवति।<br>चञ्चेव चञ्चा। | संज्ञाया-<br>मुपमानम् २०१ |
| संज्ञायामुपमानम्२००<br>आदिः१६०<br>उदात्तः१५५ | २०१. निष्ठा च द्व्यजनात्<br>द्व्यच् निष्ठा (निष्ठान्तम्) आद्युदात्ता भवति संज्ञायाम्, तत्र आकारस्तु उदात्तो न भवति।<br>दत्तः। गुप्तः।<br>अनादिति किम् ? त्रातः। आप्तः। | द्व्यच् २०६ |
| आदिः१६०<br>उदात्तः१५५ | २०२. शुष्क-धृष्टौ<br>शुष्क धृष्टौ आद्युदात्तौ भवतः।<br>असंज्ञार्थ आरम्भः।<br>शुष्कः। धृष्टः। | |
| आदिः१६०<br>उदात्तः१५५ | २०३. आशितः कर्ता<br>कर्ता (कर्तृवाची) आशितः आद्युदात्तो भवति।<br>आशितो देवदत्तः।<br>आङ्पूर्वाद् 'अश भोजने' इत्यस्माद् धातोः कर्मणोऽविवक्षायां कर्तरि क्तः। | |

| | | |
|---|---|---|
| आदिः१६०<br>उदात्तः१५५ | २०४. रिक्ते विभाषा<br>रिक्ते विभाषा आदिरुदात्तो भवति।<br>रिक्तः।<br>पक्षे प्रत्ययस्वरेणान्तोदात्तः। | विभाषा २०५ |
| विभाषा २०४<br>आदिः१६०<br>उदात्तः१५५ | २०५. जुष्टार्पिते च च्छन्दसि<br>जुष्टार्पिते चच्छन्दसि आद्युदात्ते भवतो विभाषा।<br>जुष्टः। अर्पितः।<br>पक्षे, भाषायां च प्रत्ययस्वरेणान्तोदात्तौ। | जुष्टार्पिते २०६ |
| जुष्टार्पिते २०५<br>आदिः१६०<br>उदात्तः१५५ | २०६. नित्यं मन्त्रे<br>जुष्टार्पिते नित्यमाद्युदात्ते भवतः मन्त्रे।<br>जुष्टः। अर्पितः। | |
| आदिः१६०<br>उदात्तः१५५ | २०७. युष्मदस्मदोर्ङसि<br>युष्मदस्मदोर्ङसि आदिरुदात्तो भवति।<br>तव। मम। | युष्मदस्मदोः २०८ |
| युष्मदस्मदोः २०७<br>आदिः१६०<br>उदात्तः१५५ | २०८. ङयि च<br>युष्मदस्मदोर्ङयि च आदिरुदात्तो भवति।<br>तुभ्यम्। मह्यम्।<br>पृथग्योगकरणं यथासंख्यनिरासार्थम्। | |
| द्व्यच् २०१<br>आदिः१६०<br>उदात्तः१५५ | २०९. यतोऽनावः<br>अनावः यतः (यत्प्रत्ययान्तस्य) द्व्यचः आदिरुदात्तो भवति।<br>चेयम्। जेयम्। कण्ठ्यम्। ओष्ठ्यम्।<br>अनावः इति किम् ? नाव्यम्। | |
| आदिः१६०<br>उदात्तः१५५ | २१०. ईड-वन्द-वृ-शंस-दुहां ण्यतः<br>ईड-वन्द-वृ-शंस-दुहां ण्यतः (ण्यत्प्रत्ययान्तानाम्) आदिरुदात्तो भवति।<br>ईड्यम्। वन्द्यम्। वार्यम्। शंस्यम्। दोह्या धेनुः। | |
| आदिः१६०<br>उदात्तः१५५ | २११. विभाषा वेण्विन्धानयोः<br>विभाषा विण्विन्धानयोरादिरुदात्तो भवति।<br>वेणुः।<br>पक्षे प्रत्ययस्वरेणान्तोदात्तः।<br>इन्धानः।<br>पक्षे मध्योदात्तः। | विभाषा २१२ |

| | | |
|---|---|---|
| विभाषा २११<br>आदिः१६०<br>उदात्तः१५५ | २१२. त्याग-राग-हास-कुह-श्वठ-क्रथानाम्<br>त्याग-राग-हास-कुह-श्वठ-क्रथानां विभाषा आद्युदात्तो भवति।<br>त्यागः। रागः। हासः। कुह। श्वठः। क्रथः। पक्षे एते ऽन्तोदात्ताः। | |
| उदात्तम् १५५ | २१३. उपोत्तमं रिति<br>रिति (रिदन्ते) उपोत्तममुदात्तं भवति।<br>करणीयम्।<br>'तव्यत्तव्यानीयर' इति सूत्रेण अनीयर्।<br>पटुजातीयः।<br>प्रकारवचने जातीयर इति सूत्रेण जातीयर्। | उपोत्तमम् २१४ |
| उपोत्तमम् २१३ उदात्तम् १५५ | २१४. चङ्यन्यतरस्याम्<br>चङि (चङन्ते) अन्यतरस्याम् उपोत्तमम् उदात्तं भवति।<br>म हि चीकरताम्।<br>अत्र ककाराकार उदात्तः। पक्षे चङो ऽकार एव प्रत्ययस्वरेणोदात्तः। | |
| उदात्तम्१५५ | २१५. मतोः पूर्वमात् संज्ञायां स्त्रियाम्<br>मतोः पूर्वमाद् उदात्तं भवति संज्ञायां स्त्रियाम्।<br>शरावती। | संज्ञायाम्<br>स्त्रियाम् २१७ |
| उदात्तः१५५<br>संज्ञायाम् २१५<br>स्त्रियाम् २१५ | २१६. अन्तो ऽवत्याः<br>अवत्याः (अवतीशब्दस्य) अन्त उदात्तो भवति, स्त्रियां संज्ञायाम्।<br>अजिरवती। | अन्तः २१६ |
| संज्ञायाम् २१५<br>स्त्रियाम् २१५<br>अन्तोदात्तः२१६,१५५ | २१७. ईवत्याः<br>ईवत्याः (ईवतीशब्दस्य) अन्त उदात्तो भवति।<br>अहीवती। कृषीवती। मुनीवती। | |
| अन्तः २१६ उदात्तः१५५ | २१८. चौ<br>चौ (लुप्ताकारनकारे ऽञ्चतौ) परे पूर्वस्यान्त उदात्तो भवति।<br>दधीचः पश्य। | |
| अन्तः २१६ उदात्तः१५५ | २१९. समासस्य<br>समासस्यान्त उदात्तो भवति।<br>राजपुरुषः। ब्राह्मणकम्बलः। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां षष्ठाध्यायस्य प्रथमः पादः ।।

।। श्रीः ।।

## ।। अथ षष्ठाध्यायस्य द्वितीयः पादः ।।

| | | |
|---|---|---|
| ॱ | १. बहुव्रीहौ प्रकृत्या पूर्वपदम्<br>बहुव्रीहौ समासे पूर्वपदं प्रकृत्या भवति।<br>कार्ष्णोत्तरासङ्गाः। मनुष्यनाथः।<br>कार्ष्णेति पूर्वपदमन्तोदात्तम्, णकारोत्तराकारः उदात्तः, परिशिष्टमनुदात्तम्। मनुष्येति पूर्वपदं स्वरितान्त इति यकारोत्तराकारः स्वरितः, परिशिष्टमनुदात्तम्। | प्रकृत्या ६३<br>पूर्वपदम् ११० |
| प्रकृत्या १ पूर्वपदम् १ | २. तत्पुरुषे तुल्यार्थ-तृतीया-सप्तम्यु-पमानाव्यय-द्वितीया-कृत्याः<br>तत्पुरुषे समासे तुल्यार्थ-तृतीया-सप्तम्युपमानाव्यय-द्वितीया-कृत्याः पूर्वपदभूताः प्रकृत्या भवन्ति।<br>तुल्यश्वेतः; सदृक्च्छ्वेतः। शङ्कुलाखण्डः। अक्षशौण्डः। शस्त्रीश्यामा। अब्राह्मणः। मुहूर्तसुखम्। भोज्योष्णम्।<br>तुल्यादयः शब्दाः अन्तोदात्ताः, कृत्यप्रत्यान्तः भोज्यशब्दश्च अन्तस्वरितः।<br>(वा०) अव्यये नञ्-कु-निपातानामिति वक्तव्यम्।<br>इह मा भूत्- स्नात्वाकालक इति। | तत्पुरुषे २४ |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | ३. वर्णो वर्णेष्वनेते<br>तत्पुरुषे वर्णः (वर्णविशेषवाचिशब्दः) पूर्वपदभूतः प्रकृत्या भवति वर्णेषु, न तु एतशब्दे।<br>कृष्णसारङ्गः।<br>कृष्णशब्दोऽन्तोदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | ४. गाध-लवणयोः प्रमाणे<br>प्रमाणे (प्रमाणवाचिनि) तत्पुरुषे पूर्वपदं प्रकृत्या भवति गाधलवणयोः।<br>अरित्रगाधमुदकम्। गोलवणं दीयते।<br>अरित्रशब्दो मध्योदात्तः, गोशब्दश्च अन्तोदात्तः। | |

| | | |
|---|---|---|
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | ५. दायाद्यं दायादे<br>तत्पुरुषे दायाद्यम् (आदीयमानः दायः धनादिः) पूर्वपदं प्रकृत्या भवति दायादे।<br>धनदायादः।<br>धनशब्दः आद्युदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | ६. प्रतिबन्धि चिर-कृच्छ्रयोः<br>तत्पुरुषे प्रतिबन्धि पूर्वपदं प्रकृत्या भवति चिर-कृच्छ्रयोः परयोः।<br>गमनचिरम्। गमनकृच्छ्रम्।<br>गमनशब्दः 'लिति' इति सूत्रेण लिति परे पूर्वोदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | ७. पदेऽपदेशे<br>तत्पुरुषे पूर्वपदं प्रकृत्या भवति अपदेशे (अपदेशवाचिनि पदे परे)।<br>अपदेशः व्याजः, छद्मो वा।<br>मूत्रपदेन प्रस्थितः। मूत्रव्याजेन प्रस्थित इत्यर्थः।<br>मूत्रशब्दः अन्तोदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | ८. निवाते वातत्राणे<br>तत्पुरुषे पूर्वपदं प्रकृत्या भवति वातत्राणे (वातत्राणवाचिनि) निवाते।<br>कुट्या इव निवातं कुटीनिवातम्।<br>कुटीशब्दः आद्युदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | ९. शारदेऽनार्तवे<br>तत्पुरुषे पूर्वपदं प्रकृत्या भवति अनार्तवे (अनार्तववाचिनि) शारदे।<br>रज्जुशारदमुदकम्।<br>सद्यो रज्जूद्धृतमुदकं रज्जुशारदमित्युच्यते।<br>रज्जुशब्दः आद्युदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | १०. अध्वर्यु-कषाययोर्जातौ<br>तत्पुरुषे पूर्वपदं प्रकृत्या भवति जातौ (जातिवाचिनोः) अध्वर्युकषाययोः।<br>प्राच्याध्वर्युः। कठाध्वर्युः। कलापाध्वर्युः।<br>प्राच्यशब्दः आद्युदात्तः,कठकलापौ चान्तोदात्तौ। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | ११. सदृश-प्रतिरूपयोः सादृश्ये<br>सादृश्ये (सादृश्यवाचिनि) तत्पुरुषे पूर्वपदं प्रकृत्या भवति सदृश-प्रतिरूपयोः।<br>पितृसदृशः। पितृप्रतिरूपः।<br>पितृशब्दोऽन्तोदात्तः। | |

| | | |
|---|---|---|
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | १२. द्विगौ प्रमाणे<br>तत्पुरुषे पूर्वपदं प्रकृत्या भवति प्रमाणे (प्रमाणवाचिनि) द्विगौ (उत्तरपदे परतः)<br>प्राच्यसप्तशमः।<br>प्राच्यशब्द आद्युदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | १३. गन्तव्यपण्यं वाणिजे<br>तत्पुरुषे गन्तव्य-पण्यवाचि पूर्वपदं प्रकृत्या भवति वाणिजे उत्तरपदे।<br>मद्रवाणिजः। गोवाणिजः।<br>मद्रगोशब्दौ अन्तोदात्तौ। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | १४. मात्रोपज्ञोपक्रमच्छाये नपुंसके<br>नपुंसके तत्पुरुषे पूर्वपदं प्रकृत्या भवति मात्रोपज्ञोपक्रमच्छाये (उत्तरपदे)।<br>भिक्षामात्रं न ददाति। पाणिनोपज्ञम्। आढ्योपक्रमं प्रासादः। इषुच्छायम्।<br>भिक्षा, पाणिन, आढ्य- इत्येते शब्दाः अन्तोदात्ताः इषुशब्दश्च आद्युदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | १५. सुख-प्रिययोर्हिते<br>हिते (हितवाचिनि) तत्पुरुषे पूर्वपदं प्रकृत्या भवति सुखप्रिययोः।<br>गमनसुखम्। गमनप्रियम्।<br>गमनशब्दः 'लिति' इति सूत्रेण लिति परे पूर्वोदात्तः। | सुख-प्रिययोः १६ |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २<br>सुख-प्रिययोः १५ | १६. प्रीतौ च<br>प्रीतौ (गम्यमानायाम्) तत्पुरुषे पूर्वपदं प्रकृत्या भवति सुख-प्रिययोः।<br>ब्राह्मणसुखं पायसम्।<br>छात्रप्रियोऽनध्यायः।<br>ब्राह्मणच्छात्रशब्दौ अन्तोदात्तौ। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | १७. स्वं स्वामिनि<br>तत्पुरुषे स्वम् (स्ववाचि) पूर्वपदं प्रकृत्या भवति स्वामिनि।<br>गोस्वामी। अश्वस्वामी। धनस्वामी।<br>गोशब्दः अन्तोदात्तः, अश्व, धन- इत्येतौ शब्दौ आद्युदात्तौ। | |

| | | |
|---|---|---|
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | **१८. पत्यावैश्वर्ये**<br>ऐश्वर्ये (ऐश्वर्यवाचिनि) तत्पुरुषे पूर्वपदं प्रकृत्या भवति पत्यौ।<br>गृहपतिः। सेनापतिः।<br>गृहशब्दोऽन्तोदात्तः, सेनाशब्द आद्युदात्तः। | पत्यौ ऐश्वर्ये २० |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ पत्यौ १८<br>ऐश्वर्ये १८ | **१९. न भू-वाक्-चिद्-दिधिषु**<br>ऐश्वर्ये तत्पुरुषे भू-वाक्-चिद्-दिधिषू- इत्येतानि पूर्वपदानि प्रकृत्या न भवन्ति पत्यौ।<br>भूपतिः। वाक्पतिः। चित्पतिः। दिधिषूपतिः।<br>एषु समासान्तोदात्तत्वम्। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ पत्यौ १८<br>ऐश्वर्ये १८ | **२०. वा भुवनम्**<br>ऐश्वर्ये तत्पुरुषे भुवनं पूर्वपदं प्रकृत्या वा भवति पत्यौ।<br>भुवनपतिः।<br>भुवनशब्दः प्रकृतिस्वरपक्षे आद्युदात्तः। पक्षे समासस्वरेणान्तोदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | **२१. आशङ्का-बाध-नेदीयस्सु संभावने**<br>सम्भावने (सम्भावनवाचिनि) तत्पुरुषे पूर्वपदं प्रकृत्या भवति आशङ्का, आबाध, नेदीयस्- इत्येतेषूत्तरपदेषु।<br>अस्तित्वाध्यवसायः, अस्तित्वनिश्चयो वा सम्भावनम्।<br>गमनाशङ्कं वर्तते। गमनाबाधम्। गमननेदीयः।<br>गमनशब्दः 'लिति' इति सूत्रेण लिति परे पूर्वोदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | **२२. पूर्वे भूतपूर्वे**<br>भूतपूर्वे (भूतपूर्ववाचिनि) तत्पुरुषे पूर्वपदं प्रकृत्या भवति पूर्वे।<br>आढ्यो भूतपूर्वः आढ्यपूर्वः।<br>आढ्यशब्दोऽन्तोदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | **२३. सविध-सनीड-समर्याद-सवेश-सदेशेषु सामीप्ये**<br>सामीप्ये (सामीप्यवाचिनि) तत्पुरुषे पूर्वपदं प्रकृत्या भवति सविध-सनीड- समर्याद- सवेश-सदेशेषु।<br>मद्रसविधम्। मद्रसनीडम्।<br>मद्रसमर्यादम्। मद्रसवेशम्। मद्रसदेशम्।<br>मद्रशब्दोऽन्तोदात्तः। | |

| | | |
|---|---|---|
| प्रकृत्या १ पूर्वपदम् १<br>तत्पुरुषे २ | २४. विस्पष्टादीनि गुणवचनेषु<br>तत्पुरुषे विस्पष्टादीनि पूर्वपदानि प्रकृत्या भवन्ति गुणवचनेषु (उत्तरपदेषु)<br>विस्पष्टकटुकम्। विचित्रकटुकम्।<br>विस्पष्ट, विचित्र- इत्येतौ शब्दौ आद्युदात्तौ। | |
| प्रकृत्या १ पूर्वपदम् १ | २५. श्र-ज्यावम-कन्-पापवत्सु भावे कर्मधारये<br>कर्मधारये भावे (भावाचि) यत्पूर्वपदं तत् प्रकृत्या भवति श्र, ज्य, अवम, कन् - इत्येतेषूतरपदेषु, पापशब्दवति चोत्तरपदे।<br>गमनश्रेष्ठम्। वचनज्येष्ठम्। गमनकनिष्ठम्। गमनपापिष्ठम्।<br>गमनशब्दः 'लिति' इति सूत्रेण लिति परे पूर्वोदात्तः। | कर्मधारये २८ |
| प्रकृत्या १ पूर्वपदम् १<br>कर्मधारये २५ | २६. कुमारश्च<br>कर्मधारये कुमारश्च पूर्वपदं प्रकृत्या भवति।<br>कुमारश्रमणा।<br>कुमारशब्दोऽन्तोदात्तः। | कुमारः २८ |
| प्रकृत्या १ पूर्वपदम् १<br>कुमारः २६ | २७. आदिः प्रत्येनसि<br>कर्मधारये पूर्वपदस्य कुमारस्यादिः(अच्) प्रकृत्या स्वरं लभते प्रत्येनसि उत्तरपद परे।<br>कुमारप्रत्येनाः।<br>कुमारशब्दः अन्तोदात्तः इति प्रकृतसूत्रेण पूर्वपदप्रकृतिस्वरेण कुमारशब्दस्यादिरुदात्तो भवति। | आदिः २८ |
| प्रकृत्या १ पूर्वपदम् १<br>कुमारः २६ | २८. पूगेष्वन्यतरस्याम्<br>कर्मधारये पूर्वपदस्य कुमारस्यादिः प्रकृत्या स्वरं लभते पूगेषु अन्यतरस्याम्।<br>नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगाः।<br>कुमारचातकाः। कुमारलोहध्वजाः।<br>चातकादयः पूगविशेषवाचकाः शब्दाः। प्रकृतसूत्रेण कुमारशब्दस्य आदिरुदात्तो भवति।<br>पक्षेऽन्तोदात्तत्वम् 'कुमारश्च' इति सूत्रेण। | |

| | | |
|---|---|---|
| प्रकृत्या १ पूर्वपदम् १ | २९. इगन्त-काल-कपाल-भगाल-शरावेषु द्विगौ<br>द्विगौ पूर्वपदं प्रकृत्या भवति इगन्त-काल-कपाल-भगाल-शरावेषु।<br>पञ्चारत्निः। पञ्चमास्यः। पञ्चकपालः। पञ्चभगालः। पञ्चशरावः।<br>पञ्चन् इति शब्दः 'न्रः संख्यायाः' (फिट्सूत्रम् २८) इति सूत्रेणाद्युदात्तः। | सम्पूर्णसूत्रम् ३१ |
| इगन्तकालकपाल-भगालशरावेषु २९<br>प्रकृत्या १ पूर्वपदम् १ | ३०. बह्वन्यतरस्याम्<br>द्विगौ पूर्वपदं बहु प्रकृत्या भवति अन्यतरस्याम् इगन्तादिषु उत्तरपदेषु।<br>बहुरत्निः। बहुमास्यः। बहुकपालः। बहुभगालः। बहुशरावः।<br>बहुशब्दोऽन्तोदात्तः इति प्रकृतिस्वरेण बहुरत्नि इत्यादौ पूर्वपदान्तोदात्तत्वम्। पक्षे समासान्तोदात्तत्वम्। | अन्यतरस्याम् ३१ |
| इगन्तकालकपाल-भगालशरावेषु २९<br>द्विगौ२९ अस्याम्३०<br>प्रकृत्या १ पूर्वपदम् १ | ३१. दिष्टि-वितस्त्योश्च<br>द्विगौ पूर्वपदमन्यतरस्यां प्रकृत्या भवति दिष्टि-वितस्त्योश्च।<br>पञ्चदिष्टिः। पञ्चवितस्तिः।<br>पूर्वपदं प्रकृतिस्वरेणाद्युदात्तत्वम्। पक्षे समासान्तोदात्तत्वम्। | |
| प्रकृत्या १ पूर्वपदम् १ | ३२. सप्तमी सिद्ध-शुष्क-पक्व-बन्धेष्वकालात्<br>अकालात् सप्तम्यन्तं पूर्वपदं प्रकृत्या भवति सिद्ध-शुष्क-पक्व-बन्धेषु उत्तरपदेषु।<br>सांकाश्यसिद्धः। ऊकशुष्कः। कुम्भीपक्वः। चक्रबन्धः।<br>साङ्काश्यशब्दोऽन्तोदात्तः,पक्षे मध्योदात्तश्च।<br>ऊक-कुम्भी-चक्रशब्दाः अन्तोदात्ताः।<br>अकालात् इति किम् ? पूर्वाह्णसिद्धः। | |

| | | |
|---|---|---|
| प्रकृत्या १ पूर्वपदम् १ | ३३. परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु<br>परिप्रत्युपापाः पूर्वपदभूताः प्रकृत्या भवन्ति, वर्ज्यमान, अहरवयव, रात्र्यवयव-इत्येतेषु।<br>परि- प्रतिपूर्वाह्णम्।<br>प्रति- प्रतिपूर्वरात्रम्।<br>उप- उपपूर्वाह्णम्, उपपूर्वरात्रम्।<br>अप- अपत्रिगर्तं वृष्टो देवः।<br>पर्यादयः आद्युदात्ताः। | |
| प्रकृत्या १ पूर्वपदम् १ | ३४. राजन्य-बहुवचन-द्वन्द्वेऽन्धकवृष्णिषु<br>अन्धकवृष्णिषु राजन्यबहुवचनानां द्वन्द्वे पूर्वपदं प्रकृत्या भवति।<br>श्वाफल्काश्च चैत्रकाश्चेति श्वाफल्कचैत्रकाः।<br>श्वाफल्कशब्दोऽन्तोदात्तः। | द्वन्द्वे ३७ |
| द्वन्द्वे ३४ प्रकृत्या १ पूर्वपदम् १ | ३५. संख्या<br>द्वन्द्वे पूर्वपदभूता संख्या प्रकृत्या भवति।<br>एकादश।<br>एकशब्द आद्युदात्तः। | |
| द्वन्द्वे ३४ प्रकृत्या १ पूर्वपदम् १ | ३६. आचार्योपसर्जनश्चान्तेवासी<br>यत्र आचार्योपसर्जनः द्वन्द्वस्तत्र अन्तेवासी पूर्वपदभूतः प्रकृत्या भवति।<br>आपिशलपाणिनीयाः। आपशिलशब्दोऽन्तोदात्तः। | |
| द्वन्द्वे ३४ प्रकृत्या १ पूर्वपदम् १ | ३७. कार्तकौजपादयश्च<br>कार्त-कौजपदिषु द्वन्द्वेषु पूर्वपदं प्रकृत्या भवति।<br>कार्तश्च कौजपश्च कार्तकौजपौ।<br>कार्तशब्दोऽन्तोदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १ | ३८. महान् व्रीह्यपराह्ण-गृष्टीष्वास-जाबाल-भार-भारत-हैलिहिल-रौरव-प्रवृद्धेषु<br>पूर्वपदभूतः महान् प्रकृत्या भवति व्रीहि, अपराह्ण, गृष्टि, इष्वास, जाबाल, भार, भारत, हैलिहिल, रौरव, प्रवृद्ध-इत्येतेषु।<br>महाव्रीहिः। महापराह्णः। महागृष्टिः। महेष्वासः।<br>महाजाबालः। महाभारः। महाभारतः।<br>महाहैलिहिलिः। महारौरवः। महाप्रवृद्धः।<br>महच्छब्दोऽन्तोदात्तः। | महान् ३९ |

| | | |
|---|---|---|
| प्रकृत्या १ पूर्वपदम् १ | ३९. क्षुल्लकश्च वैश्वदेवे<br>पूर्वपदभूतः क्षुल्लकः, चकारान्महांश्च प्रकृत्या भवति वैश्वदेवे।<br>क्षुल्लकवैश्वदेवम्। महावैश्वदेवम्। क्षुल्लकशब्दः, महच्छब्दश्च अन्तोदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १ | ४०. उष्ट्रः सादि-वाम्योः<br>पूर्वपदभूतः उष्ट्रः प्रकृत्या भवति सादि-वाम्योः।<br>उष्ट्रसादि। उष्ट्रवामि।<br>कर्मधारयः, षष्ठीसमासो वा।<br>उष्ट्रशब्दः आद्युदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १ | ४१. गौः साद-सादि-सारथिषु<br>पूर्वपदभूतः गौः प्रकृत्या भवति साद-सादि-सारथिषु।<br>गोसादः। गोसादिः। गो सारथिः।<br>गोशब्दोऽन्तोदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १ | ४२. कुरु-गार्हपत-रिक्तगुर्वसूत-जरत्यश्लीलदृढरूपा-पारेवडवा-तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च<br>कुरुगार्हपत, रिक्तगुरु,असूतजरती, अश्लीलदृढरूपा, पारेवडवा, तैतिलकद्रूः, पण्यकम्बल- इत्येतेषां, दासीभारादीनां च पूर्वपदं प्रकृत्या भवति।<br>कुरुगार्हपतम्। रिक्तगुरुः। असूतजरती। अश्लीदृढरूपा। पारेवडवा। तैतिलकद्रूः। पण्यकम्बलः।<br>दासीभारः। देवहूतिः।<br>कुरुशब्दोऽन्तोदात्तः। रिक्तशब्दो विकल्पेन आद्युदात्तोऽन्तोदात्तो वा।<br>असूताश्लीलशब्दावाद्युदात्तौ। पारशब्दोऽन्तोदात्तः। तैतिलशब्दोऽणन्तः इति अन्तोदात्तः। पण्यशब्द आद्युदात्तः। दासी-देवशब्दौ अन्तोदात्तौ। | |
| प्रकृत्या १ पूर्वपदम् १ | ४३. चतुर्थी तदर्थे<br>चतुर्थ्यन्तं पूर्वपदं प्रकृत्या भवति तदर्थे।<br>यूपाय दारु यूपदारु। यूपशब्द आद्युदात्तः। | चतुर्थी ४५ |
| चतुर्थी४३ प्रकृत्या १ पूर्वपदम् १ | ४४. अर्थे<br>चतुर्थ्यन्तं पूर्वपदं प्रकृत्या भवति अर्थे।<br>मात्रे इदं मात्रर्थम्। मातृशब्दोऽन्तोदात्तः। | |

| | | |
|---|---|---|
| चतुर्थी४३ प्रकृत्या १<br>पूर्वपदम् १ | ४५. क्ते च<br>पूर्वपदभूता चतुर्थीयन्त पूर्वपदं प्रकृत्या भवति क्तान्ते उत्तरपदे परतः।<br>गवे हितं गोहितम्।<br>गोशब्दोऽन्तोदात्तः। | क्ते ४६ |
| क्ते४५ प्रकृत्या १<br>पूर्वपदम् १ | ४६. कर्मधारयेऽनिष्ठा<br>कर्मधारये पूर्वपदभूता अनिष्ठान्तं पूर्वपदं प्रकृत्या भवति क्ते।<br>श्रेणिकृताः।<br>श्रेणिशब्द आद्युदात्तः।<br>अनिष्ठेति किम्? कृताकृतम्। | |
| प्रकृत्या १ पूर्वपदम् १ | ४७. अहीने द्वितीया<br>अहीने(अहीनवाचिनि समासे) पूर्वपदभूता द्वितीया प्रकृत्या भवति क्ते।<br>हीनम्= त्यक्तम्,न हीनम् अहीनम्। पूर्वपदद्वारेण समासस्याहीनवाचित्वम्।<br>कष्टं श्रितः इति कष्टश्रितः।<br>अहीने इति किम्? कान्तारातीतः। योजनातीतः।<br>कान्तारातीतशब्दोऽत्र हीनवाची। | |
| प्रकृत्या १ पूर्वपदम् १ | ४८. तृतीया कर्मणि<br>पूर्वपदभूता तृतीया प्रकृत्या भवति कर्मणि क्ते।<br>अहिना हतः अहिहतः। | कर्मणि ४६ |
| क्ते४५ कर्मणि ४८<br>प्रकृत्या १ पूर्वपदम् १ | ४६. गतिरनन्तरः<br>अनन्तरो गतिः पूर्वपदभूतः प्रकृत्या भवति कर्मणि क्ते।<br>प्रकृतः।<br>प्रशब्द आद्युदात्तः।<br>'अनन्तरः' इति पुँल्लिङ्गनिर्देशाद् गतिशब्दः क्तिजन्तः, निपातनाच्चानुनासिकलोपः।<br>अनन्तर इति किम्? अभ्युद्धृतः। समुद्धृतः। | गतिः ५२<br>अनन्तरः ५१ |
| गतिः४६ अनन्तरः४६<br>प्रकृत्या १ | ५०. तादौ च निति कृत्यतौ<br>अनन्तरो गतिः पूर्वपदभूतः प्रकृत्या भवति तादौ निति च कृति, न तु 'तु' इत्येतस्मिन्।<br>प्रकर्तुम्। प्रशब्द आद्युदात्तः।<br>अतौ इति किम्? आगन्तुः।<br>'सितनिगमिमसि'(उणादिसूत्रम्) इति तुन्। | |

| | | |
|---|---|---|
| गतिः४९ अनन्तरः४९ प्रकृत्या १ उदात्तः | ५१. तवै चान्तश्च युगपत्<br>तवै (तवैप्रत्यये परे) अनन्तरो गतिः प्रकृत्या भवति, तवै इत्यस्यान्तश्च प्रकृत्याश्रयं स्वरं लभते युगपत्।<br>युगपत्= एककालावच्छेदेन।<br>अन्वेतवै।<br>अत्र अनुः आद्युदात्तः भवति, तवै घटकाकारश्च प्रकृत्याश्रयेणोदात्तस्वरो युगपद् भवति। | |
| गतिः ४९ प्रकृत्या १ | ५२. अनिगन्तोऽञ्चतौ वप्रत्यये<br>अनिगन्तः गतिः पूर्वपदभूतः प्रकृत्या भवति, अञ्चतौ वप्रत्यये।<br>प्राङ्, प्राञ्चौ, प्राञ्चः।<br>प्रशब्द आद्युदात्तः। एकादेशानन्तरं 'स्वरितो वाऽनुदात्ते' इति सूत्रेण आकारः उदात्तः, स्वरितो वा। | सम्पूर्णसूत्रम्५३ |
| अनिगन्तोऽञ्चतौ वप्रत्यये५२ प्रकृत्या१ | ५३. न्यधी च<br>न्यधी पूर्वपदभूतौ प्रकृत्या भवतः।<br>न्यङ्, न्यञ्चौ। अध्यङ्, अध्यञ्चौ। प्रकृतिस्वरेण आद्युदात्तत्वम्, एकादेशानन्तरं यकारः स्वरितः 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति सूत्रेण। | |
| प्रकृत्या १ पूर्वपदम् १ | ५४. ईषदन्यतरस्याम्<br>पूर्वपदम् ईषत् प्रकृत्याऽन्यतरस्यां भवति।<br>ईषत्कडारः।<br>ईषदिति अन्तोदात्तः। पक्षे समासान्तोदात्तत्वम्। | अन्यतरस्याम्६३ |
| प्रकृत्या १ पूर्वपदम् १ अन्यतरस्याम् ५४ | ५५. हिरण्यपरिमाणं धने<br>हिरण्यपरिमाणवाचि पूर्वपदं प्रकृत्या अन्यतरस्यां भवति धने।<br>द्विसुवर्णधनम्।<br>अनेन द्विसुवर्णशब्दस्य समासान्तोदात्तत्वम्, पक्षे द्विसुवर्णधनशब्दस्य एव समासान्तोदात्तत्वम्। | |
| प्रकृत्या १ पूर्वपदम् १ अन्यतरस्याम् ५४ | ५६. प्रथमोऽचिरोपसंपत्तौ<br>अचिरोपसम्पत्तौ (गम्यमानायाम्) पूर्वपदभूतः प्रथमः प्रकृत्या भवति अन्यतरस्याम्।<br>प्रथमवैयाकरणः। अभिनववैयाकरण इत्यर्थः।<br>अनेन प्रकृत्या प्रथमशब्द अन्तोदात्तः, पक्षे प्रथमवैयाकरणशब्दस्य समासस्यान्तोदात्तत्वम्। | |

| | | |
|---|---|---|
| प्रकृत्या १ पूर्वपदम् १<br>अन्यतरस्याम् ५४ | ५७. कतर-कतमौ कर्मधारये<br>कर्मधारये पूर्वपदभूतौ कतरकतमौ प्रकृत्या अन्यतरस्यां भवति।<br>कतरकठः। कतमंकठः<br>कतरकतमशब्दावन्तोदात्तौ। | सम्पूर्णसूत्रम् ५६ |
| कतरकतमौ ५७<br>कर्मधारये ५७ प्रकृत्या १<br>अन्यतरस्याम् ५४ | ५८. आर्यो ब्राह्मण-कुमारयोः<br>कर्मधारये पूर्वपदभूतः आर्यः प्रकृत्या अन्यतरस्यां भवति ब्रह्मणकुमारयोः।<br>आर्यब्राह्मणः। आर्यकुमारः।<br>आर्यशब्दः अन्तस्वरितः। | ब्राह्मण-<br>कुमारयोः ५६ |
| ब्राह्मणकुमारयोः ५६<br>कर्मधारये ५७ प्रकृत्या १<br>अन्यतरस्याम् ५४ | ५६. राजा च<br>कर्मधारये पूर्वपदभूतो राजा च प्रकृत्या अन्यतरस्यां भवति ब्राह्मणकुमारयोः।<br>राजब्राह्मणः। राजकुमारः। राजशब्द आद्युदात्तः। | राजा ६० |
| राजा ५६<br>अन्यतरस्याम् ५४ प्रकृत्या १ | ६०. षष्ठी प्रत्येनसि<br>पूर्वपदभूतः षष्ठ्यन्तो राजा प्रकृत्या अन्यतरस्यां भवति प्रत्येनसि।<br>राज्ञः प्रत्येनाः राजप्रत्येनाः।<br>राजशब्द आद्युदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>अन्यतरस्याम् ५४ | ६१. क्ते नित्यार्थे<br>नित्यार्थे समासे पूर्वपदमन्यतरस्यां प्रकृत्या भवति क्ते।<br>नित्यप्रहसितः। सततप्रहसितः।<br>नित्यशब्दः आद्युदात्तः, सततशब्दश्च अन्तोदात्तः। | |
| प्रकृत्या १ पूर्वपदम् १<br>अन्यतरस्याम् ५४ | ६२. ग्रामः शिल्पिनि<br>पूर्वपदभूतो ग्रामः प्रकृत्या अन्यतरस्यां भवति शिल्पिनि।<br>ग्रामस्य नापितः ग्रामनापितः। ग्रामकुलालः।<br>'कालाः' इति द्वितीयासमासोऽयम्।<br>ग्रामशब्द आद्युदात्तः। | शिल्पिनि ६३ |
| प्रकृत्या १ पूर्वपदम् १<br>अन्यतरस्याम् ५४<br>शिल्पिनि ६२ | ६३. राजा च प्रशंसायाम्<br>प्रशंसायां (गम्यमानायाम्) पूर्वपदभूतो राजा प्रकृत्या अन्यतरस्यां भवति शिल्पिनि।<br>राजनापितः। राजकुलालः।<br>राजशब्द आद्युदात्तः। | |
| | ६४. आदिरुदात्तः<br>अधिकारोऽयम्। | आदिः ६१<br>उदात्तः १६६ |

| | | |
|---|---|---|
| पूर्वपदम् १ आदिः ६४<br>उदात्तः ६४ | **६५. सप्तमीहारिणौ धर्म्येऽहरणे**<br>पूर्वपदभूतौ सप्तमीहारिणौ आद्युदात्तौ भवतः अहरणे धर्म्ये।<br>देयं यः स्वीकरोति स हारीत्युच्यते। धर्म्यम् इति आचारतः देयमित्युच्यते।<br>सप्तमी - मुकुटेकार्षापणम्।<br>हारी - याज्ञिकाश्वः। वैयाकरणहस्ती।<br>धर्म्ये इति किम्? स्तम्बेरमः।<br>अहरणे इति किम्? वाडवहरणम् ।वडवाया इदं वाडवम्,तस्य बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते हरणमिति तदुच्यते। | |
| पूर्वपदम् १ आदिः ६४<br>उदात्तः ६४ | **६६. युक्ते च**<br>युक्ते (तत्परवाचिनि) समासे पूर्वपदमाद्युदात्तं भवति।<br>गोवल्लवः। गोमणिन्दः।<br>गोवल्लवः इत्यादीनां गवादिपालने तत्पर इत्यर्थः। | |
| पूर्वपदम् १ आदिः ६४<br>उदात्तः ६४ | **६७. विभाषाऽध्यक्षे**<br>पूर्वपदं विभाषाऽऽद्युदात्तं भवति अध्यक्षे।<br>गवाध्यक्षः। अश्वाध्यक्षः। | विभाषा ६८ |
| पूर्वपदम् १ आदिः ६४<br>उदात्तः ६४<br>विभाषा ६७ | **६८. पापं च शिल्पिनि**<br>पूर्वपदं पापं विभाषा आद्युदात्तं भवति शिल्पिनि।<br>पापानापितः। पापकुलालः। | |
| पूर्वपदम् १ आदिः ६४<br>उदात्तः ६४ | **६९. गोत्रान्तेवासि-माणव-ब्राह्मणेषु क्षेपे**<br>क्षेपे (गम्यमाने) पूर्वपदमाद्युदात्तं भवति गोत्रान्तेवासि- माणव-बाह्मणेषु<br>गोत्रे- भार्याप्रियः सौश्रुतः भार्यासौश्रुतः।<br>अन्तेवासिनि- कुमारीलाभकामः दाक्षाः कुमारीदाक्षाः।<br>माणवे- भिक्षामाणवः।<br>ब्राह्मणे- दासीब्राह्मणाः। | |
| पूर्वपदम् १<br>आदिः ६४<br>उदात्तः ६४ | **७०. अङ्गानि मैरेये**<br>मैरेये उत्तरपदे परे तदङ्गानि पूर्वपदानि आद्युदात्तानि भवन्ति ।<br>सुराव्यतिरिक्तं मद्यम् = मैरयम् इति हरदत्तः।<br>गुडमैरेयः। मधुमैरेयः। | |

| | | |
|---|---|---|
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ | ७१. भक्ताख्यास्तदर्थेषु<br>पूर्वपदभूताः भक्ताख्याः आद्युदात्ताः भवन्ति तदर्थेषु।<br>भिक्षायै, भिक्षायाः वा कंसः भिक्षाकंसः। | |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ | ७२. गो-बिडाल-सिंह-सैन्धवेषूपमाने<br>पूर्वपदमाद्युदात्तं भवति गो-विडाल-सिंह-सैन्धवेषूपमानेषूत्तरपदेषु परतः।<br>धान्यगवः। गोविडालः, तृणसिंहः,सक्तुसैन्धवः।<br>धान्यं गौरिवेति विग्रहे 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः। गवाकृत्या सन्निवेशितं = धान्यं धान्यगवशब्देनोच्यते। | |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ | ७३. अके जीविकार्थे<br>जीविकार्थे समासे पूर्वपदमाद्युदात्तं भवति अकारान्ते उत्तरपदे।।<br>दन्तलेखकः। नखलेखकः। | अके ७४ |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ अके७३ | ७४. प्राचां क्रीडायाम्<br>प्राचां (प्राग्देशवासिनां) क्रीडायां गम्यमानायाम् पूर्वपदमाद्युदात्तं भवत्यके।<br>उद्दालकपुष्पभञ्जिका। | |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ | ७५. अणि नियुक्ते<br>नियुक्ते (नियुक्तवाचिनि) समासे पूर्वपदमाद्युदात्तं भवति अणन्ते उत्तरपदे परतः।<br>नियुक्त इत्यस्य अधिकृत इत्यर्थः।<br>छत्त्रधारः। | अणि ७७ |
| पूर्वपदम्१ आदिः६४<br>उदात्तः६४ अणि७५ | ७६. शिल्पिनि चाकृञः<br>शिल्पिनि (शिल्पिवाचिनि) समासे पूर्वपदमाद्युदात्तं भवति अकृञोऽणि।<br>तन्तुवायः।<br>अकृञः इति किम्? कुम्भकारः। | अकृञः ७७<br>अणि७७ |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ अकृञः७६<br>अणि७६ | ७७. संज्ञायां च<br>संज्ञायां (विषये) पूर्वपदमाद्युदात्तं भवति अकृञोऽणि।<br>तन्तुवायो नाम कीटः।<br>अकृञ इत्येव- रथकारो नाम ब्राह्मणः। | |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ | ७८. गो-तन्ति-यवं पाले<br>गो-तन्ति-यवं पूर्वपदमाद्युदात्तं भवति पाले।<br>गोपालः। तन्तिपालः। यवपालः। | |

| | | |
|---|---|---|
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ | ७९. णिनि<br>पूर्वपदमाद्युदात्तं भवति णिन्यन्ते उत्तरपदे परतः।<br>पुष्पहारी। | णिनि ८० |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ णिनि७९ | ८०. उपमानं शब्दार्थप्रकृतावेव<br>उपमानं पूर्वपदमाद्युदात्तं भवति शब्दार्थप्रकृतावेव णिनि।<br>उष्ट्र इव क्रोशतीति उष्ट्रक्रोशी। | |
| अद्युदात्तः ६४ | ८१. युक्तारोह्यादयश्च<br>'युक्तारोही' इत्येवामादयः समासा आद्युदात्ता भवन्ति।<br>युक्तारोही। आगतरोही। आगतयोधी। | |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ | ८२. दीर्घ-काश-तुष-भ्रष्ट्र-वटं जे<br>दीर्घ-काश-तुष-भ्रष्ट्र-वटं पूर्वपदमाद्युदात्तं भवति जे।<br>कुटीज; शमीजः। काशजः। तुषजः। भ्राष्ट्रजः। वटजः। | जे ८३ |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ जे ८२ | ८३. अन्त्यात्पूर्वं बह्वचः<br>बह्वचः अन्त्यात्पूर्वमुदात्तं भवति जे।<br>उपसरजः। मन्दुरजः। | |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ | ८४. ग्रामेऽनिवसन्तः<br>पूर्वपदभूताः अनिवसन्तः आद्युदात्ता भवन्ति ग्रामे।<br>मल्लग्रामः। वण्ग्ग्रिामः।<br>ग्रानशब्दोऽत्र समूहवाची न तु देशवाचीति मल्लादयः न निवसद्वाचिनः। | |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ | ८५. घोषादिषु च<br>पूर्वपदमाद्युदात्तं भवति घोषादिषु।<br>दाक्षिघोषः। दाक्षिकटः। | |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ | ८६. छांत्र्यादयः शालायाम्<br>पूर्वपदभूताः 'छात्रि' इत्येवमादयः आद्युदात्ता भवन्ति शालायाम्।<br>छात्रिशाला। पैलिशाला। | |

| | | |
|---|---|---|
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ | ८७. प्रस्थेऽवृद्धमकर्क्यादीनाम्<br>अवृद्धं पूर्वपदमाद्युदात्तं भवति प्रस्थे, कर्क्यादीनां पूर्वपदानां विषये तु अवृद्धमिति प्रतिषेधो न प्रवर्तते।<br>इन्द्रप्रस्थः। कुण्डप्रस्थः।<br>अवृद्धमिति किम्? दाक्षिप्रस्थः।<br>अकर्क्यादीनामिति किम्?कर्कीप्रस्थः। मघीप्रस्थः।<br>'वा नामधेयस्य वृद्धसंज्ञा वक्तव्या' इति वार्तिकेन कर्क्यादीनां वृद्धसंज्ञा। | प्रस्थे ८८ |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ प्रस्थे८७ | ८८. मालादीनां च<br>मालादीनां चादिरुदात्तो भवति प्रस्थे।<br>मालाप्रस्थः। शालाप्रस्थः। | |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ प्रस्थे८७ | ८९. अमहन्नवं नगरेऽनुदीचाम्<br>अमहन्नवं पूर्वपदमाद्युदात्तं भवति नगरे, अनुदीचां तच्चेन्नगरम्।<br>सुह्मनगरम्।<br>अमहन्नवमिति किम्? महानगरम्। नवनगरम्।<br>अनुदीचाम् इति किम्? नदीनगरम्। कान्तीनगरम्। | अमहन्नवम् ९० |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ प्रस्थे८७<br>अमहन्नवम् ८९ | ९०. अर्मे चावर्णं द्व्यच्त्र्यच्<br>अमहन्नवं द्व्यच्, त्र्यच् वा अवर्णम् (अवर्णान्तम्) पूर्वपदम् आद्युदात्तं भवति अर्मशब्दे परतः।<br>दत्तार्मम्। गुप्तार्मम्। कुक्कुटार्मम्। | अर्मे ९१ |
| पूर्वपदम्१ आदिः६४<br>उदात्तः ६४ अर्मे ९० | ९१. न भूताधिक-संजीव-मद्राश्म-कज्जलम्<br>भूताधिक-सञ्जीव- मद्राश्म-कज्जलमाद्युदात्तं न भवति अर्मे।<br>भूतार्मम्। अधिकार्मम्। सञ्जीवार्मम्।<br>मद्राश्मग्रहणं संघातविगृहीतार्थम्। मद्रार्मम्।<br>अश्मार्मम्। मद्राश्मार्मम्। कज्जलार्मम्। | |
| | ९२. अन्तः<br>अधिकारोऽयम्। | अन्तः ११० |
| पूर्वपदम्१ उदात्तः६४<br>अन्तः ९२ | ९३. सर्वं गुणकार्त्स्न्ये<br>गुणकार्त्स्न्ये पूर्वपदं सर्वमन्तोदात्तं भवति।<br>सर्वश्वेतः। सर्वकृष्णः। | |
| पूर्वपदम्१ उदात्तः६४<br>अन्तः ९२ | ९४. संज्ञायां गिरि-निकाययोः<br>संज्ञायां पूर्वपदमन्तोदात्तं भवति गिरिनिकाययोः।<br>अञ्जनागिरिः। मौण्डिनिकायः। | |

| | | |
|---|---|---|
| पूर्वपदम्१ उदात्तः६४<br>अन्तः ९२ | ९५. कुमार्यां वयसि<br>वयसि (गम्यमाने) पूर्वपदमन्तोदात्तं भवति कुमारीशब्दे उत्तरपदे परतः।<br>वृद्धकुमारी। जरत्कुमारी। | |
| पूर्वपदम्१ उदात्तः६४<br>अन्तः ९२ | ९६. उदकेऽकेवले<br>अकेवले (मिश्रे गम्यमाने) पूर्वपदमन्तोदात्तं भवति उदके।<br>गुडमिश्रमुदकम् गुडोदकम्। तिलोदकम्।<br>अकेवले इति किम्? शीतोदकम्। उष्णोदकम्। | |
| पूर्वपदम्१ उदात्तः६४<br>अन्तः ९२ | ९७. द्विगौ क्रतौ<br>क्रतौ (क्रतुवाचिनि समासे) पूर्वपदमन्तोदात्तं भवति द्विगौ (उत्तरपदे परे)।<br>गर्गत्रिरात्रम्। | |
| पूर्वपदम्१ उदात्तः६४<br>अन्तः ९२ | ९८. सभायां नपुंसके<br>पूर्वपदमन्तोदात्तं भवति सभायां नपुंसके।<br>गोपालसभम्। स्त्रीसभम्।<br>नपुंसके इति किम्? राजसभा। | |
| पूर्वपदम्१ उदात्तः६४<br>अन्तः ९२ | ९९. पुरे प्राचाम्<br>प्राचां देशे (वाच्ये) पूर्वपदमाद्युदात्तं भवति पुरे।<br>ललाटपुरम्। काञ्चीपुरम्।<br>प्राचामिति किम्? शिवपुरम्। | पुरे १०१ |
| पूर्वपदम्१ उदात्तः६४<br>अन्तः ९२ पुरे ९९ | १००. अरिष्ट-गौडपूर्वे च<br>अरिष्ट-गौडपूर्वे समासे च पूर्वपदमन्तोदात्तं भवति पुरे।<br>अरिष्टपुरम्। गौडपुरम्। | |
| पूर्वपदम्१ उदात्तः६४<br>अन्तः ९२ पुरे ९९ | १०१. न हास्तिन-फलक-मार्देयाः<br>पूर्वपदभूता हास्तिन-फलक-मार्देयाः अन्तोदात्ता न भवन्ति पुरे।<br>हास्तिनपुरम्। फलकपुरम्। मार्देयपुरम्। | |
| पूर्वपदम्१ उदात्तः६४<br>अन्तः ९२ | १०२. कुसूल-कूप-कुम्भ-शालं बिले<br>पूर्वपदं कुसूल-कूप-कुम्भ-शालमन्तोदात्तं भवति बिले।<br>कुसूलबिलम्। कूपबिलम्।<br>कुम्भबिलम्। शालबिलम्। | |

| | | |
|---|---|---|
| पूर्वपदम्१ उदात्तः६४<br>अन्तः ९२ | १०३. दिक्छब्दा ग्राम-जनपदाख्यान-चानराटेषु<br>पूर्वपदभूता दिक्शब्दा आद्युदात्ता भवन्ति ग्राम-जनपदाख्यान-चानराटेषु।<br>ग्रामे- पूर्वेषुकामशमी।<br>जनपदे- पूर्वपञ्चालाः।<br>आख्याने- पूर्वाधिरामम्।<br>अधिराममधिकृत्य कृतो ग्रन्थः आधिरामम्।<br>'अधिकृत्य कृते ग्रन्थे' इत्यण्।<br>पूर्वचानराटम्। | दिक्छब्दाः १०५ |
| दिक्छब्दाः १०३<br>अन्तः ९२ उदात्तः६४ | १०४. आचार्योपसर्जनश्चान्तेवासिनि<br>पूर्वपदभूता दिक्शब्दा आद्युदात्ता भवन्ति अन्तेवासिनि (परे), स चेदन्तेवासी आचार्योपसर्जनो भवेत्।<br>पूर्वपाणिनीयाः। अपरपाणिनीयाः।<br>पाणिनेश्छात्राः पाणिनीयाः,काशकृत्स्नस्य छात्राः काशकृत्स्नाः, 'पूर्वापरप्रथम' इत्यादिना समासः। | |
| दिक्छब्दाः १०३<br>अन्तः ९२ उदात्तः६४ | १०५. उत्तरपदवृद्धौ सर्वं च<br>पूर्वपदभूतः सर्वशब्दो, दिक्शब्दाश्च अन्तोदात्ता भवन्ति उत्तरपदवृद्धौ।<br>'उत्तरपदस्य'(७.३.१०) इत्येवमधिकृत्य विहिता वृद्धिः उत्तरपदवृद्धिः,तदुत्तरपदे इत्यर्थः।<br>सर्वपाञ्चालकः। पूर्वपाञ्चालकः। | |
| पूर्वपदम्१<br>अन्तः ९२ उदात्तः६४ | १०६. बहुव्रीहौ विश्वं संज्ञायाम्<br>बहुव्रीहौ पूर्वपदं विश्वमन्तोदात्तं भवति संज्ञायाम्।<br>विश्वदेवः। विश्वयशाः। | बहुव्रीहौ १२०<br>संज्ञायाम् १०८ |
| बहुव्रीहौ १०६<br>संज्ञायाम् १०६<br>पूर्वपदम्१<br>अन्तः ९२ उदात्तः६४ | १०७. उदराश्वेषुषु<br>बहुव्रीहौ पूर्वपदमन्तोदात्तं भवति संज्ञायाम्, उदराश्वेषेषु।<br>उदराश्वेषेषु इत्यत्र उदर+अश्व+इषु इतिच्छेदः।<br>वृकोदरः। हर्यश्वः। महेषुः। | उदराश्वेषुषु१०८ |
| बहुव्रीहौ १०६<br>संज्ञायाम् १०६<br>अन्तः ९२ उदात्तः६४<br>उदराश्वेषुषु १०७ | १०८. क्षेपे<br>क्षेपे (गम्यमाने) बहुव्रीहौ पूर्वपदमन्तोदात्तं भवति संज्ञायाम्, उदराश्वेषेषु।<br>कुण्डोदरः। कटुकाश्वः। चलाचलेषुः। | |

| | | |
|---|---|---|
| बहुव्रीहौ १०६<br>संज्ञायाम् १०६<br>अन्तः ९२ उदात्तः६४ | १०९. नदी बन्धुनि<br>बहुव्रीहौ नद्यन्तं पूर्वपदम् अन्तोदात्तं भवति बन्धुनि उत्तरपदे।<br>गार्गीबन्धुः।<br>सूत्रे 'बन्धुनि' इति शब्दरूपापेक्षया नपुंसकनिर्देशः। | |
| बहुव्रीहौ १०६<br>संज्ञायाम् १०६<br>अन्तः ९२ उदात्तः६४ | ११०. निष्ठोपसर्गपूर्वमन्यतरस्याम्<br>बहुव्रीहौ पूर्वपदभूता निष्ठोपसर्गपूर्वा अन्तोदात्ता भवति, अन्यतरस्याम्।<br>प्रधौतमुखः।<br>यदि मुखशब्दः स्वाङ्गवाची, तदा 'मुखं स्वाङ्गम्' इति सूत्रेण विकल्पेन उत्तरपदान्तोदात्तत्वम्, उभाभ्यां मुक्ते 'गतिरनन्तरः' इति सूत्रेण प्रकृतिस्वरत्वेन पूर्वपदमाद्युदात्तम्।<br>यदा मुखशब्दोऽस्वाङ्गवाची तदा 'गतिरनन्तरः' इति सूत्रेण पक्षे प्रकृत्या पूर्वपदमाद्युदात्तमेव। | |
| | १११. उत्तरपदादिः<br>आधिकारोऽयम्। 'उत्तरपदस्य' इत्यापादपरिसमाप्तेः, 'आदिः' इति 'प्रकृत्या भगालम्'(६.२.१३७) इति यावत्। | उत्तरपदस्य १९९<br>आदिः १३६ |
| बहुव्रीहौ १०६<br>उत्तदपदादिः १११<br>उदात्तः ६४ | ११२. कर्णो वर्ण-लक्षणात्<br>बहुव्रीहौ वर्णवाचिनः लक्षणवाचिनःपूर्वपदाद् उत्तरपदभूतः कर्णशब्द आद्युदात्तो भवति।<br>वर्णात् - शुक्लकर्णः।<br>लक्षणात् - दात्राकर्णः। दात्रं कर्णे यस्येति विग्रहे बहुव्रीहिसमासे कृते 'कर्णे लक्षणस्याविष्टाष्ट०'(६.३.११५) इति सूत्रेण दात्रशब्दस्य दीर्घत्वम्। | कर्णः ११३ |
| बहुव्रीहौ १०६<br>उत्तरपदादिः १११<br>उदात्तम् ६४<br>कर्णः ११२ | ११३. संज्ञौपम्ययोश्च<br>संज्ञौपम्ययोश्च यो बहुव्रीहिस्तत्र उत्तरपदभूतः कर्णः आद्युदात्तो भवति।<br>संज्ञायाम् - मणिकर्णः।<br>औपम्ये - गोकर्णः। | संज्ञौपम्ययोः ११५ |
| बहुव्रीहौ १०६<br>उत्तरपदादिः १११<br>उदात्तम् ६४<br>संज्ञौपम्ययोः ११३ | ११४. कण्ठ-पृष्ठ-ग्रीवा-जङ्घं च<br>संज्ञौपम्ययोः बहुव्रीहौ कण्ठ-ग्रीवा-जङ्घं चोत्तरपदमाद्युदात्तं भवति।<br>संज्ञायाम्-शितिकण्ठः। औपम्ये- खरकण्ठः।<br>,, काण्डपृष्ठः। ,, गोपृष्ठः।<br>,, सुग्रीवः । ,, गोग्रीवः।<br>,, नारीजङ्घः । ,, गोजङ्घः। | |

| | | |
|---|---|---|
| संज्ञौपम्ययोः ११३<br>उदात्तम् ६४<br>उत्तरपदादिः १११ | ११५. शृङ्गमवस्थायां च<br>संज्ञौपम्ययोः, अवस्थायां च यो बहुव्रीहिस्तस्योत्तरपदं शृङ्गमाद्युदात्तं भवति।<br>संज्ञायाम् - ऋष्यशृङ्गः।<br>औपम्ये - गोशृङ्गः;<br>अवस्थायाम् -उद्गतशृङ्गः।<br>द्व्यङ्गुलशृङ्गः। | |
| बहुव्रीहौ १०६<br>उदात्तम् ६४<br>उत्तरपदादिः १११ | ११६. नञो जर-मर-मित्र-मृताः<br>बहुव्रीहौ नञः उत्तरपदभूता जर-मर-मित्र-मृता आद्युदात्ता भवन्ति।<br>अजरः। अमरः। अमित्रः। अमृतः। | |
| बहुव्रीहौ १०६<br>उदात्तम् ६४<br>उत्तरपदादिः १११ | ११७. सोर्मनसी अलोमोषसी<br>बहुव्रीहौ सोरुत्तरपदभूते मनसी (मन्नन्तं, असन्तं च) आद्युदात्ते भवतः, अलोमोषसी।<br>मन् - सुकर्मा।<br>अस् - सुपयाः।<br>अलोमसी इति किम् ? सुलोमा। सूषाः। | सोः १२० |
| बहुव्रीहौ १०६<br>उदात्तम् ६४<br>उत्तरपदादिः १११<br>सोः ११७ | ११८. क्रत्वादयश्च<br>बहुव्रीहौ सोरुत्तरपदभूता क्रत्वादय आद्युदात्ता भवन्ति।<br>सुक्रतुः। सुदृशीकः। | |
| बहुव्रीहौ १०६<br>उदात्तम् ६४<br>उत्तरपदादिः १११<br>सोः ११७ | ११९. आद्युदात्तं द्व्यच् छन्दसि<br>सोः परं द्व्यच् आद्युदात्तमेव भवति, छन्दसि।<br>'नञ्सुभ्याम्' इति सूत्रेण प्राप्तस्यान्तोदात्तत्वस्यापवादोऽयम्।<br>स्वश्वास्त्वा सुरथा मर्जयेम।<br>अश्व-रथशब्दावाद्युदात्तौ। | छन्दसि १२० |
| सोः ११७<br>बहुव्रीहौ १०६<br>उदात्तम् ६४<br>उत्तरपदादिः १११<br>छन्दसि ११९ | १२०. वीर-वीर्यौ च<br>सोरुत्तरपदभूतौ वीरवीर्यौ च आद्युदात्तौ भवतश्छन्दसि।<br>सुवीरस्ते। सुवीर्यस्य पतयः स्याम। | |
| उत्तरपदादिः १११<br>उदात्तम् ६४ | १२१. कूल-तीर-तूल-मूल-शालाक्ष-सममव्ययीभावे<br>अव्ययीभावे कूल-तीर-तूल-मूल-शालाक्ष-सममुत्तरपदम् आद्युदात्तं भवति।<br>उपकूलम्। उपतीरम्। उपतूलम्। उपमूलम्।<br>उपशालम्। उपाक्षम्। सुषमम्। | |

| | | |
|---|---|---|
| उत्तरपदादिः १११<br>उदात्तम् ६४ | १२२. कंस-मन्थ-शूर्प-पाय्य-काण्डं द्विगौ<br>द्विगौ कंस-मन्थ-शूर्प-पाय्य-काण्डमुत्तरपदमाद्युदात्तं भवति।<br>द्विकंसः।<br>द्वाभ्यां कंसाभ्यां क्रीत इत्यर्थे तद्धितार्थे द्विगुः।<br>एवमेव-द्विमन्थः। द्विशूर्पः। द्विपाय्यः। द्विकाण्डः;<br>अत्र द्वे काण्डे प्रमाणमस्येति विग्रहे द्विगुः। | |
| उत्तरपदादिः १११<br>उदात्तम् ६४ | १२३. तत्पुरुषे शालायां नपुंसके<br>तत्पुरुषे उत्तरपदभूतायां शालायामाद्युदात्तं भवति नपुंसके।<br>ब्राह्मणशालम्।<br>'विभाषा सेना०' इति सूत्रेण नपुंसकत्वम्।<br>नपुंसके इति किम्? ब्राह्मणशाला। | तत्पुरुषे १३७<br>नपुंसके १२५ |
| तत्पुरुषे १२३<br>नपुंसके १२३<br>उत्तरपदादिः १११<br>उदात्तम् ६४ | १२४. कन्था च<br>तत्पुरुषे उत्तरपदभूता कन्था आद्युदात्ता भवति नपुंसके।<br>सौशमिकन्थम्।<br>'संज्ञायां कन्थोशीनरेषु' इति नपुंसकत्वम्।<br>नपुंसके इति किम्? दाक्षिकन्था। | कन्था १२५ |
| तत्पुरुषे १२३<br>कन्था १२५<br>उदात्तः ६४ | १२५. आदिश्चिहणादीनाम्<br>कन्थान्ते तत्पुरुषे चिहणादीनामादिरुदात्तो भवति।<br>चिहणकन्थम्। मडरकन्थम्।<br>'आदिः' इति वर्तमाने पुनरादिग्रहणं पूर्वपदाद्युदात्तार्थम्। | |
| तत्पुरुषे १२३<br>उदात्तम्६४<br>उत्तरपदादिः १११ | १२६. चेल-खेट-कटुक-काण्डं गर्हायाम्<br>गर्हायां (गम्यमानायाम्) तत्पुरुषे चेल-खेट-कटुक-काण्डमुत्तरपदमाद्युदात्तं भवति।<br>पुत्रचेलम्। उपानत्खेटम्। दधिकटुकम्।<br>भूतकाण्डम्। | |
| तत्पुरुषे १२३<br>उत्तरपदादिः १११<br>उदात्तम् ६४ | १२७. चीरमुपमानम्<br>तत्पुरुषे उत्तरपदमुपमानं चिरमाद्युदात्तं भवति।<br>वस्त्रं चीरमिव वस्त्रचीरम्। | |
| तत्पुरुषे १२३<br>उत्तरपदस्यादि १११<br>उदात्तम् ६४ | १२८. पलल-सूप-शाकं मिश्रे<br>मिश्रे (मिश्रवाचिनि) तत्पुरुषे पलल-सूप-शाकमुत्तरपदमाद्युदात्तं भवति।<br>गुडपललम्। घृतसूपः। घृतशाकम्। | |

| | | |
|---|---|---|
| तत्पुरुषे १२३<br>उत्तरपदादिः १११<br>उदात्तम् ६४ | १२९. कूल-सूद-स्थल-कर्षाः संज्ञायाम्<br>तत्पुरुषे उत्तरपदभूताः कूल-सूद-स्थल-कर्षाः आद्युदात्ताः भवन्ति संज्ञायाम्।<br>दाक्षिकूलम्। देवसूदम्।<br>दाण्डायनस्थली। दाक्षिकर्षः। | |
| तत्पुरुषे १२३<br>उत्तरपदादिः १११<br>उदात्तम् ६४ | १३०. अकर्मधारये राज्यम्<br>अकर्मधारये तत्पुरुषे राज्यम उत्तरपदम् आद्युदात्तं भवति।<br>ब्राह्मणराज्यम्। | अकर्मधारये १३१ |
| तत्पुरुषे १२३<br>उत्तरपदादिः १११<br>उदात्तम् ६४<br>अकर्मधारये १३० | १३१. वर्ग्यादयश्च<br>अकर्मधारये तत्पुरुषे उत्तरपदभूता वर्ग्यादयः आद्युदात्ताः भवन्ति।<br>वासुदेववर्ग्यः। वासुदेवपक्ष्यः। | |
| तत्पुरुषे १२३<br>उत्तरपदादिः १११<br>उदात्तम् ६४ | १३२. पुत्रः पुम्भ्यः<br>तत्पुरुषे पुम्भ्यः उत्तरपदभूतः पुत्रः आद्युदात्तो भवति।<br>कौनटिपुत्रः। दामकपुत्रः।<br>पुम्भ्यः इति किम् ? गार्गीपुत्रः। वात्सीपुत्रः। | पुत्रः १३३ |
| पुत्रः १३२<br>तत्पुरुषे १२३<br>उत्तरपदादिः १११<br>उदात्तम् ६४ | १३३.नाचार्य-राजर्त्विक्-संयुक्त-ज्ञात्याख्येभ्यः<br>आचार्य, राजन्, ऋत्विज्, संयुक्त, ज्ञाति - इत्याख्येभ्यः उत्तरपदभूतः पुत्र आद्युदात्तो न भवति।<br>अत्राख्याग्रहणात् स्वरूपस्य, पर्यायाणां, विशेषाणां च ग्रहणम्।<br>आचार्यपुत्रः; उपाध्यायपुत्रः; शाकटायनपुत्रः।<br>राजपुत्रः; ईश्वरपुत्रः;नन्दपुत्रः।<br>ऋत्विक्पुत्रः; याजकपुत्रः; होतुःपुत्रः। संयुक्तपुत्रः; श्यालपुत्रः।<br>ज्ञातिपुत्रः; सम्बन्धिपुत्रः; भ्रातुष्पुत्रः। | |
| तत्पुरुषे १२३<br>उत्तरपदादिः १११<br>उदात्तम् ६४ | १३४. चूर्णादीन्यप्राणिषष्ठ्याः<br>तत्पुरुषे अप्राणिषष्ठ्याः उत्तरपदभूतानि चूर्णादीनि आद्युदात्तानि भवन्ति।<br>मुद्गचूर्णम्। मसूरचूर्णम्। | अप्राणिषष्ठ्याः १३५ |

| | | |
|---|---|---|
| तत्पुरुषे १२३<br>उत्तरपदादिः १११<br>उदात्तम् ६४<br>अषष्ठ्याः १३४ | **१३५. षट् च काण्डादीनि**<br>तत्पुरुषे अप्राणिषष्ठ्या उत्तरपदभूतानि काण्डादीनि षट् आद्युदात्तानि भवन्ति।<br>'षट् काण्डादीनि' इत्यनेन 'चेल-खेट (६.२.१२६) इत्यतः 'कूल-सूद' (६.२.१२८) इति सूत्रं यावद् उक्ताः काण्ड, चीर, पलल, सूप, शाक, कूल इत्येते षट् शब्दा गृह्यन्ते।<br>दर्भकाण्डम्। दर्भचीरम्। तिलपललम्। मुद्गसूपः। मूलकशाकम्। नदीकूलम्।<br>पूर्वत्र येष्वर्थेषु उत्तरपदाद्युदात्तत्वं विहितं ततोऽन्यत्रापि अनेन उत्तरपदाद्युदात्तत्वं भवति।<br>यथा- 'काण्डं गर्हायाम्' इत्युक्तम्, अगर्हायामपि भवति। | |
| तत्पुरुषे १२३<br>उत्तरपदादि १११<br>उदात्तम् ६४ | **१३६. कुण्डं वनम्**<br>तत्पुरुषे उत्तरपदं कुण्डम् आद्युदात्तं भवति, कुण्डं चेत् सादृश्येन वनवाचकम्।<br>दर्भकुण्डम्।<br>कुण्डशब्दोऽत्र कुण्डसादृश्येन वने वर्तते। सादृश्यं चानयोरेवम्- यथा कुण्डं कस्यचिदुकादेराश्रयस्तया वनमपि दर्भादेः। | |
| तत्पुरुषे १२३<br>उत्तरपदम् १११ | **१३७. प्रकृत्या भगालम्**<br>तत्पुरुषे उत्तरपदं भगालं प्रकृत्या भवति।<br>कुम्भीभगालम्। कुम्भीकपालम्। कुम्भीनदालम्।<br>भगालादयो मध्योदात्ताः। भगालादीनां कुम्भादिमृत्पात्राणां खण्ड इत्यर्थः। | प्रकृत्या १४२ |
| प्रकृत्या १३७ | **१३८. शितेर्नित्याबह्वज् बहुव्रीहावभसत्**<br>बहुव्रीहौ शितेः (परम्) नित्याबह्वच् प्रकृत्या भवति, न तु भसद् इति शब्दः।<br>शितिपादः। पादशब्द आद्युदात्तः।<br>अभसदिति किम्? शितिभसद्। शितिशब्दः आद्युदात्तः।<br>नित्यग्रहणं किम् ? शितिककुत्।<br>अवस्थायां 'ककुदस्यावस्थायां लोपः' इति सूत्रेण ककुदस्याकारस्य लोपो भवति इति ककुद् इति अबह्वच्कं पदं जायते। अवस्थाया अन्यत्र तु शितिककुदः इति पदे ककुदशब्दः बह्वच्कः भवति। अतः ककुदशब्दो न नित्याबह्वच्कः। अतोऽत्र प्रकृतं सूत्रं न प्रवर्त्तते। | |

| | | |
|---|---|---|
| तत्पुरुषे १२३<br>उत्तरपदम् १११ | १३९. गति-कारकोपपदात् कृत्<br>तत्पुरुषे गतिकारकोपपदात् कृत्प्रकृत्या भवति।<br>प्रकारकः। इध्मप्रव्रश्चनः। ईषत्करः।<br>सर्वत्र लित्स्वरः। | गतिकारकोपपदात् १४६ |
| प्रकृत्या १३७ | १४०. उभे वनस्पत्यादिषु युगपत्<br>वनस्पत्यादिषु उभे (पूर्वोत्तरपदे) युगपत् प्रकृत्या भवतः।<br>वनस्पतिः। वन-पतिशब्दावाद्युदात्तौ। | उभे युगपत् १४२ |
| उभे१४० युगपत्१४०<br>प्रकृत्या १३७ | १४१. देवताद्वन्द्वे च<br>देवताद्वन्द्वे उभे युगपत् प्रकृत्या भवतः।<br>इन्द्रासोमौ। इन्द्र-सोमशब्दौ आद्युदात्तौ।<br>'देवताद्वन्द्वे च' इति पूर्वपदस्याऽऽनङ्। | देवताद्वन्द्वे १४२ |
| उभे१४० युगपत्१४०<br>प्रकृत्या १३७<br>देवताद्वन्द्वे १४१ | १४२. नोत्तरपदेऽनुदात्तदावपृथिवीरुद्र-पूष-मन्थिषु<br>देवताद्वन्द्वे पृथिवी, रुद्र, पूषन्, मन्थिन् - इत्येतद्वर्जिते अनुदात्तादौ उत्तरपदे उभे युगपत् प्रकृत्या न भवतः।<br>इन्द्राग्नी। इन्द्रवायू।<br>अग्निवायुशब्दावन्तोदात्तौ। | |
| उत्तरपदस्य १११ | १४३. अन्तः<br>अधिकारोऽयम्। | अन्तः १९९ |
| गतिकारकोपपदात्१३९<br>अन्तोदात्तः१४३,६४ | १४४. थाथघञ्क्ताजबित्रकाणाम्<br>गतिकारकोपपदात् थ, अथ, घञ्, क्त, अच्, अप्, इत्र, क- इत्येतेषामन्त उदात्तो भवति।<br>थ- सुनीथः,अवभृथः।<br>अथ- आवसथः। उपवसथः।<br>घञ्-प्रभेदः। रज्जुभेदः।<br>क्त- दूरादागतः। विशुष्कः। आतपशुष्कः।<br>अच्- प्रक्षयः। प्रजयः।<br>अप्- प्रलवः।<br>इत्र- प्रलवित्रम्।<br>क- गोवृषः।<br>गतिकारकोपदादित्येव-सुस्तुतं भवता।<br>'सुः पूजायाम्' इति कर्मप्रवचनीयसंज्ञा, कर्मप्रवचनीयेऽव्ययस्वर एव। | |

| | | |
|---|---|---|
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११<br>गतिकारकोपपदात्१३९ | **१४५. सूपमानात् क्तः**<br>सूपमानात् क्तान्तः अन्तोदात्तो भवति।<br>सु- सुभुक्तम्। सुपीतम्।<br>उपमान- वृकावलुप्तम्। शशप्लुतम्।<br>सिंहविनर्दितम्।<br>गतिकारकोपदादित्येव-सुस्तुतं भवता।<br>'सुः पूजायाम्' इति कर्मप्रवचनीयसंज्ञा,<br>कर्मप्रवचनीयेऽव्ययस्वर एव। | क्तः १४६ |
| उत्तरपदस्य १११<br>गतिकारकोपपदात्१३९<br>अन्तोदात्तः१४३,६४<br>क्तः १४५ | **१४६. संज्ञायामनाचितादीनाम्**<br>गतिकारकोपदात् क्तान्तः अन्तोदात्तो भवति संज्ञायाम्, आचितादीनां तु न।<br>सम्भूतो रामायणः। उपहूतः शाकल्यः।<br>सम्भूतादयः शब्दा रामायणादीनां संज्ञाः।<br>हरदत्तानुसारेण नपुंसकलिङ्गोऽपि रामायणशब्दः प्रायेण पुल्लिङ्गे पाठो दृश्यते। | संज्ञायाम्१४८ |
| उत्तरपदस्य १११<br>अन्तोदात्तः१४३,६४<br>क्तः १४५ | **१४७. प्रवृद्धादीनां च**<br>प्रवृद्धादीनां क्तान्तस्योत्तरपदस्य चान्त उदात्तो भवति।<br>प्रवृद्धं यानम्। प्रयुक्ताः सक्तवः।<br>असंज्ञार्थोऽयमारम्भः। | |
| उत्तरपदस्य १११<br>संज्ञायाम्१४६<br>अन्तोदात्तः१४३,६४<br>क्तः १४५ | **१४८. कारकाद्दत्तश्रुतयोरेवाशिषि**<br>संज्ञायां (विषये) आशिषि (गम्यमानायाम्) कारकाद् दत्तश्रुतयोरन्त उदात्तो भवति।<br>'देवाः एनं देयासुः' इत्येवं प्रार्थितैः देवैर्दत्तः इति देवदत्तः।<br>'विष्णुरेनं श्रूयात्' इत्येवं प्रार्थितेन विष्णुना श्रुतः विष्णुश्रुतः।<br>'आशिषि लिङ्लोटौ' इति वर्त्तमाने 'क्तिच्क्तौ च संज्ञायाम्' इति क्तः। | कारकात् १५१ |
| अन्तोदात्तः१४३,६४<br>क्तः १४५<br>उत्तरपदस्य १११ | **१४९. इत्थंभूतेन कृतमिति च**<br>इत्थम्भूतेन कृतमिति अर्थे यः समासः तत्र क्तः अन्तोदात्तो भवति।<br>सुप्तप्रलपितम्। उन्मत्तप्रलपितम्। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | **१५०. अनो भाव-कर्मवचनः**<br>कारकाद् अनोऽन्त उदात्तो भवति, स चेदन् भाव-कर्मवचनः।<br>ओदनभोजनं सुखम्। राजभोजना शालयः। | |

| | | |
|---|---|---|
| अन्तोदात्तः१४३,६४<br>उत्तरप्रदस्य १११ | १५१. मनु-क्तिन्-व्याख्यान-शयनासन-स्थान-याजकादि-क्रीताः<br>मनु, क्तिन्, व्याख्यान, शयन, आसन, स्थान, याजकादि, क्रीत- इत्येते उत्तरपदभूताः शब्दा अन्तोदात्ता भवन्ति।<br>रथवर्त्म। पाणिनिकृतिः। ऋगयनव्याख्यानम्। राजशयनम्। राजासनम्। गोस्थानम्। ब्राह्मणयाजकः; ब्राह्मणपूजकः। गोक्रीतः। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १५२. सप्तम्याः पुण्यम्<br>सप्तम्याः (परम्) पुण्यम् उत्तरपदम् अन्तोदात्तं भवति।<br>अध्ययनेपुण्यम् अध्ययनपुण्यम्। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १५३. ऊनार्थकलहं तृतीयायाः<br>तृतीयायाः (परम्) ऊनार्थकलहम् उत्तरपदम् अन्तोदात्तं भवति।<br>माषोनम् ; माषविकलम्।<br>आसिकलह ; वाक्कलहः। | तृतीयायाः १५४ |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११<br>तृतीयायाः १५३ | १५४. मिश्रं चानुपसर्गसन्धौ<br>तृतीयायाः (परम्) अनुपसर्गं मिश्रम् उत्तरपदम् अन्तोदात्तं भवति, असन्धौ गम्यमाने।<br>गुडमिश्राः।<br>असन्धौ इति किम् ? ब्राह्मणमिश्रो राजा। ब्राह्मणैः सह संहितः=ऐकार्थ्यमापन्नः इत्यर्थः। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १५५. नञो गुणप्रतिषेधे संपाद्यर्ह-हितालमर्थास्तद्धिताः<br>गुणप्रतिषेधे (वर्तमानात्) नञः परे सम्पादिन्, अर्ह, हित, अलम्- इत्यर्थकास्तद्धिता उत्तरपदभूता अन्तोदात्ता भवन्ति।<br>कर्णवेष्टकाभ्यां सम्पादि मुखं कार्णवेष्टकिकम्। न कार्णवेष्टकिकम् इति अकार्णवेष्टकिकम्।<br>छेदमर्हति छैदिकः, न छैदिकः अच्छैदिकः।<br>वत्सेभ्यो हितः वत्सीयः, न वत्सीयः अवत्सीयः।<br>सन्तापाय प्रभवति सान्तापिकः न सान्तापिकः, असान्तापिकः। | नञः १६१<br>गुणप्रतिषेधे<br>तद्धिताः १५६ |

| | | |
|---|---|---|
| नञः १५५<br>गुणप्रतिषेधे १५५<br>तद्धिताः१५५<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १५६. य-यतोश्चातदर्थे<br>गुणप्रतिषेधे (वर्तमानात्) नञः उत्तरपदयोः अतदर्थे य-यतोस्तद्धितयोरन्त उदात्तो भवति।<br>य - पाशानां समूहः पाश्यः, न पाश्यः अपाश्यः।<br>यत् - दन्तेषु भवं दन्त्यम्, न दन्त्यम् अदन्त्यम्।<br>अतदर्थे इति किम्? पादार्थमुदकम् पाद्यम्, न पाद्यम् इति अपाद्यम्। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११<br>नञः १५५ | १५७. अच्कावशक्तौ<br>नञः उत्तरपदभूतौ अच्कौ अन्तोदात्तौ भवतः; अशक्तौ गम्यमानायाम्।<br>अच् - अपचः। यः पक्तुं न शक्नोति, पचाद्यच्।<br>क - अविक्षिपः। यो विक्षेप्तुं न शक्नोति। | अच्कौ १५८ |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११<br>नञः १५५<br>अच्कौ १५७ | १५८. आक्रोशे च<br>नञ उत्तरपदभूतौ अच्कौ अन्तोदात्तौ भवतः आक्रोशे (गम्यमाने)<br>अपचोऽयं जाल्मः। अविक्षिपः। | आक्रोशे १५९ |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११<br>नञः १५५<br>आक्रोशे १५८ | १५९. संज्ञायाम्<br>नञः परमुत्तरपदमन्तोदात्तं भवति संज्ञायाम् आक्रोशे।<br>अदेवदत्तः। अयज्ञदत्तः। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११<br>नञः १५५ | १६०. कृत्योकेष्णुच्चार्वादयश्च<br>नञः उत्तरपदभूताः कृत्योकेष्णुच्चार्वादयश्च अन्तोदात्ता भवन्ति।<br>कृत्य+उक+इष्णुच्+चार्वादि इतिच्छेदः।<br>कृत्य - अकर्त्तव्यम्; अकरणीयम्।<br>उक - अनागामुकम्।<br>इष्णुच् - अनलङ्करिष्णुः।<br>चार्वादयः - अचारुः, असाधुः। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११<br>नञः १५५ | १६१. विभाषा तृन्नन्न-तीक्ष्ण-शुचिषु<br>नञः उत्तरपदभूतेषु तृन्नन्नतीक्ष्ण-शुचिषु विभाषाऽन्तः उदात्तो भवति।<br>तृन् - अकर्त्ता।<br>अन्न - अनन्नम्।<br>तीक्ष्ण - अतीक्ष्णम्।<br>शुचि - अशुचिः।<br>पक्षे 'तत्पुरुषे तुल्यार्थ०' इति सूत्रेण पूर्वपदप्रकृत्या आद्युदात्तत्वम्। | |

| | | |
|---|---|---|
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १६२. बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने<br>बहुव्रीहौ इदम् एतद्, तद्- इत्येतेभ्यः परयोः क्रियागणने वर्तमानयोः प्रथमशब्दस्य, पूरणप्रत्ययान्तस्य च अन्त उदात्तो भवति।<br>इदं प्रथमं गमनं, भोजनं वा अस्य इति इदम्प्रथमः। इदन्द्वितीयः।<br>एतत्प्रथमः, एतद्द्वितीयः।<br>तत्प्रथमः, तद्द्वितीयः। | |
| बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १६३. संख्यायाः स्तनः<br>बहुव्रीहौ संख्यावाचिनः पूर्वपदात् परस्य स्तनशब्दस्य अन्तः उदात्तो भवति।<br>द्विस्तना। चतुःस्तना। | संख्यायाः<br>स्तनः १६४ |
| बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११<br>स्तनः १६३ | १६४. विभाषा छन्दसि<br>छन्दसि बहुव्रीहौ संख्यावाचिनः पूर्वपदात् परस्य स्तनशब्दस्य अन्तः उदात्तो विभाषा भवति।<br>द्विस्तनां कुर्याद् वामदेवः।<br>पक्षे पूर्वपदप्रकृतिस्वरेण आद्युदात्तत्वम्। | |
| बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १६५. संज्ञायां मित्राजिनयोः<br>बहुव्रीहौ उत्तरपदयोः मित्राजिनयोरन्त उदात्तो भवति।<br>देवमित्रः। वृकाजिनः। | |
| बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १६६. व्यवायिनोऽन्तरम्<br>बहुव्रीहौ व्यवायिवाचिनः परः उत्तरपदभूतः अन्तरशब्दः अन्तोदात्तो भवति।<br>व्यवायी = व्यवधाता, व्यवधानकर्तेत्यर्थः।<br>वस्त्रान्तरः। पटान्तरः। | |
| बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १६७. मुखं स्वाङ्गम्<br>बहुव्रीहौ स्वाङ्गवाची मुखशब्दः उत्तरपदभूतः अन्तोदात्तो भवति।<br>गौरमुखः। मद्रमुखः।<br>स्वाङ्गमिति किम् ? दीर्घमुखा शाला। | मुखम्<br>स्वाङ्गम् १६८ |

| | | |
|---|---|---|
| मुखम् १६७<br>स्वाङ्गम् १६७ बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १६८. नाव्यय-दिक्छब्द-गो-महत्<br>स्थूल-मुष्टि-पृथु-वत्सेभ्यः<br>बहुव्रीहौ अव्यय-दिक्शब्द-गो-महत्-स्थूल-मुष्टि-पृथु-वत्सेभ्यः स्वाङ्गं मुखमन्तोदात्तं न भवति।<br>उच्चैर्मुखः। प्राङ्मुखः। गोमुखः। महामुखः। स्थूलमुखः। मुष्टिमुखः। पृथुमुखः। वत्समुखः।<br>एषु पूर्वपदप्रकृतिस्वरो यथायोगं भवति। | |
| मुखम् १६७<br>स्वाङ्गम् १६७ बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १६९. निष्ठोपमानादन्यतरस्याम्<br>बहुव्रीहौ निष्ठोपमानात् स्वाङ्गं मुखमन्यतरस्यामन्तोदात्तं भवति।<br>निष्ठा- प्रक्षालितमुखः। पक्षे 'निष्ठोपसर्ग०' इति सूत्रेण विकल्पेन पूर्वपदान्तोदात्तत्वम्, तदभावे च पूर्वपदप्रकृतिस्वरेण गतिस्वरः इति त्रीण्युदाहरणानि भवन्ति।<br>उपमान - सिंहमुखः।<br>पक्षे पूर्वपदप्रकृतिस्वरः। सिंहशब्दोऽन्तोदात्तः। | |
| बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १७०. जाति-काल-सुखादिभ्योऽनाच्छादनात्<br>क्तोऽकृत-मित-प्रतिपन्नाः<br>बहुव्रीहौ जाति-काल-सुखादिभ्यः क्तोऽन्तोदात्तो भवति; आच्छादनात्परः क्तोऽन्तोदात्तो न भवति, कृतमित प्रपन्नाश्चान्तोदात्ताः न भवन्ति।<br>सारङ्गजग्धः।<br>मासजातः।<br>सुखजातः; दुःखजातः।<br>सुखादिशब्देन 'सुखादयः कर्तृवेदनायाम्' (३.१.१८) इति सूत्रे पठिताः सुखादयः गृह्यन्ते।<br>अनाच्छादनात् इति किम् ? वस्त्रच्छन्नः। वसनच्छन्नः।<br>अकृत-मित-प्रतिपन्नाः इति किम् ?<br>कुण्डकृतः। कुण्डमितः। कुण्डप्रतिपन्नः। | जाति-काल-सुखादिभ्यः १७१ |
| जाति-काल-सुखादिभ्यः १७०<br>बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १७१. वा जाते<br>बहुव्रीहौ जातिकालसुखादिभ्यः जातेऽन्तोदात्तो वा भवति।<br>दन्तजातः। मासजातः। सुखजातः; दुःखजातः।<br>पक्षे पूर्वपदप्रकृतिस्वरः। दन्तमासशब्दावाद्युदात्तौ।<br>सुखदुःखशब्दौ अन्तोदात्तौ। | |

| | | |
|---|---|---|
| बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १७२. नञ्सुभ्याम्<br>बहुव्रीहौ नञ्सुभ्याम् उत्तरपदस्यान्त उदात्तो भवति।<br>अयवो देशः। सुयवः। | नञ्सुभ्याम् १७५ |
| नञ्सुभ्याम् १७२<br>बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १७३. कपि पूर्वम्<br>बहुव्रीहौ नञ्सुभ्यां कप्प्रत्ययान्ते उत्तरपदे परतः पूर्वमुदात्तं भवति।<br>अकुमारीको देशः। सुकुमारीकः। | कपि १७४ |
| नञ्सुभ्याम् १७२<br>बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११<br>कपि१७३ | १७४. ह्रस्वान्तेऽन्त्यात् पूर्वम्<br>बहुव्रीहौ नञ्सुभ्यां ह्रस्वान्तेऽन्त्यात् पूर्वमुदात्तं भवति कपि।<br>अयवको देशः। सुमाषकः। | |
| | १७५. वहोर्नञ्वदुत्तरपदभूम्नि<br>वहोर्नञ्वदुत्तरपदभूम्नि स्वरो भवति।<br>बहुयवो देशः। वहुकुमारीको देशः। वहुयवको देशः। वहुजरः; बहुमरः; बहुमित्रः।<br>उत्तरपदभूम्नि इति किम्? वहुषु मनः यस्य स बहुमनाः अयम्। | बहोः १७६ |
| बहोः १७५<br>बहुव्रीहौ १६२<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १७६. नं गुणादयोऽवयवाः<br>बहुव्रीहौ बहोरुत्तरपदभूता अवयवाः (अवयववाचिनः) गुणादयः नञ्वत्कार्यं न लभन्ते।<br>बहुगुणारज्जुः।<br>अत्र पूर्वपदप्रकृतिस्वरः। बहुशब्दोऽन्तोदात्तः।<br>अवयवाः इति किम्? बहुगुणो ब्राह्मणः। अत्र गुणशब्दः अध्ययनश्रुतसदाचारपरः न त्ववयववाची। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १७७. उपसर्गात् स्वाङ्गं ध्रुवमपर्शु<br>बहुव्रीहौ उपसर्गादुत्तरपदम् पर्शुवर्जितं ध्रुवं स्वाङ्गमन्तोदात्तं भवति।<br>प्रपृष्ठः। प्रोदरः।<br>'ध्रुवम्' इत्येकरूपमुच्यते, ध्रुवमस्य शीलमिति यथा। सततं यस्य प्रगतं पृष्ठं भवति स प्रपृष्ठः इत्युच्यते। एवमेव प्रोदरः। | उपसर्गात् १६६ |

| | | |
|---|---|---|
| उपसर्गात् १७७<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १७८. वनं समासे<br>समासे उपसर्गात् परम् उत्तरपदं वनमन्तोदात्तं भवति।<br>प्रवणे यष्टव्यम्।<br>'प्रनिरन्तरः' इति वनस्य नकारस्य णत्वम्।<br>समासग्रहणं समासमात्रपरिग्रहार्थम्,अन्यथा बहुव्रीहावेव स्यात्। | वनम् १७९ |
| वनम् १७८<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १७९. अन्तः<br>'अन्तर्' इति शब्दादुत्तरपदं वनमन्तोदात्तं भवति।<br>अन्तर्वणो देशः।<br>अनुपसर्गार्थोऽयमारम्भः। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १८०. अन्तश्च<br>उपसर्गादुत्तरपदभूतः अन्तशब्दश्च अन्तोदात्तो भवति।<br>प्रान्तः। पर्यन्तः। बहुव्रीहिरयम्, प्रादिसमासो वा। | अन्तः १८१ |
| अन्तः १८०<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १८१. न नि-विभ्याम्<br>निविभ्यां परोऽन्तशब्दोऽन्तोदात्तो न भवति।<br>न्यन्तः। व्यन्तः।<br>अत्र पूर्वपदप्रकृतिस्वरत्वे कृते यणादेशः। तत्र 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति सूत्रेण यकारोत्तराकारः स्वरितः। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १८२. परेरभितोभावि-मण्डलम्<br>परेरुत्तरम् अभितोभाविवचनम्, मण्डलं च अन्तोदात्तं भवति।<br>अभितोभाविवचनशब्देन तस्य ग्रहणं यस्य भावः उभयतो भवति; यथा तीरम्, तीरस्य हि सत्ता नद्याः उभयतः पार्श्वे भवति।<br>अभितोभाविवचनम् - परिकूलम् परितीरम्।<br>मण्डलम् - परिमण्डलम्। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १८३. प्रादस्वाङ्गं संज्ञायाम्<br>प्राद् उत्तरपदमस्वाङ्गमन्तोदात्तं भवति, संज्ञायाम्।<br>प्रकोष्ठम्। प्रगृह्यम्। प्रद्वारम्।<br>एषु प्रादिसमासः, बहुव्रीहिर्वा। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १८४. निरुदकादीनि च<br>निरुदकादीनि च अन्तोदात्तानि भवन्ति।<br>निरुदकम्। निरुपलम्। निर्मक्षिकम्।<br>एष्वपि प्रादिसमासः, बहुव्रीहिर्वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। | |

| | | |
|---|---|---|
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १८५. अभेर्मुखम्<br>अभेर्मुखमन्तोदात्तं भवति।<br>अभिमुखम्। अभिमुखः।<br>अत्रापि प्रादिसमासः, बहुव्रीहिर्वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। | मुखम् १८६ |
| मुखम् १८५<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १८६. अपाच्च<br>अपाच्च मुखमन्तोदात्तं भवति।<br>अपमुखम्। अपमुखः।<br>अत्र प्रादिसमासः, बहुव्रीहिरव्ययीभावो वा। | अपात् १८७ |
| अपात् १८६<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १८७. स्फिग-पूत-वीणाञ्जोऽध्व-कुक्षि-सीरनाम-नाम च<br>अपात् स्फिग, पूत, वीणाऽञ्जोऽध्व-कुक्षि-सीरनाम-नाम चान्तोदात्तं भवति।<br>अपस्फिगम्। अपपूतम्। अपवीणम्। अपाञ्जः। अपाध्वा। अपकुक्षिः। अपसीरः; अपहलम्; अपलाङ्गलम्। अपनाम।<br>एष्वपि प्रादिसमासः, बहुव्रीहिरव्ययीभावो वा।<br>स्फिग-पूत-कुक्षिशब्दा अङ्गविशेषवाचकाः। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १८८. अधेरुपरिस्थम्<br>अधेरुपरिस्थमन्तोदात्तं भवति।<br>अधिदन्तः।<br>अध्यारुढो दन्त इति विग्रहे प्रादिसमासः।<br>दन्तस्योपरि योऽन्यो दन्तो जायते सोऽधिदन्त इत्युच्यते। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १८९. अनोरप्रधान-कनीयसी<br>अनोरप्रधान-कनीयसी अन्तोदात्ते भवतः।<br>अप्रधान- अनुगतो ज्येष्ठम्, अनुज्येष्ठः। अत्र पूर्वपदार्थस्य प्राधान्यम्, तस्मात्परस्य ज्येष्ठस्य च अप्राधान्यमिति अप्रधानस्य ज्येष्ठस्य अन्तोदात्तत्वम्।<br>कनीयस् - अनुगतः कनीयान् अनुकनीयान्। अत्र उत्तरपदार्थस्य प्राधान्यमेवेति अप्रधानेत्यंशेन अप्राप्त्या प्रधानार्थे<br>कनीयस् इतिशब्देऽन्तोदात्तत्वाय कनीयस् इति शब्दस्य ग्रहणं कृतम्। | अनोः १९० |

| | | |
|---|---|---|
| अनोः १८९<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १९०. पुरुषश्चान्वादिष्टः<br>अनोः परः अन्वादिष्टवाची पुरुषशब्दोऽन्तोदात्तो भवति।<br>अन्वादिष्टः पुरुषः अनुपुरुषः।<br>अन्वादिष्टः = अन्वाचितः; कथितानुकथितो वा। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १९१. अतेरकृत्पदे<br>अतेः परमकृदन्तशब्दः, पदशब्दश्चान्तोदात्तो भवति।<br>अत्यङ्कुशो नागः। अतिकशोऽश्वः।<br>अतिपदा शक्वरी। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १९२. नेरनिधाने<br>नेरुत्तरपदमन्तोदात्तं भवत्यनिधाने।<br>निधानम् = अप्रकाश्यता,<br>तद्भिन्नम् अनिधानम् = प्रकाशनमित्यर्थः।<br>निमूलम्।<br>निर्गतं मूलमस्येति विग्रहे बहुव्रीहिरत्र, निर्गतं मूलमिति विग्रहे प्रादिसमासो वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। | |
| अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १९३. प्रतेरंश्वादयस्तत्पुरुषे<br>तत्पुरुषे प्रतेरंश्वादयोऽन्तोदात्ता भवन्ति।<br>प्रतिगतोंऽशुः प्रत्यंशुः। प्रतिजनः। | तत्पुरुषे १९६ |
| तत्पुरुषे १९३<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १९४. उपाद् द्व्यजजिनमगौरादयः<br>तत्पुरुषे उपाद् द्व्यजजिनमन्तोदात्तं भवति,<br>गौरादयस्तु अन्तोदात्ता न भवन्ति।<br>द्व्यच् - उपगतो देवमुपदेवः। उपसोमः। उपेन्द्रः।<br>अजिन- उपाजिनम्। | |
| तत्पुरुषे १९३<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १९५. सोरवक्षेपणे<br>तत्पुरुषे अवक्षेपणे (गम्यमाने) सोरुत्तरपदमन्तोदात्तं भवति। अवक्षेपणम्= निन्दा।<br>इह खल्विदानीं सुस्थण्डिले सुस्फिगाभ्यां सुप्रत्यवसितः। | |
| तत्पुरुषे १९३<br>अन्तोदात्तः१४३,६४<br>उत्तरपदस्य १११ | १९६. विभाषोत्पुच्छे<br>तत्पुरुषे उत्पुच्छे अन्त उदात्तो विभाषा भवति।<br>उत्क्रान्तः पुच्छाद् उत्पुच्छः।<br>पक्षे 'तत्पुरुषे तुल्यार्थ' इति सूत्रेण प्रकृतिस्वरेण उद्घटकोकार उदात्तः। | विभाषा १९८ |

| | | |
|---|---|---|
| विभाषा १६६<br>अन्तोदात्त:१४३,६४<br>उत्तरपदस्य १११ | १६७. द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ<br>बहुव्रीहौ द्वित्रिभ्यां पादुदन्मूर्धसु अन्त उदात्तो विभाषा भवति।<br>द्वौ पादौ अस्य द्विपात्।<br>द्वौ दन्तौ अस्य द्विदन्।<br>द्वौ मूर्धानौ अस्य द्विमूर्धा।<br>पक्षे एषु पूर्वपदप्रकृतिस्वरः।<br>सूत्रे मूर्धन्निति असमासान्तः निर्दिष्टः इति 'द्वित्रिभ्यां ष मूर्ध्नः' इति समासान्तोऽत्र न भवति। | बहुव्रीहौ१६८ |
| विभाषा १६६<br>अन्तोदात्त:१४३,६४<br>उत्तरपदस्य १११<br>बहुव्रीहौ१६८ | १६८. सक्थं चाक्रान्तात्<br>बहुव्रीहौ अक्रान्तात् सक्थमुत्तरपदमन्तोदात्तं विभाषा भवति।<br>गौरसक्थः। श्लक्ष्णसक्थः।<br>पक्षे पूर्वपदप्रकृतिस्वरः। गौरश्लक्ष्णशब्दावन्तोदात्तौ।<br>अक्रान्तादिति किम् ? चक्रसक्थः। अत्र षचश्चित्त्वान्नित्यमन्तोदात्तत्वं भवति 'चितः' इति सूत्रेण। | |

| उदात्तः ६४<br>सक्थम् १९८ | १९९. परादिश्छन्दसि बहुलम्<br>बहुव्रीहौ छन्दसि परस्य सक्थशब्दस्यादिरुदात्तो भवति बहुलम्।<br>अञ्जिसक्थमालभेत। त्वाष्ट्रौ लोमसक्थौ।<br>विभाषाग्रहणे प्रकृते बहुलग्रहणं व्यत्ययार्थम्- उत्तरपदाद्युदात्तत्वस्य, उत्तरपदान्तोदात्तत्वस्य, पूर्वपदान्तोदात्तत्वस्य, पूर्वपदाद्युदात्तत्वस्य च।<br>तथा ह्युक्तं भाष्ये -<br>परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते।<br>पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं स्मृतः।।<br>पराद्युदात्तत्वं यथा- वाक्पतिः। चित्पतिः।<br>परान्तोदात्तत्वम्<br>(वा०) अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम्।<br>त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण।<br>पूर्वान्तोदात्तत्वम्<br>(वा०) पूर्वपदान्तोदात्तप्रकरणे मरुद्वृद्धादीनां छन्दस्युपसंख्यानम्।<br>मरुद् वृद्धः।<br>पूर्वाद्युदात्तत्वम्<br>(वा०) पूर्वाद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्।<br>दिवोदासाय सामगाय ते। | |
|---|---|---|

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां षष्ठाध्यायस्य द्वितीयः पादः ।।

।। श्रीः ।।

## ।। अथ षष्ठाध्यायस्य तृतीयः पादः ।।

| | | |
|---|---|---|
| | १. अलुगुत्तरपदे<br>अधिकारोऽयम् आपादपरिसमाप्तेः। | अलुक् २३<br>उत्तरपदे १३८ |
| अलुक्१ उत्तरपदे १ | २. पञ्चम्याः स्तोकादिभ्यः<br>स्तोकादिभ्यः पञ्चम्या अलुग् भवत्युत्तरपदे परे।<br>स्तोकान्मुक्तः, अल्पान्मुक्तः। अन्तिकादागतः,<br>अभ्याशादागतः। दूरादागतः, विप्रकृष्टादागतः,<br>कृच्छ्रादागतः। | |
| अलुक्१ उत्तरपदे १ | ३. ओजःसहोम्भस्तमसस्तृतीयायाः<br>ओजःसहोऽम्भस्तमसस्तृतीयायाः अलुगुत्तरपदे परे भवति।<br>ओजसाकृतम्। सहसाकृतम्। अम्भसाकृतम्। तमसाकृतम्। | तृतीयायाः ५ |
| अलुक्१ उत्तरपदे १<br>तृतीयायाः ३ | ४. मनसः संज्ञायाम्<br>मनसस्तृतीयाया अलुगुत्तरपदे भवति संज्ञायाम्।<br>मनसादत्ता। मनसागुप्ता। | मनसः ५ |
| मनसः ४ अलुक्१<br>उत्तरपदे१<br>तृतीयायाः ३ | ५. आज्ञायिनि च<br>मनसस्तृतीयाया अलुग् भवति आज्ञायिनि उत्तरपदे परे।<br>मनसा आज्ञातुं शीलमस्य मनसाज्ञायी। | |
| अलुक्१ उत्तरपदे १ | ६. वैयाकरणाख्यायां चतुर्थ्याः<br>वैयाकरणाख्यायाम् चतुर्थ्या अलुग् भवति उत्तरपदे परे।<br>आत्मनेपदम्। आत्मनेभाषा। | सम्पूर्णसूत्रम् ७ |
| अलुक्१ उत्तरपदे १<br>वैयाकरणाख्यायाम्६<br>चतुर्थ्याः ६ | ७. परस्य च<br>परस्य च चतुर्थ्या अलुग् भवति उत्तरपदे परे।<br>वैयाकरणाख्यायाम्।<br>परस्मैपदम्। परस्मैभाषा। | |
| अलुक्१ उत्तरपदे १ | ८. हलदन्तात्सप्तम्याः संज्ञायाम्<br>हलदन्तात्सप्तम्या अलुगुत्तरपदे परे भवति संज्ञायाम्।<br>हलन्तात् - युधिष्ठिरः।<br>अदन्तात् - अरण्येतिलकाः। | हलदन्तात् १७<br>सप्तम्याः १६ |

| | | |
|---|---|---|
| हलदन्तात् ८<br>सप्तम्याः ८<br>अलुक्१ उत्तरपदे १ | ९. कारनाम्नि च प्राचां हलादौ<br>प्राचां कारनाम्नि च हलदन्तात्सप्तम्या अलुग्भवति हलादावुत्तरपदे परे।<br>राजग्राह्यो भागः करः,कर एव कारःप्रज्ञादित्वात् स्वार्थेऽण्।<br>दूषदिमाषकः। मुकुटेकार्षापणम्। | |
| सप्तम्याः ८<br>अलुक्१ उत्तरपदे १ | १०. मध्याद् गुरौ<br>मध्यात् सप्तम्या अलुग्भवति गुरावुत्तरपदे परे।<br>मध्येगुरुः। | |
| सप्तम्याः ८<br>अलुक्१ उत्तरपदे १<br>हलदन्तात् -८ | ११. अमूर्ध-मस्तकात् स्वाङ्गादकामे<br>अमूर्धमस्तकाद् हलदन्तात् स्वाङ्गात्सप्तम्या अलुग्भवति अकामे उत्तरपदे परे।<br>उरसिलोमा। कण्ठेकालः।<br>अकामे इति किम् ? मुखे कामोऽस्य मुखकामः। | |
| हलदन्तात् ८<br>सप्तम्याः ८<br>अलुक्१ उत्तरपदे १ | १२. बन्धे च विभाषा<br>हलदन्तात् सप्तम्या विभाषा अलुग्भवति बन्धे उत्तरपदे परे।<br>हस्तेबन्धः, हस्तबन्धः। चक्रेबन्धः, चक्रबन्धः। | |
| सप्तम्याः ८<br>अलुक्१ उत्तरपदे १ | १३. तत्पुरुषे कृति बहुलम्<br>तत्पुरुषे सप्तम्या बहुलं अलुग्भवति कृति।<br>स्तम्बेरमः। कर्णेजपः। | |
| सप्तम्याः ८<br>अलुक्१ उत्तरपदे १ | १४. प्रावृट्-शरत्-काल-दिवां जे<br>प्रावृट्शरत्कालदिवां सप्तम्या अलुग् भवति जशब्दे उत्तरपदे परे।<br>प्रावृषिजः। शरदिजः। कालेजः। दिविजः। | जे १५ |
| सप्तम्याः ८<br>अलुक्१ उत्तरपदे १<br>जे १४ | १५. विभाषा वर्ष-क्षर-शर-वरात्<br>वर्ष-क्षर-शर-वरात् सप्तम्या विभाषा अलुग्भवति, जशब्दे उत्तरपदे परे।<br>वर्षेजः, वर्षजः। क्षरेजः, क्षरजः। शरेजः, शरजः। वरेजः, वरजः। | विभाषा १७ |
| हलदन्तात्<br>सप्तम्याः८<br>उत्तरपदे१<br>अलुक्१ विभाषा १५ | १६. घ-काल-तनेषु कालनाम्नः<br>घ-काल-तनेषु परतः हलदन्तात् कालनाम्नः सप्तम्या विभाषा अलुग्भवति।<br>घ- पूर्वाह्णेतरे, पूर्वह्णतरे। पूर्वाह्णेतमे, पूर्वाह्णतमे।<br>काल - पूर्वाह्णेकाले, पूर्वाह्णकाले।<br>तन- पूर्वाह्णेतने, पूर्वाह्णतने।<br>हलदन्तादित्येव- रात्रितरायाम्। | |

| | | |
|---|---|---|
| हलदन्तात्<br>सप्तम्याः८<br>उत्तरपदे१<br>अलुक्१ विभाषा<br>१५ | १७. शय-वास-वासिष्वकालात्<br>अकालवाचिनः हलदन्तात् सप्तम्या विभाषा अलुग्भवति।<br>खेशयः, खशयः। ग्रामेवासः, ग्रामवासः। ग्रामेवासी, ग्रामवासी।<br>अकालादिति किम् ? पूर्वाह्णशयः।<br>हलदन्तादित्येव- भूमिशयः। | |
| सप्तम्याः८<br>उत्तरपदे१<br>अलुक्१ | १८. नेन्सिद्ध-बध्नातिषु च<br>सप्तम्याः अलुग् न भवति इन्नन्त, सिद्ध, बध्नाति-इत्येतेषूत्तरपदेषु परतः।<br>'तत्पुरुषे कृति बहुलम्' इति प्राप्तस्यालुकोऽयं प्रतिषेधः।<br>इनन्ते – स्थण्डिलवर्ती।<br>सिद्धे – साङ्काश्यसिद्धः<br>बध्नातौ – चक्रबद्धः। | न १९ |
| सप्तम्याः८<br>उत्तरपदे१<br>अलुक्१ न १८ | १९. स्थे च भाषायाम्<br>सप्तम्या अलुग्न भवति स्थशब्दे परे च भाषायाम्।<br>समस्थः। विषमस्थः। कूटस्थः। | |
| उत्तरपदे१ अलुक्१ | २०. षष्ठ्या आक्रोशे<br>आक्रोशे (गम्यमाने) षष्ठ्या अलुगुत्तरपदे परे भवति।<br>चोरस्य कुलम्। वृषलस्य कुलम्। | षष्ठ्याः २३<br>आक्रोशे २१ |
| षष्ठ्याः २०<br>आक्रोशे २०<br>उत्तरपदे१ अलुक्१ | २१. पुत्रेऽन्यतरस्याम्<br>आक्रोशे (गम्यमाने) षष्ठ्या अन्यतरस्याम् अलुग्भवति पुत्रे उत्तरपदे परे।<br>दास्याः पुत्रः। दासीपुत्रः। | पुत्रे २४ |
| षष्ठ्याः २०<br>उत्तरपदे१ अलुक्१ | २२. ऋतो विद्या-योनिसंबन्धेभ्यः<br>ऋतो विद्या-योनिसम्बन्धेभ्यः षष्ठ्या अलुगुत्तरपदे परे भवति।<br>होतुरन्तेवासी। होतुःपुत्रः। पितुरन्तेवासी। पितुःपुत्रः। | ऋतः २४<br>विद्या-योनि-संबन्धेभ्यः २४ |
| ऋतः २२<br>विद्या-योनि-<br>संबन्धेभ्यः २३<br>षष्ठ्याः २०<br>उत्तरपदे१ अलुक्१ | २३. विभाषा स्वसृ-पत्योः<br>ऋकारान्तेभ्यः विद्या-योनिसम्बन्धेभ्यः षष्ठ्या विभाषा अलुग् भवति स्वसृपत्योः परतः।<br>स्वसा- मातुःष्वसा, मातुः स्वसा, मातृष्वसा।<br>यदा अलुक् तदा 'मातृपितृभ्यामन्यतरस्याम्' इति सूत्रेण विकल्पेन षत्वम्। यदा लुक् तदा 'मातृपितृभ्यां स्वसा' इति सूत्रेण नित्यं षत्वम्।<br>पतिः – दुहितुःपतिः, दुहितृपतिः। | |

| | | |
|---|---|---|
| ऋतः २२<br>विद्यायोनि-<br>सम्बन्धेभ्यः २२<br>पुत्रे ११ उत्तरपदे१ | **२४. आनङ् ऋतो द्वन्द्वे**<br>विद्यायोनिवाचिनाम् ऋकारान्तानां यो द्वन्द्वः, तत्र, ऋकारान्तान्तानां पुत्रशब्दे परे यो द्वन्द्वः तत्र चोत्तरपदे परतः पूर्वपदस्य आनङ् इत्यादेशो भवति।<br>होतापोतारौ। मातापितरौ।<br>पितापुत्रौ। मातापुत्रौ। | आनङ् २५ |
| आनङ् २४<br>उत्तरपदे१ | **२५. देवताद्वन्द्वे च**<br>देवताद्वन्द्वे चोत्तरपदे परे अनाङ् भवति।<br>इन्द्रावरुणौ। इन्द्रासोमौ। | देवताद्वन्द्वे ३० |
| देवताद्वन्द्वे २५<br>उत्तरपदे१ | **२६. ईदग्नेः सोमवरुणयोः**<br>देवताद्वन्द्वे सोमवरुणयोः परतः अग्नेरीद् भवति।<br>अग्नीषोमौ। अग्नीवरुणौ। | अग्नेः २७ |
| देवताद्वन्द्वे २५<br>उत्तरपदे१<br>अग्नेः २६ | **२७. इद्वृद्धौ**<br>देवताद्वन्द्वे वृद्धौ (वृद्धिमति) उत्तरपदे परतः अग्नेरिद् भवति।<br>अर्थात् आनङ्, ईत्वं चाग्नेर्नभवति।<br>आग्निवारुणीमनड्वाहीमालभेत। | |
| देवताद्वन्द्वे २५<br>उत्तरपदे१ | **२८. दिवो द्यावा**<br>द्वेवताद्वन्द्वे दिवो द्यावा भवति उत्तरपदे परे।<br>द्यौश्च भूमिश्च द्यावाभूमी। | दिवः द्यावा २९ |
| देवताद्वन्द्वे २५<br>उत्तरपदे१<br>दिवः २८ द्यावा२८ | **२९. दिवसश्च पृथिव्याम्**<br>देवताद्वन्द्वे दिवः दिवसो भवति, चकाराद् द्यावा च पृथिव्यामुत्तरपदे।<br>'दिवस' इत्यादेशेऽकारोच्चारणं विकाराभावप्रतिपत्त्यर्थम्, तेन रुत्वादीनि न भवन्ति।<br>दिवस्पृथिव्यौ। द्यावापृथिव्यौ। | |
| देवताद्वन्द्वे २५<br>उत्तरपदे१ | **३०. उषासोषसः**<br>देवताद्वन्द्वे उषसः उषासा भवति उत्तरपदे।<br>उषासासूर्यम्। उषासानक्ता। | |
| | **३१. मातर-पितरावुदीचाम्**<br>उदीचामाचार्याणां मतेन 'मातरपितरौ' इति निपात्यते।<br>माता च पिता च मातरपितरौ। | |
| | **३२. पितरा-मातरा च च्छन्दसि**<br>पितरामातरा च छन्दसि निपात्यते।<br>आ मा गन्तां पितरामातरा च। | |

| | ३३. स्त्रियाः पुंवद् भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु<br>भाषितपुंस्कात् स्त्रियाः(स्त्रीप्रत्ययान्तस्य) पुंवद्रूपं भवति समानाधिकरणे उत्तरपदे स्त्रीलिङ्गे शब्दे परे, ऊङ् तु पुंवद् रूपं न लभते। पूरणीप्रियादिषु च पुंवद् न भवति।<br>दर्शनीया भार्या यस्य स दर्शनीयभार्यः।<br>अनूङ् इति किम् ? वामोरूभार्यः।<br>अपूरणीप्रियादिषु किम ? कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमाः रात्रयः। कल्याणी प्रिया यस्य स कल्याणीप्रियः। | स्त्रियाः४१,<br>पुंवत्४०,<br>अनूङ् ४१<br>भाषितपुंस्कात्४२ |
|---|---|---|

| | | |
|---|---|---|
| स्त्रियाः३२ पुंवत् ३३ अनूङ् ३३ भाषितपुंस्कात् ३३ | ३४. तसिलादिष्वाकृत्वसुचः<br>आकृत्वसुचः तसिलादिषु परतः भाषितपुंस्कात् स्त्रियाः पुवंद् भवति; ऊङ् तु पुंवद् रूपं न लभते।<br>अत्र परिगणनं कर्त्तव्यम्-<br>(वा०) तसिलादी त्रतसौ।<br>तस्यां शालायाम् वसति इति तत्र वसति । तस्याः- ततः। यस्याः- यतः।<br>(वा०) तरप्तमपौ।<br>दर्शनीयतरा। दर्शनीयतमा।<br>(वा०) चरट्जातीयरौ।<br>पटुचरी। पटुजातीया।<br>(वा०) कल्पब्देशीयरौ।<br>दर्शनीयकल्पा। दर्शनीयदेशीया।<br>(वा०) रूपप्पाशपौ।<br>दर्शनीयरूपा। दर्शनीयपाशा।<br>(वा०) थम्थालौ।<br>कया आकृत्या- कथम्। यया आकृत्या यथा।<br>(वा०) दार्हिलौ।<br>तस्यां वेलायां तदा,तर्हि।<br>(वा०) तिल्थ्यनौ।<br>प्रशस्ता वृकी- वृकतिः। अजाभ्यो हिता अजथ्या यूथिः।<br>(वा०)शसि बह्वल्पार्थस्य।<br>बह्वीभ्यो देहि बहुशः देहि। अल्पाभ्यो देहि अल्पशः देहि।<br>(वा०) त्वतलोर्गुणवचनस्य।<br>पट्व्याः भावः पटुत्वम्, पटुता।<br>(वा०) भस्याढे तद्धिते।<br>हस्तीनां समूहः हास्तिकम्।<br>(वा०) ठक्छसोश्च पुंवद्भावो वक्तव्यः।<br>भवत्याः छात्राः भावत्काः,भवदीयाः। | |
| स्त्रियाः३२ पुंवत् ३३ अनूङ् ३३ भाषितपुंस्कात् ३३ | ३५. क्यङ्मानिनोश्च<br>क्यङ्मानिनोश्च परतः भाषितपुंस्कात् स्त्रियाः पुंवद् भवति, ऊङ् तु पुंवद् न भवति।<br>एनीवाचरति एतायते। स्वाभिन्नां काञ्चिद् दर्शनीयां मन्यते दर्शनीयमानिनी। | |
| स्त्रियाः३२ पुंवत् ३३ मासितपुंस्कात् ३३ उत्तरपदे । | ३६. न कोपधायाः<br>कोपधायाः स्त्रियाः पुवंद् रूपं न भवति।<br>पाचिकाभार्यः। मद्रिकायते। मद्रिकामानिनी। | |

| | | |
|---|---|---|
| स्त्रियाः ३३ पुंवत् ३३<br>भाषितपुंस्कात् ३३ | ३७. संज्ञा-पूरण्योश्च<br>संज्ञापूरण्योश्च पुंवद् रूपं न भवति।<br>दात्ताभार्यः। पञ्चमीभार्यः। | |
| स्त्रियाः३३ पुंवत् ३३<br>न ३६<br>उत्तरपदे १ | ३८. वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे<br>वृद्धिनिमित्तस्य तद्धितस्य या स्त्री तस्याः पुंवद् रूपं न भवति, स तद्धितश्चेद् रक्ते, विकारे चार्थे न भवेत्।<br>स्रौघ्नीभार्यः। स्रौघ्नीयते। स्रौघ्नीमानिनी। | |
| स्त्रियाः३३ पुंवत् ३३<br>न ३६ | ३९. स्वाङ्गच्चेतः<br>स्वाङ्गाच्चेतः स्त्रियाः पुंवद् रूपं न भवति।<br>सुकेशीभार्यः। | |
| स्त्रियाः३३ पुंवत् ३३<br>न ३६ | ४०. जातेश्च<br>जातेश्च स्त्रियाः पुंवद् रूपं न भवति।<br>शूद्राभार्यः। ब्राह्मणीभार्यः। | |
| भाषितपुंस्कात् ३३<br>अनूङ् ३३<br>स्त्रियाः ३३ | ४१. पुंवत्कर्मधारय-जातीय-देशीयेषु<br>भाषितपुंस्कात् स्त्रियाः पुंवद् रूपं भवति कर्मधारय-जातीय-देशीयेषु परेषु, ऊङ् तु पुंवद् रूपं न लभते।<br>महती चासौ नवमी महानवमी। पाचकस्त्री। दात्तभार्या। पञ्चमभार्या। स्रौघ्नभार्या। सुकेशभार्या। ब्राह्मणभार्या। एवमेव पाचकजातीया। पाचकदेशीया।<br>(वा०) कुक्कुट्यादीनामण्डादिषु।<br>कुक्कुट्याः अण्डम् कुक्कुटाण्डम्। मृग्याः क्षीरम् मृगक्षीरम्। काक्याः शावः काकशावः। | |
| भाषितपुंस्कात् ३३<br>उत्तरपदे । | ४२. घ-रूप-कल्प-चेलड्-ब्रुव-गोत्रमत-हतेषु ङ्योऽनेकाचो ह्रस्वः<br>घ-रूप-कल्प-चेलड्-ब्रुव-गोत्रमत-हतेषु परतः भाषितपुंस्काद् ङ्योऽनेकाचो ह्रस्वो भवति।<br>घ-रूप-कल्पाः प्रत्ययाः,चेलडादीन्युत्तरपदानि कुत्सावचनानि।<br>घ- ब्राह्मणितरा, ब्राह्मणितमा।<br>रूप- प्रशस्ता ब्राह्मणी ब्राह्मणिरूपा।<br>कल्प- ईषन्न्यूना ब्राह्मणी ब्राह्मणिकल्पा।<br>चेलट्- ब्राह्मणिचेली।<br>ब्रुव- ब्राह्मणिब्रुवा।<br>गोत्रादि- ब्राह्मणिगोत्रा। ब्राह्मणिमता। ब्राह्मणिहता। | घरूप-तेषु ४४<br>ह्रस्वः ४४ |

| | | |
|---|---|---|
| घादिषु ४२<br>ह्रस्वः४२ | ४३. नद्याः शेषस्यान्यतरस्याम्<br>नद्याः शेषस्य घादिषु परतो ह्रस्वोऽन्यतरस्यां भवति।<br>शेषपदेन अङ्यन्तस्य, ङ्यन्तैकाचश्च ग्रहणम्।<br>अङ्यन्तनद्यः- ब्रह्मबन्धुतरा, ब्रह्मवन्धूतरा।<br>ङ्यन्तैकाचः- स्त्रितरा, स्त्रीतरा। | नद्याः<br>अन्यतरस्याम्४४ |
| नद्याः ४३<br>घादिषु ४२<br>ह्रस्वः४२<br>वा ४३ | ४४. उगितश्च<br>उगितश्च नद्या घादिषु परेषु अन्यतरस्यां ह्रस्वो भवति।<br>श्रेयसितरा।<br>ह्रस्वाभावपक्षे श्रेयस्तरा।<br>'तसिलादिष्वाकृत्वसुचः' इति सूत्रेण पुंवद्भावः। | |
| उत्तरपदे १ | ४५. आन्महतः समानाधिकरण-जातीययोः<br>महतः आद् भवति समानाधिकरणे उत्तरपदे परतः,<br>जातीयर्प्रत्यये च परतः।<br>महादेवः।<br>महाजातीयः।<br>(वा०) महदात्त्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्वचनं<br>चासमानाधिकरणार्थम् ।<br>महत्याः घासः महाघासः। महत्याः करः महाकरः। महत्याः<br>विशिष्टः महाविशिष्टः।<br>(वा०) अष्टनः कपाले हविष्युपसंख्यानम्।<br>अष्टाकपालं चारु निर्वपेत्। | आत् ४८ |
| आत् ४५<br>उत्तरपदे१ | ४६. द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः<br>द्व्यष्टनः आद् भवति संख्यायामुत्तरपदे परे, न तु<br>बहुव्रीहौ, अशीति शब्दे च परतः।<br>द्वि- द्वादश। द्वौ च दश चेति विग्रहे द्वन्द्वः, द्व्यधिका<br>दशेति विग्रहे उत्तरपदलोपी तत्पुरुषो वा।<br>अष्टन्- अष्टादश।<br>अबहुव्रीह्यशीत्योः इति किम्? द्वित्राः। द्विदशाः।<br>द्व्यशीतिः।<br>(वा०) प्राक्शतादिति वक्तव्यम्।<br>तेनेह न भवति- द्विशतम्। द्विसहस्रम्। अष्टशतम्।<br>अष्टसहस्रम्। | द्व्यष्टनः<br>संख्यायाम्<br>अबहु-शीत्योः४८ |
| संख्यायाम् ४६<br>अबहु-शीत्योः ४६<br>उत्तरपदे । | ४७. त्रेस्त्रयः<br>त्रेस्त्रयो भवति संख्यायामुत्तरपदे परे, न तु<br>बहुव्रीह्यशीत्योः।<br>त्रयोदश। त्रयोविंशातिः। त्रयस्त्रिंशत्।<br>अबहुव्रीह्यशीत्योः इत्येव- त्रिदशाः। त्र्यशीतिः।<br>प्राक्शतादित्येव- त्रिशतम्। त्रिसहस्रम्। | त्रयः ४८ |

| | | |
|---|---|---|
| संख्यायाम् ४६<br>अबहु-शीत्योः ४६<br>उत्तरपदे । | ४८. विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्<br>चत्वारिंशत्प्रभृतौ उत्तरपदे परे सर्वेषां (द्व्यष्टनोः आत्वं, त्रेस्त्रयश्च) विभाषा भवति। न तु बहुव्रीह्यशीत्योः।<br>द्वाचत्वारिंशत्, द्विचत्वारिंशत्। अष्टाचत्वारिंशत्, अष्टचत्वारिंशत्। त्रयश्चत्वारिंशत्, त्रिचत्वारिंशत्।<br>प्राक्शतादित्येव- द्विशतम्। अष्टशतम्। त्रिशतम्। | |
| | ४९. हृदयस्य हृल्लेख-यदण्-लासेषु<br>हृदयस्य हृद् इत्यादेशो भवति लेख, यत्, अण्, लास- इत्येतेषु परतः।<br>हृदयस्य लेखः हृल्लेखः। हृदयस्य प्रियं हृद्यम्। हृदयस्य इदं हार्दम्। हृदयस्य लासः हृल्लासः। | हृदस्य हृत् ५० |
| हृदयस्य ४९<br>हृत् ४९<br>उत्तरपदे । | ५०. वा शोक-ष्यञ्-रोगेषु<br>शोक-ष्यञ्-रोगेषु हृदयस्य हृद् इत्यादेशो वा भवति।<br>हृच्छोकः, हृदयशोकः।<br>सौहार्दम्, सौहृदय्यम्।<br>हृद्रोगः, हृदयरोगः। | |
| उत्तरपदे । | ५१. पादस्य पदाज्याति-गोपहतेषु<br>पादस्य पद इत्यादेशो भवति आजि, आति, ग, उपहत- इत्येतेषु उत्तरपदेषु परेषु।<br>पादाभ्यामजति पदाजिः।<br>पादाभ्यां गच्छति पदगः।<br>पादाभ्यामुपहतः पदोपहतः। | पादस्य ५५ |
| पादस्य ५१ | ५२. पद्यत्यतदर्थे<br>पादस्य पद् इत्यादेशो भवति अतदर्थे यति परे।<br>पादौ विध्यन्ति पद्याः शर्कराः।<br>अतदर्थे इति किम् ? पादार्थमुदकं पाद्यम्। 'पादार्घाभ्यां च' इति सूत्रेण यत्। | पद् ५५ |
| पादस्य ५१<br>पद् ५२ | ५३. हिम-काषि-हतिषु च<br>हिम-काषि-हतिषु च परेषु पादस्य पद् इत्यादेशो भवति।<br>पद्धिमम्। पत्काषी। पद्धतिः। | |
| पादस्य ५१<br>पद् ५२ | ५४. ऋचः शे<br>ऋचः (ऋक्सम्बिन्धिनः) पादस्य पद् इत्यादेशो भवति 'शे' परे<br>'श' इति शस्प्रत्ययस्यैकदेशानुकरणम्।<br>पच्छो गायत्रीं शंसति। | |

| | | |
|---|---|---|
| पादस्य ५१<br>पद् ५२ | ५५. वा घोष-मिश्र-शब्देषु<br>घोष-मिश्र-शब्देषु परेषु पादस्य पद् इत्यादेशो वा भवति।<br>पद्घोषः; पादघोषः।<br>पन्मिश्रः; पादमिश्रः।<br>पच्छब्दः; पादशब्दः। | |
| उत्तरपदे १ | ५६. उदकस्योदः संज्ञायाम्<br>उदकस्य उद इत्यादेशो भवति उत्तरपदे परे संज्ञायाम्।<br>उदमेघो नाम, यस्य औदमेघिः पुत्रः। | उदकस्योदः ५६ |
| उदकस्य५६<br>उदः५६ | ५७. पेषं-वास-वाहन-धिषु च<br>पेषम्-वास-वाहन-धिषु परेषु च उदकस्य उद इत्यादेशो भवति।<br>उदपेषं पिनष्टि। उदवासः। उदवाहनः। उदधिः। | |
| उदकस्य५६<br>उदः५६ | ५८. एकहलादौ पूरयितव्येऽन्यतरस्याम्<br>एकहलादौ पूरयितव्ये उत्तरपदे परे उदकस्योदोऽन्यतरस्यां भवति।<br>उदकुम्भः, उदककुम्भः।<br>एकहलादौ इति किम् ? उदकस्थाली।<br>पूरयितव्ये इति किम? उदकपर्वतः। | अन्यतरस्याम्<br>६० |
| उदकस्य५६<br>उदः५६<br>अन्यतरस्याम् ५८ | ५९. मन्थौदन-सक्तु-बिन्दु-वज्र-भार-हार-<br>वीवध-गाहेषु च<br>मन्थौदन-सक्तु-बिन्दु-वज्र-भार-हार-<br>वीवध-गाहेषु च उदकस्योदोऽन्यतरस्यां भवति।<br>उदमन्थः। उदौदनः। उदसक्तुः। उदबिन्दुः। उदवज्रः।<br>उदभारः। उदहारः। उदवीवधः। उदगाहः। पक्षे उदकमन्थ इत्यादयः। | |
| उत्तरपदे १<br>अन्यतरस्याम ५८ | ६०. इको ह्रस्वोऽङ्यो गालवस्य<br>अङ्यः इगन्तस्य ह्रस्वोऽन्यतरस्यां भवति उत्तरपदे परे गालवस्य मतेन।<br>ग्रामणिपुत्रः; ग्रामणीपुत्रः। ब्रह्मबन्धुपुत्रः; ब्रह्मबन्धूपुत्रः।<br>अङ्य इति किम्? गार्गीपुत्रः। वात्सीपुत्रः। | ह्रस्वः ६५ |
| उत्तरपदे १<br>ह्रस्वः६० | ६१. एकतद्धिते च<br>एकस्य ह्रस्वो भवति तद्धिते परे, चकाराद् उत्तरपदे परे।<br>'एक' इति लुप्तषष्ठीकं पदम्।<br>तद्धिते- एकस्या आगतम् एकरूप्यम्।<br>एकस्याः भावः एकत्वम्, एकता।<br>उत्तरपदे- एकस्याः क्षीरम् एकक्षीरम्। | |

| | | |
|---|---|---|
| ह्रस्वः ६० <br> उत्तरपदे । | ६२. ङ्यापोः संज्ञाछन्दसोर्बहुलम् <br> ङ्यापोः ह्रस्वो बहुलं भवति संज्ञायाम्, छन्दसि च। <br> ङ्यन्तस्य संज्ञायाम्- रेवतिपुत्रः। <br> ङ्यन्तस्य छन्दसि - कुमारिदा। <br> आबन्तस्य संज्ञायाम्- शिलवहम्। <br> आबन्तस्य छन्दसि - अजक्षीरेण जुहोति। | ङ्यापोः <br> र्बहुलम् ६३ |
| ङ्यापोः ६२ <br> बहुलम् ६२ <br> ह्रस्वः६० | ६३. त्वे च <br> त्वे च परे ङ्यापोः ह्रस्वो बहुलं भवति। <br> रोहिण्याः भावः रोहिणित्वम्; रोहिणीत्वम्। <br> अजायाः भावः अजत्वम्; अजात्वम्। | |
| ह्रस्वः ६० <br> उत्तरपदे । | ६४. इष्टकेषीका-मालानां चित-तूलभारिषु <br> इष्टका, इषीका, माला - इत्येतेषां यथासंख्यं चित, तूल, भारिन्- इत्येतेषु उत्तरपदेषु परतः ह्रस्वो भवति। <br> इष्टकचितम्। इषीकतूलम्। मालभारिणी कन्या। | |
| ह्रस्वः ६० <br> उत्तरपदे । | ६५. खित्यनव्ययस्य <br> खिति (खिदन्ते) उत्तरपदे परेऽनव्ययस्य ह्रस्वो भवति। <br> कालीमात्मानं मन्यते इति कालिम्मन्या। 'आत्ममाने खश्च' इति खश्। उत्तरसूत्रेण मुम्। <br> अनव्ययस्य अति किम् ? दिवामन्या रात्रिः। दोषामन्यम् अहः। | खिति ६८ <br> अनव्ययस्य ६६ |
| खिति ६५ <br> उत्तरपदे१ | ६६. अरुर्द्विषदजन्तस्य मुम् <br> खिदन्ते उत्तरपदे परे अरुष्, द्विषद्, अजन्त- इत्येतस्य अनव्ययस्य मुम् इत्यागमो भवति। <br> अरुन्तुदः। द्विषन्तपः। कालिम्मन्या। | मुम् ७१ |
| खिति ६५ <br> उत्तरपदे१ <br> मुम् ६६ | ६७. इच एकाचोऽम्प्रत्ययवच्च <br> इजन्तस्य एकाचोऽमागमो भवति उत्तरपदे परे, प्रत्ययवच्च सोऽम् भवति। <br> गाममात्मानं मन्यते गाम्मन्यः। | |
| | ६८. वाचंयम-पुरन्दरौ च <br> वाचंयम, पुरन्दर-इत्येतौ निपात्येते। <br> वाचंयमः। पुरन्दरः। | |
| मुम् ६६ | ६९. कारे सत्यागदस्य <br> कारे उत्तरपदे परे सत्यागदस्य मुम्भवति। <br> सत्यङ्कारः। अगदङ्कारः। | |

| | | |
|---|---|---|
| मुम् ६६<br>उत्तरपदे १ | ७०. श्येन-तिलस्य पाते ञे<br>ञे (ञप्रत्ययान्ते) पाते उत्तरपदे परे श्येन-तिलस्य मुमागमो भवति।<br>श्येनपातोऽस्यां मृगयायां श्यैनम्पाता मृगया।<br>'घञः साऽस्यां क्रियेति ञः' इति सूत्रेण घञन्ताद् पातशब्दात् ञप्रत्ययः।<br>एवमेव तिलपातोऽस्यामिति तैलम्पाता स्वाहा। | |
| मुम् ६६ | ७१. रात्रेः कृति विभाषा<br>रात्रेर्मुमागमो विभाषा भवति कृदन्ते परे।<br>रात्रौ चरतीति रात्रिञ्चरः। | |
| उत्तरपदे१ | ७२. नलोपो नञः<br>उत्तरपदे परतः नञो नस्य लोपो भवति।<br>न ब्राह्मणः अब्राह्मणः। | नञः ७६ |
| नञः ७२<br>उत्तरपदे१ | ७३. तस्मान्नुडचि<br>तस्मात् (लुप्तनकारान्नञः) अचि (अचः) नुड् भवति।<br>न अजः अनजः।<br>न अश्वः अनश्वः। | |
| नञः ७२<br>उत्तरपदे १ | ७४. नभ्राण्-नपात्-नावेदा-नासत्या-नमुचि-नकुल-नख-नपुंसक-नक्षत्र-नक्र-नाकेषु प्रकृत्या<br>नभ्राट्, नपात, नावेदा, नासत्या, नमुचि, नकुल, नख, नपुंसक, नक्षत्र, नक्र, नाक- इत्येतेषु नञ् प्रकृत्या भवति।<br>नभ्राट्। नपात्। नवेदाः। नासत्याः। नमुचिः। नकुलम्। नखम्। नपुंसकम्। नक्षत्रम्। नक्रः। नाकः। | प्रकृत्या७६ |
| नञः ७२<br>प्रकृत्या७४ | ७५. एकादिश्चैकस्य चादुक्<br>एकादिर्नञ् प्रकृत्या भवति, एकस्य च आदुक् (आगमः) भवति।<br>एकेन न विंशति एकान्नविंशतिः, एकादूनविंशतिः।<br>एकोनविंशतिरित्यर्थः। | |
| नञः ७२<br>प्रकृत्या७४ | ७६. नगोऽप्राणिष्वन्यतरस्याम्<br>'नगः' इति शब्दे नञ् अन्यतरस्यां प्रकृत्या भवति, अप्राणिषु।<br>नगाः, अगाः। वृक्षाः, पर्वता वेत्यर्थः।<br>अप्रणिष्विति किम्? अगो वृषलः शीतेन। | |

| | | |
|---|---|---|
| | ७७. सहस्य सः संज्ञायाम्<br>सहस्य सः इत्यादेशो भवति उत्तरपदे परे संज्ञायां।<br>साश्वत्थम्। सपलाशम्। सशिंशपम्।<br>वनविशेषस्य संज्ञा एताः। | सहस्य ८२<br>सः ८८ |
| सहस्य ७७ सः ७७<br>उत्तरपदे । | ७८. ग्रन्थान्ताधिके च<br>ग्रन्थान्ताधिके च सहस्य सः इत्यादेशो भवति।<br>ग्रन्थान्ते- सकलं ज्यौतिषमधीते।<br>अधिके- सद्रोणा खारी। | |
| सहस्य ७७ सः ७७<br>उत्तरपदे । | ७९. द्वितीये चानुपाख्ये<br>अनुपाख्ये द्वितीये उत्तरपदे परे च सहस्य सः इत्यादेशो भवति।<br>'वोपसर्जनस्य' इत्यस्यापवादोऽयम्।<br>अग्निना सह साग्निः।<br>अनुपाख्यः इत्यस्य अनुमेय इत्यर्थः, द्वितीय इत्यस्य अप्रधान इत्यर्थः।<br>साग्निः कपोतः। कपोतस्य व्यवहारविशेषेण अग्निरिति अनुमीयते इति अग्निः उपाख्यः, अनुमेयो वा, विग्रहे अग्निना इत्यत्र 'सहयुक्तेऽप्रधाने' इति सूत्रेण अप्रधाने तृतीयेति स द्वितीयः, अप्रधानो वा। अत्र 'तेन सहेति तुल्ययोगे' इत्यनेन समासः।<br>यत्र कपोतादिभिः अग्निरनुमीयते तत्रैवं प्रयोगः क्रियते।<br>एवमेव-सपिशाचा वात्या। सराक्षसीका शाला। | |
| सहस्य ७७ सः ७७ | ८०. अव्ययीभावे चाकाले<br>अव्ययीभावे अकाले उत्तरपदे परे सहस्य सः इत्यादेशो भवति।<br>सचक्रं धेहि।<br>अकाले इति किम्? सहपूर्वाह्णम्। | |
| सहस्य ७७ सः ७७ | ८१. वोपसर्जनस्य<br>उपसर्जनस्य यः सहशब्दस्तस्य सः इत्यादेशो वा भवति।<br>अत्र उपसर्जनानि सन्ति अस्मिन् इति विग्रहे अर्शआद्यचि निष्पन्नस्य उपसर्जनशब्दस्य बहुव्रीहिसमास इत्यर्थः, बहुव्रीहिसमासे सर्वेषामवयवानामुपसर्जनत्वात्।<br>पुत्रेण सह वर्तते इति सपुत्रः, सहपुत्रो वा। | |
| सहः ७७ | ८२. प्रकृत्याशिषि<br>सहशब्दः प्रकृत्या भवति आशिषि (गम्यमानायाम्)<br>अगो-वत्स-हलिषूत्तरपदेषु। स्वस्ति देवदत्ताय सहपुत्राय। | |

| | | |
|---|---|---|
| सः ७७ | ८३. समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु<br>समानस्य सः इत्यादेशो भवति छन्दसि, न तु मूर्धन्,प्रभृति,उदर्क- इत्येतेषु परतः।<br>अनुभ्राता सगर्भ्यः। अनुसखा सनुत्यः। | समानस्य ८८ |
| सहस्य ८३<br>सः ७७ | ८४. ज्योतिर्जनपद-रात्रि-नाभि-नाम-<br>गोत्र-रूप-स्थान-वर्ण-वयोवचन-बन्धुषु<br>ज्योतिर्जनपद-रात्रि-नाभि-नाम-गोत्र-रूप-स्थान-वर्ण-वयोवचन-बन्धुषूत्तरपदेषु परेषु समानस्य सः इत्यादेशो भवति।<br>सज्योतिः। सजनपदः। सरात्रिः। सनाभिः। सनामा। सगोत्रः। सरूपः। सस्थानः। सवर्णः। सवयाः। सवचनः। सबन्धुः।<br>समानं ज्योतिर्यस्येत्यादिविग्रहे बहुव्रीहिः। | |
| सहस्य ८३<br>सः ७७<br>उत्तरपदे । | ८५. चरणे ब्रह्मचारिणि<br>चरणे (गम्यमाने) ब्रह्मचारिण्युत्तरपदे परे समानस्य सः इत्यादेशो भवति।<br>चरणः = शाखा।<br>समानो ब्रह्मचारी सब्रह्मचारी।<br>ब्रह्म= वेदः,तदध्ययनार्थं यद् व्रतं तदपि ब्रह्म, तच्चरतीति ब्रह्मचारी। 'व्रते' इति सूत्रेण णिनिः। समाने ब्रह्मणि व्रतचारी सब्रह्मचारी इत्युच्यते। | |
| सहस्य ८३<br>सः ७७<br>उत्तरपदे । | ८६. तीर्थे ये<br>ये (यप्रत्यये विवक्षिते) तीर्थे उत्तरपदे परे समानस्य सः इत्यादेशो भवति।<br>समानं तीर्थं सतीर्थम् सतीर्थे वसतीति सतीर्थ्यः।<br>एकगुरुक इत्यर्थः।<br>'समानतीर्थे वासी' इति यत्प्रत्ययः। | ये ८७ |
| सहस्य ८३<br>सः ७७<br>ये ८६ | ८७. विभाषोदरे<br>ये (यप्रत्यये विवक्षिते) उदरे उत्तरपदे परे समानस्य सः विभाषा भवति।<br>सोदर्यः, समानोदर्यः।<br>'समानोदरे शयित ओ चोदात्तः' इति यत्। | |
| सहस्य ८३ सः ७७ | ८८. दृग्-दृश-वतुषु<br>दृग्दृशवतुषु परेषु समानस्य सः इत्यादेशो भवति।<br>सदृक्। सदृशः।<br>वतुरुत्तरार्थः। | सम्पूर्णसूत्रम् ९० |

| दृग् ८८ दृश ८८ वतुषु ८८ | ८९. इदं-किमोरीश्-की<br>दृग्दृशवतुषु परेषु इदंकिमोः ईश्, की- इत्येतौ आदेशौ भवतः।<br>ईदृक्। ईदृशः। इयान्।<br>कीदृक्। कीदृशः। कियान्। | |
|---|---|---|
| दृग्दृशवतुषु ८८ | ९०. आ सर्वनाम्नः<br>सर्वनाम्नः आ इत्यादेशो भवति दृग्दृशवतुषु परेषु।<br>तादृक्। तादृशः। तावान्।<br>यादृक्। यादृशः। यावान्। | सर्वनाम्नः ९१ |
| सर्वनाम्नः ९० | ९१. विश्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये<br>विष्वग्देवयोश्च परतः टेरद्रि इत्यादेशो भवति वप्रत्ययेऽञ्चतौ।<br>विष्वगञ्चतीति विष्वगद्र्यङ्।<br>देवमञ्चतीति देवद्र्यङ्। | अञ्चतौ ९४<br>अप्रत्यये९४ |
| अञ्चतौ वप्रत्यये९१ | ९२. समः समि<br>समः समि इत्यादेशो भवति वप्रत्यये अञ्चतौ परे ।<br>सम्यङ्, सम्यञ्चौ, सम्यञ्चः। | |
| अञ्चतौ वप्रत्यये९१ | ९३. तिरसस्तिर्यलोपे<br>तिरसः तिरि इत्यादेशो भवति अलोपे वप्रत्ययेऽञ्चतौ परतः ।<br>तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चः।<br>अलोपे इति किम् ? तिरश्चः। तिरश्चा। 'अचः' इति सूत्रेण अत्र अकारस्य लोपः। | |
| अञ्चतौ वप्रत्यये९१ | ९४. सहस्य सध्रिः<br>सहस्य सध्रि इत्यादेशो भवति वप्रत्ययेऽञ्चतौ परे ।<br>सध्र्यङ्, सध्र्यञ्चौ, सध्र्यञ्चः।<br>सध्र्यञ्चम्, सध्र्यञ्चौ, सध्रीचः। | सहस्य ९५ |
| सहस्य ९४ | ९५. सध-मादस्थयोश्छन्दसि<br>सहस्य सध इत्यादेशो भवति माद-स्थयोः परतः छन्दसि।<br>सधमादो द्युम्नि नीरापः। सधस्था। | |

| | | |
|---|---|---|
| | ९६. द्व्यन्तरुपसर्गेभ्योऽप ईत्<br>द्व्यन्तरुपसर्गेभ्यः परस्य कृतसमासान्तापशब्दस्य ईद् इत्यादेशो भवति।<br>'आदेः परस्य' इति सूत्रेण अपस्य आदेरीदादेशो भवति।<br>द्वयोः पार्श्वयोः गताः आपो यस्मिन् तद् द्वीपम्।<br>अन्तर्गताः आपो यस्मिन् तद् अन्तरीपम्।<br>संगताः,विगताः,निर्गताः आपो यस्मिन् तत् समीपम्, वीपम्, नीपम्।<br>सर्वत्र 'ऋक्पूः०' इति सूत्रेण समासान्तः अच्। | अपः ९७ |
| अपः ९६ | ९७. ऊदनोर्देशे<br>अनोः परस्य अपस्य ईद् इत्यादेशो भवति देशे (अभिधेये)।<br>अनुकूला आपो यस्मिन्निति अनूपो देशः। | |
| उत्तरपदे १ | ९८. अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोति-कारक-राग-च्छेषु<br>अषष्ठ्यतृतीयास्थस्यान्यस्य दुक् इत्यागमो भवति आशिष्, आशा, आस्थित्, उत्सुक, ऊति, कारक, राग छ- इत्येतेषु परतः।<br>अन्यदाशीः। अन्यदाशा। अन्यदास्था। अन्यदास्थितः।<br>अन्यदुत्सुकः। अन्यदूतिः। अन्यत्कारकः। अन्यद्रागः।<br>अन्या आशा इत्यादिविग्रहे कर्मधारयसमासः उदाहरणेषु।<br>अन्यस्येदम्, अन्यस्मिन् भवं वा अन्यदीयम्।<br>छप्रत्ययस्येदमुदाहरणम्। अत्र गहादित्वात् छः।<br>अषष्ठीत्यादीति किम् ? अन्यस्य, अन्येन वा आशीः, अन्याशीः। | |
| अन्यस्य ९८<br>दुक्९८<br>उत्तरपदे १ | ९९. अर्थे विभाषा<br>अर्थे परे अन्यस्य विभाषा दुक् इत्यागमो भवति।<br>अन्यस्यै अयम् अन्यदर्थः, अन्यार्थः। | |
| उत्तरपदे१ | १००. कोः कत्तत्पुरुषेऽचि<br>कोः कत् इत्यादेशो भवति तत्पुरुषेऽचि उत्तरपदे परे ।<br>कुत्सितोऽश्वः कदश्वः। कुत्सितमन्नं कदन्नम्। | कोः १०७<br>कत् १०२ |
| कोः१०० कत् १००<br>उत्तरपदे १ | १०१. रथ-वदयोश्च<br>रथवदयोश्चोत्तरपदयोः परतः कोः कद् इत्यादेशो भवति।<br>कुत्सितो रथः कद्रथः।<br>वदतीति वदः, कुत्सितो वदः, कद्वदः। | |

| | | |
|---|---|---|
| कोः१०० कत् १००<br>उत्तरपदे १ | **१०२. तृणे च जातौ**<br>तृणे उत्तरपदे परे कोः कद् इत्यादेशो भवति जातौ (अभिधेयायाम्)।<br>कत्तृणं नाम तृणस्य जातिविशेषः। | |
| कोः१००<br>उत्तरपदे १ | **१०३. का पथ्यक्षयोः**<br>पथ्यक्षयोरुत्तरपदयोः परतः कोः का इत्यादेशो भवति।<br>कापथः। काक्षः।<br>काक्षशब्दे अक्षशब्देन कर्मधारयः, अक्षिशब्देन बहुव्रीहिर्वा। | का १०७ |
| कोः१०० का १०७<br>उत्तरपदे १ | **१०४. ईषदर्थे**<br>ईषदर्थे च कोः का इत्यादेशो भवति उत्तरपदे परे ।<br>ईषद् अम्लं काम्लम्।<br>ईषदुष्णं कोष्णम्। | |
| कोः१०० का १०७<br>उत्तरपदे १ | **१०५. विभाषा पुरुषे**<br>पुरुषे उत्तरपदे परे कोः का इत्यादेशो भवति विभाषा।<br>कुत्सितः पुरुषः कापुरुषः।<br>पक्षे कुपुरुषः। | विभाषा १०७ |
| कोः१०० का १०७<br>विभाषा १०५<br>उत्तरपदे १ | **१०६. कवं चोष्णे**<br>उष्णे उत्तरपदे कोः कवं इत्यादेशो भवति, चकारात् का इत्यादेश्च च विभाषा।<br>ईषदुष्णं कवोष्णम्, कोष्णम्। उभाभ्यां मुक्ते 'कोः कत्तत्पुरुषेऽचि' इति कदादेशः- कदुष्णम्। | कवम् १०७ |
| कोः१०० का १०७<br>विभाषा १०५<br>कवम् १०६<br>उत्तरपदे १ | **१०७. पथि च छन्दसि**<br>पथि उत्तरपदे कोः कवं, का च इत्यादेशो भवति, विभाषा छन्दसि।<br>कवपथः। कापथः। कुपथः। | |
| | **१०८. पृषोदरादीनि यथोपदिष्टम्**<br>पृषोदरादीनि यथोपदिष्टं साधूनि भवन्ति।<br>पृषदुदरं यस्य तत् पृषोदरम्। वारिवाहकः बलाहकः। ऊर्ध्वं खमस्य उलूखलम्। इत्यादि।<br>(वा०) षष उत्वं दतृ-दश-धासूत्तरपदादेष्टुत्वं च भवति।<br>षड् दन्ता अस्य षोडन्। षट् च दश च षोडश।<br>(वा०) धासु वा षष उत्वं भवति उत्तरपदादेश्च ष्टुत्वम्।<br>षोढा, षड्धा वा कुरु। 'न पदान्ताट्टोरनाम्' इति ष्टुत्वप्रतिषेधः। | |

| | | |
|---|---|---|
| | **१०९. संख्या-विसाय-पूर्वस्याह्नस्याह्नन्यतरस्यां ङौ**<br>संख्या-वि-साय पूर्वस्याह्नशब्दस्य अहन् इत्यादेशोऽन्यतरस्यां भवति ङौ परतः।<br>द्वयह्नि, द्वयहनि, द्वयह्ने।<br>व्यह्नि, व्यहनि, व्यह्ने।<br>सायाह्नि, सायाहनि, सायाह्ने।<br>उदाहरणेषु 'विभाषा ङिश्योः' इति सूत्रेण विभाषया अल्लोपः। | |
| | **११०. ढ्रलोपे पूर्वस्य दीर्घोऽणः**<br>ढलोपनिमित्तके ढकोर, रलोपनिमित्तके रेफे च परतः पूर्वस्य अणो दीर्घो भवति।<br>लीढः। नीरक्तम्। | ढ्रलोपे १११<br>पूर्वस्य १३८<br>दीर्घः ६.४.१८<br>अणः ६.४.२ |
| ढ्रलोपे ११०<br>पूर्वस्य ११० | **१११. सहि-वहोरोदवर्णस्य**<br>सहि-वहोः अवर्णस्य ओद् (ओकारादेशः) भवति ढलोपनिमित्तके ढकारे परतः।<br>सोढा। सोढव्यम्। | |
| | **११२. साढ्यै साढ्वा साढेति निगमे**<br>साढ्यै, साढ्वा, साढ- इति शब्दाः निगमे निपात्यन्ते।<br>साढ्यै समन्तात्। साढ्वा शत्रून्। आषाढमुग्रं सहमानम्।<br>भाषायां तु-साढ्वा, सोढम्। | |
| | **११३. संहितायाम्**<br>अधिकारोऽयम् आपादपरिसमाप्तेः। | |
| दीर्घः ११०<br>उत्तरपदे १ | **११४. कर्णे लक्षणस्याविष्टाष्ट-पञ्चमणि-भिन्न-छिन्न-च्छिद्र-स्रुव-स्वस्तिकस्य**<br>कर्णे उत्तरपदे परे लक्षणस्य (लक्षणवाचिनः पूर्वपदस्य) दीर्घो भवति, विष्ट, अष्टन्, पञ्चन् मणि, भिन्न, छिन्न, छिद्र, स्रुव, स्वस्तिक-इत्येतेषां लक्षणवाचिनां दीर्घो न भवति।<br>दात्रम्= दात्राकारकचिह्नं यस्य स दात्राकर्णः। द्वौ गुणौ यस्य तद् द्विगुणम्, द्विगुणं (चिह्नं) कर्णे यस्य स द्विगुणाकर्णः। | |
| दीर्घः ११०<br>पूर्वस्य ११०<br>अणः ११० | **११५. नहि-वृति वृषि-व्यधि-रुचि-सहि-तनिषु क्वौ**<br>क्वौ(क्विबन्ते) नहि-वृति-वृषि-व्यधि-रुचि- सहि- तनिषु परेषु पूर्वस्याणो दीर्घो भवति।<br>उपानत्। उपावृत्। प्रावृट्। श्वावित्। नीरुक्। ऋतीषट् तरीतत्। | |

| | | |
|---|---|---|
| दीर्घः ११० <br> पूर्वस्य ११० <br> अणः ११० <br> उत्तरपदे १ | ११६. वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम् <br> वनगिर्योः परयोः कोटरकिंशुलकादीनामणः यथासंख्यं दीर्घो भवति, संज्ञायाम्। <br> वने कोटरादीनाम्-कोटरावणम्। मिश्रकावणम्। <br> गिरौ किंशुलकादीनाम् - किंशुलकागिरिः। अञ्जनागिरिः। | संज्ञायाम् ११६ |
| दीर्घः ११० <br> पूर्वस्य ११० <br> अणः ११० | ११७. वले <br> वले परे पूर्वस्याणो दीर्घो भवति। <br> कृषीवलः। आसुतीवलः। दन्तावलः। <br> एषु मत्वर्थीयो वलच् प्रत्ययः। | |
| दीर्घः ११० <br> संज्ञायाम् ११३ <br> पूर्वस्य ११० <br> अणः ११० | ११८. मतौ बह्वचोऽनजरादीनाम् <br> मतौ परतः बह्वचः पूर्वस्याणो दीर्घो भवति संज्ञायाम्, अजिरादीनां पूर्वस्याणो दीर्घो न भवति। <br> उदुम्बरावती। मशकावती। वीरणावती। पुष्करावती। अमरावती। <br> नदीविशेषाणा संज्ञा एताः। 'नद्यां मतुप्'(४.२.८५) इति सूत्रेण मतुप्। 'संज्ञायाम्' (८.२.११) इति सूत्रेण मतोर्मकारस्य वकारः। | मतौ ११९ |
| दीर्घः ११० <br> संज्ञायाम् ११३ <br> मतौ ११८ <br> पूर्वस्य ११० <br> अणः ११० | ११९. शरादीनां च <br> शरादीनां च पूर्वस्याणो दीर्घो भवति मतौ परे संज्ञायाम्। <br> शरावती। वंशावती। <br> नदीविशेषयोः संज्ञे एते। अत्रापि 'नद्यां मतुप्'(४.२.८५) इति सूत्रेण मतुप्। 'संज्ञायाम्' (८.२.११) इति सूत्रेण मतोर्मकारस्य वकारः। | |
| दीर्घः ११० <br> पूर्वस्य ११० | १२०. इको वहेऽपीलोः <br> इको दीर्घो भवति वहे उत्तरपदे परे, पीलोदीर्घो न भवति। <br> ऋषीवहम्। कपीवहम्। मुनीवहम्। <br> अपीलोः इति किम् ? पीलुवहम्। <br> (वा०) अपील्वादीनामिति वक्तव्यम्। <br> इह मा भूत् - पीलुवहम्। | |

| | | |
|---|---|---|
| दीर्घः ११० | **१२१. उपसर्गस्य घञ्यमनुष्ये बहुलम्**<br>उपसर्गस्य घञन्ते परे बहुलं दीर्घो भवति अमनुष्येऽभिधेये।<br>वीक्लेदः। वीमार्गः। अपामार्गः।<br>बहुलग्रहणात्-क्वचिद् विकल्पेन भवति-परीपाकः, परिपाकः।<br>क्वचिच्च न भवति - प्रसेवः। प्रसारः।<br>अमनुष्ये इति किम् ? निषादो मनुष्यः।<br>(वा०) सादकारयोः कृत्रिमे दीर्घो भवति।<br>प्रासादः। प्राकारः।<br>कृत्रिम इति किम्? प्रसादः। प्रकारः। | उपसर्गस्य १२३ |
| दीर्घः ११०<br>उपसर्गस्य १२१ | **१२२. इकः काशे**<br>इगन्तस्य उपसर्गस्य काशे परे दीर्घो भवति।<br>नीकाशः। वीकाशः। अनूकाशः। | इकः १२३ |
| इकः १२२<br>दीर्घः११०<br>उपसर्गस्य १२१<br>उत्तरपदे १ | **१२३. दस्ति**<br>'दा' इत्येतस्य यस्तकारादेशः तदादौ उत्तरपदे परे इकः उपसर्गस्य दीर्घो भवति।<br>नीत्तम्। वीत्तम्। परीत्तम्।<br>'त्तम्' इति दा धातोः क्त प्रत्यये रूपम्, 'अच उपसंर्गात्तः' इति सूत्रेण दाघटकाकारस्य तकारादेशः, दस्य च चर्त्वं तकारः। | |
| दीर्घः ११०<br>उत्तरपदे १ | **१२४. अष्टनः संज्ञायाम्**<br>अष्टनो दीर्घो भवति उत्तरपदे परे संज्ञायाम्।<br>अष्टावक्रः।<br>अष्टौ वक्राणि यस्येति विग्रहे बहुव्रीहिः। | अष्टनः १२५ |
| दीर्घः ११०<br>अष्टनः १२४<br>उत्तरपदे १ | **१२५. छन्दसि च**<br>छन्दसि च अष्टनो दीर्घो भवति उत्तरपदे परे ।<br>आग्नेयमष्टाकपालं निर्वपेत्। | |
| दीर्घः ११० | **१२६. चितेः कपि**<br>चितेः कपि परे दीर्घो भवति।<br>एका चितिर्यस्य एकचितीकः।<br>'शेषाद् विभाषा' इति कप्।<br>एवमेव द्विचितीकः। त्रिचितीकः। | |
| दीर्घः ११० | **१२७. विश्वस्य वसु-राटोः**<br>विश्वस्य वसु-राटोः परतः दीर्घो भवति।<br>विश्वावसुः। विश्वाराट्।<br>'राट्' इति विकारनिर्देशः-यस्यैतद्रूपं भवति तत्रैव यथा स्यात्। तनेह न भवति-विश्वराजौ, विश्वराजः। | विश्वस्य १२८ |

| | | |
|---|---|---|
| दीर्घः ११० विश्वस्य १२७ उत्तरपदे १ | १२८. नरे संज्ञायाम्<br>नरे परे विश्वस्य दीर्घो भवति संज्ञायाम्।<br>विश्वानरो नाम, यस्य वैश्वानरिः पुत्रः। | |
| दीर्घः ११० विश्वस्य १२७ उत्तरपदे १ | १२९. मित्रे चर्षौ<br>मित्रे परे च विश्वस्य दीर्घो भवति ऋषौ (अभिधेये)।<br>विश्वामित्रो नाम ऋषिः।<br>विश्व मित्रं यस्येति विग्रहे बहुव्रीहिः।<br>अन्यत्र - विश्वमित्र इति। | |
| दीर्घः ११० | १३०. मन्त्रे सोमाश्वेन्द्रिय-विश्वदेव्यस्य मतौ<br>मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य दीर्घो भवति मतौ परे ।<br>सोमावती। अश्वावती।<br>इन्द्रियावती। विश्वदेव्यावती। | मन्त्रे१३१ |
| मन्त्रे१३० दीर्घः ११० | १३१. ओषधेश्च विभक्तावप्रथमायाम्<br>औषधेश्च अप्रथमायां विभक्तौ दीर्घो भवति मन्त्रे।<br>नमः पृथिव्यै नम ओषधीभ्यः। | |
| दीर्घः ११० | १३२. ऋचि तु-नु-घ-मक्षु-तङ्-कुत्रो-रुष्याणाम्<br>ऋचि (विषये) तु, नु, घ, मक्षु, तङ्, कु, त्र, उरुष्य-इत्येतेषां दीर्घो भवति।<br>आ तू न इन्द्र वृत्रहन्। नू करणे। उ वा घा स्यालात्।<br>मक्षू गोमन्तमीमहे। भरता जातवेदसम्। कूमनः। अत्रा गौः। उरुष्या णो। | |
| दीर्घः११० ऋचि१३२ | १३३. इकः सुञि<br>इकः दीर्घो भवति सुञि परे, ऋचि (विषये)।<br>सुञिति निपातो गृह्यते।<br>अभी षु णः सखीनाम् | |
| दीर्घः११० ऋचि१३२ | १३४. द्व्यचोऽतस्तिङः<br>द्व्यचस्तिङः(तिङन्तस्य) अतः दीर्घो भवति ऋचि।<br>विद्मा हि त्वा त्वा गोपतिं शूर गोनाम्। | |
| दीर्घः११० ऋचि१३२ | १३५. निपातस्य च<br>निपातस्य च दीर्घो भवति ऋचि।<br>एवा ते। ते त्वमच्छा। | |
| दीर्घः ११० उत्तरपदे १ | १३६. अन्येषामपि दृश्यते<br>अन्येषामपि दीर्घो दृश्यते, स च शिष्टप्रयोगादनुगन्तव्यम्।<br>केशाकेशि। कचाकचि।<br>जलाषाट्। नारकः पूरुषः। | |

| | | |
|---|---|---|
| दीर्घः ११० उत्तरपदे १ | १३७. चौ<br>चौ (लुप्तनकाराकराञ्चतौ) उत्तरपदे परतः पूर्वस्य दीर्घो भवति।<br>दधीचः पश्य। | |
| दीर्घः ११० उत्तरपदे १ | १३८. सम्प्रसारणस्य<br>उत्तरपदे परतः सम्प्रसारणस्य दीर्घो भवति।<br>कारीषगन्धीपुत्रः।<br>'कारीषगन्ध्यायाः पुत्रः' इति विग्रहे षष्ठीसमासे कृते 'ष्यङः सम्प्रारणं पुत्रपत्योस्तत्पुरुषे' इति सूत्रेण सम्प्रसारणे, पूर्वरूपे च कृते 'कारीषगन्धिपुत्र' इत्यवस्थायां प्रकृतसूत्रेण दीर्घः। | सम्प्रसारणस्य ६.४.२ |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां षष्ठाध्यायस्य तृतीयः पादः ।।

।। श्रीः ।।

# ।। अथ षष्ठाध्यायस्य चतुर्थः पादः ।।

| | | |
|---|---|---|
| | १. अङ्गस्य<br>अधिकारोऽयम् आसप्तमाध्यायपरिसमाप्तेः। | अङ्गस्य<br>७.४.६७ |
| सम्प्रसारणस्य<br>६.३.१३८<br>दीर्घः ६.३.११०<br>अणः ६.३.११०<br>अङ्गस्य १ | २. हलः<br>अङ्गस्य यो हल् ततः परं यत्सम्प्रसारणं तदन्तस्याङ्गस्य दीर्घो भवति।<br>ह्वे + क्तः - हूतः। ज्या + क्तः - जीनः।<br>सम् व्येञ् + क्तः - संवीतः।<br>'अङ्गस्य' इत्यावर्ततेऽत्र, हल्विशेषणार्थम्, अङ्गकार्यार्थं च।<br>अत्र 'अणः' इत्यस्यानुवृत्त्या 'तृतीयः' इत्यत्र 'त्रेः सम्प्रसारणं च' इत्यनेन विहितस्य सम्प्रसारणस्य दीर्घो न भवति। | |
| दीर्घः ६.३.११०<br>अङ्गस्य १ | ३. नामि<br>नामि परतः अजन्तस्याङ्गस्य दीर्घो भवति।<br>वृक्षाणाम्। अग्नीनाम्। वायूनाम्। कर्तॄणाम्। | नामि ७ |
| दीर्घः ६.३.११०<br>नामि ३<br>अङ्गस्य १ | ४. न तिसृचतसृ<br>तिसृ-चतसृ नामि दीर्घं न लभते।<br>तिसृणाम्। चतसृणाम्। | तिसृचतसृ ५ |
| दीर्घः ६.३.११०<br>नामि ३ तिसृचतसृ४<br>अङ्गस्य १ | ५. छन्दस्युभयथा<br>छन्दसि तिसृ-चतसृ नामि उभयथा रूपं लभते, कृतदीर्घम् अकृतदीर्घं च।<br>तिसॄणां मध्यन्दिने, तिसृणां मध्यन्दिने। चतसॄणां मध्यन्दिने, चतसृणां मध्यन्दिने। | उभयथा ६ |
| दीर्घः ६.३.११०<br>नामि ३ उभयथा ५<br>अङ्गस्य १ | ६. नृ च<br>नृ नामि उभयथा रूपं लभते, कृतदीर्घम्, अकृतदीर्घं च।<br>नॄणाम्, नृणाम्। | |

| | | |
|---|---|---|
| दीर्घः ६.३.११०<br>नामि ३<br>अङ्गस्य १ | ७. नोपधायाः<br>नान्तस्याङ्गस्योपधाया दीर्घो भवति नामि।<br>न इति 'नु' इत्यस्य षष्ठ्येकवचनान्तं रूपमङ्गस्य विशेषणम्, सौत्रत्वाद् यलोपस्यासिद्धत्वमानाश्रित्य 'आद्गुणः' इत्यनेन गुणः। अतः सूत्रस्योक्तार्थः सम्पद्यते।<br>पञ्चानाम्। सप्तानाम्। नवानाम्। दशानाम्। | नः १०<br>उपधायाः१५ |
| दीर्घः ६.३.११०<br>नोपधायाः७ | ८. सर्वनामस्थाने चाऽसम्बुद्धौ<br>असम्बुद्धौ सर्वनामस्थाने (परतः)नान्तस्याङ्गस्य उपधाया दीर्घो भवति।<br>राजा, राजानौ, राजानः, राजानम्, राजानौ।<br>समानि तिष्ठन्ति। सामानि पश्य। | सर्वनामस्थाने ११<br>असम्बुद्धौ १४ |
| दीर्घः ६.३.११०<br>नोपधायाः७<br>सर्वनामस्थाने ८ | ९. वा षपूर्वस्य निगमे<br>नान्तस्याङ्गस्य षपूर्वाया उपधाया दीर्घो वा भवति असम्बुद्धौ सर्वनामस्थाने(परतः) निगमे।<br>स तक्षाणं तिष्ठन्तमब्रवीत्।<br>स तक्षणं तिष्ठन्तमब्रवीत्। | |
| नोपधायाः ७<br>दीर्घः ६.३.११०<br>सर्वनामस्थाने ८ | १०. सान्तमहतः संयोगस्य<br>सान्तस्य संयोगस्य, महतश्च यो नकारः तस्योपधाया दीर्घो भवति असम्बुद्धौ सर्वनामस्थाने।<br>श्रेयान्, श्रेयांसौ, श्रेयांसः।<br>महान्, महान्तौ, महान्तः। | |
| उपधायाः ७<br>दीर्घः ६.३.११०<br>सर्वनामस्थाने ८<br>असम्बुद्धौ ८ | ११. अप्-तृन्-तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-प्रशास्तॄणाम्<br>अबादीनामुपधाया दीर्घो भवति असम्बुद्धौ सर्वनामस्थाने।<br>अप् - आपः।<br>तृन् - कर्ता, कर्तारौ कटान्।<br>तृच् - कर्ता, कर्तारौ कटस्य।<br>स्वसृ - स्वसा, स्वसारौ।<br>नप्तृ - नप्ता, नप्तारौ।<br>नेष्टृ - नेष्टा, नेष्टारौ।<br>त्वष्टृ - त्वष्टा, त्वष्टारौ।<br>क्षत्तृ - क्षत्ता, क्षत्तारौ।<br>होतृ - होता, होतारौ।<br>पोतृ - पोता, पौतारौ।<br>प्रशास्तृ - प्रशास्ता, प्रशास्तारौ। | |

| | | |
|---|---|---|
| उपधायाः ७<br>दीर्घः ६.३.११० | १२. इन्-हन्-पूषार्यम्णां शौ<br>इन्हन्पूषार्यम्णामुपधाया दीर्घो भवति, शौ।<br>इन्-बहुदण्डीनि।<br>हन्- बहुवृत्रहाणि।<br>पूषन्-बहुपूषाणि।<br>अर्यमन्- बह्वर्यमाणि।<br>नियमार्थमिदम्- इन्नादीनामुपधाया शावेव दीर्घो भवति नान्यत्र इति। तेन- दण्डिनौ, दण्डिनः इत्यादौ दीर्घो न भवति। | इन्-हन्-<br>पूषार्यम्णाम् १३ |
| इन्-हन्-<br>पूषार्यम्णाम् १२<br>उपधायाः ७<br>दीर्घः ६.३.११०<br>असम्बुद्धौ ८ | १३. सौ च<br>इन्हन्पूषार्यम्णामुपधापधायाः असम्बुद्धौ सौ च दीर्घो भवति।<br>दण्डी। वृत्रहा। पूषा। अर्यमा। | सौ १४ |
| उपधायाः ७<br>दीर्घः ६.३.११०<br>असम्बुद्धौ ८ सौ१३<br>अङ्गस्य १ | १४. अत्वसन्तस्य चाऽधातोः<br>अतु,अस्- इत्येवमन्तस्याङ्गस्य अधातोः उपधायाः दीर्घो भवति।<br>अत्वन्तस्य- भवतु- भवान्।<br>धीमत्- धीमान्।<br>कृतवत्- कृतवान्।<br>असन्तस्य- सुपयाः। सुयशाः। सुस्रोताः।<br>अधातोः इति किम् ? पिण्डं ग्रसते इति पिण्डग्रः। | |
| उपधायाः ७<br>दीर्घः ६.३.११०<br>अङ्गस्य १ | १५. अनुनासिकस्य क्विझलोः क्ङिति<br>अनुनासिकान्तस्याङ्गस्योपधाया दीर्घो भवति क्विबन्ते, झलादौ च क्ङिति।<br>क्विपि- प्रशान्। प्रतान्।<br>झलादौ किति- शान्तः। शान्तवान्।<br>झलादौ ङिति- शंशान्तः। तन्तान्तः।<br>यङ्लुगन्ताल्लट्, तस्। | क्विझलोः<br>क्ङिति २१ |

| | | |
|---|---|---|
| दीर्घः ६.३.११० झलि १४ अङ्गस्य १ | १६. अज्झन-गमां सनि<br>अजन्तानामङ्गानां, हन्, गम्-इत्येतयोश्च दीर्घो भवति झलि (झलादौ) सनि।<br>अजन्तानामङ्गानाम् - जेतुमिच्छति जिगीषति। श्रोतुमिच्छति- शुश्रूषते।<br>हनः - जिघांसति।<br>गमः - अधिजिगांसति।<br>(वा०) गमेरिङादेशस्येति वक्तव्यम्।<br>'इङश्च' इति सूत्रेण इङ्धातोर्यो गमिरादेशः, तस्यैव दीर्घो भवति प्रकृतसूत्रेणेति वक्तव्यमित्यर्थः। तेन- संजिगंसते वत्सो मात्रा' इत्यत्र दीर्घो न भवति। अत्र 'गम्लृ गतौ' इति धातुः। | सनि १७ |
| दीर्घः ६.३.११० झलि १४ सनि १६ अङ्गस्य १ | १७. तनोतेर्विभाषा<br>तनोतेरङ्गस्य उपधाया विभाषा दीर्घो भवति झलि (झलादौ) सनि।<br>तितांसति, तितंसति। | विभाषा १८ |
| दीर्घः ६.३.११० झलि १४ विभाषा१७ | १८. क्रमश्च क्त्वि<br>क्रमश्चोपधाया विभाषा दीर्घो भवति, झलि (झलादौ) क्त्वि।<br>क्रान्त्वा, क्रन्त्वा। | |
| क्विझलोः १५ क्ङिति १५ अङ्गस्य १ | १९. च्छ्वोः शूडनुनासिके च<br>सतुक्कस्य छस्य, वकारस्य च यथासंख्यं श्, ऊठ्- इत्येतावादेशौ भवतः, अनुनासिकादौ प्रत्यये, क्वौ, झलादौ क्ङिति च।<br>अनुनासिके- च्छस्य श्- प्रश्नः, विश्नः।<br>वस्य ऊठ्- स्योनः। सिवेरौणादिको नः प्रत्ययः।<br>क्वौ- च्छस्य श्- शब्दप्राट्।<br>वस्य ऊठ् - अक्षद्यूः।<br>झलादौ किति - च्छस्य श्-पृष्टः। पृष्टवान्। पृष्ट्वा।<br>वस्य ऊठ्- द्यूतः, द्यूतवान्। | च्छ्वोः २१ शूठ् अनुनासिके २० |

| | | |
|---|---|---|
| क्विझलोः १५<br>क्ङिति १५ च्छ्वोः २१<br>शूठ्१६<br>अङ्गस्य १ | **२०. ज्वर-त्वर-स्रिव्यवि-मवामुपधायाश्च**<br>ज्वर-त्वर-स्रिव्यवि-मवामङ्गानां वकारस्य, उपधायाश्च ऊठ् भवति, अनुनासिके, क्विझलोः क्ङिति च।<br>ज्वर्- जूः, जूरौ, जूरः, जूर्त्तिः।<br>त्वर्- तूः, तूरौ, तूरः, तूर्त्तिः।<br>स्रिवि- सूः, स्रुवौ, स्रुवः। स्रूतवान्। स्रूतिः।<br>अव्- ऊः, उवौ, उवः, ऊतिः।<br>मव्- मूः, मुवौ, मुवः, मूतः, मूतवान्, मूतिः।<br>अनुनासिकादौ प्रत्यये इत्यस्योदाहरणम्- ओम् इति। अवधातोः 'अवतेष्टिलोपश्च' इत्यौणादिकसूत्रेण मन् प्रत्ययः, प्रत्ययस्य टेर्लोपश्च, 'अव् म्' इत्यवस्थायां वस्य ऊठ्, गुणः। | |
| क्विझलोः १५<br>क्ङिति १५<br>च्छवोः १६ | **२१. राल्लोपः**<br>रात् परस्य छकरस्य च लोपो भवति, अनुनासिके, क्विझलोः क्ङिति च।<br>राल्लोपे सतुक्कस्य छस्याभावात् केवलश्छकारो गृह्यते।<br>छस्य- मुर्च्छा मोहसमुच्छ्राययोः- मूः, मुरौ, मुरः। मूर्त्तः, मूर्त्तवान्, मूर्त्तिः।<br>वस्य- तुर्वी हिसार्थः- तूः, तुरौ, तुरः। तूर्णः, तूर्णवान्, तूर्तिः। | |

| | | |
|---|---|---|
| | २२. असिद्धवदत्राभात्<br>आभात् = 'भस्य' इत्यधिकारमभिव्याप्य (आपादपरिसमाप्तेरित्यर्थः) यत्कार्यमुक्तं तदसिद्धवद् भवति, अत्र=एतत्प्रकरणस्थे अन्यस्मिन् कार्यविषये इति सूत्रार्थः।<br>अधिकारसूत्रमिदमिति इत ऊर्ध्वं पादान्तं यावत् प्रतिसूत्रमस्योपस्थितिर्भवति।<br>प्रतिसूत्रमस्योपस्थित्या स्थानिनि सति यत् प्राप्तं तत्कृतेऽप्यादेशे भवति, स्थानिनि सति यन्न प्राप्तं तदादेशानन्तरं प्राप्तमपि न भवति।<br>यथा- 'एधि' 'शाधि' इत्यत्र एत्वशाभावयोः कृतयोः झल्लक्षणं धित्वं न प्राप्नोति, असिद्धत्वाद् भवति।<br>'जहि' इत्यत्र जभावे कृते 'अतो हेः' इति लुक् प्राप्नोति, असिद्धत्वान्न भवति।<br>(वा०) वुग्युटावुङ्यणोः सिद्धौ भवत इति वक्तव्यम्।<br>वुक् उवङादेशे - बभूव। बभूवतुः। बभूवुः। 'भुवो वुग्लुङ्लिटोः' (६.४.८८) इति सूत्रेण परत्वाद् विहितो वुगागमः, 'अचि श्नु' (६.४.७७) इत्युवङि कर्त्तव्येऽपि सिद्ध एवेति न उवङ्।<br>युट् यणादेशे - उपदिदीये, उपदिदीयाते, उपदिदीयिरे।<br>अत्र 'उपदिदी ए' इत्यवस्थायां 'दीङो युडचि क्ङिति (६.४.६३) इति सूत्रेण नित्यत्वाद् विहितो युडागमः 'एरनेकाचोऽसंयोगपूर्वस्य' (६.४.८२) इति यणि कर्त्तव्ये सिद्ध एवेति न यणादेशः। | असिद्धवत् १७५ |
| | २३. श्नान्नलोपः<br>श्नात् (श्नम् इति विकरणादुत्तरस्य) नस्य लोपो भवति।<br>'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु'- अनक्ति।<br>भञ्जो मर्दने- भनक्ति।<br>हिंसि हिंसायाम्- हिनस्ति। | नलोपः ३३ |

| | | |
|---|---|---|
| नलोपः २३<br>अङ्गस्य १ | २४. अनिदितां हल उपधायाः क्ङिति<br>अनिदितां हलः (हलन्तानामङ्गानाम्) उपधाया नस्य लोपो भवति क्ङिति।<br>किति- स्रस्तः। ध्वस्तः।<br>ङिति- सनीस्रस्यते। दनीध्वस्यते।<br>(वा०) रञ्जेर्णौ मृगरमण उपसंख्यानं कर्त्तव्यम्।<br>रजयति मृगान्।<br>(वा०) रजक-रजन-रजःसूपसंख्यानं कर्त्तव्यम्।<br>रजकः। रजनम्। रजः। | उपधायाः ३४ |
| उपधायाः २४<br>नलोपः २३ | २५. दंश-सञ्ज-स्वञ्जां शपि<br>दंश-सञ्ज-स्वञ्जामुपधाया नस्य लोपो भवति शपि।<br>दशति। सजति। परिष्वजते। | शपि २६ |
| उपधायाः २४<br>नलोपः २३ शपि२५ | २६. रञ्जेश्च<br>रञ्जेश्चोपधाया नस्य लोपो भवति शपि।<br>रजति।<br>पृथग्योगकरणमुत्तरार्थम्। | रञ्जेः २७ |
| उपधायाः २४<br>नलोपः २३<br>रञ्जेः २६ | २७. घञि-वच भावकरणयोः<br>भावकरणयोः घञि च रञ्जेरुपधाया नस्य लोपो भवति।<br>भावे- आश्चर्यो रागः। विचित्रो रागः।<br>करणे- रज्यतेऽनेनेति रागः। | घञि २८ |
| घञि २७ | २८. स्यदो जवे<br>जवे 'स्यदः' इति निपात्यते।<br>जवः= वेगः। 'स्यन्दू प्रस्रवणे' इति धातोः घञि नलोपो, वृद्ध्यभावश्च।<br>गोस्यदः। अश्वस्यदः।<br>जव इति किम् ? तैलस्यन्दः। घृतस्यन्दः। | |
| घञि २७ | २९. अवोदैधौद्म-प्रश्रथ-हिमश्रथाः<br>अवोद, एध, ओद्म, प्रश्रथ, हिमश्रथ- इत्येते निपात्यन्ते।<br>अवोदः। अव+उन्द्+घञ्।<br>एधः। इन्धृ+घञ्।<br>ओद्मः। उन्देरौणादिके मन्प्रत्यये नलोपो, गुणश्च निपात्यते।<br>प्रश्रथः। प्र+श्रन्थ्+घञ्।<br>हिमश्रथः। हिमोपपदात् श्रन्थेर्घञ्। | |

| | | |
|---|---|---|
| नलोपः २३<br>उपधायाः २४ | ३०. नाञ्चेः पूजायाम्<br>पूजायां वर्त्तमानाद् अञ्चेरुपधाया नस्य लोपो न भवति।<br>अञ्चिता अस्य गुरवः।<br>'अञ्चेः पूजायाम्' इति इडागमः।<br>पूजायाम् इति किम् ? उदक्तमुदकं कूपात्।<br>उद्धृतमित्यर्थः। 'यस्य विभाषा' इति इट्प्रतिषेधः। | न ३२ |
| नलोपः २३ न ३०<br>उपधायाः २४ | ३१. क्त्वि स्कन्दि-स्यन्दोः<br>क्त्वि स्कन्दिस्यन्दोः उपधाया नस्य लोपो न भवति।<br>स्कन्त्वा। स्यन्त्वा। | क्त्वि ३२ |
| क्त्वि ३१<br>नलोपः २३ न ३०<br>उपधायाः २४ | ३२. जान्तनशां विभाषा<br>जान्त-नशाम् उपधाया नस्य विभाषा लोपो भवति, क्त्वि।<br>रञ्ज्- रक्त्वा, रङ्क्त्वा। भञ्ज्- भक्त्वा, भङ्क्त्वा।<br>नश्- नष्ट्वा, नंष्ट्वा।<br>'मस्जि-नशोर्झलि' इति नशेर्मुमागमः। | विभाषा ३३ |
| नलोपः २३<br>विभाषा ३२<br>उपधायाः २४ | ३३. भञ्जेश्च चिणि<br>भञ्जेश्च चिणि उपधाया नस्य लोपो विभाषा भवति।<br>अभाजि, अभञ्जि। | |
| उपधायाः २४<br>क्ङिति २४ | ३४. शास इदङ्हलोः<br>शास उपधाया इद् भवति अङि, हलादौ च क्ङिति।<br>अङि- अन्वशिषत्। अन्वशिषताम्।<br>हलादौ किति- शिष्टः, शिष्टवान्।<br>हलादौ ङिति- शिष्टः, शिष्ठः, शिष्ठ, शिष्वः, शिष्मः। | शासः ३५ |
| शासः ३४ | ३५. शा हौ<br>शासः 'शा' इत्यादेशो भवति हौ।<br>अनुशाधि। प्रशाधि।<br>'हुझल्भ्यो हेर्धिः' इति सूत्रेण हेर्धिः। | हौ ३६ |
| हौ ३५ | ३६. हन्तेर्जः<br>हन्तेः जः भवति हौ।<br>जहि शत्रून्। | |

| | | |
|---|---|---|
| | ३७. अनुदात्तोपदेश-वनति-तनोत्यादीनामनुनासिकलोपो झलि क्ङिति<br>अनुदात्तोपदेश-वनति-तनोत्यादीनाम् अनुनसिकलोपो भवति झलि (झलादौ) क्ङिति।<br>झलादौ किति- अनुदात्तोपदेशस्य-यतः। रतः। गतः। हतः। मतः। वनतेः - वतिः।<br>तनोत्यादीनाम् - ततः। क्षतः। क्षितः। ऋतः। तृतः। घृतः। वतः। मतः।<br>झलादौ ङिति- अतत। अतथाः। | अनुदा-म् ३९<br>अनुना-पः ४० |
| अनुनासिकलोपः ३७<br>अनुदात्तोपदेश-दीनाम् ३७ | ३८. वा ल्यपि<br>ल्यपि अनुदात्तोपदेश-वनति-तनोत्यादीनामनुनासिकलोपो वा भवति।<br>प्रयत्य, प्रयम्य। प्ररत्य, प्ररम्य। आगत्य, आगम्य। आहत्य। प्रमत्य। प्रवत्य। प्रक्षत्य।<br>व्यवस्थितविभाषा चेयम्, तेन मकारान्तानां विकल्पो भवति, अन्येषां नित्यमेव लोपः। | |
| अनुनासिकलोपः ३७<br>अनुदात्तोपदेश-दीनाम् ३७ | ३९. न क्तिचि दीर्घश्च<br>क्तिचि अनुदात्तोपदेश-वनति-तनोत्यादीनामनु-नासिक लोपो न भवति, दीर्घोऽपि न भवति।<br>यन्तिः। वन्तिः। तन्तिः।<br>अनुनासिकलोपे प्रतिषिद्धे 'अनुनासिकस्य क्विझलोः' (६.४.१५) इति सूत्रेण दीर्घः प्राप्नोति, सोऽपि प्रतिषिध्यते। | |
| अनुनासिकलोपः ३७ | ४०. गमः क्वौ<br>गमोऽनुनासिलोपो भवति क्वौ।<br>अङ्गगत्। कलिङ्गगत्। | |
| | ४१. विड्वनोरनुनासिकस्यात्<br>विड्वनोः (परयोः) अनुनासिकस्य आत् (आकारादेशः) भवति।<br>विटि- अब्जा गोजा ऋतजा अद्रिजा।<br>वनि- विजावा। अग्रेजावा। | आत् ४५ |

| | | |
|---|---|---|
| झलि ३७<br>क्ङिति ३७<br>आत् ४१<br>अङ्गस्य १ | ४२. जन-सन-खनां सञ्झलोः<br>जन-सन-खनाम् आद् भवति झलादौ सनि, झलादौ क्ङिति च।<br>जन्- जातः। जातवान्। जातिः।<br>सन्- सनि- सिषासति। किति-सातः। सातवान्, सातिः।<br>खन्- खातः। खातवान्। खातः। | जन-सन-खनां ४३ |
| क्ङिति ३७ आत् ४१<br>जनसनखनां ४२ | ४३. ये विभाषा<br>यकारादौ क्ङिति जनसनखनां विभाषा आद् भवति।<br>जायते, जन्यते। जाजायते, जाजन्यते।<br>सायते, सन्यते। सासायते, संसन्यते।<br>खायते, खन्यते। चाखायते, चङ्खन्यते। | विभाषा ४४ |
| आत् ४१ विभाषा४३ | ४४. तनोतेर्यकि<br>तनोतेर्विभाषा आद् भवति यकि।<br>तायते, तन्यते। | |
| आत् ४१ विभाषा४३ | ४५. सनः क्तिचि लोपश्चास्यान्यतरस्याम्<br>सनः क्तिचि लोपश्चान्यतरस्यां भवति।<br>पक्षे- 'जन-सन-खनां सञ्झलोः' इति सूत्रेण आत्त्वम्। 'षणु दाने' इति तनादिः।<br>लोपे- सतिः। आत्त्वे- सातिः।<br>उभयोरभावे सन्तिः।<br>अन्यतरस्यांग्रहणं स्पष्टार्थम्। 'ये' इत्यनेन सह सम्बद्धं विभाषाग्रहणमिह निवृत्तमित्याशङ्क्येत। | |
| | ४६. आर्धधातुके<br>अधिकारोऽयं 'न ल्यपि'(६.४.६९) इत्यतः प्राक्। | आर्धधातुके ६८ |
| आर्धधातुके ४६ | ४७. भ्रस्जो रोपधयोरमन्यतरस्याम्<br>भ्रस्जो रोपधयोः रम् अन्यतरस्यां भवति आर्धधातुके।<br>रेफश्च उपधा च रोपधे तयोः रोपधयोः।<br>'रोपधयोः' इति स्थानषष्ठी निर्देशाद् उपधा, रेफश्चेति द्वयमपि निवर्तते, मित्त्वाच्चायमन्त्यात्परो भवति।<br>भर्ष्टा, भ्रष्टा। भर्जनम्, भ्रज्जनम्। | |
| आर्धधातुके ४६ | ४८. अतो लोपः<br>अतो लोपो भवति आर्धधातुके।<br>चिकीर्षिता। चिकीर्षितुम्। चिकीर्षितव्यम्। | लोपः ५४ |

| | | |
|---|---|---|
| लोपः ४८<br>आर्धधातुके ४६ | ४९. यस्य हलः<br>हलः (उत्तरस्य) 'य' शब्दस्य लोपो भवति आर्धधातुके।<br>बेभिदिता। बेभिदितुम्। बेभिदितव्यम्।<br>सूत्रे 'यस्य' इति संघातग्रहणम्। तेन- बेभिदिता' इत्यादौ यङन्तात् 'बेभिद्य इ ता' इत्याद्यवस्थायाम् 'आदेः परस्य' इतिसूत्रसहकारेण 'य' इत्यस्यादेः यकारस्य लोपः, ततः 'अतो लोपः' इति सूत्रेण अकारस्य लोपः।<br>संघातग्रहणम् किमर्थम् ? ईर्ष्यिता। | हलः ५० |
| हलः ४९ लोपः ४८<br>आर्धधातुके ४६ | ५०. क्यस्य विभाषा<br>हलः (उत्तरस्य) क्यस्य विभाषा लोपो भवति आर्धधातुके।<br>समिधिता। समिध्यिता। | |
| लोपः ४८<br>आर्धधातुके ४६ | ५१. णेरनिटि<br>णेरनिटि(अनिडादौ) आर्धधातुके परतः लोपो भवति।<br>इयङ्-यण्-गुण-वृद्धि-दीर्घाणामपवादोऽयम्।<br>अततक्षत्। आटिटत्। कारणा। कारकः। कार्यते, ज्ञीप्सति। | णेः ५७ |
| लोपः ४८ णेः ५१ | ५२. निष्ठायां सेटि<br>सेटि निष्ठायां णेर्लोपो भवति।<br>कारितम्। हारितम्। गणितम्। लक्षितम्। | |
| लोपः ४८ णेः ५१ | ५३. जनिता मन्त्रे<br>मन्त्रे 'जनिता' इति निपात्यते।<br>यो नः पिता जनिता।<br>मन्त्रे इति किम् ? भाषायाम्-जनयिता। | |
| लोपः ४८ णेः ५१ | ५४. शमिता यज्ञे<br>यज्ञे शमिता इति निपात्यते।<br>शृत हविः शमितः।<br>तृचि सम्बुद्धौ रूपमेतत्। | |
| णेः ५१ | ५५. अयामन्ताल्वाय्येत्न्विष्णुषु<br>आम्, अन्त, आलु, आय्य, इत्नु, इष्णु- इत्येतेषु परतः णेरय् भवति।<br>कारयाञ्चकार। गण्डयन्तः। स्पृहयालुः। स्पृहयाय्यः। स्तनयित्नुः। पोषयिष्णुः। | अय् ५७ |

| | | |
|---|---|---|
| अय् ५५ णेः ५१ | ५६. ल्यपि लघुपूर्वात्<br>लघुपूर्वाद् (वर्णाद् उत्तरस्य) णेरय् भवति ल्यपि।<br>प्रणमय्य। प्रगणय्य। | ल्यपि ५६ |
| णेरय् ५१-५५<br>ल्यपि ५६ | ५७. विभाषाऽऽपः<br>आपः (उत्तरस्य) णेरय् विभाषा भवति ल्यपि।<br>प्रापय्य, प्राप्य वा भवति।<br>इङादेशस्य लाक्षणिकत्वाद् न भवति-अध्याप्य गतः। | |
| ल्यपि ५६ | ५८. यु-प्लुवोर्दीर्घश्छन्दसि<br>यु-प्लुवोर्दीर्घः छन्दसि भवति ल्यपि।<br>दान्त्यनुपूर्वं वियूय। यत्रा यो दक्षिणा परिप्लूय।<br>छन्दसीति किम? संयुत्य। आप्लुत्य। | दीर्घः ६१ |
| ल्यपि ५६<br>दीर्घः ५८ | ५९. क्षियः<br>क्षियो दीर्घो भवति ल्यपि।<br>प्रक्षीय। | क्षियः ६१ |
| क्षियः ५९ दीर्घः ५८ | ६०. निष्ठायामण्यदर्थे<br>अण्यदर्थे निष्ठायां क्षियो दीर्घो भवति।<br>ण्यदिति कृत्यप्रत्ययः, स च भावे कर्मणि च भवति, इति ण्यदर्थः भावकर्मणी, तद्भिन्नोऽर्थः अण्यदर्थः।<br>आक्षीणः। प्रक्षीणः। अत्र कर्तरि क्तः। प्रक्षीणमिदं देवदत्तस्य। अत्र अधिकरणे क्तः। | निष्ठायाम्<br>अण्यदर्थे ६१ |
| क्षियः ५९ दीर्घः ५८<br>निष्ठायाम् ६०<br>अण्यदर्थे ६० | ६१. वाऽऽक्रोश-दैन्ययोः<br>आक्रोश-दैन्ययोः (गम्यमानयोः) अण्यदर्थे निष्ठायां क्षियो दीर्घो वा भवति।<br>आक्रोशे- क्षीणायुरेधि, क्षितायुर्वा।<br>दैन्ये- क्षीणोऽयं तपस्वी, क्षितो वा। | |

| | | |
|---|---|---|
| | ६२. स्य-सिचू-सीयुट्-तासिषु भावकर्मणोरुपदेशेऽज्झन-ग्रह-दृशां वा चिण्वदिट् च<br>भावकर्मणोः विहितेषु स्य-सिच्-सीयुट्-तासिषु उपदेशे अजन्तानामङ्गानां, हन्ग्रहदृशां च चिण्वद् भवति, यदा चिण्वत् तदा स्यादीनामिडागमश्च भवति।<br>स्ये चिण्वत्कार्यम्<br>चायिष्यते,चेष्यते। घानिष्यते, हनिष्यते। ग्राहिष्यते, ग्रहीष्यते। दर्शिष्यते,द्रक्ष्यते।<br>'ग्राहिष्यते' इत्यत्र 'ग्रहोऽलिटि दीर्घः' इति दीर्घो न भवति,तत्र प्रकृतस्य वलादिलक्षणस्यैव इटः ग्रहणात्। अत्र हि अतिदेशसन्नियोगशिष्टः इडागमः। एवमेव'अग्राहिषाताम्' इत्यादावपि।<br>सिचि चिण्वत्कार्यम्<br>अचायिषाताम्, अचेषाताम्। अघानिषाताम्, अवधिषाताम्,अहसताम्।<br>अग्राहिषाताम्,अग्रहीषाताम्। अदर्शिषाताम्, अदृक्षाताम्।<br>सीयुटि चिण्वत्कार्यम्<br>चायिषीष्ट,चेषीष्ट। घानिषीष्ट,वधिषीष्ट। ग्राहिषीष्ट,ग्रहीषीष्ट। दर्शिषीष्ट,दृक्षीष्ट।<br>तासौ च्चिण्वत्कार्यम्<br>चायिता,चेता। घानिता,हन्ता। ग्राहिता,ग्रहीता। दर्शिता,दर्ष्टा,द्रष्टा। | |
| | ६३. दीङो युडचि क्ङिति<br>दीङो युट् भवति अचि क्ङिति।<br>उपदिदीये, उपदिदीयाते, उपदिदीयिरे। | अचि ६४<br>क्ङिति ६८ |
| क्ङिति ६८<br>आर्धधातुके ४६ | ६४. आतो लोप इटि च<br>आतो (आकारान्तस्याङ्गस्य) लोपो भवति इटि, चकारात् अचि(अजादौ) क्ङिति।<br>इटि- पपिथ। तस्थिथ।<br>अचि किति- पपतुः, पपुः। तस्थतुः, तस्थुः। अचि ङिति- प्रदा। प्रधा।<br>अत्र 'आतश्चोपसर्गे' इति सूत्रेण अङ् प्रत्ययः। | आतः ६९ |

| | | |
|---|---|---|
| आतः ६४ | ६५. ईद्यति<br>आतः ईद् भवति यति।<br>देयम्। धेयम्।<br>'अचो यत्' इति सूत्रेण यत्। | ईत् ६६ |
| ईति ६५ क्ङिति६८ | ६६. घु-मा-स्था-गा-पा-जहाति-सां हलि<br>घुसंज्ञकानाम्, मा,स्था,गा,पा,जहाति,सा-इत्येजेषां च आकारस्य ईकारादेशो भवति हलि (हलादौ) क्ङिति परतः।।<br>दीयते, देदीयते। मीयते, मेमीयते। स्थीयते, तेष्ठीयते। गीयते, जेगीयते। पीयते, पेपीयते। हीयते, जेहीयते। अवसीयते, आवसेसीयते। | घु-साम् ६६ |
| घुमास्थागापा-जहातिसाम् ६६<br>क्ङिति६८ | ६७. एर्लिङि<br>घुमस्थादीनामात एः भवति किति लिङि।<br>देयात्। मेयात्। स्थेयात्। गेयात्। पेयात्। हेयात्। अवसेयात्। | एर्लिङि ६८ |
| एः ६७ आतः ६४<br>लिङि ६७<br>घुमास्थागापा-जहातिसाम् ६६ | ६८. वाऽन्यस्य संयोगादेः<br>अन्यस्य (घुमास्थादिभ्योऽन्यस्य) संयोगादेरात एः वा भवति किति लिङि।<br>ग्लेयात्, ग्लायात्। म्लेयात्, म्लायात्। | |
| आतः ६४ | ६९. न ल्यपि<br>ल्यपि घुमास्थादीनामात ईद् न भवति।<br>प्रदाय। प्रधाय। प्रमाय। प्रस्थाय। प्रगाय। प्रपाय। प्रहाय। अवसाय। | ल्यपि ७० |
| ल्यपि ६९ | ७०. मयतेरिदन्यतरस्याम्<br>मयतेः इद् (आदेशः) भवति अन्यतरस्यां ल्यपि।<br>'मेङ् प्रणिदाने'- अपमित्य, अपमाय। | |
| अङ्गस्य १ | ७१. लुङ्-लङ्-लृङ्क्ष्वडुदात्तः<br>लुङ्-लङ्-लृङ्क्षु (परतः) अङ्गस्य अट् (आगमः) भवति, उदात्तश्च सः।<br>अकार्षीत्। अकरोत्। अकरिष्यत्। | लु-क्षु अट् ७५<br>उदात्तः ७२ |
| लुङ्-क्षु ७१<br>उदात्तः ७१<br>अङ्गस्य १ | ७२. आडजादीनाम्<br>लुङ्-लङ्-लृङ्क्षु (परतः) अजादीनामङ्गानाम् आट् भवति, उदात्तश्च सः।<br>ऐक्षिष्ट। ऐक्षत। ऐक्षिष्यत्।<br>लावस्थायामेवाडाटौ भवतः। | आट् ७५ |

| | | |
|---|---|---|
| आट् ७२ अट् ७१ | ७३. छन्दस्यपि दृश्यते<br>आडागमो यतो विहितस्ततोऽन्यत्रापि छन्दसि दृश्यते।<br>सुरुचो वेन आवः। आनक्। आयुनक्।<br>अत्र वृञ् नश्, युज् इति हलादिधातूनामपि आडागमो दृश्यते। | |
| लुङ्-क्षु ७१<br>अडाटौ ७१.७२ | ७४. न माङ्योगे<br>माङ्योगे अडाटौ न भवतः।<br>मा भवान् कार्षीत्। मा स्म करोत्। मा भवान् ईक्षिष्ट। | |
| अडाटौ ७१.७२ | ७५. बहुलं छन्दस्यमाङ्योगेऽपि<br>छन्दसि अमाङ्योगेऽपि बहुलमडाटौ भवतः।<br>मा वः क्षेत्रे परबीजान्यवाप्सुः।<br>मा अभित्थाः। मा आवः। | बहुलम्<br>छन्दसि ७३ |
| छन्दसि ७५ | ७६. इरयो रे<br>इरयोः 'रे' इत्यादेशो भवति बहुलं छन्दसि।<br>गर्भं प्रथमं दध्र आपः।<br>अत्र झादेशस्य 'इरेच्' इत्यस्य 'रे' इत्यादेशः।<br>ददृश्रे।<br>अत्रापि झादेशस्य 'इरेच्' इत्यस्य 'रे' इत्यादेशः।<br>पुनः 'रे' इत्यस्येडागमे कृते निष्पन्ने 'इरे' इत्यस्यापि 'रे' इत्यादेशः। एतदर्थमेव सूत्रे 'इरयोः' इति द्विर्वचननिर्देशः कृतः। | |
| अङ्गस्य १ | ७७. अचि श्नु-धातु-भ्रुवां य्वोरियङुवङौ<br>श्नु-धातु-भ्रुवां य्वोः(इकारस्य, उकारस्य च) इयङुवङौ भवतः अचि (अजादौ प्रत्यये) परतः।<br>श्नु-आप्नुवन्ति।<br>धातोः- चिक्षियतुः। लुलुवतुः।<br>भ्रुवः- भ्रुवौ, भ्रुवः।<br>चयनम्, चायकः, लवनम्, लावकः इत्यादौ इयङुवङौ प्रबाध्य विप्रतिषेधेन गुणवृद्धी भवतः। | अचि १००<br>य्वोः ७८<br>इयङुवङौ ८० |
| अचि७७ य्वोः ७७<br>इयङुवङौ ७७ | ७८. अभ्यासस्यासवर्णे<br>अभ्यासस्य य्वोरियङुवङौ भवतः असवर्णेऽचि।<br>इयेष। उवोष।<br>'इषु इच्छायाम्' 'उष दाहे' इत्यनयोः लिटि, णलि रूपम्।<br>असवर्णे इति किम्? ईयतुः,ईयुः। ऊषतुः,ऊषुः। | |

| | | |
|---|---|---|
| अचि७७<br>इयङुवङौ ७७ | ७९. स्त्रियाः<br>स्त्रियाः (स्त्रीशब्दस्य) इयङ् भवति अचि (अजादौ प्रत्यये) परतः।<br>स्त्रियौ। स्त्रियः।<br>स्त्रीणाम् - इत्यत्र 'ह्रस्वनद्यापो नुट्'(७.१.५४) इति सूत्रेण परत्वान्नुडागमः। | स्त्रियाः ८० |
| स्त्रियाः ७९<br>इयङ् ७७ | ८०. वाऽम्शसोः<br>अम्शसोः (परतः) स्त्रिया इयङ् वा भवति।<br>स्त्रियम्, स्त्रीम्। स्त्रियः, स्त्रीः। | |
| अचि ७७ | ८१. इणो यण्<br>इणः (इण् गतौ इति धातोः) यण् भवति अचि।<br>यन्ति। यन्तु। आयन्। | यण् ८७ |
| धातोः ७७ अचि७७<br>यण् ८१ | ८२. एरनेकाचोऽसंयोगपूर्वस्य<br>धातोरिति वर्तते, तेन संयोगो विशेष्यते। अतः सूत्रस्यार्थो भवति- धातोरवयवः संयोगः पूर्वो यस्मादिवर्णान्न भवति, तदन्तस्यानेकाचोऽङ्गस्य यण् भवति अचि (अजादौ प्रत्यये) परतः।<br>निन्यतुः, निन्युः। उन्न्यौ, उन्न्यः।<br>असंयोगपूर्वस्य इति किम्? यवक्रियौ। यवक्रियः।<br>(वा०) गतिकारकेतरपूर्वपदस्य यण् नेष्यते।<br>परमनियौ। परमनियः। | अनेकाचः<br>असंयोगपूर्वस्य<br>८७ |
| धातोः ७७<br>अनेकाचः ८२<br>असंयोगपूर्वस्य ८२ | ८३. ओः सुपि<br>धातोरवयवः संयोगः पूर्वो यस्मादुवर्णान्न भवति, तदन्तस्यानेकाचोऽङ्गस्य यण् भवति अजादौ सुपि।<br>खलपूः - खलप्वौ, खलप्वः।<br>(वा०) गतिकारकेतरपूर्वपदस्य यण् नेष्यते।<br>परमलुवौ। परमलुवः। | सुपि ८४ |
| अचि ७७ सुपि ८३<br>यण् ८१ | ८४. वर्षाभ्वश्च<br>वर्षाभ्वश्च (वर्षाभूशब्दस्य च) यण् भवति अचि सुपि।<br>वर्षाभ्वौ, वर्षाभ्वः।<br>(वा०) दृन्करपुनःपूर्वस्य भुवो यण्वक्तव्यः।<br>दृन्भ्वौ, दृन्भ्वः, दृन्भ्वम्।<br>करभ्वौ, करभ्वः, करभ्वम्।<br>पुनर्भ्वौ, पुनर्भ्वः, पुनर्भ्वम्। | |

| | | |
|---|---|---|
| यण् ८१ सुपि८३ | ८५. न भू-सुधियोः<br>भू-सुधियोः यण् न भवति अजादौ सुपि प्रत्यये।<br>प्रतिभुवौ, प्रतिभुवः।<br>सुधियौ, सुधियः। | न<br>भू-सुधियोः८६ |
| भूसुधियोः ८५ | ८६. छन्दस्युभयथा<br>छन्दसि भूसुधियोरुभयथा दृश्यते, यणादेशाभावः, यणादेशश्च।<br>वने चित्रं विभ्वं विशे, विभुवं विशे। सुध्यो हव्यमग्ने, सुधियो हव्यमग्ने। | |
| अनेकाचः ८२<br>असंयोगपूर्वस्य ८२<br>अचि ७७ यण् ८१ | ८७. हु-श्नुवोः सार्वधातुके<br>अंसयोगपूर्वयोः अनेकाचोः हु-श्नुवोर्यण् भवति अचि सार्वधातुके।<br>जुह्वति। सुन्वति। | |
| अचि ७७ | ८८. भुवो वुग् लुङ्लिटोः<br>भुवो वुक् भवति लुङ्लिटोरचि।<br>लुङि- अभूवन्, अभूवम्।<br>लिटि- बभूव, बभूवतुः, बभूवुः। | |
| अचि ७७ | ८९. ऊदुपधाया गोहः<br>गोह उपधाया ऊत् भवति अचि।<br>'गुहू संवरणे'- निगूहति। निगूहकः। | ऊत् ९१<br>उपधायाः १०० |
| ऊत् ८९<br>उपधायाः ८९ | ९०. दोषो णौ<br>दोष उपधाया ऊत् भवति णौ।<br>'दुष् वैकृत्ये'- दूषयति, दूषयतः, दूषयन्ति। | दोषः ९१ णौ९४ |
| ऊत् ८९<br>उपधायाः ८९<br>दोषः ९० | ९१. वा चित्तविरागे<br>चित्तविरागे वर्त्तमानाद् दोषः उपधाया ऊत् वा भवति णौ।<br>चित्तविरागः - चित्तस्याप्रीतता।<br>चित्तं दूषयति, दोषयति वा। प्रज्ञां दूषयति, दोषयति वा। | |
| ऊत् ८९ णौ ९१ | ९२. मितां ह्रस्वः<br>मितामुपधाया ह्रस्वो भवति णौ।<br>घटयति। व्यथयति। जनयति।<br>मितो धातवः' घटादयो मितः' इत्येवमादयो धातुपाठे पठिताः। | मिताम् ९३ |

| | | |
|---|---|---|
| उपधायाः ८६<br>णौ ६१ मिताम् ६२ | ६३. चिण्णमुलोर्दीर्घोऽन्यतरस्याम्<br>चिण्णमुलोः (परयोः) णौ मितामुपधाया अन्यतरस्यां दीर्घो भवति।<br>अशामि, अशमि। शामं शामम्, शमं शमम्। | |
| उपधायाः ८६<br>णौ ६१ ह्रस्वः ६२ | ६४. खचि ह्रस्वः<br>खचि (खच्परे) णौ अङ्गस्योपधाया ह्रस्वो भवति।<br>द्विषन्तपः। परन्तपः। पुरन्दरः। | ह्रस्वः ६७ |
| उपधायाः ८६<br>ह्रस्वः ६२ | ६५. ह्लादो निष्ठायाम्<br>ह्लादः उपधाया ह्रस्वो भवति निष्ठायाम्।<br>प्रह्लन्नः। प्रह्लन्नवान्। | |
| उपधायाः ८६<br>ह्रस्वः ६२ | ६६. छादेर्घेऽद्व्युपसर्गस्य<br>अद्व्युपसर्गस्य छादेरुपधाया ह्रस्वो भवति घे।<br>उरश्छदः। प्रच्छदः। दन्तच्छदः।<br>अद्व्युपसर्गस्य इति किम् ? समुपच्छादः।<br>(वा०)अद्विप्रभृत्युपसर्गस्येति वक्तव्यम्।<br>समुपातिच्छादः।<br>उत्तरा हि संख्या पूर्वसंख्याकृतं व्यपदेशं निवर्त्तयति, न हि त्रिपुत्रो द्विपुत्र इति व्यपदिश्यते। | छादेः ६७ |
| छादेः ६६<br>उपधायाः ८६<br>ह्रस्वः ६२ | ६७. इस्-मन्-त्रन्-क्विषु च<br>इस्-मन्-त्रन्-क्विषु छादेरुपधाया ह्रस्वो भवति।<br>छदिः। छद्म। छत्रम्। धामच्छत्। | |
| उपधायाः ८६<br>अचि ७७ | ६८. गम-हन-जन-खन-घसां लोपः क्ङित्यनङि<br>गम-हन-जन-खन-घसामुपधाया लोपो भवति अचि(अजादौ) क्ङिति, न त्वङि।<br>जग्मतुः, जग्मुः। जघ्नतुः, जघ्नुः। जज्ञे, जज्ञाते, जज्ञिरे। चख्नतुः, चख्नुः। जक्षतुः, जक्षुः।<br>अक्षन् पितरोऽमीमदन्त पितरः।<br>अनङि इति किम् ? अगमत्। अघसत्।<br>पुषादिसूत्रेण च्लेरङ्। | लोपः १००<br>क्ङिति १२६ |
| उपधायाः ८६<br>अचि ७७ लोपः६८<br>क्ङिति ६८ | ६९. तनि-पत्योश्छन्दसि<br>तनि-पत्योः उपधाया लोपो भवति अचि क्ङिति छन्दसि ।<br>वितत्निरे कवयः। शकुना इव पप्तिम; लिट्, मस्, इट्।<br>छन्दसीति किम्? वितेनिरे। पेतिम। | छन्दसि १०० |

| | | |
|---|---|---|
| छन्दसि ९९<br>अचि ७७ लोपः९८<br>उपधायाः ८९<br>क्ङिति ९८ | १००. घसि-भसोर्हलि च<br>घसिर्भसोरुपधाया लोपो भवति छन्दसि<br>हलि(हलादौ) चकारात् अचि च क्ङिति।<br>हलि- सग्धिश्च मे। बब्धां ते हरी धानाः।<br>अचि- बप्सति; भसेः परस्य झस्य अदादेशः, शपः श्लुः, द्विर्वचनम्, अभ्यासकार्यम्, उपधालोपः, भस्य चर्त्वम्। | हलि १०१ |
| हलि १०० | १०१. हु-झल्भ्योहेर्धिः<br>हु-झल्भ्यो हलादेः हेः धिर्भवति।<br>हु- जुहुधि।<br>झलन्तेभ्यः- भिन्धि। छिन्धि।<br>हलीत्येव- रुदिहि। स्वपिहि। | हेर्धिः १०३ |
| हेर्धिः १०१ | १०२. श्रु-शृणु-पॄ-कृ-वृभ्यश्छन्दसि<br>श्रु-शृणु-पॄ-कृ-वृभ्यश्छन्दसि हेर्धिर्भवति।<br>श्रुधी हवमिन्द्र। शृणुधी गिरः। पूर्द्धि। उरुणस्कृधि। अपावृधि। | छन्दसि १०३ |
| हेर्धिः १०१<br>छन्दसि १०२ | १०३. अङितश्च<br>अङितश्च हेर्धिर्भवति छन्दसि ।<br>सोम रारन्धि।<br>रारन्धि इति रमेर्व्यत्ययेन परस्मैपदम्, शपः श्लुः, अभ्यासदीर्घत्वं छान्दसत्वात्।<br>'हि' इत्यस्य 'वा छन्दसि' इति सूत्रेण विकल्पेन पित्त्वातिदेशात् पिद्भावाभावे 'सार्वधातुकमपित्' इति सूत्रेण ङित्त्वम्। पिद्भावपक्षे च तस्य अङित्त्वम्। अङित्त्वाद् 'रारन्धि' इति प्रयोगे मलोपो न भवति।<br>अङितः इति किम् ? हव्यं प्रीणीहि। | |
| | १०४. चिणो लुक्<br>चिणः (उत्तरस्य प्रत्ययस्य) लुग्भवति।<br>अलावि। अपाचि। | लुक् १०६ |
| लुक् १०४ | १०५. अतो हेः<br>अतो हेर्लुग्भवति।<br>पच। पठ। गच्छ। | हेः १०६ |
| हेः १०५ लुक् १०४ | १०६. उतश्च प्रत्ययादसंयोगपूर्वात्<br>असंयोगपूर्वाद् उतः प्रत्ययात् (उत्तरस्य) हेर्लुग्भवति।<br>चिनु। सुनु। कुरु।<br>असंयोगपूर्वात् इति किम् ? प्राप्नुहि। राध्नुहि। | उतः प्रत्यात्११०<br>असंयोगपूर्वात् १०७ |

| | | |
|---|---|---|
| उतः १०६<br>प्रत्ययस्य १०६<br>असंयोगपूर्वात् १०६ | १०७. लोपश्चास्यान्यतरस्यां म्वोः<br>असंयोगपूर्वस्य उतः प्रत्ययस्य अन्यतरस्यां लोपो भवति म्वोः।<br>सुन्वः, सुनुवः। सुन्मः, सुनुमः। शृण्वः, शृणुवः। शृण्मः, शृणुमः। | लोपः १०९<br>म्वोः १०८ |
| उतः १०६<br>प्रत्ययस्य १०६<br>म्वोः१०७ लोपः१०७ | १०८. नित्यं करोतेः<br>करोतेः उतः प्रत्ययस्य नित्यं लोपो भवति म्वोः।<br>कुर्वः। कुर्मः। | नित्यम् १०९<br>करोतेः ११० |
| नित्यम् १०९<br>करोतेः ११०<br>उतः१०६ लोपः१०७ | १०९. ये च<br>ये (यकारादौ प्रत्यये परतः) च करोतेरुतः प्रत्ययस्य नित्यं लोपो भवति।<br>कुर्यात्, कुर्याताम्, कुर्युः। | |
| क्ङिति ९८<br>करोतेः ११० उतः१०६<br>प्रत्ययस्य १०६ | ११०. अत उत् सार्वधातुके<br>उतः प्रत्ययस्य (उकारप्रत्ययान्तस्य) करोतेः अकारस्य उकारादेशो भवति क्ङिति सार्वधातुके परे।<br>कुरुतः। कुर्वन्ति। | सार्वधातुके ११८ |
| सार्वधातुके ११०<br>क्ङिति ९८ | १११. श्नसोरल्लोपः<br>श्नसोरल्लोपो भवति क्ङिति सार्वधातुके।<br>श्नसोरित्यत्र श्न+असोः इतिच्छेदः, पररूपत्वं चात्र शकन्ध्वादित्वाद् द्रष्टव्यम्।'श्न' इति 'श्नम्' इत्येकदेशानुकरणम्।<br>श्नस्य - रुन्धः, रुन्धन्ति।<br>अस्तेः - स्तः, सन्ति। | अल्लोपः ११२ |
| लोपः १११<br>सार्वधातुके ११०<br>क्ङिति ९८ | ११२. श्नाभ्यस्तयोरातः<br>श्नाभ्यस्तयोरातो लोपो भवति क्ङिति सार्वधातुके।<br>अत्र श्ना+अभ्यस्तयोः इतिच्छेदः।<br>श्नः - लुनते। लुनताम्। अलुनत।<br>अभ्यस्तस्य- मिमते। मिमताम्। अमिमत। | श्नाभ्यस्तयोः ११३<br>आतः ११४ |
| श्नाभ्योः ११२<br>आतः ११२<br>सार्वधातुके ११०<br>क्ङिति ९८ | ११३. ई हल्यघोः<br>श्नाभ्यस्तयोरात ईकारादेशो भवति हलि(हलादौ) क्ङिति सार्वधातुके, घोः आत ईकारादेशो न भवति।<br>श्नः - लुनीतः। पुनीतः।<br>अभ्यस्तस्य- मिमीते। मिमीषे।<br>अघोरिति किम्? दत्तः। धत्तः। | हलि ११६ |

| | | |
|---|---|---|
| हलि ११३<br>सार्वधातुके ११०<br>क्ङिति ९८<br>आतः ११२ | ११४. इद्दरिद्रस्य<br>दरिद्रस्य (दरिद्राधातोः) आतः इत् भवति हलि क्ङिति सार्वधातुके।<br>दरिद्रितः। दरिद्रिथः। दरिद्रिवः। दरिद्रिमः। | इत् ११६ |
| हलि ११३<br>सार्वधातुके ११०<br>क्ङिति ९८<br>इत् ११४ | ११५. भियोऽन्यतरस्याम्<br>भियः (भीधातोः) इत् अन्यतरस्यां भवति हलि क्ङिति सार्वधातुके।<br>बिभितः, बिभीतः। बिभिथः, बिभीथः। | अन्य-स्याम् ११७ |
| हलि ११३<br>सार्वधातुके ११०<br>क्ङिति ९८ वा ११५<br>आतः ११२ इत् ११४ | ११६. जहातेश्च<br>जहातेश्च इत् अन्यतरस्यां भवति हलि क्ङिति सार्वधातुके।<br>पक्षे 'ई हल्यघोः' इति सूत्रेण ईकारादेशः।<br>जहितः, जहीतः। जहिथः, जहीथः।<br>पृथग्योगकरणमुत्तरार्थम्। | जहातेः ११८ |
| जहातेः ११६<br>इत् ११४ ईत् ११३<br>अन्यतरस्याम् ११५ | ११७. आ च हौ<br>जहातेः आ च अन्यतरस्यां हौ, चकारात् इत्, ईश्च।<br>जहाहि, जहिहि, जहीहि। | |
| जहातेः ११६ सार्वधातुके ११०<br>क्ङिति ९८ | ११८. लोपो यि<br>जहातेर्लोपो भवति यि(यकारादौ) क्ङिति सार्वधातुके।<br>जह्यात्, जह्याताम्, जह्युः। | |
| | ११९. घ्वसोरेद्धावभ्यासलोपश्च<br>घ्वसोः एत् भवति हौ, अभ्यासलोपश्च।<br>घु + असोः इतिच्छेदः।<br>घोः - देहि। धेहि।<br>अस्तेः - एधि।<br>'अस् हि' इत्यवस्थायां सकारस्यैत्वे कृते तस्य आभीयत्वेनासिद्धत्वाद् झलन्तत्वेन हेर्धिः, 'श्नसोरल्लोपः' इत्यकार लोपः। | एत्<br>अभ्यासलोपः १२६ |

| | | |
|---|---|---|
| एत् ११९ क्ङिति ९८<br>अभ्यासलोपः ११९ | १२०. अत एकहल्मध्येऽनादेशादेर्लिटि<br>अनादेशादेरङ्गस्य एकहल्मध्ये (स्थितस्य) अतः एत् भवति, अभ्यासलोपश्च, क्ङिति लिटि।<br>एकशब्दोऽत्र असहायवाची। अतः एकहल्मध्ये इत्यस्य असहाययोर्हलोर्मध्ये इत्यर्थः।<br>पेचतुः। पेचुः।<br>लिटि परे यत्र आदेशः तत्रैव 'अनादेशादेः' इत्यनेन निषेधः। तेन-नेमतुः,नेमुः,सेहे,सेहाते इत्यादौ एत्वाभ्यासलोपौ भवतः एव। | अतः लिटि१२६<br>एकहल्मध्ये<br>अनादेशादेः १२१ |
| अत १२० एकहल्मध्ये १२० अनादेशादेः १२०<br>अभ्यासलोपः११९<br>एत् ११९<br>अङ्गस्य१ | १२१. थलि च सेटि<br>अनादेशादेरङ्गस्य एकहल्मध्ये (स्थितस्य) अतः एत् भवति, अभ्यासलोपश्च सेटि थलि।<br>पेचिथ। शेकिथ। | थलि सेटि १२६ |
| अत१२०<br>अभ्यासलोपः११९<br>एत् ११९<br>लिटि १२० | १२२. तॄ-फल-भज-त्रपश्च<br>तॄ-फल-भज-त्रपश्च अत एत् भवति, अभ्यासलोपश्च, क्ङिति लिटि, थलि च सेटि।<br>तेरतुः, तेरुः, तेरिथ।<br>फेलतुः, फेलुः, फेलिथ।<br>भेजतुः, भेजुः, भेजिथ।<br>त्रेपे, त्रेपाते, त्रेपिरे। | |
| अत१२०<br>अभ्यासलोपः११९<br>एत् ११९<br>लिटि १२०<br>सेटि १२१ थलि१२१ | १२३. राधो हिंसायाम्<br>हिंसायां वर्त्तमानस्य राधः अत एत् भवति, अभ्यासलोपश्च, लिटि क्ङिति, थलि च सेटि।<br>अपरेधतुः अपरेधुः अपरेधिथ।<br>"अतः इत्येतदनुवृत्तमिह असम्भवात् तपरत्वकृतं कालविशेषमपास्य अवर्णमात्रं प्रतिपादयति" इति काशिकावृत्तिः। | |
| अत१२०<br>अभ्यासलोपः११९एत् ११९<br>लिटि १२०<br>सेटि १२१ थलि१२१ | १२४. वा जॄ-भ्रमु-त्रसाम्<br>जॄ-भ्रमु-त्रसामत एत् वा भवति, अभ्यासलोपश्च, क्ङिति लिटि, थलि च सेटि।<br>जेरतु, जजरतुः। जेरिथ, जजरिथ।<br>भ्रेमतुः, बभ्रमतुः। भ्रेमिथ, बभ्रमिथ।<br>त्रेसतुः, तत्रसतुः। त्रेसिथ, तत्रसिथ। | वा १२५ |

| | | |
|---|---|---|
| अत१२०<br>अभ्यासलोपः११९<br>एत्११९<br>लिटि १२०<br>सेटि १२१ थलि१२१<br>वा १२४ | १२५. फणां च सप्तानाम्<br>फणां (फणादीनाम्) सप्तानां च अत एत् वा भवति, अभ्यासलोपश्च, लिटि क्ङिति, थलि च सेटि।<br>(१) फण्- फेणतुः, पफणतुः। फणिथ, पफणिथ।<br>(२) राज्- रेजतुः, रराजतुः। रेजिथ, रराजिथ।<br>(३) भ्राज्- भ्रेजे, बभ्राजे।<br>(४) भ्रश्- भ्रेशे, बभ्राशे।<br>(५) भ्लाश्- भ्लेशे, बभ्लाशे।<br>(६) स्यम- स्येमतुः, सस्यमतुः। स्येमिथ, सस्यमिथ।<br>(७) स्वन- स्वेनतुः, सस्वनतुः। स्वेनिथ, सस्वनिथ। | |
| अत१२०<br>अभ्यासलोपः११९<br>एत११९<br>लिटि १२०<br>सेटि १२१ थलि१२१ | १२६. न शस-दद-वादि-गुणानाम्<br>शस-दद-वादि-गुणानामत एत् न भवति, अभ्यासलोपश्चापि न भवति।<br>शस हिंसायाम्- विशशसतुः, विशशसिथ।<br>दद दाने - दददे।<br>वकारादि-टुवम उद्गिरणे- ववमतुः, ववमिथ।<br>गुणस्य - गुणशब्देन जातस्य अकारस्य इत्यर्थः।<br>शॄ हिंसायाम्- विशशरतुः, विशशरिथ।<br>'ऋच्छत्यॄताम्' इति सूत्रेण लिटि परे गुणः।<br>लूञ् छेदने- लुलविथ।<br>गुणशब्देन जातस्य अर्शब्दस्य, ओकारस्य(अवादेशानन्तरम्) चायमकार इति एत्वम्, अभ्यासलोपश्च प्रतिषिध्यते। | |
| | १२७. अर्वणस्त्रसावनञः<br>अनञः अर्वणः 'तृ' इत्यादेशो भवति नं तु सौ।<br>अर्वन्तौ, अर्वन्तः। ङीपि-अर्वती। अपत्यार्थेऽणि-आर्वतम्।<br>अनञः इति किम्? अनर्वाणौ, अनर्वाणः।<br>असौ इति किम्? अर्वा। | तृ १२८ |
| तृ १२७ | १२८. मघवा बहुलम्<br>'मघवन्' इति शब्दः बहुलं 'तृ' इत्यादेशं लभते।<br>मघवा, मघवन्तौ, मघवन्तः।<br>बहुलग्रहणान्नापि भवति- मघवा, मघवानौ, मघवानः। | |

| | | |
|---|---|---|
| | १२९. भस्य<br>अधिकारोऽयम् आपादपरिसमाप्तेः। | भस्य १७५ |
| भस्य १२९ | १३०. पादः पत्<br>भस्य पादः पद् भवति।<br>पाद् इति लुप्ताकारो गृह्यते।<br>द्विपदः पश्य। द्विपदा। द्विपदे। द्विपदिकां ददाति।<br>वैयाघ्रपद्यः। | |
| भस्य १२९ | १३१. वसोः सम्प्रसारणम्<br>वसोः (वस्वन्तस्य) भस्य सम्प्रसारणं भवति।<br>विदुषः पश्य। विदुषा। विदुषे। विदुषी। वैदुष्यम्। | सम्प्रसारणम् ११३ |
| भस्य १२९<br>सम्प्रसारणम् १३१ | १३२. वाह ऊठ्<br>वाहः (वाह्शब्दान्तस्य) भस्य सम्प्रसारणमूठ् भवति।<br>प्रष्ठौहः। प्रष्ठौहा। प्रष्ठौहे। | |
| भस्य १२९<br>सम्प्रसारणम् १३१<br>अनः१३४ | १३३. श्व-युव-मघोनामतद्धिते<br>अन्नन्तानां श्व-युव-मघोनां भसंज्ञकानाम् सम्प्रसारणं भवति, तद्धिते तु न भवति।<br>श्वन्, युवन्, मघवन्- इत्येतेषां शब्दानां समासारणं भवत्यनेन।<br>श्वन्- शुनः, शुना, शुने।<br>युवन्- यूनः, यूना, यूने।<br>मघवन् - मघोनः, मघोना, मघोने।<br>अन्नन्तानामेव श्वादीनाम् अनेन सम्प्रसारणमिष्टम्। तेन लिङ्गविशिष्टपरिभाषया युवन्शब्देन युवतीशब्दस्य ग्रहणसम्भवेऽपि युवतीः पश्य इत्यादौ सम्प्रसारणं न भवति। अतोऽत्र उत्तरसूत्राद् 'अनः' इत्यपकृष्यते। | |
| भस्य १२९ | १३४. अल्लोपोऽनः<br>भस्य अनोऽकारस्य लोपो भवति।<br>राज्ञः पश्य। राज्ञा। राज्ञे। | अत्१३८<br>लोपः १४५<br>अनः १३७ |
| भस्य १२९<br>अल्लोपः, अनः १३४ | १३५. षपूर्व-हन्-धृतराज्ञामणि<br>षपूर्व-हन्-धृतराज्ञाम् अनोऽतो लोपो भवति, अणि परतः, स चेदन् भस्य भवेत्।<br>षपूर्व- उक्ष्णोऽपत्यम् औक्ष्णः, तक्ष्णोऽपत्यं ताक्ष्णः।<br>हन्- भ्रूणं हन्ति भ्रूणहा, भ्रूणघ्नोऽपत्यं भ्रौणघ्नः।<br>धृतराजन्- धृतराज्ञोऽपत्यं धार्तराज्ञः। | |

| | | |
|---|---|---|
| अनः १३४<br>अल्लोपः १३४<br>भस्य१२६ | १३६. विभाषा ङि–श्योः<br>भस्य अनोऽतो विभाषा लोपो भवति ङिश्योः।<br>ङौ- राज्ञि, राजनि। शीशब्दे - साम्नी, सामनी। | |
| अनः १३४<br>अल्लोपः १३४<br>भस्य१२६ | १३७. न संयोगाद्वमन्तात्<br>भस्य वमन्तात्(वकारान्तात्, मकारान्ताच्च) संयोगात् (परस्य) अनोऽतो लोपो न भवति।<br>पर्वणा, पर्वणे। चर्मणा, चर्मणे। | |
| भस्य १२६<br>अल्लोपः १३४ | १३८. अचः<br>भस्य अचोऽतो लोपो भवति।<br>'अचः' इत्ययं लुप्तनकारोऽञ्चतिर्गृह्यते।<br>दधीचः पश्य। दधीचा। दधीचे। | अचः १३६ |
| भस्य १२६<br>अल्लोपः १३४<br>अचः १३८ | १३६. उद ईत्<br>उदः (परस्य) भस्य अचोऽत ईत् भवति।<br>उदीचः। उदीचा। उदीचे। | |
| भस्य १२६<br>लोपः १३४ | १४०. आतो धातोः<br>आतः (आकारान्तस्य) धातोर्भस्य लोपो भवति।<br>कीलालपः पश्य। कीलालपा। कीलालपे।<br>'आतः' इति योगविभागात् क्वचिद् अधातोरपि आकारस्य लोपो भवति- यथा क्त्वः, क्त्वि, श्नः। | |
| भस्य १२६<br>लोपः १३४<br>आतः १४० | १४१. मन्त्रेष्वाङ्यादेरात्मनः<br>मन्त्रेषु आङि परतः आत्मनः आदेः आतः लोपो भवति।<br>'आङ्' इति तृतीयैकवचनस्य प्राचां संज्ञा।<br>त्मना देवेभ्यः। त्मना सोमेषु। | |
| भस्य १२६<br>लोपः १३४ | १४२. ति विंशतेर्डिति<br>'ति' इति लुप्तषष्ठीकं पदम्। भस्य विशतेः तिशब्दस्य लोपो भवति डिति परतः।<br>विंशतेः पूरणः विंशः।<br>'तस्य पूरणे डट्' इति सूत्रेण डट्प्रत्ययः। | डिति १४३ |
| भस्य १२६<br>लोपः १३४<br>डिति १४२ | १४३. टेः<br>भस्य टेर्लोपो भवति डिति।<br>त्रिंशतः पूरणः त्रिंशः।<br>'तस्य पूरणे डट्' इति सूत्रेण डट्प्रत्ययः। | टेः १४५ |

| | | |
|---|---|---|
| भस्य १२६<br>लोपः १३४ टेः १४३ | १४४. नस्तद्धिते<br>नः (नान्तस्य) भस्य टेर्लोपो भवति, तद्धिते।<br>राज्ञः समीपम्, उपराजम्।<br>आत्मनि इति अध्यात्मम्।<br>'अनश्च' इति सूत्रेण समासान्तष्टच् प्रत्ययः।<br>(वा०) अश्मनो विकार उपसंख्यानम्।<br>अश्मनो विकार आश्मः। आश्मनोऽन्यः।<br>(वा०) चर्मणः कोश उपसंख्यानम्।<br>चार्मः कोशः। चार्मणोऽन्यः। | तद्धिते १४६ |
| टिलोपः १४३.१३४<br>भस्य१२६ | १४५. अह्नष्टखोरेव<br>अह्नष्टेर्लोपः टखोरेव प्रत्यययोः परतः भवति।<br>टे – द्वयोरह्नोः समाहारः द्व्यहः। त्र्यहः।<br>'राजाहः' इति टच्।<br>खे – द्वे अहनी अधीष्टो, भृतो, भूतो, भावी वा द्व्यहीनः।<br>'रात्र्यहःसंवत्सदाच्च' इति खः।<br>सूत्रे एवग्रहणाद् अह्ना निर्वृत्तम् इति आह्निकम् इत्यत्र ठकि परे 'नस्तद्धिते' इति सूत्रेण टिलोपो न भवति। | |
| भस्य १२६<br>तद्धिते १४४ | १४६. ओर्गुणः<br>ओः (उवर्णान्तस्य) भस्य गुणो भवति तद्धिते।<br>बभ्रोरपत्यं बाभ्रव्यः।<br>'मधुबभ्र्वोर्ब्राह्मण-कौशिकयोः' इति सूत्रेण यञ् प्रत्ययः।<br>उपगोरपत्यम् औपगवः। प्राग्दीव्यतोऽण्। | ओः १४७ |
| ओः १४६<br>भस्य १२६<br>तद्धिते १४४ | १४७. ढे लोपोऽकद्र्वाः<br>ओः (उवर्णान्तस्य) भस्य ढे लोपो भवति न तु कद्रूशब्दस्य।<br>कमण्डलूर्नाम मृगीविशेषः, तस्या अपत्यं कामण्डलेयः। 'चतुष्पाद्भ्यो ढञ्' इति ढञ्।<br>अकद्र्वाः इति किम् ? काद्रवेयो मन्त्रमपश्यत्। | लोपः १५६ |

| | | |
|---|---|---|
| भस्य १२६<br>तद्धिते १४४<br>लोपः १४७ | १४८. यस्येति च<br>यस्य (इवर्णान्तस्य, अवर्णान्तस्य च) भस्य लोपो भवति ईति, चकारात् तद्धिते परतः।<br>सूत्रे 'यस्य' इत्यत्र इश्च अश्च इति विग्रहे समाहारद्वन्द्वः।<br>इवर्णान्तस्य ईति - दाक्षी। प्लाक्षी।<br>दाक्षि-प्लाक्षिशब्दाभ्याम् 'इतो मनुष्यजातेः, इति ङीष्।<br>इवर्णान्तस्य तद्धिते - दुलेरपत्यं दौलेयः।<br>अवर्णान्तस्य ईति - कुमारी। गौरी। शार्ङ्गरवी।<br>अवर्णान्तस्य तद्धिते - दाक्षिः, प्लाक्षिः।<br>(वा०) औङः श्यां प्रतिषेधो वक्तव्यः।<br>काण्डे। कुड्ये। | ईति १५० |
| भस्य १२६<br>तद्धिते १४४<br>लोपः १४७<br>ईति १४८ | १४९. सूर्य-तिष्यागस्त्य-मत्स्यानां य उपधायाः<br>सूर्य-तिष्यागस्त्य-मत्स्यानाम् उपधाया यकारस्य लोपो भवति ईति, तद्धिते च।<br>भाष्यानुसारेणात्रैवं विषयव्यवस्था-<br>(वा०) मत्स्यस्य ङ्यामिति वक्तव्यम्।<br>मत्सी। गौरादित्वान् ङीष्।<br>इह न भवति - मत्स्यस्येदं मात्स्यं मांसम्। अत्र तस्येदमित्यण्।<br>(वा०) सूर्यागस्त्ययोश्छे च ङ्यां च।<br>सौर्यस्यायमिति सौरीयः। अणन्तसौर्यशब्दाद् वृद्धाच्छः। सूर्येण एकदिक् इति सौरी बलाका 'तेनैकदिक्' इत्यनेन अणि कृते निष्पन्नात् सौर्यशब्दादण्णन्तत्वाङीप्।<br>अगस्त्यस्यापत्यं पुमान् इति आगस्त्यः,तस्यायम् इत्यर्थे छप्रत्यये आगस्तीयः। स्त्रियां ङीपि तु आगस्ती।<br>(वा०) तिष्यपुष्ययोर्नक्षत्राणि।<br>तिष्यपुष्ययोर्यकारस्य नक्षत्रसम्बन्ध्यणि परतो लोपो भवतीति वार्तिकार्थः।<br>तिष्येण नक्षत्रेण युक्तः कालः तैषः कालः। पुष्येण नक्षत्रेण युक्तः कालः पौषः कालः। | यः १५२<br>उपध्यायाः १५० |

| | | |
|---|---|---|
| भस्य १२६<br>लोपः १४७<br>ईति १४८<br>यः १४६<br>उपधायाः १४६ | १५०. हलस्तद्धितस्य<br>हलः (उत्तरस्य) उपधाया तद्धितस्य यकारस्य लोपो भवति ईति।<br>गर्गस्यापत्यं स्त्री गार्गी।<br>'गर्गादिभ्यो यञ्' इति यञ्, 'यञश्च' इति ङीप्। | हलः १५२ |
| हलः १५०<br>यलोपः १४७.१४६ | १५१. आपत्यस्य च तद्धितेऽनाति<br>हलः उत्तरस्य आपत्यस्य यकारस्य लोपो भवति अनाति (अनाकारादौ) तद्धिते।<br>गर्गाणां समूहः गार्गकम्।<br>गार्ग्यशब्दाद् 'गोत्रोक्षोष्टोरभ्र०' इति सूत्रेण वुञ्प्रत्ययः।<br>अनातीति किम् ? गार्ग्यायणः। 'यञिञोश्च' इति सूत्रेण फक् प्रत्ययः, तस्य आयन् इत्यादेशः। | आपत्यस्य १५२<br>तद्धितेऽनाति१५२ |
| हलः १५०<br>यलोपः १४७.१४६<br>आपत्यस्य १५१ | १५२. क्य-च्व्योश्च<br>क्य-च्व्योश्च हलः (उत्तरस्य) आपत्यस्य यकारस्य लोपो भवति।<br>'क्य' इति क्यच्-क्यङोः सामान्येन ग्रहणम्।<br>क्यचि- गार्ग्यमात्मन इच्छति गार्गीयति।<br>क्यङि- गार्ग्य इवाचरति गार्गायते।<br>'कर्तुः क्यङ् सलोपश्च' इति क्यङ्, यलोपः, 'गार्ग य' इत्यवस्थायां 'अकृत्सार्वधातुकयोः' इति दीर्घः, धातुकार्ये गार्गायते इति रूपम्।<br>च्वौ- आगार्ग्यो गार्ग्यो भूतः गार्गीभूतः।<br>अभूततद्भावे च्विः, 'अस्य च्वौ' इति सूत्रेण अकारस्य ईकारादेशः। | |
| भस्य १२६ | १५३. बिल्वकादिभ्यश्छस्य लुक्<br>बिल्वकादिभ्यः (उत्तरस्य) छस्य लुग्भवति तद्धिते।<br>बिल्वा यस्यां सन्ति सा बिल्वकीया, बिल्वकीयायां भवाः बैल्वकाः।<br>बिल्वशब्दाद् 'नडादीनां कुक् च' इति सूत्रेण छप्रत्ययः, कुगागमश्च। ततः 'प्राग्दीव्यतोऽण्' इत्यण्। | |
| लोपः १४७ | १५४. तुरिष्ठेमेयस्सु<br>इष्ठन्, इमनिच्, ईयसुन् - इत्येतेषु प्रत्ययेषु परतः तुः (तृशब्दस्य) लोपो भवति।<br>आसुतिं करिष्ठः। दोहीयसी धेनुः।<br>इमनिज्ग्रहणमुत्तरार्थम्। | इष्ठेमेयस्सु १६३ |

| | | |
|---|---|---|
| भस्य १२६<br>लोपः १४७<br>इष्ठेमेयस्सु १५४ | १५५. टेः<br>भस्य टेर्लोपो भवति इष्ठेमेयस्सु।<br>पटु- पटिष्ठः। पटिमा। पटीयान्।<br>(वा०) णाविष्ठवत्प्रातिपदिकस्य कार्यं भवतीति वक्तव्यम्।<br>किं प्रयोजनम्? पुंवद्भाव-रभाव-टिलोप-यणादिपरार्थम्।<br>पुवंद्भावः - एनीमाचष्टे एतयति।<br>'तसिलादिष्वाकृत्वसुचः' इति इष्ठनि पुंवद्भावः।<br>रभावः - पृथुमाचष्टे प्रथयति। मृदुमाचष्टे म्रदयति।<br>'र ऋतो हलादेः' इति सूत्रेण ऋकारस्य रभावः।<br>टिलोपः - पटुमाचष्टे पटयति। लघुमाचष्टे लघयति।<br>यणादिपरम् - स्थूलमाचष्टे स्थवयति।<br>'स्थूलदूर' इत्यादिसूत्रेण 'ल' इत्यस्य लोपः, ऊकारस्य गुणश्च।<br>इष्ठेमेयस्सु 'प्रियादीनां 'प्र' इत्यादय आदेशा अपीष्यन्ते।<br>प्रियमाचष्टे प्रापयति। प्रियशब्दस्य णिचि 'प्र' इत्यादेशे कृते 'प्र इ' इत्यवस्थायाम् 'अचो ञ्णिति' इति सूत्रेण अकारस्य वृद्धौ कृतायां 'अर्तिह्री' इत्यादिना पुगागमः। | |

| | | |
|---|---|---|
| लोपः १४७<br>इष्ठेमेयस्सु १५४ | **१५६. स्थूल-दूर-युव-ह्रस्व-क्षिप्र-क्षुद्राणां यणादिपरं पूर्वस्य च गुणः**<br>स्थूल-दूर-युव-ह्रस्व-क्षिप्र-क्षुद्राणां परं यणादि (शब्दस्वरूपम्) लुप्यते इष्ठेमेयस्सु, पूर्वस्य च गुणो भवति।<br>'यणादि' इत्यत्र यण् आदिर्यस्य शब्दस्वरूपस्य इति विग्रहे बहुव्रीहिः।<br>स्थूल - स्थविष्ठः। स्थवीयान्।<br>दूर - दविष्ठः। दवीयान्।<br>युव - यविष्ठः। यवीयान्।<br>ह्रस्व - ह्रसिष्ठः। ह्रसीयान्। ह्रसिमा।<br>क्षिप्र - क्षेपिष्ठः। क्षेपीयान्। क्षेपिमा।<br>क्षुद्र - क्षोदिष्ठः। क्षोदीयान्। क्षोदिमा।<br>ह्रस्वादयः पृथ्वादिषु पठ्यन्ते इति एतेभ्यः 'पृथ्वादिभ्यः इमनिज्वा' इति सूत्रेण इमनिच् प्रत्ययोऽपि। अन्येभ्यस्तु इमनिज् न विहित इति इमनिचि तेषां नोदाहरणं प्रदर्शितम्। | |
| इस्सु १५४ | **१५७. प्रिय-स्थिर-स्फिरोरु-बहुल-गुरु-वृद्ध-तृप्र-दीर्घ-वृन्दारकाणां प्रस्थ-स्फवर्बंहि-गर्वर्षि-त्रब्-द्राघि-वृन्दाः**<br>प्रिय, स्थिर, स्फिर, उरु, बहुल, गुरु, वृद्ध, तृप्र, दीर्घ, वृन्दारक- इत्येतेषां प्र, स्थ, स्फ, वर्, बंहि, गर्, वर्षि, त्रप्, द्राघि, वृन्द- इत्येते आदेशा भवति इष्ठेमेयस्सु।<br>प्रिय- प्रेयान्, प्रेष्ठः, प्रेमा।<br>स्थिर- स्थेष्ठः, स्थेयान्।<br>स्फिर- स्फेष्ठः, स्फेयान्।<br>उरु- वरिष्ठः, वरीयान्, वरिमा।<br>बहुल- बंहिष्ठः, बंहीयान्, बंहिमा।<br>गुरु- गरिष्ठः, गरीयान्, गरिमा।<br>वृद्ध- वर्षिष्ठः, वर्षीयान्।<br>तृप्र - त्रपिष्ठः, त्रपीयान्।<br>दीर्घ- द्राघिष्ठः, द्राघीयान्, द्राघिमा।<br>वृन्दारक- वृन्दिष्ठः,वृन्दीयान्।<br>प्रियोरुगुरुबहुलदीर्घशब्दाः पृथ्वादिषु पठ्यन्ते इति एभ्यः इमनिच्प्रत्ययोऽपि। | |

| | | |
|---|---|---|
| इष्ठेमेयसाम् १५४ | १५८. बहोर्लोपो भू च बहोः<br>बहोः (परेषाम्) इष्ठेमेयसां लोपो भवति,बहोः भू इत्यादेशश्च भवति।<br>भूयान्। भूमा।<br>लोपश्चात्र आदेः परस्य भवति। | बहोः भू<br>बहोः १५९ |
| बहोः भू १५८ | १५९. इष्ठस्य यिट् च<br>बहोः (उत्तरस्य) इष्ठस्य यिट् (आगमः) भवति, भू च बहोर्भवति।<br>भूयिष्ठः। | |
| | १६०. ज्यादादीयसः<br>ज्यात् (उत्तरस्य) ईयसः आद् भवति। ज्यायान्।<br>अत्रापि परस्य आदेः भवति। | |
| इष्ठेमेयसाम् १५४ | १६१. र ऋतो हलादेर्लघोः<br>हलादेर्भस्य लघोः ऋतो रः भवति इष्ठेमेयस्सु।<br>पृथु – प्रथिष्ठः, प्रथीयान्, प्रथिमा।<br>मृदु – म्रदिष्ठः, म्रदीयान्, म्रदिमा।<br>अत्र परिगणनम्<br>पृथुं, मृदुं भृशं चैव कृशं च दृढमेव च।<br>परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत्।।<br>तेन कृतमाचष्टे इति कृतयति इत्यत्र णाविष्ठवद्भावे ऋकारस्य रभावो न भवति। | र ऋतः १६२ |
| र १६१ ऋतः १६१<br>इष्ठेमेयसाम् १५४ | १६२. विभाषर्जोश्छन्दसि<br>ऋजोः (ऋजुशब्दस्य) ऋतो रः विभाषा भवति इष्ठेमेयस्सु छन्दसि।<br>रजिष्ठमनु नेषि पन्थानम्। त्वमृजिष्ठः। | |
| भस्य १२९<br>इष्ठेमेयस्सु १५४ | १६३. प्रकृत्यैकाच्<br>एकाच् प्रकृत्या भवति इष्ठेमेयस्सु।<br>श्रेष्ठः। श्रेयान्<br>'प्रशस्यस्य श्रः' इति सूत्रेण प्रशस्यस्य 'श्र' इत्यादेशः। | प्रकृत्या १७० |
| प्रकृत्या १६३ | १६४. इनण्यनपत्ये<br>इन् प्रकृत्या भवति अनपत्येऽणि।<br>स्रग्विण इदम् स्राग्विणम्। | इन् १६६ |

| | | |
|---|---|---|
| इन् १६४<br>प्रकृत्या १६३<br>अणि १६४ | १६५. गाथि-विदथि-केशि-गणि-पणिनश्च<br>गाथिन्, विदथिन्, केशिन्, गणिन्, पणिन् -<br>इत्येते चाणि प्रकृत्या भवन्ति।<br>अपत्यार्थोऽयमारम्भः।<br>गाथिनः। वैदथिनः। कैशिनः। गाणिनः। पाणिनः।<br>सर्वत्रापत्यार्थे 'प्राग्दीव्यतोऽण्' इत्यण्। | |
| इन् १६४<br>प्रकृत्या १६३<br>अणि १६४ | १६६. संयोगादिश्च<br>संयोगादिश्च इन् प्रकृत्या भवति अणि।<br>अयमप्यपत्यार्थ आरम्भः।<br>शङ्खिनोऽपत्यं शाङ्खिनः।<br>मद्रिणोऽपत्यं माद्रिणः। | |
| प्रकृत्या १६३<br>अणि १६४ | १६७. अन्<br>अन् प्रकृत्या भवति अणि।<br>साम्नः अयं सामनः।<br>सुत्वनोऽपत्यं पुमान् सौत्वनः। | अन् १७० |
| प्रकृत्या १६३<br>अन् १६७ | १६८. ये चाऽभावकर्मणोः<br>अभावकर्मणोः (अर्थयोः) ये (यकारादौ) तद्धिते च<br>अन् प्रकृत्या भवति।<br>सामसु साधु सामन्यः।<br>अभावकर्मणोरिति किम् ? राज्ञो भावः, कर्म वा<br>राज्यम्। पुरोहितत्वाद् यक् प्रत्ययः। | |
| प्रकृत्या १६३ | १६९. आत्माध्वानौ खे<br>आत्माध्वानौ खे प्रकृत्या भवतः।<br>आत्मने हितः आत्मनीनः।<br>अध्वानमलङ्गामी अध्वनीनः। | |
| प्रकृत्या १६३<br>अन् १६७<br>अणि १६४ | १७०. न मपूर्वोऽपत्येऽवर्मणः<br>अवर्मणः मपूर्वोऽन् प्रकृत्या न भवति<br>अपत्यार्थेऽणि परतः।<br>सुषाम्नोऽपत्यं सौषामः।<br>चन्द्रसाम्नोऽपत्यं चान्द्रसामः।<br>अवर्मण इति किम्? चक्रवर्मणोऽपत्यं चाक्रवर्मणः। | अपत्ये १७१ |

| | | |
|---|---|---|
| अणि १६४<br>अपत्ये १७० | १७१. ब्राह्मोऽजातौ<br>अत्र योगद्वयम्। 'ब्राह्मः' इत्येको योगः, 'अजातौ' इत्य परो योगः।<br>प्रथमयोगेऽपत्ये इत्यस्यासम्बन्धाद् अस्य योगस्यार्थो भवति - अण् प्रत्यये परे 'ब्राह्म' इत्येतद् रूपं निपात्यते। अत्र निपातनात् टिलोपो भवति, अपत्येऽनपत्ये चाणि।<br>अपत्येऽणि - ब्राह्मो नारदः।<br>अनपत्येऽणि - ब्राह्मो गर्भः। ब्राह्ममस्त्रम्। ब्राह्मं हविः। ब्राह्मी ओषधिः।<br>एवं हि ब्रह्मणोऽपत्यं ब्राह्मणो जातिरिति न सिद्ध्येदतः 'अजातौ' इत्यपरो योगः। योगेऽस्मिन् अपत्ये इत्यस्यापि सम्बन्धाद् अर्थो भवति अपत्येऽणि 'ब्राह्म' इति रूपं जातौ तु न भवति इति। तेन जातौ वाच्यायाम् अपत्येऽणि 'ब्राह्म' इति रूपं न भवति अपि तु 'अन्' इति सूत्रेण प्रकृतिभावे 'ब्राह्मणः' इति रूपं भवति। | |
| अणि १६४ | १७२. कार्मस्ताच्छील्ये<br>ताच्छील्ये 'कार्मः' इति निपात्यते।<br>कर्म शीलमस्येति कार्मः।<br>तच्छीलार्थे 'छत्रादिभ्यो णः' इति सूत्रेण णप्रत्ययः।<br>निपातनाट्टिलोपः। | |
| अणि १६४ | १७३. औक्षमनपत्ये<br>'औक्षम्' इति अनपत्येऽणि निपात्यते।<br>उक्ष्ण इदम् औक्षं पदम्।<br>अनपत्ये इति किम् ? उक्ष्णोऽपत्यम् औक्ष्णः।<br>'षपूर्व-हन्-धृतराज्ञामणि' इति सूत्रेण अनोऽकारस्य लोपः। | |

<table>
<tr><td></td><td>१७४. दाण्डिनायन-हास्तिनायनाथर्वणिक-<br>जैह्माशिनेय-वासिनायनि-भ्रौणहत्य-<br>धैवत्य-<br>सारवैक्ष्वाक-मैत्रेय-हिरण्मयानि<br>दाण्डिनायन, हास्तिनायन, आथर्वणिक, जैह्माशिनेय, वासिनायनि, भ्रौणहत्य, धैवत्य, सारव, ऐक्ष्वाक, मैत्रेय, हिरण्मय- इत्येतानि निपात्यन्ते।<br>दण्डिनोऽपत्यं दण्डिनायनः।<br>हस्तिनोऽपत्यं हास्तिनायनः।<br>अथर्वाणमधीते आथर्वणिकः।<br>जिह्माशिनोऽपत्यं जैह्माशिनेयः।<br>वासिनोऽपत्यं वासिनायनिः।<br>भ्रूणघ्नो भावः भ्रौणहत्यम्।<br>धीव्नो भावः धैवत्यम्।<br>सरय्वां भवम् सारवम्।<br>इक्ष्वाकोरपत्यं ऐक्ष्वाकः।<br>मित्रयोरपत्यं मैत्रेयः।<br>हिरण्यस्य विकारः हिरण्मयः।</td><td></td></tr>
<tr><td></td><td>१७५. ऋत्व्य-वास्त्व्य-वास्त्व-माध्वी-<br>हिरण्ययानिच्छन्दसि<br>ऋत्व्य, वास्त्व्य, वास्त्व, माध्वी, हिरण्यय - इत्येतानि छन्दसि निपात्यन्ते।<br>ऋतौ भवम् ऋत्व्यम्।<br>वास्तौ भवम् वास्त्व्यम्।<br>वस्तुनि भवः वास्त्वः।<br>मधुनः इमाः माध्वीः।<br>हिरण्यस्य विकारः हिरण्ययम्।</td><td></td></tr>
</table>

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां षष्ठाध्यायस्य चतुर्थः पादः ।।

।। समाप्तश्चायं षष्ठाध्यायः।।

।। श्रीः ।।

## ।। अथ सप्तमाध्यायस्य प्रथमः पादः ।।

| | | |
|---|---|---|
| | १. युवोरनाकौ<br>यु, वु- इत्यनयोःयथासंख्यम् अन,अक-इत्येतौ आदेशौ भवतः।<br>'युवोः' इत्यत्र युश्च वुश्च इति विग्रहे समाहारद्वन्द्वः, सौत्रं पुंस्त्वम्।<br>नन्द्यादिभ्यो ल्युः - नन्दनः।<br>ण्वुल्तृचौ - कारकः।<br>यु, वु इति शब्दाभ्यामुत्सृष्टलकारादि विशेषणयोरनुनासिकयणोः प्रत्यययोर्ग्रहणम्। तेन युतः, युतवान् इत्यादौ 'यु मिश्रणे' इति धातोः,'ऊर्णायुः' इत्यादौ 'ऊर्णाया युस्' इत्यादिसूत्रैः विहितानां युस् इत्यादीनां च अनादेशो न भवति। | |
| | २. आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्<br>प्रत्ययस्य आदीनां फ, ढ, ख, छ, घ -इत्येतेषां स्थाने यथासंख्यम् आयन्, एय्, ईन्, ईय्, इय्- इत्येते आदेशाः भवन्ति।<br>फकारादिष्वकार उच्चारणार्थः।<br>नडादिभ्यः फक् - नाडायनः।<br>स्त्रीभ्यो ढक्- सौपर्णेयः।<br>कुलात् खः - आढ्यकुलीनः।<br>वृद्धाच्छः - गार्गीयः।<br>क्षत्राद् घः - क्षत्रियः। | प्रत्ययस्य ५ |
| प्रत्ययस्य २ | ३. झोऽन्तः<br>प्रत्ययस्य (प्रत्ययावयवस्य) झस्यऽन्तादेशो भवति।<br>तकाराकार उच्चारणार्थः।<br>कुर्वन्ति। एधन्ते। | झः ७ |
| प्रत्ययस्य २<br>झस्य ३ | ४. अदभ्यस्तात्<br>अभ्यस्तात् (उत्तरस्य) झस्य अद् इत्यादेशो भवति।<br>ददति। ददतु। | अत् ७ |

| | | |
|---|---|---|
| प्रत्ययस्य २<br>झस्य ३ | ५. आत्मनेपदेष्वनतः<br>आत्मनेपदेष्वनतः (अकारभिन्नाद् उत्तरस्य) झस्य अद् इत्यादेशो भवति।<br>चिन्वते। चिन्वताम्। | |
| झस्य ३<br>अतः ४ | ६. शीङो रुट्<br>शीङः (उत्तरस्य) झादेशस्य अतः रुट् इत्यागमो भवति।<br>शेरते। शेरताम्। | रुट् ८ |
| झस्य ३<br>अतः ४<br>रुट् ६ | ७. वेत्तेर्विभाषा<br>वेत्तेः (विद ज्ञाने इति धातोः उत्तरस्य) झादेशस्य अतः रुट् इत्यागमो विभाषा भवति।<br>संविद्रते, संविदते। | |
| अतः४<br>रुट् ६ | ८. बहुलं छन्दसि<br>छन्दसि झादेशस्य अतः रुट् इत्यागमो बहुलं भवति।<br>गन्धर्वा अप्सरसो अदुह्र।<br>दुहेर्लङि झकारस्यादादेशे कृते रुट्, 'लोपस्त अनात्मनेपदेषु' इति तकारस्य लोपः।<br>न च भवति - अदुहत।<br>अन्यस्यापि भवति - अदृश्रम्। दृशेर्लुङि, मिपि अमादेशे, रुट्। | |
| अङ्गस्य ६.४.१ | ९. अतो भिस ऐस्<br>अतो (अदन्ताद् अङ्गात् परस्य) भिसः ऐस् इत्यादेशो भवति।<br>वृक्षैः। प्लक्षैः। | अतः १७ भिस ऐस् ११ |
| अतः ९<br>भिसः ७<br>ऐस् ९<br>अङ्गस्य ६.४.१ | १०. बहुलं छन्दसि<br>अतो (अदन्ताद् अङ्गात् परस्य) भिसः ऐस् छन्दसि बहुलं भवति।<br>बहुलग्रहणादनतोऽपि भवति - नद्यैः, अतोऽपि न भवति - देवेभिः सर्वेभिः प्रोक्तमिति। | |
| भिसः ९<br>ऐस् ९<br>अङ्गस्य ६.४.१<br>अतः ९ | ११. नेदमदसोरकोः<br>अकोः (ककाररहितयोः) इदमदसोर्भिसः ऐस् न भवति।<br>एभिः। अमीभिः।<br>अकोरिति किम् ? इमकैः। अमुकैः। | |
| अङ्गस्य ६.४.१ | १२. टा-ङसि-ङसामिनात्स्याः<br>अतः(अदन्ताद् अङ्गात् परस्य) टाङसिङसाम् यथासंख्यम् इन, आत्, स्य -इत्येते आदेशाः भवन्ति।<br>वृक्षेण। वृक्षात्। वृक्षस्य। | |

| | | |
|---|---|---|
| अतः ९<br>अङ्गस्य ६.४.१ | १३. ङेर्यः<br>अतः (अदन्ताद् अङ्गात् परस्य) ङेः 'य' इत्यादेशो भवति।<br>वृक्षाय। | ङेः १४ |
| अतः ९<br>ङेः १३<br>अङ्गस्य ६.४.१ | १४. सर्वनाम्नः स्मै<br>अतः (अदन्ताद् अङ्गात् परस्य) सर्वनाम्नो (विहितस्य) ङेः 'स्मै' इत्यादेशो भवति।<br>सर्वस्मै। तस्मै। | सर्वनाम्नः १७ |
| अतः ९<br>सर्वनाम्नः १४<br>अङ्गस्य ६.४.१ | १५. ङसि-ङ्योः स्मात्स्मिनौ<br>अतः (अदन्ताद् अङ्गात् परयोः) सर्वनाम्नो (विहितयोः) ङसिङ्योः स्मात्,स्मिन्-इत्येतौ आदेशौ भवतः।<br>सर्वस्मात्, तस्मात्। सर्वस्मिन्, तस्मिन्। | सम्पूर्णसूत्रम् १६ |
| सर्वनाम्नः १४<br>ङसि-ङ्योः १५<br>स्मात्स्मिनौ १५ | १६. पूर्वादिभ्यो नवभ्यो वा<br>पूर्वादिभ्यो नवभ्यो ङसिङ्योः स्मात्-स्मिनौ वा भवतः।<br>पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे। | |
| अतः९<br>सर्वनाम्नः१४<br>अङ्गस्य ६.४.१ | १७. जसः शी<br>अतः (अदन्ताद् अङ्गात् परस्य) सर्वनाम्नो (विहितस्य) जसः शी इत्यादेशो भवति।<br>सर्वे। ते।<br>दीर्घोच्चारणम् उत्तरार्थम् - त्रपुणी। | शी १९ |
| शी १७<br>अङ्गस्य ६.४.१ | १८. औङ आपः<br>आपः (आबन्ताद् अङ्गाद् उत्तरस्य) औङः शी इत्यादेशो भवति।<br>औङ् इति औ-औट्-इत्यनयोः प्राचां संज्ञा।<br>खट्वे तिष्ठतः। खट्वे पश्य। | औङः १९ |
| औङः १८<br>शी १७ | १९. नपुंसकाच्च<br>नपुंसकादङ्गात्परस्य औङः शी इत्यादेशो भवति।<br>कुण्डे तिष्ठतः। कुण्डे पश्य।<br>त्रपुणी तिष्ठतः। त्रपुणी पश्य। | नपुंसकात् २० |
| नपुंसकात् १९ | २०. जश्शसोः शिः<br>नपुंसकादङ्गाात्परयोः जश्शसोः शि इत्यादेशो भवति।<br>कुण्डानि तिष्ठन्ति। कुण्डानि पश्य। दधीनि। मधूनि। | जश्शसोः २२ |

| | | |
|---|---|---|
| जश्शसोः २० | २१. अष्टाभ्य औश्<br>अष्टाभ्यः परयोः जश्शसोः औश् इत्यादेशो भवति।<br>अष्टौ तिष्ठन्ति। अष्टौ पश्य।<br>'अष्टाभ्यः' इति कृतात्वनिर्देशाद् यत्र आत्वं न तत्र औश् इत्यादेशोऽपि न भवति।<br>अष्ट तिष्ठन्ति। अष्ट पश्य। | |
| जश्शसोः २० | २२. षड्भ्यो लुक्<br>षट्संज्ञकेभ्यः परयोः जश्शसोर्लुग् भवति।<br>षट् तिष्ठन्ति। षट् पश्य। पञ्च। सप्त। अष्ट। नव। दश।<br>'ष्णान्ता षट्' इति सूत्रेण षट्संज्ञा। | लुक् २३ |
| लुक् २२<br>अङ्गस्य ६.४.१ | २३. स्वमोर्नपुंसकात्<br>स्वमोर्नपुंसकाल्लुग् भवति।<br>दधि तिष्ठति। दधि पश्य। | स्वमोः २६<br>नपुंसकात् २६ |
| स्वमोः २३<br>नपुंसकात् २३ | २४. अतोऽम्<br>अतः (अदन्ताद्) नपुंसकादङ्गात् परयोः स्वमोरम् इत्यादेशो भवति।<br>पूर्वेण प्राप्तस्य लुकोऽपवादोऽयम्।<br>कुण्डं तिष्ठति। कुण्डं पश्य। | |
| स्वमोः २३ | २५. अद्ड्डतरादिभ्यः पञ्चभ्यः<br>डतरादिभ्यः पञ्चभ्यः नपुंसकेभ्यः स्वमोः अद्ड् इत्यादेशो भवति।<br>सर्वादिगणे पठिताः - डतर, डतम, अन्य, अन्यतर, इतर- इत्येते पञ्च डतरादयः।<br>कतरत्तिष्ठति। कतरत् पश्य। | अद्ड् २६ |
| स्वमोः२३<br>अद्ड्२६ | २६. नेतराच्छन्दसि<br>इतराच्छन्दसि स्वमोः अद्ड् इत्यादेशो न भवति।<br>मृतमितरमाण्डमवापद्यत।<br>वार्त्रघ्नमितरम्। | |
| | २७. युष्मदस्मद्भ्यां ङसोऽश्<br>युष्मदस्मद्भ्यां परस्य ङसः अश् इत्यादेशो भवति।<br>तव स्वम्। मम स्वम्। | युष्मदस्मद्भ्याम् ३३ |

| | | |
|---|---|---|
| युष्मदस्मद्भ्याम् २७ | २८. ङेप्रथमयोरम्<br>युष्मदस्मद्भ्यां परस्य 'ङे' इत्येतस्य, प्रथमयोश्च (प्रथमाद्वितीययोश्च) अम् इत्यादेशो भवति।<br>तुभ्यं दीयते। मह्यं दीयते।<br>त्वम्, युवाम्, यूयम्, त्वाम्, युवाम्। अहम्, आवाम्, वयम्, माम्, आवाम्। | |
| युष्मदस्मद्भ्याम् २७ | २९. शसो न<br>युष्मदस्मद्भ्याम् उत्तरस्य शसो 'न्' इत्यादेशो भवति।<br>'न' इति लुप्तप्रथमाकं पदम्, तत्र अकार उच्चारणार्थः।<br>'आदेः परस्य' इति सूत्रेणायं नकारादेशः परस्यादेर्भवति।<br>युष्मान्। अस्मान्। | |
| युष्मदस्मद्भ्याम् २७ | ३०. भ्यसो भ्यम्<br>युष्मदस्मद्भ्याम् (उत्तरस्य) भ्यसो भ्यम् इत्यादेशो भवति।<br>युष्मभ्यं दीयते। अस्मभ्यं दीयते। | भ्यसः ३१ |
| युष्मदस्मद्भ्याम् २७<br>भ्यसः ३० | ३१. पञ्चम्या अत्<br>युष्मदस्मद्भ्याम् (उत्तरस्य) पञ्चम्याः भ्यसः अद् इत्यादेशो भवति।<br>युष्मद् आगतम्। अस्मद् आगतम्। | पञ्चम्या अत् ३२ |
| पञ्चम्या ३१<br>अत् ३१<br>युष्मदस्मद्भ्याम् २७ | ३२. एकवचनस्य च<br>युष्मदस्मद्भ्याम् (उत्तरस्य) पञ्चम्या एकवचनस्य अद् इत्यादेशो भवति।<br>त्वद् आगतम्। मद् आगतम्। | |
| युष्मदस्मद्भ्याम् २७ | ३३. साम आकम्<br>युष्मदस्मद्भ्यां परस्य सामः आकम् इत्यादेशो भवति।<br>भाविनः सुटो निवृत्त्यर्थं 'सामः' इति ससुट्कनिर्देशः।<br>युष्माकम्। अस्माकम्। | |
| अङ्गस्य ६.४.१ | ३४. आत औ णलः<br>आदन्तादङ्गात् परस्य णलः औ इत्यादेशो भवति।<br>पपौ। तस्थौ। जग्लौ। मम्लौ। | |
| | ३५. तुह्योस्तातङाशिष्यन्यतरस्याम्<br>तुह्योस्तातङाशिष्यन्यतरस्यां भवति।<br>तु- जीवताद्, जीवतु वा भवान्।<br>हि- जीवताद्, जीव वा त्वम्।<br>ङित्करणं गुणवृद्धिप्रतिषेधार्थमिति सर्वादेशस्तातङ् भवति। | अन्यतरस्याम् ३६ |

| | | |
|---|---|---|
| अन्यतरस्याम् ३५ | ३६. विदेः शतुर्वसुः<br>विदेः (विद ज्ञाने इत्येतस्मादुत्तरस्य) शतुः (शतृप्रत्ययस्य) वसुः इत्यादेशः अन्यतरस्यां भवति।<br>विद्वान्, विद्वांसौ, विद्वांसः।<br>विदन्, विदन्तौ, विदन्तः। | |
| | ३७. समासेऽनञ्पूर्वे क्त्वो ल्यप्<br>अनञ्पूर्वे समासे क्त्वो ल्यप् इत्यादेशो भवति।<br>प्रकृत्य। प्रहृत्य। | समासे<br>अनञ्पूर्वे क्त्वः<br>ल्यप् ३८ |
| समासे ३७<br>अनञ्पूर्वे ३७<br>क्त्वः ३७<br>ल्यप् ३७ | ३८. क्त्वापि छन्दसि<br>छन्दसि अनञ्पूर्वे समासे क्त्वापि दृश्यते, अपिशब्दात् ल्यबादेशोऽपि।<br>कृष्णं वासो यजमानं परिधापयित्वा। उद्धृत्य जुहोति।<br>'वाच्छन्दसि' इति नोक्तम्, सर्वोपाधिव्यभिचारार्थम्।<br>तेनासमासेऽपि ल्यब्भवति-अर्च्य तान् देवान्। | छन्दसि ५०<br>अपि४१ |
| छन्दसि ३८ | ३९. सुपां सु-लुक्-पूर्वसवर्णाच्छे-या-डा-ड्या-याजालः<br>छन्दसि विषये सुपां स्थाने सु, लुक्, पूर्वसवर्ण, आ, आत्, शे, या डा, ड्या, याच्, आल् - इत्येते आदेशा भवन्ति।<br>सु - अनृक्षरा ऋजवः सन्तु पन्थाः। पन्थान इति प्राप्ते।<br>लुक् - आर्द्रे चर्मन्। चर्मणीति प्राप्ते।<br>पूर्वसवर्णः - धीती, मती। धीत्या, मत्या इति प्राप्ते।<br>आ - द्वा यन्तारा। द्वौ यन्तारौ इति प्राप्ते।<br>आत् - न ताद् ब्राह्मणाद् निन्दामि। तान् ब्राह्मणान् इति प्राप्ते।<br>शे - न युष्मे बाजबन्धवः। अस्मे इन्द्राबृहस्पती। युष्मासु, अस्मभ्यम् इति प्राप्ते।<br>या - उरुया, धृष्णुया। उरुणा, धृष्णुनेति प्राप्ते।<br>ड्या - ता अनुष्ट्योच्यावयतात्। अनुष्टुभेति प्राप्ते तृतीयैकवचनस्य ड्या इत्यादेशः, डित्त्वाट्टिलोपः।<br>वैयाकरणसिद्धान्तकौमुद्यनुसारेण अनुष्ठाशब्दात्तृतीयैकवचने अनुष्ट्या इति रूपम्। अनुष्टुभेति प्राप्ते इति काशिकानुसारेण।<br>याच् - साधुया। साधु इति सोर्लुकि प्राप्ते।<br>आल्- वसन्ता यजेत्। वसन्ते इति प्राप्ते। | |

| | | |
|---|---|---|
| छन्दसि ३८ | ४०. अमो मश्<br>छन्दसि अमो मश् इत्यादेशो भवति।<br>अम् इति मिबादेशो गृह्यते।<br>वधीं शत्रुम्।<br>लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडागमाभावः। | |
| छन्दसि ३८<br>अपि३८ | ४१. लोपस्त आत्मनेपदेषु<br>छन्दसि आत्मनेपदेषु तः (तकारस्य) लोपो भवति।<br>देवा अदुह्र। अदुहत इति प्राप्ते।<br>अत्र 'अपि' इत्यस्यानुवृत्त्या क्वचिन्नापि भवति - तत्र<br>आत्मानमनृतं कुरुते। | |
| छन्दसि ३८ | ४२. ध्वमो ध्वात्<br>छन्दसि ध्वमो ध्वात् इत्यादेशो भवति।<br>अन्तरेवोष्माणं वारयध्वात्। वारयध्वमिति प्राप्ते। | |
| छन्दसि ३८ | ४३. यजध्वैनमिति च<br>छन्दसि 'यजध्वम् एनम्' इत्यस्य स्थाने 'यजध्वैनम्' इति<br>च प्रयुज्यते।<br>निपातनाद् मकारस्य लोपः।<br>यजध्वैनं प्रियमेधाः।<br>यजध्वमेनमिति प्राप्ते। | |
| छन्दसि ३८ | ४४. तस्य तात्<br>छन्दसि तस्य तात् इत्यादेशो भवति।<br>तस्य = लोण्मध्यमपुरुषबहुवचनस्य 'त' इति<br>शब्दस्येत्यर्थः।<br>गात्रं गात्रमस्यानूनं कृणुतात्।<br>'कृणुत' इति प्राप्ते। | तस्य ४५ |
| छन्दसि ३८<br>तस्य४४ | ४५. तप्-तनप्-तन-थनाश्च<br>छन्दसि तस्य (लोण्मध्यमपुरुषबहुवचनस्य) तप्, तनप्,<br>तन, थन - इत्येते आदेशा भवन्ति।<br>तप् - शृणोत ग्रावाणः। शृणुतेति प्राप्ते।<br>तनप् - दधातन द्रविणं चित्रमस्मे। धत्तेति प्राप्ते।<br>तन - जुजुष्टन। जुषतेति प्राप्ते।<br>थन - यदिष्ठन। यदिच्छतेति प्राप्ते। | |
| छन्दसि ३८ | ४६. इदन्तो मसि<br>छन्दसि मस् (उत्तमपुरुषस्य बहुवचनम्) इदन्तः<br>(इकारान्तः) प्रयुज्यते।<br>'मसि' इत्यविभक्तिको निर्देशः, तत्रेकार उच्चारणार्थः।<br>पुनस्त्वोद्दीपयामसि। दीपयामः इति प्राप्ते। | |

| | | |
|---|---|---|
| छन्दसि ३८ | ४७. क्त्वो यक्<br>छन्दसि क्त्वो यक् (आगमः) भवति।<br>दत्त्वाय सविता धियः। दत्त्वा इति प्राप्ते। | क्त्वः ४९ |
| छन्दसि ३८ | ४८. इष्ट्वीनमिति च<br>छन्दसि 'इष्ट्वीनम्' इति च प्रयुज्यते।<br>इष्ट्वीनम्।<br>यजेः क्त्वाप्रत्यये 'इष्ट्वा' इत्यवस्थायामन्त्यस्य ईनमादेशो निपातनाद् भवति। इष्ट्वा देवान् इति प्राप्ते। | |
| छन्दसि ३८ | ४९. स्नात्व्यादयश्च<br>छन्दसि विषये 'स्नात्वी' इत्येवमादयः शब्दा निपात्यन्ते।<br>स्नात्वी मलादिव। स्नात्वेति प्राप्ते, आकारस्य स्थाने ईत्वन्निपात्यते।<br>पीत्वी सोमस्य वावृधे। पीत्वेति प्राप्ते।<br>सूत्रे आदिशब्दः प्रकारार्थस्तेन प्रातिपदिकगणे अर्थात् गणपाठे स्नात्वादीनां पाठाभावेऽपि 'स्नात्वी' इत्येवम्प्रकारका ये केचन शब्दा उपलभ्येरन् ते स्नात्व्यादयो वेदितव्याः। | |
| छन्दसि ३८ | ५०. आज्जसेरसुक्<br>छन्दसि आत् (अवर्णान्तादङ्गादुत्तरस्य) जसेः असुक् इत्यागमः भवति।<br>'जसेः' पूर्वाचार्यानुरोधेन निर्देशः कृतः, तेन जस्विभक्तेर्ग्रहणं भवति<br>ब्राह्मणासः पितरः सोम्यासः।<br>ब्राह्मणाः, सोम्याः इति प्राप्ते। | आत् ५२<br>आज्जसेरसुक् ५१ |

| | | |
|---|---|---|
| असुक् ५० | ५१. अश्व-क्षीर-वृष-लवणानामात्मप्रीतौ क्यचि<br>अश्व, क्षीर, लवण - इत्येतेषामङ्गानाम् आत्मप्रीतिविषये क्यचि परतोऽसुगागमो भवति।<br>(वा०) अश्व-वृषयोर्मैथुनेच्छायामिति वक्तव्यम्।<br>अश्वमिच्छति मैथुनार्थमिति अश्वस्यति वडवा।<br>वृषमिच्छति मैथुनार्थमिति वृषस्यति गौः।<br>अन्यत्र- अश्वीयति। वृषीयति।<br>(वा०) क्षीर-लवणयोर्लालसायामिति वक्तव्यम्।<br>तृष्णातिरेकः लालसा।<br>क्षीरस्यति माणवकः। लवणस्यति उष्ट्रः।<br>अन्यत्र- क्षीरीयति। लवणीयति।<br>(वा०) सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ।<br>दधिस्यति, दध्यस्यति ।<br>मधुस्यति, मध्वस्यति । | |
| आत् ५०<br>अङ्गस्य ६.४.१ | ५२. आमि सर्वनाम्नः सुट्<br>आत् (अवर्णान्तादङ्गादुत्तरे) सर्वनाम्नः (विहिते) आमि (आमः) सुट् इत्यागमो दृश्यते।<br>सर्वेषाम्। तेषाम्। | आमि ५७ |
| आमि ५२ | ५३. त्रेस्त्रयः<br>आमि (परतः) त्रेस्त्रयः इत्यादेशो भवति।<br>त्रयाणाम्। | |
| आमि ५२<br>अङ्गस्य ६.४.१ | ५४. ह्रस्व-नद्यापो नुट्<br>ह्रस्वनद्यापः (ह्रस्वान्ताद्, नद्यन्ताद्, आबन्ताच्चाङ्गाद् उत्तरस्य) आमो नुट् इत्यागमो भवति।<br>ह्रस्व - वृक्षाणाम्। अग्नीनाम्। वायूनाम्। कर्तॄणाम्।<br>नदी -कुमारीणाम्। गौरीणाम्। शार्ङ्गरवीणाम्।<br>ब्रह्मबन्धूनाम्।<br>आप् - मालानाम्। बहुराजानाम्। कारीषगन्ध्यानाम्। | नुट् ५७ |
| आमि ५२<br>नुट् ५४ | ५५. षट्-चतुर्भ्यश्च<br>षट्चतुर्भ्यः (षट्संज्ञकेभ्यः, चतुर्शब्दाच्च उत्तरस्य) आमो नुट् इत्यागमो भवति।<br>षण्णाम्। पञ्चानाम्। सप्तानाम्। अष्टानाम्। नवानाम्।<br>दशानाम्।<br>चतुर्णाम्। | |

| | | |
|---|---|---|
| आमि ५२<br>नुट् ५४ | ५६. श्री-ग्रामण्योश्छन्दसि<br>छन्दसि श्रीग्रामण्योरामो नुट् इत्यागमो भवति।<br>श्रीणामुदारो धरुणो रयीनाम्।<br>अपि तत्र सूतग्रामणीनाम्। | छन्दसि५७ |
| आमि ५२<br>नुट् ५४<br>छन्दसि५६ | ५७. गोः पादान्ते<br>छन्दसि पादान्ते (विद्यमानस्य) गोः आमो नुट् इत्यागमो भवति।<br>विद्मा हि त्वा गोपतिं शूर गोनाम्। | अन्ते५८ |
| अन्ते५७ | ५८. इदितो नुम् धातोः<br>अन्ते इत्(इकारः) इत् यस्य धातोस्तस्य नुम् इत्यागमो भवति।<br>कुडि दाहे- कुण्डिता, कुण्डितुम्।<br>धातूवस्थायामेवायं नुम् भवति, तेन कुण्डा, हुण्डा इत्यत्र 'गुरोश्च हलः' इति सूत्रेण अकारप्रत्ययो भवति। तथा हि 'धिन्वि-कृण्व्योर च' इति सूत्रे प्रत्ययविधावेव कृतनुमोः धात्वोः ग्रहणं दृश्यते।<br>अत्र 'अन्ते' इत्यस्यानुवत्त्या भिदिर् विदारणे- भेत्ता इत्यादौ नुम् न भवति। अत्र हि 'इर्' इति समुदायस्य इत्संज्ञा, न तु इकारमात्रस्येति नुम् न भवति। | नुम् ८३ |
| नुम् ५८ | ५९. शे मुचादीनाम्<br>शे परे मुचादीनां नुम् इत्यागमो भवति।<br>मृच्लृ मोक्षणे- मुञ्चति।<br>षिचु क्षरणे - सिञ्चति। | |
| नुम् ५८ | ६०. मस्जि-नशोर्झलि<br>मस्जि-नशोर्झलि नुम् भवति।<br>(वा०) मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गादिलोपार्थम्।<br>मस्जधातोः यः अन्त्यो वर्णः जकारः, ततः पूर्वं नुमम् इच्छन्ति आचार्याः, अनुषङ्गस्य = उपधाभूतस्य नकारस्य आदौ यः संयोगादिः सकारस्तस्य लोपार्थम् इति वार्तिकार्थः।<br>टुमस्जो शुद्धौ - मङ्क्ता, मङ्क्तुम्।<br>णश अदर्शने - नंष्टा, नंष्टुम्।<br>झलीति किम्? मज्जनम्। नशनम्। | |
| नुम् ५८ | ६१. रधि-जभोरचि<br>रधि-जभोरचि नुम् इत्यागमो भवति।<br>रध हिंसासंराद्ध्योः - रन्धयति। रन्धकः। रन्धनम्।<br>जभी गात्रविनामे - जम्भते। जम्भयति। जम्भकः। | अचि ६४ |

| | | |
|---|---|---|
| नुम् ५८ | ६२. नेट्यलिटि रधेः<br>रधेर्नुम्न भवति अलिटि इटि।<br>रधिता। रधितुम। रधितव्यम्।<br>अलिटि इति किम् ? ररन्धिव,ररन्धिम। | |
| अचि ६१<br>नुम् ५८ | ६३. रभेरशब्लिटोः<br>रभेर्नुम्भवति अचि, शब्लिटोस्तु रभेर्नुम् न भवति।<br>रभ राभस्ये - आरम्भयति।<br>आरम्भकः। आरम्भो वर्तते।<br>अशब्लिटोः इति किम् ? आरभते, आरेभे। | अशब्लिटोः६४ |
| अशब्लिटोः६३<br>अचि ६१<br>नुम् ५८ | ६४. लभेश्च<br>लभेश्च नुम्भवति अचि, शब्लिटोस्तु लभेर्नुम्न भवति।<br>डुलभष् प्राप्तौ - लम्भयति। लम्भकः। लम्भो वर्तते। | लभेः ६९ |
| लभेः ६४<br>नुम् ५८ | ६५. आङो यि<br>आङः (उत्तरस्य) लभेर्नुम् भवति, ये (यकारादौ प्रत्यये)।<br>आलम्भ्या गौः। | यि ६६ |
| लभेः ६४<br>नुम् ५८<br>यि ६५ | ६६. उपात्प्रशंसायाम्<br>उपाल्लभेर्नुम् भवति ये (यकारादौ प्रत्यये) प्रशंसायाम्।<br>उपलम्भ्या भवता विद्या।<br>उपलम्भ्यानि धनानि। | |
| लभेः ६४<br>नुम् ५८ | ६७. उपसर्गात् खल्घञोः<br>उपसर्गात् (उत्तृरस्य) लभेर्नुम्भवति खल्घञोः।<br>खलि - ईषत्प्रलम्भः। दुष्प्रलम्भः। सुप्रलम्भः।<br>घञि - प्रलम्भः। विप्रलम्भः। | सम्पूर्णसूत्रम्६८ |
| लभेः ६४<br>नुम् ५८<br>उपसर्गात् ६७<br>खल्घञोः ६७ | ६८. न सुदुर्भ्यां केवलाभ्याम्<br>केवलाभ्यां सुदुर्भ्याम् (उत्तरस्य) लभेर्नुम्न भवति,<br>खल्घञोः।<br>खलि - सुलभम्। दुर्लभम्।<br>घञि -सुलाभः। दुर्लाभः।<br>केवलाभ्याम् इति किम्? सुप्रलम्भः। दुष्प्रलम्भः।<br>कथं तर्हि अतिसुलभम्, अतिदुर्लभम् इति ? यदा स्वती<br>कर्मप्रवचनीयौ तदा भविष्यति। | |
| लभेः ६४<br>नुम् ५८ | ६९. विभाषा चिण्णमुलोः<br>चिण्णमुलोर्विभाषा लभेर्नुम्भवति।<br>चिणि - अलम्भि, अलाभि।<br>णमुलि - लम्भं लम्भम्, लाभं लाभम्। | |

| | | |
|---|---|---|
| नुम् ५८ | ७०. उगिदचां सर्वनामस्थानेऽधातोः<br>उगिदचां नुम्भवति सर्वनामस्थाने परे , धातोस्तु सर्वनामस्थाने परे नुम्नभवति।<br>'अच्' इत्यनेन नलोपी अञ्चतिर्गृह्यते।<br>उदितः -भवतु- भवान्, भवन्तौ, भवन्तः।<br>इयसुन्-श्रेयान्, श्रेयांसौ, श्रेयांसः।<br>शतृ- पचन्, पचन्तौ, पचन्तः।<br>अञ्चतेः - प्राङ्, प्राञ्चौ, प्राञ्चः। | सर्वनामस्थाने ७२ |
| सर्वनामस्थाने ७०<br>नुम् ५८ | ७१. युजेरसमासे<br>युजेर्नुम्भवति सर्वनामस्थाने, समासे तु युजेर्नुम्न भवति।<br>युङ्, युञ्जौ, युञ्जः।<br>असमासे इति किम् ? अश्वयुक्, अश्वयुजौ, अश्वयुजः। | |
| सर्वनामस्थाने ७०<br>नुम् ५८<br>अङ्गस्य ६.४.१ | ७२. नपुंसकस्य झलचः<br>झलचः (झलन्तस्य, अजन्तस्य च) नपुंसकस्य अङ्गस्य नुम्भवति सर्वनामस्थाने परे।<br>झलन्तस्य - पयांसि। यशांसि।<br>अजन्तस्य - कुण्डानि। दधीनि। त्रपूणि। | नपुंसकस्य ७७ |
| नपुंसकस्य ७२<br>नुम् ५८<br>अङ्गस्य ६.४.१ | ७३. इकोऽचि विभक्तौ<br>इकः (इगन्तस्य) नपुंसकस्य अङ्गस्य नुम्भवति अचि (अजादौ) विभक्तौ परतः।<br>वारिणी, वारिणे। त्रपुणी, त्रपुणे। | इकः७४<br>अचि७५<br>विभक्तौ ७५ |
| इकः ७३<br>अचि ७३<br>विभक्तौ ७३ | ७४. तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य<br>तृतीयादिषु अजादिषु विभक्तिषु परतः इगन्तं भाषितपुस्कं नपुंसकं पुंवद् भवति।<br>पुंवद्भावेन पुंसि यथा ह्रस्वनुमौ न भवतः तथैव नपुंसकेऽपि गालवस्य मतेन ह्रस्वनुमौ न भवतः।<br>ग्रामण्या, ग्रामणिना वा ब्राह्मणकुलेन।<br>ग्रामण्ये, ग्रामणिने वा ब्राह्मणकुलाय। | तृतीयादिषु ७५ |
| तृतीयादिषु ७४<br>अचि ७३<br>विभक्तौ ७३ | ७५. अस्थि-दधि-सक्थ्यक्ष्णामनङुदात्तः<br>अस्थि, दधि, सक्थि, अक्षि - इत्येतेषां नपुंसकानामनङ् भवति, स चोदात्तः, अजादिषु तृतीयादिषु विभक्तिषु परतः।<br>अस्थ्ना, अस्थ्ने। दध्ना, दध्ने।<br>सक्थ्ना, सक्थ्ने। अक्ष्णा, अक्ष्णे। | अस्थि-णाम् ७७<br>अनङ् ७६<br>उदात्तः ७६ |

| | | |
|---|---|---|
| अस्थि-णाम् ७५<br>अनङ् ७५ | **७६. छन्दस्यपि दृश्यते**<br>अस्थि-दधि-सक्थ्यक्ष्णामनङ् छन्दस्यपि दृश्यते, यस्मिन् परे विहितस्ततोऽन्यत्रापि छन्दसि दृश्यते इत्यर्थः।<br>अचि विहितोऽनच्यपि दृश्यते - इन्द्रो दधीचो अस्थभिः। भद्रं पश्येमाक्षभिः।<br>तृतीयादिष्वित्युक्तम्, अतृतीयादिष्वपि दृश्यते - अस्थान्युत्कृत्य जुहोति।<br>विभक्तौ इत्युक्तम् - अविभक्तावपि भवति - अक्षण्वता लाङ्गलेन। अस्थन्वन्तं यदनस्था बिभर्ति। | छन्दसि ७७ |
| छन्दसि ७६<br>अस्थि-णाम् ७५<br>उदात्तः ७६ | **७७. ई च द्विवचने**<br>छन्दसि अस्थ्यादीनाम् ई (ईकारान्तादेशश्च) च दृश्यते द्विवचने, स चोदात्तः।<br>अक्षी ते इन्द्र पिङ्गले कपेरिव।<br>अक्षीभ्यां ते नासिकाभ्याम्। | |
| नुम् ५८ | **७८. नाभ्यस्ताच्छतुः**<br>अभ्यस्तात् परस्य शतृप्रत्ययस्य नुम् न भवति।<br>ददत्, ददतौ, ददतः।<br>जाग्रत्, जाग्रतौ, जाग्रतः। | नाभ्यस्तात् ७६<br>शतुः ८१ |
| अभ्यस्तात्-७८<br>शतुः ७८<br>नुम् ५८<br>न ७८ | **७९. वा नपुंसकस्य**<br>नपुंसकस्य अभ्यस्तात् परस्य शतुर्नुम् न वा भवति।<br>ददन्ति, ददति वा कुलानि।<br>जाग्रन्ति, जाग्रति वा कुलानि। | वा ८० |
| शतुः७८<br>नुम् ५८<br>वा ७९<br>अङ्गस्य ६.४.१ | **८०. आच्छीनद्योर्नुम्**<br>आत् (अवर्णादङ्गात्) परस्य शतुर्नुम् वा भवति शीनद्योः परतः।<br>श्यां नुम् - तुदन्ती, तुदती वा कुले।<br>नद्यां नुम् - तुदन्ती, तुदती वा ब्राह्मणी।<br>आदिति किम्? कुर्वती। सुन्वती। | शीनद्योः ८१<br>नुम् ८२ |
| शतुः७८<br>नुम् ५८<br>शीनद्योः ८१ | **८१. शप्-श्यनोर्नित्यम्**<br>शप्श्यनोरात् परस्य शतुर्नुम् नित्यं भवति शीनद्योः परतः।<br>शपोऽकारात् - पचन्ती कुले। पचन्ती ब्राह्मणी।<br>श्यनोऽकारात् - दीव्यन्ती कुले। दीव्यन्ती ब्राह्मणी। | |
| नुम् ५८ | **८२. सावनडुहः**<br>अनडुहः अकारात्परो नुम्भवति सौ परे।<br>अनड्वान्। हे अनड्वन्।<br>पूर्वम् अनड्वान् इत्यत्र 'चतुरनडुहोरामुदात्तः' इत्यनेन आम्, हे अनड्वन् इत्यत्र च 'अम्सम्बुद्धौ' इत्यनेन अम् भवति , ततः नुम्। | सौ ८५ |

| | | |
|---|---|---|
| नुम् ५८<br>सौ ८२ | ८३. दृक्-स्ववः-स्वतवसां छन्दसि<br>छन्दसि दृश्, स्ववस्, स्वतवस् - इत्येतेषां नुम्भवति सौ परे।<br>ईदृङ्; तादृङ्; यादृङ्; सदृङ्।<br>स्ववान्। स्वतवान् पायुरग्ने। | |
| सौ ८२ | ८४. दिव औत्<br>दिवः औत् भवति सौ परे।<br>'अलोऽन्त्यस्य' इति अन्त्यस्यालः आदेशः।<br>द्यौः। | |
| सौ ८२ | ८५. पथि-मथ्यृभुक्षामात्<br>पथिन्, मथिन्, ऋभुक्षिन् - इत्येतेषामात् भवति सौ।<br>पन्थाः। मन्थाः। ऋभुक्षाः। | पथि-क्षाम् ८८ |
| पथि-क्षाम् ८५ | ८६. इतोऽत् सर्वनामस्थाने<br>पथि-मथ्यृभुक्षाम् इतोऽत् भवति सर्वनामस्थाने परे।<br>पन्थाः, पन्थानौ, पन्थानः।<br>मन्थाः, मन्थानौ, मन्थानः।<br>ऋभुक्षाः, ऋभुक्षाणौ, ऋभुक्षाणौ। | सर्वनामस्थाने ९८ |
| पथि-क्षाम् ८५<br>सर्वनामस्थाने ८६ | ८७. थो न्थः<br>पथिमथोस्थो न्थः भवति।<br>आदेशेऽकार उच्चारणार्थः।<br>पन्थाः, पन्थानौ, पन्थानः।<br>मन्थाः, मन्थानौ, मन्थानः। | |
| पथि-क्षाम् ८५ | ८८. भस्य टेर्लोपः<br>भस्य पथ्यादेष्टेर्लोपो भवति।<br>पथः; पथा। मथः; मथा। ऋभूक्षः; ऋभुक्षा। | |
| सर्वनामस्थाने ८६ | ८९. पुंसोऽसुङ्<br>पुंसोऽसुङ् भवति सर्वनामस्थाने परे।<br>पुमान्, पुमांसौ। पुमांसः।<br>'पुमान्' इत्यादौ 'पुम्स्' इति प्रकृतिः, सूत्रे कृतानुस्वारो निर्देशः। | |
| सर्वनामस्थाने ८६ | ९०. गोतो णित्<br>गोतः(गोशब्दात्परम्) सर्वनामस्थानं णिद्वत् भवति।<br>अतिदेशोऽयम्।<br>गौः। गावौ। गावः।<br>णिद्वद्भावेन 'अचो ञ्णिति' इति सूत्रेण वृद्धिः। | णित् ९२ |

| | | |
|---|---|---|
| णित् ९० | ९१. णलुत्तमो वा<br>णलुत्तमो वा णिद्वत् भवति।<br>अहं चकार, चकर वा।<br>अहं पपाच, पपच वा। | |
| सर्वनामस्थाने ८६<br>णित् ९० | ९२. सख्युरसम्बुद्धौ<br>सख्युः(सखिशब्दात्) परं सर्वनामस्थानं णिद्वत् भवति,<br>सम्बुद्धिस्तु तु णिद्वत् न भवति।<br>सूत्रे 'असम्बुद्धौ' इति सप्तम्यन्तनिर्देशः उत्तरार्थः।<br>सखायौ, सखायः, सखायम्, सखायौ।<br>असम्बुद्धाविति किम्? हे सखे। | सख्युः ९३<br>असंबुद्धौ ९५ |
| सख्युः ९२<br>असंबुद्धौ ९२ | ९३. अनङ् सौ<br>सख्युः अनङ् भवति असम्बुद्धौ सौ परे।<br>सखा।<br>असम्बुद्धाविति किम्? हे सखे। | अनङ् सौ ९४ |
| असंबुद्धौ ९२<br>अनङ् ९३<br>सौ ९३ | ९४. ऋदुशनस्पुरुदंसोऽनेहसां च<br>ऋत् (ऋकारान्तस्य), उशनस्, पुरुदंसस्, अनेहस् -<br>इत्येतेषां चानङ् भवति असम्बुद्धौ सौ।<br>कर्त्ता; हर्त्ता; माता; पिता; भ्राता।<br>उशना। पुरुदंसा। अनेहा। | |
| असंबुद्धौ ९२<br>सर्वनामस्थाने ८६ | ९५. तृज्वत् क्रोष्टुः<br>क्रोष्टुस्तृज्वद् (तृजन्तवद् रूपम्) लभते असम्बुद्धौ<br>सर्वनामस्थाने परे।<br>क्रोष्टा, क्रोष्टारौ, क्रोष्टारः, क्रोष्टारम्, क्रोष्टारौ। | तृज्वत्<br>क्रोष्टुः९७ |
| तृज्वत् ९५<br>क्रोष्टुः ९५ | ९६. स्त्रियां च<br>स्त्रियां च क्रोष्टुस्तृज्वद् रूपं लभते।<br>क्रोष्ट्री। | |
| तृज्वत् ९५<br>क्रोष्टुः ९५ | ९७. विभाषा तृतीयादिष्वचि<br>तृतीयादिषु (विभक्तिषु) अचि (अजादौ विभक्तौ) परतः<br>क्रोष्टुस्तृज्वद् रूपं विभाषा लभते।<br>क्रोष्ट्रा; क्रोष्टुना। क्रोष्ट्रे;क्रोष्टवे। क्रोष्टुः, क्रोस्टोः।<br>क्रोष्ट्रोः, क्रोष्ट्वोः। क्रोष्टरि; क्रोष्टौ।<br>(वा०) तृज्वद्भावात् पूर्वविप्रतिषेधेन नुम्नुटौ भवतः।<br>नुम् - प्रियक्रोष्टुनेऽरण्याय।<br>नुट् - क्रोष्टूनाम्। | |

| सर्वनामस्थाने ८६ | ९८. चतुरनडुहोरामुदात्तः<br>चतुरनडुहोराम् (आगमः) भवति, स चोदात्तः, सर्वनामस्थाने परे।<br>चत्वारः।<br>अनड्वान्, अनड्वाहौ, अनड्वाहः, अनड्वाहम्, अनड्वाहौ।<br>(वा०) अनडुहः स्त्रियां वेति वक्तव्यम्।<br>अनड्वाही। अनडुही।<br>स्त्रीप्रत्ययस्तु गौरादिपाठात् सिद्ध्यति। | चतुरनडुहोः ९९ |
|---|---|---|
| चतुरनडुहोः ९८ | ९९. अम् सम्बुद्धौ<br>चतुरनडुहोरम्भवति सम्बुद्धौ परतः।<br>हे प्रियचत्वः।<br>हे अनड्वन्। | |

| | | |
|---|---|---|
| | १००. ॠत इद्धातोः<br>ॠतः (ॠकारान्तस्य) धातोः इद् (इकारादेशः) भवति।<br>कॄ विक्षेपे - किरति।<br>गॄ निगरणे - गिरति।<br>स्तॄ आच्छादने - आस्तीर्णम्;अत्र 'हलि च' इति दीर्घः।<br>शॄ हिंसायाम् - विशीर्णम्।<br>धातोरिति किम्? मातॄणाम्। | ॠतः १०३<br>धातोः१०३<br>इत् १०१ |
| ॠतः १००<br>धातोः१००<br>इत् १०० | १०१. उपधायाश्च<br>धातोरुपधायाश्च ॠत इत् (इकारादेशः) भवति।<br>कॄतसंशब्दने - कीर्त्तयति, कीर्त्तयतः, कीर्त्तयन्ति।<br>'उपधायां च' इति सूत्रेणेकारस्य दीर्घत्वम्।<br>'कॄतश्च' इति वक्तव्ये 'उपधायाश्च' इति वचनं वैचित्र्यार्थम्। | |
| ॠतः १००<br>धातोः१०० | १०२. उदोष्ठ्यपूर्वस्य<br>ओष्ठ्यपूर्वस्य धातोः ॠतः उद् (उकारादेशः) भवति।<br>पॄ पालनपूरणयोः - पूर्त्ताः पिण्डाः।<br>'नध्याख्या' इति निषेधान्न निष्ठानत्वम्। | उत् १०३ |
| | १०३. बहुलं छन्दसि।<br>धातोरोष्ठ्यपूर्वस्य ॠतः उत् छन्दसि बहुलं भवति।<br>ओष्ठ्यपूर्वस्य इत्युक्तम्, अनोष्ठ्यपूर्वस्यापि भवति -<br>मित्रावरुणौ ततुरिः।<br>दूरे ह्यध्वा जगुरिः।<br>ओष्ठ्यपूर्वस्यापि न भवति -<br>पप्रितममम्, वव्रितमम्।<br>क्वच्चि ओष्ठ्यपूर्वस्यापि भवति - पपुरिः। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां सप्तमाध्यायस्य प्रथमः पादः ।।

।। श्रीः ।।

## ।। अथ सप्तमाध्यायस्य द्वितीयः पादः ।।

| | | |
|---|---|---|
| अङ्गस्य ६.४.१ | **१. सिचि वृद्धिः परस्मैपदेषु**<br>परस्मैपदेषु (परस्मैपदपरे) सिचि परतः इगन्ताङ्गस्य वृद्धिर्भवति।<br>'इको गुणवृद्धी' इति सूत्रेण 'इकः' इति षठ्यन्तं पदमुपस्थितम्।<br>अचैषीत्। अलावीत्। अकार्षीत्।<br>परस्मैपदेष्विति किम्? अच्योष्ट। अप्लोष्ट। | सम्पूर्णसूत्रम् ७ |
| सिचि १ वृद्धिः १<br>परस्मैपदेषु १<br>अङ्गस्य ६.४.१ | **२. अतो ल्रान्तस्य**<br>लकारान्तस्य, रेफान्तस्य चाङ्गस्य अन्तस्यातो वृद्धिर्भवति परस्मैपदेषु सिचि।<br>'ल्र' इति लुप्तषष्ठीकं पदमङ्गस्य विशेषणम्, अन्तस्य इति 'अतः' इत्यस्य विशेषणम्। अन्ताकारेण रेफलकारयोः समीपस्थो योऽकारः स गृह्यते।<br>क्षर सञ्चलने - अक्षारीत्।<br>ज्वल दीप्तौ - अज्वालीत्।<br>'अतो हलादेर्लघोः' इति विकल्पस्यापवादोऽयम्। | |
| सिचि १<br>वृद्धिः १<br>परस्मैपदेषु १ | **३. वद-व्रज-हलन्तस्याचः**<br>वद-व्रज-हलन्तस्याचो वृद्धिर्भवति परस्मैपदेषु सिचि।<br>अवादीत्। अव्राजीत्।<br>अपाक्षीत्; अभैत्सीत्; अरौत्सीत्।<br>वद-व्रजोर्ग्रहणम् 'अतो हलादेर्लघोः' इति वृद्धि विकल्पबाधनार्थम्। | हलन्तस्य ४ |
| हलन्तस्य ३<br>सिचि १<br>वृद्धिः १<br>परस्मैपदेषु १ | **४. नेटि**<br>परस्मैपदेषु इटि (इडादौ) सिचि हलन्तस्याचो वृद्धिर्नभवति।<br>दिव् - अदेवीत्।<br>कुष् - अकोषीत्। | नेटि ७ |

| | | |
|---|---|---|
| इटि ४<br>सिचि १<br>वृद्धिः१<br>परस्मैपदेषु १<br>न४ | ५. ह्मयन्त-क्षण-श्वस-जागृ-णि-श्व्येदिताम्<br>हकारान्तस्य, मकारान्तस्य,यकारान्तस्य, क्षण, श्वस, जागृ, ण्यन्त, श्वि, एदित् - इत्येतेषां च वृद्धिर्न भवति परस्मैपदेषु इटि (इडादौ) सिचि।<br>हान्त - अग्रहीत्।<br>मान्त - अस्यमीत्।अवमीत्।<br>यान्त - अव्ययीत्।<br>क्षण - अक्षणीत्।<br>श्वस् - अश्वसीत्।<br>जागृ - अजागरीत्।<br>णि(ण्यन्त) - औनयीत्।<br>ऊन परिहाणे, चुरादित्वाण्णिच्।<br>श्वि - अश्वयीत्।<br>एदित् - रगे शङ्कायाम् - अरगीत्।<br>कखे हसने - अकखीत्। | |
| सिचि १<br>वृद्धिः १<br>परस्मैपदेषु१<br>इटि ४<br>न४ | ६. ऊर्णोतेर्विभाषा<br>ऊर्णोतेर्विभाषा वृद्धिर्न भवति परस्मैपदेषु इडादौ सिचि।<br>'ऊर्णुञ् आच्छादने'- प्रौर्णवीत्; प्रौर्णावीत्।<br>'विभाषोर्णोः' इत्यनेन ङिद्वद्भावपक्षे उवङ् - प्रौर्णुवीत्। | विभाषा ७ |
| सिचि १<br>वृद्धि १<br>परस्मैपदेषु १<br>विभाषा ६<br>इटि ४<br>न४ | ७. अतो हलादेर्लघोः<br>हलादेरङ्गस्य लघोः अकारस्य विभाषा वृद्धिर्न भवति परस्मैपदेषु इडादौ सिचि।<br>'वद-व्रज-हलन्तस्याचः' इति सूत्रेण प्राप्तायाः वृद्धेः 'नेटि' इति प्रतिषेधे प्राप्ते विकल्पार्थमिदमारभ्यते।<br>अकणीत्, अकाणीत्।<br>लघोरिति किम्? अतक्षीत्। अरक्षीत्। | |
| | ८. नेड्वशि कृति<br>वशि (वशादौ) कृति (सति) इड् न भवति।<br>ईश् ऐश्वर्ये वरच् - ईश्वरः।<br>दीपी दीप्तौ, रप्रत्ययः - दीप्रः।<br>पुरस्तात् प्रतिषेधकरणस्य प्रयोजनम् - यावानिट् प्राप्तस्तस्य सर्वस्य वशादौ कृति प्रतिषेधो यथा स्यादिति। | न, इट् ३४<br>कृति ६ |

| | | |
|---|---|---|
| इट् ८<br>न ८<br>कृति८ | ९. ति-तु-त्र-त-थ-सि-सु-सर-कसेषु च<br>ति, तु, त्र, त, थ, सि, सर, क, स - इत्येतेषु च (सत्सु) इड् न भवति।<br>ति इति क्तिच्-क्तिनोः सामान्येन ग्रहणम्। 'त' इत्यनेन औणादिकप्रत्ययस्य ग्रहणम्, न तु निष्ठायाः।<br>तेन हसितमित्यत्र इड् भवत्येव।<br>क्तिच् - तन्तिः। क्तिन् - दीप्तिः।<br>तु - सक्तुः। त्र - पत्त्रम्, तन्त्रम्।<br>त - पोतः, धूर्त्तः। थ - कुष्ठम्, काष्ठम्।<br>सि - कुक्षिः। सु - इक्षुः। सर - अक्षरम्। क - शल्कः। स - वत्सः। | |
| इट्८<br>न ८<br>धातोः७.१.१०० | १०. एकाच उपदेशेऽनुदात्तात्<br>उपदेशे य एकाच्, अनुदात्तश्च धातुस्तस्मादिड् न भवति।<br>दाता, दातुम्, दातव्यम्।<br>चेता। स्तोता। कर्त्ता।<br>शक्तः। पक्वम्। भिन्नम्। तप्तम्। दृष्टम्।<br>वस् निवासे- वत्स्यति।<br>के के अनुदात्ताः धातवः ? इति प्रतिज्ञासमधिगम्यमेवेति भाष्य-काशिकादितो ज्ञेयम्।<br>यद्यपि अनुदात्तत्वेन पठितेषु धातुषु सर्वे एकाच एवेति व्यभिचाराभावाद् 'एकाचः' इति विशेषणं निरर्थकं तथापि अस्य सूत्रस्य प्रवृत्तिर्यङ्लुकि मा भूदित्यर्थं सूत्रे एकाज्ग्रहणं सार्थकम्, यस्मिन् सूत्रे एकाज्ग्रहणं भवति तस्य यङ्लुकि प्रवृत्तिर्न भवति।<br>तथा चास्ति परिभाषा -<br>श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च।<br>यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि।।<br>(परिभाषेन्दुशेखरे परिभाषासंख्या - १३१)<br>तेन जङ्गमिता, बेभिदिता इत्यादौ यङ्लुकि इण्निषेधो न भवति। | एकाचः११ |
| नेट् ८<br>एकाचः१० | ११. श्र्युकः किति<br>'श्रिञ्' इत्येतस्माद्, एकाचः उगन्ताच्च धातोः किति इड् न भवति।<br>श्रित्वा। श्रितः। श्रितवान्।<br>उगन्तात् - युत्वा। लूत्वा। भूत्वा। वृत्वा। तीर्त्वा।<br>एकाजित्यनुवृत्या 'जागृ निद्राक्षये' - जागरितवान् इत्यत्र नायं प्रतिषेधः। | उकः १२ |

| | | |
|---|---|---|
| उकः ११<br>नेट् ८ | १२. सनि ग्रह-गुहोश्च<br>ग्रहगुहोः, चकाराद् उगन्तानां च सनि इड् न भवति।<br>जिघृक्षति। जुघुक्षति। रुरुषति। लुलूषति। | |
| नेट् ८ | १३. कृ-सृ-भृ-वृ-स्तु-द्रु-स्रु-श्रुवो लिटि<br>कृ-सृ-भृ-वृ-स्तु-द्रु-स्रु-श्रुवो लिटि इण्न भवति।<br>'वृ' इति वृञ्वृङोः सामान्येन ग्रहणम्।<br>कृ- चकृव, चकृम।<br>सृ- ससृव, ससृम।<br>भृ- बभृव, बभृम।<br>वृञ्- ववृव, ववृम।<br>वृङ्- ववृवहे, ववृमहे।<br>स्तु- तुष्टुव, तुष्टुम।<br>द्रु- दुद्रुव, दुद्रुम।<br>स्रु- सुस्रुव, सुस्रुम।<br>श्रु, शुश्रुव, शुश्रुम।<br>एषु एकाजनुदात्त्वेनैव इट्प्रतिषेधे सिद्धे सूत्रमिदं नियमार्थम् - क्रादीनामेव लिटि इण्न भवति अन्येषां धातूनां तु लिटि इड् भवत्येव। तेन बिभिदिव, बिभिदिम इत्यादौ अनिड्धातावपि लिटि इड् भवत्येव।<br>(वा०) कृञो ऽसुट्कस्येति वक्तव्यम्।<br>ससुट्कस्य कृञः इडागमो यथा स्यादित्येतदर्थमिदं वार्तिकम्।<br>सञ्चस्करिव। सञ्चस्करिम।<br>'ऋतो भारद्वाजस्य' इत्येतदप्यसुट्कस्यैवेष्यते - सञ्चस्करिथ। | |
| नेट् ८ | १४. श्वीदितो निष्ठायाम्<br>श्वीदितो निष्ठायाम् इड् न भवति।<br>(श्वी+ईदितः इतिच्छेद)<br>'टुओ श्वि गतिवृद्ध्योः' - शूनः, शूनवान्।<br>ईदितः - 'ओ विजी भयचलनयोः - उद्विग्नः, उद्विग्नवान्।<br>'ओदितश्च' इति निष्ठातकारस्य नकारः। | निष्ठायाम् ३४ |
| नेट् ८<br>निष्ठायाम् १४ | १५. यस्य विभाषा<br>यस्य धातोः (क्वचिदपि) विभाषा इट् उक्तस्तस्य निष्ठायामिड् न भवति।<br>धूञ् कम्पने - विधूतः, विधूतवान्।<br>'स्वरति-सूति०' इति सूत्रेण विभाषया इडुक्तस्तस्माद् निष्ठायामिड् न भवति। | |

| | | |
|---|---|---|
| नेट् ८<br>निष्ठायाम् १४ | १६. आदितश्च<br>आदितश्च धातोर्निष्ठायामिड् न भवति।<br>आत्(आकारः) इत् यस्य स आदित्, तस्मादिति आदितः।<br>'ञि ष्विदा गात्रप्रक्षरणे'- स्विन्नः, स्विन्नवान्। | आदितः १७ |
| आदितः १६<br>निष्ठायाम् १४<br>इट् ८ न ८<br>निष्ठायाम् १४ | १७. विभाषा भावादिकर्मणोः<br>आदितो(आकारेत्संज्ञकाद्) धातोः भावे, आदिकर्मणि च विहितायां निष्ठायामिड् विभाषा न भवति।<br>ञिमिदा स्नेहने - मिन्नमनेन, मेदितमनेन। प्रमिन्नः, प्रमेदितः।<br>'निष्ठा शीङ्' सूत्रेण सेण्निष्ठायाः कित्त्वप्रतिषेधाद् 'मेदितम्' इतिप्रयोगे, 'प्रमेदितः' इति प्रयोगे च गुणः। | |
| नेट् ८<br>निष्ठायाम् १४ | १८. क्षुब्ध-स्वान्त-ध्वान्त-लग्न-म्लिष्ट-<br>विरिब्ध-फाण्ट-वाढानि मन्थ-<br>मनस्तमः-सक्ताविस्पष्ट-स्वरा<br>नायास-भृशेषु<br>क्षुब्ध-स्वान्त-ध्वान्त-लग्न-म्लिष्ट-विरिब्ध- फाण्ट-वाढानि निष्ठायां निपात्यन्ते यथासंख्यं मन्थ,मनः,तमः,सक्त, अविस्पष्ट,स्वर,अनायास, भृश- इत्येतेष्वर्थेषु ।<br>क्षुभ सञ्चलने- क्षुब्धः मन्थश्चेत्। क्षुभितमन्यत्।<br>स्वन शब्दे- स्वान्तं मनश्चेत्। स्वनितमन्यत्।<br>ध्वन शब्दे- ध्वान्तं तमश्चेत्। ध्वनितमन्यत्।<br>रगे,लगे सङ्गे- लग्नं सक्तं चेत्। लगितमन्यत्।<br>म्लेच्छ अव्यक्तायां वाचि- म्लिष्टम् अविस्पष्टं चेत्। म्लेच्छितमन्यत्।<br>रेभृ शब्दे- विरब्धमिति स्वरश्चेत्। विरेभितमन्यत्।<br>फण गतौ- फाण्टमिति अनायासश्चेत्। अनायाससाध्यः कषायविशेषः फाण्टमित्युच्यते। फणितमन्यत्।<br>बाहृ प्रयत्ने- बाढम् इति भृशमित्यर्थे। बाहितमन्यत्। | |
| नेट् ८<br>निष्ठायाम् १४ | १९. धृषि-शसी वैयात्ये<br>धृषि-शसी वैयात्ये इटं न लभेते।<br>वैयात्यम् = अविनीतता।<br>ञिधृषा प्रागल्भ्ये- धृष्टः। अन्यत्र- धर्षितः इति।<br>शसु हिंसायाम्- विशस्तः। अन्यत्र- विशसित इति। | |
| नेट् ८<br>निष्ठायाम् १४ | २०. दृढः स्थूलबलयोः<br>स्थूलबलयोरर्थयोः दृढः इति निष्ठायां निपात्यते।<br>दृह, दृहि वृद्धौ - दृढः = स्थूलः।<br>दृढः= बलवान्।<br>अन्यत्र - दृहितम्। दृंहितम्। | |

| | | |
|---|---|---|
| नेट् ८<br>निष्ठायाम् १४ | २१. प्रभौ परिवृढः<br>प्रभौ अर्थे परिवृढो निष्ठायां निपात्यते।<br>वृह, वृहि वृद्धौ- परिवृढः कुटुम्बी।<br>अन्यत्र- परिवृहितम्, परिवृंहितम्। | |
| नेट् ८<br>निष्ठायाम् १४ | २२. कृच्छ्र-गहनयोः कषः<br>कृच्छ्र-गहनयोः कषः निष्ठायामिड् न भवति।<br>कृच्छ्रे- कष्टं व्याकरणम्। ततोऽपि कष्टतराणि सामानि।<br>गहने- कष्टानि वनानि। कष्टाः पर्वताः।<br>अन्यत्र- कषितम्। | |
| नेट् ८<br>निष्ठायाम् १४ | २३. घुषिरविशब्दने<br>घुषिरविशब्दने निष्ठायाम् इटं न लभते।<br>विशब्दनं = प्रतिज्ञानम्, स्वाभिप्रायस्य शब्देनाविष्करणमित्यर्थः, तद्भिन्नम् अविशब्दनम्।<br>अविशब्दने- घुष्टा रज्जुः। घुष्टौ पादौ। विशब्दने- अवघुषितं वाक्यमाह। | |
| नेट् ८<br>निष्ठायाम् १४ | २४. अर्देः सं-नि-विभ्यः<br>संनिविभ्यः अर्देः निष्ठायामिड् न भवति।<br>अर्द गतौ याचने च - समर्णः। न्यर्णः। व्यर्णः। | अर्देः २५ |
| नेट् ८<br>निष्ठायाम् १४<br>अर्देः २४ | २५. अभेश्चाविदूर्ये<br>अभेः (उत्तरस्य) अर्देः निष्ठायामिड् न भवति आविदूर्येऽर्थे।<br>विदूरम् = विप्रकृष्टम्, तद्भिन्नमविदूरम्, तस्य भावः आविदूर्यम्, सामीप्यमित्यर्थः।<br>अभ्यर्णा सेना। अभ्यर्णा शरत्। | |
| नेट् ८<br>निष्ठायाम् १४ | २६. णेरध्ययने वृत्तम्<br>णेः (ण्यन्ताद् वृतेः) निष्ठायां वृत्तम् इति निष्ठायां निपात्यते अध्ययनविषये।<br>वृत्तो गुणो देवदत्तेन।<br>गुणः = पाठः, पदक्रमसंहितारूपोऽध्ययनविशेषः, संवृत्तः = सम्पादित इत्यर्थः। | णेः २७ |

| नेट् ८<br>निष्ठायाम् १४<br>णेः २६ | २७. वा दान्त-शान्त-पूर्ण-दस्त-स्पष्ट-च्छन्न-ज्ञप्ताः<br>णेर्निष्ठायां दान्त-शान्त-पूर्ण-दस्त-स्पष्ट-छन्न- ज्ञप्ता वा निपात्यन्ते।<br>दमु, शमु उपशमे-दान्तः, शान्तः।<br>पक्षे दमितः, शमितः ।<br>पूरी आप्यायने-पूर्णः।<br>पक्षे पूरितः।<br>दसु उत्क्षेपे- दस्तः। पक्षे दासितः।<br>स्पश बाधनस्पर्शयोः - स्पष्टः।<br>पक्षे स्पाशितः।<br>छद अपवारणे- छन्नः।<br>पक्षे छादितः।<br>ज्ञप मारणतोषण निशामनेषु-ज्ञप्तः।<br>पक्षे- ज्ञपितः। मित्त्वाद् ह्रस्वः। | वा ३० |
|---|---|---|
| नेट् ८<br>निष्ठायाम् १४<br>वा २७ | २८. रुष्यम-त्वर-संघुषास्वनाम्<br>रुषि, अम, त्वर्, सङ्घुष, आस्वन- इत्येतेषां निष्ठायामिड् वा न भवति।<br>रुष रोगे- रुष्टः, रुषितः।<br>अम गत्यादिषु - अन्तः, अमितः।<br>ञित्वरा सम्भ्रमे- तूर्णः, त्वरितः।<br>घुषिरशब्दार्थे- संघुष्टः, संघुषितः।<br>स्वन शब्दे आङ्पूर्वः - आस्वान्तः, आस्वनितः। | |
| नेट् ८<br>निष्ठायाम् १४<br>वा २७ | २९. हृषेर्लोमसु<br>हृषेर्निष्ठायामिड् न वा भवति लोमसु विषयेषु। हृष तुष्टौ, हृषु अलीके- हृष्टानि लोमानि, हृष्टाः केशाः।<br>पक्षे हृषितानि लोमानि, हृषिताः केशाः। | |
| नेट् ८<br>निष्ठायाम् १४<br>वा २७ | ३०. अपचितश्च<br>'अपचितः' इति वा निपात्यते निष्ठायाम्।<br>अपपूर्वस्य 'चायृ पूजा-निशामनयोः' इति धातोः निष्ठायामनिट्त्वं, चिभावश्च निपात्यते।<br>अपचितोऽपचायितो वाऽनेन गुरुः।<br>(वा०) क्तिनि नित्यमिति वक्तव्यम्।<br>अपचितिः। | |
| निष्ठायाम् १४ | ३१. ह्रु ह्वरेश्छन्दसि<br>'ह्वृ कौटिल्ये' इति धातोर्निष्ठायां 'ह्रु' इत्यादेशो भवति, छन्दसि।<br>ह्रुतस्य चाह्रुतस्य च। अपह्रुतमसि हविर्धानम्। | छन्दसि ३४ |

| | | |
|---|---|---|
| छन्दसि ३१<br>निष्ठायाम् १४ | ३२. अपरिहृताश्च<br>छन्दसि 'अपरिहृताः' इति निपात्यते।<br>'हृ' इत्येतस्य आदेशस्याभावो निपात्यते।<br>अपरिहृताः सनुयाम वाजम्। | |
| छन्दसि ३१<br>निष्ठायाम् १४ | ३३. सोमे ह्वरितः<br>'ह्वरित' इति ह्वरतेर्निष्ठायामिडागमो, गुणश्च निपात्यते छन्दसि विषये, सोमेऽभिधेये।<br>मा नः सोमो ह्वरितः, विह्वरितस्त्वम् | |

| | | |
|---|---|---|
| छन्दसि ३१<br>निष्ठायाम् १४ | ३४. ग्रसित-स्कभित-स्तभितोत्तभित-चत्त-विकस्ता वशस्तृ-शंस्तृ-शास्तृ-तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरूत्रीरुज्ज्वलिति-क्षरिति-क्षमिति-वमित्यमितीति च<br>ग्रसित, स्कभित, स्तभित, उत्तभित, चत्त, विकस्त, विशस्तृ, शंस्तृ, शास्तृ, तरुतृ, तरूतृ, वरुत, वरूतृ, वरूत्री, उज्ज्वलिति, क्षरिति, क्षमिति, वमिति, अमिति - इत्येते एकोनविंशतिः शब्दाः छन्दसि निपात्यन्ते।<br>छन्दसि<br>भाषायाम्<br>१.ग्रसु अदने-क्त - ग्रसितम् ग्रस्तम्<br>२.स्कम्भु सौत्रो धातुः - क्त - विष्कभिते अजरे विष्कब्धः<br>३.स्तम्भु सौत्रो धातुः - क्त - स्तभितम् स्तब्धम्<br>४. ,, ,, - क्त- उत्तभिता उत्तब्धा<br>५.चते याचने - क्त- चत्ता चतिता<br>६. कस गतौ - क्त- विकस्तम् विकसितम्<br>७.शसु हिंसायाम्-क्त- विशस्ता विशसिता<br>८.शंसु स्तुतौ -तृच्- शंस्ता शंसिता<br>९.शासु अनुशिष्टौ-तृच् -प्रशास्ता प्रशासिता<br>१०.तॄ प्लवनतरणयोः -तृच्- तरुतारम् तरितारम्<br>११. ,, ,, - तृच्- तरूतारम् तरीतारम्<br>१२.वृङ् सम्भक्तौ, वृञ् वरणे - तृच्- वरुतारम् वरितारम्<br>१३. ,, ,, तृच्- वरूतारम् वरीतारम्<br>१४. ,, ,, तृच्- वरूत्रीः वरीत्र्यः<br>ङीपि, जसि रूपम्<br>१५. ज्वल दीप्तौ -तिप्- उज्ज्वलिति उज्ज्वलति<br>१६. क्षर संचलने-तिप्- क्षरिति क्षरति<br>१७.क्षमूष् सहने- तिप्- क्षमिति क्षमते<br>१८.टुवम उद्गिरणे-तिप्- वमिति वमति<br>१९.अम गत्यादिषु - तिप्- अभ्यमिति अभ्यमति | |

| | | |
|---|---|---|
| | ३५. आर्धधातुकस्येड् वलादेः<br>वलादेरार्धधातुकस्येडागमो भवति।<br>लविता, लवितुम्, लवितव्यम्। पविता, पवितुम्, पवितव्यम्।<br>इडिति वर्तमाने पुनरिड्ग्रहणं प्रतिषेधनिवृत्त्यर्थम्। | आर्धधातुकस्य७५<br>वलादेः, इट् ७८ |
| आर्धधातुकस्य ३५<br>वलादेः ३५<br>इट् ३५ | ३६. स्नु-क्रमोरनात्मनेपदनिमित्ते<br>स्नु-क्रमोर्वलादेरार्धधातुकस्य इडागमो भवति, यत्र स्नुक्रमौ आत्मनेपदस्य निमित्तभूतौ तत्र इड् न भवति।<br>स्नु-क्रमौ आत्मनेपदस्य निमित्तं भावे, कर्मणि, कर्तृकर्मणि, 'वृत्तिसर्गतायनेषु क्रमः' इत्यादिसूत्रानुसारेण वृत्त्यादिष्वर्थेषु च भवतः। अतः उक्तेषु स्थलेषु स्नुक्रमोः वलादेः आर्धधातुकस्य इडागमो न भवति।<br>ष्णु प्रस्रवणे - स्नविता, स्नविष्यति, अस्नावीत्।<br>क्रमु पादविक्षेपे - क्रमिता, क्रमिष्यति। अक्रमीत्।<br>अनात्मनेपदमिति किम्? प्रस्नोषीष्ट। अत्र आशिषि लिङि 'भावकर्मणोः' इत्यात्मनेपदम्।<br>प्रकंसीष्ट। अत्र 'प्रोपाभ्यां समर्थाभ्याम्' इति सूत्रेण आत्मनेपदम्। | |
| इट् ३५ | ३७. ग्रहोऽलिटि दीर्घः<br>ग्रहः उत्तरस्य इटः दीर्घो भवति, लिटि यः इट् तस्य तु दीर्घो न भवति।<br>ग्रहीता। ग्रहीतुम्। ग्रहीतव्यम्।<br>अलिटीति किम् ? जगृहिव। जगृहिम।<br>प्रकृतस्येटोऽनेन दीर्घत्वम्, तेन चिण्वदिटो दीर्घो न भवति-ग्राहिता। ग्राहिष्यते। | अलिटि ३८<br>दीर्घः ४० |
| इटो ३५<br>दीर्घः ३७ | ३८. वॄतो वा<br>'वृ' इत्यतः, ॠकारान्तेभ्यश्च उत्तरस्य इटो दीर्घो वा भवति, लिटि इटो दीर्घो न भवति।<br>सूत्रे वृ + ॠत इतिच्छेदः।<br>वृ इति वृङ्-वृञोः सामान्येन ग्रहणम्।<br>वृङ् सम्भक्तौ, वृञ् वरणे, वृञ् आवरणे- वरीता, वरिता। प्रावरीता, प्रावरिता।<br>ॠकारान्तेभ्यः - तॄ प्लवनतरणयोः- तरीता, तरिता।<br>लिटि तु- ववरिथ। तेरिथ। | वॄतः ४२ |

| | | |
|---|---|---|
| वृतः ३८<br>इटो ३५<br>दीर्घः ३७ | ३९. न लिङि<br>'वृ' इत्यतः, ॠकारान्तेभ्यश्च उत्तरस्य इटो दीर्घो न भवति लिङि।<br>वरिषीष्ट। प्रावरिषीष्ट।<br>स्तॄञ्आच्छादने – आस्तरिषीष्ट। | न ४० |
| वृतः ३८<br>इटो ३५<br>दीर्घः ३७<br>न ४० | ४०. सिचि च परस्मैपदेषु<br>परस्मैपदेषु सिचि च 'वृ' इत्यतः, ॠकारान्तेभ्यश्च उत्तरस्य इटो दीर्घो न भवति।<br>प्रावारिष्टाम्, प्रावरिषुः।<br>अतारिष्टाम्, अतारिषुः।<br>अस्तारिष्टाम्, अस्तारिषुः।<br>परस्मैपदेषु इति किम् ? प्रावरीष्ट, प्रावरिष्ट। | |
| वृतः ३८ | ४१. इट् सनि वा<br>'वृ' इत्यतः, ॠकारान्तेभ्यश्च उत्तरस्य सनः इड् वा भवति।<br>विवरिषते, विवरीषते, वुवूर्षते। प्राविवरिषति, प्राविवरीषति, प्रावुवूर्षति। तितरिषति, तितरीषति, तितीर्षति।<br>चिकीर्षतीत्यत्र लाक्षणित्वान्नेट्। | वा ४३ |
| वृतः ३८<br>इड् ४१<br>वा ४१ | ४२. लिङ्सिचोरात्मनेपदेषु<br>'वृ' इत्यतः, ॠकारान्तेभ्यश्च उत्तरयोः लिङिसचो वा इड् भवति।<br>लिङि – वरिषीष्ट वृषीष्ट।<br>'न लिङि' इति निषेधादिटो न दीर्घः।<br>आस्तरिषीष्ट, आस्तीर्षीष्ट।<br>सिचि – अवरीष्ट, अवरिष्ट, अवृत। आस्तरीष्ट, आस्तरिष्ट, आस्तीर्ष्ट। | लिङ्सिचोः ४३ |
| लिङ्सिचोः ४२<br>आत्मनेपदेषु ४२<br>इट् ३५<br>वा ४१ | ४३. ऋतश्च संयोगादेः<br>संयोगादेश्च ऋकारान्ताद् (धातोः) लिङ्सिचोरात्मनेपदेषु इड् वा भवति। स्मरिषीष्ट, स्मृषीष्ट। अस्मरिषाताम्, अस्मृषाताम्।<br>'स्मृ चिन्तायाम्' 'भावकर्मणोः' इत्यात्मनेपदम्। | |

| | | |
|---|---|---|
| अर्धधातुकस्य ३५<br>वलादेः ३५<br>इड् ३५ | ४४. स्वरति-सूति-सूयति-धूञूदितो वा<br>स्वरति-सूति-सूयति-धूञूदितो वलादेरार्धधातुकस्येड् वा भवति।<br>'वा' इति वर्तमाने पुनर्वाग्रहणं लिङ्सिचोः निवृत्त्यर्थम्।<br>अन्यथा वाग्रहणसम्बद्धयोः तयोरप्यनुवृत्तिः स्यात्।<br>स्वृ शब्दोपतापयोः - स्वरिता, स्वर्त्ता।<br>षूङ् प्राणिगर्भविमोचने इत्यादादिकः - प्रसविता, प्रसोता।<br>षूङ् प्राणिप्रसवे इति दैवादिकः - सविता सोता।<br>धूञ् कम्पने - धविता, धोता।<br>ऊदिद्भ्यः - गुपू रक्षणे - गोपिता, गोप्ता। | वा ५१ |
| अर्धधातुकस्य ३५<br>वलादेः ३५<br>इड् ३५<br>वा ४४ | ४५. रधादिभ्यश्च<br>रधादिभ्यश्च वलादेरार्धधातुकस्य इड् वा भवति।<br>रध हिसासंराद्ध्योः - रद्धा, रधिता।<br>णश अदर्शने - नंष्टा, नशिता। | |
| अर्धधातुकस्य ३५<br>वलादेः ३५<br>इड् ३५<br>वा ४४ | ४६. निरः कुषः<br>निरः कुषो वलादेरार्धधातुकस्य इड् वा भवति।<br>कुष निष्कर्षे- निष्कोष्टा, निष्कोषिता। | निरः कुषः ४७ |
| निरः ४६<br>कुषः ४६ | ४७. इण्निष्ठायाम्<br>निरः कुषः निष्ठायाम् इड् भवति।<br>इड्ग्रहणं नित्यार्थम्।<br>निष्कुषितः। निष्कुषितवान्। | |
| अर्धधातुकस्य ३५<br>वलादेः ३५<br>इट् ३५<br>वा ४४ | ४८. तीष-सह-लुभ-रुष-रिषः<br>इष, सह, लुभ, रुष, रिषः ति (तकारादौ) आर्धधातुके (तकारादेः आर्धधातुकस्य) इड् वा भवति।<br>इषु इच्छायाम् - एष्टा, एषिता।<br>षह मर्षणे - सोढा, सहिता।<br>लुभ गार्द्ध्ये, लुभ विमोहने - लोब्धा, लोभिता।<br>रुष धातुः रोषार्थकः, हिंसार्थकश्च - रोष्टा, रोषिता।<br>रिष हिंसायाम् - रेष्टा, रेषिता। | |

| | | |
|---|---|---|
| इट् ३५<br>वा ४४ | **४९. सनीवन्तर्ध-भ्रस्ज-दम्भु-श्रि-स्वृ-यूर्णु-भर-ज्ञपि सनाम्**<br>इवन्त, ऋध, भ्रस्ज, दम्भु, श्रि, स्वृ, यु, ऊर्णु, भर, ज्ञपि, सन् - इत्येतेषां च सनि इड् वा भवति।<br>इवन्त - दिवु क्रीडादौ - दिदेविषति, दुद्यूषति।<br>ऋधु वृद्धौ - अर्दिधिषति, ईर्त्सति।<br>भ्रस्ज पाके - बिभ्रज्जिषति, बिभ्रक्षति। बिभर्ज्जिषति, बिभर्क्षति।<br>इडभावपक्षे-'भ्रस्जो रोपधयो रमन्यतरस्याम्' इति सूत्रेण विकल्पेन रमागमः।<br>दम्भु दम्भे- दिदम्भिषति,धिप्सति,धीप्सति। इडभावे 'दम्भ इच्च' इति सूत्रेण इकारादेशः, ईकारादेशश्च, 'हलन्ताच्च' इति सूत्रेण सनः कित्वम्, कित्त्वान्नकारस्य लोपः।<br>श्रिञ् सेवायाम्-उच्छिश्रयिषति,उच्छिश्रीषति।<br>स्वृ शब्दोपतापयोः-सिस्वरिषति,सुस्वूर्षति।<br>यु मिश्रणे-यियविषति,युयूषति।<br>ऊर्णुञ् आच्छादने- प्रोर्णुनविषति,प्रोर्णुनुविषति, प्रोर्णुनूषति।<br>भृञ् भरणे - बिभरिषति,बुभूर्षति।<br>ज्ञप मारणतोषणनिशामनेषु-जिज्ञपयिषति,ज्ञीप्सति।<br>षणु दाने, वन,षण सम्भक्तौ- सिसनिषति, सिषासति।<br>इदभावे 'जनसन०' इत्यात्वम्। | |
| इट् ३५<br>वा ४४ | **५०. क्लिशः क्त्वा-निष्ठयोः**<br>क्लिशः क्त्वानिष्ठयोः इड् वा भवति।<br>क्लिश उपतापे - क्लिष्ट्वा, क्लिशित्वा। क्लिष्टः, क्लिशितः। क्लिष्टवान्, क्लिशितवान्। | क्त्वा-निष्ठयोः५४ |
| क्त्वानिष्ठयोः५०<br>इट् ३५<br>वा ४४ | **५१. पूङश्च**<br>पूङश्च क्त्वानिष्ठयोः इड् वा भवति।<br>पूङ् पवने - पवित्वा, पूत्वा। पवितः, पूतः। पवितवान्, पूतवान्। | |
| क्त्वानिष्ठयोः५० | **५२. वसति-क्षुधोरिट्**<br>वसतिक्षुधोः क्त्वानिष्ठयोः इड् भवति।<br>वस निवासे - उषित्वा, उषितः, उषितवान्। क्षुध बुभुक्षायाम् - क्षुधित्वा, क्षुधितः, क्षुधितवान्।<br>पुनरिड्ग्रहणं नित्यार्थम्। | |

| | | |
|---|---|---|
| क्त्वानिष्ठयोः५० <br> इट् ३५ | ५३. अञ्चेः पूजायाम् <br> अञ्चेः पूजायां क्त्वानिष्ठयोः इड् भवति। <br> अञ्चित्वा जानु जुहोति। <br> अञ्चिता अस्य गुरवः। <br> पूजायामिति किम् ? उदक्तमुदकं कूपात्। उद्धृतमित्यर्थः। | |
| क्त्वानिष्ठयोः५० <br> इट् ३५ | ५४. लुभो विमोहने <br> लुभो विमोहने क्त्वानिष्ठयोरिड् भवति। विमोहनम् = आकुलीकरणम्। <br> लुभित्वा, लोभित्वा। <br> 'रलो व्युपधाद्' इति वा कित्त्वम्। <br> विलुभिताः केशाः। <br> विमोहने इति किम् ? लुब्धो वृषलः। शीतेन पीडित इत्यर्थः। <br> लुब्ध्वा,लुभित्वा,लोभित्वा। <br> निष्ठायाम् 'यस्य विभाषा' इति सूत्रेण इटः प्रतिषेधः, क्त्वाप्रत्यये तु 'तीषसहलुभ०' इति सूत्रेण विकल्पेन इडागमः। | |
| इट् ३५ | ५५. जॄ-व्रश्च्योः क्त्वि <br> जॄ-व्रश्च्योः क्त्वि(क्त्वाप्रत्यये) इड् भवति। <br> जॄ वयोहानौ - जरित्वा, जरीत्वा। <br> व्रश्चित्वा। <br> 'न क्त्वा सेट्' इति कित्त्वस्य प्रतिषेधाद् 'ग्रहिज्या' इति सूत्रेण सम्प्रसारणं न। <br> क्त्वाग्रहणं निष्ठानिवृत्त्यर्थम्। | क्त्वि ५६ |
| क्त्वि ५२ <br> इट् ३५ | ५६. उदितो वा <br> उदितः (धातोः) क्त्वि इड् वा भवति। <br> शमु उपशमे-शमित्वा, शान्त्वा। <br> इडभावे 'अनुनासिकस्य क्विझलोः क्ङिति' इत्युपधादीर्घः। | वा ५७ |
| वा ५६ <br> इट् ३५ | ५७. सेऽसिचि कृत-चृत-च्छृद-तृद-नृतः <br> से (सकारादौ) असिचि आर्धधातुके कृत-चृत-च्छृद-तृद-नृतः इड् वा भवति। <br> कृती छेदने,कृती वेष्टने- कर्त्स्यति,कर्तिष्यति। <br> चृती हिंसासंग्रन्थनयोः -चर्त्स्यति, चर्तिष्यति। <br> उच्छिदिर् दीप्तिदेवनयोः -छर्त्स्यति, छर्दिष्यति। <br> उतृदिर् हिंसादानयोः -तर्त्स्यति, तर्दिष्यति। <br> नृती गात्रप्रक्षेपे- नर्त्स्यति, नर्तिष्यति। | से ६० |

| | | |
|---|---|---|
| से ५७<br>आर्धधातुकस्य<br>३५<br>इट् ३५ | ५८. गमेरिट् परस्मैपदेषु<br>गमेरिड् भवति से (सकारादौ) आर्धधातुके परस्मैपदेषु।<br>इड्ग्रहणं नित्यार्थम्।<br>गम्लृ गतौ - गमिष्यति। जिगमिषति।<br>से इत्येव - गन्तास्मि, गन्तास्वः, गन्तास्मः। | परस्मैपदेषु ६० |
| परस्मैपदेषु ५८<br>इट् ३५<br>से ५७<br>आर्धधातुकस्य<br>३५ | ५९. न वृद्भ्यश्चतुर्भ्यः<br>वृतादिभ्यश्चतुर्भ्यः उत्तरस्य सकारादेरार्धधातुकस्य परस्मैपदेषु इड् न भवति।<br>वृतु वर्तने, वृधु वृद्धौ, शृधु शब्दकुत्सायाम्, स्यन्दू प्रस्रवणे - इत्येते वृतादयः चत्वारः।<br>वृतु - वर्त्स्यति। वृधु - वर्त्स्यति।<br>शृधु -शर्त्स्यति। स्यन्दू - स्यन्त्स्यति।<br>परस्मैपदेषु इत्येव - वर्तिष्यते।<br>वर्धिष्यते। शर्धिष्यते। स्यन्दिष्यते, स्यन्त्स्यते,<br>ऊदित्त्वादिडागमो वा। | न ६५ |
| परस्मैपदेषु ५८<br>इट् ३५<br>से ५७<br>आर्धधातुकस्य<br>३५<br>न ५९ | ६०. तासि च क्लृपः<br>क्लृपः उत्तरस्य तासेः, सकारादेश्चार्धधातुकस्य परस्मैपदेषु इड् न भवति।<br>कृपू सामर्थ्ये = कल्प्ता। कल्प्स्यति।<br>परस्मैपदेष्वित्येव - कल्पितासे, कल्प्तासे। कल्पिष्यते, कल्प्स्यते। ऊदित्वाद् वेट्। | तासि ६३ |
| न ५९<br>इट् ३५ | ६१. अचस्तास्वत् थल्यनिटो नित्यम्<br>तासौ ये नित्यानिटोऽजन्ता धातवः, तेभ्यस्तासाविव थलीडागमो न भवति।<br>क्रादिनियमात् प्राप्तः इट् प्रतिषिध्यतेऽनेन।<br>याता - ययाथ। चेता - चिचेथ। नेता - निनेथ। होता - जुहोथ। | थलि ६६<br>अनिटः<br>नित्यम् ६५ |
| तास्वत् ६१<br>थल्यनिटः ६१<br>इट् ३५<br>न ५९ | ६२. उपदेशेऽत्वतः<br>उपदेशे यो धातुरकारवान्, तासौ नित्यानिट्, तस्मात् तासाविव थलीडागमो न भवति।<br>पक्ता- पपक्थ। यष्टा - इयष्ठ। शक्ता - शशक्थ। | |

| | | |
|---|---|---|
| तास्वत् ६१<br>थल्यनिटः ६१<br>इट् ३५<br>न ५८ | ६३. ऋतो भारद्वाजस्य<br>ऋकारान्तो यो धातुस्तासौ नित्यानिट्, तस्मात् तासाविव थलीडागमो न भवति, भारद्वाजस्य मतेन।<br>स्मर्ता – सस्मर्थ<br>अचस्तास्वदिति पूर्वसूत्रेणैव सिद्धेऽयमारम्भो नियमार्थः – भारद्वाजस्य मतेन ऋदन्तादेव थलीडागमो न भवति, अन्येभ्यस्तु भवत्येव। तेन भारद्वाजमते – ययिथ, वविव, पेचिथ, शेकिथ इत्यादौ अजन्तेभ्यः, अकारवद्भ्यश्च धातुभ्यः, परस्य लिटि इडागमो भवत्येव, अन्येषां मते तु न इति– ययाथ, ववाथ, पपक्थ, शशक्थ इत्याद्यपि रूपं भवति। | |
| | ६४. बभूथाततन्थ–जगृम्भ–ववर्थेति निगमे<br>बभूथ, आततन्थ, जगृम्भ, ववर्थ – इत्येतानि निपात्यन्ते निगमविषये।<br>निगमः = वेदः।<br>बभूथ। भाषायां तु बभूविथ इति।<br>आततन्थ । आतेनिथ इति भाषायाम्।<br>जगृम्भ। जगृहिमेति भाषायाम्।<br>ववर्थ। ववरियेति भाषायाम्।<br>क्रादिसूत्रादेवास्य प्रतिषेधे सिद्धे नियमार्थं वचनम् – निगम एव न भाषायामिति। | |
| थलि ६१<br>इट् ३५<br>न ५८ | ६५. विभाषा सृजि–दृशोः<br>सृजिदृशोस्थलि विभाषा इड् न भवति।<br>सृज विसर्गे – सस्रष्ठ, ससर्जिथ।<br>दृशिर् प्रेक्षणे – दद्रष्ठ, ददर्शिथ।<br>क्रादिनियमादिटि नित्यं प्राप्ते विकल्पार्थं वचनम्। सस्रष्ठ इतयत्र, दद्रष्ठ इत्यत्र च 'सृजिदृशोर्झल्यमकिति' इति अमागमः। | |
| थलि ६१ | ६६. इडत्त्यर्ति–व्ययतीनाम्<br>अत्ति, अर्ति, व्ययति– इत्येतेषां थलि इड् भवति।<br>अद भक्षणे – आदिथ।<br>ऋ गतौ– आरिथ।<br>व्येञ् संवरणे – संविव्ययिथ।<br>व्येञः 'न व्यो लिटि' इत्यात्त्वप्रतिषेधः। | |

| | | |
|---|---|---|
| इट् ३५ | ६७. वस्वेकाजाद्घसाम्<br>एकाच् (द्विर्वचने कृतेऽपि य एकाजेव भवति, स धातुः), आत् (आकारान्तो धातुः), घस् (अदो घस्लादेशः) - इत्येतेषां वसु इटं लभते।<br>एकाज् - आदिवान्, आशिवान्, पेचिवान्, शेकिवान्।<br>आत् - ययिवान, तस्थिवान्।<br>घस् - जक्षिवान्।<br>नियमार्थमिदम् - वसौ एकाजाद्घसामेव इड् भवति, नान्येषामिति। तेन बिभिद्वान् इत्यादौ क्रादिनियमादपि इड् न भवति। | वसु ६९ |
| वसौ ६७<br>इट् ३५ | ६८. विभाषा गम-हन-विद-विशाम्<br>गम-हन-विद-विशां (धातूनां) वसोर्विभाषा इड् भवति।<br>गम - जग्मिवान्, जगन्वान्।<br>'मो नो धातोः' इति नकारः।<br>हन - जघ्निवान्, जघन्वान।<br>विद - विविदिवान्, विविद्वान्।<br>विश - विविशिवान्, विविश्वान्।<br>विशिना साहचर्याद् विदेस्तौदादिकस्य लाभार्थस्य ग्रहणम्।<br>तेन ज्ञानार्थस्य तु नित्यं विविद्वान् इत्येव भवति। | |
| वसौ ६७<br>इट् ३५ | ६९. सनिं ससनिवांसम्<br>'सनिं ससनिवांसम्' इति निपात्यते।<br>अत्र 'सनिम्' इत्येतत्पूर्वात् सनतेः, सनोतेर्वा क्वसोरिट्, एत्वम्, अभ्यासलोपश्च निपात्यते।<br>अग्निजत्वाग्ने सनिंससनिवांसम्। सनिम्पूर्वादन्यत्र 'सेनिवासम्' इत्येव भवति। | |
| इट् ३५ | ७०. ऋद्धनोः स्ये<br>ऋकारान्तानां, हन्तेश्च स्ये इड् भवति।<br>करिष्यति, हरिष्यति। हनिष्यति। | |
| इट् ३५ | ७१. अञ्जेः सिचि<br>अञ्जेः सिचि इड् भवति।<br>'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु'।<br>आञ्जीत्, आञ्जिष्टाम्, आञ्जिषुः। | सिचि ७३ |
| इट् ३५<br>सिचि ७१ | ७२. स्तु-सू-धूञ्भ्यः परस्मैपदेषु<br>स्तु-सू-धूञ्भ्यः परस्मैपदेषु सिचि इड् भवति।<br>ष्टुञ् स्तुतौ - अस्तावीत्।<br>षुञ् अभिषवे - असावीत्।<br>धूञ् कम्पने - अधावीत्।<br>आत्मनेपदे तु - अस्तोष्ट। असोष्ट। अधोष्ट, अधविष्ट। | परस्मैपदेषु ७३ |

| | | |
|---|---|---|
| परस्मैपदेषु ७२<br>इट् ३५<br>सिचि ७१ | **७३. यम-रम-नमातां सक् च**<br>यम, रम, नम् - इत्येतेषामङ्गानाम्, आकारान्तानां च सक् इत्यागमो भवति परस्मैपदेषु सिचि, चकाराद् इडागमश्च।<br>यम उपरमे - अयंसीत्, अयंसिष्टाम्, अयंसिषुः।<br>रमु क्रीडायाम् - व्यरंसीत्, व्यरंसिष्टाम्, व्यरंसिषुः।<br>णम प्रह्वत्वे, शब्दे च - अनंसीत्, अनंसिष्टाम्, अनंसिषुः।<br>आकारान्तानाम् - अयासीत्, अयासिष्टाम्, अयासिषुः। | |
| इट् ३५ | **७४. स्मि-पूङ्-रञ्ज्वशां सनि**<br>स्मि-पूङ्-रञ्ज्वशां सनीड् भवति।<br>ष्मिङ् ईषद्धसने - सिस्मयिषते।<br>पूङ् पवने - पिपविषते।<br>ऋ गति-प्रापणयोः, ऋगतौ - अरिरिषति।<br>अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु- अञ्जिजिषति।<br>अशू व्याप्तौ - अशिशिषते।<br>अश भोजने इत्यस्यात्तु 'आर्धधातुकस्येड् वलादेः' इत्यनेनैव इट् - अशिशिषति। | सनि ७५ |
| इट् ३५<br>सनि ७४ | **७५. किरश्च पञ्चभ्यः**<br>किरादिभ्यः पञ्चभ्यः सनीड् भवति।<br>कॄ विक्षेपे, गॄ निगरणे, दृङ् आदरे, धृङ् अवस्थाने, प्रच्छ ज्ञीप्सायाम्- इत्येते पञ्च किरादयः।<br>चिकरिषति। जिगरिषति। दिदरिषते। दिधरिषते। पिप्रच्छिषति। | पञ्चभ्यः ७६ |
| वलादेः ३५<br>इट् ३५<br>पञ्चभ्यः ७५ | **७६. रुदादिभ्यः सार्वधातुके**<br>रुदादिभ्यः पञ्चभ्यः वलादेः सार्वधातुकस्येड् भवति।<br>रुदिर् अश्रुविमोचने, ञिष्वप् शये, श्वस प्राणने, अन च ; जक्ष अदने इत्येते पञ्च रुदादयः।<br>रोदिति। स्वपिति। श्वसिति। प्राणिति। जक्षिति। | सार्वधातुके ८१ |
| सार्वधातुकस्य ७६<br>इट् ३५ | **७७. ईशः से**<br>ईशः 'से' (इत्येतस्य) सार्वधातुकस्य इड् भवति।<br>'से' इत्यविभक्तिको निर्देशः।<br>ईश ऐश्वर्ये- लट्, थास्, से - ईशिषे, ईशिष्व। | से ७८ |

| | | |
|---|---|---|
| सार्वधातुकस्य<br>७६<br>इट् ३५<br>से ७७ | ७८. ईड-जनोर्ध्वे च<br>ईड-जनोः 'ध्वे' (इत्येतस्य), 'से' (इत्यस्य) च सार्वधातुकस्येड् भवति।<br>ईडिध्वे, ईडिध्वम्। ईडिषे, ईडिष्व।<br>जनिध्वे, जनिध्वम्। जनिषे, जनिष्व।<br>'ध्वे' इति कृतटेरेत्वस्य ग्रहणाद् लङि ध्वमि इड् न भवति। लोटि तु एकदेशविकृतस्य अनन्यत्वाद् इड् भवत्येव। तेन लङि ध्वमि ऐड्ढ्वम् इति रूपं भवति। | |
| सार्वधातुके ७६ | ७९. लिङः सलोपोऽनन्त्यस्य<br>सार्वधातुके यो लिङ् तस्य अनन्त्यस्य सस्य लोपो भवति।<br>कुर्यात्, कुर्याताम् कुर्युः। कुर्वीत, कुर्वीयाताम्, कुर्वीरन्। | |
| सार्वधातुके ७६<br>अङ्गस्य ६.४.१ | ८०. अतो येयः<br>अदन्तादङ्गादुत्तरस्य 'या' इत्येतस्य सार्वधातुकावयवस्य 'इय्' इत्यादेशो भवति।<br>पचेत्, पचेताम्, पचेयुः। | अतः ८२<br>इयः ८१ |
| इयः ८०<br>सार्वधातुके ७६<br>अङ्गस्य ६.४.१ | ८१. आतो ङितः<br>अदन्तादङ्गादुत्तरस्य ङितामाकारस्य इय् इत्योदशो भवति।<br>पचेते, पचेथे। पचेताम्, पचेथाम्। यजेते, यजेथे। यजेताम्, यजेथाम्। | |
| अतः ८०<br>अङ्गस्य ६.४.१ | ८२. आने मुक्<br>आने परतोऽदन्ताङ्गस्य मुगागमो भवति।<br>पच्+शानच्- पचमानः।<br>यज्+शानच्- यजमानः। | आने ८३ |
| आने (आनस्य)<br>८२ | ८३. ईदासः<br>आस (उत्तरस्य) 'आन' इत्येतस्य आकारस्य ईकारादेशो भवति।<br>'आदेः परस्य' इति सूत्रेण आकारस्य स्थाने आदेशो भवति अनेन।<br>आस्+शानच्- आसीनो यजते। | |
| हलि<br>८५(परसूत्रात्) | ८४. अष्टन आ विभक्तौ<br>अष्टनः आ इत्यादेशो वा भवति हलि(हलादौ) विभक्तौ।<br>अष्टाभिः, अष्टाभ्यः, अष्टानाम्, अष्टासु।<br>पक्षे- अष्टभिः, अष्टभ्यः, अष्टसु।<br>विकल्पेनायम् आकारो भवति,'अष्टनो दीर्घात्' इति सूत्रे दीर्घग्रहणाद्, 'अष्टाभ्य औश्' इति सूत्रे 'अष्टाभ्यः' इति कृतात्वनिर्देशाच्च। | आ ८८<br>विभक्तौ ११३ |

| | | |
|---|---|---|
| आ ८४<br>विभक्तौ ८४ | ८५. रायो हलि<br>रायः(रैशब्दस्य) आ इत्यादेशो भवति हलि (हलादौ) विभक्तौ।<br>रै-राः, राभ्याम्, राभिः। | हलि ८४<br>हलि ८६ |
| आ ८४<br>विभक्तौ ८४<br>हलि ८५ | ८६. युष्मदस्मदोरनादेशे<br>युष्मदस्मदोः आ इत्यादेशो भवति अनादेशे हलि (हलादौ) विभक्तौ।<br>युवाभ्याम्, युष्माभिः। आवाभ्याम्, अस्माभिः। | युष्मदस्मदोः ९८<br>अनादेशे ८९ |
| युष्मदस्मदोः ८६<br>आ ८४<br>विभक्तौ ८४ | ८७. द्वितीयायां च<br>युष्मदस्मदोः आ इत्यादेशो भवति द्वितीयायां विभक्तौ।<br>त्वाम्, माम्। युवाम्, आवाम्। युष्मान्, अस्मान्। | |
| युष्मदस्मदोः ८६<br>आ ८४<br>विभक्तौ ८४ | ८८. प्रथमायाश्च द्विवचने भाषायाम्<br>प्रथमायाश्च द्विवचने युष्मदस्मदोः आ इत्यादेशो भवति, भाषायाम्।<br>युवाम्, आवाम्।<br>भाषायाम् इति किम् ? छन्दसि आत्वं न भवति- युवं वस्त्राणि पीवसा वसाथे। | |
| युष्मदस्मदोः ८६<br>अनादेशे ८६<br>विभक्तौ ८४ | ८९. योऽचि<br>युष्मदस्मदोः यः इत्यादेशो भवति अनादेशे अचि (अजादौ) विभक्तौ।<br>त्वया, मया, त्वयि, मयि। | |
| युष्मदस्मदोः ८६<br>विभक्तौ ८४ | ९०. शेषे लोपः<br>युष्मदस्मदोः(अन्त्यस्य) लोपो भवति शेषे विभक्तौ। शेषे इत्यस्य आत्व-यत्वनिमित्तेतरविभक्तौ इत्यर्थः।<br>त्वम्, अहम्। यूयम्, वयम्। तुभ्यम्, मह्यम्। युष्मभ्यम्, अस्मभ्यम्। त्वत्, मत्। युष्मत्, अस्मत्। तव, मम। युष्माकम्, अस्माकम्। | |
| | ९१. मपर्यन्तस्य<br>अधिकारोऽयं 'प्रत्ययोत्तपदयोश्च'(७.२.९८) इत्यन्तं यावत्। | मपर्यन्तस्य ९८ |

| | | |
|---|---|---|
| युष्मदस्मदोः ८६ मपर्यन्तस्य ९१ | ९२. युवावौ द्विवचने<br>द्वयोरर्थयोः वचनम् = कथनम्, द्विवचनमिति यौगिकोऽत्र द्विवचनशब्दो गृह्यते न तु पारिभाषिकः। अतः सूत्रस्यार्थो भवति - द्वयोरर्थयोः वचने = कथने समर्थयोर्युष्मदस्मदोर्मपर्यन्तस्य स्थाने युव, आव इत्यादेशौ यथासंख्यं भवतः विभक्तौ परतः।<br>युवाम्, आवाम्। युवाभ्याम्, आवाभ्याम्। युवयोः आवयोः। | |
| युष्मदस्मदोः ८६ मपर्यन्तस्य ९१ | ९३. यूय-वयौ जसि<br>जसि (परतः) युष्मदस्मदोर्मपर्यन्तस्य यथासंख्यं यूय, वय - इत्यादेशौ भवतः।<br>यूयम्, वयम्। | |
| युष्मदस्मदोः ८६ मपर्यन्तस्य ९१ | ९४. त्वाहौ सौ<br>सौ (परतः) युष्मदस्मदोर्मपर्यन्तस्य यथासंख्यं त्व, अह- इत्यादेशौ भवतः।<br>त्वम्, अहम्। | |
| युष्मदस्मदोः ८६ मपर्यन्तस्य ९१ | ९५. तुभ्य-मह्यौ ङयि<br>ङयि ( ङेविभक्तौ परतः) युष्मदस्मदोः मपर्यन्तस्य यथासंख्यं तुभ्य, मह्य- इत्यादेशौ भवतः।<br>तुभ्यम्, मह्यम्। | |
| युष्मदस्मदोः ८६ मपर्यन्तस्य ९१ | ९६. तव-ममौ ङसि<br>ङसि (परतः) युष्मदस्मदोर्मपर्यन्तस्य तव, मम- इत्यादेशौ भवतः।<br>तव, मम। | |
| युष्मदस्मदोः ८६ मपर्यन्तस्य ९१ | ९७. त्व-मावेकवचने<br>एकस्यार्थस्य वचने = कथने, वर्तमानयोः युष्मदस्मदोर्मपर्यन्तस्य त्व, म- इत्यादेशौ भवतो विभक्तौ परतः।<br>त्वाम्, माम्। त्वया, मया।<br>त्वत्, मत्। त्वयि, मयि।<br>'युवावौ द्विवचने'(७.२.९२) इतिवद् अत्रापि एकवचनशब्दः एकस्यार्थस्य वचनम् = कथनम्, एकवचनमिति यौगिकोऽत्र गृह्यते न तु पारिभाषिकः। | त्वमौ एकवचने ९८ |

| | | |
|---|---|---|
| युष्मदस्मदोः ८६<br>मपर्यन्तस्य ६१<br>एकवचने ६७<br>त्वमौ ६७ | ६८. प्रत्ययोत्तरपदयोश्च<br>एकस्यार्थस्य वचने= कथने<br>वर्तमानयोर्युष्मदस्यदोर्मपर्यन्तस्य त्व, म- इत्यादेशौ भवतः, प्रत्यये, उत्तरपदे च परतः।<br>प्रत्यये - तवायं त्वदीयः। ममायं मदीयः। 'त्यदादीनि च' इति वृद्धसंज्ञकत्वाद् 'वृद्धाच्छः' इति सूत्रेण छप्रत्ययः।<br>उत्तरपदे - तव पुत्रः त्वत्पुत्रः। मम पुत्रः मत्पुत्रः। | |
| विभक्तौ ८४ | ६६. त्रि-चतुरोः स्त्रियां तिसृ-चतसृ<br>स्त्रियां (वर्तमानयोः) त्रिचतुरोः यथासंख्यं तिसृ, चतसृ- इत्यादेशौ भवतः, विभक्तौ (परतः)।<br>तिस्रः, चतस्रः। तिसृभिः, चतसृभिः। | तिसृचतसृ १०० |
| विभक्तौ ८४<br>तिसृचतसृ ६६ | १००. अचि र ऋतः<br>अजादौ विभक्तौ परतः तिसृ,चतसृ-इत्येतयोः ऋकारस्य रेफादेशो भवति।<br>तिस्रः तिष्ठन्ति। तिस्रः पश्य।<br>चतस्रः तिष्ठन्ति। चतस्रः पश्य। | अचि १०१ |
| विभक्तौ ८४<br>अचि १०० | १०१. जराया जरसन्यतरस्याम्<br>अजादौ विभक्तौ (परतः) जरायाः जरस् इत्यादेशोऽन्यतरस्यां भवति।<br>जरसौ, जरे। जरसः, जराः। जरसम्, जराम्। | |
| विभक्तौ ८४ | १०२. त्यदादीनामः<br>'त्यद्' इत्येवमादीनाम् अन्त्यस्य अकारादेशो भवति विभक्तौ।<br>स्यः, त्यौ,त्ये। सः,तौ,ते। यः,यौ,ये। एषः,एतौ,एते। इमौ,इमे। अमू,अमी। द्वौ,द्वाभ्याम्।<br>(इष्टिः) द्विपर्यन्तानामेवेष्टिः।<br>तनेह न- भवान्,भवन्तौ,भवन्तः। | त्यदादीनाम् १०६ |
| विभक्तौ ८४ | १०३. किमः कः<br>किमः कः (इत्यादेशः) भवति विभक्तौ।<br>कः, कौ, के। | किमः १०५ |
| किमः १०३ | १०४. कु तिहोः<br>तकारादौ, हकारादौ च विभक्तौ (परतः) किमः कु (इत्यादेशः) भवति।<br>'प्राग्दिशो विभक्तिः' इति तसिलादीनां विभक्तिसंज्ञा।<br>कुतः। कुत्र। कुह, 'वा ह च छन्दसि' इति हः।<br>'तिहोः' इतीकार उच्चारणार्थः। | |

| | | |
|---|---|---|
| किमः १०३ | १०५. क्वाति<br>'अत्' इत्यस्यां विभक्तौ परतः किमः 'क्व' (इत्यादेशो) भवति।<br>क्व गमिष्यसि। क्व भोक्ष्यसे। 'किमोऽत्' इति सप्तम्यन्तात् किमः अत्। | |
| त्यदादीनाम् १०२<br>विभक्तौ ८४ | १०६. तदोः सः सावनन्त्ययोः<br>त्यदादीनाम् अनन्त्ययोः तदोः सः (इत्यादेशो) भवति विभक्तौ।<br>सः, असौ। | सौ १०८ |
| सौ १०६ | १०७. अदस औ सुलोपश्च<br>सौ (परतः) अदसः औ (इत्यादेशो) भवति, सुलोपश्च।<br>असौ। | |
| सौ १०६ | १०८. इदमो मः<br>सौ (परतः) इदमो (मस्य) मः भवति।<br>अयम्। इयम्।<br>इदमो मकारस्य मकारवचनं त्यदाद्यत्वबाधनार्थम्। | इदमः११३<br>मः१०६ |
| इदमः १०८<br>मः१०८<br>विभक्तौ ८४ | १०६. दश्च<br>इदमो दस्य मो भवति, विभक्तौ (परतः)।<br>इमौ, इमे। इमम्, इमौ, इमान्। | |
| इदमः १०८<br>दश्च १०६ | ११०. यः सौ<br>इदमो दश्च यः भवति सौ।<br>इयम्।<br>उत्तरसूत्रे 'पुंसि' इति वचनात् स्त्रियामयं यकारः। | सौ १११ |
| इदमः १०८<br>सौ११० | १११. इदोऽय् पुंसि<br>इदमः इदः अय् इत्यादेशो भवति सौ पुंसि।<br>अयम्। | इदः ११३ |
| इदमः १०८<br>इदः १११<br>विभक्तौ ८४ | ११२. अनाप्यकः<br>अककारस्य (ककाररहितस्य) इदमः इदोऽन् इत्यादेशो भवति आपि विभक्तौ।<br>अनेन। अनयोः।<br>अक इति किम् ? इमकेन। इमकयोः। | |
| इदमः १०८<br>इदः १११<br>विभक्तौ ८४ | ११३. हलि लोपः<br>अककारस्य इदमः इदो लोपो भवति हलादौ आपि विभक्तौ।<br>आभ्यांम्, एभिः, एभ्यः, एषाम्, एषु।<br>'नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे' इति परिभाषया सम्पूर्णस्य इदोऽयं लोपः। | |

| | | |
|---|---|---|
| अङ्गस्य ६.४.१ | ११४. मृजेर्वृद्धिः<br>मृजेरङ्गस्येको वृद्धिर्भवति।<br>'इको गुणवृद्धी' इति परिभाषया 'इकः' इत्युपतिष्ठते।<br>मार्ष्टा। मार्ष्टुम्। मार्ष्टव्यम्। | वृद्धिः ७.३.३५ |
| वृद्धिः ११४<br>अङ्गस्य ६.४.१ | ११५. अचो ऽञ्णिति<br>अजन्तस्याङ्गस्य ञिति, णिति च परतः वृद्धिर्भवति।<br>ञिति – एकस्तण्डुलनिश्चायः। द्वौ शूर्पनिष्पावौ।<br>'परिमाणाख्यायां सर्वेभ्यः इति सूत्रेण घञ्।<br>णिति – गौः, गावौ, गावः। सखायौ, सखायः।<br>'गोतो णित्' 'सख्युरसम्बुद्धौ' इति सर्वनामस्थानस्य णिद्वद्भावः। | अचः ७.३.३१<br>ञ्णिति७.३.३५ |
| वृद्धिः ११४<br>ञ्णिति ११५<br>अङ्गस्य ६.४.१ | ११६. अत उपधायाः<br>अङ्गस्योपधाया अतः (स्थाने) ञिति, णिति च परतः वृद्धिर्भवति।<br>ञिति – पाकः, त्यागः, यागः।<br>भावे घञ्।<br>णिति – पाचयति, पाचकः। | |
| वृद्धिः ११४<br>ञ्णिति ११५ | ११७. तद्धितेष्वचामादेः<br>ञिति, णिति च तद्धिते(परे) अङ्गस्य अचामादेरचो वृद्धिर्भवति।<br>ञिति – गार्ग्यः। वात्स्यः। दाक्षिः। प्लाक्षिः।<br>'गर्गादिभ्यो यञ्' इति सूत्रेण यञ्प्रत्ययः, 'अत इञ्' इति सूत्रेण च इञ्प्रत्ययः।<br>णिति – औपगवः, कापटवः। प्राग्दीव्यतो ऽण्। | तद्धितेषु<br>अचामादेः<br>७.३.३१ |
| तद्धितेषु ११७<br>अचामादेः ११७<br>वृद्धिः ११४ | ११८. किति च<br>किति तद्धिते च परतो ऽङ्गस्य अचामादेरचो वृद्धिर्भवति।<br>नडादिभ्यः फक् – नाडायनः। चारायणः।<br>प्राग्वहतेष्ठक् – आक्षिकः। शालाकिकः। | किति ७.३.३१ |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां सप्तमाध्यायस्य द्वितीयः पादः ।।

।। श्रीः ।।

# ।। अथ सप्तमाध्यायस्य तृतीयः पादः ।।

| | | |
|---|---|---|
| ञ्णिति७.२.११५<br>किति ७.२.११८<br>तद्धिते७.२.११७ | १. देविका-शिंशपा-दित्यवाड्-दीर्घसत्र-श्रेयसामात्<br>देविका-शिंशपा-दित्यवाड्-दीर्घसत्र-श्रेयसाम् अचामादेरच आद् भवति ञ्णिति, किति च तद्धिते।<br>देविका नाम नदी तत्र भवमुदकम्- दाविकम्।<br>भवार्थेऽण् प्रत्ययः।<br>शिंशपायाः विकारः शांशपश्चमसः।<br>'पलाशादिभ्यो वा' इत्यनेन विकल्पेन अञ् प्रत्ययः, पक्षेऽण्।<br>दित्यौह इदम् दात्यौहम्, तस्येदमित्यर्थेऽण्।<br>दीर्घसत्रस्येदं दार्घसत्रम्।<br>तस्येदमित्यर्थेऽण्।<br>श्रेयसि भवं श्रायसम्। भवार्थेऽण्। | |
| ञ्णिति७.२.११५<br>किति ७.२.११८<br>तद्धिते७.२.११७ | २. केकय-मित्रयु-प्रलयानां यादेरियः<br>केकय-मित्रयु-प्रलयानां यकारादेः (शब्दस्वरूपस्य) इयः इत्यादेशो भवति।<br>केकयस्यापत्यं कैकेयः। अपत्यार्थेऽञ् प्रत्ययः।<br>मित्रयोर्भावः मैत्रेयुका।<br>भावे वुञ् प्रत्ययः।<br>प्रलयादागतं प्रालेयमुदकम्।<br>तत आगतम् इत्यर्थेऽण् प्रत्ययः। | |
| वृद्धिः ७.२.११४<br>ञ्णिति<br>७.२.११५<br>तद्धितेश्वचामादेः<br>६.२.११७ | ३. न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्<br>पदान्ताभ्यां य्वाभ्याम् (यकार-वकाराभ्याम् उत्तरस्य) अचामादेरचो वृद्धिर्न भवति, ताभ्याम् (य्वाभ्याम्) पूर्वौ तु ऐच् (आगमः) भवति।<br>व्याकरणमधीते, वेत्ति वा वैयाकरणः।<br>'तदधीते तद्वेद' इत्यण्।<br>स्वश्वस्यापत्यं सौवश्वः।<br>अपत्यार्थेऽण् प्रत्ययः, शिवादेराकृतिगणत्वात्। | न ४<br>य्वाभ्यां पूर्वौ तु ताभ्याम् ऐच् ६ |

| | | |
|---|---|---|
| न य्वाभ्यां पूर्वौ तु ताभ्याम् ऐच् ३<br>वृद्धिः ७.२.११४<br>ञ्णिति ७.२.११५<br>किति ७.२.११८<br>तद्धिते ७.२.११७<br>तद्धितेश्वचामादेः ६.२.११७ | ४. द्वारादीनां च<br>द्वारादीनां च अचामादेरचो वृद्धिर्न भवति, य्वाभ्यां पूर्वौ तु ऐच् भवति।<br>द्वारे नियुक्तः दौवारिकः।<br>'तत्र नियुक्तः' इति ठक्।<br>स्वरमधिकृत्य कृतो ग्रन्थः सौवरः।<br>'अधिकृत्य कृते ग्रन्थे' इत्यण्। | |
| न य्वाभ्यां पूर्वौ तु ताभ्याम् ऐच् ३<br>वृद्धिः ७.२.११४<br>तद्धिते ७.२.११७<br>तद्धितेश्वचामादेः ६.२.११७ | ५. न्यग्रोधस्य च केवलस्य<br>केवलस्य (पूर्वोत्तरपदरहितस्य) न्यग्रोधस्याचामादेरचो वृद्धिर्न भवति, यकारात् पूर्वं तु ऐच् भवति।<br>न्यग्रोधस्य विकारः नैयग्रोधश्चमसः।<br>'तस्य विकारः' इत्यण्।<br>केवलस्येति किम्? न्यग्रोधमूले भवाः न्याग्रोधमूलाः शालयः। | |
| न य्वाभ्यां पूर्वौ तु ताभ्याम् ऐच् ३<br>वृद्धिः ७.२.११४<br>तद्धितेश्वचामादेः ६.२.११७ | ६. न कर्मव्यतिहारे<br>पूर्वं यदुक्तं तत्कर्मव्यतिहारे न भवति। प्रतिषेधागमयोरयं प्रतिषेधः।<br>व्यावक्रोशी, व्यावलेखी, व्याववर्ती, व्यावहासी वर्तते।<br>'कर्मव्यतिहारे णच् स्त्रियाम्' इति सूत्रेण णञ्, तदन्ताद् 'णचः स्त्रियामञ्' इत्यनेन स्वार्थेऽञ् प्रत्ययः। | न ६ |
| न य्वाभ्यां पूर्वौ तु ताभ्याम् ऐच् ३<br>वृद्धिः ७.२.११४ | ७. स्वागतादीनां च<br>स्वागतादीनां च पूर्वमुक्तं न भवति।<br>स्वागमित्याह स्वागतिकः।<br>'तदाहेत्यादौ प्रभूतादिभ्य उपसंख्यानम्' इति वार्तिकेन ठक्।<br>व्यवहारेण चरति व्यावहारिकः। | |
| न य्वाभ्यां पूर्वौ ताभ्याम् ऐच् ३<br>वृद्धिः ७.२.११४ | ८. श्वादेरिञि<br>'श्वन्' शब्दः आदौ यस्य तस्याङ्गस्य इञि परतः वृद्धिनिषेधः, ऐजागमश्च न भवति।<br>श्वभस्त्रस्यापत्यं श्वाभस्त्रिः। श्वादंष्ट्रिः। श्वन्शब्दो द्वारादिषु पठ्यते, तत्र च तदादिविधिर्भवतीत्येतदेव वचनं ज्ञापकम्। | श्वादेः ६ |

| | | |
|---|---|---|
| श्वादेः ८ न य्वाभ्यां पूर्वौ ताभ्याम् ऐच् ३ वृद्धिः ७.२.११४ | ९. पदान्तस्यान्यतरस्याम्<br>श्वादेः पदशब्दान्तस्य पूर्वमुक्तं (वृद्धिप्रतिषेधः, ऐजागमश्च) अन्यतरस्याम् न भवति।<br>श्वापदस्येदं श्वापदम्, शौवापदम्। | |
| | १०. उत्तरपदस्य<br>अधिकारोऽयम् 'यथातथ-यथापुरयोः पर्यायेण'(७.३.३१) इत्यन्तं यावत्। | उत्तरपदस्य ३१ |
| उत्तरपदस्य १० ञ्णिति ७.२. ११५ किति ७.२.११८ तद्धिते ७.२. ११७ वृद्धिः ७.२.११४ | ११. अवयवादृतोः<br>अवयवाद् (अवयववाचिनः शब्दात्परस्य) ऋतोः (ऋतुवाचकस्य) उत्तरपदस्याचामादेरचो वृद्धिर्भवति ञ्णिति, किति च तद्धिते।<br>वर्षाणां पूर्वं पूर्ववर्षाः, तत्र जातादिः पूर्ववार्षिकः।<br>हेमन्तस्य पूर्वं पूर्वहेमन्तः, तत्र जातादिः पूर्वहैमनः।<br>'सर्वत्राण्, तलोपश्च' इत्यण्, तलोपश्च। | |
| उत्तरपदस्य १० ञ्णिति ७.२. ११५ किति ७.२.११८ तद्धिते ७.२. ११७ वृद्धिः ७.२.११४ | १२. सु-सर्वार्धाज्जनपदस्य<br>सु, सर्व, अर्ध - इत्येतेभ्य उत्तरस्य जनपदवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति, ञ्णिति, किति च तद्धिते।<br>सुपञ्चालेषु जातः सुपाञ्चालकः।<br>सर्वपञ्चालेषु जातः सर्वपाञ्चालकः।<br>अर्धपञ्चालेषु जातः अर्धपाञ्चालकः।<br>सर्वत्र 'जनपद-तदवध्योश्च' इत्यधिकारे 'अवृद्धादपि बहुवचनविषयात्' इति सूत्रेण वुञ्।<br>अस्मादेव ज्ञापकात् प्रत्ययविधावपि तदन्तविधिः, इति पञ्चालान्तशब्दादपि वुञ्प्रत्ययः। | जनपदस्य १३ |
| जनपदस्य १२ उत्तरपदस्य १० ञ्णिति ७.२. ११५ किति ७.२.११८ तद्धिते ७.२. ११७ वृद्धिः ७.२.११४ | १३. दिशोऽमद्राणाम्<br>दिशः (दिग्वाचिनः उत्तरस्य) मद्रवर्जितस्य उत्तरपदस्याचामादेरचो वृद्धिर्भवति, ञ्णिति, किति च तद्धिते।<br>पूर्वेषु पञ्चालेषु भवः पूर्वपाञ्चालकः।<br>अपरपाञ्चालकः। दक्षिणपाञ्चालकः।<br>अत्रापि पूर्ववद् वुञ् प्रत्ययः। | दिशः १४ |

| | | |
|---|---|---|
| उत्तरपदस्य १०<br>ञ्णिति ७.२.११५<br>किति ७.२.११८<br>तद्धिते ७.२.११७<br>वृद्धिः ७.२.११४<br>दिशः १३ | **१४. प्राचां ग्राम-नगराणाम्**<br>दिशः परे ये प्राच्यग्रामवाचिनः, प्राच्यनगरवाचिनश्च शब्दास्तेषामचामादेरचो वृद्धिर्भवति।<br>ग्रामाणाम् - पूर्वा चासौ इषुकामशमी इति पूर्वेषुकामशमी, तत्र भवः पूर्वैषुकामशमः।<br>'दिक्पूर्वपदासंज्ञायां ञः इति ञप्रत्ययः।<br>नगराणाम्- पूर्वस्मिन् पाटलिपुत्रे भवः पूर्वपाटलिपुत्रकः।<br>'रोपधेतोः प्राचाम् इति वुञ् प्रत्ययः।<br>पूर्वैषुकामशमः इत्येवमादिषु कृतायामुत्तरपदवृद्धौ एकादेशो भवतीति ज्ञापितम् 'नेन्द्रस्य परस्य' इति प्रतिषेधेन। | |
| उत्तरपदस्य १०<br>ञ्णिति ७.२.११५<br>किति ७.२.११८<br>तद्धिते ७.२.११७<br>वृद्धिः ७.२.११४ | **१५. संख्यायाः संवत्सर-संख्यस्य च**<br>संख्याया उत्तरस्य संवत्सरशब्दस्य, संख्यावाचकशब्दस्य च अचामादेरचो वृद्धिर्भवति, ञ्णिति, किति च तद्धिते परतः।<br>संवत्सरस्य- द्वौ संवत्सरावधीष्टो, भृतो, भूतो, भावी वा द्विसांवत्सरिकः।<br>संख्यायाः - द्वे षष्टी अधीष्टो, भृतो, भूतो, भावी वा द्विषाष्टिकः। | संख्यायाः १७ |
| संख्यायाः १५<br>उत्तरपदस्य १०<br>ञ्णिति ७.२.११५<br>किति ७.२.११८<br>तद्धिते ७.२.११७<br>वृद्धिः ७.२.११४ | **१६. वर्षस्याभविष्यति**<br>संख्याया उत्तरस्य वर्षशब्दस्य अचामादेरचो वृद्धिर्भवति ञ्णिति, किति च तद्धिते, स चेत्तद्धितो भविष्यर्थे न भवति।<br>द्वे वर्षे अधीष्टो, भृतो, भूतो वा द्विवार्षिकः।<br>अभविष्यतीति किम्? त्रीणि वर्षाणि भावीति त्रैवर्षिकम्। | |
| संख्यायाः १५<br>उत्तरपदस्य १०<br>ञ्णिति ७.२.११५<br>किति ७.२.११८<br>तद्धिते ७.२.११७<br>वृद्धिः ७.२.११४ | **१७. परिमाणान्तस्यासंज्ञाशाणयोः**<br>संख्यायाः (परस्य) परिमाणान्तस्य उत्तरपदस्य अचामादेरचो वृद्धिर्भवति ञ्णिति, किति च तद्धिते, असंज्ञाशाणयोः।<br>द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः। 'प्रयोजनम्' इति सूत्रेण ठञ्।<br>असंज्ञाशाणयोरिति किम् ? पाञ्चलोहितिकम्। पञ्च लोहित्यः परिमाणमस्य इति विग्रहे 'तदस्य परिमाणम्' इति सूत्रेण प्राग्वतेष्ठञ्प्रत्ययः। तद्धितान्तः समुदायश्चेयं संज्ञा।<br>द्वाभ्यां शाणाभ्यां क्रीतं द्वैशाणम्। 'शाणाद् वा','द्वित्रिपूर्वादण् च' इत्यण्। | |

| | | |
|---|---|---|
| ञ्णिति<br>७.२.११५<br>किति ७.२.११८<br>तद्धिते<br>७.२.११७<br>उत्तरपदस्य १०<br>वृद्धिः ७.२.११४ | १८. जे प्रोष्ठपदानाम्<br>'जे' इति जातार्थो निर्दिश्यते। एवं हि सूत्रस्यार्थो भवति – 'तत्र जातः' इत्यर्थे यस्तद्धितो विहितस्तस्मिन् ञ्णिति, किति च तद्धिते परतः प्रोष्ठपदानामुत्तरस्याचामादेरचो वृद्धिर्भवति।<br>प्रोष्ठपदाः नाम नक्षत्रम्, ताभिर्युक्तः काल इत्यण्। तस्य 'लुबविशेषे' इति लुप्।<br>प्रोष्ठपदासु जातः इति प्रोष्ठपादो माणवकः।<br>'ऋतुनक्षत्रेभ्योऽण्' इत्यण्। | |
| ञ्णिति<br>७.२.११५<br>किति ७.२.११८<br>तद्धिते<br>७.२.११७<br>उत्तरपदस्य १०<br>वृद्धिः ७.२.११४ | १९. हृद्भग-सिन्ध्वन्ते पूर्वपदस्य च<br>हृद्, भग, सिन्धु – इत्येवमन्ते अङ्गे पूर्वपदस्य,उत्तरपदस्य च अचामादेरचो वृद्धिर्भवति, ञ्णिति, किति च तद्धिते परतः।<br>सुहृदः इदं सौहार्दम्।<br>सुहृदयस्य भावः सौहार्द्यम्।<br>'वा शोकष्यञ्रोगेषु' इति हृद्भावः।<br>सुभगस्य भावः सौभाग्यम्।<br>दुर्भगस्य भावः दौर्भाग्यम्।<br>सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः, सक्तुसिन्धुषु भवः साक्तुसैन्धवः। | पूर्वपदस्य २५ |
| वृद्धिः ७.२.११४<br>पूर्वपदस्य १९<br>उत्तरपदस्य १० | २०. अनुशतिकादीनां च<br>'अनुशतिक' इत्येवमादीनामङ्गानां पूर्वपदस्य, उत्तरपदस्य च अचामादेरचो वृद्धिर्भवति, ञ्णिति, किति च तद्धिते परतः।<br>शतेन क्रीतः शतिकः, अनुगतः शतिकः अनुशतिकः, अनुशतिकस्येदम् आनुशातिकम्। इहलोके भवः ऐहलौकिकः। परलोके भवः पारलौकिकः। | |

| | | |
|---|---|---|
| वृद्धिः ७.२.११४<br>पूर्वपदस्य १६<br>ञ्णिति<br>७.२.११५<br>किति ७.२.११८<br>तद्धिते<br>७.२.११७<br>वृद्धिः ७.२.११४ | **२१. देवताद्वन्द्वे च**<br>देवताद्वन्द्वे पूर्वपदस्य, उत्तरपदस्य चाचामादेरचो वृद्धिर्भवति ञ्णिति, किति च तद्धिते।<br>आग्निमारुतं कर्म। आग्निवारुणीमनड्वाहीमालभेत।<br>अग्निश्च मरुच्चेति अग्नामरुतौ, 'देवताद्वन्द्वे च' इति सूत्रेण पूर्वपदस्य आनङ् ; 'अग्नामरुतौ देवता अस्य इति आग्निमारुतम्। 'साऽस्य देवता' इत्यण्। अत्र 'इद् वृद्धौ' इत्यनेन वृद्धिमत्युत्तरपदविषये 'देवताद्वन्द्वे च' इति सूत्रेण प्राप्तम् आनङं बाधित्वा अग्नेरिकारस्य इकार एव आदेशः।<br>'आग्निवारुणीम्' इत्यत्र तु 'ईदग्नेः सोमवरुणयोः' इति सूत्रेण प्राप्तम् ईकारादेशं बाधित्वा 'इद् वृद्धौ' इति सूत्रेण इकारादेशः | देवताद्वन्द्वे २३ |
| वृद्धिः ७.२.११४ | **२२. नेन्द्रस्य परस्य**<br>परस्येन्द्रस्य देवताद्वन्द्वे वृद्धिर्नभवति।<br>सौमेन्द्रः। | न २३ |
| वृद्धिः: ७.२.११४<br>न २२ | **२३. दीर्घाच्च वरुणस्य**<br>दीर्घात्परस्य वरुणस्य देवताद्वन्द्वे वृद्धिर्नभवति, ञ्णिति, किति च तद्धिते।<br>ऐन्द्रावरुणम्। मैत्रावरुणम्।<br>'देवताद्वन्द्वे च' (६.३.२५) इति सूत्रेण आनङ्।<br>दीर्घादिति किम्? आग्निवारुणीमनड्वाहीमालभेत। अत्र हि अग्नेः 'ईदग्नेः सोमवरुणयोः' इत्यानङपवादस्य 'इद् वृद्धौ' इति प्रतिषेधो विधीयते, तेन दीर्घात् परो न भवति। | |
| उत्तरपदस्य १०<br>पूर्वपदस्य १६<br>ञ्णिति<br>७.२.११५<br>वृद्धिः ७.२.११४<br>तद्धिते<br>७.२.११७<br>किति ७.२.११८ | **२४. प्राचां नगरान्ते**<br>प्राचां यन्नगरं तदन्तेऽङ्गे पूर्वपदस्य, उत्तरपदस्य च अचामादेरचो वृद्धिर्भवति, ञ्णिति, किति च तद्धिते।<br>सौह्मनागरः। पौण्ड्रनागरः। | |

| | | |
|---|---|---|
| उत्तरपदस्य १० पूर्वपदस्य १९ ञ्णिति ७.२.११५ किति ७.२.११८ वृद्धिः ७.२.११४ तद्धिते ७.२.११७ | २५. जंगल-धेनु-वलजान्तस्य विभाषितमुत्तरम्<br>जङ्गल-धेनु-वलजान्तस्य उत्तरपदं विभाषितं वृद्धिमद् भवति, ञ्णिति, किति च तद्धिते,पूर्वपदस्य तु नित्यं वृद्धिः।<br>कुरुजङ्गलेषु भवं कौरुजाङ्गलम् , कौरुजङ्गलं वा।<br>विश्वधेनुषु भवं वैश्वधैनवम्, वैश्वधेनवं वा।<br>सुवर्णवलजे भवः सौवर्णवालजः, सौवर्णवलजो वा। | |
| उत्तरपदस्य १० पूर्वपदस्य १९ ञ्णिति ७.२.११५ किति ७.२.११८ तद्धिते ७.२.११७ | २६. अर्धात् परिमाणस्य पूर्वस्य तु वा<br>अर्धात् परस्य परिमाणवाचकस्य उत्तरपदस्य वृद्धिर्भवति, पूर्वस्य तु वा वृद्धिर्भवति ञ्णिति, किति च तद्धिते।<br>आर्धद्रौणिकम्। अर्धद्रौणिकम्।<br>अर्धद्रोणेन क्रीतमित्यर्थे ठञ्। | अर्धात् परिमाणस्य २७ पूर्वस्य ३१ वा३० |
| अर्धात्२६ पूर्वस्य२६ परिमाणस्य २६ वा २६ ञ्णिति ७.२.११५ किति ७.२.११८ तद्धिते ७.२.११७ | २७. नातः परस्य<br>अर्धात् परस्य परिमाणवाचकस्य अतः (अकारस्य) वृद्धिर्नभवति, पूर्वस्य तु वा भवति, ञ्णिति, किति च तद्धिते।<br>अर्धप्रस्थेन क्रीतः आर्धप्रस्थिकः, अर्धप्रस्थिको वा। | |
| ञ्णिति ७.२.११५ किति ७.२.११८ तद्धिते ७.२.११७ उत्तरपदस्य १० पूर्वपदस्य १९ वा २६ वृद्धिः ७.२.११४ | २८. प्रवाहणस्य ढे<br>प्रवाहणशब्दस्य ढप्रत्यये परतः उत्तरपदस्य अचामादेः वृद्धिर्भवति, पूर्वस्य तु वा वृद्धिर्भवति।<br>प्रवाहणस्यापत्यं प्रावाहणेयः, प्रवाहणेयो वा। | प्रवाहणस्य २९ |

| | | |
|---|---|---|
| ञ्णिति<br>७.२.११५<br>किति ७.२.११८<br>तद्धिते<br>७.२.११७<br>उत्तरपदस्य १०<br>पूर्वपदस्य १९<br>वा २६<br>वृद्धिः ७.२.११४ | २९. तत्प्रत्ययस्य च<br>ढक्प्रत्ययान्तस्य प्रवाहणशब्दस्य तद्धितेषु परत उत्तरपदस्याचामादेरचो वृद्धिर्भवति, पूर्वस्य तु वा।<br>प्रवाहणेयस्यापत्यं प्रावाहणेयिः, प्रवाहणेयिः वा। | |
| ञ्णिति<br>७.२.११५<br>किति ७.२.११८<br>तद्धिते<br>७.२.११७<br>उत्तरपदस्य १०<br>पूर्वपदस्य १९<br>वा २६<br>वृद्धिः ७.२.११४ | ३०. नञः शुचीश्वर-क्षेत्रज्ञ-कुशल-निपुणानाम्<br>नञ (उत्तरेषाम्) शुचि, ईश्वर, क्षेत्रज्ञ, कुशल, निपुण-इत्येतेषामचामादेरचो वृद्धिर्भवति, पूर्वपदस्य तु वा भवति ञ्णिति, किति च तद्धिते परतः।<br>शुचि - आशौचम्, अशौचम्।<br>ईश्वर - आनैश्वर्यम्, अनैश्वर्यम्।<br>क्षेत्रज्ञ - आक्षैत्रज्ञ्यम्, अक्षैत्रज्ञ्यम्।<br>कुशल - आकौशलम्, अकौशलम्।<br>निपुण - आनैपुणम्, अनैपुणम्। | नञः ३१ |
| नञः ३०<br>वृद्धिः ७.२.११४<br>ञ्णिति<br>७.२.११५<br>किति ७.२.११८<br>तद्धिते<br>७.२.११७ | ३१. यथातथ-यथापुरयोः पर्यायेण<br>नञः उत्तरयोः यथातथ, यथापुर - इत्येतयोः पर्यायेणाचामादेरचो वृद्धिर्भवति, ञ्णिति, किति च तद्धिते परतः।<br>आयथातथ्यम्, अयाथातथ्यम्।<br>आयथापुर्यम्, अयाथापुर्यम्।<br>अयथातथ, अयथापुरेति नञ्समासावेतौ ब्राह्मणादिषु द्रष्टव्यौ। | |
| ञ्णिति<br>७.२.११५ | ३२. हनस्तोऽचिण्णलोः<br>हनस्तकारादेशो भवति ञ्णिति प्रत्यये परतः, चिण्णलौ वर्जयित्वा।<br>घातयति। घातकः।<br>अचिण्णलोरिति किम् ? अघानि। जघान। | |

| | | |
|---|---|---|
| ञ्णिति<br>७.२.११५ | **३३. आतो युक् चिण्-कृतोः**<br>आकारान्तस्याङ्गस्य चिणि, ञ्णिति कृति च परतो युगागमो भवति।<br>चिणि - अदायि, अधायि।<br>'चिणभावकर्मणोः' इति च्लेश्चिण्, 'चिणो लुक्' इति तशब्दस्य लुक्।<br>ञिति कृति - दायः, धायः।<br>'भावे' इति सूत्रेण 'अकर्तरि च कारके संज्ञायाम्' इति सूत्रेण वा घञ्।<br>णिति कृति - दायकः, धायकः।<br>'ण्वुल्तृचौ' इति ण्वुल्।<br>चिण्ग्रहणमकृदर्थम्, तेन दधौ, दधौ इत्यादौ णलि युग्न भवति। | चिण्-कृतोः ३५ |
| ञ्णिति<br>७.२.११५<br>चिण्-कृतोः ३३<br>अङ्गस्य ६.४.१ | **३४. नोदात्तोपदेशस्य मान्तस्यानाचमेः**<br>उदात्तोपदेशस्य मान्तस्याङ्गस्य चमिवर्जितस्य चिणि, कृति च ञ्णिति यदुक्तं तन्न भवति।<br>'अत उपधायाः' इति सूत्रेण प्राप्ताया वृद्धेरनेन निषेधो भवति।<br>चिणि - अशमि, अतमि, अदमि।<br>णिति कृति - शमकः, तमकः, दमकः। ण्वुल्।<br>ञिति कृति - शमः, तमः, दमः। घञ्। | न ३५ |
| वृद्धिः ७.२.११४<br>न ३४<br>चिण्-कृतोः ३३ | **३५. जनि-वध्योश्च**<br>जनि, वधि - इत्येतयेश्चिणि, कृति च ञ्णिति यदुक्तं तन्न भवति।<br>अजनि, जनकः, प्रजनः।<br>अवधि, वधकः, वधः। | |
| अङ्गस्य ६.४.१ | **३६. अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां पुग्णौ**<br>अर्त्ति, ह्री, व्ली, री, क्नूयी, क्ष्मायी- इत्येतेषामङ्गानाम्, आकारान्तानां च पुगागमो भवति णौ परतः।<br>ऋ गतिप्रापणयोः - अर्पयति।<br>ह्री लज्जायाम् - ह्रेपयति।<br>व्ली वरणे - व्लेपयति।<br>री गतिशोषणयोः, रीङ् श्रवणे - रेपयति।<br>क्नूयी शब्दे - क्नोपयति। 'लोपो व्योर्वलि' इति सूत्रेण यलोपः।<br>क्ष्मायी विधूनने - क्ष्मापयति। 'लोपो व्योर्वलि' इति सूत्रेण यलोपः।<br>आकारान्तानाम् - दापयति, धापयति। | णौ ४३ |

| | | |
|---|---|---|
| णौ ३६<br>अङ्गस्य ६.४.१ | **३७. शा-छा-सा-ह्वा-व्या-वे-पां युक्**<br>शा, छा, सा ह्वा, व्या, वे, पा - इत्येतेषामङ्गानां युगागमो भवति णौ परतः।<br>शो तनूकरणे - निशाययति।<br>छो छेदने- अवच्छाययति।<br>षोऽन्तकर्मणि - अवसाययति।<br>ह्वेञ् स्पर्धायां, शब्दे च - ह्वाययति।<br>व्येञ् संवरणे - संव्याययति।<br>वेञ् तन्तुसन्ताने - वाययति।<br>पा पाने, पै, ओ वै शोषणे - पाययति।<br>पा रक्षणे इत्यस्य लुग्विकरणत्वादत्र ग्रहणं न भवतिः तथा चास्ति परिभाषा -<br>लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य' इति। पा रक्षणे इत्यस्य तु अग्रिमेण वार्तिकेन 'पालयति' इति रूपं भवति।<br>(वा०) लुगामस्तु तस्य वक्तव्यः।<br>पा रक्षणे- पालयति।<br>(वा०) धूञ्प्रीञोर्नुग्वक्तव्यः।<br>धूञ् कम्पने- धूनयति।<br>प्रीञ् तर्पणे- प्रीणयति। | |
| णौ ३६<br>अङ्गस्य ६.४.१ | **३८. वो विधूनने जुक्**<br>विधूननेऽर्थे वर्तमानस्य 'वा' इत्येतस्य जुगागमो भवति णौ परतः।<br>विधूननम् = कम्पनम्।<br>'विधूनने' इतिनिर्देशो लिङ्गम् - धूञो णौ नुग्भवतीति।<br>वा गतिगन्धनयोः - वाजयति।<br>विधूनने इति किम् ? आवापयति केशान्।<br>'पै, ओ वै शोषणे' इत्यत्र पठितस्य 'ओ वै' इति धातोः आङ्पूर्वस्य 'आवापयति' इति रूपम्। | |

| | | |
|---|---|---|
| णौ ३६<br>अङ्गस्य ६.४.१ | ३९. ली-लोर्नुग्लुकावन्यतरस्यां स्नेहविपातने<br>ली, ला-इत्येतयोरङ्गयोरन्यतरस्यां यथासंख्यं नुक्, लुक् - इत्येतावागमौ भवतो णौ परतः, स्नेहविपातनेऽर्थे।<br>ली श्लेषणे, लीङ् श्लेषणे - विलीनयति, विलाययति घृतम्।<br>ला आदाने - विलालयति, विलापयति।<br>'ला' इत्यनेन कृतात्वस्य 'लीङ् श्लेषणे' इति दैवादिकस्यापि ग्रहणम्, आत्वं च 'विभाषा लीयतेः' इति सूत्रेण भवति। 'ली' इत्यनेन कृतात्वस्य लीधातोर्ग्रहणं न भवति, सूत्रे ली + ई इतीकारः प्रश्लिष्यते, तेन 'ली' इति पदेन ईकारान्तस्यैव ग्रहणं तत्रेष्यते। | |
| णौ ३६<br>अङ्गस्य ६.४.१ | ४०. भियो हेतुभये षुक्<br>'भी' इत्येतस्य हेतुभयेऽर्थे षुगागमो भवति णौ परतः।<br>मुण्डो भीषयते। जटिलो भीषयते। 'भीस्म्योर्हेतुभये' इत्यात्मनेपदम्।<br>अत्रापि भी + ई इति ईकारः प्रश्लिष्यते। तेन यत्र 'भी' नास्ति ईकारान्तस्तत्र षुग्न भवति। यथा मुण्डो भापयते इत्यत्र। अत्र 'बिभेतेर्हेतुभये' इत्यात्वम्।<br>हेतुभये इति किम् ? कुञ्जिकयैनं भाययति। नात्र हेतुः=प्रयोजकः कर्ता भयकारणम्। किं तर्हि ? कुञ्जिका। | |
| णौ ३६<br>अङ्गस्य ६.४.१ | ४१. स्फायो वः<br>'स्फायृ' इत्येतस्याङ्गस्य वकारादेशो भवति, णौ परतः।<br>स्फायी ओप्यायी वृद्धौ - स्फावयति। | |
| णौ ३६<br>अङ्गस्य ६.४.१ | ४२. शदेरगतौ तः<br>अगतावर्थे वर्तमानस्य शदेरङ्गस्य तकारादेशो भवति, णौ परतः।<br>शद्लृ शातने - शातयति पुष्पाणि।<br>अगतौ इति किम् ? गाः शादयति गोपालः। | |
| णौ ३६<br>अङ्गस्य ६.४.१ | ४३. रुहः पोऽन्यतरस्याम्<br>रुहेरङ्गस्यान्यतरस्यां पकारादेशो भवति, णौ परतः।<br>व्रीहीन् रोपयति, रोहयति वा।<br>रुह जन्मनि, प्रादुर्भावे च। | |

| | | |
|---|---|---|
| | ४४. प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः<br>प्रत्ययस्थात्ककारात्पूर्वस्याकारस्य इकारादेशो भवति, आपि परतः, स आप् सुपः परो न भवेत्।<br>कारिका। हारिका।<br>असुपः इति किम् ? बहवः परिव्राजकाः यस्यां नगर्यां सा बहुपरिव्राजका नगरी। | अतः ४६ इत् ४८ |
| अतः ४४ इत् ४४ | ४५. न-यासयोः<br>या, सा - इत्येतयोरिकारोदेशो न भवति।<br>यका। सका।<br>'या सा' इति निर्देशोऽतन्त्रम् यत्तदोरुपलक्षणमेतत्।<br>इहापि प्रतिषेध इष्यते- यकां यकामधीमहे, तकां तकां पचामहे इति।<br>(वा०) क्षिपकादीनां चोपसंख्यानम्।<br>क्षिपका। ध्रुवका। | न४६ |
| अतः ४४ इत् ४४<br>न ४५ | ४६. उदीचामातः स्थाने यकपूर्वायाः<br>उदीचामाचार्याणां मतेन यकपूर्वाया आतः स्थाने योऽकारस्तस्य कात्पूर्वस्य इकारादेशो न भवति।<br>उदीचांग्रहणं विकल्पार्थम्।<br>आर्यका, आर्यिका। चटकका, चटकिका।<br>यकपूर्वाया इति स्त्रीलिङ्गनिर्देशः स्त्रीप्रत्ययस्य आकारस्य प्रतिपत्त्यर्थम्। तेनेह न भवति प्रतिषेधः शुभं याति इति शुभंयाः, शुभंया एव शुभंयिका। | उदीचाम् ४८<br>आतः स्थाने ४६ |
| अतः ४४<br>आतः ४६<br>इत् ४४<br>न ४५<br>उदीचाम् ४६ | ४७. भस्त्रैषा-जा-ज्ञा-द्वा-स्वा नञ्पूर्वाणामपि<br>'स्वा' इत्यन्तं लुप्तषष्ठीकं पदम्।<br>भस्त्रा, एषा, अजा, ज्ञा, द्वा, स्वा- इत्येतेषां नञ्पूर्वाणाम्, अपिशब्दात् शुद्धानाम्, अन्यपूर्वाणामपि आतः स्थाने योऽकारतस्य इकारादेशो न भवति, उदीचामाचार्याणां मतेन।<br>भस्त्रा - भस्त्रका, भस्त्रिका। अभस्त्रका, अभस्त्रिका।<br>बहुभस्त्रका, बहुभस्त्रिका।<br>एषा - एषका, एषिका।<br>कृतषत्वनिर्देशान्नेह निषेधः- एतिके, एतिकाः।<br>अजा - अजका, अजिका<br>ज्ञा - ज्ञका, ज्ञिका<br>द्वा - द्वके, द्विके।<br>स्वा - बहुस्वका, बहुस्विके। | |

| | | |
|---|---|---|
| अतः ४४<br>आतः ४६<br>इत् ४४<br>न ४५<br>उदीचाम् ४६ | ४८. अभाषितपुंस्काच्च<br>अभाषितपुंस्काद् विहितस्याऽऽतः स्थाने योऽकारस्तस्य उदीचामाचार्याणां मतेन इकारादेशो न भवति।<br>खट्वका, खट्विका। अखट्वका, अखट्विका।<br>परमखट्वका, परमखट्विका।<br>बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य इत्वं नित्यं भवति – अज्ञाता अखट्वा अखट्विका। | अभाषितपुंस्कात् ४९ |
| अभाषितपुंस्कात् ४८<br>अतः ४४<br>आतः ४६ | ४९. आदाचार्याणाम्<br>अभाषितपुंस्कादातः स्थाने योऽकारस्तस्य स्थाने आद् भवति आचार्याणां मतेन।<br>खट्वाका, अखट्वाका, परमखट्वाका।<br>एवं हि अभाषितपुंस्केषु त्रीणि रूपाणि भवन्ति – अट्वाका इति प्रकृतसूत्रेण, अट्वका, अखट्विका इति च पूर्वसूत्रेण। | |
| | ५०. ठस्येकः<br>ठस्येकः भवति।<br>आक्षिकः। लावणिकः। | ठस्य ५१ |
| ठस्य ५० | ५१. इसुसुक्तान्तात्कः<br>इसुसुक्तान्तात् ठस्य कः भवति।<br>'इसुसुक्तान्तात्' इति पदे इस् च उस् च उक् च तश्चेति विग्रहे समाहारद्वन्द्वे कृते अन्तशब्देन बहुव्रीहिसमासः।<br>इसन्तात्- सार्पिष्कः।<br>उसन्तात्- धानुष्कः।<br>उगन्तात्- नैषादकार्षुकः।<br>निषादकर्षूशब्दाद् जातार्थे ठञ्।<br>तकारान्तात्- औदश्वित्कः।<br>उदश्विति संस्कृत इति विग्रहे ठक्। | |
| | ५२. चजोः कु घिण्ण्यतोः<br>चजोः(चकारजकारयोः) कु (कवर्गादेशो) भवति घिति, ण्यति च प्रत्यये परे।<br>घिति- पाकः। त्यागः। रागः।<br>ण्यति – पाक्यम्। वाक्यम्। रिचु- रेक्यम्। | चजोः कु ६९ |
| कु ५२ | ५३. न्यङ्क्वादीनां च<br>'न्यङ्कु' इत्येवमादीनां सिद्धये कवर्गादेशो भवति।<br>न्यङ्कुः – 'नावञ्चतेः' इति अञ्चतेः उप्रत्ययः।<br>मद्गुः – 'मि-मस्जिभ्यः' इति मस्जेः उप्रत्ययः। | |

| | | |
|---|---|---|
| | ५४. हो हन्तेर्ञ्णिन्नेषु<br>ञिति, णिति (प्रत्यये), नकारे च परे हन्तेर्हकारस्य कुः (कवर्गादेशो) भवति।।<br>ञिति - घातः।<br>णिति - घातकः।<br>नकारे - घ्नन्ति। | हः ५५ हन्तेः५५ |
| हन्तेः ५४<br>हः ५४<br>कु ५२ | ५५. अभ्यासाच्च<br>अभ्यासाच्च हन्तेर्हः कुः(कवर्गादेशो) भवति।<br>जघान। जिघांसति। जङ्घन्यते। | अभ्यासात् ५८ |
| अभ्यासात् ४८<br>हन्तेः ५४<br>हः ५४<br>कु ५२ | ५६. हेरचङि<br>अभ्यासात् परस्य हेः (हिगतौ, इत्येतस्य धातोः) हकारस्य कुः(कवर्गादेशो) भवति, अचङि।<br>प्रजिघाय।<br>अचङि इति किम् ? प्राजीहयद् दूतम्। | |
| अभ्यासात् ४८<br>कु ५२ | ५७. सन्-लिटोर्जेः<br>अभ्यासात् परस्य जेः (जिधातोः) कुः (कवर्गादेशो) भवति सन्लिटोः।<br>जिगाय। जिगीषति। | सन्-लिटोः ५८ |
| अभ्यासात् ४८<br>कु ५२<br>सन्लिटोः ५७ | ५८. विभाषा चेः<br>अभ्यासात् परस्य चेः (चिधातोः) कुः(कवर्गादेशो) विभाषा भवति सन्लिटोः।<br>चिञ् चयने- चिकाय। चिकीषति।<br>पक्षे चिचाय। चिचीषति। | |
| चजोः ५२<br>कु ५२ | ५९. न क्वादेः<br>क्वादेः (कवर्गादेः धातोः) चजोः कुः (कवर्गादेशो) न भवति।<br>कूज अव्यक्ते शब्दे- कूजो वर्तते। कूज्यम्।<br>गर्ज शब्दे- गर्जः। गर्ज्यम्। | न ६६ |
| चजोः ५२<br>कु ५२<br>न ५९ | ६०. अजि-व्रज्योश्च<br>अजि-व्रज्योश्च चजोः कुः(कवर्गादेशो) न भवति।<br>अज गति-क्षेपणयोः - समाजः, उदाजः।<br>'समुदोरजः पशुषु' इति घञ्।<br>वज, व्रज गतौ- परिव्राजः, परिव्राज्यम्। | |

| | | |
|---|---|---|
| कु ५२<br>न ५६ | ६१. भुज-न्युब्जौ पाण्युपतापयोः<br>भुज-न्युब्जौ पाण्पुपतापयोः निपात्येते।<br>उपतापः = रोगः।<br>भुज पालनाभ्यवहारयोः, घञि-भुजः पाणिः।<br>उब्ज आर्जवे -न्युब्जः।<br>न्युब्जिताः = अधोमुखाः, निश्चेष्टा वा शेरतेऽस्मिन्<br>इति न्युब्जः उपतापः। | |
| कु ५२<br>न ५६ | ६२. प्रयाजानुयाजौ यज्ञाङ्गे<br>प्रयाजानुयाजौ यज्ञाङ्गे निपात्येते।<br>पञ्च प्रयाजाः। पञ्चानुयाजाः। | |
| कु ५२<br>न ५६ | ६३. वञ्चेर्गतौ<br>वञ्चेर्गतौ कुः (कवर्गादेशो) न भवति।<br>वञ्चुर्गत्यर्थः - वञ्च्यं वञ्चन्ति वणिजः। गन्तव्यं<br>गच्छन्तीत्यर्थः।<br>गतौ इति किम् ? वङ्कं काष्ठम्। कुटिलमित्यर्थः।<br>'हलश्च' इति घञ्। गुणवाचकोऽयं शब्दः<br>अभेदोपचाराद् गुणिनि वर्तते। | |
| कु ५२<br>न ५६ | ६४. ओक उचः के<br>उचः कप्रत्यये ओकः इति निपात्यते।<br>न्योकः शकुन्तः। न्योको गृहम्।<br>न्योकः शकुन्तः इत्यत्र 'उच समवाये' इत्येतस्माद्<br>निपूर्वाद् कर्तरि 'इगुपध०' इति सूत्रेण कप्रत्ययः,<br>न्योको गृहम् इत्यत्र च अधिकरणे 'घञर्थे कविधानम्'<br>इति वार्तिकेन कप्रत्ययः। | |
| कु ५२<br>न ५६<br>चजोः ५२ | ६५. ण्य आवश्यके<br>आवश्यकेऽर्थे ण्ये चजोः कुः (कवर्गादेशो) न भवति।<br>अवश्यपाच्यम्। अवश्यवाच्यम्। | ण्ये ६६ |
| कु ५२<br>न ५६<br>ण्ये ६५ | ६६. यज-याच-रुच-प्रवचर्चश्च<br>यज, याच, रुच, प्रवच, ऋच- इत्येतेषां ण्ये चजोः<br>कुः(कवर्गादेशो) न भवति।<br>यज देवपूजासङ्गतिकरणदानेषु- याज्यम्।<br>टु याचृ याच्ञायाम्- याच्यम्।<br>रुच दीप्तौ- रोच्यम्।<br>वच परिभाषणे- प्रवाच्यम्।<br>ऋच स्तुतौ- अर्च्यम्। | |

| | | |
|---|---|---|
| कु ५२<br>न ५९<br>ण्ये ६५ | ६७. वचोऽशब्दसंज्ञायाम्<br>वचोऽशब्दसंज्ञायां ण्ये कुः(कवर्गादेशो) न भवति।<br>वाच्यमाह। अवाच्यमाह।<br>शब्दसंज्ञायां तु कुत्वं भवत्येव - अवघुषितं वाक्यमाह। | |
| कु ५२<br>न ५९<br>ण्ये ६५ | ६८. प्रयोज्य-नियोज्यौ शक्यार्थे<br>प्रयोज्य - नियोज्यौ शक्यार्थे निपात्येते।<br>प्रयोक्तुं शक्यः प्रयोज्यः।<br>नियोक्तुं शक्यः नियोज्यः। | |
| कु ५२<br>न ५९<br>ण्ये ६५ | ६९. भोज्यं भक्ष्ये<br>भक्ष्ये भोज्यं निपात्यते।<br>भुज पालनाभ्यवहारयोः-भोज्य ओदनः।<br>भक्ष्ये इति किम् ? भोग्यः कम्बलः। रक्षणीयः इत्यर्थः। | |
| | ७०. घोर्लोपो लेटि वा<br>घोः (घुसंज्ञकधातोः अन्त्यस्य) लोपो वा भवति लेटि।<br>दधद् रत्नानि दाशुषे।<br>सोमो ददद् गन्धर्वाय।<br>न च भवति - यदग्निरग्नये ददात्। | लोपः ७२ |
| लोपः ७० | ७१. ओतः श्यनि<br>ओतः(ओकारस्य) लोपो भवति श्यनि।<br>शो तनूकरणे - निश्यति।<br>छो छेदने- अवच्छ्यति।<br>दो अवखण्डने- अवद्यति।<br>षो अन्तकर्मणि - अवस्यति। | |
| लोपः ७० | ७२. क्सस्याचि<br>क्सस्य अचि(अजादौ प्रत्यये परतः) लोपो भवति।<br>अधुक्षाताम्, अधुक्षाथाम्, अधुक्षि।<br>दुहेर्लुङि च्लेः 'शल इगुपधादनिटः क्सः' इति क्सः। | क्सस्य ७३ |
| क्सस्य ७२ | ७३. लुग्वा दुह-दिह-लिह-गुहामात्मनेपदे दन्त्ये<br>दुह-दिह-लिह-गुहां क्सस्य लुग्वा भवति दन्त्ये (दन्त्यादौ) आत्मनेपदे परतः।<br>दुह प्रपूरणे - अदुग्ध, अधुक्षत। अदुह्वहि, अधुक्षावहि।<br>दिह उपचये - अदिग्ध, अधिक्षत।<br>लिह आस्वादने - अलीढ, अलिक्षत।<br>गुह संवरणे - न्यगूढ, न्यघुक्षत। | |

| | | |
|---|---|---|
| | ७४. शमामष्टानां दीर्घः श्यनि<br>शमाम् (शमादीनाम्) अष्टानाम्(अचः) दीर्घो भवति श्यनि।<br>शाम्यति। ताम्यति। दाम्यति। श्राम्यति। भ्राम्यति। क्षाम्यति। क्लाम्यति। माद्यति। | दीर्घः ७६ |
| दीर्घः ७४ | ७५. ष्ठिवु-क्लम्याचमां शिति<br>ष्ठिवु-क्लम्याचमां शिति दीर्घो भवति।<br>ष्ठिवु निरसने-ष्ठीवति।<br>क्लमु ग्लानौ- क्लामति।<br>क्लमिग्रहणं शबर्थम्,श्यनि तु पूर्वसूत्रेणैव दीर्घः सिद्धः।<br>चमु अदने आङ्पूर्वः - आचामति।<br>सूत्रे आङ्पूर्वस्य चमेः ग्रहणाद् इह न भवति- चमति, विचमति। | शिति ८२ |
| दीर्घः ७४<br>शिति ७५ | ७६. क्रमः परस्मैपदेषु<br>क्रमः परस्मैपदेषु शिति दीर्घो भवति।<br>क्रम पादविक्षेपे - क्रामति, क्रामतः, क्रामन्ति।<br>परस्मैपदेषु इति किम् ? आक्रमते आदित्यः। अत्र 'आङ उद्गमने' इत्यात्मनेपदम्। | |
| शिति ७५ | ७७. इषु-गमि-यमां छः<br>इषु-गमि-यमां छो भवति शिति।<br>इष इच्छायाम्- इच्छति।<br>गम्लृ गतौ- गच्छति।<br>यम उपरमे- यच्छति। | |

| | | |
|---|---|---|
| शिति ७५ | ७८. पा-घ्रा-ध्मा-स्था-म्ना-दाण्दृश्यर्ति-शद-सदां पिब-जिघ्र-धम-तिष्ठ-मन-यच्छ-पश्यर्छ्-धौ-शीय-सीदाः<br>पा, घ्रा, ध्मा, स्था, म्ना, दाण्, दृशि, अर्त्ति (ऋधातुः), सर्त्ति, शद, सद - इत्येतेषां यथासंख्यं पिब, जिघ्र धम, तिष्ठ, मन, यच्छ, पश्य, ऋच्छ, धौ, शीय, सीद- इत्येते आदेशा भवन्ति शिति परतः।<br>अकारान्ता इमे आदेशाः। धौ इत्यौकारान्तः।<br>पा पाने - पिबति।<br>घ्रा गन्धोपादाने - जिघ्रति।<br>ध्मा शब्दाग्निसंयोगयोः - धमति।<br>ष्ठा गतिनिवृत्तौ - तिष्ठति।<br>म्ना अभ्यासे - मनति।<br>दाण् दाने - यच्छति।<br>दृशिर् प्रेक्षणे - पश्यति।<br>सृ गतौ - धावति।<br>ऋ गति-प्रापणयोः - ऋच्छति।<br>शद्लृ शातने - शीयते।<br>षद्लृ विशरणे इति तौदादिकः, षद्लृ विशरणगत्यवसादनेषु इति भौवादिकः, उभयोर्ग्रहणम् - सीदति। | |
| शिति ७५ | ७९. ज्ञा-जनोर्जा<br>ज्ञा , जन - इत्येतयोः 'जा' इत्यादेशो भवति शिति परतः।<br>ज्ञा अवबोधने- जानाति।<br>जनी प्रादुर्भावे- जायते। | |
| शिति ७५ | ८०. प्वादीनां ह्रस्वः<br>'पू' इत्येवमादीनां ह्रस्वो भवति शिति परतः।<br>प्वादयः क्र्यादिषु पठ्यन्ते।<br>पूञ् पवने - पुनाति।<br>लूञ् छेदने - लुनाति।<br>स्तॄञ् आच्छादने- स्तृणाति, स्तृणीते। | ह्रस्वः ८१ |
| शिति ७५<br>ह्रस्वः ८०<br>अङ्गस्य ६.४.१ | ८१. मीनातेर्निगमे<br>मीनातेरङ्गस्य शिति प्रत्यये परतो ह्रस्वो भवति, निगमविषये।<br>मीञ् हिंसायाम् - प्रमिणन्ति व्रतानि। | |

| शिति ७५<br>अङ्गस्य ६.४.१ | ८२. मिदेर्गुणः<br>मिदेरङ्गस्येको गुणो भवति शिति प्रत्यये परतः।<br>ञि मिदा स्नेहने - मेद्यति, मेद्यतः, मेद्यन्ति। | गुणः ८८ |
|---|---|---|
| गुणः ८२<br>अङ्गस्य ६.४.१ | ८३. जुसि च<br>जुसि प्रत्यये च परतः इगन्तस्याङ्गस्य गुणो भवति।<br>अजुहवुः। अबिभयुः। अबिभरुः।<br>उदाहरणेषु 'हु दानादानयोः', 'ञि भी भये' 'डु भृञ् धारणपोषणयोः- इत्येतेभ्यः लङि, शपः श्लुः, द्विर्वचनम्, अभ्यासकार्यम्, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस्। | |
| गुणः ८२<br>अङ्गस्य ६.४.१ | ८४. सार्वधातुकार्धधातुकयोः<br>सार्वधातुके, आर्धधातुके च प्रत्यये परतः इगन्तस्याङ्गस्य गुणो भवति।<br><u>सार्वधातुके</u><br>णीञ् प्रापणे - नयति।<br>भू सत्तायाम् - भवति।<br>तॄ प्लवनतरणयोः - तरति।<br><u>आर्धधातुके</u><br>चिञ् चयने - चेता।<br>ष्टुञ् स्तुतौ - स्तोता।<br>डुकृञ् करणे - कर्ता। | सम्पूर्णसूत्रम् ८६ |
| सार्वधातुकार्ध-धातुकयोः ८४<br>गुणः ८२<br>अङ्गस्य ६.४.१ | ८५. जाग्रोऽवि-चिण्-णल्-ङित्सु<br>जाग्रः सार्वधातुके, आर्धधातुके च प्रत्यये परतः गुणो भवति , न तु वि-चिण्-णल्-ङित्सु ।<br>'जागृ निद्राक्षये' - जागरयति। जागरकः। जागरो वर्तते। जागरितः। जागरितवान्।<br>वृद्धिविषये, प्रतिषेधविषये च गुणो यथा स्यादित्ययमारम्भः।<br>अवि-चिण्-णल्-ङित्सु इति किम् ?<br>वि - जागृविः। 'जॄ-शॄ-स्तॄ-जागृभ्यः क्विन्' इति क्विन्प्रत्ययः।<br>चिण् - अजागारि।<br>णल् - जजागार।<br>ङित् - जागृतः। जागृथः। | |

| | | |
|---|---|---|
| गुणः ८२<br>सार्वधातुकार्ध-<br>धातुकयोः ८४<br>अङ्गस्य ६.४.१ | ८६. पुगन्त-लघूपधस्य च<br>पुगन्तस्य, लघूपधस्य चाङ्गस्येको गुणो भवति सार्वधातुकार्धधातुकयोः परतः।<br>पुगन्तस्य- ह्रेपयति, व्लेपयति, क्नोपयति।<br>लघूपधस्य - भेदनम्, छेदनम्, भेत्ता, छेत्ता। | पुगन्तलघूपधस्य८७ |
| लघूपधस्य ८६<br>गुणः ८२<br>अङ्गस्य ६.४.१ | ८७. नाभ्यस्तस्याचि पिति सार्वधातुके<br>अभ्यस्तसंज्ञकस्य लघूपधस्याङ्गस्याजादौ पिति सार्वधातुके गुणो न भवति।<br>नेनिजानि, वेविजानि, परिवेविषाणि। अनेनिजम्, अवेविजम्, पर्यवेविषम्। | न अभ्यस्तस्य ८८<br>पिति ६४<br>सार्वधातुके १०१ |
| सार्वधातुके ८७<br>गुणः ८२<br>न ८७<br>अङ्गस्य ६.४.१ | ८८. भू-सुवोस्तिङि<br>भू, सू- इत्येतयोस्तिङि सार्वधातुके गुणो न भवति।<br>भू सत्तायां लुङि- अभूत्, अभूः, अभूवम्।<br>षूङ् प्राणिगर्भविमोचने- सुवै, सुवावहै, सुवामहै। | |
| सार्वधातुके ८७<br>पिति ८७<br>नाभ्यस्तस्य८७<br>अङ्गस्य ६.४.१ | ८६. उतो वृद्धिर्लुकि हलि<br>उकारान्तस्याङ्गस्य वृद्धिर्भवति लुकि सति हलादौ पिति सार्वधातुके, न तु अभ्यस्तस्य।<br>यौति, यौषि, यौमि। नौति, नौषि, नौमि। स्तौति, स्तौषि, स्तौमि।<br>'नाभ्यस्तस्य' इत्येतदिहानुवर्त्तते योयोति, रोरोति- इत्येवमाद्यर्थम्। अत्र यङो लुक्। | वृद्धिः६०<br>हलि१०० |
| वृद्धिः ८६<br>हलि ८६<br>पिति ८७<br>सार्वधातुके ८७ | ६०. ऊर्णोतेर्विभाषा<br>ऊर्णोतेर्विभाषा वृद्धिर्भवति हलादौ पिति सार्वधातुके।<br>ऊर्णुञ् आच्छादने- प्रोर्णौति, प्रोर्णोति। प्रोर्णौषि, प्रोर्णोषि। प्रोर्णौमि, प्रोर्णोमि। | ऊर्णोतेः ६१ |
| सार्वधातुके ८७<br>पिति ८७<br>ऊर्णोतेः६०<br>हलि ८६ | ६१. गुणोऽपृक्ते<br>ऊर्णोतेर्धातोरपृक्ते हलादौ पिति सार्वधातुके गुणो भवति।<br>प्रौर्णोत्। प्रौर्णोः। | |
| सार्वधातुके ८७<br>पिति ८७<br>हलि ८६ | ६२. तृणह इम्<br>'तृणह' इत्येतस्याङ्गस्य इमागमो भवति हलादौ पिति सार्वधातुके।<br>तृह हिंसायाम् - तृणेढि, तृणेक्षि, तृणेह्मि। अतृणेट्।<br>सूत्रे 'तृणहः' इत्यागतश्नम्को गृह्यते, श्नमि कृते इमागमो यथा स्यादिति। | |

| | | |
|---|---|---|
| सार्वधातुके ८७<br>पिति ८७<br>हलि ८९ | ९३. ब्रुव ईट्<br>ब्रू इत्येतस्मादुत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति।<br>ब्रूञ् व्यक्तायां वाचि -ब्रवीति। ब्रवीषि। ब्रवीमि। अब्रवीत्। | ईट् ९८ |
| सार्वधातुके ८७<br>पिति ८७<br>हलि ८९<br>ईट् ९३ | ९४. यङो वा<br>यङ उत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो वा भवति।<br>शाकुनिको लालपीति। दुन्दुभिर्वावदीति। त्रिधा बद्धो वृषभो रोरवीति।<br>यङ लुगन्तान्येतानि।<br>न च भवति - वर्वर्ति, चर्कर्ति, चक्रम्।<br>यङन्ते शपि कृते पित् सार्वधातुकं हलादि न भवतीति अस्य सूत्रस्य यङ्लुगन्तानि उदाहरणत्वेन दीयन्ते। | वा ९५ |
| वा ९४<br>हलि ८९<br>ईट् ९३ | ९५. तु-रु-स्तु-शम्यमः सार्वधातुके<br>तु-रु-स्तु-शमि,अम्-इत्येतेभ्यः हलादौ सार्वधातुके ईडागमो वा भवति।<br>उत्तवीति, उत्तौति।<br>उपरवीति, उपरौति।<br>उपस्तवीति, उपस्तौति।<br>शमीध्वम्, शाम्यध्वम्।<br>अभ्यमीति, अभ्यमति। | |
| सार्वधातुके ९५<br>ईट् ९३ | ९६. अस्ति-सिचोऽपृक्ते<br>अस्ति-सिचोऽपृक्ते सार्वधातुके ईडागमो भवति।<br>अस् भुवि-आसीत्।<br>सिचि - आकार्षीत्। असावीत्। अलावीत्। अपावीत्।<br>अपृक्ते इति किम् ? अस्ति। अकार्षम्। | अस्ति-सिचः ९७<br>अपृक्ते १०० |
| सार्वधातुके ९५<br>ईट् ९३<br>अस्ति ९६<br>सिचो ९६ | ९७. बहुलं छन्दसि<br>अस्तिसिचोऽपृक्ते सार्वधातुके ईड् बहुलं भवति छन्दसि।<br>अस्तेः - आप एवेदं सलिलं सर्वमाः। आसीदिति स्थाने 'आः' इति क्रियापदम्।<br>सिचः - गोभिरक्षाः। 'अक्षाः' इति 'क्षर सञ्चलने' इत्यस्य लुङि, तिपि रूपम्। | |

| | | |
|---|---|---|
| सार्वधातुके ९५<br>हलि ८९<br>ईट् ९३<br>अपृक्ते ९६ | ९८. रुदश्च पञ्चभ्यः<br>रुदश्च (रुदादिभ्यः) पञ्चभ्यः अपृक्ते सार्वधातुके ईड् भवति।<br>अरोदीत्। अस्वपीत्। अश्वसीत्। प्राणीत्। अजक्षीत्। लङ्, लुङि चैतानि समानि रूपाणि,रूपसिद्धिप्रक्रिया तु उभयोर्भिन्ना। | रुदः पञ्चभ्यः ९९ |
| सार्वधातुके ९५<br>अपृक्ते ९६<br>रुदः९८<br>पञ्चभ्यः ९८ | ९९. अड् गार्ग्य-गालवयोः<br>रुदादिभ्यः पञ्चभ्यः अपृक्ते सार्वधातुके अड् भवति गार्ग्यगालवयोर्मतेन।<br>अरोदत्। अस्वपत्। अश्वसत्। प्राणत्। अजक्षत्। | अट् १०० |
| सार्वधातुके ९५<br>अपृक्ते ९६ | १००. अदः सर्वेषाम्<br>अदः अपृक्ते सार्वधातुके सर्वेषामाचार्याणां मतेन अड् भवति।<br>आदत्, आदः। | |
| सार्वधातुके ९५<br>अङ्गस्य ६.४.१ | १०१. अतो दीर्घो यञि<br>अतः (अदन्ताङ्गस्य) दीर्घो भवति यञि (यञादौ) सार्वधातुके परतः।<br>पचामि, पचावः। पचामः। | अतः १०४<br>दीर्घः यञि १०२ |
| अतो १०१<br>दीर्घो१०१<br>यञि १०१<br>अङ्गस्य ६.४.१ | १०२. सुपि च<br>अतो(अदन्ताङ्गस्य) दीर्घो भवति यञि (यञादौ) सुपि च परतः।<br>वृक्षाय, प्लक्षाय। वृक्षाभ्याम्, प्लक्षाभ्याम्। | सुपि १०३ |
| अतः १०१<br>सुपि१०२<br>अङ्गस्य ६.४.१ | १०३. बहुवचने झल्येत्<br>झलि (झलादौ) बहुवचने सुपि परतः अतः (अदन्ताङ्गस्य) एत् (एकारादेशः) भवति।<br>वृक्षेभ्यः। वृक्षेषु। | एत् १०६ |
| अतः १०१<br>एत् १०३<br>अङ्गस्य ६.४.१ | १०४. ओसि च<br>ओसि च अतः (अदन्ताङ्गस्य) एत् (एकारादेशः) भवति।<br>वृक्षयोः स्वम्। वृक्षयोर्निधेहि। | ओसि १०५ |
| अतः १०१<br>एत् १०३<br>अङ्गस्य ६.४.१ | १०५. आङि चापः<br>आङि, ओसि च आपः (आबन्तस्याङ्गस्य) एत् (एकारादेशः) भवति।<br>खट्वया। खट्वयोः। | आपः १०६ |

| | | |
|---|---|---|
| अतः १०१<br>एत् १०३<br>अङ्गस्य ६.४.१ | १०६. सम्बुद्धौ च<br>सम्बुद्धौ च आपः (आबन्तस्याङ्गस्य) एत् (एकारादेशः) भवति।<br>हे खट्वे। | सम्बुद्धौ १०८ |
| सम्बुद्धौ १०६<br>अङ्गस्य ६.४.१ | १०७. अम्बार्थनद्योर्ह्रस्वः<br>अम्बार्थनद्योर्ह्रस्वो भवति सम्बुद्धौ परतः।<br>अम्बार्थानाम्-हे अम्ब ! हे अक्क ! हे अल्ल!<br>नद्यन्तानाम्- हे नदि ! हे शाङ्र्गरवि ! हे ब्रह्मबन्धु ! | |
| सम्बुद्धौ १०६<br>अङ्गस्य ६.४.१ | १०८. ह्रस्वस्य गुणः<br>ह्रस्वान्ताङ्गस्य गुणो भवति सम्बुद्धौ परतः।<br>हे अग्ने ! हे वायो ! | ह्रस्वस्य १०९<br>गुणः १११ |
| गुणः १०८<br>ह्रस्वस्य १०८<br>अङ्गस्य ६.४.१ | १०९. जसि च<br>जसि च ह्रस्वान्ताङ्गस्य गुणो भवति।<br>अग्नयः। वायवः। | |
| गुणः १०८<br>अङ्गस्य ६.४.१ | ११०. ऋतो ङि-सर्वनामस्थानयोः<br>ऋतो(ऋकारान्ताङ्गस्य) गुणो भवति ङौ, सर्वनामस्थाने च परतः।<br>ङौ - मातरि। पितरि। कर्तरि।<br>सर्वनामस्थाने - मातरौ। पितरौ। कर्तारौ। | |
| गुणः १०८<br>अङ्गस्य ६.४.१ | १११. घेर्ङिति<br>घिसंज्ञकस्याङ्गस्य गुणो भवति ङिति।<br>अग्नये। वायवे। अग्नेः। वायोः। | ङिति ११५ |
| ङितः १११<br>अङ्गस्य ६.४.१ | ११२. आण् नद्याः<br>नदीसंज्ञकात् अङ्गात् परस्य ङितः आट्(आगमः) भवति।<br>कुमार्यै। कुमार्याः। कुमार्याम्। | |
| ङितः १११<br>अङ्गस्य ६.४.१ | ११३. याडापः<br>आपः(आबन्ताङ्गात् परस्य) ङितः याट्(आगमः) भवति।<br>खट्वायै। खट्वायाः। खट्वायाम्। | आपः ११४ |
| ङितः १११<br>आपः११३<br>अङ्गस्य ६.४.१ | ११४. सर्वनाम्नः स्याड्ढ्रस्वश्च<br>आपः(आबन्ताङ्गात्) सर्वनाम्नः परस्य ङितः स्याट्(आगमः) भवति, आपो ह्रस्वश्च।<br>सर्वस्यै। सर्वस्याः। सर्वस्याम्। | स्याट् ११५<br>ह्रस्वश्च११५ |
| ङितः १११<br>स्याट्११४<br>ह्रस्वश्च११४<br>अङ्गस्य ६.४.१ | ११५. विभाषा द्वितीया-तृतीयाभ्याम्<br>द्वितीयातृतीयाभ्यां ङितः स्याट्, आपो ह्रस्वश्च विकल्पेन भवति।<br>द्वितीयस्यै, द्वितीयायै। तृतीयस्यै, तृतीयायै। | |

| अङ्गस्य ६.४.१ | ११६. ङेराम्नद्याम्नीभ्यः<br>ङ्यन्ताद्, आबन्ताद्, नीशब्दाच्च अङ्गात् परस्य ङेः आम् (आदेशः) भवति।<br>नदी – कुमार्याम्।<br>आप् – खट्वायाम्।<br>नी – राजन्याम्। | ङेः ११९<br>आम् ११७<br>नद्याः ११७ |
|---|---|---|
| ङेराम् ११६<br>नद्याः ११६ | ११७. इदुद्भ्याम्<br>इदुद्भ्यां (नदीसंज्ञकाभ्याम्) परस्य ङेराम् भवति।<br>कृति – कृत्याम्। धेनु – धेन्वाम्। | इदुद्भ्याम् ११८ |
| इदुद्भ्याम् ११७<br>ङेः ११६ | ११८. औत्<br>इदुद्भ्यां परस्य ङेरौत् भवति।<br>यन्न नदीसंज्ञम्, नापि घिसंज्ञमिकारान्तं तदिहोदाहरणम्।<br>उकारानुवृतिरुत्तरार्था।<br>सख्यौ। पत्यौ। | औत् ११९ |
| ङेः ११६<br>औत् ११८ | ११९. अच्च घेः<br>इदुद्भ्यां परस्य ङेरौत् भवति, घेश्च अकारादेशः।<br>अग्नौ। वायौ। कृतौ। धेनौ। | घेः १२० |
| घेः ११९ | १२०. आङो नाऽस्त्रियाम्<br>घेः परस्य आङो ना इत्यादेशो भवति, स्त्रियां तु ना इत्यादेशो न भवति।<br>अग्निना। वायुना। पटुना।<br>पुंसि इति नोक्तम् – अमुना ब्राह्मणकुलेन।<br>अस्त्रियामिति किम्? कृत्या। धेन्वा। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां सप्तमाध्यायस्य तृतीयः पादः।।

।। श्रीः ।।

## ।। अथ सप्तमाध्यायस्य चतुर्थः पादः ।।

| | | |
|---|---|---|
| अङ्गस्य ६.४.१ | १. णौ चङ्युपधाया ह्रस्वः<br>चङ्परे णौ परतः अङ्गस्योपधाया ह्रस्वो भवति।<br>अचीकरत्। अजीहरत्। अलीलवत्। अपीपवत्। | णौ चङि ८<br>उपधायाः ८<br>ह्रस्वः३ |
| णौ १<br>चङि १<br>उपधायाः १<br>ह्रस्वः १<br>अङ्गस्य ६.४.१ | २. नाग्लोपि-शास्वृदिताम्<br>अग्लोपि-शास्वृदिता अङ्गानामुपधायाः चङ्परे णौ परतः ह्रस्वो न भवति।<br>अग्लोपिनाम् - मालाम् आख्यत् इति अममालत्।<br>शासेः - अशशासत्।<br>ऋदिताम् - बाधृ लोडने - अबबाधत्।<br>टु याचृ याच्ञायाम् - अययाचत्। | |
| णौ १<br>चङि १<br>उपधायाः १<br>ह्रस्वः १<br>अङ्गस्य ६.४.१ | ३. भ्राज-भास-भाष-दीप-जीव-मील-पीडामन्यतरस्याम्<br>भ्राज, भास, भाष, दीप, जीव, मील, पीड- इत्येतेषाम् अङ्गानाम् उपधायाः अन्यतरस्यां ह्रस्वो भवति चङ्परे णौ परतः।<br>अबिभ्रजत्, अबभ्राजत्।<br>अबीभसत्, अबभासत्।<br>अबीभषत्, अबभाषात्।<br>अदीदिपत्, अदिदीपत्।<br>अजीजिवत्, अजिजीवत्।<br>अमीमिलत्, अमिमीलत्।<br>अपीपिडत्, अपिपीडत्।<br>(वा०) काण्यादीनां चेति वक्तव्यम्।<br>अचकणत्, अचीकणत्। | |
| णौ १<br>चङि १<br>उपधायाः १<br>अङ्गस्य ६.४.१ | ४. लोपः पिबतेरीच्चाभ्यासस्य<br>पिबतेरुपधाया लोपो भवति, अभ्यासस्य (ईकारान्तादेशश्च) ईच्च भवति, णौ चङि (चङ्परे णौ परतः)।<br>अपीप्यत्, अपीप्यताम्, अपीप्यन्।<br>'पा' धातोर्णिचि 'शास्छासाह्वर-व्या-वेपां-युक्' इति युकि कृते उपधाया आकारस्य लोपो भवति। | |

| | | |
|---|---|---|
| णौ १<br>चङि १<br>उपधायाः १<br>अङ्गस्य ६.४.१ | ५. तिष्ठतेरित्<br>तिष्ठतेरङ्गस्योपधाया इकारादेशो भवति चङ्परे णौ परतः।<br>अतिष्ठिपत्, अतिष्ठिपताम्, अतिष्ठिपन्।<br>चङ्परे णौ परतः। | इत् ६ |
| णौ १<br>चङि १<br>उपधायाः १<br>इत् ५<br>अङ्गस्य ६.४.१ | ६. जिघ्रतेर्वा<br>जिघ्रतेरङ्गस्योपधाया इकारादेशो वा भवति चङ्परे णौ परतः।<br>अजिघ्रिपत्, अजिघ्रिपताम्, अजिघ्रिपन्।<br>अजिघ्रपत्, अजिघ्रपताम्, अजिघ्रपन्। | वा ७ |
| णौ १<br>चङि १<br>उपधायाः १<br>अङ्गस्य ६.४.१ | ७. उर्ऋत्<br>अङ्गस्योपधाया उः (ऋवर्णस्य) स्थाने ऋत् (ऋकारादेशः) वा भवति चङ्परे णौ परतः।<br>इर्,अर्, आर्- इत्येतेषाम् अपवादोऽयम्।<br>कॄत संशब्दने- अचीकृतत्।<br>पक्षे 'ॠत इद् धातोः' इतीत्त्वे - अचिकीर्त्तत्।<br>वृतु वर्तने - अवीवृतत्।<br>पक्षे लघूपधगुणेन अववर्तत्।<br>मृजूष् शुद्धौ - अमीमृजत्।<br>पक्षे मृजेर्वृद्धिः अममार्जत्।<br>वचनसामर्थ्यादन्तरङ्गा अपि इररारो बाध्यन्ते। | उः ऋत् ८ |
| णौ १<br>चङि १<br>उपधायाः १<br>उर्ऋत्७<br>अङ्गस्य ६.४.१ | ८. नित्यं छन्दसि<br>छन्दसि अङ्गस्योपाधाया उः (ऋवर्णस्य) नित्यमृकारादेशो भवति चङ्परे णौ परतः।<br>अवीवृधत् पुरोडाशेन, अवीवृधताम्, अवीवृधन्। | |
| अङ्गस्य ६.४.१ | ९. दयतेर्दिगि लिटि<br>दयतेरङ्गस्य दिगि इत्यादेशो भवति लिटि परे।<br>दीङ् क्षये - अवदिग्ये, अवदिग्याते,अवदिग्यिरे।<br>दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यते। | लिटि १२ |
| लिटि ९<br>अङ्गस्य ६.४.१ | १०. ऋतश्च संयोगादेर्गुणः<br>संयोगादेः ऋतश्च (ऋदन्तस्याङ्गस्य च) लिटि परे गुणो भवति।<br>स्मृ आध्याने - सस्मरतुः, सस्मरुः।<br>प्रतिषेधविषये गुणो यथा स्यादित्ययमारम्भः।<br>वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते - सस्मार। | गुणः ११ |

| लिटि ६<br>गुणः १०<br>अङ्गस्य ६.४.१ | ११. ऋच्छत्यॄताम्<br>ऋच्छतेरङ्गस्य, ऋ इत्येतस्य, ॠकारान्ताताना‌ं च लिटि परे गुणो भवति।<br>ऋच्छति, ऋ, ॠताम् इतिच्छेदः बहुवचननिर्देशात्।<br>ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु - आनर्च्छ, आनर्च्छतुः, आनर्च्छुः।<br>ऋ गतौ - आरतुः, आरुः।<br>ॠताम् - कॄ विक्षिपे - निचकरतुः, निचकरतुः।<br>वृद्धिविषये पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते - आर, निचकार। | |
|---|---|---|
| लिटि ६<br>अङ्गस्य ६.४.१ | १२. शॄ-दॄ-प्रां ह्रस्वो वा<br>शॄ-दॄ-पॄ- इत्येतेषामङ्गानां लिटि परे ह्रस्वो वा भवति।<br>पक्षे पूर्वसूत्रेण गुणः।<br>शॄ हिंसायाम् - विशश्रतुः, विशशरतुः।<br>दॄ विदारणे - विदद्रतुः, विददरतुः।<br>पॄ पालनपूरणयोः - निपप्रतुः, निपपरतुः। | ह्रस्वः १५ |
| ह्रस्वः १२ | १३. केऽणः<br>कप्रत्यये परेऽणो ह्रस्वो भवति।<br>ज्ञका। कुमारिका। | अणः १४ |
| ह्रस्वः १२<br>अणः १३ | १४. न कपि<br>कपि अणो ह्रस्वो न भवति।<br>बहुकुमारीकः।<br>'नद्यृतश्च' इति समासान्तः कप्। | न कपि १५ |
| ह्रस्वः १२<br>कपि १४<br>न १४<br>अङ्गस्य ६.४.१ | १५. आपोऽन्यतरस्याम्<br>आबन्ताङ्गस्यान्यतरस्यां परे ह्रस्वो न भवति।<br>बहुमालकः, बहुमालाकः। | |
| अङ्गस्य ६.४.१ | १६. ऋ-दृशोऽङि गुणः<br>ऋवर्णान्तानामङ्गानाम्, दृशेश्च अङि परे गुणो भवति।<br>ऋ इत्यनेन ऋकारान्तस्य ग्रहणम्।<br>ऋ - शकलाङ्गुष्ठकोऽकरत्।<br>'कृ-मृ-दृ-रुहिभ्यश्छन्दसि' इति सूत्रेण च्लेरङ्।<br>जरा - 'जॄष् वयोहानौ' इत्यस्माद् धातोः 'षिद्भिदादिभ्योऽङ्' इति सूत्रेण अङ् प्रत्ययः।<br>दृशिर् प्रेक्षणे - अदर्शत्, अदर्शताम्, अदर्शन्।<br>'इरितो वा' इति सूत्रेण विकल्पेन च्लेरङ्। | अङि २० |

| | | |
|---|---|---|
| अङि १६<br>अङ्गस्य ६.४.१ | १७. अस्यतेस्थुक्<br>अस्यतेरङ्गस्य थुक् इत्यागमो भवति अङि परे।<br>असु क्षेपणे - आस्थत्, आस्थताम्, आस्थन्।<br>'अस्यति-वक्ति-ख्यातिभ्यो ऽङ्' इति च्लेरङ्। | |
| अङि १६<br>अङ्गस्य ६.४.१ | १८. श्वयतेरः<br>श्वयतेरङ्गस्य अकारादेशो भवति अङि परे।<br>टुओ श्वि गति-वृद्ध्योः - अश्वत्, अश्वताम्, अश्वन्।<br>'जॄस्तम्भु०' इत्यनेन च्लेरङ्। | |
| अङि १६<br>अङ्गस्य ६.४.१ | १९. पतः पुम्<br>पतेरङ्गस्य पुम् इत्यागमो भवति अङि परे।<br>पत्लृ गतौ - अपप्तत्, अपप्तताम्, अपप्तन्।<br>लृदित्वाच्च्लेरङ्। | |
| अङि १६<br>अङ्गस्य ६.४.१ | २०. वच उम्<br>वचेरङ्गस्य उम् इत्यागमो भवति अङि परे।<br>अवोचत्, अवोचताम्, अवोचन्।<br>'अस्यति - वक्ति-ख्यातिभ्यो ऽङ्' इति सूत्रेण च्लेरङ्। | |
| | २१. शीङः सार्वधातुके गुणः<br>शीङो ऽङ्गस्य सार्वधातुके परे गुणो भवति।<br>शीङ् स्वप्ने - शेते, शयाते, शेरते।<br>'शेरते' इत्यत्र 'शीङो रुट्' इति सूत्रेण झस्यातो रुडागमः। | शीङः २२ |
| शीङः २१<br>अङ्गस्य ६.४.१ | २२. अयङ् यि क्ङिति<br>यि (यकारादौ) क्ङिति प्रत्यये परे शीङोऽङ्गस्य अयङ् इत्यादेशो भवति।<br>शय्यते। 'सार्वधातुके यक्' इति यक्।<br>शाशय्यते। यङ्।<br>संशय्य। क्त्वो ल्यप्। | यि२६<br>क्ङिति २५ |
| यि २२<br>क्ङिति २२<br>अङ्गस्य ६.४.१ | २३. उपसर्गाद् ह्रस्व ऊहतेः<br>यादौ क्ङिति प्रत्यये परे उपसर्गात् परस्य ऊहतेरङ्गस्य ह्रस्वो भवति।<br>ऊह वितर्के - समुह्यते। 'सार्वधातुके यक्' इति सूत्रेण यक्।<br>समुह्य गतः। क्त्वो ल्यप्। | उपसर्गात् २४<br>ह्रस्वः २४ |

| | | |
|---|---|---|
| यि २२<br>क्ङिति २२<br>उपसर्गात् २३<br>ह्रस्वः २३<br>अङ्गस्य ६.४.१ | २४. एतेर्लिङि<br>उपसर्गाद् एतेः (इण्धातोः) अङ्गस्य ह्रस्वो भवति यि क्ङिति लिङि।<br>इण् गतौ, आशीर्लिङि- उदियात्, समियात्, अन्वियात्।<br>'अकृत्सार्वधातुकयोः' इति सूत्रेण दीर्घानन्तरमनेन ह्रस्वः। | |
| यि २२<br>क्ङिति २२<br>अङ्गस्य ६.४.१ | २५. अकृत्सार्वधातुकयोर्दीर्घः<br>यकारादौ क्ङिति परे अजन्तस्याङ्गस्य दीर्घो भवति, न तु कृति, सार्वधातुके च परतः।<br>'अचश्च' इति परिभाषासूत्रेण 'अचः' इति षष्ठ्यन्तपदस्योपस्थित्या 'अजन्तस्याङ्गस्य' इत्यर्थो लभ्यते।<br>सुखं वेदयते सुखायते। चीयते, चेचीयते। स्तूयते, तोष्टूयते। चीयात्, स्तूयात्।<br>अकृति इति किम् ? प्रकृत्य। प्रहृत्य। परत्वाद् दीर्घेण तुकः बाधः स्यात्।<br>असार्वधातुके इति किम् ? चिनुयात्। सुनुयात्। | अकृत्सार्व-धतुकयोः२६<br>दीर्घः २६ |
| दीर्घः २५<br>अङ्गस्य ६.४.१ | २६. च्वौ च<br>अजन्तस्याङ्गस्य च्वौ च दीर्घो भवति ।<br>अशुचिं शुचिं करोति इति शुचीकरोति। अशुचिः शुचिर्भवति इति शुचीभवति।<br>अशुचिः शुचिः स्यात् इंति शुचीस्यात्। | च्वौ २७ |
| अकृत्सार्वधातुकयोः२५<br>च्वौ २६<br>अङ्गस्य ६.४.१ | २७. रीङ् ऋतः<br>ऋतः (ऋकारान्तस्याङ्गस्य) रीङ् भवति यकारादौ, च्वौ च परतः , न तु कृत्सार्वधातुकयोः।<br>यकारादौ - मातरमात्मनः इच्छति मात्रीयति।<br>मातेवाचरति मात्रीयते।<br>पुनः पुनः, भृशं वा करोति चेक्रीयते।<br>च्वौ - अमाता माता समपद्यत इति मात्रीभूतः।<br>क्ङितीति नानुवर्तते। तेन पितुरागतं पित्र्यम्, इत्यत्र 'पितुर्यच्च' इति यत्प्रत्ययेऽपि रीङादेशो भवति।<br>रीङादेशे कृतेऽत्र 'यस्येति च' इति सूत्रेण ईकारस्य लोपः। | ऋतः ३० |

| | | |
|---|---|---|
| ऋतः २७<br>अकृत्सार्वधतुकयोः २५<br>यि २२<br>अङ्गस्य ६.४.१ | २८. रिङ् श-यगू-लिङ्क्षु<br>ऋतः (ऋकारान्तस्याङ्गस्य) रिङ् भवति श, यक् इत्येतयोः, यकारादवसार्वधातुके लिङि च परतः।<br>रिङ्वचनं दीर्घनिवृत्त्यर्थम्।<br>शे - आद्रियते।<br>यकि - क्रियते।<br>लिङि - क्रियात्। | शयग्लिङ्क्षु २९ |
| ऋतः २७<br>यकि २८<br>लिङि २८<br>अकृत्सार्वधतुकयोः २५ | २९. गुणोऽर्ति-संयोगाद्योः<br>अर्ति-संयोगाद्योः ऋतो गुणो भवति यकि, यकारादावसार्वधातुके लिङि च परतः।<br>'श' इत्यत्रासम्भवान्निवृत्तम्।<br>ऋ गतौ - अर्यते, अर्यात्।<br>संयोगादिः - स्मर्यते, स्मर्यात्। | गुणः अर्ति-संयोगाद्योः ३० |
| गुणः २९ | ३०. यङि च<br>अर्ति-संयोगाद्योः ऋतो गुणः यङि च भवति।<br>अरार्यते। सास्मर्यते। | यङि ३१ |
| यङि ३० | ३१. ई घ्रा-ध्मोः<br>घ्राध्मोः ई इत्यादेशो भवति यङि परतः।<br>घ्रा गन्धोपादाने- जेघ्रीयते।<br>ध्मा श्ब्दाग्निसंयोगयोः- देध्मीयते। | ई ३३ |
| ई ३१<br>अङ्गस्य ६.४.१ | ३२. अस्य च्वौ<br>अकारान्ताङ्गस्य ईकारादेशो भवति च्वौ परतः<br>शुक्लीभवति। शुक्लीस्यात्। खट्वीकरोति।<br>खट्वीस्यात्। | अस्य ३५ |
| अस्य ३२<br>ई ३१<br>अङ्गस्य ६.४.१ | ३३. क्यचि च<br>क्यचि च अकारान्ताङ्गस्य ईकारादेशो भवति।<br>पुत्रमात्मन इच्छति पुत्रीयति।<br>मालामात्मन इच्छति मालीयति।<br>पृथग्योगकरणमुत्तरार्थम्। | क्यचि ३९ |
| | ३४. अशनायोदन्य-धनाया बुभुक्षा-पिपासा-गर्धेषु<br>अशनाय, उदन्य, धनाय-इत्येते क्यचि निपात्यन्ते बुभुक्षा-पिपासा-गर्धेषु।<br>अशनम् = अन्नमात्मनः इच्छति अशनायति बुभुक्षा चेत्। अन्यत्र अशनीयति।<br>उदकमात्मन इच्छति उदन्यति पिपासा चेत्। अन्यत्र उदकीयति।<br>धनमात्मन इच्छति धनायति गर्हा चेत्। अन्यत्र धनीयति। | |

| | | |
|---|---|---|
| क्यचि ३३<br>अङ्गस्य ६.४.१ | ३५. न च्छन्दस्यपुत्रस्य<br>छन्दसि पुत्रवर्जितस्य अवर्णान्तस्याङ्गस्य यदुक्तं तन्न भवति क्यचि।<br>मित्रयुः।<br>अत्र क्यचि 'अकृत्सार्वधातुकयोर्दीर्घः' इत्येनेन दीर्घः, 'क्यचि च' इत्यनेन ईत्वं न। मित्रयुरित्यत्र क्यजन्तात् 'क्याच्छन्दसि' इत्युप्रत्ययः।<br>अपुत्रस्य इति किम् ? पुत्रीयन्तः सुदानवः | छन्दसि ३६ |
| क्यचि ३३<br>छन्दसि ३५ | ३६. दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति<br>दुरस्युः, द्रविणस्युः, वृषण्यति, रिषण्यति - इत्येतानि छन्दसि निपात्यन्ते।<br>अवियोना दुरस्युः। दुष्टीयतीति प्राप्ते।<br>द्रविणस्युर्विपन्यया। द्रवणीयतीति प्राप्ते।<br>वृषण्यति। वृषीयतीति प्राप्ते।<br>रिषण्यति। रिष्टीयतीति प्राप्ते। | |
| क्यचि ३३<br>छन्दसि ३५ | ३७. अश्वाघस्यात्<br>अश्व, अघ-इत्येतयोः आद् भवति क्यचि छन्दसि।<br>अश्वायन्तो मघवन्।<br>मा त्वा वृका अघायवो विदन्। | आत् ३८ |
| क्यचि ३३<br>आत् ३७ | ३८. देव-सुम्नयोर्यजुषि काठके<br>देव, सुम्न- इत्येतयोराद् भवति क्यचि, काठके यजुषि।<br>देवायते यजमानाय। सुम्नायन्तो हवामहे।<br>यजुषि इति किम् ? देवान् जिगाति सुम्नयुः।<br>काठके इति किम् ? सुम्नयुरिमसीदमसि। 'काठक' इति यजुष एव विशेषणम्। कठस्येदं यजुः इति काठकम्, 'गोत्रचरणाद् वुञ्' इति सूत्रेण कठशब्दाद् वुञ् प्रत्ययः। | |
| क्यचि ३३<br>अङ्गस्य ६.४.१ | ३९. कव्यध्वर-पृतनस्यर्चि लोपः<br>कवि, अध्वर, पृतना - इत्येतेषाम् अङ्गानां लोपो भवति क्यचि ऋचि अभिधेये।<br>कव्यन्तः सुमनसः। अध्वर्यन्तः। पृतन्यन्तः तिष्ठन्ति। | |

| | | |
|---|---|---|
| अङ्गस्य ६.४.१ | ४०. द्यति-स्यति-मा-स्थामित्ति किति<br>द्यति-स्यति-मा-स्था- इत्येतेषाम् अङ्गानाम् इद् (इकारादेशः) भवति ति (तादौ) किति प्रत्यये परे।<br>दो अवखण्डने - निर्दितः, निर्दितवान्।<br>षो अन्त कर्मणि- अवसितः, अवसितवान्।<br>मा माने, माङ माने, मेङ् प्रणिदाने- मितः, मितवान्।<br>ष्ठा गतिनिवृत्तौ - स्थितः, स्थितवान्। | इत् ४१ ति किति४७ |
| इत् ४०<br>ति किति४० | ४१. शाच्छोरन्यतरस्याम्<br>शाच्छोरन्यतरस्याम् इद् भवति ति(तादौ) किति।<br>शो तनूकरणे - निशितम्, निशातम्।<br>छो छेदने - अवच्छितम्, अवच्छातम्। | |
| इत् ४०<br>ति किति४०<br>अङ्गस्य ६.४.१ | ४२. दधातेर्हिः<br>दधातेरङ्गस्य हि इत्यादेशो भवति ति(तादौ) किति प्रत्यये परे।<br>डुधाञ् धारणपोषणयोः - हितः, हितवान्। हित्वा। | हिः ४४ |
| हिः ४२<br>अङ्गस्य ६.४.१ | ४३. जहातेश्च क्त्वि<br>जहातेरङ्गस्य क्त्वि (क्त्वाप्रत्यये परतः) हि इत्यादेशो भवति।<br>ओहाक् त्यागे - हित्वा राज्यं वनं गतः।<br>जहातेर्निर्देशाज्जिहीतेर्न भवति। ओहाङ् गतौ- हात्वा। | जहातेः क्त्वि ४४ |
| जहातेः ४३<br>हिः ४२<br>क्त्वि ४३<br>अङ्गस्य ६.४.१ | ४४. विभाषा छन्दसि<br>जहातेरङ्गस्य हि इत्यादेशो विभाषा भवति छन्दसि।<br>हित्वा शरीरं यातव्यम्। हात्वा। | छन्दसि ४५ |
| | ४५. सुधित-वसुधित-नेमधित-धिष्वधिषीय च<br>सुधित, वसुधित, नेमधित, धिष्व, धिषीय - इत्येते शब्दाश्च छन्दसि निपात्यन्ते।<br>गर्भं माता सुधितम्। सुहितमिति भाषायाम्।<br>वसुधितमग्नौ जुहोति। वसुहितमिति भाषायाम्।<br>नेमधिता बाधन्ते। नेमहिता इति भाषायाम्।<br>धिष्व। धत्स्वेति भाषायाम्।<br>धिषीय। धासीय इति भाषायाम्। | |
| ति किति ४० | ४६. दो दद्घोः<br>घोः(घुसंज्ञकस्य) दो (दाधातोः) 'दथ्' इत्यादेशो भवति ति(तादौ) किति।<br>दत्तः। दत्तवान्।<br>अत्रत्यभाष्यानुसारेण अनेन सूत्रेण य आदेशः स थकारान्तः। | दः घोः ४७ |

| | | |
|---|---|---|
| ति किति ४० <br> दः ४६ <br> घोः ४६ | **४७. अच उपसर्गात्तः** <br> अच (अजन्तात्) उपसर्गात् परस्य दः (दाधातोः) अचः 'त्' इत्यादेशो भवति ति (तादौ) किति। <br> सूत्रे 'तः' इत्यात्राकार उच्चारणार्थः। <br> प्रत्तम्। अवत्तम्। नीत्तम्। वीत्तम्। <br> अत्र 'अचः' इत्यावर्त्य आदेशस्यापि विशेषणमिति 'आदेः परस्य' इत्यनेन परस्यादेः 'त्' इत्यादेशो न भवति। | तः ४६ |
| तः ४७ <br> अङ्गस्य ६.४.१ | **४८. अपो भि** <br> अप् - इत्येतस्याङ्गस्य तकारादेशो भवति भि (भकारादौ प्रत्यये परतः)। <br> अद्भिः। अद्भ्यः। | |
| तः ४७ <br> अङ्गस्य ६.४.१ | **४९. सः स्यार्धधातुके** <br> सकारान्ताङ्गस्यस्य 'त्' इत्यादेशो भवति सि (सकारादौ) आर्धधातुके परे। <br> वस निवासे - वत्स्यति। विवत्सति। <br> सनि अदो घस्लादेशे - जिघत्सति। | सः ५२ सि ५७ |
| सः ४९ <br> सि ४९ | **५०. तासस्त्योर्लोपः** <br> तासस्त्योः सः (सकारस्य) लोपो भवति सि (सादौ प्रत्यये परतः)। <br> तासेः - कर्तासि, कर्तासे। <br> अस्तेः - त्वम् असि, व्यतिसे। <br> व्यतिसे इत्यत्र व्यतिपूर्वाद् अस्तेः 'कर्तरि कर्मव्यतीहारे' इत्यात्मनेपदम्, लट्, थास्, थासः से, 'श्नसोरल्लोपः'इत्यकारलोपः, सकारस्य च प्रकृतसूत्रेण लोपः । | तासस्त्योः ५२ <br> लोपः ५३ |
| सः४९ तासस्त्योः५० <br> लोपः ५० | **५१. रि च** <br> तासस्त्योः सः (सकारस्य) लोपो भवति रि (रेफादौ प्रत्यये) परतः। <br> तासेः - कर्तारौ, कर्तारः। <br> अस्तेः - व्यतिरे। <br> व्यतिपूर्वाद् अस्तेः कर्मव्यतीहारे आत्मनेपदे लिटि, झः, इरेच्- 'व्यति अस् इरे' इत्यवस्थायाम् 'इरयोः रे' इति सूत्रेण 'इरे' इत्यस्य 'रे' इत्यादेशे 'श्नसोरल्लोपः' इति सूत्रेण अकारस्य लोपे च सति छन्दसि व्यतिरे इत्युदाहरणं सम्भवति,यद्येवं प्रयोगः छन्दसि स्यात्। <br> न्यास-पदमञ्जरीग्रन्थानुसारेण अस्तेः रादौ प्रत्यये उदाहरणं नास्ति, असम्भवात्। | |

| | | |
|---|---|---|
| सः४९<br>तासस्त्योः५० | ५२. ह एति<br>तासस्त्योः सः (सकारस्य) हः भवति एति परतः।<br>तासेः - कर्ताहे।<br>कृञो लुट्, आत्मनेपदम्, उत्तमपुरुषैकवचने इट्,टेरेत्वम्।<br>अस्तेः - व्यतिहे।<br>अस्तेः 'कर्तरि कर्मव्यतीहारे' इत्यात्मनेपदम्,लट्, इट्, टेरेत्वम्, 'श्नसोरल्लोपः' इत्यल्लोपः । | |
| लोपः ५० | ५३. यीवर्णयोर्दीधी-वेव्योः<br>यकारादौ, इकारादौ च प्रत्यये परतः दीधीवेव्योः(अन्त्यवर्णस्य) लोपो भवति।<br>सूत्रे 'यीवर्णयोः' इत्यत्र 'यि+इवर्णयोः' इतिच्छेदः।<br>यकारादौ - आदीध्य गतः। आवेव्य गतः।<br>ल्यपि रूपमेतत्।<br>इकारादौ-आदीधिता। आवेविता।<br>तृचि रूपमेतत्।<br>आदीधीत। आवेवीत।<br>लिङि, सीयुटि रूपमेतत्। | |
| सि ४९<br>अङ्गस्य ६.४.१ | ५४. सनि मी-मा-घु-रभ-लभ-शक-पत-पदामच इस्<br>सकारादौ सनि प्रत्यये परतो मी, मा, घु-रभ, लभ, शक, पत, पद - इत्येतेषामङ्गानामचः स्थाने 'इस्' इत्यादेशो भवति।<br>मीञ् हिंसायाम्, डुमिञ् प्रक्षेपणे - मित्सति प्रमित्सति।<br>मामाने, माङ्माने, मेङ् प्रणिदाने - मित्सति, अपमित्सते।<br>घु- दो अवखण्डने, दाण् दाने-दित्सति।<br>देङ् रक्षणे- दित्सते।<br>धेट् पाने- धित्सति।<br>डु धाञ् धारणपोषणयोः-धित्सति, धित्सते।<br>रभ राभस्ये- आरिप्सते।<br>डुलभष् प्राप्तौ-आलिप्सते।<br>शक्लृ शक्तौ- शिक्षति।<br>पत्लृ गतौ-पित्सति।<br>पद गतौ- प्रपित्सति।<br>उदाहरणेषु 'अत्र लोपोऽभ्यासस्य' इति सूत्रेण अभ्यासस्य लोपः। | सनि ५७<br>अचः ५६ |

| | | |
|---|---|---|
| सि ४६<br>सनि ५४<br>अचः ५४<br>अङ्गस्य ६.४.१ | ५५. आप्-ज्ञप्यृधामीत्<br>आप्, ज्ञपि, ऋध- इत्येतेषाम् अङ्गानाम् अचः इद् भवति सि (सकारादौ) सनि।<br>आप्लृ व्याप्तौ - ईप्सति।<br>ज्ञपि - ज्ञीप्सति।<br>'ज्ञा अवबोधने' ततः हेतुमण्णिच्, पुक्, मितां ह्रस्वः।<br>ऋधु वृद्धौ - ईर्त्सति। | ईत् ५६ |
| सि ४६<br>सनि ५४<br>ईत् ५५ | ५६. दम्भ इच्च<br>दम्भ इद् भवति, चकाराद् ईच्च सि (सकारादौ) सनि।<br>दम्भु दम्भे - धिप्सति, धीप्सति।<br>'हलन्ताच्च' इति सूत्रेण सनः कित्त्वाद् 'अनिदिताम्' इति सूत्रेणानुनासिकलोपः।<br>सि इत्येव - दिदम्भिषति।<br>'सनीवन्तर्ध' इत्यादिना विकल्पेन इडागमः। | |
| सि ४६<br>सनि ५४ | ५७. मुचोऽकर्मकस्य गुणो वा<br>मुचोऽकर्मकस्य गुणो वा भवति सि (सकारादौ) सनि।<br>मोक्षते वत्सः स्वयमेव।<br>मुमुक्षते वत्सः स्वयमेव।<br>कर्मकर्तरि, कर्मणोऽविवक्षायां वा मुचिरकर्मकः।<br>अकर्मकस्येति किम् ? मुमुक्षति वत्सं देवदत्तः। | |
| | ५८. अत्र लोपोऽभ्यासस्य<br>अत्र - 'सनि मीमा'(७.४.५४) इत्यारभ्य 'मुचोऽकर्मकस्य'(७.४.५७) इत्यन्तं यावद् यदुक्तं तत्राभ्यासस्य लोपो भवति।<br>तथैवोदाहृतम्। | अभ्यासस्य ६७ |
| अभ्यासस्य ५८ | ५९. ह्रस्वः<br>अभ्यासस्याचः ह्रस्वो भवति।<br>'अचश्च' इति परिभाषासूत्रेण 'अचः' इति षष्ठ्यन्तं पदमत्रोपस्थितं भवति।<br>ढौकृ, त्रौकृ गत्यर्थौ - डुढौके, तुत्रौके।<br>डुढौकिषते, तुत्रौकिषते।<br>अडुढौकत्, अतुत्रौकत्। | |

| | | |
|---|---|---|
| अभ्यासस्य ५८ | ६०. हलादिः शेषः<br>अभ्यासस्यादिः हल् शिष्यते अर्थात् अभ्यासस्य अन्ये हलो लुप्यन्ते।<br>ग्लै हर्षक्षये - जग्लौ।<br>म्लै गात्रविनामे - मम्लौ।<br>डु पचष् पाके - पपाच।<br>अट गतौ - आट, आटतुः, आटुः। | शेषः ६१ |
| अभ्यासस्य ५८<br>शेषः ६० | ६१. शर्पूर्वाः खयः<br>अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते, अन्ये हलो लुप्यन्ते।<br>श्च्युतिर् क्षरणे - चुश्च्योत। चुश्च्योतिषति।<br>ष्ठा गतिनिवृत्तौ - तस्थौ, तिष्ठासति।<br>स्पदि किञ्चिच्चलने - पस्पन्दे, पिस्पन्दिषते। | |
| अभ्यासस्य ५८ | ६२. कुहोश्चुः<br>अभ्यासस्य कुहोः(कवर्ग-हकारयोः) चुः (चवर्गादेशो) भवति।<br>चकार। चखान। जगाम। जघास।<br>जहार। | चुः ६४ |
| अभ्यासस्य ५८ चुः६२ | ६३. न कवतेर्यङि<br>कवतेरभ्यासस्य कोश्चुर्न भवति यङि।<br>कुङ् शब्दे भ्वादिः - कोकूयते खरः।<br>कवतेरिति शब्विकरणः इति भौवादिकस्यैव ग्रहणम्।<br>'कु शब्दे' इत्यादादिकस्य, 'कूङ् शब्दे' इति तौदादिकस्य च - चोकूयते इति रूपम्। | न यङि ६४ |
| अभ्यासस्य ५८<br>चुः ६२<br>न ६३<br>यङि ६३ | ६४. कृषेश्छन्दसि<br>कृषेः कोश्चुर्न भवति यङि छन्दसि।<br>करीकृष्यते यज्ञकुणपः।<br>भाषायां तु चरीकृष्यते कृषीवलः। | छन्दसि ६५ |

| | | |
|---|---|---|
| छन्दसि ६४ | ६५. दाधर्ति-दर्धर्ति-दर्धर्षि-बोभूतु-तेतिक्तेऽलर्ष्यापनीफणत्-संसनिष्यदत्-करिक्रद्-कनिक्रदद्-भरिभ्रद्-दविध्वतो-दविद्युतत्-तरित्रतः सरीसृपतं-वरीवृजन्-मर्मृज्याऽऽगनीगन्तीति च<br>छन्दसि एतेऽष्टादश निपात्यन्ते।<br>१.दाधर्ति-धारयतेः, धृङो वा श्लौ, यङ्लुकि वा रूपम् लटि, तिपि।<br>२.दर्धर्ति-धारयतेः, धृङो वा श्लौ यङ्लुकि वा रूपम् , इदमपि लटि तिपि।<br>३.दर्धर्षि-धारयतेः, धृङो वा श्लौ, यङ्लुकि वा लटि शपि रूपम्।<br>४.बोभूतु-भवतेर्यङ्लुकि लटि रूपम्।<br>५.तेतिक्ते-तिजेर्यङ्लुकि लटि प्रथमपुरुषैकवचने रूपम्।<br>६.अलर्षि-ऋ गतौ इति धातोर्लिटि, सिपि रूपम्।<br>७.आपनीफणत्- फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतृप्रत्यये रूपम्।<br>८.संसनिष्यदत्-स्यन्देः सम्पूर्वस्य यङ्लुकि, शतृप्रत्यये रूपम्।<br>९.करिक्रत्-करोतेर्यङ्लुकि शतृप्रत्यये रूपम्।<br>१०.कनिक्रदत्-क्रन्देर्यङ्लुकि शतृप्रत्यये रूपम्।<br>११.भरिभ्रत्-बिभर्त्तेर्यङ्लुकि शतृप्रत्यये रूपम्।<br>१२.दविध्वतः-ध्वरतेर्यङ्लुकि शतृप्रत्यये, जसि रूपम्।<br>१३. दविद्युतत्-द्युतेर्यङ्लुकि शतृप्रत्यये रूपम्।<br>१४.तरित्रतः-तरतेः शतृप्रत्यये, षष्ठ्येकवचने रूपम्।<br>१५.सरीसृपतम्-सृपेः शतृप्रत्यये, द्वितीयैकवचने रूपम्।<br>१६.वरीवृजत्-वृजेः शतृप | |

| | | |
|---|---|---|
| | १७.मर्मृज्य-मृजेर्लिटि, णलि रूपम्।<br>१८.आगनीगन्ति-आङ्पूर्वस्य गमेर्लटि रूपम्।<br>सूत्रे इतिकरणमेवम्प्रकाराणामन्येषामपि उपसंग्रहार्थम्। | |
| अभ्यासस्य ५८ | ६६. उरत्<br>उः (ऋवर्णान्तस्य) अभ्यासस्य अद् भवति।<br>वृतु वर्तने - ववृते। वृधु वर्धने-ववृधे।<br>शृधु शब्दकुत्सायाम्- शशृधे। | |
| अभ्यासस्य ५८ | ६७. द्युति-स्वाप्योः सम्प्रसारणम्<br>द्युति-स्वाप्योरभ्यासस्य सम्प्रसारणं भवति।<br>द्युत दीप्तौ - दिद्युते।<br>स्वपिर्ण्यन्तः - सुष्वापयिषति।<br>'ञिष्वपु शये' णिच्, सन्। | सम्प्रसारणम् ६८ |
| अभ्यासस्य ५८<br>सम्प्रसारणम् ६७ | ६८. व्यथो लिटि<br>व्यथोऽभ्यासस्य सम्प्रसारणं भवति लिटि।<br>व्यथ भयचलनयोः- विव्यथे, विव्यथाते, विव्यथिरे। | लिटि ७४ |
| अभ्यासस्य ५८<br>लिटि ६८ | ६९. दीर्घ इणः किति<br>इणोऽभ्यासस्य दीर्घो भवति किति लिटि।<br>इण् गतौ - ईयतुः। ईयुः।<br>'इणो यण्' इति यणि कृते 'द्विर्वचनेऽचि' इति सूत्रेण स्थानिवद्भावाद् एकाच्त्वेन द्विर्वचनम्, ततो दीर्घः। | दीर्घः ७० |
| अभ्यासस्य ५८<br>दीर्घः ६९<br>लिटि ६८ | ७०. अत आदेः<br>अभ्यासस्यादेरतो दीर्घो भवति लिटि।<br>'अतो गुणे' इति पररूपस्यापवादः।<br>आट, आटतुः, आटुः। | |
| अभ्यासस्य ५८<br>अङ्गस्य ६.४.१ | ७१. तस्मान्नुड् द्विहलः<br>तस्माद् = दीर्घीभूताद् अभ्यासात् (परस्य) द्विहलोऽङ्गस्य नुड् भवति।<br>'अञ्जू व्यक्ति-म्रक्षण-कान्ति-गतिषु' - आनञ्ज, आनञ्जतुः, आनञ्जुः।<br>अत्र ऋकारैकदेशो रेफोऽपि हल्ग्रहणेन गृह्यते। तेनेहापि द्विहलोऽङ्गस्य नुडागमो भवति - 'ऋधु वृद्धौ'- आनृधतुः, आनृधुः। | तस्मात् नुट् ७२ |

| | | |
|---|---|---|
| तस्मात् ७१<br>नुट् ७१ | **७२. अश्नोतेश्च**<br>दीर्घीभूतादभ्यासात् परस्य अश्नोतेश्च नुड् भवति।<br>अशू व्याप्तौ - व्यानशे, व्यानशाते, व्यानशिरे।<br>'अश्नोतेः' इति विकरणनिर्देशः अश्नातेर्माभूदिति-अश् भोजने-आश, आशतुः, आशुः। | |
| अभ्यासस्य ५८<br>लिटि ६८ | **७३. भवतेरः**<br>भवतेरभ्यासस्य अः (अकारादेशः) भवति लिटि।<br>बभूव, बभूवतुः, बभूवुः। | अः ७४ |
| | **७४. ससूवेति निगमे**<br>'ससूव' इति निगमे निपात्यते।<br>षूङ् प्राणिगर्भविमोचने इत्यस्य लिटि, परस्मैपदम्, वुगागमः, अभ्यासस्य चात्वं निपात्यते।<br>ससूव स्थविरं विपश्चिताम्।<br>सुषुवे इति भाषायाम्। | |
| अभ्यासस्य ५८ | **७५. निजां त्रयाणां गुणः श्लौ**<br>निजादीनां त्रयाणामभ्यासस्य गुणो भवति, श्लौ सति।<br>णिजिर्, शौचपोषणयोः, विजिर् पृथग्भावे, विष्लृ व्याप्तौ-इत्येते जौहोत्यादिकास्त्रयो निजादयः।<br>णिजिर्- नेनेक्ति।<br>विजिर्-वेवेक्ति।<br>विष्लृ-वेवेष्टि। | त्रयाणां ७३<br>श्लौ७८ |
| त्रयाणाम्७५<br>श्लौ७५ | **७६. भृञामित्**<br>भृञादीनां त्रयाणामभ्यासस्य इकारादेशो भवति, श्लौ सति।<br>डुभृञ् धारण-पोषणयोः, माङ् माने, ओहाङ् गतौ - इत्येते जौहोत्यादिकास्त्रयो भृञादयः।<br>भृञ्- बिभर्ति।<br>माङ्- मिमीते।<br>ओहाङ्- जिहीते। | इत् ८१ |
| अभ्यासस्य ५८ इत्७६<br>श्लौ ७५ | **७७. अर्ति-पिपर्त्योश्च**<br>अर्ति, पिपर्ति-इत्येतयोश्चाभ्यासस्य इकारादेशो भवति श्लौ।<br>ऋगतौ, जुहोत्यादिः - इयर्ति धूमम्।<br>'अ अर्ति' इत्यवस्थायां प्रकृतसूत्रेण अभ्यासस्याकारस्य इकारः, 'अभ्यासस्यासवर्णे' इत्यनेन इकारस्य इयङादेशश्च।<br>पॄ पालनपूरणयोः - पिपर्ति सोमम्। | |

| | | |
|---|---|---|
| अभ्यासस्य ५८ इत्७६<br>श्लौ ७५ | ७८. बहुलं छन्दसि<br>छन्दसि विषयेऽभ्यासस्य बहुलम् इकारादेशो भवति श्लौ।<br>पूर्णां विवष्टि।<br>'वश कान्तौ' इत्यस्य रूपम्।<br>जनिमा विवक्ति।<br>'वच परिभाषणे' इत्यस्य रूपम्।<br>वत्सं न माता सिषक्ति।<br>'षच समवाये' इत्यस्य 'षच सेचने, सेवने च' इत्यस्य वा रूपम्।<br>जिघर्ति सोमम्।<br>'घृ सेचने' इत्यस्य रूपम्।<br>न च भवति - ददातीत्येवं ब्रूयात्। | |
| अभ्यासस्य ५८<br>इत् ७६ | ७९. सन्यतः<br>सनि अभ्यासस्यात इद् (इकारादेशः) भवति।<br>डु पचष् पाके - पिपक्षति। | सनि ८१ |
| इत् ७६<br>सनि ७९ | ८०. ओः पुयण्ज्यपरे<br>अवर्णपरे पवर्गे,यणि,जकारे च परतः अभ्यासस्य ओः (उकारस्य) इद् (इकारादेशः) भवति सनि।<br>अवर्णपरे पवर्गे - पूङ् पवने- पिपविषते।<br>पिपावयिषति। भू सत्तयाम्- बिभावयिषति।<br>अवर्णपरे यणि- रु शब्दे- रिरावयिषति।<br>लूञ् छेदने- लिलावयिषति।<br>अवर्णपरे जकारे - जिजावयिषति।<br>अत्र 'जु' इति सौत्रो धातुः।<br>अपरे इति किम् ? बुभूषति। | ओः<br>पुयण्ज्यपरे<br>८१ |

| | | |
|---|---|---|
| ओः ८०<br>पु ८०<br>परे ८०<br>यणि ८०<br>इत् ७६ | ८१. स्रवति-शृणोति-द्रवति-प्रवति-प्लवति-च्यवतीनां वा<br>स्रवति-शृणोति-द्रवति-प्रवति-प्लवति- च्यवतीनाम् अवर्णपरे यणि परतः अभ्यासस्य ओः (उकारस्य) इद् (इकारादेशः) वा भवति।<br>सिस्रावयिषति, सुस्रावयिषति।<br>शिश्रावयिषति, शुश्रावयिषति।<br>पिप्रावयिषति, पुप्रावयिषति।<br>दिद्रावयिषति, दुद्रावयिषति।<br>पिप्लावयिषति, पुप्लावयिषति।<br>चिच्यावयिषति, चुच्यावयिषति।<br>उदाहरणेषु सु,स्रु गतौ, श्रु श्रवणे, दु,द्रु गतौ, प्रुङ्,प्लुङ्,च्युङ् गतौ-इत्येतेभ्यो ण्यन्तेभ्यः सन्।<br>अपरे इत्येव - सुसूषति, शुश्रूषते। | |
| अभ्यासस्य ५८ | ८२. गुणो यङ्लुकोः<br>लुक्शब्देनात्र यङ्लुगेव गृह्यते, सन्निधानात्। अतः सूत्रस्यार्थो भवति-यङि, यङ्लुकि च इगन्तस्य अभ्यासस्य गुणो भवति।<br>यङि - चिञ् चयने - चेचीयते।<br>लूञ् छेदने - लोलूयते।<br>यङ्लुकि - हु दानादानयोः - जोहवीति।<br>'यङो वा' इति विकल्पेन ईडागमः।<br>क्रुश आह्वाने - चोक्रुशीति। | यङ्लुकोः ६० |
| अभ्यासस्य ५८<br>यङ्लुकोः ८२ | ८३. दीर्घोऽकितः<br>अकितोऽभ्यासस्य दीर्घो भवति यङि, यङ्लुकि च।<br>डु पचष् पाके-पापच्यते। पापचीति।<br>यज देवपूजासङ्गतिकरणदानेषु- यायज्यते। यायजीति।<br>अकितः इति किम् ? यंयम्यते। यंयमीति। रंरम्यते। रंरमीति।<br>अत्र 'नुगतोऽनुनासिकस्य' इति सूत्रेण अभ्यासस्य नुगागमः इति तस्य कित्त्वम्। | |

| | | |
|---|---|---|
| अभ्यासस्य ५८<br>यङ्लुकोः ८२ | ८४. नीग्वञ्चु-स्रंसु-ध्वंसु-भ्रंशु-कस-<br>पत-पद-स्कन्दाम्<br>वञ्चु, स्रंसु, ध्वंसु, भ्रंसु, कस, पत, पद, स्कन्द - इत्येतेषामभ्यासस्य नीगागमो भवति, यङि, यङ्लुकि च।<br>वञ्चु गत्यर्थः - वनीवच्यते। वनीवञ्चीति।<br>स्रंसु, ध्वंसु भ्रंसु अवस्रंसने - सनीस्रस्यते, सनीस्रंसीति। दनीध्वस्यते, दनीध्वंसीति। बनीभ्रस्यते, बनीभ्रंसीति।<br>कस गतौ - चनीकस्यते, चनीकसीति।<br>पत्लृ गतौ - पनीपत्यते, पनीपतीति।<br>पद गतौ - पनीपद्यते, पनीपदीति।<br>स्कन्दिर् गतिशोषणयोः - चनीस्कद्यते। चनीस्कन्दीति।<br>यङ्लुकि 'यङो वा' इति ईडागमः। | |
| अभ्यासस्य ५८<br>यङ्लुकोः ८२<br>अङ्गस्य ६.४.१ | ८५. नुगतोऽनुनासिकान्तस्य<br>अनुनासिकान्तस्याङ्गस्य योऽभ्यासस्तस्याकारस्य नुगागमो भवति, यङि, यङ्लुकि च।<br>'तनु विस्तारे-तन्तन्यते, तन्तनीति।<br>गम्लृ गतौ - जङ्गम्यते, जङ्गमीति।<br>यम उपरमे-यंयम्यते, यंयमीति।<br>रमु क्रीडायाम्-रंरम्यते, रंरमीति।<br>नुगित्येतदनुस्वारोपलक्षणार्थं द्रष्टव्यम्। स्थानिनां ह्यादेशो लक्ष्यते। येन यंयम्यते- इत्येवमादौ झल्परत्वाभावेऽपि अनुस्वारो दृश्यते। | नुक् ८७ |
| अभ्यासस्य ५८<br>यङ्लुकोः ८२<br>नुक् ८५ | ८६. जप-जभ-दह-दश-भञ्ज-पशां च<br>जप, जभ, दह, दश, भञ्ज, पश - इत्येतेषामभ्यासस्य नुगागमो भवति यङि, यङ्लुकि च।<br>जप, जल्प व्यक्तायां वाचि- जञ्जप्यते, जञ्जपीति।<br>जभ,जभी गात्रविनामे- जञ्जभ्यते, जञ्जभीति।<br>दह भस्मीकरणे-दन्दह्यते, दन्दहीति।<br>दंश दशने-दन्दश्यते, दन्दशीति।<br>'दश' इति दन्शिरयं नकारलोपार्थमेव निर्दिष्टः। तेन यङ्लुक्यपि नकारलोपो भवति।<br>भञ्जो आमर्दने - बम्भज्यते, बम्भञ्जीति।<br>पश इति सौत्रो धातुः - पम्पश्यते। पम्पशीति। | |

| | | |
|---|---|---|
| अभ्यासस्य ५८<br>यङ्लुकोः ८२<br>नुक् ८५ | ८७. चर-फलोश्च<br>चर, फल- इत्येतयोरभ्यासस्य नुगागमो भवति यङि, यङ्लुकि च।<br>चर गतिभक्षणयोः - चञ्चूर्यते। चञ्चूरीति।<br>ञिफला विशरणे, फल निष्पत्तौ - पम्फुल्यते, पम्फुलीति।<br>'उत्परस्यातः' इत्युत्तरसूत्रेण उकारादेशः, 'चञ्चूर्यते' इत्यत्र 'हलि च' इति सूत्रेण उकारस्य दीर्घश्च। | चरफलोः ८९ |
| अभ्यासस्य ५८<br>यङ्लुकोः ८२<br>चरफलोः ८७ | ८८. उत्परस्यातः<br>चर-फलोरभ्यासात्परस्यात उकारादेशो भवति, यङि, यङ्लुकि च।<br>चञ्चूर्यते, चञ्चूरीति। पम्फुल्यते, पम्फुलीति। | उत् अतः ८९ |
| चरफलोः ८७ | ८९. ति च<br>तकारादौ प्रत्यये परतश्चरफलोरकारस्य उकारादेशो भवति।<br>चरणं चूर्तिः। ब्रह्मणश्चूर्तिः।<br>प्रफुल्तिः। प्रफुल्ताः सुमनसः।<br>यङ्यङ्लुकोः', 'अभ्यासस्य' - इति चानुवर्तमानमपि वचनसामर्थ्यादिह न सम्बध्यते। | |
| अभ्यासस्य ५८<br>यङ्लुकोः ८२<br>अङ्गस्य ६.४.१ | ९०. रीगृदुपधस्य च<br>ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रीगागमो भवति यङि, यङ्लुकि च।<br>वृतु वर्तने - वरीवृत्यते। वरीवृतीति।<br>वृधु वर्धने - वरीवृध्यते। वरीवृधीति।<br>नृती गात्रविक्षेपे - नरीनृत्यते, नरीनृतीति।<br>(वा०) रीगृत्वत इति वक्तव्यम्।<br>इहापि यथा स्यात् -वरीवृश्च्यते, वरीवृश्चीति।<br>परीपृच्छ्यते। परीपृच्छीति। | ऋदुपधस्य ९१<br>रीक्९२ |
| ऋदुपधस्य ९०<br>रीक्९०<br>अभ्यासस्य ५८<br>अङ्गस्य ६.४.१ | ९१. रुग्रिकौ च लुकि<br>यङ्लुकि ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकावागमौ भवतश्चकाराद् रीक् च।<br>नर्नर्ति, नरिनर्ति, नरीनर्ति। वर्वर्ति, वरिवर्ति, वरीवर्ति। | रुग्रिकौ<br>लुकि९२ |
| अभ्यासस्य ५८ रुग्रिकौ ९२<br>लुकि ९२<br>रीक् ९०<br>अङ्गस्य ६.४.१ | ९२. ऋतश्च<br>ऋकारान्तस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकावागमौ भवतो रीक्च, यङ्लुकि।<br>डु कृञ् करणे - चर्कर्ति, चरिकर्ति, चरीकर्ति।<br>हृञ् हरणे - जर्हर्ति, जरिहर्ति, जरीहर्ति। | |

| अभ्यासस्य ५८ | ९३. सन्वल्लघुनि चङ्परेऽनग्लोपे<br>लघुनि (धात्वक्षरे परे) योऽभ्यासस्तस्य चङ्परे णौ परतः सनीव कार्यं भवति, अनग्लोपे। 'सन्यतः' इत्युक्तम्, चङ्परे णावपि इत्वं भवति।<br>डु कृञ् करणे, णिचि, लुङि – अचीकरत्। डु पचष् पाके–अपीपचत्।<br>'ओः पुयण्ज्यपरे' इत्युक्तम्, चङ्परेऽपि भवति– अपीपवत्, अलीलवत्, अजीजवत्।<br>'स्रवतिशृणोति' इत्युक्तम्, चङ्परेऽपि भवति– असिस्रवत्, असुस्रवत्।<br>लघुनि इति किम् ? अततक्षत्। अररक्षत्।<br>अनग्लोपे इति किम् ? अचकथत्। 'कथ वाक्यप्रबन्धः' चुरादौ अकारान्तः। अकारस्य च 'अतो लोपः' इति सूत्रेण लोपः इति अग्लोपी अयं धातुः। | लघुनि ९४<br>चङ्परे ९७<br>अनग्लोपे ९४ |
|---|---|---|
| अभ्यासस्य ५८<br>लघुनि ९३<br>चङ्परे ९३ (णौ)<br>अनग्लोपे ९३ | ९४. दीर्घो लघोः<br>लघुनि धात्वक्षरे परतो योऽभ्यासस्तस्य लघोर्दीर्घो भवति चङ्परे णौ परे, अनग्लोपे। अचीकरत्। अजीहरत्। अलीलवत्। अपीपचत्। | |

| | | |
|---|---|---|
| अभ्यासस्य ५८<br>लघुनि ९३<br>चङ्परे ९३ (णौ)<br>अनग्लोपे ९३ | ९५. अतस्मृ-दॄ-त्वर-प्रथ-म्रद-स्तॄ-स्पशाम्<br>स्मृ-दॄ-त्वर-प्रथ-म्रद-स्तॄ-स्पश- इत्येतेषामभ्यासस्य अत् इत्यादेशो भवति, चङ्परे णौ परतः।<br>स्मृ चिन्तायाम्- असस्मरत्।<br>दॄ भये- अददरत्।<br>ञित्वरा सम्भ्रमे- अतत्वरत्।<br>प्रथ प्रख्याने- अपप्रथत्।<br>म्रद मर्दने- अमम्रदत्।<br>स्तॄञ् आच्छादने- अतस्तरत्।<br>स्पश बाधन-स्पर्शयोः- अपस्पशत्।<br>उदाहरणेषु सन्वद्भावेन 'सन्यतः' इति प्राप्तेत्वबाधनाय सूत्रेण अदादेशो विधीयते।<br>तपरकरणसामर्थ्याद् 'दीर्घो लघोः' इत्येतदपि न भवति- अददरत्। | अत् ९७ |
| अभ्यासस्य ५८<br>लघुनि ९३<br>चङ्परे ९३ (णौ)<br>अनग्लोपे ९३<br>अत् ९५ | ९६. विभाषा वेष्टि-चेष्ट्योः<br>वेष्टि, चेष्टि - इत्येतयोरभ्यासस्य 'अत्' इत्यादेशो विभाषा भवति, चङ्परे णौ परतः।<br>वेष्ट वेष्टने- अववेष्टत्। अविवेष्टत्।<br>चेष्ट चेष्टायाम् - अचचेष्टत्। अचिचेष्टत्।<br>अभ्यासस्य ह्रस्वत्वे कृते अत्वं पक्षे भवति। | |
| अभ्यासस्य ५८<br>लघुनि ९३<br>चङ्परे ९३ (णौ)<br>अनग्लोपे ९३<br>अत् ९५ | ९७. ई च गणः<br>गणोऽभ्यासस्य ईकारादेशो भवति, चकाराद् 'अत्' इत्यादेशश्च चङ्परे णौ परतः।<br>गण संख्याने - अजीगणत्, अजगणत्। | |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायां सप्तमाध्यायस्य चतुर्थः पादः ।।

।। समाप्तश्चायं सप्तमाध्यायः ।।

।। श्रीः ।।

## ।। अथाष्टमाध्यायस्य प्रथमः पादः ।।

| | | |
|---|---|---|
| | १. सर्वस्य द्वे<br>'सर्वस्य द्वे' इति पदद्वयम् अधिक्रियते 'पदस्य'(८.१.१६) इत्यतः प्राक्।<br>सर्वस्येति ग्रहणम् अलोऽन्त्यपरिभाषायाः अप्रवृत्त्यर्थम्। तेन द्वित्वं अन्त्यस्य न भवति अपि तु सर्वस्य भवति। | सर्वस्य द्वे १५ |
| | २. तस्य परमाम्रेडितम्<br>तस्य = द्विरुक्तस्य परम् आम्रेडितसंज्ञं भवति।<br>कांस्कान् भोजयति।<br>अत्र 'कानाम्रेडिते' इति सूत्रेण पूर्वस्य कान् इतिशब्दस्य नकारस्य स्थाने आम्रेडिते परे रुर्भवति। | आम्रेडितम् ३ |
| आम्रेडितम् २ | ३. अनुदात्तं च<br>तस्य = द्विरुक्तस्य परम् अनुदात्तं च भवति। अर्थात् आम्रेडितसंज्ञके शब्दे सर्वे स्वरा अनुदात्ता भवन्ति।<br>भुङ्क्ते भुङ्क्ते। पशून् पशून्। | |
| द्वे १ | ४. नित्य-वीप्सयोः<br>नित्य-वीप्सयोः (द्योत्ययोः) सर्वस्य द्वे भवतः।<br>नित्यम् = आभीक्ष्ण्यं, पौनःपुन्यं वा।<br>द्रव्याणां युगपद् क्रियागुणाभ्यां व्याप्तुम् =सम्बन्धुम्, इच्छा वीप्सा।<br>आभीक्ष्ण्यं तिङन्तेषु, अव्ययसंज्ञककृदन्तेषु च भवति, वीप्सा च सुप्सु।<br>आभीक्ष्ण्ये - पचति, पचति। भुक्त्वा भुक्त्वा व्रजति। भोजं भोजं व्रजति। लुनीहि लनीहि इत्येवायं लुनाति।<br>वीप्सायाम् - ग्रामो ग्रामो रमणीयः।<br>पुरुषः पुरुषो निधनमुपैति। | |
| द्वे १<br>सर्वस्य -१ | ५. परेर्वर्जने<br>वर्जनेऽर्थे वर्तमानस्य परेः सर्वस्य द्वे भवतः।<br>परिपरि त्रिगर्तेभ्यो वृष्टो देवः।<br>वर्जनम् = परिहारः।<br>(वा०) परेर्वर्जनेऽसमासे वेति वक्तव्यम्।<br>परि परि त्रिगर्तेभ्यो वृष्टो देवः,<br>परित्रिगर्त्तेभ्यः।<br>समासे तु तेनैवोक्तत्वात् वर्जनस्य नैव भवति - परित्रिगर्तं वृष्टो देव इति। | |

| द्वे १<br>सर्वस्य -१ | ६. प्रसमुपोदः पादपूरणे<br>पादपूरणे प्र, सम, उप, उत्- इत्येतेषां सर्वस्य द्वे भवतः।<br>प्र प्रा यमग्निर्भरतस्य शृण्वे।<br>सं समिद्युवसे वृषन्। उपोप मे परा मृश। किं नोदुदु हर्षसे दातवा उ। | |
|---|---|---|

| | | |
|---|---|---|
| द्वे १<br>सर्वस्य -१ | ७. उपर्यध्यधसः सामीप्ये<br>उपरि, अधि, अधस् - इत्येतेषां सर्वस्य द्वे भवतः।<br>सामीप्यं द्विविधम् - कालकृतं, देशकृतं च।<br>कालकृतसामीप्यस्योदाहरणम् - उपर्युपरि दुःखम्।<br>देशकृतसामीप्यस्योदाहरणम्- उपर्युपरि ग्रामम्। अध्यधि ग्रामम्। अधोऽधो नगरम्।<br>सामीप्ये इति किम्? उपरि चन्द्रमाः।<br>उपरि शिरसो घटं धारयति इत्यत्र सत्यपि सामीप्ये न सामीप्यमत्र न विवक्षितमस्ति अपि तु शिरस उपरिष्टाद् घटं धारयति नाधस्तादिति विवक्षितमस्ति अतोऽत्र उपरिशब्दस्य द्वित्वं न भवति। | |
| द्वे १<br>सर्वस्य -१ | ८. वाक्यादेरामन्त्रितस्यासूया-सम्मति-कोप-कुत्सन-भर्त्सनेषु<br>वाक्यादेरामन्त्रितंस्य सर्वस्य द्वे भवतः,<br>असूया-सम्मति-कोप-कुत्सन-भर्त्सनेषु अर्थेषु।<br>असूयायाम्-सुन्दर! सुन्दर! वृथा ते सौन्दर्यम्।<br>सम्मतौ - देव! देव! वन्द्योऽसि।<br>कोपे - दुर्विनीत! दुर्विनीत! इदानीं ज्ञास्यसि।<br>कुत्सने - धानुष्क! धानुष्क! वृथा ते धनुः।<br>भर्त्सने - चोर! चोर! घातयिष्यामि त्वाम्। | |
| द्वे १ | ९. एकं बहुव्रीहिवत्<br>द्विरुक्तम् एकम् (एकमित्येतच्छब्दस्वरूपम्) बहुव्रीहिवद् भवति।<br>बहुव्रीहिवद्भावेन सुब्लोप-पुंवद्भावौ भवतः।<br>एकैकमक्षरं पठति। एकैकया आहुत्या जुहोति।<br>एकशब्दस्य वीप्सायां 'नित्यवीप्सयोः' इति सूत्रेण द्विर्वचनम्। | बहुव्रीहिवत् १० |
| द्वे १<br>बहुव्रीहिवत् ९<br>सर्वस्य -१ | १०. आबाधे च<br>आबाधे (द्योत्ये) सर्वस्य द्वे भवतः, बहुव्रीहिवच्च।<br>आबाधः = पीडा।<br>गतगतः। गतगता।<br>नष्टनष्टः। नष्टनष्टा। | |

| | | |
|---|---|---|
| द्वे १ | **११. कर्मधारयवदुत्तरेषु**<br>कर्मधारयवत् उत्तरेषु (उत्तरसूत्रैः कृतद्विर्वचनेषु) कार्यं भवति, इत्येतद् वेदितव्यम्।<br>कर्मधारयवद्भावेन सुब्लोपपुंवद्भावान्तोदात्तत्वानि भवन्ति।<br>सुब्लोपः - पटुपटुः।<br>पुंवद्भावः - पटुपट्वी।<br>अन्तोदात्तत्वम् - पटुपटुः।<br>आम्रेडितत्वेन सर्वानुदात्तता न भवति अपि तु कर्मधारयवद्भावेन समासान्तोदात्तत्वं भवति इत्याशयः। | कर्मधारयवत् १५ |

द्वे १ कर्म-वत् ११

## १२. प्रकारे गुणवचनस्य

प्रकारे (सादृश्ये) वर्तमानस्य गुणवचनस्य सर्वस्य द्वे भवतः कर्मधारयवत् कार्यं च भवति।।

पटुपटुः। मृदुमृदुः। पण्डितपण्डितः।

पटुसदृशः, मृदुसदृशः, पण्डितसदृश इत्यर्थः।

(वा०) आनुपूर्व्ये द्वे भवत इति वक्तव्यम्।

मूले मूले स्थूलाः। अग्रेऽग्रे सूक्ष्माः। ज्येष्ठं ज्येष्ठं प्रवेशय।

(वा०) चापले द्वे भवत इति वक्तव्यम्।

सम्भ्रमेण प्रवृत्तिः चापलम्।

सम्भ्रमः = त्वरा।

अहिरहिः बुध्यस्व बुध्यस्व।

नावश्यं द्वावेव शब्दौ प्रयोक्तव्यौ, किंतर्हि? यावद्भिः शब्दैः सोऽर्थोऽवगम्यते तावन्तः प्रयोक्तव्याः – अहिरहिरहिः बुध्यस्व बुध्यस्व बुध्यस्व इति।

(वा०) क्रियासमभिहारे द्वे भवत इति वक्तव्यम्।

सभवान् लुनीहि लुनीहीत्येवायं लुनाति। 'नित्यवीप्सयोः' इति सिद्धे भृशार्थे द्वित्वार्थमिदम्, पौनःपुन्येऽपि लोटा सह समुच्चित्य द्योतकतां लब्धुं वा।

(वा०) आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम्।

भुक्त्वा भुक्त्वा व्रजति। भोजं भोजं व्रजति।

(वा०) डाचि द्वे भवत इति वक्तव्यम्।

डाचीत्यत्र विषयसप्तमी। तेनानुत्पन्ने एव डाच्यकृतटिलोपस्य पटदित्यस्यादेर्द्विवचनम्।

पटपटा करोति। पटपटायते।

पटपटायते इत्यत्र पटच्छब्दस्य डाचि विषयभूतेऽनुत्पन्न एव द्विर्वचनम्, ततः 'अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्' इति डाचि, टिलोपः, 'नित्यमाम्रेडिते डाचि' इति तकारस्य पररूपत्वम्। पटपटायते इत्यत्र 'लोहितादिडाज्भ्यः क्यष्' इति क्यष्, 'वा क्यषः' इत्यात्मनेपदम्।

(इष्टिः) अव्यक्तानुकरणडाजन्तस्य द्विर्वचनमिष्यते।

इह न भवति – द्वितीयाकरोति, तृतीयाकरोति। अत्र 'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' इति सूत्रेण डाच्।

(वा०) कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये, समासवच्च बहुलम्।

बहुलग्रहणाद् अन्य-परशब्दयोर्न समासवत्, इतरशब्दस्य तु नित्यम्।

(वा०) असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः।

अन्योन्यम्, अन्योन्यौ, अन्योन्यान् वा विप्रान् नमन्ति।

अन्योन्येन कृतम्। अन्योन्यस्मै दत्तमित्यादि। 'अन्योन्येषां पुष्करैरामृशन्त'' इति माघः।

एवं परस्परमित्यादि। अत्र कस्कादित्वाद् विसर्गस्य सः।

इतरशब्दस्य तु इतरेतरम्, इतरेतरेणेत्यादि।

(वा०) स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः।

अन्योन्याम्, अन्योन्यम्। परस्पराम्, परस्परम्। इतरेतराम्, इतरेतरं वा इमे ब्राह्मण्यौ, कुले वा भोजयतः।

| | | |
|---|---|---|
| द्वे १<br>सर्वस्य -१<br>कर्मधारयवत् -११ | **१३. अकृच्छ्रे प्रिय-सुखयोरन्यतरस्याम्**<br>अकृच्छ्रे (द्योत्ये) प्रिय-सुखयोरन्यतरस्यां सर्वस्य द्वे भवतः, कर्मधारयवच्च।<br>कृच्छ्रम् = दुःखम्, तदभावोऽकृच्छ्रम्<br>प्रियप्रियेण, प्रियेण वा ददाति।<br>सुखसुखेन, सुखेन वा ददाति। | |
| | **१४. यथास्वे यथायथम्**<br>यथास्वे (यथास्वभावम् इत्यर्थे) यथायथम् इति निपात्यते।<br>ज्ञाताः सर्वे पदार्थाः यथायथम्। | |
| | **१५. द्वन्द्वं रहस्य-मर्यादावचन-व्युत्क्रमण-यज्ञपात्रप्रयोगाभिव्यक्तिषु।**<br>द्वन्द्वम् इति निपात्यते रहस्य, मर्यादावचन, व्युत्क्रमण, यज्ञपात्रप्रयोग, अभिव्यक्ति- इत्येतेषु अर्थेषु।<br>तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम्, इतरे विषयभूताः।<br>द्वन्द्वमित्यस्य सिद्ध्ये द्वौ इति पदस्य द्विर्वचनं, पूर्वपदस्याम्भावः, उत्तरपदस्य चात्वं निपात्यते।<br>रहस्ये- द्वन्द्वं मन्त्रयते। रहस्यमित्यर्थः। स्वार्थे द्विर्वचनम्।<br>मर्यादावचने- मर्यादा= स्थित्यनतिक्रमः,तस्याः वचनं मर्यादावचनम्। तत्र यथा-<br>आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति।<br>अत्र आङ् अभिविधौ वर्तते, चतुःशब्दः चतुर्ण्णां पूरणेऽर्थे वर्तते। अतः वाक्यस्यार्थो भवति - इमे पशवः स्वप्रभृति चतुर्थपर्यन्तं द्वन्द्वं = परस्परं मिथुनीयन्ति = मैथुनकर्म इच्छन्ति। माता पुत्रेण मिथुनम् इच्छति, पौत्रेण, प्रपौत्रेणापीति मर्यादार्थोऽत्र। पशूनाम् एतावदेव आयुरित्यर्थः। स्वार्थे द्विर्वचनम्।<br>व्युत्क्रमणे - पृथगवस्थापनं व्युत्क्रमणम्।<br>द्वन्द्वं व्युत्क्रान्ताः। द्विवर्गसम्बन्धेन पृथगवस्थिता इत्यर्थः। स्वार्थे द्विर्वचनम्।<br>यज्ञपात्रप्रयोगे- द्वन्द्वं न्यञ्चि यज्ञपात्राणि प्रयुनक्ति धीरः।<br>द्वे द्वे इत्यर्थः। अत्र वीप्सायां द्विर्वचनम्।<br>अभिव्यक्तौ- द्वन्द्वं नारदपर्वतौ।<br>द्वावपि साहचर्येण अभिव्यक्तौ इत्यर्थः। | |
| | **१६. पदस्य**<br>'पदस्य' इत्यधिक्रियते आ 'अपदान्तस्य मूर्धन्यः'(८.३.५५) इत्यतः। | पदस्य ८.३.५४ |
| | **१७. पदात्**<br>'पदात्' इत्यधिक्रियते आ 'कुत्सने च सुप्यगोत्रादौ'(८.१.६८) इत्यतः प्राक्। | पदात् ६८ |
| | **१८. अनुदात्तं सर्वमपादादौ**<br>'अनुदात्तं सर्वमपदादौ' इत्यधिक्रियते आपादपरिसमाप्तेः। | सम्पूर्णसूत्रम् ७४ |

| | | |
|---|---|---|
| पदस्य १६ पदात् १७<br>अनुदात्तम् १८ | **१९. आमन्त्रितस्य च**<br>पदात् (परस्य) अपादादौ (स्थितस्य) आमन्त्रितस्य पदस्य सर्वमनुदात्तं भवति।<br>पचसि देवदत्त ! पचसि यज्ञदत्त !<br>(वा०) समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः।<br>इह मा भूत् - अयं दण्डो, हरानेन। ओदनं पच, तव भविष्यति। ओदनं पच, मम भविष्यति।<br>इह च यथा स्यात् - इह देवदत्त ! माता ते कथयति। नद्यास्तिष्ठति कूले। शालीनां ते ओदनं दास्यामि इति। | |
| पदस्य १६ पदात् १७<br>अनुदात्तम् १८ | **२०. युष्मदस्मदोः षष्ठी-चतुर्थी-द्वितीयास्थयोर्वान्नावौ**<br>पदात् परयोरपादादौ स्थितयोः षष्ठी-चतुर्थी- द्वितीयास्थयोः युष्मदस्मदोः यथासंख्यं वाम्, नौ - इत्येतावादेशौ भवतः, तौ चानुदात्तौ।<br>सूत्रस्योदाहरणं 'त्वामौ द्वितीयायाः' (८.१.२३) इति सूत्रे द्रष्टव्यम्। | युष्मदस्मदोः २६<br>ष-योः २२ |
| पदस्य १६ पदात् १७<br>अनुदात्तम् १८<br>युष्मदस्मदोः २०<br>ष-योः २० | **२१. बहुवचनस्य वस्नसौ**<br>पदात् परयोरपादादौ स्थितयोः षष्ठी-चतुर्थी-द्वितीयाबहुवचनान्तयोर्युष्मदस्मदोः यथासंख्यं वस्नसौ भवतः, तौ चानुदात्तौ।<br>अस्यापि उदाहरणं 'त्वामौ द्वितीयायाः' इति सूत्रे द्रष्टव्यम्। | |
| पदस्य १६ पदात् १७<br>अनुदात्तम् १८<br>युष्मदस्मदोः २०<br>ष-योः २० | **२२. तेमयावेकवचनस्य**<br>पदात्परयोरपादादौ स्थितयोः षष्ठीचतुर्थ्येकवचनान्तयोर्युष्मदस्मदोः यथासंख्यं ते, मे - इत्येतावादेशौ भवतः, तौ चानुदात्तौ।<br>अस्यापि उदाहरणं 'त्वामौ द्वितीयायाः' इति सूत्रे द्रष्टव्यम्। | एकवचनस्य २३ |
| पदस्य १६ पदात् १७<br>अनुदात्तम् १८<br>युष्मदस्मदोः २०<br>एकवचनस्य २२ | **२३. त्वामौ द्वितीयायाः**<br>पदात्परयोरपादादौ स्थितयोः द्वितीयैकवचनान्तयोर्युष्मदस्मदोः त्वा, मा - इत्येतावादेशौ भवतः, तौ चानुदात्तौ।<br>८.१.२० तः ८.१.२३ यावत् सूत्राणामुदाहरणं निम्नलिखितश्लोकद्वये द्रष्टव्यम् -<br>श्रीशस्त्वावतु मापीह, दत्तात्ते मेऽपि शर्म सः।<br>स्वामी ते मेऽपि स हरिः, पातु वामपि नौ विभुः॥<br>सुखं वां नौ ददात्वीशः, पतिर्वामपि नौ हरिः।<br>सोऽव्याद् वो नः शिवं, वो नो दद्यात्, सेव्योऽत्र वः स नः॥ | |

| | | |
|---|---|---|
| पदस्य १६<br>पदात् १७<br>अनुदात्तम् १८<br>युष्मदस्मदोः २०<br>(वान्नावादयः)२०-२३ | **२४. न च-वा-हाहैवयुक्ते**<br>च, वा, हा, अह, एव - इत्येतैर्युक्ते (योगे सति) वांनावादयो न भवन्ति।<br>'युक्ते' इत्यत्र भावे क्तः।<br>हरिस्त्वां, मां च रक्षतु। कथं त्वां, मां वा न रक्षेत्, इत्यादि। | न २६ |
| पदस्य १६<br>पदात् १७<br>अनुदात्तम् १८<br>युष्मदस्मदोः २०<br>(वान्नावादयः)२०-२३<br>न २४ | **२५. पश्यार्थैश्चानालोचने**<br>अनालोचने पश्यार्थैः (धातुभिर्योगे) वां नौ इत्यादयो न भवन्ति।<br>आलोचनम् = चाक्षुषं ज्ञानम्, तभिन्नमनालोचनं ज्ञानम्।<br>चेतसा त्वां समीक्षते।<br>अनालोचने किम्? ग्रामस्त्वा पश्यति। ग्रामो मा पश्यति। | |
| पदस्य १६ पदात् १७<br>अनुदात्तम् १८<br>युष्मदस्मदोः २०<br>(वान्नावादयः)२०-२३<br>न २४ | **२६. सपूर्वायाः प्रथमाया विभाषा**<br>विद्यमानपूर्वात् प्रथमान्तात् पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्युष्मदस्मदोः वांनावादयो विभाषा न भवन्ति।<br>ग्रामे कम्बलस्ते स्वम्, ग्रामे कम्बलस्तव स्वम्। ग्रामे कम्बलो मे स्वम्, ग्रामे कम्बलो मम स्वम्। इत्यादि।<br>(वा०) युष्मदस्मदोर्विभाषा अनन्वादेश इति वक्तव्यम्।<br>तेन अन्वादेशे नित्यमेव आदेशाः।<br>अनन्वादेशे धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्ति इति वा।<br>अन्वादेशे - योऽग्निर्हव्यवाट्, य इन्द्रो वज्रवाहुः, तस्मै ते नमः। | |
| पदात् १७<br>अनुदात्तम् १८<br>पदस्य १६ | **२७. तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः**<br>तिङः (तिङन्तात्) पदात् कुत्सनाभीक्ष्ण्ययोरर्थयोः वर्तमानानि गोत्रादीनि अनुदात्तानि भवन्ति।<br>कुत्सने - पचति गोत्रम्।<br>स्वकुलं पीडयतीत्यर्थः, एवं हि कुत्सा भवति।<br>आभीक्ष्ण्ये - पचति पचति गोत्रम्। यस्त्वाभीक्ष्ण्येन गोत्रं ख्यापयति स एवमुच्यते। पचिरत्र व्यक्तीभावे। | |
| पदस्य १६<br>पदात् १७<br>अनुदात्तम् १८ | **२८. तिङ्ङतिङः**<br>अतिङः (अतिङन्तात्) पदात् तिङ् (तिङन्तम्) पदमनुदात्तं भवति।<br>देवदत्तः पचति। | तिङ् ६६ |

| | | |
|---|---|---|
| तिङ् २८<br>अनुदात्तम् १८ | **२९. न लुट्**<br>अतिङः (अतिङन्तात्) पदात् लुट् (लुडन्तम्) पदमनुदात्तं न भवति।<br>श्वः कर्ता। श्वः कर्तारौ। मासेन कर्तारः।<br>प्रकृतसूत्रेण अनुदात्ते प्रतिषिद्धे 'तास्यनुदात्तेन्ङित्' इत्यनेन लसार्वधातुकस्यानुदात्तत्वे कृते तासेरेवोदात्तत्वं भवति। यत्र च टिलोपस्तत्र 'अनुदात्तस्य च यत्रोदात्तलोपः' इति लसार्वधातुकमेवोदात्तं भवति। | न ६६ |
| तिङ् २८<br>अनुदात्तम् १८<br>न २९ | **३०. निपातैर्यद्यदि-हन्त-कुविन्ने-च्चेच्चण्-कच्चिद्यत्रयुक्तम्**<br>यद्, यदि, हन्त, कुवित्, नेत्, चेत्, चेण्, चण् कच्चित्, यत्र - इत्येतैर्निपातैर्युक्तं तिङन्तम् अनुदात्तं न भवति।<br>यत् करोति। यदि करोति। हन्त करोति। कुवित्करोति। नेज्जिह्मायन्तो नरकं पताम। स चेद् भुङ्क्ते। अयं च मरिष्यति, णिद्विशिष्टोऽयं चणूशब्दः चेदर्थे वर्तते। कच्चिद् भुङ्क्ते। यत्र भुङ्क्ते। | |
| तिङ् २८<br>अनुदात्तम् १८<br>न २९ | **३१. नह प्रत्यारम्भे**<br>'नह' इत्येतेन युक्तं तिङन्तम् अनुदात्तं न भवति, प्रत्यारम्भे। नह भोक्ष्यसे। | |
| तिङ् २८<br>अनुदात्तम् १८<br>न २९ | **३२. सत्यं प्रश्ने**<br>'सत्यम्' इत्यनेन युक्तं तिङन्तम् अनुदात्तं न भवति प्रश्ने गम्यमाने।<br>सत्यं भोक्ष्यसे ? सत्यमध्येष्यसे ? | |
| तिङ् २८<br>अनुदात्तम् १८<br>न २९ | **३३. अङ्गाप्रातिलोम्ये**<br>अङ्ग इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये गम्यमाने अनुदात्तं न भवति।<br>अङ्ग कुरु। अङ्ग पच। अङ्ग पठ। | अप्रातिलोम्ये ३४ |
| तिङ् २८<br>अनुदात्तम् १८<br>न २९<br>अप्रातिलोम्ये ३३ | **३४. हि च**<br>हि इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये गम्यमाने अनुदात्तं न भवति।<br>स हि कुरु। स हि पच।<br>अप्रातिलोम्ये इत्येव - स हि कूज वृषल इदानीं ज्ञास्यति जाल्म !<br>उदाहरणे हिशब्दोऽवधारणे, हेतौ वा वर्तते, प्रत्युदाहरणे त्वमर्षे। | हि ३५ |

| | | |
|---|---|---|
| हि ३४<br>तिङ् २८<br>अनुदात्तम् १८<br>न २६ | **३५. छन्दस्यनेकमपि साकाङ्क्षम्**<br>छन्दसि विषये हियुक्तं तिङन्तं साकाङ्क्षमनेकमपि अनुदात्तं न भवति, अपिना एकमपि।<br>अनृतं हि मत्तो वदति पाप्मा एनं विपुनाति।<br>तिङन्तद्वयमप्येतन्न निहन्यते।<br>एकं खल्वपि – अग्निर्हि पूर्वमुदजयत् तमिन्द्रोऽनूद जयत् इति। | |
| तिङ् २८<br>अनुदात्तम् १८<br>न २६ | **३६. यावद्यथाभ्याम्**<br>यावत्, यथा – इत्येताभ्यां युक्तं तिङन्तमनुदात्तं न भवति।<br>यावद् भुङ्क्ते। यथा भुङ्क्ते। | यावद्यथाभ्याम् ३८ |
| यावद्यथाभ्याम् ३६<br>तिङ् २८<br>अनुदात्तम् १८<br>न २६ | **३७. पूजायां नानन्तरम्**<br>यावत्, यथा – इत्येताभ्यां युक्तमनन्तरं तिङन्तं पूजायां विषये नानुदात्तं न भवति, किं तर्हि अनुदात्तमेव।<br>यावत् पचति शोभनम्। यथा पचति शोभनम्। | पूजायाम् न ३८<br>अनन्तरम् ३८ |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७<br>पूजायाम् ३७<br>अनन्तरम् ३७ | **३८. उपसर्गव्यपेतं च**<br>यावद्–यथाभ्यां युक्तमनन्तरं तिङन्तम् उपसर्गव्यपेतं पूजायां विषये नानुदात्तं न भवति, किंतर्हि? अनुदात्तमेव।<br>प्रपचति शोभनम्।<br>अनन्तरमित्येव– यावद् देवदत्तः प्रपचति शोभनम्। यथा देवदत्तः प्रपचति चारु। | |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **३९. तु–पश्य–पश्यताहैः पूजायाम्**<br>तु, पश्य, पश्यत, अह– इत्येतैर्युक्तं तिङन्तमनुदात्तं न भवति, पूजायां विषये।<br>माणवकस्तु भुङ्क्ते शोभनम्।<br>पश्य माणवको भुङ्क्ते शोभनम्।<br>पश्यत माणवको भुङ्क्ते शोभनम्।<br>अह माणवको भुङ्क्ते शोभनम्। | पूजायाम् ४० |
| तिङ् २८<br>अनुदात्तम् १८<br>पूजायाम् ३७<br>न ३७ | **४०. अहो च**<br>अहोयुक्तं तिङन्तं अनुदात्तं न भवति पूजायां विषये।<br>अहो देवदत्तः पचति शोभनम्। पृथग्योगकरणमुत्तरार्थम्। | अहो ४१ |
| अहो ४०<br>तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **४१. शेषे विभाषा**<br>'अहो' इत्यनेन युक्तं तिङन्तं शेषे विभाषा अनुदात्तं न भवति।<br>कश्च शेषः? यदन्यत्पूजायाः। कम्महो करिष्यति। मम गेहमेष्यसि। असूयावचनमेतत्। | विभाषा ४२ |
| विभाषा ४१<br>तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **४२. पुरा च परीप्सायाम्**<br>'पुरा' इत्यनेन युक्तं तिङन्तं परीप्सायामर्थे विभाषाऽनुदात्तं न भवति।<br>परीप्सा = त्वरा।<br>अधीष्व माणवक ! पुरा विद्योतते विद्युत्। | |

| | | |
|---|---|---|
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **४३. नन्वित्यनुज्ञैषणायाम्**<br>'ननु' इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति अनुज्ञैषणायां विषये।<br>किञ्चित्कर्तुं स्वयमेवोद्यतस्य एवं क्रियताम् इत्यनुज्ञानमनुज्ञा, अनुज्ञाया एषणा = प्रार्थना, अनुज्ञैषणा। अनुज्ञा = प्रार्थनेत्यर्थः।<br>ननु गच्छामि भोः!अनुजानीहि मां गच्छन्तम्। | |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **४४. किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्**<br>क्रियाप्रश्ने वर्तमानेन 'किम्' इत्यनेन युक्तं तिङन्तमनुपसर्गमप्रतिषिद्धम् अनुदात्तं न भवति।<br>किं देवदत्तः पचति ? आहोस्विद् भुङ्क्ते?<br>अप्रतिषिद्धमिति किम्? किं देवदत्तो न पठति, आहोस्विन्न करोति।<br>अनुपसर्गमिति किम्? किं देवदत्तः प्रपचति, आहोस्वित्प्रकरोति। | सम्पूर्णसूत्रम् ४५ |
| किं क्रियाप्रश्ने ४४<br>अनुपसर्गम् ४४<br>प्रतिषिद्धम् ४४<br>तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **४५. लोपे विभाषा**<br>किमो लोपे क्रियाप्रश्ने तिङन्तमनुपसर्गमप्रतिषिद्धं विभाषा अनुदात्तं न भवति।<br>क्व चास्य लोपः? यत्र प्रकरणादिना गम्यते चार्थः, न च प्रयुज्यते किंशब्दः, 'अदर्शनं लोपः' इत्यनेन प्रसङ्गे सति अदर्शनमात्रस्य लोपसंज्ञाविधानात्।<br>देवदत्तः पचति अहोस्वित् पठति? अत्र विनैव किमा क्रियाप्रश्नोऽवगम्यते। | |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **४६. एहि मन्ये प्रहासे लृट्**<br>'एहिमन्ये' इत्यनेन युक्तं लृडन्तम् अनुदात्तं न भवति, प्रहासे गम्यमाने।<br>प्रकृष्टो हासः प्रहासः = क्रीडा।<br>एहि मन्ये ओदनं भोक्ष्यसे, न हि भोक्ष्यसे भुक्तः सोऽतिथिभिः। एहि मन्ये रथेन यास्यसि, न हि यास्यसि यातस्तेन पिता। | |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **४७. जात्वपूर्वम्**<br>अविद्यमानपूर्वं यद् 'जातु' इत्यव्ययं तेन युक्तं तिङन्तम् अनुदात्तं न भवति।<br>जातु भोक्ष्यसे।<br>अपूर्वमिति किम्? कटं जातु करिष्यति। | अपूर्वम् ४६ |

| | | |
|---|---|---|
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७<br>अपूर्वम् ४७ | **४८. किंवृत्तं च चिदुत्तरम्**<br>अविद्यमानपूर्वं 'चित्' इत्युत्तरकं यत् किवृत्तं शब्दस्वरूपम्, तेन युक्तं तिङन्तम् अनुदात्तं न भवति।<br>किम् शब्देन निष्पन्नाः कः, कम्, केन, कतरः, कतम-इत्यादयः शब्दाः किंवृत्तशब्देन गृह्यन्ते।<br>कश्चिद् भोजयति। केनचित्करोति। कतरश्चित् करोति। कतमश्चित् भुङ्क्ते। | |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **४९. आहो उताहो चानन्तरम्**<br>अविद्यमानपूर्वाभ्याम् आहो, उताहो-इत्येताभ्यां युक्तमनन्तरं तिङन्तम् अनुदात्तं न भवति।<br>आहो भुङ्क्ते। उताहो भुङ्क्ते। | आहो उताहो५० |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७<br>आहो ४९<br>उताहो४९ | **५०. शेषे विभाषा**<br>आहो, उताहो - इत्येताभ्यां युक्तं तिङन्तम् अनुदात्तं शेषे विभाषा न भवति।<br>कश्च शेषः? यदन्यदनन्तरात्।<br>आहो देवदत्तः पचति। उताहो देवदत्तः पचति। | |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **५१. गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत्**<br>गत्यर्थलोटा युक्तं तिङन्तम् अनुदात्तं न भवति, लोडन्ते यत्कारकं तल्लृडन्ते सर्वमन्यद् न भवति चेत्।<br>अंशतोऽन्यत्वे तु निषेधो भवत्येवेत्याशयः।<br>आगच्छ देवदत्त ग्रामं, द्रक्ष्यसि एनम्। आगच्छ देवदत्त ग्राममोदनं भोक्ष्यसे। उह्यन्तां देवदत्तेन शालयः, तेनैव भोक्ष्यन्ते। उह्यन्तां देवदत्तेन शालयः, यज्ञदत्तेन भोक्ष्यन्ते।<br>न चेत्कारं सर्वान्यदिति किम्? आगच्छ देवदत्त ग्रामं, पिता ते ओदनं भोक्ष्यते। उह्यन्तां देवदत्तेन शालयः, सक्तवस्तेन पास्यन्ते। | गत्यर्थलोटा न<br>चेत्कारकम्<br>सर्वान्यत् ५३ |
| गत्यर्थलोटा ५१<br>न५१<br>चेत्कारकम् ५१<br>सर्वान्यत् ५१<br>तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **५२. लोट् च**<br>गत्यर्थलोटा युक्तं लोडन्तं तिङन्तम् अनुदात्तं न भवति, न चेत्कारकं सर्वान्यद् भवति।<br>आगच्छ देवदत्त ग्रामं पश्य। पृथग्योगकरणमुत्तरार्थम्। | लोट् ५४ |
| गत्यर्थलोटा ५१<br>न५१<br>चेत्कारकम् ५१<br>सर्वान्यत् ५१<br>तिङ् २८<br>अनुदात्तम्१८<br>न ३७ | **५३. विभाषितं सोपसर्गमनुत्तमम्**<br>गत्यर्थलोटा युक्तं सोपसर्गमुत्तमवर्जितं लोडन्तं तिङन्तं विभाषितं नानुदात्तं भवति, न चेत् कारकं सर्वान्यद् भवति।<br>आगच्छ देवदत्त! ग्रामं प्रविश। | सम्पूर्णसूत्रम् ५४ |

| | | |
|---|---|---|
| विभाषितम् ५३<br>सोपसर्गमनुत्तमम् ५३<br>लोट् ५२ | **५४. हन्त च**<br>'हन्त' इत्यनेन युक्तं सोपसर्गमुत्तमवर्जितं लोडन्तं तिङन्तं विभाषितं अनुदात्तं न भवति।<br>हन्त प्रविश। | |
| गत्यर्थलोटा ५१<br>न ५१<br>चेत्कारकम् ५१<br>सर्वान्यत् ५१<br>तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **५५. आम एकान्तरमामन्त्रितमनन्तिके**<br>'आम्' इत्येतस्मादुत्तरम् एकपदान्तरम् आमन्त्रितान्तम् अनुदात्तं न भवति, यः आमन्त्र्यते = आहूयते स चेद् अनन्तिके = असमीपे भवेत्।<br>आम् पचसि देवदत्त३।<br>आम् भोः देवदत्त३। | |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **५६. यद्धि-तुपरं छन्दसि**<br>यद्, हि, तु - इत्येत्परं तिङन्तं छन्दसि अनुदात्तं न भवति।<br>गवां गोत्रमुदसृजो यदङ्गिरः।<br>इन्दवो वामुशन्ति हि।<br>आख्यास्यामि तु ते। | |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **५७. चन-चिदिव-गोत्रादि-तद्धिताम्रेडितेष्वगतेः**<br>चन, चित्, इव, गोत्रादि, तद्धित, आम्रेडित- इत्येतेषु परतः अगतेरुत्तरं तिङन्तम् अनुदात्तं न भवति।<br>चन - देवदत्तः पचति चन।<br>चित् - देवदत्तः पचति चित्।<br>गोत्रादि - गोत्रादिपदेन 'तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः' (८.१.२७) इति सूत्रे पठिता गोत्रादयः गृह्यन्ते, तत्र कुत्सनाभीक्ष्ण्ययोः इति गणपाठस्य विशेषणाद् इहापि गोत्रादयः कुत्सनाभीक्ष्ण्ययोर्वर्तमाना एव गृह्यन्ते।<br>गोत्रादीत्यस्योदाहरणम् - देवदत्तः पचति गोत्रम्।<br>तद्धित - देवदत्तः पचतिकल्पम्, पचतिरूपम्।<br>आम्रेडित - देवदत्तः पचति पचति। | अगतेः ५८ |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७<br>अगतेः ५७ | **५८. चादिषु च**<br>चादषु च परतः परम् तिङन्तमगतेः अनुदात्तं न भवति।<br>'चादयः' 'न चवाहाहैवयुक्ते' (८.१.२४) इत्यत्र ये निर्दिष्टाः, त इह परिगृह्यन्ते।<br>च- देवदत्तः पचति च खादति च।<br>वा- देवदत्तः पचति वा खादति वा।<br>ह- देवदत्तः पचति ह खादति ह।<br>अह- देवदत्तः पचत्यह खादत्यह।<br>एव- देवदत्तः पचत्येव खादत्येव।<br>'अगतेः' इत्येव- देवदत्तः प्रपचति च प्रखादति च। | |

| | | |
|---|---|---|
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७ | **५९. च-वायोगे प्रथमा**<br>च, वा - इत्येताभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति।<br>प्रथमात्वं चात्र प्रथममुच्चारणाद् वेदितव्यम्।<br>गर्दभांश्च कालयति, वीणां च वादयति। गर्दभान् वा कालयति, वीणां वा वादयति।<br>प्रथमाग्रहणम् द्वितीयादेस्तिङन्तस्य मा भूदिति। तेन उदाहरणे प्रथमतिङन्तस्य कालयति इत्यस्यैव निघातप्रतिषेधः न तु वादयति इत्यस्यापि। | प्रथमा ६५ |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७<br>प्रथमा ५९ | **६०. हेति क्षियायाम्**<br>'ह' इत्यनेन युक्ता प्रथमा तिङ्विभक्तिरनुदात्ता न भवति।<br>क्षिया = धर्मव्यतिक्रमः, आचारभेदो वा।<br>स्वयं ह रथेन याति३ उपाध्यायं पदातिं गमयति। स्वयं हौदनं भुङ्क्ते३ उपाध्यायान् सक्तून् पाययति।<br>प्रथमस्य तिङन्तस्यात्र निघातः प्रतिषिध्यते, 'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' इति सूत्रेण च तस्य प्लुतो भवति। | क्षियायाम् ६१ |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७<br>प्रथमा ५९<br>क्षियायाम् ६० | **६१. अहेति विनियोगे च**<br>'अह' इत्यनेन युक्ता प्रथमा तिङ्विभक्तिः अनुदात्ता न भवति, विनियोगे गम्यमाने, चकारात् क्षियायां च।<br>नानाप्रयोजनो नियोगः = प्रेषणम्, इति विनियोगः।<br>विनियोगे- त्वमह ग्रामं गच्छ। त्वमहारण्यं गच्छ।<br>क्षियायाम् - स्वयमह रथेन याति३ उपाध्यायं पदातिं गमयति। स्वयमहौदनं भुङ्क्ते३ उपाध्यायान् सक्तून् पाययति।<br>पूर्ववन्निघातप्रतिषेधः, प्लुतश्च। | |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७<br>प्रथमा ५९ | **६२. चाहलोप एवेत्यवधारणम्**<br>चलोपे, अहलोपे एव प्रथमा तिङ्विभक्तिः अनुदात्ता न भवति।<br>क्व चानयोर्लोपः, यत्रार्थो गम्यते, न च प्रयुज्यते, तत्र लोपः। तत्र 'च' इतिशब्दः समुच्चयार्थः, अहशब्दः केवलार्थ इति- समानकर्तृके चलोपः, नानाकर्तृके अहलोपः।<br>चलोपे- देवदत्त एव ग्रामं गच्छतु, स देवदत्त एवारण्यं गच्छतु। ग्रामं चारण्यं च गच्छत्वित्यर्थः।<br>अह लोपे - देवदत्त एव ग्रामं गन्छतु, यज्ञदत्त एवारण्यं गच्छतु। ग्रामं केवलमरण्यं केवलमित्यर्थः। | |

| | | |
|---|---|---|
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७<br>प्रथमा ५९ | **६३. चादिलोपे विभाषा**<br>चादयः 'न चवाहाहैवयुक्ते' (८.१.२४) इति सूत्रनिर्दिष्टा गृह्यन्ते, तेषां लोपे प्रथमा तिङ्विभक्तिः अनुदात्ता न भवति विभाषा।<br>चलोपे- शुक्ला व्रीहयो भवन्ति, श्वेता गा आज्याय दुहन्ति। 'भवन्ति' इत्यस्य विकल्पेन निघातप्रतिषेधः।<br>वालोपे- व्रीहिभिर्यजेत, यवैर्यजेत।<br>एवं शेषेष्वपि यथादर्शनमुदाहर्यम्। | विभाषा ६५ |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७<br>प्रथमा ५९<br>विभाषा ६३ | **६४. वै वावेति च च्छन्दसि**<br>वै, वाव - इत्येताभ्यां युक्ता प्रथमा तिङ्विभक्तिर्विभाषा अनुदात्ता न भवति, छन्दसि विषये।<br>वै- अहर्वै देवानामासीद् रात्रिरसुराणाम्।<br>वाव- अयं वाव आसीत, नेतर आसीत्। | छन्दसि ६५ |
| तिङ् २८<br>अनुदात्तम् १८<br>न ३७<br>प्रथमा ५९<br>विभाषा ६३ | **६५. एकान्याभ्यां समर्थाभ्याम्**<br>समौ = तुल्यावर्थौ ययोस्तौ समर्थौ। एक, अन्य- इत्येताभ्यां समर्थाभ्यां युक्ता प्रथमा तिङ् विभक्तिः विभाषा नानुदात्ता भवति छन्दसि विषये।<br>एक- प्रजामेका जिन्वत्यूर्जमेका रक्षति। जिन्वतीत्येतत्पक्षे निहन्यते।<br>अन्य- तयोरन्यः पिप्पलः स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति। अत्तीत्येतत्पक्षे निहन्यते। | |
| तिङ्२८<br>अनुदात्तम् १८<br>न ३७ | **६६. यद्वृत्तान्नित्यम्**<br>यद्वृत्तात् पदादुत्तरं तिङन्तम् अनुदात्तं न भवति नित्यम्। यच्छब्देन निष्पन्नाः यः, यम्, येन, इत्यादयः शब्दाः यद्वृत्तशब्देन गृह्यन्ते।<br>यो भुङ्क्ते। यं भोजयति। येन भुक्तम्। | |
| | **६७. पूजनात्पूजितमनुदात्तम्**<br>पूजनवाचकाच्छब्दादुत्तरं पूजितमनुदात्तं भवति।<br>अनुदात्तमिति वर्तमाने पुनरनुदात्तग्रहणं प्रतिषेधनिवृत्त्यर्थम्।<br>काष्ठाध्यापकः। दारुणाध्यापकः। काष्ठादयः शब्दा अद्भुतपर्याया।<br>(वा०) पूजितस्यानुदात्तत्वे काष्ठादिग्रहणं कर्त्तव्यम्।<br>तेनेह न भवति - शोभनोऽध्यापकः। | सम्पूर्णसूत्रम् ६८ |
| पूजनात् ६७<br>पूजितम् ६७<br>अनुदात्तम् ६७ | **६८. सगतिरपि तिङ्**<br>पूजनेभ्यः परं गतिसहितम्, अपिशब्दाद् गतिरहितमपि पूजितं तिङन्तमनुदात्तं भवति। यत्काष्ठं पचति। यत्काष्ठं प्रपचति। यद् दारुणं पचति। यद् दारुणं प्रपचति। | सगतिरपि तिङ् ६९ |

| | | |
|---|---|---|
| सगतिरपि ६८<br>तिङ् ६८<br>अनुदात्तम् ६७ | **६९. कुत्सने च सुप्यगोत्रादौ**<br>कुत्सने च गोत्रादिवर्जिते सुबन्ते परतः गतिसहितं, तद्रहितं च तिङन्तमनुदात्तं भवति।<br>पचति पूति, प्रपचति पूति। पचति मिथ्या, प्रपचति मिथ्या। अगोत्रादाविति किम् ? पचति गोत्रम्। गोत्रादिपदेन 'तिङो गोत्रादीनि०'(८.१.२७) इतिसूत्रपठिताः गोत्रादयः गृह्यन्ते। | |
| अनुदात्तम् ६७ | **७०. गतिर्गतौ**<br>गतिर्गतौ परतोऽनुदात्तो भवति।<br>अभ्युद्धरति। समुदानयति।<br>सूत्रे गतिशब्दः क्तिजन्तः पुलिङ्गः। द्रष्टव्या चात्र 'गतिरनन्तरः' (६.२.४९) इतिसूत्रस्था पदमञ्जरी। | गतिः ७१ |
| गतिः ७०<br>अनुदात्तम् ६७ | **७१. तिङि चोदात्तवति**<br>उदात्तवति तिङन्ते परतो गतिरनुदात्तो भवति।<br>यत्प्रपचति। यत्करोति। अत्र 'निपातैर्यद्यदि' इति निघातप्रतिषेधात्तिङन्तमुदात्तवत्। | |
| | **७२. आमन्त्रितं पूर्वमविद्यमानवत्**<br>पूर्वम् आमन्त्रितम् अविद्यमानवद् भवति। तस्मिन् सति यत्कार्यं प्राप्नोति तन्न भवति, असति यत् तद् भवति इति सूत्रस्य प्रयोजनम्।<br>कानि पुनरविद्यमानवत्त्वे प्रोजनानि?<br>आमन्त्रित-तिङ्निघात-निघात-युष्मदस्मदादेशाभावाः।<br>आमन्त्रित- देवदत्त! यज्ञदत्त! इत्यत्र पदात्परस्य इत्यधिकारे 'आमन्त्रितस्य च' इति सूत्रेणानुदात्तत्वं यज्ञदत्तस्य न भवति अपि तु 'आमन्त्रितस्य च' इत्याद्युदात्तो भवति।<br>तिङ्निघात- 'देवदत्त ! पचसि' इत्यत्र 'तिङ्ङतिङ' इति निघातो न भवति पचसीत्यस्य। युष्मदस्मदादेशाभाव- देवदत्त ! तव ग्रामः स्वम्, देवदत्त ! मम ग्रामः स्वम्। इत्येवमादिषु युष्मदस्मदादेशा न भवन्ति।<br>एवमन्यान्यपि अविद्यमानवद्भावस्य प्रयोजनानि सन्ति। | सम्पूर्णसूत्रम् ७४ |
| आमन्त्रितम् ७२<br>पूर्वमविद्यमानवत् ७२ | **७३. नामन्त्रिते समानाधिकरणे**<br>आमन्त्रितान्ते समानाधिकरणे परतः पूर्वमामन्त्रितान्तं सामान्यवचनं (विशेष्यम्) अविद्यमानवद् न भवति। किंतर्हि ? विद्यमानवदेव। हरे ! दयालो ! नः पाहि। अग्ने ! तेजस्विन् ! | आमन्त्रिते<br>समानाधिकरणे७४ |
| आमन्त्रिते ७३<br>समानाधिकरणे ७३<br>आमन्त्रितम् ७२<br>पूर्वमविद्यमानवत् ७२ | ७४. सामान्यवचनं विभाषितं विशेषवचने<br>विशेषवचने (विशेषणे) समानाधिकरणे आमन्त्रितान्ते परतः पूर्वमामन्त्रितं बहुवचनान्तं विभाषितं विद्यमानवद् भवति।<br>देवाः ! शरण्याः ! ; ब्राह्मणाः ! वैयाकरणाः ! | |

।। इत्यष्टाध्ययायीसूत्रार्थप्रकाशिकायाम् अष्टमाध्यायस्य प्रथमःपादः।।

।। श्रीः ।।

## ।। अथाष्टमाध्यायस्य द्वितीयः पादः ।।

| | | |
|---|---|---|
| | १. पूर्वत्रासिद्धम्<br>'पूर्वत्रासिद्धम्' इत्यतिदेशः। अधिकारश्चायम् आ अध्यायपरिसमाप्तेः। अतिदेशत्वेनास्य सूत्रस्यार्थो भवति- पूर्वशास्त्रं प्रति परशास्त्रमसिद्धवद् भवति इति। अधिकारत्वेनास्य सूत्रस्योत्तरत्रोपस्थित्या इत ऊर्ध्वमपि पूर्वशास्त्रं प्रति परशास्त्रमसिद्धवद् भवति।<br>सूत्रस्योदाहरणम्- तस्मा उद्धर। द्वा आनय।<br>अत्र यकारवकारयोर्लोपस्यासिद्धत्वान्न सन्धिः।<br>गुडलिण्मान्।<br>अत्र ढत्वजश्त्वयोरसिद्धत्वाद् 'झयः' (८.२.१०)इत्यनेन वत्वं न भवति। ढत्वं 'होढः' (८.२.३१)इति सूत्रेण, जश्त्वं 'झलां जशोऽन्ते' (८.२.३९)इति सूत्रेण भवति। | पूर्वत्रासिद्धम्<br>८.४.६८ |
| असिद्धम् १ | २. नलोपः सुप्-स्वर-संज्ञा-तुग्विधिषु कृति<br>नलोपः सुप्स्वर-संज्ञातुग्विधिषु कृति असिद्धो भवति।<br>कृतीत्येतत्तु सम्भवव्यभिचाराभ्यां तुग्विधिनैव सम्बध्यते।<br>सुब्विधौ- राजभ्याम्, राजभिः, राजभ्यः।<br>नलोपस्यासिद्धत्वादत्र दीर्घत्वम्, ऐस्त्वम्,एत्वं च न भवति।<br>स्वरविधौ- राजवती। अत्र नलोपस्यासिद्धत्वाद् 'अन्तोऽवत्याः' इति सूत्रेण अवतीशब्दस्य अन्तोदात्तो न भवति।<br>संज्ञाविधौ- पञ्च ब्राह्मण्यः।<br>अत्र नलोपस्यासिद्धत्वेन नान्तत्वमाश्रित्य 'ष्णान्ता षट्' इति सूत्रेण षट्संज्ञा भवति, तेन 'न षट्स्वस्रादिभ्यः' इति सूत्रेण टापः प्रतिषेधः।<br>कृति तुग्विधौ- वृत्रहभ्याम्। वृत्रोपपदाद् हन्धातोः 'ब्रह्म-भ्रूण-वृत्रेषु क्विप्' इति सूत्रेण क्विपि कृते, सर्वापहारलोपे च कृते भ्यामि रूपम्।<br>अत्र नलोपस्यासिद्धत्वात् 'ह्रस्वस्य पिति कृति तुक्' इति सूत्रेण तुग्न भवति। | |

| | | |
|---|---|---|
| असिद्धः १ | ३. न मु ने<br>ने (नाभावे कर्त्तव्ये, कृते च) मु (मु इत्यादेशः) असिद्धो न भवति।<br>अमुना।<br>(वा०) सिज्लोप एकादेशे सिद्धो वक्तव्यः।<br>अलावीत्। अपावीत्। 'इट ईटि' (८.२.२८) इति सिज्लोपस्य अकः सवर्णे दीर्घः (६.१.९६) इति सवर्णदीर्घत्वेऽसिद्धत्वं न भवति।<br>(वा०)निष्ठादेशः षत्व-स्वर-प्रत्ययविधीड्-विधिषु सिद्धो वक्तव्यः।<br>निष्ठादेशः- वृक्णः, वृक्णवान्।<br>'ओ व्रश्चू छेदने' इत्यस्मात् निष्ठाप्रत्यये, ग्रहिज्येति सूत्रेण सम्प्रसारणम्, चोः कुः इति कुत्वम्, 'ओदितश्च' इति नत्वम्, 'अट्कुप्वाङ्' इति णत्वम्। अत्र निष्ठादेशस्य सिद्धत्वात् झल्परत्वाभावेन 'व्रश्चभ्रस्ज' इति सूत्रेण झलि परे विधीयमानं षत्वं न भवति।<br>स्वर - प्रत्ययविधीड्विधिषु - क्षीबशब्दः। 'अनुपसर्गात् फुल्लक्षीब' इत्यत्र क्षीबृ मदे' इत्यस्मात् क्तप्रत्यये परभूते 'क्षीबशब्दो निपातितः। तत्र निपातनमनेकधा समाश्रीयते - यदा क्षीबेर्निष्ठायामिटि कृते 'इत्' इतिशब्दस्य लोपो निपात्यते, तदा क्षीब इति संज्ञायाम् इत् इतिशब्दलोपस्य असिद्धत्वात् 'निष्ठा च द्व्यजनात्' इत्येष स्वरो न प्राप्नोति। स्वर विधौ निष्ठादेशस्य सिद्धत्वात् अत्र स्वरो भवत्येव। एवमेव 'नो-द्व्यचष्ठन्' इति सूत्रेण द्व्यज्लक्षणे ठनि कर्त्तव्येऽपि निष्ठादेशस्य सिद्धत्वात् क्षीबेन तरति इति विग्रहे क्षीबिकः इति सिध्यति।<br>यदा तु 'क्षीब् त' इत्यवस्थायां तकारलोप एव निपात्यते तदा तस्याऽसिद्धत्वादिडागमः प्राप्नोति, निष्ठादेशस्य च प्रकृतवार्तिकेन सिद्धत्वादिडागमो न भवति। | |
| | ४. उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य<br>उदात्तस्वरितयोः स्थाने यो यण् ततः परस्यानुदात्तस्य स्वरितो भवति।<br>उदात्तयणः - कुमार्यौ, कुमार्यः।<br>स्वरितयणः - खलप्वि + आशा<br>खलप्व्याशा | अनुदात्तस्य६ |
| अनुदात्तस्य ४ | ५. एकादेश उदात्तेनोदात्तः<br>उदात्तेन (सह) अनुदात्तस्य यः एकादेशः स उदात्तो भवति।<br>अग्नी। वायू। वृक्षैः। प्लक्षैः। | एकादेश उदात्तेन६ |

| | | |
|---|---|---|
| अनुदात्तस्य ४<br>एकादेश५ उदात्तेन ५ | ६. स्वरितो वाऽनुदात्ते पदादौ<br>अनुदात्ते पदादौ उदात्तेन सह य एकादेशः स स्वरितो वा भवति।<br>सु + उत्थितः = सूत्थितः।<br>पक्षे पूर्वसूत्रेणोदात्तः। | |
| पदस्य८.१.१६ | ७. न लोपः प्रातिपदिकान्तस्य<br>प्रातिपदिकस्य पदस्य यो अन्तावयवो नकारस्तस्य लोपो भवति।<br>प्रतिपदिकेति, 'न' इति च लुप्तषष्ठीकं पदम्। अन्तस्येति लुप्तषष्ठीकं 'न' इति पदस्य विशेषणम्, 'प्रातिपदिक' इति लुप्तषष्ठीकं पदं च अनुवृत्त्या लब्धस्य 'पदस्य' इत्यस्य विशेषणम्। अतः सूत्रस्याक्तार्थः सम्पद्यते।<br>राजा। राजभ्याम्। राजभिः।<br>'राजा' इत्यत्र 'सुप्तिङन्तं पदम्' इत्यनेन पदसंज्ञा, राजभ्यामित्यादौ च ' स्वादिष्वसर्वनामस्थाने' इत्यनेन।।<br>(वा०) अह्नो नलोपप्रतिषेधो वक्तव्यः।<br>अहः। अहोभ्याम्। अहोभिः।<br>'अहः' इत्यत्र' रोऽसुपि' इति सूत्रेण नकारस्य रेफः।<br>अहोभ्याम्, अहोभिः, इत्यत्र 'अहन्' इति सूत्रेण नकारस्य रुः। | नलोपः<br>प्रतिपदिकान्तस्य८ |
| नलोपः ७<br>प्रतिपदिकान्तस्य७<br>पदस्य८.१.१६ | ८. न ङि-संबुद्ध्योः<br>ङौ, सम्बुद्धौ च परतः नकारस्य लोपो न भवति।<br>ङौ - आर्द्रे चर्मन्। लोहिते चर्मन्।<br>'सुपां सुलुक्' इति ङेर्लुक्।<br>सम्बुद्धौ - हे राजन्। हे तक्षन्।<br>(वा०) ङावुत्तरपदे प्रतिषेधस्य प्रतिषेधो वक्तव्यः।<br>चर्मणि तिला अस्य चर्मतिलः।<br>(वा०) वा नपुंसकानामिति वक्तव्यम्।<br>हे चर्मन्, हे चर्म। | |
| | ९. मादुपधायाश्च मतोर्वोऽयवादिभ्यः<br>मकारान्तात्, मकारोपधाच्च, अकारान्तात्, अकारोपधाच्च परस्य मतोर्मस्य 'व' इत्यादेशो भवति, न तु यवादिभ्यः परस्य।<br>मात् इत्यत्र अकारोऽपि प्रश्लिष्टः। म् च अश्चेति समाहारद्वन्द्वात्पञ्चम्येकवचने मात् इति रूपम्। 'मात्' इति चावर्तते। अतः सूत्रस्योक्तार्थः सम्पद्यते।<br>मकारान्तात्- किंवान्। शंवान्<br>मकारोपधात् - शमीवान्। दाडिमीवान्।<br>अवर्णान्तात्- वृक्षवान्। प्लक्षवान्।<br>खट्वावान्। मालावान्।<br>अवर्णोपधात्- पयस्वान्। यशस्वान्। भास्वान्।<br>अयवादिभ्यः इति किम्? यवमान्। | मतोः १६ वः १५ |

| | | |
|---|---|---|
| मतोर्वः ६ | १०. झयः<br>झयन्तात्परस्य मतोर्मस्य 'व' इत्यादेशो भवति।<br>अग्निचित्वान् ग्रामः। विद्युत्वान् बलाहकः। इन्द्रो मरुत्वान्।<br>'तसौ मत्वर्थे' इति भसंज्ञा, अतः जश्त्वं न। | |
| मतोर्वः ६ | ११. संज्ञायाम्<br>संज्ञायां विषये मतोर्मस्य 'व' इत्यादेशो भवति।<br>अहीवती। कपीवती। ऋषीवती। मुनीवती। 'शरादीनां च' इति दीर्घः। | संज्ञायाम् १३ |
| मतोर्वः ६ | १२. आसन्दीवदष्ठीवत्-चक्रीवत्-कक्षीवद्-रुमण्वत्-चर्मण्वती<br>आसन्दीवत्-अष्ठीवत्-चक्रीवत्-कक्षीवत्-रुमण्वत्-चर्मण्वती- इत्येतानि संज्ञायां निपात्यन्ते। वत्वं पूर्वेणैव सिद्धम्, आदेशार्थानि निपातनानि।<br>आसन्दीवत्- आसनशब्दस्यासन्दीभावो निपात्यते।<br>आसन्दीवान् ग्रामः। आसनवान् इति अन्यत्र।<br>अष्ठीवत्- अस्थ्नोऽष्ठीभावः। अष्ठीवान् इति शरीरैकदेशस्य संज्ञा। अस्थिमान् इत्येवान्यत्र।<br>चक्रीवत्- चक्रशब्दस्य चक्रीभावः। चक्रीवान् राजा। चक्रवान् इत्येवान्यत्र।<br>कक्षीवत्- कक्ष्याशब्दस्य सम्प्रसारणं निपात्यते। कक्षीवान् नाम ऋषिः। कक्ष्यावान् इत्येवान्यत्र।<br>रुमण्वत्- लवणशब्दस्य रुमण्शब्दो निपात्यते। रुमण्वान् नाम पर्वतः। लवणवान् इत्येवान्यत्र।<br>चर्मण्वती- चर्मणो नलोपाभावः, णत्वं च निपात्यते। चर्मण्वती नाम नदी। चर्मवती इत्येवान्यत्र। | |
| मतोर्वः ६ | १३. उदन्वानुदधौ च<br>उदधौ, संज्ञायां च उदन्वान् इति निपात्यते।<br>उदन्वान् उदधिः। उदन्वान् नाम ऋषिः, यस्य औदन्वतः पुत्रः।<br>अन्यत्र उदकवानिति। | |
| मतोर्वः ६ | १४. राजन्वान्सौराज्ये<br>सौराज्ये (गम्यमाने) राजन्वान् इति निपात्यते।<br>शोभनो राजा यस्मिन् स राजन्वान् देशः।<br>अन्यत्र राजवान् इति। | |
| मतोर्वः ६ | १५. छन्दसीरः<br>छन्दसि + इ + रः इतिच्छेदः। इवर्णान्ताद्, रेफान्ताच्च परस्य मतोर्वः भवति छन्दसि।<br>हरिवो मेदिनं त्वा।<br>गीर्वान्, धूर्वान्, आशीर्वान्। | छन्दसि १७ |

| | | |
|---|---|---|
| छन्दसि १५<br>मतोः ६ | १६. अनो नुट्<br>छन्दसि अनः (अन्नन्तात् परस्य) मतोर्नुट् भवति।<br>अक्ष्ण्वन्तः कर्णवन्तः सखायः। | नुट् १७ |
| छन्दसि १५<br>नुट् १६ | १७. नाद् घस्य<br>नात् (नकारान्तात् परस्य) घस्य (तरप्तमप्प्रत्यययोः) नुट् भवति छन्दसि।<br>सुपथिन्तरः। दस्युहन्तमः। | |
| | १८. कृपो रो लः<br>कृपो रो लः भवति।<br>कल्प्ता, कल्प्तारौ, कल्प्तारः।<br>क्लृप्तः, क्लृप्तवान्।<br>(वा०) बाल-मूल-लघ्वसुरालमङ्गुलीनां वा रो लमापद्यत इति वक्तव्यम्।<br>बालः, बारः। मूलम्, मूरम्। लघु, रघु। असुरः, असुलः। अलम्, अरम्। अङ्गुलिः, अङ्गुरिः।<br>(वा०) कपिलकादीनां संज्ञा-छन्दसोर्वा रो लमापद्यत इति वक्तव्यम्।<br>कपिरकः, कपिलकः। तिल्पिलीकम्, तिर्पिरीकम्। लोमानि, रोमाणि। पांशुरम्, पांशुलम्। कर्म, कल्म। शुक्रः, शुक्लः। | रः लः २२ |
| रः १८ लः १८ | १९. उपसर्गस्यायतौ<br>उपसर्गस्य रो लः भवति अयतौ।<br>प्र + अयते = प्लायते।<br>परा + अयते = पलायते। | |
| रः १८ लः १८ | २०. ग्रो यङि<br>ग्रो (गॄ निगरणे इति धातोः)रो लः भवति यङि।<br>निजेगिल्यते, निजेगिल्याते, निजेगिल्यन्ते।<br>'ॠत इद् धातोः' इतीत्वम्, 'हलि च' इत्यनेन दीर्घो न, लत्वं प्रत्यसिद्धत्वात्। | ग्रः २१ |
| ग्रः २० रः१८<br>लः१८ | २१. अचि विभाषा<br>ग्रो रो लः विभाषा भवति अचि।<br>निगिलति, निगिरति। निगलनम्, निगरणम्।<br>व्यवस्थितविभाषया प्राण्यङ्गे 'गलः' इत्यत्र नित्यं लत्वम्, विषेऽर्थे 'गरः' इत्यत्र नित्यं लत्वाभावः।<br>गिरौ, गिरः इत्यत्र तु लत्वं न भवति, धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्। | विभाषा २२ |
| रः १८ लः १८<br>विभाषा २१ | २२. परेश्च घाङ्कयोः<br>परेश्च रो लः वा भवति घाङ्कयोः।<br>पलिघः, परिघः। पल्यङ्कः, पर्यङ्कः।<br>(वा०) योगे चेति वक्तव्यम्।<br>परियोगः, पलियोगः। | |

| | | |
|---|---|---|
| पदस्य ८.१.१६ | २३. संयोगान्तस्य लोपः<br>संयोगान्तस्य पदस्य लोपो भवति।<br>'अलोऽन्त्यस्य' इत्यनेन अन्त्यस्यालः आदेशः।<br>गोमान्। यवमान्। कृतवान्। | संयोगान्तस्य २४<br>लोपः २६ |
| संयोगान्तस्य २३<br>लोपः २३ | २४. रात्सस्य<br>संयोगान्तस्य पदस्य रात्सस्य लोपो भवति।<br>मातुः, पितुः।<br>नियमार्थमिदम् - रात्सस्यैव लोपो भवति। तेन 'ऊर्क्' इत्यत्र संयोगान्तलोपो न भवति। | सस्य २८ |
| सस्य २३<br>लोपः २३ | २५. धि च<br>धि (धकारे) परतः सस्य लोपो भवति।<br>एधिताध्वे। अलविध्वम्, अलविढ्वम्। | |
| सस्य २३<br>लोपः २३ | २६. झलो झलि<br>झलः (परस्य) सस्य लोपो भवति झलि।<br>अभित्त, अभित्थाः। | झलि ३७ |
| सस्य २३<br>लोपः २३<br>झलि २६ | २७. ह्रस्वादङ्गात्<br>ह्रस्वात् ( ह्रस्वान्तात्) अङ्गात् (परस्य) सस्य लोपो भवति झलि।<br>अकृत, अकृथाः। | |
| सस्य २३<br>लोपः २३ | २८. इट ईटि<br>इटः (उत्तरस्य) सस्य लोपो भवति ईटि।<br>अदेवीत्। अकोषीत्। | |
| लोपः २३<br>झलि २६<br>पदस्य ८.१.१६ | २६. स्कोः संयोगाद्योरन्ते च<br>पदस्यान्ते, झलि च परे यः संयोगस्तदाद्योः स्कोर्लोपो भवति।<br>पदान्ते सलोपः - साधुलक्।<br>साधु लज्जते इति विग्रहे साधूपपदात् लस्जू धातोः क्विप्।<br>पदान्ते कलोपः- तट्। तक्षेः क्विप्।<br>झलि सलोपः- मग्नः, मग्नवान्।<br>टु मस्जो शुद्धौ 'इतिधातोर्निष्ठा, 'ओदितश्च' इति सूत्रेण निष्ठातकारस्य नकारः।<br>झलि कलोपः- तष्टः, तष्टवान्।<br>तक्षेर्निष्ठा। | अन्ते ३७ |
| झलि २६<br>पदस्य ८.१.१६<br>अन्ते २६ | ३०. चोः कुः<br>चोः कुर्भवति, झलि पदान्ते च।<br>वक्ता, वक्तुम्, वक्तव्यम्, वाक्। | |
| झलि २६<br>पदस्य ८.१.१६<br>अन्ते २६ | ३१. हो ढः<br>हो ढो भवति झलि, पदान्ते च।<br>वोढा, वोढुम्, वोढव्यम्। प्रष्ठवाट्, दित्यवाट्। | हः ३५ |

| | | |
|---|---|---|
| झलि २६ हः ३१<br>पदस्य ८.१.१६<br>अन्ते २६ | ३२. दादेर्धातोर्घः<br>दादेर्धातोहकारस्य घो भवति झलि पदान्ते च।<br>दग्धा, दग्धुम्, दग्धव्यम्। काष्ठधक्। | घः३३ |
| झलि २६<br>पदस्य ८.१.१६<br>अन्ते २६ हः ३१<br>घः३२ | ३३. वा द्रुह-मुह-ष्णुह-ष्णिहाम्<br>द्रुह-मुह-ष्णुह-ष्णिहां हकारस्य घः वा भवति झलि, पदान्ते च।<br>पक्षे 'हो ढः' इति ढः।<br>द्रुह- द्रोग्धा द्रोढा। मित्रध्रुक्, मित्रध्रुट्।<br>मुह- उन्मोग्धा, उन्मोढा। उन्मुक्, उन्मुट्।<br>ष्णुह- उत्स्नोग्धा, उत्स्नोढा। उत्स्नुक्, उत्स्नुट्।<br>ष्णिह- स्नेग्धा, स्नेढा। स्निक्, स्निट्। | |
| झलि २६<br>पदस्य ८.१.१६<br>अन्ते २६ | ३४. नहो धः<br>नहो हकारस्य धः भवति झलि, पदान्ते च।<br>नद्धम्, नद्धुम्, नद्धव्यम्।<br>उपानत्। परीणत्।<br>'नहिवृति' इत्यादिना पूर्वपदस्य दीर्घः। | |
| झलि २६<br>पदस्य ८.१.१६<br>अन्ते २६ | ३५. आहस्थः<br>आहो हकारस्य थः भवति झलि।<br>किमात्थ ? इदमात्थ।<br>आदेशान्तरकरणम् 'झषस्तथोर्धोऽधः' इत्यस्य निवृत्यर्थम्।<br>(वा०) हृग्रहोर्भश्छन्दसि हस्येति वक्तव्यम्।<br>गर्दभेन सम्भरति। ग्रभीता। जभ्रिरे। उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्। | |
| झलि २६<br>पदस्य ८.१.१६<br>अन्ते २६ | ३६. व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राज-च्छशां षः<br>व्रश्च,भ्रस्ज,सृज,मृज,यज,राज,भ्राज- इत्येतेषां, छकारान्तानां,शकारान्तानां च षः भवति झलि, पदान्ते च।<br>व्रष्टा, मूलवृट्। भ्रष्टा, धानाभृट्। स्रष्टा, रज्जुसृट्। मार्ष्टा, कंसपरिमृट्। यष्टा, उपयट् 'विजुपे छन्दसि' इति विच्।<br>राजभ्राजोः पदान्तार्थं ग्रहणम्, झलादिः आभ्याम् इटा व्यवधीयते। सम्राट्। विभ्राट्।<br>छकारान्तानाम्-'प्रच्छ ज्ञीप्सायाम्'-प्रष्टा, प्रष्टुम्, प्रष्टव्यम्,शब्दप्राट्।<br>शकारान्तानाम्- 'लिश अल्पीभावे'- लेष्टा, लिट्।<br>विश प्रवेशने- वेष्टा, विट्। | |

| | | |
|---|---|---|
| पदस्य ८.१.१६<br>अन्ते २९ | **३७. एकाचो बशो भष् झषन्तस्य स्ध्वोः**<br>धातोरवयवो य एकाज् झषन्तस्तदवयवस्य बशः स्थाने भष् भवति स्ध्वोः (सकारे,ध्वशब्दे च) पदान्ते च।<br>बुध- भोत्स्यते। अभुद्ध्वम्। अर्थभुत्।<br>गुह- निघोक्ष्यते। न्यघूढ्वम्। पर्णघुट्।<br>दुह- धोक्ष्यते। अधुग्ध्वम्। गोधुक्। | स्ध्वोः ३८<br>झषन्तस्य, बशो भष् ३८ |
| झषन्तस्य बशो भष् स्धवोः३७ | **३८. दधस्तथोश्च**<br>कृतद्विर्वचनस्य धाधातोः यः झषन्तः, तस्य बशः स्थाने भष् भवति तथोः परतः, चकारात् स्ध्वोश्च।<br>'दधः' इति 'धा' धातोः कृतद्विर्वचनस्य निर्देशः। अतः सूत्रस्योर्थो भवति।<br>धत्तः। धत्थः। धत्से। धत्स्व। धद्ध्वे, धद्ध्वम्।<br>'श्नाभ्यस्तयोरातः' इति सूत्रेण आकारस्य लोपः। | |
| पदस्य८.१.१६ | **३९. झलां जशोऽन्ते**<br>पदस्यान्ते झलां जशो भवति।<br>वागत्र। श्वलिडत्र। अग्निचिदत्र। त्रिष्टुबत्र। | |
| | **४०. झषस्तथोर्धोऽधः**<br>झषः (परयोः) तथोर्धः भवति, धाधातोः झषः (परयोः) तकारथकारयोः स्थाने धकारो न भवति।<br>लब्धा। लब्धुम्। लब्धव्यम्। लेढा। लेढुम्। लेढव्यम्।<br>बोद्धा। बोद्धुम्। बोद्धव्यम्।<br>अध इति किम्? धत्तः। धत्थः। | |
| | **४१. षढोः कः सि**<br>षकारस्य, ढकारस्य च कः भवति सकारे परे।<br>पिष्लृ सञ्चूर्णने- पेक्ष्यति।<br>लिह आस्वादने- लेक्ष्यति। | |
| | **४२. रदाभ्यां निष्ठातो नः पूर्वस्य च दः**<br>रदाभ्यां परस्य निष्ठातो (निष्ठातकारस्य) नः भवति पूर्वस्य दश्च नः भवति।<br>रेफात्- आस्तीर्णः, आस्तीर्णवान्।<br>दकारात्- भिन्नः, भिन्नवान्। | निष्ठातः नः ६१ |
| निष्ठातः ४२<br>नः४२ | **४३. संयोगादेरातो धातोर्यण्वतः**<br>संयोगादेरातो (आकारान्ताद्)यण्वतः धातोः (परस्य) निष्ठातो नः भवति।<br>द्रा- प्रद्राणः, प्रद्राणवान्।<br>म्लै- म्लानः, म्लानवान्। | |

| | | |
|---|---|---|
| निष्ठातः ४२<br>नः ४२ | ४४. ल्वादिभ्यः<br>ल्वादिभ्यः (परस्य) निष्ठातो नः भवति।<br>लूनः। लूनवान्।<br>धूनः। धूनवान्।<br>जीनः। जीनवान्।<br>(वा०) ऋकारल्वादिभ्यः क्तिन्निष्ठावद् भवतीति वक्तव्यम्।<br>'कॄ विक्षेपे' – कीर्णिः। 'गॄ निगरणे' गीर्णिः। शॄ हिंसायाम् – शीर्णिः। 'लूञ् छेदने'–लूनिः। 'पूञ् पवने' – पूनिः। | |
| निष्ठातः ४२<br>नः ४२ | ४५. ओदितश्च<br>ओदितः धातोश्च (परस्य) निष्ठातो नः भवति।<br>ओलजी, ओ लस्जी व्रीडायाम्– लग्नः। लग्नवान्।<br>ओविजी भयचलनयोः – उद्विग्नः, उद्विग्नवान्। | |
| निष्ठातः ४२<br>नः ४२ | ४६. क्षियो दीर्घात्<br>क्षियो दीर्घात् (परस्य) निष्ठातो नः भवति।<br>क्षीणा क्लेशाः। क्षीणो जाल्मः।<br>क्षीणस्तपस्वी।<br>दीर्घादिति किम्? अक्षितमसि मामेक्षेष्ठाः। अक्षितमसि मामेक्षेष्ठाः। अक्षितमित्यत्र भावे क्तः, भावश्च ण्यदर्थ इति 'निष्ठायामण्यदर्थे' इति दीर्घो न भवति। | |
| निष्ठातः ४२<br>नः ४२ | ४७. श्योऽस्पर्शे<br>श्यः (श्यैङ् गतौ, इत्यस्माद् धातोः परस्य) निष्ठातो नः भवति, अस्पर्शे।<br>शीनं घृतम्। शीनं मेदः।<br>अस्पर्शे इति किम्? शीतो वायुः। | |
| निष्ठातः ४२<br>नः ४२ | ४८. अञ्चोऽनपादाने<br>अञ्चः (परस्य) निष्ठातो नः भवति, न चेदपादानं तत्र भवति।<br>समक्नौ शकुनेः पादौ। पङ्के समक्नः।<br>अनपादाने इति किम्? उदक्तमुदकं कूपात्। | |
| निष्ठातः ४२<br>नः ४२ | ४९. दिवोऽविजिगीषायाम्<br>दिवः (परस्य) निष्ठातो नः भवति, विजिगीषायाम् अर्थे वर्तमानाद् दिव्धातोः परस्य निष्ठातो नः न भवति।<br>आद्यूनः। परिद्यूनः।<br>आद्यूनः = औदरिकः। परिद्यूनः = क्षीणः।<br>अविजिगीषायामिति किम्? द्यूतं वर्तते। | |

| | | |
|---|---|---|
| निष्ठातः ४२<br>नः४२ | ५०. निर्वाणोऽवाते<br>'निर्वाणः' इत्यत्र निस्पूर्वाद् 'वा गतिगन्धनयोः' इत्येतस्माद् धातोः परस्य निष्ठातकारस्य नत्वं निपात्यते, वातश्चेत्तत्र कर्ता न भवेत्।<br>निर्वाणोऽग्निः। निर्वाणः प्रदीपः। एष निर्वाणो भिक्षुः।<br>अवात इति किम्? निर्वातो वातः। निर्वातं वातेन।<br>निर्वाणः प्रदीपो वातेन - इत्यत्र तु वातः करणं, हेतुर्वा न तु कर्ता इति नत्वं भवत्येव। | |
| निष्ठातः ४२ | ५१. शुषः कः<br>शुषः (परस्य) निष्ठातः कः भवति।<br>शुष्कः। शुष्कवान्। | |
| निष्ठातः ४२ | ५२. पचो वः<br>पचः (परस्य) निष्ठातो वः भवति।<br>पक्वः। पक्ववान्। | |
| निष्ठातः ४२ | ५३. क्षायो मः<br>क्षायः (क्षै क्षये इति धातोः परस्य) निष्ठातो मः भवति।<br>क्षामः। क्षामवान्। | मः ५४ |
| निष्ठातः ४२<br>मः४२ | ५४. प्रस्त्योऽन्यतरस्याम्<br>प्रस्त्यः (प्रपूर्वात् ष्टूयै स्त्यै शब्दसङ्घातयोः इत्येतस्माद् धातोः परस्य) निष्ठातोऽन्यतरस्यां मः भवति।<br>प्रस्तीमः, प्रस्तीतः। प्रस्तीमवान्, प्रस्तीतवान्। 'स्त्यः प्रपूर्वस्य' इति सूत्रेण सम्प्रसारणम्, 'हलः' इति सूत्रेण दीर्घत्वम्। | |
| | ५५. अनुपसर्गात् फुल्ल-क्षीब-कृशोल्लाघाः<br>फुल्ल, क्षीब, कृश, उल्लाघ - इत्येते शब्दा निपात्यन्ते, अनुपसर्गाच्चेद् एते शब्दाः।<br>'ञिफला विशरणे' इत्येतस्माद् धातोः क्तप्रत्यये फुल्ल इति निपात्यते। 'क्षीबृ मदे' इत्येतस्माद् धातोः क्तप्रत्यये क्षीब इति निपात्यते।<br>'कृश तनूकरणे' इत्येतस्माद् धातोः क्तप्रत्यये कृश इति निपात्यते।<br>उत्पूर्वाद् लाघृ सामर्थ्ये इत्येतस्माद् धातोः क्तप्रत्यये उल्लाघ इति निपात्यते।<br>उपसर्गात्तु उक्तेभ्यो धातुभ्यः क्तप्रत्यये कृते प्रफुल्तः प्रक्षीबितः, प्रकृशितः, प्रोल्लाघित इत्येवं रूपाणि भवन्ति। | |

| | | |
|---|---|---|
| निष्ठातः ४२<br>नः४२ न ५७ | ५६. नुद-विदोन्द-त्रा-घ्रा-ह्रीभ्योऽन्यतरस्याम्<br>नुद-विदोन्द-त्रा-घ्रा-ह्रीभ्योऽन्यतरस्यां निष्ठातो नः भवति।<br>णुद प्रेरणे-नुन्नः, नुत्तः।<br>'विद विचारणे' इत्यस्य विदेरिह ग्रहणमिष्यते- विन्नः, वित्तः।<br>उन्दी क्लेदने- समुन्नः, समुत्तः।<br>त्रैङ् पालने- त्राणः, त्रातः।<br>घ्रा गन्धोपादाने - घ्राणः, घ्रातः।<br>ह्री लज्जायाम्- ह्रीणः, ह्रीतः। | |
| निष्ठातः ४२<br>नः४२ न ५७ | ५७. न ध्या-ख्या-पॄ-मूर्छि-मदाम्<br>ध्या-ख्या-पॄ-मूर्छि-मदां निष्ठातो नः न भवति।<br>ध्यातः, ध्यातवान्। ख्यातः, ख्यातवान्। पूर्त्तः, पूर्त्तवान्।<br>'पूर्णः' इति रूपं तु 'पूरी आप्यायने' इति धातोः क्तप्रत्यये बोध्यम्।<br>मूर्च्छा मोहनसमुच्छ्राययोः - मूर्त्तः। मूर्त्तवान्।<br>मदी हर्षे- मत्तः, मत्तवान्। | न ६१ |
| निष्ठातः ४२<br>नः४२ न ५७ | ५८. वित्तो भोग-प्रत्यययोः<br>'विदॢ लाभे' इत्यस्माद् धातोः क्तप्रत्यये कृते 'वित्त' इति निपात्यते, भोगे, प्रत्यये चाभिधेये।<br>भोगे- वित्तमस्य बहु। धनमस्य बह्वित्यर्थः, धनं हि भुज्यते इति वित्तशब्देन भोगोऽभिधीयते।<br>वित्ते- वित्तोऽयं पुरुषः। प्रतीत इत्यर्थे।<br>भोगप्रत्यययोरिति किम्? विन्नः। लब्ध इत्यर्थः। | |
| निष्ठातः ४२<br>नः४२ न ५७ | ५९. भित्तं शकलम्<br>'भित्तम्' इति निपात्यते शकलं चेत्तद् भवति।<br>भित्तं तिष्ठति। भित्तं प्रपचति।<br>अन्यस्मिन्नर्थे भिन्नमिति भवति। | |
| निष्ठातः ४२<br>नः४२ न ५७ | ६०. ऋणमाधमर्ण्ये<br>ऋ धातोः क्तप्रत्यये 'ऋणम्' इति निपात्यते आधमर्ण्यविषये।<br>ऋणं ददाति। ऋणं धारयति।<br>आधमर्ण्ये इति किम्? ऋतं वक्ष्यामि नानृतम्। अत्र ऋतमित्यस्य सत्यमित्यर्थः। | |

| | | |
|---|---|---|
| निष्ठातः ४२<br>नः४२ न ५७ | ६१. नसत्त-निषत्तानुत्त-प्रतूर्त-सूर्त-गूर्तानि छन्दसि<br>नसत्त, निषत्त, अनुत्त, प्रतूर्त, सूर्त, गूर्त - इत्येतानि छन्दसि निपात्यन्ते।<br>नसत्त- नसत्तमञ्जसा।<br>नञ्पूर्वाद् 'षद्लृ विशरणगत्यवसादनेषु' इत्येतस्माद् धातोः क्तप्रत्यये नसत्त इति रूपम्।<br>निषत्त- निपूर्वात् षद्लृ धातोरेव क्तप्रत्यये निषत्तम् इति रूपम्।<br>एवमेव क्त प्रत्यये एव नञ्पूर्वाद् 'उन्दी क्लेदने' इति धातोः अनुत्तम् इति 'ञि त्वरा सम्भ्रमे' इति धातोः, हिंसार्थकधातोर्वा प्रतूर्तम् इति, 'सृ गतौ' इति धातोः, सूर्त्तम् इति, 'गुरीउद्यमने' इति धातोः गूर्तम् इति रूपं छन्दसि भवति।<br>भाषायां तु नसन्न, निषण्ण, अनुन्न, प्रतूर्ण, सृत, गूर्ण -इत्येतानि रूपाणि भवन्ति। | |
| पदस्य ८.१.१६<br>अन्ते ३६ | ६२. क्विन्प्रत्ययस्य कुः<br>'क्विन्प्रत्ययस्य' इति पदे क्विन् प्रत्ययो यस्मात् इति विग्रहे बहुव्रीहिसमासः। अतः सूत्रस्यार्थो भवति- क्विन्प्रत्ययो यस्माद् विहितः तस्य पदस्य कुः भवति। 'अलोऽन्त्यस्य' इति सूत्रेण अन्त्यस्याल आदेशो भवति। 'स्पृशोऽनुदके क्विन्'- घृतस्पृक्। हलस्पृक्। मन्त्रस्पृक्। | कुः ६३ |
| पदस्य ८.१.१६<br>अन्ते ३६<br>कुः६२ | ६३. नशेर्वा<br>नशेः पदस्य कुर्वा भवति।<br>नक्, नग्। पक्षे 'व्रश्चभ्रस्ज' इति सूत्रेण षः, नट्, नड्। नग्भ्याम्, नड्भ्याम्। | |
| पदस्य ८.१.१६<br>अन्ते ३६ | ६४. मो नो धातोः<br>मः (मकारान्तस्य) धातोः पदस्य नः भवति।<br>प्रशान्। प्रतान्।<br>'शमु उपशमे' तमु काङ्क्षायाम्, क्विप्, 'अनुनासिकस्य क्विझलोः' इत्युपधादीर्घत्वम्, सुः, हल्ङ्यादिलोपः। नस्यासिद्धत्वान्नलोपो न भवति। | मो नः<br>धातोः ६५ |
| मोनोधातोः ६४ | ६५. म्वोश्च<br>मः (मान्तस्य) धातोः नः भवति म्वोः।<br>अपदान्तार्थ आरम्भः।<br>अगन्म तमसः पारम्। अगन्व। जगन्वान्। | |

| | | |
|---|---|---|
| पदस्य ८.१.१६ अन्ते ३९ | ६६. स सजुषो रुः<br>स (सकारान्तस्य), सजुषः (सजुष्शब्दस्य) च पदस्य रुर्भवति।<br>सूत्रे 'स' इति लुप्तषष्ठीकं पृथक्पदम्।<br>सकारान्तस्य- अग्निरत्र। वायुरत्र।<br>सजुषः- सजूर्ऋतुभिः। सजूर्देवेभिः। | सस्य ७२ रुः७१ |
| पदस्य ८.१.१६ अन्ते ३९ रुः६६ | ६७. अवयाः श्वेतवाः पुरोडाश्च<br>अवयाः, श्वेतवाः, पुरोडाः - इत्येते निपात्यन्ते।<br>अवपूर्वाद् यज्धातोः, श्वेतपूर्वस्य वह् धातोः, पुरस्पूर्वस्य दाश्धातोः ण्विनि प्रत्यये सम्बुद्धौ अवयाः, श्वेतवाः, पुरोडाः इति रूपाणि छन्दसि भवन्ति।<br>हे अवयाः ! हे श्वेतवाः ! हे पुरोडाः ! | |
| पदस्य ८.१.१६ अन्ते ३९ रुः६६ | ६८. अहन्<br>अहन् इति पदस्य रुर्भवति।<br>अहोभ्याम्। अहोभिः।<br>हन्तेर्लङि 'अहन्' इत्येतस्य पदस्य लाक्षणिकत्वाद् रुर्न भवति।<br>(वा०) अह्नो रुविधौ<br>रूप-रात्रि-रथन्तरेषूपसंख्यानं कर्त्तव्यम्।<br>अहो रूपम्। अहोरात्रः। अहो रथन्तरम्। | अहन् ६९ |
| अहन् ६८ | ६९. रोऽसुपि<br>अहन् इति पदस्य रः भवति, सुपि तु रः न भवति।<br>अहः। अहर्ददाति। अहर्भुङ्क्ते।<br>'र' इत्यादेशकरणेन 'हशि च' इत्यनेन उत्वं न भवति।<br>सुपि तु पूर्वसूत्रेण रुरेव- अहोभ्याम्, अहोभिः। | रः ७१ |
| रुः ६६ रः ६९ | ७०. अम्नरूधरवरित्युभयथा छन्दसि<br>अम्नस्, ऊधस्, अवस्- इत्येतेषाम् शब्दानां छन्दसि अम्नर्, ऊधर्, अवर् इत्येतानि रूपाणि उभयथा = रुकरणेन, रकरणेन च भवन्ति।<br>अम्न एव, अम्नरेव।<br>ऊध एव, ऊधरेव।<br>अव एव, अवरेव।<br>रुत्वपक्षे रोर्यकारः, लोपश्च। रत्वपक्षे तु यकारलोपौ नेति रुरयोर्विशेषः।<br>(वा०) अहरादीनां पत्यादिषु वा रेफः।<br>अहर्पतिः, अहःपतिः। गीर्पतिः, गीःपतिः। धूर्पतिः, धूःपतिः। | उभयथा छन्दसि७१ |
| उभयथा ७० छन्दसि ७० रुः ६६ | ७१. भुवश्च महाव्याहृतेः<br>महाव्याहृतेः 'भुवस्' इलि शब्दस्य च भुवर् इति रूपम् उभयथा = रुकरणेन, रकरणेन च भवति छन्दसि।<br>भुवरित्यन्तरिक्षरम्, भुव इत्यन्तरिक्षम्। | |

| | | |
|---|---|---|
| पदस्य ८.१.१६<br>अन्ते ३६<br>सस्य ६६ | ७२.वसु-स्रंस्वनडुहां दः<br>वसुस्रंसुध्वंस्वनडुहां दः भवति पदान्ते।<br>वसु- विद्वद्भ्याम्, विद्वद्भिः।<br>स्रंसु- उखास्रत्, उखास्रद्भ्याम्, उखास्रद्भिः।<br>ध्वंसु- पर्णध्वत्, पर्णध्वद्भ्याम्, पर्णध्वद्भिः।<br>अनडुह्- अनडुद्भ्याम्, अनडुद्भिः।<br>अत्र 'ससजुषो रुः' इत्यतः 'स' इत्यनुवर्तते, तच्च संभ्भव्यभिचाराभ्यां वसु इत्यस्य विशेषणम्। तेन सकारान्तवस्वन्तस्यैवानेन दत्वं भवति।<br>तेनेह न- विद्वान्। | दः ७५ |
| दः ७२<br>सस्य ६६<br>पदस्य ८.१.१६ | ७३. तिप्यनस्तेः<br>तिप्यनस्तेः सकारान्तस्य पदस्य दः भवति।<br>चकासृ दीप्तौ, लङ् - अचकाद् भवान्।<br>शासु अनुशिष्टौ, लङ् - अन्वशाद् भवान्,<br>तिपीति किम्? चकास्तेः क्विपि चकाः।<br>अनस्तेरिति किम्? आप एवेदं सलिलं सर्वमाः। 'आः' इति असुधातोर्लङि तिपि छन्दसि रूपम्। | |
| सस्य ६६<br>पदस्य ८.१.१६ | ७४. सिपि धातो रुर्वा<br>सिपि सकारान्तस्य धातोः पदस्य रुः भवति, वाग्रहणाद् दकारश्च।<br>सूत्रे 'वा' इतिशब्दः समुच्चयवाचको न तु विकल्पवाचकः, विकल्पवाचकत्वे दकारान्तरूपस्य लाभासम्भवात्।<br>अचकास्त्वम्, अचकात्त्वम्।<br>अन्वशास्त्वम्, अन्वशात्त्वम्। | सिपि रुर्वा ७५<br>धातोः ७८ |
| सिपि ७४<br>धातोः७४<br>रुः ७४ वा ७४ | ७५. दश्च<br>दकारान्तस्य धातोः पदस्य सिपि परतो रुर्भवति, दकारो वा।<br>अभिनस्त्वम्, अभिनत्त्वम्।<br>अच्छिनस्त्वम्, अच्छिनत्त्वम्। | |
| धातोः ७४<br>पदस्य ८.१.१६ | ७६. र्वोरुपधाया दीर्घ इकः<br>र्वोः (रेफवकारान्तयोः) धात्वोः पदयोरुपधाया इको दीर्घो भवति।<br>गॄ- गीः। धुर्व् - धूः।<br>'राल्लोपः' इत्यनेन वलोपः।<br>पॄ- पूः।<br>आङ्+शास् - आशीः।<br>वकारग्रहणमुत्तरार्थम्। | र्वोः दीर्घः<br>इकः७६<br>उपधाया७८ |

| | | |
|---|---|---|
| र्वोः७६<br>दीर्घः ७६<br>इकः७६<br>उपधायाः७६ | ७७. हलि च<br>र्वोः (रेफवकारान्तयोः) धात्वोरुपधाया इको दीर्घो हलि च भवति।<br>अपदान्तार्थोऽयमारम्भः।<br>रेफान्तस्य - आस्तीर्णम्। विशीर्णम्।<br>वकारान्तस्य - दीव्यति। सीव्यति। | हलि ७८ |
| र्वोः७६<br>दीर्घः ७६<br>इकः७६<br>उपधायाः७६<br>हलि ७७ | ७८. उपधायां च<br>हलि (परतः) उपधायां वर्तमानयोः र्वोः (रेफवकारयोः परतः) धातोः इको दीर्घो भवति।<br>हल्परेफे - मुर्छ्- मूर्छिता। हुर्छ्- हूर्छिता।<br>हल्परवकारे - उर्व् - ऊर्विता। धुर्व्- धूर्विता। | |
| र्वोः७६ दीर्घः ७६ | ७९. न भ-कुर्छुराम्<br>र्वोः (रेफवकारान्तयोः) भसंज्ञकयोः, कुर्, छुर्- इत्येतयोश्च इको दीर्घो न भवति।<br>रेफान्तस्य भस्य- धुरं वहति, धुरि साधुर्वा- धुर्यः।<br>वकारान्तस्य भस्य- दिवि भवं दिव्यम्।<br>कुर्- कुर्यात्। छुर्-छुर्यात्।<br>उदाहरणेषु 'हलि च' इति सूत्रेण प्राप्तो दीर्घो निषिध्यते। | |
| | ८०. अदसोऽसेर्दादु दो मः<br>असेः (असकारान्तस्य) अदसो दात् परस्य उ भवति दस्य मश्च।<br>'असेः' इत्यत्रेकारः उच्चारणार्थः, 'उ' इति ह्रस्वदीर्घयोः समाहारद्वन्द्वे रूपम्। तत्र आन्तरतम्याद् ह्रस्वव्यञ्जनयोः ह्रस्वोकारः, दीर्घस्य च दीर्घोकारो भवति।<br>अमुम्। अमू। अमून्।<br>असेरिति किम्? अदः आत्मन इच्छतीति अदस्यति।<br>(वा०) अदसोऽनोस्रे इति वक्तव्यम्।<br>ओकारान्तस्य, सकारान्तस्य, रेफान्तस्य चापि अदसो मुत्वप्रतिषेधो वक्तव्य इत्यर्थः।<br>तेनेह न भवति - अदोऽत्र। अदः कुलम्। | अदसः दात् दः मः ८१ |
| अदसः ८०<br>दात् ८०<br>दः ८० मः ८० | ८१. एत ईद् बहुवचने<br>बहुवचने (बह्वर्थोक्तौ) अदसो दात् एत ईद् भवति।<br>अमी। अमीभिः। | |
| | ८२. वाक्यस्य टेः प्लुत उदात्तः<br>अधिकारोऽयमापादपरिसमाप्तेः। | १०८ |
| वाक्यस्य ८२<br>टेः८२<br>प्लुतः ८२<br>उदात्तः८२ | ८३. प्रत्यभिवादेऽशूद्रे<br>प्रत्यभिवादेऽशूद्रे वाक्यस्य टेः प्लुत उदात्तो भवति।<br>प्रत्यभिवादो नाम यदभिवाद्यमानो गुरुराशिषं प्रयुङ्क्ते।<br>अभिवादये देवदत्तोऽहं भोः, भोः आयुष्मानेधि देवदत्त३। | |

| | | |
|---|---|---|
| वाक्यस्य ८२<br>टेः८२<br>प्लुतः ८२<br>उदात्तः८२ | ८४. दूराद्धूते च<br>दूरात् सम्बोधने च यद् वाक्यं तस्य टेः प्लुत उदात्तो भवति।<br>आगच्छ भो माणवक देवदत्त३। | दूराद्धूते ८५ |
| वाक्यस्य ८२<br>टेः८२<br>प्लुतः ८२<br>उदात्तः८२<br>दूराद्धूते ८४ | ८५. हैहेप्रयोगे हैहयोः<br>दूराद्धूते हैहेप्रयोगे हैहयोः प्लुत उदात्तो भवति।<br>है ३ देवदत्त ! देवदत्त हे ३ !<br>है ३ देवदत्त ! देवदत्त हे ३ ! | |
| प्लुतः ८२<br>उदात्तः८२<br>दूराद्धूते ८६ | ८६. गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्<br>प्रत्यभिवादे, दूराद्धूते च यस्य प्लुतः उदात्त उक्तः, स गुरोरनृतोऽनन्त्यस्याप्येकैकस्य भवति प्राचामाचार्याणां मतेन अपिना वाक्यस्य टेरपि।<br>दे३वदत्त ! देवद३त्त ! देवदत्त३ !<br>गुरोरिति किम्? वकारात्परस्य मा भूद् !<br>अनृत इति किम्? कृष्णमि३त्र ! कृष्णमित्र ३ ! | |
| प्लुतः ८२<br>उदात्तः८२ | ८७. ओमभ्यादाने<br>अभ्यादानम् = स्वाध्यायादेः प्रारम्भः, तत्र य ओम् शब्दः तस्य प्लुतो भवति।<br>ओ३म् अग्निमीले पुरोहितम्।<br>अभ्यादाने इति किम्? ओमित्येतदक्षरमुद्गीथमुपासीत। | |
| | ८८. ये यज्ञकर्मणि<br>यज्ञकर्मणि (यज्ञक्रियायाम्) प्रयुज्यमानस्य 'ये' इत्यस्य प्लुतो भवति।<br>ये३ यजामहे। | यज्ञकर्मणि ९२ |
| यज्ञकर्मणि ८८<br>प्लुतः ८२<br>उदात्तः८२ | ८९. प्रणवष्टेः<br>यज्ञकर्मणि वाक्यस्य टेः प्रणवः (ओम्) इत्यादेशो भवति।<br>अपां रेतसि जिन्वतो३म्।<br>'जिन्वति' इति पदस्य टेः इकारस्य स्थाने ओम् इत्यादेशः। | टेः ९० |
| यज्ञकर्मणि८८<br>टेः८९<br>प्लुतः ८२<br>उदात्तः८२ | ९०. याज्यान्तः<br>यज्या नाम ये याज्याकाण्डे पठ्यन्ते मन्त्रास्तेषामन्तो (अन्त्यः) यष्टिः स प्लुतो भवति, यज्ञकर्मणि।<br>स्तौमैर्विधेयमाग्नये३। | |
| यज्ञकर्मणि ८८<br>प्लुतः ८२<br>उदात्तः८२ | ९१. ब्रूहि-प्रेष्य-श्रौषड्-वौषडावाहानामादेः<br>ब्रूहि, प्रेष्य, श्रौषट्, वौषट्, आवह- इत्येतेषामादेः प्लुतो भवति, यज्ञकर्मणि।<br>अग्नये ब्रू३हि। अग्नये गोमान् प्रे३ष्य। अस्तु श्रौ३षट्। सोमस्याग्ने व्रीहि वौ३षट्।<br>अग्निमा३वह। | आदेः ९२ |

| | | |
|---|---|---|
| यज्ञकर्मणि ८८<br>प्लुतः ८२<br>उदात्तः८२<br>आदेः ६१ | ६२. अग्नीत्प्रेषणे परस्य च<br>अग्नीत्प्रेषणे आदेः, परस्य च प्लुतो भवति।<br>अग्नीधः = ऋत्विग्विशेषस्य प्रेषणम् = नियोजनम्, अग्नीत्प्रेषणम्, कर्मषष्ठ्याः समासः। अतः अग्नीत्प्रेषणे इत्यस्यार्थो भवति अग्नीत्कर्मके प्रेषणे इति।<br>(वा०) ओश्रावयाश्रावययोरिति वक्तव्यम्।<br>ओ३श्रावय। आ३श्रावय। | |
| प्लुतः ८२<br>उदात्तः८२ | ६३. विभाषा पृष्टप्रतिवचने हेः<br>पृष्टप्रतिवचने हेः प्लुतो विभाषा भवति।<br>अकार्षीः कटं देवदत्त ? अकार्षं हि३, अकार्षं हि। | विभाषा ६४ |
| विभाषा ६३<br>वाक्यस्य ८२<br>टेः८२<br>प्लुतः ८२<br>उदात्तः८२ | ६४. निगृह्यानुयोगे च<br>निगृह्य अनुयोगे च यद् वाक्यं तस्य टेः प्लुतो विभाषा भवति।<br>स्वमतात् प्रच्यावनम्, अपनयनं वा निग्रहः। अनुयोगः= तस्य मतस्य आविष्करणं,प्रकाशनं वा। निगृह्य इति पदं ल्यबन्तम्। अतः सूत्रस्यार्थो भवति-वादिनं स्वमतात् प्रच्याव्य तस्य मतस्य अनुयोगार्थं यद् वाक्यं प्रयुज्यते, तस्य टेः प्लुतो विभाषा भवति इति।<br>अनित्यः शब्द इत्यात्थ३।<br>अनित्यः शब्द इत्यात्थ। | |
| प्लुतः ८२<br>उदात्तः८२ | ६५. आम्रेडितं भर्त्सने<br>भर्त्सने यदाम्रेडितं तस्य टेः प्लुतो भवति।<br>चौर चौर ३ घातयिष्यामि त्वा।<br>(वा०) भर्त्सने पर्यायेणेति वक्तव्यम्।<br>चौर ३ चौर। चौर चौर ३।<br>तदर्थमाम्रेडितग्रहणं द्विरुक्तोपलक्षणार्थं वर्णयन्ति। | भर्त्सने ६६ |
| प्लुतः ८२<br>उदात्तः८२<br>भर्त्सने ६५ | ६६. अङ्गयुक्तं तिङाकाङ्क्षम्<br>अङ्गयुक्तम् आकाङ्क्षम् (साकाङ्क्षम्) तिङ् (भर्त्सने) प्लवते।<br>अङ्ग कूज३, अङ्ग व्याहर३, इदानीं ज्ञास्यसि जाल्म।<br>आकाङ्क्षमिति किम्? अङ्ग पच।<br>नैतदपरमाकाङ्क्षति। | |
| प्लुतः ८२<br>उदात्तः८२<br>टेः ८२ | ६७. विचार्यमाणानाम्<br>विचार्यमाणानां वाक्यानां टेः प्लुतो भवति।<br>प्रमाणेन वस्तुपरीक्षणम्= विचारः। विचार्यमाणानाम्= विचारविषयभूतानामित्यर्थः।<br>होतव्यं दीक्षितस्य गृहा३इ।<br>होतव्यं, न होतव्यमिति विचार्यते।<br>'गृहे' इत्यत्र 'एचोऽप्रगृह्यस्यादूराद्धूतौ' (८.२.१०७) इति सूत्रेण 'ए' इत्यस्य पूर्वार्धस्य अकारादेशः,उत्तरार्धस्य त्विकारः। तस्याकारस्य अनेन प्लुतो विधीयते। | विचार्य-नाम्६८ |

| | | |
|---|---|---|
| प्लुतः ८२<br>उदात्तः८२<br>विचार्यमाणानाम् ९७ | ९८. पूर्वं तु भाषायाम्<br>भाषायां तु विचार्यमाणानां पूर्वमेव प्लवते।<br>अहिर्नु३ रज्जुर्नु। लोष्टो नु३ कपोतो नु।<br>प्रयोगापेक्षं पूर्वत्वमत्र। | |
| प्लुतः ८२<br>उदात्तः८२<br>वाक्यस्य ८२<br>टेः८२ | ९९. प्रतिश्रवणे च<br>प्रतिश्रवणेऽपि वाक्यस्य टेः प्लुतो भवति।<br>प्रतिश्रवणस्य त्रयोऽर्था भवन्ति –<br>१. अभ्युपगमः, अङ्गीकारो वा<br>२. प्रतिज्ञानम्।<br>३. श्रवणाभिमुख्यं च।<br>एतेषां सर्वेषां ग्रहणमत्र भवति।<br>अभ्युपगमे – गां मे देहि भोः, अहं ते ददामि३।<br>प्रतिज्ञाने – नित्यः शब्दो भवितुमर्हति३।<br>श्रवणाभिमुख्ये – देवदत्त भोः। किमात्थ३। | |
| प्लुतः ८२<br>वाक्यस्य ८२<br>टेः८२ | १००. अनुदात्तं प्रश्नान्ताभिपूजितयोः<br>वाक्यस्य प्रश्नान्ताभिपूजितयोः टेः अनुदात्तः प्लुतो भवति।<br>प्रश्नान्ते – अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३इ ?<br>'अग्निभूते' इतिशब्दस्य टेः अनुदात्तः प्लुतो भवति।<br>अगम३ः इत्यादीनां च 'अनन्त्यस्य प्रश्नाख्यानयोः' इति सूत्रेण स्वरितः प्लुतो भवति।<br>अभिपूजिते – शोभनः खलवसि माणवक३।<br>अत्र अभिपूजितस्य 'माणवक' इत्यस्य टेः अनुदात्तः प्लुतो भवति। | अनुदात्तम् १०२ |
| अनुदात्तम् १००<br>प्लुतः ८२<br>वाक्यस्य ८२<br>टेः८२ | १०१. चिदिति चोपमार्थे प्रयुज्यमाने<br>उपमार्थे चिदिति प्रयुज्यमाने वाक्यस्य टेरनुदात्तः प्लुतो भवति।<br>अग्निचिद् भाया३त्।<br>अग्निरिव भायादित्यर्थः।<br>अधःस्विदासी इत् उपरिस्विदासी इत्। 'अिधः स्विदासीइत्' इत्यत्र 'विचार्यमाणानाम्' इत्युदात्तः प्लुतः।<br>उपरिस्विदाससीइत्' इत्यत्र तु अनेनानुदात्तः प्लुतः। | |
| अनुदात्तम् १००<br>प्लुतः ८२<br>वाक्यस्य ८२<br>टेः८२ | १०२. उपरि स्विदासीदिति च<br>'उपरिस्विदासीत्' इत्येतस्य टेरनुदात्तः प्लुतो भवति।<br>अधःस्विदासी३त् उपरिस्विदासी३त्।<br>'अधःस्विदासी३त्' इत्यत्र 'विचार्यमाणानाम्(८.२.९७) इति सूत्रेण उदात्तः प्लुतः।<br>'उपरिस्विदासी३त्' इत्यत्र तु प्रकृतसूत्रेण। | |

| | | |
|---|---|---|
| प्लुतः ८२<br>टेः८२ | **१०३. स्वरितमाम्रेडितेऽसूया-संमतिकोप-कुत्सनेषु**<br>आम्रेडिते (परतः) स्वरितः प्लुतो भवति असूया-सम्मति-कोप-कुत्सनेषु (गम्यमानेषु)।<br>असूयायाम्- माणवक३ माणवक, अभिरूपक३ अभिरूपक, रिक्तं त आभिरूप्यम्।<br>सम्मतौ- माणवक३ माणवक, अभिरूपक३ अभिरूपक शोभनः खल्वसि।<br>कोपे - माणवक३ माणवक,अविनीतक३ अविनीतक, इदानीं ज्ञास्यसि जाल्म !<br>कुत्सने- शाक्तीक३, शाक्तीक, याष्टीक३ याष्टीक रिक्ता ते शक्तिः। | स्वरितम् १०५ |
| प्लुतः ८२<br>स्वरितम् १०३ | **१०४. क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्**<br>क्षियाशीःप्रैषेषु यद् आकाङ्क्षं तिङ्(तिङन्तम्) तस्य टेः स्वरितः प्लुतो भवति।<br>क्षिया = आचारभेदः, आचारोल्लङ्घनं वा। आशीः = इष्टाशंसनम्। प्रैषः=शब्देन व्यापारणम्।<br>क्षियायाम्- स्वयं रथेन या३ति उपाध्यायं पदातिं गमयति।<br>आशिषि- सुतांश्च लप्सीष्ट३ धनं च तात।<br>प्रैषे - कटं कुरु३ ग्रामं च गच्छ। | |
| पदस्य ८.१.१६<br>टेः ८२<br>प्लुतः ८२<br>स्वरितम् १०३ | **१०५. अनन्त्यस्यापि प्रश्नाख्यानयोः**<br>प्रश्नाख्यानयोर्यद् वाक्यं तस्य अनन्त्यस्यापि, अपिना अन्त्यस्यापि पदस्य टेः स्वरितः प्लुतो भवति।<br>प्रश्नः = ज्ञीप्सा। आख्यानम् =प्रश्नस्योत्तरम्।<br>प्रश्नान्ते यत् पदं तस्य 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' इति सूत्रेण अनुदात्तः प्लुतः विहितः इति विधानसामर्थ्यात् अन्त्यस्य स्वरितप्लुतत्वमनेन विभाषया भवति। तेन प्रश्नोत्तरात्मकवाक्ये यद् अन्त्यं पदन्तस्य विकल्पेन अनुदात्तः प्लुतो भवति।<br>प्रश्ने - अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३इ।<br>आख्याने - अगम३म् पूर्वा३न् ग्रमा३न् भो३ः। | |
| | **१०६. प्लुतावैच इदुतौ**<br>दूराद्धूतादिषु प्लुतो विहितः, तत्र ऐचः प्लुतप्रसङ्गे तदवयवभूतौ इदुतौ प्लुतौ भवतः।<br>ऐ३तिकायन! औ३पमन्यव!<br>ऐ३तिकायन! इत्यत्र समप्रविभागपक्षे अकारः एकमात्रः, इकारश्चापि एकमात्रः, तत्र एकमात्रस्य इकारस्य स्थाने त्रिमात्रे इकारे प्लुते कृते 'ऐ' इति चतुर्मात्रः वर्णः सम्पद्यते, एवमेव औ३पमन्यव! इत्यत्र औकारोऽपि चतुर्मात्रः वर्णः सम्पद्यते। | |

| | | |
|---|---|---|
| | १०७. एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ<br>एचोऽप्रगृह्यस्यादूराद्धूते प्लुतविषयस्य पूर्वार्धस्य अकार आदेशो भवति स च प्लुत, उत्तरार्द्धस्य इकारोकारावादेशौ भवतः।<br>अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३इ।<br>अगम३ः पूर्वा३न् ग्रामा३न् पटा३उ। | |
| | १०८. तयोर्य्वावचि संहितायाम्<br>पूर्वसूत्रेण विहितयोरिदुतोः यकार-वकारादेशौ भवतोऽचि संहितायां विषये।<br>'संहितायाम्' इत्यस्याधिकारोऽष्टमाध्यायसमाप्तिं यावद् वेदितव्यः।<br>अग्ना३याशा। पटा३वाशा।<br>अग्ना३यिन्द्रम्। पटा३वुदकम्।<br>अत्र सन्धिविच्छेदः एवम्- अग्ने आशा पटो आशा, अग्ने इन्द्रम, पटो उदकम् इति।<br>अचीति किम्? अग्ना३इ। पटा३उ।<br>संहितायामिति किम्? अग्ना३इ इन्द्रम्।<br>पटा३उ उदकम्।<br>अविवक्षया संहिताया अभावोऽत्र। | संहितायाम्<br>८.४.६८ |

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायाम् अष्टमाध्यायस्य द्वितीयः पादः।।

।। श्रीः ।।

# ।। अथाष्टमाध्यायस्य तृतीयः पादः ।।

| | | |
|---|---|---|
| पदस्य८.१.१६<br>संहितायाम्<br>८.३.१०८ | १. मतुवसो रु सम्बुद्धौ छन्दसि<br>मत्वन्तस्य, वस्वन्तस्य च पदस्य रु इत्यादेशो भवति सम्बुद्धौ छन्दसि।<br>मतु- इन्द्र मरुत्व इह पाहि सोमम्। हरिवो मेदिनं त्वा।<br>मरुत्वत्,हरिवत्- इत्येताभ्यां सौ हल्ङ्यादिलोपे, संयोगान्तलोपे च कृते नकारस्य रुर्भवति।<br>वसु- मीढ्वस्तोकाय तनयाय। इन्द्र साह्वः।<br>क्वसोर्निपातनम् 'दाश्वान्-साह्वान्, मीढ्वान' इति सूत्रेण। | रु १२ |
| रु १ | २. अत्रानुनासिकः पूर्वस्य तु वा<br>अत्र (रुप्रकरणे) रोः पूर्वस्य तु अनुनानासिकः (आदेशः) वा भवति।<br>संस्कर्ता। | अनुनासिकः<br>पूर्वस्य ३ |
| रुः १ पूर्वस्य २<br>अनुनासिकः २ | ३. आतोऽटि नित्यम्<br>अत्र (रुप्रकरणे) रोः पूर्वस्य आतोऽनुनासिको नित्यं भवति अटि परे।<br>महाँ असि। महाँ इन्द्रो य ओजसा।<br>'दीर्घादटि समानपादे' (८.३.९) इति सूत्रेण महानुघटकनकारस्य रुः। | |
| रोः १ पूर्वस्य २ | ४. अनुनासिकात्परोऽनुस्वारः<br>अनुनासिकात् (अनुनासिकं विहाय अन्यत्र) रोः पूर्वस्मात् परोऽनुस्वारः (आगमः) भवति।<br>संस्कर्ता। | |
| रु १<br>पदस्य८.१.१६<br>संहितायाम्<br>८.३.१०८ | ५. समः सुटि<br>समः रु इत्यादेशो भवति सुटि।<br>सँस्स्कर्ता, संस्स्कर्ता।<br>(वा०) समो वा लोपमेके।<br>सँस्कर्ता। संस्कर्ता।<br>अस्य लोपस्यापि रुप्रकरणस्थत्वाद् अनुनासिकः, अनुस्वारश्च भवत्येव। | |
| रु १<br>पदस्य८.१.१६<br>संहितायाम्<br>८.३.१०८ | ६. पुमः खय्यम्परे<br>पुम्शब्दस्य रु इत्यादेशो भवति अम्परे खयि परतः।<br>पुँस्कामा, पुंस्कामा। | अम्परे ८ |

| | | |
|---|---|---|
| रु १ अम्परे ६<br>पदस्य८.१.१६<br>संहितायाम्<br>८.३.१०८ | ७. नश्छव्यप्रशान्<br>नः (नान्तस्य) पदस्य रु इत्यादेशो भवति अम्परे छवि, प्रशान् इति शब्दस्तु तु रुत्वं न लभते।<br>भवाँश्छादयति, भवांश्छादयति।<br>अप्रशानिति किम्? प्रशाञ्छादयति। | नः १२ छवि ८ |
| रु १ अम्परे ६<br>छवि ७ नः ७<br>पदस्य८.१.१६<br>संहितायाम्<br>८.३.१०८ | ८. उभयथर्क्षु<br>नः (नान्तस्य पदस्य) अम्परे छवि उभयथा रूपं दृश्यते, (रु इत्यन्तं, नान्तं च) ऋक्षु।<br>तस्मिंस्त्वा दधाति, तस्मिन् त्वा दधाति। | |
| रु १ नः ७<br>पदस्य ८.१.१६ | ९. दीर्घादटि समानपादे<br>दीर्घात् परो यः नकारः, तदन्तस्य पदस्य अटि उभयथा (रु इत्यन्तं, नान्तं च) रूपं दृश्यते समानपादे ऋक्षु।<br>महां इन्द्रो य ओजसा।<br>उभयथा इत्येव- आंदित्यान् हवामहे। | |
| रु १ नः ७<br>पदस्य ८.१.१६ | १०. नॄन्पे<br>नॄन् इति शब्दः पे (पकारे) परे रु (रु इत्यादेशम्) लभते।<br>नँॄः पाहि, नंॄः पाहि। | |
| रु १ नः ७<br>पदस्य ८.१.१६ | ११. स्वतवान्पायौ<br>स्वतवान् इतिशब्दः रु (रु इत्यादेशं) लभते, पायौ (पायुशब्दे परतः)।<br>स्वतवाँ पायुरग्ने। | |
| रु १ नः ७<br>पदस्य ८.१.१६ | १२. कानाम्रेडिते<br>कान् इति शब्दः आम्रेडित परे रु (रु इत्यादेशम्) लभते.।<br>कांस्कान् आमन्त्रयते। काँस्कान्। | |
| | १३. ढो ढे लोपः<br>ढकारस्य लोपो भवति ढकारे परतः।<br>लिह्+क्त = लीढम्।<br>सत्यपि पदाधिकारे तस्यासम्भवादपदान्तस्य ढस्यायं लोपो विज्ञायते। | लोपः १४ |
| लोपः १३ | १४. रो रि<br>पदस्य (पदावयवस्य) रो रि लोपो भवति।<br>नीरक्तम्। दूरक्तम्। | रः १७ |
| रः १४<br>पदस्य ८.१.१६ | १५. खरवसानयोर्विसर्जनीयः<br>खरि परे,अवसाने च रः (रेफान्तस्य) पदस्य विसर्जनीयो भवति।<br>खरि- वृक्षश्छादयति। वृक्षस्तरति।<br>अवसाने- वृक्षः। | विसर्जनीयः १६<br>खरि ३५ |

| | | |
|---|---|---|
| रः १४<br>विसर्जनीयः १५<br>पदस्य८.१.१६ | १६. रोः सुपि<br>सुपि रोः रः विसर्जनीयो भवति।<br>पयःसु। सर्पिःषु।<br>नियमार्थमिदम् - सुपि रोरेव रेफस्य विसर्जनीयः नान्यस्य। तेनेह न भवति- गीर्षु, धूर्षु। | रोः १७ |
| रोः १६ रः १४<br>पदस्य८.१.१६ | १७. भो-भगो-अघो-अपूर्वस्य योऽशि<br>भो-भगो-अघो-अपूर्वस्य रोः रेफस्य यकारः भवति अशि।<br>भो अत्र। भगो अत्र। अघो अत्र। क आस्ते, कयास्ते। | भोभगोअघो-अपूर्वस्य २२<br>अशि २० |
| अशि १७<br>भोभगोअघो-अपूर्वस्य १७ | १८. व्योर्लघुप्रयत्नतरः शाकटायनस्य<br>भो-भगो-अघो-अपूर्वयोर्व्योः(वकार-यकारयोः) लघुप्रयत्नतर (आदेशः) भवति अशि शाकटायनाचार्यस्य मतेन।<br>तत्र आन्तरतम्याद् वकारस्य स्थाने लघुप्रयत्नतरो वकारः, यकारस्य स्थाने च लघुप्रयत्नतरो यकारः।<br>यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं जायते स लघूच्चारणः, लघुप्रयत्नतरो वा कथ्यते।<br>भोयत्र, भो अत्र। भागोयत्र, भगो अत्र। अघोयत्र अघो अत्र। क आस्ते। असावदित्यः, असा आदित्यः।<br>शाकटायनाचार्य मतेन लघुप्रयत्नतरः आदेशः, शाकल्याचार्यमतेन च 'लोपः शाकल्यस्य' इत्यग्रिमेण सूत्रेण, गार्ग्याचार्यस्य मतेन च 'ओतो गार्ग्यस्य' इति सूत्रेण लोप इति अत्र रूपद्वयं भवति। | व्योः २२ |
| अशि १७<br>अपूर्वस्य १७<br>व्योः१८<br>पदस्य ८.१.१६ | १९. लोपः शाकल्यस्य<br>अवर्णपूर्वयोः व्योर्लोपो भवति अशि शाकल्यार्चायस्य मतेन।<br>क आस्ते, कयास्ते। असा आदित्यः, असावादित्यः।<br>ओतः परयोर्व्योर्लोपो नित्यं वक्ष्यति अग्रिमेण सूत्रेण। तस्मादवर्णपूर्वयोरेवायं विधिर्विज्ञायते।<br>शाकल्यग्रहणं विभाषार्थमू, तेन यदापि पूर्वसूत्रेण लघुप्रयत्नतरः आदेशो न भवति तदापि व्योः पक्षे श्रवणं भवति।<br>एवं हि क आस्ते, कयास्ते, कयास्ते इत्येवं रूपत्रयं भवति।<br>एकं कृतलोपमु, द्वितीयं लघुप्रयत्नतरादेशयुतम्, तृतीयं च अलघुप्रयत्नयुतम्। | लोपः २२ |

| | | |
|---|---|---|
| अशि १७<br>यस्य १८<br>लोपः १९ | २०. ओतो गार्ग्यस्य<br>ओतः (परस्य) यकारस्य लोपो भवति अशि गार्ग्याचार्यस्य मतेन।<br>वकारस्त्वस्मिन् विषये न सम्भवतीति नायमनु वर्तते।<br>भो अत्र। भगो अत्र। अघो अत्र। नित्यार्थोऽयमारम्भः।<br>गार्ग्यग्रहणं पूजार्थम्। 'लोपः शाकल्यस्य' इति सूत्रेण अलघुप्रयत्नस्य विकल्पेन लोपः क्रियते सोऽनेन निवर्त्यते। लघुप्रयत्नतर आदेशस्तु विधानसामर्थ्यद् भवत्येव।<br>एवं हि भो अत्र, भोयत्र इत्येवं रूपद्वयं भविष्यति। एकं कृतयलोपं, द्वितीयं च लघुप्रयत्नतरयकारयुतम्।<br>एवमेव भगो अत्र, भगोयत्र, अघो अत्र अघोयत्र इत्यत्रापि। | |
| अपूर्वस्य १७<br>व्योः१८<br>लोपः १९ | २१. उञि च पदे<br>अवर्णपूर्वयोः पदान्तयोर्व्योः लोपो भवति उञि च पदे।<br>स उ एकाग्निः।<br>'अयमपि नित्यार्थो योगः' इति कैयटः। | |
| भोभगोअघो-<br>अपूर्वस्य १७<br>यस्य१८ लोपः १९ | २२. हलि सर्वेषाम्<br>भो-भगो-अघो-अपूर्वस्य यकारस्य लोपो भवति हलि, सर्वेषामाचर्याणां मतेन।<br>अत्र वकारो नानुवर्ततेऽसम्भवात्।<br>भो हसति। भगो हसति।<br>अघो हसति। वृक्षा हसन्ति।<br>सर्वेषां ग्रहणं शाकटायनस्यापि मते लोपो यथा स्याद्, लघुप्रयत्नतरो मा भूदिति। | हलि २३ |
| पदस्य ८.१.१६ | २३. मोऽनुस्वारः<br>मः (मान्तस्य) पदस्यानुस्वारो भवति हलि।<br>कुण्डं हसति। | मः २७<br>अनुस्वारः २४ |
| मोऽनुस्वारः २३ | २४. नश्चापदान्तस्य झलि<br>अपदान्तस्य नस्य, मस्य चानुस्वारो भवति झलि।<br>पयांसि। आक्रंस्यते। | |
| मः २३ | २५. मो राजि समः क्वौ<br>समो मस्य मः भवति किबन्ते राजतौ परतः।<br>सम्राट्।<br>मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम्। | मः २६ |

| | | |
|---|---|---|
| मः २३ मः २५ | २६. हे मपरे वा<br>मपरे हकारे परे मस्य मः वा भवति।<br>किम् ह्मलयति, किं ह्मलयति।<br>(वा०) यवलपरे यवला वा।<br>यवलपरे हकारे परे मकारस्य यथासंख्यं यवला वा भवन्तीति वक्तव्यमिति वार्तिकार्थः।<br>यवलाश्चैते आन्तरतम्यात् सानुनासिका एव भवन्ति, वा वचनात् पक्षेऽनुस्वारो भवत्येव। कियँ ह्यः, किं ह्यः। किवँ ह्वलयति, किं ह्वलयति। किलँ ह्लादयति, किं ह्लादयति। | हे २७ वा ३१ |
| हे २६ मः२३<br>वा२६ | २७. नपरे नः<br>नपरे हकारपरे मस्य नः वा भवति।<br>किन् ह्नुते। किं ह्नुते। | |
| वा २६<br>पदस्य८.१.१६ | २८. ङ्णोः कुक्टुक् शरि<br>पदान्तयोः ङकारणकारयोः कुक्, टुक् - इत्येतावागमौ वा भवतः शरि परतः।<br>प्राङ्ख्शेते, प्राङ्क्शेते, प्राङ्शेते।<br>प्राङ्ख्षष्ठः, प्राङ्क्षष्ठः, प्राङ्षष्ठः।<br>सुगण्ठ्षष्ठः, सुगण्ट्षष्ठः, सुगण्षष्ठः।<br>प्राङ्ख्शेते, प्राङ्ख्षष्ठः, सुगण्ठ्षष्ठः इत्येतेषु 'चयो द्वितीया शरि पौष्करसादेरिति वाच्यम्' इति वार्तिकेन विकल्पेन खकारादयः। | |
| वा २६<br>पदस्य८.१.१६ | २९. डः सि धुट्<br>डकारान्तात्पदात्परस्य सस्य धुडागमो वा भवति।<br>षट्त्सन्त, षट्सन्तः।<br>परादिकरणम् 'न पदान्तोट्टोरनाम्' इति ष्टुत्वप्रतिषेधार्थम्। | सि धुट् ३० |
| सि २९ धुट् २९<br>वा २६<br>पदस्य८.१.१६ | ३०. नश्च<br>नकारान्तात्पदात्परस्य सस्य धुडागमो वा भवति।<br>सन्त्सः, सन्सः। | नः ३१ |
| नः ३० वा २६<br>पदस्य८.१.१६ | ३१. शि तुक्<br>नान्तस्य पदस्य शकारे परे तुग्वा भवति।<br>भवाञ्छेते। भवाञ्च्छेते। | |
| पदस्य ८.१.१६ | ३२. ङमो ह्रस्वादचि ङमुण् नित्यम्<br>ह्रस्वात्परो यो ङम् तदन्तात् पदात्परस्याचो ङमुडागमो नित्यं भवति।<br>प्रत्यङ्ङास्ते। सुगण्णीशः। कुर्वन्नास्ते। | अचि ३३ |
| अचि ३२ | ३३. मय उञो वो वा<br>मयः उञो वो वा भवति<br>शम्वस्तु वेदिः, शमु अस्तु वेदिः।<br>वस्यासिद्धत्वान्नानुस्वारः। | |

| खरि १५ | ३४. विसर्जनीयस्य सः<br>विसर्जनीयस्य सः भवति।<br>आदेशोऽयं खरि परत एव भवति, व्याख्यानात्। अथवा खरि इत्यनुवर्तते मण्डूकप्लुत्या।<br>वृक्षश्छादयति। वृक्षस्तरति। | विसर्जनीयस्य<br>५४ |
|---|---|---|
| खरि १५<br>विसर्जनीयस्य ३४ | ३५. शर्परे विसर्जनीयः<br>शर्परे (खरि) विसर्जनीयस्य विसर्जनीयः एव भवति नान्यः।<br>कः त्सरुः। घनाघनः क्षोभणः। अद्भिः प्सातम्।<br>'न' इति वक्तव्ये विसर्जनीयस्य विसर्जनीयादेश विधानं विकारनिवृत्यर्थम्। तेनोदाहरणेषु सत्वं, जिह्वामूलीयः, उपध्मानीयश्चापि न भवति। | विसर्जनीयः ३७ |
| विसर्जनीयस्य ३४<br>विसर्जनीयः ३५ | ३६. वा शरि<br>शरि विसर्जनीयस्य विसर्जनीयो वा भवति।<br>वृक्षः शेते, वृक्षश्शेते।<br>(वा०) खर्परे शरि वा लोपो वक्तव्यः।<br>वृक्षा स्थातारः, वृक्षाः स्थातारः, वृक्षास्स्थातारः। | |
| विसर्जनीयस्य ३४<br>विसर्जनीयः ३५ | ३७. कुप्वोᳵकᳶपौ च<br>कुप्वोः विसर्जनीयस्यᳵक ᳶ पौ इति जिह्वामूलीयोपध्मानीयौ भवतः, चाद् विसर्जनीयश्च।<br>वृक्षᳵ करोति, वृक्षः करोति।<br>वृक्ष ᳵ खनति, वृक्षः खनति।<br>वृक्ष ᳶ पचति, वृक्षः पचति।<br>वृक्ष ᳶ फलति, वृक्षः फलति। | कुप्वोः ४६ |
| कुप्वोः ३७<br>विसर्जनीयस्य ३४ | ३८. सोऽपदादौ<br>विसर्जनीयस्य सकारादेशो भवति अपदाद्योः कुप्वोः परतः।<br>(वा०) पाश-कल्प-क-काम्येष्विति वाच्यम्।<br>'याप्ये पाशप्' - पयस्पाशम्।<br>ईषदसमाप्तौ कल्पप् - पयस्कल्पम्।<br>प्रागिवात्कः - पयस्कम्।<br>काम्यच्च - पयस्काम्यति।<br>(वा०) अनव्ययस्येति वक्तव्यम्।<br>इह मा भूत् - प्रातःकल्पम्। पुनःकल्पम्।<br>(वा०) काम्ये रोरेवेति वाच्यम्।<br>नेह-गीः काम्यति। | सः ५४<br>अपदादौ ३९ |

| | | |
|---|---|---|
| विसर्जनीयस्य ३४<br>कुप्वोः ३७<br>अपदादौ ३८ | ३९. इणः षः<br>इण उत्तरस्य विसर्जनीयस्य षकारादेशो भवति, अपदाद्योः कुप्वोः परतः।<br>अयमपि पाशकल्पककाम्येषु परतो भवति।<br>सर्पिष्पाशम्। सर्पिष्कल्पम्। सर्पिष्कम्। सर्पिष्काम्यति।<br>इत उत्तरम् 'सः' इति 'इणः षः' इति च वर्तते। तत्र इणः परो यो विसर्जनीयस्तस्य षकारो भवति, अन्यस्य सकारो भवति। | षः ४८ |
| विसर्जनीयस्य ३४<br>कुप्वोः ३७ सः ३८ | ४०. नमस्पुरसोर्गत्योः<br>नमस्, पुरस्-इत्यनयोर्गतिसंज्ञकयोर्विसर्जनीयस्य सकारादेशो भवति कुप्वोः परतः।<br>नमस्कर्ता। पुरस्कर्ता। | गतेः४२ |
| विसर्जनीयस्य ३४<br>कुप्वोः ३७ सः ३८ | ४१. इदुदुपधस्य चाप्रत्ययस्य<br>इदुदुपधस्य च अप्रत्ययस्य विसर्जनीयस्य षः भवति कुप्वोः।<br>निष्कृतम् दुष्कृतम्।<br>निष्पीतम्। दुष्पीतम्। | |
| विसर्जनीयस्य ३४<br>कुप्वोः ३७<br>सः ३८<br>गतेः४० | ४२. तिरसोऽन्यतरस्याम्<br>गतेः तिरसो विसर्जनीयस्य अन्यतरस्यां सो भवति कुप्वोः।<br>तिरस्कर्ता, तिरःकर्ता। | अन्यतरस्याम् ४४ |
| विसर्जनीयस्य ३४<br>कुप्वोः ३७ षः ३९<br>अन्यतरस्याम् ४२ | ४३. द्विस्त्रिश्चतुरिति कृत्वोऽर्थे<br>कृत्वोऽर्थे वर्तमानानां द्विस्, त्रिस्, चतुर् - इत्येतेषां विसर्जनीस्य षकारारादेशोऽन्यतरस्यां भवति, कुप्वोः परतः।<br>द्विष्करोति, द्विः करोति।<br>त्रिष्करोति, त्रिःकरोति।<br>चतुष्करोति, चतुः करोति।<br>एवमेव द्विष्पचति, द्विः पचतीत्यादि। | |
| विसर्जनीयस्य ३४<br>कुप्वोः ३७ षः ३९<br>अन्यतरस्याम् ४२ | ४४. इसुसोः सामर्थ्ये<br>इसुसोर्विसर्जनीयस्यान्यतरस्यां षः भवति। कुप्वोः सामर्थ्ये सति।<br>सर्पिष्करोति, सर्पिः करोति।<br>यजुष्करोति, यजुः करोति।<br>सामर्थ्याभावान्नेह- तिष्ठतु सर्पिः, पिब उदकम्।<br>सामर्थ्यमिह व्यपेक्षा एव न तु एकार्थीभावोऽपि।<br>व्यपेक्षारूपसामर्थ्यं वाक्ये भवति,एकार्थीभावरूपसामर्थ्यं तु समासे। तत्र उत्तरसूत्रेण समासे नित्यषत्वविधानात् प्रकृतसूत्रेण वाक्ये विकल्पेन षत्वं भवति। | इसुसोः ४५ |

| | | |
|---|---|---|
| विसर्जनीयस्य ३४ कुप्वोः३७ षः ३६ इसुसोः ४४ | ४५. नित्यं समासेऽनुत्तरपदस्थस्य<br>इसुसोरनुत्तरपदस्थस्य विसर्जनीयस्य नित्यं षः भवति समासे।<br>सर्पिष्कुण्डिका। सर्पिष्पानम्।<br>अनुत्तरपदस्थस्येति किम्? परमसर्पिः कुण्डिका। | अनुत्तर-पदस्थस्य४७ समासे ४७ |
| अनुत्तरपदस्थस्य४५ समासे ४५ विसर्जनीयस्य ३४ सः ३८ | ४६. अतः कृ-कमि-कंस-कुम्भ-पात्र-कुशा-कर्णीष्वनव्ययस्य<br>अकारादुत्तरस्य अनव्ययविसर्जनीयस्य समासेऽनुत्तरपदस्थस्य नित्यं सकारादेशो भवति कृ, कमि, कंस, कुम्भ, पात्र, कुशा, कर्णी- इत्येतेषु परतः।<br>अयस्कारः। अयस्कामः। अयस्कंसः। अयस्कुम्भः।<br>अयस्पात्रम्। अयस्कुशा। अयस्कर्णी।<br>अत इति किम? गीः कारः। तपरकरणं किम्?<br>भाःकरणम्। 'भास्करः' इत्ययं तु कस्कादिषु द्रष्टव्यः। | |
| अनुत्तरपदस्थस्य४५ समासे ४५ विसर्जनीयस्य ३४ सः ३८ | ४७. अधः-शिरसी पदे<br>अधस्, शिरस्-इत्येतयोर्विसर्जनीयस्य समासेऽनुत्तरपदस्थस्य सकार आदेशो भवति, पदशब्दे परतः।<br>अधःशिरसी इत्यत्र षष्ठ्यर्थे प्रथमा।<br>अधस्पदम्। शिरस्पदम्।<br>अधस्पदमित्यत्र पदस्याधः इति विग्रहे मयूरव्यंसकादित्वात्समासः। शिरस्पदमित्यत्र तु शिरसः पदमिति विग्रहे षष्ठीसमासः। | |
| विसर्जनीयस्य ३४ सः ३८ षः ३६ | ४८. कस्कादिषु च<br>कस्कादिगणपठितशब्दसिद्ध्यर्थं यथाप्रयोगं विसर्जनीयस्य सकारः, षकारो वा भवति कुप्वोः परतः।<br>कस्कः। कौतस्कुत। भ्रातुष्पुत्रः। शुनस्कर्णः। | |
| विसर्जनीयस्य ३४ सः ३८ कुप्वोः ३७ | ४६. छन्दसि वाऽप्राम्रेडितयोः<br>छन्दसि विषये विसर्जनीयस्य वा सकारादेशो भवति कुप्वोः परतः न तु प्रशब्दे, आम्रेडितसंज्ञके शब्दे च परे।<br>अयस्पात्रम्, अयःपात्रम्।<br>विश्वतस्पात्रम्, विश्वतःपात्रम्।<br>अप्राम्रेडितयोरिति किम? अग्निः प्रविद्वान्। परुषः परुषस्परि। | छन्दसि ५४ |
| विसर्जनीयस्य ३४ सः ३८ छन्दसि ४६ | ५०. कः करत्-करति-कृधि-कृतेष्वनदितेः<br>कः, करत्, करति, कृधि, कृत - इत्येतेषु परतः अनदितेः विसर्जनीयस्य सकारादेशो भवति छन्दसि विषये।<br>विश्वतस्कः। विश्वतस्करत्।<br>पयस्करति। उरुणस्कृधि। सदस्कृतम्।<br>अनदितेरिति किम्? यथा नो अदितिः करत्। | |

| | | |
|---|---|---|
| विसर्जनीयस्य ३४ सः ३८ छन्दसि ४६ | ५१. पञ्चम्याः परावध्यर्थे<br>अध्यर्थे वर्तमाने परिशब्दे परतः पञ्चम्या विसर्जनीयस्य सकारादेशो भवति, छन्दसि विषये।<br>अध्यर्थः = उपरिभवः।<br>दिवस्परि प्रथमं जज्ञे।<br>अग्निर्हिमवतस्परि। दिवस्परि। महस्परि। उदाहरणेषु परिशब्दः उपरिभवार्थे वर्तते।<br>अध्यर्थे इति किम्? दिवः पृथिव्याः पर्योज उद्भृतम्। अत्र परिशब्दः सर्वतोभावे वर्तते। | पञ्चम्याः ५२ |
| विसर्जनीयस्य ३४ सः ३८ छन्दसि ४६ पञ्चम्याः ५१ | ५२. पातौ च बहुलम्<br>पातौ (पाधातौ) परतः पञ्चम्याः विसर्जनीयस्य बहुलं सकार आदेशो भवति छन्दसि विषये।<br>दिवस्पातु। राज्ञस्पातु।<br>बहुलग्रहणान्न च भवति- परिषदः पातु। | |
| विसर्जनीयस्य ३४ सः ३८ छन्दसि ४६ | ५३. षष्ठ्याः पति-पुत्र-पृष्ठ-पार-पद-पयस्पोषेषु<br>षष्ठ्याः विसर्जनीयस्य सकारादेशो भवति पति, पुत्र, पृष्ठ, पार, पद, पयस्, पोष- इत्येतेषु परतः छन्दसि विषये।<br>वाचस्पतिं विश्वकर्माणमूतये। दिवस्पुत्राय सूर्याय। दिवस्पृष्ठे धावमानं सुवर्णम्। अगन्म तमसस्पारम्। इलस्पदे समिध्यसे। सूर्यं चक्षु र्दिवस्पयः। रायस्पोषं यजमानेषु धारय।<br>षष्ठ्या इति किम्? मनुः पुत्रेभ्यो दायं व्यभजत्। | षष्ठ्याः ५४ पति-षेषु ५४ |
| विसर्जनीयस्य ३४ सः ३८ छन्दसि ४६ षष्ठ्याः ५३ पति-पुत्र-पृष्ठ-पार-पद-पयस्पोषेषु५३ | ५४. इडाया वा<br>इडायाः षष्ठ्याः विसर्जनीयस्य सकारादेशो वा भवति पत्यादिषु परतश्छन्दसि विषये।<br>इडायास्पतिः, इडायाः पतिः।<br>इडायास्पुत्रः, इडायाः पुत्रः।<br>इडायास्पृष्ठम्, इडायाः पृष्ठम्।<br>इडायास्पारम्, इडायाः पारम्।<br>इडायास्पदम्, इडायाः पदम्।<br>इडायास्पयः, इडायाः पयः।<br>इडायास्पोषम्, इडायाः पोषम्। | |
| | ५५. अपदान्तस्य मूर्धन्यः<br>अधिकारोऽयमापादपरिसमाप्तेः। | अपदान्तस्य मूर्धन्यः ११७ |
| मूर्धन्यः ५५ | ५६. सहेः साडः सः<br>सहेः साडः सः षो भवति।<br>तुराषाट्। तुराषाड्भ्याम्, तुराषाड्भिः।<br>साड्ग्रहणं किम्? तुरासाहौ, तुरासाहः। | |

| | | |
|---|---|---|
| | ५७. इण्कोः<br>'इण्कोः' अधिकारोऽयमापादपरिसमाप्तेः। | इण्कोः ११७ |
| | ५८. नुम्-विसर्जनीय-शर्व्यवायेऽपि<br>नुम्विसर्जनीय शर्व्यवायेऽपि इण्कोः (इण्कवर्गाभ्याम् उत्तरस्य) सस्य मूर्धन्यो भवति।<br>सर्पींषि। सर्पिःषु, सर्पिष्षु। | सम्पूर्णसूत्रम् ११७ |
| मूर्धन्यः ५५<br>इण्कोः ५७ | ५९. आदेश-प्रत्यययोः<br>इण्कोः ( इण्कवर्गाभ्याम् उत्तरस्य) आदेशस्य, प्रत्ययावयस्य च सस्य मूर्धन्यो भवति।<br>आदेशस्य- सिषेव। सुष्वाप।<br>प्रत्ययस्य- अग्निषु। वायुषु। कर्तृषु। | |
| मूर्धन्यः ५५<br>इण्कोः ५७ | ६०. शासि-वसि-घसीनां च<br>इण्कोः (उत्तरस्य) शासि-वसि-घसीनां च सस्य मूर्धन्यो भवति।<br>अन्वशिषत्, शिष्टः, शिष्टवान्।<br>उषितः, उषितवान्।<br>जक्षतुः, जक्षुः। | |
| मूर्धन्यः ५५<br>इणः ५७ | ६१. स्तौति-ण्योरेव षण्यभ्यासात्<br>षणि(षभूते सनि) अभ्यासात् परयोः स्तौतिण्योरेव सस्य मूर्धन्यो भवति।<br>स्तौतेः - तुष्टूषति।<br>ण्यन्तानाम् - सिषेवयिषति।<br>सूत्रमिदं नियमार्थम् - स्तौतिण्योरेव षण्यभ्यासाद्यथा स्यात् अन्यस्य मा भूत्। तेन- सिसिक्षति, सुसूषति इत्यत्र षत्वं न भवति।<br>सूत्रे एवकरणं विपरीतनियमवारणार्थम्।<br>षणीति किम् ?अन्यत्र नियमो मा भूत्-सिषेच। | णेः, षणि, अभ्यासात् ६२ |
| षणि ६१<br>अभ्यासात् ६१<br>मूर्धन्यः ५५ | ६२. सः स्विदि-स्वदि-सहीनां च<br>षणि अभ्यासात् परेषां स्विदि-स्वदि-सहीनां च सस्य सः भवति।<br>सिस्वेदयिषति। सिस्वादयिषति। सिसाहयिषति।<br>सकारस्य सकारवचनं मूर्धन्यनिवृत्त्यर्थम्। | |
| मूर्धन्यः ५५<br>सस्य ५६ | ६३. प्राक् सितादड्व्यवायेऽपि<br>प्राक्सितादड्व्यवायेऽपि सस्य मूर्धन्यो भवति।<br>सितशब्देन 'परिनिविभ्यः'(८.३.७०) इति सूत्रे पठितः सितशब्दो गृह्यते।<br>अभिषुणोति, अभ्यषुणोत्। परिषुणोति, पर्यषुणोत्। | अड्व्यवाये ऽपि७० |

| | | |
|---|---|---|
| मूर्धन्यः ५५<br>सस्य ५६ | ६४. स्थादिष्वभ्यासेन चाभ्यासस्य<br>प्राक्सितात् स्थादिषु अभ्यासेन व्यवायेऽपि सस्य मूर्धन्यो भवति, अभ्याससकारस्यापि।<br>स्थाशब्देन अग्रिमे सूत्रे पठितः स्थाशब्दः गृह्यते।<br>अभ्यासेन व्यवाये- परितष्ठौ।<br>अभ्यासेनस्य च- अभिषिषेणयति।<br>'अभ्यासस्य' इति वचननियमार्थम् - स्थादिष्वेव अभ्याससकारस्य मूर्धन्यो भवति, नान्यस्य इति।<br>अभिसुसूषति। अभिसिषासति। | अभ्यासस्य ६५ |
| इणः ५७<br>मूर्धन्यः ५५<br>सस्य ५६ | ६५. उपसर्गात् सुनोति-सुवति-स्यति-स्तौति-स्तोभति-स्था-सेनय-सेध-सिच-सञ्ज-स्वञ्जाम्<br>उपसर्गात् सुनोति-सुवति-स्यति-स्तौति-स्तोभति-स्था-सेनय-सेध-सिच-सञ्ज- स्वञ्जां सस्य मूर्धन्यो भवति।<br>सुनोति- अभिषुणोति। अभ्यषुणोत्<br>सुवति- अभिषुवति। अभ्यषुवत्<br>स्यति- अभिष्यति। अभ्यष्यत्।<br>स्तौति- अभिष्टौति। अभ्यष्टौत्।<br>स्तोभति- अभिष्टोभते। अभ्यष्टोभत्।<br>स्था- अभिष्ठास्यति। अभ्यष्ठात्। अभितष्ठौ।<br>सेनय- अभिषेणयति। अभ्यषेणयत्। अभिषिषेणयति।<br>सेध- अभिषेधति। अभ्यषेधत्।<br>सञ्ज- अभिषजति। अभ्यषजत्। अभिषिषङ्क्षति।<br>स्वञ्ज- अभिष्वजते। अभ्यष्वजत्। अभिषिष्वङ्क्षते। | उपसर्गात् ७७ |
| उपसर्गात् ६५<br>इणः ५७<br>मूर्धन्यः ५५ | ६६. सदिरप्रतेः<br>अप्रतेः उपसर्गात् सदिः मूर्धन्यं लभते।<br>निषीदति। न्यषीदत्। निषसाद।<br>'निषसाद' इत्यत्र 'सदेः परस्य लिटि' इति सूत्रेण अभ्यासात् परस्य सस्य मूर्धन्यादेशो न भवति।<br>अप्रतेरिति किम्? प्रतिसीदति। | |
| उपसर्गात् ६५<br>इनः ५७<br>मूर्धन्यः ५५<br>सस्य५६ | ६७. स्तम्भेः<br>उपसर्गात् स्तम्भेः सस्य मूर्धन्यो भवति।<br>अभिष्टभ्नाति। अभ्यष्टभ्नात्। अभितष्टम्भ। | स्तम्भेः ६८ |

| मूर्धन्यः ५५<br>स्तम्भेः ६७<br>सस्य५६ | ६८. अवाच्चालम्बनाविदूर्ययोः<br>अवाच्च स्तम्भेः सस्य मूर्धन्यो भवति आलम्बने, आविदूर्य च।<br>आलम्बनम् = आश्रयणम्।<br>अविदूरस्य भावः आविदूर्यम्।<br>आलम्बने- अवष्टभ्य आस्ते।<br>यष्ट्यादिकम् अवलम्ब्य आस्ते इत्यर्थः।<br>आविदूर्ये- अवष्टब्धा सेना। आसन्नेत्यर्थः। | अवात् ६९ |
|---|---|---|
| अवात् ६८<br>मूर्धन्यः ५५<br>सस्य५६ | ६९. वेश्च स्वनो भोजने<br>वेः चकारात् अवाच्च परस्य स्वनः सस्य मूर्धन्यो भवति भोजने।<br>विष्वणति। व्यष्वणत्। विषष्वाण।<br>अवष्वणति। अवाष्वणत्। अवषष्वाण।<br>अभ्यवहारक्रियाविशेषोऽभिधीयते, यत्र स्वननमस्ति।<br>भोजन इति किम्? विस्वनति मृदङ्गः। | |
| मूर्धन्यः ५५<br>सस्य५६ | ७०. परि-नि-विभ्यः सेव-सित-सय-सिवु-सह-सुट्-स्तु-स्वञ्जाम्<br>परि,नि,वि- इत्येतेभ्यः परेषां सेवादीनां सस्य मूर्धन्यो भवति।<br>सेव- परिषेवते, पर्यषेवत, परिषिषेविषते। एवमेव निषेवते इत्यादि।<br>सित- परिषितः, निषितः, विषितः।<br>सय- परिषयः, निषयः, विषयः।<br>सिवु- परिषीव्यति, पर्यषेव्यत्। एवमेव निषीव्यति इत्यादि।<br>सह- परिषहते, पर्यषहत। एवमेव निषहते इत्यादि।<br>सुट्- परिष्करोति, पर्यष्करोत्।<br>स्तु- परिष्टौति, पर्यष्टौत्। एवमेव निष्टौति इत्यादि।<br>ष्वञ्ज- परिष्वजते, पर्यष्वजत।<br>एवमेव निष्वजते इत्यादि।<br>'दंशसञ्जस्वञ्जाम्' इति नस्य लोपः। | परिनिविभ्यः ७१ |

| | | |
|---|---|---|
| मूर्धन्यः ५५<br>परिनिविभ्यः ७०<br>सस्य५६ | ७१. सिवादीनां वाड्व्यवायेऽपि<br>सिवादीनामड्व्यवायेऽपि परिनिविभ्यः उत्तरस्य सस्य मूर्धन्यो वा भवति।<br>सिवादिशब्देन पूर्वसूत्रे पठिताः सिवादयः गृह्यन्ते।<br>सिवु- पर्यषीव्यत्, पर्यसीव्यत्। न्यषीव्यत्, न्यसीव्यत्। व्यषीव्यत्, व्यसीव्यत्।<br>सह- पर्यषहत,पर्यसहत। न्यषहत,न्यसहत। व्यषहत,व्यसहत।<br>सुट्- पर्यष्करोत्, पर्यस्करोत्।<br>स्तु- पर्यष्टौत्, पर्यस्तौत्। न्यष्टौत्, न्यस्तौत्। व्यष्टौत्, व्यस्तौत्।<br>ष्वञ्ज- पर्यष्वजत, पर्यस्वजत। | वा ७६ |
| मूर्धन्यः ५५<br>वा ७१ सस्य५६ | ७२. अनु-विपर्यभि-निभ्यः स्यन्दतेरप्राणिषु<br>अन्वादिभ्यः परस्य स्यन्दतेरप्राणिषु सस्य मूर्धन्यो वा भवति।<br>अनुष्यन्दते, विष्यन्दते, परिष्यन्दते, अभिष्यन्दते, निष्यन्दते तैलम्। अनुस्यन्दते, विस्यन्दते, परिस्यन्दते, अभिस्यन्दते, निस्यन्दते।<br>अप्राणिष्विति किम्? अनुस्यन्दते मत्स्य उदके। | |
| मूर्धन्यः ५५<br>वा ७१ सस्य५६ | ७३. वेः स्कन्देरनिष्ठायाम्<br>वेरुपसर्गादुत्तरस्य स्कन्देः सस्य मूर्धन्यो वा भवति अनिष्ठायाम्।<br>विष्कन्ता, विस्कन्ता। विष्कन्तुम्, विस्कन्तुम्। विष्कन्तव्यम्, विस्कन्तव्यम्।<br>अनिष्ठायामिति किम्? विस्कन्नः। | स्कन्देः ७५ |
| मूर्धन्यः ५५<br>वा ७१<br>स्कन्देः ७३<br>सस्य५६ | ७४. परेश्च<br>परेरुपसर्गादुत्तरस्य स्कन्देः सस्य मूर्धन्यो वा भवति।<br>परिष्कन्ता, परिस्कन्ता। परिष्कन्तुम्, परिस्कन्तुम्। परिष्कन्तव्यंम्, परिस्कन्तव्यम्।<br>पृथग्योगकरणसामर्थ्याद् 'अनिष्ठायाम्' इत्येतन्नानुवर्तते- परिष्कण्णः, परिस्कन्नः। | |
| स्कन्देः ७३<br>सस्य५६ | ७५. परिस्कन्दः प्राच्यभरतेषु<br>'परिस्कन्दः' इत्यत्र मूर्धन्याभावो निपात्यते प्राच्यभरतेषु प्रयोगविषयेषु।<br>परिस्कन्दः।<br>अन्यत्र परिष्कन्दः। | |

| | | |
|---|---|---|
| मूर्धन्यः ५५<br>वा ७१ सस्य५६ | ७६. स्फुरति-स्फुलत्योर्निर्निविभ्यः<br>स्फुरति-स्फुलत्योः सस्य निस्, नि, वि- इत्येतेभ्य उत्तरस्य स्फुरति-स्फुलत्योः सस्य मूर्धन्यो वा भवति।<br>निष्ष्फुरति, निस्स्फुरति।<br>निष्फुरति, निस्फुरति।<br>विष्फुरति, विस्फुरति।<br>एवमेव निष्ष्फुलतीत्यादि।<br>धातोः सकारस्य षत्वे कृते उपसर्गस्य ष्टुत्वम्। | |
| मूर्धन्यः ५५<br>सस्य५६ | ७७. वेः स्कभ्नातेर्नित्यम्<br>वेरुत्तरस्य स्कभ्नातेः सस्य नित्यं मूर्धन्यो भवति।<br>विष्कभ्नाति। विष्कम्भिता।<br>विष्कम्भितुम्। विष्कम्भितव्यम्। | |
| मूर्धन्यः ५५ | ७८. इणः षीध्वं-लुङ्-लिटां धोऽङ्गात्<br>इणन्तादङ्गादुत्तरेषां षीध्वंलुङ्लिटां यो धकारस्तस्य मूर्धन्यो भवति।<br>षीध्वम्- च्योषीढ्वम्। प्लोषीढ्वम्।<br>'च्युङ्, प्लुङ् गतौ' इति धातुभ्यां आशीर्लिङि रूपम्।<br>लुङ्- अच्योढ्वम्।<br>लिट्- चकृढ्वे, ववृढ्वे।<br>'इण्कोः' इति वर्तमाने पुनरिण्ग्रहणं कवर्ग निवृत्त्यर्थम्।<br>तेनेह न भवति- पच्- पक्षीध्वम्। यज्- यक्षीध्वम्। | इणः षीध्वम्<br>७९<br>धोऽङ्गात् ७९ |
| इणः७८ षीध्वम्<br>७८<br>धोऽङ्गात् ७८ | ७९. विभाषेटः<br>इणः परस्मादिटः परेषां षीध्वंलुङ्लिटां यो धकारस्तस्य मूर्धन्यो विभाषा भवति।<br>षीध्वम्- लविषीढ्वम्, लविषीध्वम्,<br>लुङ्- अलविढ्वम्, अलविध्वम्।<br>लिट्- लुलुविढ्वे, लुलुविध्वे। | |
| मूर्धन्यः ५५<br>सस्य५६ | ८०. समासेऽङ्गुलेः सङ्गः<br>सङ्ग इति षष्ठ्याः स्थाने प्रथमा। एवमेवोत्तरेषु।<br>समासे अङ्गुलेरुत्तरस्य सङ्गशब्दस्य सस्य मूर्धन्यो भवति।<br>अङ्गुलेः सङ्गः अङ्गुलिषङ्गः। | समासे ८५ |
| मूर्धन्यः ५५<br>सस्य५६ समासे<br>८० | ८१. भीरोः स्थानम्<br>भीरोरुत्तरस्य स्थानस्य सस्य मूर्धन्यो भवति समासे।<br>भीरोः स्थानम् भीरुष्ठानम्। | |

| | | |
|---|---|---|
| मूर्धन्यः ५५<br>सस्य५६ समासे<br>८० | ८२. अग्नेः स्तुत्-स्तोम-सोमाः<br>अग्नेरुत्तरस्य स्तुत्, स्तोम, सोम- इत्येतेषां सस्य मूर्धन्यो भवति समासे।<br>अग्निष्टुत्। अग्निष्टोमः। अग्नीषोमः।<br>'ईदग्नेः सोमवरुणयो' इति अग्नेरिकारस्य दीर्घेकारः।<br>(इष्टिः) अग्नेर्दीघात्सोमस्येष्यते।<br>तेनेह न भवति- अग्निसौमौ माणवकौ। | |
| मूर्धन्यः ५५<br>सस्य५६ समासे<br>८० | ८३. ज्योतिरायुषः स्तोमः<br>ज्योतिष्, आयुष्- इत्येताभ्यां परस्य स्तोमस्य सस्य मूर्धन्यो भवति समासे।<br>ज्योतिष्टोमः। आयुष्टोमः। | |
| मूर्धन्यः ५५<br>सस्य५६ समासे<br>८० | ८४. मातृ-पितृभ्यां स्वसा<br>मातृपितृभ्यां स्वसुः सस्य मूर्धन्यो भवति समासे।<br>मातृष्वसा। पितृष्वसा। | स्वसा ८५ |
| मूर्धन्यः ५५<br>स्वसुः८५<br>समासे ८० | ८५. मातुःपितुर्भ्यामन्यतरस्याम्<br>मातुर्, पितुर्- इत्येताभ्यामुत्तरस्य स्वसृशब्दस्य सस्यान्यतरस्यां मूर्धन्यो भवति समासे।<br>मातुःष्वसा, मातुःस्वसा।<br>पितुःष्वसा, पितुःस्वसा।<br>'विभाषा स्वसृपत्योः' इति षष्ठ्या अलुक्।<br>वाक्ये तु मातुः स्वसा, पितुः स्वसा इत्येव नित्यं भवति। | अन्यतरस्याम्८६ |
| अन्यतरस्याम् ८५<br>मूर्धन्यः ५५<br>सस्य५६ | ८६. अभि-निसः स्तनः शब्दसंज्ञायाम्<br>अभि-निस्- इत्युपसर्गसमुदायादुत्तरस्य स्तनतेः सस्य मूर्धन्योऽन्यतरस्यां भवति शब्दसंज्ञायां गम्यमानायाम्।<br>अभिनिष्टानो वर्णः, अभिनिस्तानो वा। अभिनिष्टानो विसर्जनीयः, अभिनिस्तानो वा।<br>शब्दसंज्ञायामिति किम्? अभिनिस्तनति मृदङ्गः।<br>'समासे' इति अतः प्रभृति निवृत्तम्। | |
| मूर्धन्यः ५५<br>सस्य५६ | ८७. उपसर्गप्रादुर्भ्यामस्तिर्यच्परः<br>उपसर्गस्थान्निमित्तात्, प्रादुस्शब्दाच्चोत्तरस्य यकारपरस्य, अच्परस्य चास्तेः सस्य मूर्धन्यो भवति।<br>यूच अच् च इति यचौ, यचौ परौ यस्मात् सः यच्परः।<br>अभिष्यात्, निष्यात्, विष्यात्। प्रादुःष्यात्।<br>यच्पर इति किम् ? निस्तः, विस्तः। प्रादुस्तः। | |

| | | |
|---|---|---|
| मूर्धन्यः ५५<br>सस्य५६ | ८८. सु-वि-निर्दुर्भ्यः सुपि-सूति-समाः<br>सु, वि, निर्, दुर् -इत्येतेभ्यः परेषां<br>सुपि,सूति,सम-इत्येतेषां सस्य मूर्धन्यो भवति।<br>'सुपि' इति स्वपिः कृतसम्प्रसारणो गृह्यते।<br>सुषुप्तः। विषुप्तः। निःषुप्तः। दुःषुप्तः।<br>सूति इतिस्वरूपग्रहणम्- सुषूतिः। विषूतिः। निःसूति।<br>दुःषूतिः।<br>सम- सुषमम्। विषमम्। निःषमम्। दुःषमम्। | |
| मूर्धन्यः ५५<br>सस्य५६ | ८९. नि-नदीभ्यां स्नातेः कौशले<br>नि, नदी- इत्येताभ्यामुत्तरस्य स्नातेः सस्य मूर्धन्यो<br>भवति, कौशले गम्यमाने।<br>निष्णातः कटकरणे। निष्णातो रज्जुवर्तने।<br>नद्यां स्नातीति नदीष्णः।<br>'सुपि स्थः' इत्यत्र 'सुपि' इति योगविभागात् कप्रत्ययः।<br>कौशल इति किम्? नद्यां स्नातो नदीस्नात इति। | |
| | ९०. सूत्रं प्रतिष्णातम्<br>'प्रतिष्णातम्' इति निपात्यते सूत्रं चेद्भवति।<br>प्रतिष्णातं सूत्रम्। शुद्धमित्यर्थः।<br>अन्यत्र प्रतिस्नातमित्येव। | |
| | ९१. कपिष्ठलो गोत्रे<br>कपिष्ठलः' इति निपात्यते गोत्रविषये।<br>कपिष्ठलो नाम यस्य कापिष्ठलिः पुत्रः।<br>गोत्र इति किम्? कपेः स्थलं कपिस्थलम्। | |
| | ९२. प्रष्ठोऽग्रगामिनि<br>'प्रष्ठः' इति निपात्यते अग्रगामिन्यभिधेये।<br>प्रतिष्ठते इति प्रष्ठोऽश्वः।<br>अग्रतो गच्छतीत्यर्थः।<br>अग्रगामिनीति किम्? प्रस्थे हिमवते पुण्ये। प्रस्थो<br>व्रीहीणाम्। | |
| | ९३. वृक्षासनयोर्विष्टरः<br>'विष्टरः' इति निपात्यते, वृक्षे, आसने च वाच्ये।<br>विपूर्वस्य स्तृणातेः 'ऋृदोरप्' इत्यपि कृते षत्वं<br>निपात्यतेऽनेन।<br>विष्टरो वृक्षः। विष्टमासनम्।<br>वृक्षासनयोरिति किम्? औलपिवाक्यस्य विस्तरः। | विष्टरः ९४ |
| विष्टरः ९३ | ९४. छन्दोनाम्नि च<br>छन्दोनाम्न्यपि विपूर्वस्य स्तृणातेः षत्वं निपात्यते।<br>'छन्दोनाम्नि च' इति सूत्रेण विपूर्वात् स्तृणातेः<br>घञ्प्रत्ययो भवति, तत्र षत्वं निपात्यतेऽनेन।<br>विष्टारपङ्क्तिः छन्दः। विष्टारो बृहतीच्छन्दः।<br>छन्दोनाम्नीति किम्? पटस्य विस्तारः। | |

| | | |
|---|---|---|
| मूर्धन्यः ५५<br>सस्य५६ | ६५. गवि-युधिभ्यां स्थिरः<br>गवियुधिभ्यामुत्तरस्य स्थिरस्य सस्य मूर्धन्यो भवति।<br>गविष्ठिरः। युधिष्ठिरः।<br>गोशब्दादहलन्तादपि एतस्मादेव निपातनात् सप्तम्या अलुग्भवति। | |
| मूर्धन्यः ५५<br>सस्य५६ | ६६. वि-कु-शमि-परिभ्यः स्थलम्<br>वि, कु, शमि, परि - इत्येतेभ्यः स्थलस्य सस्य मूर्धन्यो भवति।<br>विष्ठलम्। कुष्ठलम्। शमिष्ठलम्। परिष्ठलम्। | |
| मूर्धन्यः ५५<br>सस्य५६ | ६७. अम्बाम्ब-गो-भूमि-सव्याप-द्वि-त्रि-कु-शेकु-शङ्कङ्गु-मञ्जि-पुञ्जि-परमे-बर्हिर्दिव्यग्निभ्यः स्थः<br>अम्बादिभ्यः परस्य स्थशब्दस्य सस्य मूर्धन्यो भवति।<br>अम्बष्ठः। आम्बष्ठः। गोष्ठः। भूमिष्ठः। सव्येष्ठः, 'हलदन्तात्सप्तम्याः' इत्यलुक्। अपष्ठः। द्विष्ठः। त्रिष्ठः। कुष्ठः। शेकुष्ठः। शङ्कुष्ठः। अङ्गुष्ठः। मञ्जिष्ठः। पुञ्जिष्ठः। परमेष्ठः। बर्हिष्ठः। दिविष्ठः। अग्निष्ठः। | |
| मूर्धन्यः ५५<br>सस्य५६ | ६८. सुषामादिषु च<br>सुषामादिषु शब्देषु सस्य मूर्धन्यो भवति।<br>शोभनं साम यस्यासौ सुषामा ब्राह्मणः। दुष्षामा। निष्षामा। निष्षेधः। दुष्षेधः। सुष्ठु। दुष्ठु।<br>अविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्यः।<br>'एति संज्ञायामगात्' 'नक्षत्राद् वा' इति सूत्रद्वयं 'सुषामादिगणे गणसूत्रत्वेन पठितमिति अनयोः पाठोऽत्र न कृतः। | |
| मूर्धन्यः ५५<br>सस्य५६ | ६९. ह्रस्वात्तादौ तद्धिते<br>ह्रस्वादुत्तरस्य सस्य मूर्धन्यो भवति तकारादौ तद्धिते।<br>तरप्, तमप्, तय, तल्, तस्, त्यप् - इत्येते तकारादितद्धितप्रत्ययाः।<br>तरप्- सर्पिष्टरम्।<br>तमप्- सर्पिष्टमम्।<br>तय- चतुष्टये ब्राह्मणानां निकेताः।<br>त्व- सर्पिष्ट्वम्।<br>तल्- सर्पिष्टा।<br>त्यप्- आविष्ट्यो वर्द्धते। | तादौ १०२ |

| | | |
|---|---|---|
| मूर्धन्यः ५५<br>सस्य५६ | १००. निसस्तपतावनासेवने<br>निसः सस्य मूर्धन्यो भवति तपतौ परतोऽनासेवनेऽर्थे।<br>आसेवनम् = पुनः पुनः करणम्।<br>निष्टपति सुवर्णम्।<br>सकृदग्निं स्पर्शयतीत्यर्थः।<br>अनासेवने इति किम्? निस्तपति सुवर्णं सुवर्णकारः।<br>पुनः पुनरग्निं स्पर्शयतीत्यर्थः। | |
| मूर्धन्यः ५५<br>सस्य५६ तादौ ९६ | १०१. युष्मत्तत्ततक्षुःष्वन्तःपादम्<br>युष्मद्, तद्, ततक्षुस् - इत्येतेषु तकारादिषु परतः सस्य मूर्धन्यो भवति, स चेत्सकरोऽन्तः पादं (पादमध्ये) भवति।<br>युष्मद् इति शब्देन युष्मदादेशाः त्वम्, त्वाम्, ते, तव इति गृह्यन्ते।<br>अग्निष्ट्वं नामासीत्। अग्न्यिष्ट्वा वर्धयामि। अग्निष्टे विश्वमानय। अप्स्वग्ने सधिष्टव।<br>तत्- अग्निष्टद्विश्वमापृणाति।<br>ततक्षुस्- द्यावापृथिवी निष्टतक्षुः। | युष्म-क्षुःषु १०२ |
| मूर्धन्यः ५५<br>तादौ ९६<br>युष्मत्तत्क्षुःषु १०१ | १०२. यजुष्येकेषाम्<br>यजुषि विषये युष्मत्तत्ततक्षुः परतः एकेषामामाचार्याणां मतेन सस्य मूर्धन्यो भवति।<br>अर्चिभिष्ट्वम्, अर्चिभिस्त्वम्। अग्निष्टेऽग्रम्, अग्निस्तेऽग्रम्।<br>अग्निष्टत्, अग्निस्तत्।<br>अर्चिभिष्टतक्षुः, अर्चिभिस्ततक्षुः। | एकेषाम् १०४ |
| एकेषाम् १०२<br>इण्कोः ५७<br>मूर्धन्यः ५५<br>सस्य५६ | १०३. स्तुत-स्तोमयोश्छन्दसि<br>स्तुत,स्तोम-इत्येतयोः सस्य छन्दसि विषये मूर्धन्यो भवति एकेषामाचार्याणां मतेन। त्रिभिष्टुतस्य, त्रिभिस्तुतस्य।<br>गोष्टोमं षोडशिनम्, गोस्तोमं षोडशिनम्।<br>'पूर्वपदात्' इत्युत्तरसूत्रेण सिद्धे प्रपञ्चार्थमिदम्। | छन्दसि १०७ |
| एकेषाम् १०२<br>इण्कोः ५७<br>मूर्धन्यः ५५<br>सस्य५६<br>छन्दसि १०३ | १०४. पूर्वपदात्<br>पूर्वपदस्थान्निमित्तादुत्तरस्य सस्य मूर्धन्यो भवति छन्दसि विषये एकेषामाचार्याणां मतेन।<br>द्विषन्धिः, द्विसन्धिः।<br>त्रिषन्धिः, त्रिसन्धिः।<br>मधुष्ठानम्, मधुस्थानम्।<br>द्विषाहस्रं चिन्वीत, द्विसाहस्रं चिन्वीत।<br>असमासेऽपि यत्पूर्वं पदं तदपीह गृह्यते - त्रिः षमृद्धत्वाय, त्रिः समृद्धत्वाय। | पूर्वपदात् १०६ |

| | | |
|---|---|---|
| इण्कोः ५७<br>मूर्धन्यः ५५<br>सस्य५६<br>छन्दसि १०३<br>पूर्वपदात् १०४ | १०५. सुञः<br>तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य सुञः सकारस्य मूर्धन्यो भवति, छन्दसि विषये।<br>'सुञ्' इति निपात इह गृह्यते।<br>अभी षु णः सखीनाम्।<br>ऊर्ध्व ऊ षु ण ऊतये।<br>'इकः सुञि' इति सूत्रेण इको दीर्घः। 'नश्च धातुस्थोरुषुभ्यः' इति सूत्रेण नकारस्य णत्वम्। | |
| इण्कोः ५७<br>पूर्वपदात् १०४ | १०६. सनोतेरनः<br>पूर्वपदस्थान्निमित्तात्परस्य अनकारान्तस्य सनोतेः सस्य मूर्धन्यो भवति।<br>गोषाः। नुषाः।<br>गां सनोति, नरं सनोति इति विग्रहे 'जनसनखनक्रमगमो विट्' इति सूत्रेण 'गाम्' इत्युपपदात्, 'नरम्' इत्युपपदाच्च 'षणु दाने' इत्यस्माद् विट् प्रत्ययः, 'विड्वनोरनुनासिकस्यात्' इत्यात्त्वम्।<br>अनः इति किम् ? गोसनिं वाचमुदीरयन्। | |
| मूर्धन्यः ५५<br>सस्य५६ | १०७. सहेः पृतनर्ताभ्यां च<br>पृतना, ऋत- इत्येताभ्यामुत्तरस्य सहेः सस्य मूर्धन्यो भवति।<br>पृतनाषाहम्। ऋताषाहम्।<br>'ऋताषाहम्' इत्यत्र 'अन्येषामपि दृश्यते' इति सूत्रेण पूर्वपदस्य दीर्घः।<br>चकारोऽनुक्तसमुच्चयार्थः।<br>तेन 'ऋतीषहम्' इत्यपि सिद्ध्यति। | |
| इण्कोः ५७<br>पूर्वपदात् १०४<br>मूर्धन्यः ५५<br>सस्य५६ | १०८. न रपर-सृपि-सृजि-स्पृशि-स्पृहि-सवनादीनाम्<br>पूर्वपदस्थान्निमित्तात्परस्य रेफपरस्य सस्य, सृपि, सृजि, स्पृशि, स्पृहि, सवनादीनां च सकारस्य मूर्धन्यो न भवति।<br>रपर- विस्रंसिकायाः काण्डाभ्यां जुहोति। विस्रब्धः कथयति।<br>सृपि- पुरा क्रूरस्य विसृपः।<br>सृजो- वाचो विसर्जनात्।<br>स्पृशि- दिविस्पृशम्।<br>स्पृहि- निस्पृहं कथयति।<br>सवनादीनाम्- सवने सवने।<br>सूते सूते। सोमे सोमे। संवत्सरे संवत्सरे।<br>'पूर्वपदात्' (८.३.१०४) इति सूत्रेण प्राप्तेः प्रतिषेधः। | न ११७ |

| | | |
|---|---|---|
| इण्कोः ५७<br>पूर्वपदात् १०४<br>मूर्धन्यः ५५<br>सस्य५६ न १०८ | १०९. सात्पदाद्योः<br>पूर्वपदस्थान्निमित्तात्परस्य 'सात्' इत्येतस्य, पदादेश्च सस्य मूर्धन्यो न भवति।<br>सात्- अग्निसाद् भवति।<br>'विभाषा साति कार्त्स्न्ये' इति सातिप्रत्ययः।<br>पदादेः - दधि सिञ्चति।<br>उभयत्र 'आदेशप्रत्यययोः' इति सूत्रेण प्राप्तेः प्रतिषेधः। | |
| मूर्धन्यः ५५<br>न १०८ सस्य५६ | ११०. सिचो यङि<br>सिचः सस्य मूर्धन्यादेशो न भवति यङि परतः।<br>सेसिच्यते। अभिसेसिच्यते।<br>'सेसिच्यते' इत्यत्र 'आदेशप्रत्यययोः' इति प्राप्तिः'<br>अभिसेसिच्यते इत्यत्र 'सुनोति' इत्यादिना। | |
| मूर्धन्यः ५५<br>न १०८ सस्य५६ | १११. सेधतेर्गतौ<br>गतौ वर्तमानस्य सेधतेः सस्य मूर्धन्यो न भवति।<br>अभिसेधयति गाः। परिसेधयति गाः।<br>गताविति किम्? शिष्यमकार्यात् प्रतिषेधयति। | |
| मूर्धन्यः ५५<br>न १०८ सस्य५६ | ११२. प्रतिस्तब्ध-निस्तब्धौ च<br>प्रतिस्तब्ध, निस्तब्ध- इत्येतौ मूर्धन्यप्रतिषेधाय निपात्येते।<br>'स्तम्भेः' (८.३.६७) इति सूत्रेण प्राप्तं षत्वं प्रतिषिध्यते।<br>प्रतिस्तब्धः। निस्तब्धः। | |
| पूर्वपदात् १०४<br>मूर्धन्यः ५५ न १०८ | ११३. सोढः<br>सहिरयं सोड्भूतो गृह्यते, तस्य सस्य मूर्धन्यो न भवति।<br>परिसोढः, परिसोढुम्, परिसोढव्यम्।<br>सोड्भूतग्रहणं किम्? परिषहते। | |
| पूर्वपदात् १०४<br>मूर्धन्यः ५५<br>न १०८<br>सस्य५६ | ११४. स्तम्भु-सिवु-सहां चङि<br>पूर्वपदस्थान्निमित्तात्परस्य स्तम्भु, सिवु, सह- इत्येतेषां चङि परतः सस्य मूर्धन्यो न भवति।<br>'स्तम्भेः' (८.३.६७) इति सूत्रेण, 'परिनिविभ्यः' (८.३.७०) इति सूत्रेण च प्राप्तो मूर्धन्यः प्रतिषिध्यते।<br>स्तम्भु- पर्यतस्तम्भत्, अभ्यतस्तम्भत्।<br>सिवु- पर्यसीषिवत्, न्यसीषिवत्।<br>सह- पर्यसीषहत्, व्यसीषहत्।<br>(वा०) स्तम्भु-सिवु-सहां चङि उपसर्गादिति वक्तव्यम्।<br>उपसर्गाद्या प्राप्तिस्तस्या एव प्रतिषेधो यथा स्यात्, अभ्यासाद्या प्राप्तिस्तस्याः मा भूदिति। तथा चैवोदाहृतम्। | |

| | | |
|---|---|---|
| इण्कोः ५७<br>पूर्वपदात् १०४<br>मूर्धन्यः ५५<br>न १०८<br>सस्य५६ | **११५. सुनोतेः स्यसनोः**<br>पूर्वपदस्थान्निमित्तात्परस्य सुनोतेः सस्य मूर्धन्यो न भवति स्ये, सनि च परतः।<br>षुञ् अभिषवे-<br>स्ये- अभिसोष्यति। परिसोष्यति। अभ्यसोष्यत्। पर्यसोष्यत्।<br>सनि- अभिसुसूः।<br>अभिपूर्वात् 'षुञ् अभिषवे' इति धातोः सनि कृते 'अज्झनगमां सनि' इति सूत्रेण दीर्घे च कृते 'अभिसुसूष' इत्यवस्थायां क्विपि, 'अतो लोपः' इति सूत्रेण अकारस्य लोपे कृते, रुत्वं प्रति षत्वस्यासिद्धत्वात् रुत्वे, विसर्गे च कृते अभिसुसूः इति रूपं सिद्ध्यति। | |
| इण्कोः ५७<br>पूर्वपदात् १०४<br>मूर्धन्यः ५५<br>न १०८ सस्य५६ | **११६. सदेः परस्य लिटि**<br>पूर्वपदस्थान्निमित्तात्परस्य सदेर्धातोर्लिटि परतः परस्य सस्य अर्थात् अनभ्याससकारस्य मूर्धन्यो न भवति।<br>अभिषसाद, परिषसाद। निषसाद, विषसाद। | |
| मूर्धन्यः ५५ न १०८ सस्य ५६ | **११७. निव्यभिभ्योऽड्व्यवाये वा छन्दसि**<br>नि, वि, अभि- इत्येतेभ्य उत्तरस्य सस्याड्व्यवाये छन्दसि विषये मूर्धन्यो वा न भवति।<br>न्यषीदत् पिता नः, न्यसीदत्। व्यषीदत् पिता नः, व्यसीदत्।<br>'सदेः' इति इह नानुवर्तते, सामान्येन अयं निषेधविकल्पो भवति - व्यष्टौत्, व्यस्तौत्। अभ्यष्टौत्, अभ्यस्तौत्। | |

**।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायाम् अष्टमाध्यायस्य तृतीयः पादः।।**

।। श्रीः ।।

## ।। अथाष्टमाध्यायस्य चतुर्थः पादः ।।

| | | |
|---|---|---|
| संहितायाम्<br>८.२.१०८ | १. रषाभ्यां नो णः समानपदे<br>रषाभ्यां नो णः भवति समानपदे।<br>रेफात् - आस्तीर्णम्।<br>षकारात् - पुष्णाति।<br>समानपदे किम्? अग्निर्नयति।<br>(वा०) ऋवर्णाच्चेति वक्तव्यम्।<br>तिसृणाम्। चतसृणाम्। मातॄणाम्। पितॄणाम्। | सम्पूर्णसूत्रम् ३६ |
| रषाभ्यां १<br>नो १<br>णः १<br>समानपदे १ | २. अट्-कु-प्वाङ्-नुम्व्यवायेऽपि<br>अट्कुप्वाङ्नुम्व्यवायेऽपि रषाभ्यां नो णः भवति समानपदे।<br>अड्व्यवाये - करणम्। किरिणा। गुरुणा।<br>कुव्यवाये - अर्केण। मूर्खेण।<br>पुव्यवाये - दर्पेण।<br>आङ्व्यवाये- प्रर्याणद्धम्।<br>'अड्व्यवाये' इत्येव सिद्धे सूत्रे आङ्ग्रहणं 'पदव्यवायेऽपि' इति प्रतिषेधस्य बाधनार्थम्।<br>नुम्व्यवाये- तृंहणम्। | |
| रषाभ्यां १<br>नः १<br>णः १<br>समानपदे १<br>अट्-कुप्वाङ्नुम्-व्यवायेऽपि २ | ३. पूर्वपदात्संज्ञायामगः<br>अगः (गकाररहितात्) पूर्वपदस्थान्निमित्तात् परस्य नो णः भवति संज्ञायाम्।<br>द्रुणसः। वाध्रीणसः। खरणसः। शूर्पणखा।<br>अग इति किम् ? ऋगयनम्। | पूर्वपदात् २६<br>संज्ञायाम् ४ |
| पूर्वपदात् ३<br>संज्ञायाम् ३<br>नः १ णः १ | ४. वनं पुरगा-मिश्रका-सिध्रका-शारिका-कोटराग्रेभ्यः<br>पुरगा-मिश्रका-सिध्रका-शारिका- कोटराग्रेभ्यः वनं णकारं न लभते संज्ञायां विषये। पुरगावणम्। मिश्रकावणम्। सिध्रकावणम्। अग्रेवणम्।<br>'पुरगावणम्' इत्यादौ 'वनगिर्योः संज्ञायाम्' इति सूत्रेण पूर्वपदस्य दीर्घत्वम्।<br>अग्रेवणमित्यत्र 'हलदन्तात् सप्तम्याः' इति सूत्रेण सप्तम्या अलुक्।<br>नियमार्थमिदम् - एतेभ्यः एव परं वनं णकारं लभते नान्येभ्यः इति। तेन कुबेरवनम्, शतधारवनम् इत्यादौ णत्वं न भवति। | वनम् ६ |

| | | |
|---|---|---|
| वनम् ४<br>नः १<br>णः १<br>पूर्वपदात् ३ | ५. प्रनिरन्तःशरेक्षु-प्लक्षाम्र-कार्ष्य-खदिर-पीयूक्षाभ्योऽसंज्ञायामपि<br>प्र, निर्, अन्तर्, शर, इक्षु, प्लक्ष, आम्र, कार्ष्य, खदिर, पीयूक्षा – इत्येतेभ्यः परं वनं णकारं लभते असंज्ञायामपि, अपिना संज्ञायामपि।<br>प्रवणे यष्टव्यम्। निर्वणे प्रतिधीयते। अन्तर्वणे। शरवणम्। दक्षुवणम्। प्लक्षवणम्। आम्रवणम्। कार्ष्यवणम्। खदिरवणम्। पीयूक्षावणम्। | |
| रषाभ्यां १<br>नः १<br>णः १<br>पूर्वपदात् ३ | ६. विभाषौषधि-वनस्पतिभ्यः<br>ओषधि-वनस्पतिवाचिभ्यः परं वनं विभाषा णकारं लभते, रषाभ्यां चेत् स नकारः।<br>ओषधेः – दूर्वावणम्, दूर्वावनम्। मूर्वावणम्, मूर्वावनम्।<br>वनस्पतेः – शिरीषवणम्, शिरीषवनम्। बदरीवणम्, बदरीवनम्।<br>(वा०) इरिकादिभ्यः प्रतिषेधो वक्तव्यः।<br>इरिकावनम्। भिरिकावनम्। | |
| रषाभ्यां १<br>नः १<br>णः १<br>पूर्वपदात् ३ | ७. अह्नोऽदन्तात्<br>अदन्तात् पूर्वपदाद् अह्नो णकारं लभते, रषाभ्यां चेत्स नकारः।<br>पूर्वाह्णः। अपराह्णः। | |
| रषाभ्यां १<br>नः १<br>णः १<br>पूर्वपदात् ३ | ८. वाहनमाहितात्<br>आहिताद् परं वाहनं णकारं लभते, रषाभ्यां चेत्स नकारः।<br>वाहने यदारोपितमुह्यते तदाहितमुच्यते।<br>इक्षुवाहणम्। शरवाहणम्। दर्भवाहणम्। | |
| रषाभ्यां १<br>नः १<br>णः १<br>पूर्वपदात् ३ | ९. पानं देशे<br>पूर्वपदात् पानं णकारं लभते देशे, रषाभ्यां चेत्स नकारः।<br>क्षीरं पानं येषां ते क्षीरपाणाः उशीनराः। सुरापाणाः प्रच्याः। सौवीरपाणाः बाह्लीकाः। कषायपाणाः गन्धाराः।<br>देशे इति किम् ? दाक्षीणां पानं दाक्षीपानम्। | पानम् १० |
| रषाभ्यां १<br>नः१<br>णः १<br>पूर्वपदात् ३<br>पानम् ९ | १०. वा भावकरणयोः<br>पूर्वपदात् परं भावकरणयोः (वर्तमानम्) पानं णकारं वा लभते, रषाभ्यां चेत्स नकारः।<br>भावे – क्षीरपाणं, क्षीरपानं वा वर्तते।<br>करणे – क्षीरपाणः, क्षीरपानो वा कंसः।<br>(वा०) वाप्रकरणे गिरिनद्यादीनामुपसंख्यानम्।<br>गिरिणदी, गिरिनदी।<br>चक्रणदी, चक्रनदी।<br>चक्रणितम्बा, चक्रनितम्बा। | वा ११ |

| | | |
|---|---|---|
| रषाभ्यां १<br>नः १<br>णः १<br>पूर्वपदात् ३<br>वा १० | ११. प्रातिपदिकान्त-नुमु-विभक्तिषु च<br>पूर्वपदात् प्रातिपदिकान्त-नुमु-विभक्तिषु च यो नः तस्य स्थाने णो वा भवति, रषाभ्यां चेत्स नकारः।<br>प्रतिपदिकान्ते- माषवापिणौ, माषवापिनौ।<br>नुमि- माषवापाणि, माषवापानि।<br>विभक्तौ- माषवापेण, माषवापेन। | प्राति-क्तिषु १३ |
| रषाभ्यां १ नः १<br>णः १<br>पूर्वपदात् ३ | १२. एकाजुत्तरपदे णः<br>एकाजुत्तरपदे (समासे) पूर्वपदात्<br>प्रातिपदिकान्त-नुम्विभक्तिषु यो नः तस्य स्थाने णः भवति रषाभ्यां चेत्स नकारः।<br>प्रातिपदिकान्ते- वृत्रहणौ, वृत्रहणः।<br>नुमि- सुरापाणि।<br>विभक्तौ- क्षीरपेण। सुरापेण।<br>'ण' इति वर्तमाने पुनर्णग्रहणं विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थम्। | |
| रषाभ्यां १ नः१<br>णः १<br>पूर्वपदात् ३ | १३. कुमति च<br>कुमति (कवर्गवति) उत्तरपदे सति पूर्वपदात्<br>प्रातिपदिकान्तनुम्विभक्तिषु यो नः तस्य स्थाने णो भवति, रषाभ्यां चेत् स नकारः।<br>प्रतिपदिकान्ते - वस्त्रयुगिणौ, वस्त्रयुगिणः। स्वर्गकामिणौ, स्वर्गकामिणः।<br>नुमि- वस्त्रयुगाणि।<br>विभक्तौ - वस्त्रयुगेण। | |
| रषाभ्यां १<br>नः१<br>णः १ | १४. उपसर्गादसमासेऽपि णोपदेशस्य<br>उपसर्गाद् णोपदेशस्य (धातोः) नः णो भवति असमासेऽपि, अपिना समासेऽपि, रषाभ्यां चेत्स नकारः।<br>प्रणमति, परिणमति।<br>प्रणायकः, परिणायकः।<br>असमासेऽपीति किम्? पूर्वपदाधिकारात् समास एव स्यादिति तदधिकारनिवृत्तिद्योतनार्थम्। | उपसर्गात् २३ |
| उपसर्गात् १४<br>रषाभ्यां १<br>नः १<br>णः १ | १५. हिनु-मीना<br>उपसर्गाद् हिनु-मीना इति णकारं लभते, रषाभ्यां चेत् स नकारः।<br>प्रहिणोति। प्रमीणाति। | |
| उपसर्गात् १४<br>रषाभ्यां १<br>नः १<br>णः १ | १६. आनि लोट्<br>उपसर्गाद् आनि इति णकारं लभते, आनि चेत् लोडादेशभूतं भवेत्, नकारश्चेत् रषाभ्यां च परो भवेत्।<br>प्रवपाणि। प्रयाणि।<br>लोडिति किम्? प्रवापानि मांसानि। | |

| | | |
|---|---|---|
| उपसर्गात् १४<br>रषाभ्यां १<br>नः १<br>णः १ | १७. नेर्गद-नद-पत-पद-घु-मा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-वपति-वहति-शाम्यति- चिनोति-देग्धिषु च<br>उपसर्गस्थनिमित्तात्परस्य नेर्नो णो भवति गदादिषु परतः।<br>प्रणिगदति। प्रणिनदति। प्रणिपतति। प्रणिपद्यते।<br>घु- प्रणिददाति, प्रणिदधाति।<br>माङ्- प्रणिमिमीते, मेङ्- प्रणिमयते।<br>'मा' इति माङ्मेङोर्ग्रहणमिष्यते।<br>प्रणिष्यति। प्रणिहन्ति। प्रणियाति। प्रणिवाति। प्रणिद्राति।<br>प्रणिप्साति। प्रणिवपति। प्रणिवहति। प्रणिशाम्यति।<br>प्रणिचिनोति। प्रणिदेग्धि।<br>(इष्टिः) अड्व्यवायेऽपि नेर्गदादिषु णत्वमिष्यते। प्रण्यगदत्। | नेः १८ |
| उपसर्गात् १४<br>रषाभ्यां १<br>नेः १७<br>नः १<br>णः १ | १८. शेषे विभाषाऽकखादावषान्त उपदेशे<br>शेषे (गदादिभ्योऽन्यस्मिन्) परतः उपसर्गान्नेर्नो णो विभाषा भवति, उपदेशे यः कादिः, खादिः, षान्तो वा तेषु परेषु णकारो न भवति।<br>प्रणिपचति, प्रनिपचति।<br>प्रणिभिनत्ति, प्रनिभिनत्ति।<br>अकखादाविति किम्? प्रनिकरोति, प्रनिखादति।<br>अषान्त इति किम्? प्रनिपिनष्टि। | |
| उपसर्गात् १४<br>रषाभ्यां १<br>नः १<br>णः १ | १९. अनितेः<br>उपसर्गाद् अनितेर्नो णो भवति, रषाभ्यां चेत्स नकारः।<br>प्राणिति। पराणिति। | अनितेः २१ |
| उपसर्गात् १४<br>रषाभ्यां १<br>नो १<br>णः १<br>अनितेः १९ | २०. अन्तः<br>उपसर्गाद् अनितेरन्त्योऽपि नः णो भवति, रषाभ्यां चेत्सः नकारः भवेत्।<br>'पदान्तस्य' इति प्रतिषेधस्यापवादोऽयम्।<br>हे प्राण्। | |
| उपसर्गात् १४<br>रषाभ्यां १<br>नः १<br>णः १ | २१. उभौ साभ्यासस्य<br>उपसर्गस्थान्निमित्तात्परस्य साभ्यासस्यानितेरुभौ नकारौ णत्वं लभेते।<br>प्राणिणिषति, प्राणिणत्। | |
| उपसर्गात् १४<br>रषाभ्यां १<br>नः १<br>णः १ | २२. हन्तेरत्पूर्वस्य<br>उपसर्गस्थान्निमित्तात्परस्य हन्तेरत्पूर्वस्य नो णः भवति।<br>प्रहण्यते, परिहण्यते। प्रहणनम्, परिहणनम्।<br>अत्पूर्वस्येति किम्? प्रघ्नन्ति। परिघ्नन्ति। | हन्तेरत्पूर्वस्य २४ |

| | | |
|---|---|---|
| उपसर्गात् १४<br>रषाभ्यां १<br>नः १<br>णः १<br>हन्तेरत्पूर्वस्य २२ | २३. वमोर्वा<br>उपसर्गस्थान्निमित्तात् परस्य हन्तेरत्पूर्वस्य नो णो वा भवति, वमोः।<br>प्रहण्वः, प्रहन्वः। प्रहण्मः, प्रहन्मः। | |
| नः १ णः १<br>हन्तेरत्पूर्वस्य २२ | २४. अन्तरदेशे<br>अन्तर् इतिशब्दात् परस्य हन्तेरत्पूर्वस्य नो णो भवति, अदेशाभिधाने।<br>अन्तर्हण्यते। अन्तर्हणनं वर्तते।<br>अदेशे इति किम्? अन्तर्हननो देशः। अधिकरणे ल्युट्।<br>अत्पूर्वस्य इत्येव- अन्तर्घ्नन्ति। | अन्तरदेशे २५ |
| अन्तरदेशे २४<br>नो १ णः १ | २५. अयनं च<br>अन्तर् इतिशब्दादुत्तरम् अयनं णकारं लभते, अदेशाभिधाने।<br>अन्तरयणं वर्तते।<br>अदेशे इति किम्? अन्तरयनो देशः। | |
| पूर्वपदात् ३<br>नः १ णः १ | २६. छन्दस्यृदवग्रहात्<br>ऋकारान्तादवग्रहात् पूर्वपदादुत्तरस्य नो णः भवति छन्दसि।<br>अवगृह्यते = विच्छिद्य पठ्यते इत्यवग्रहः।<br>नृमणाः। पितृयाणम्। | छन्दसि २७ |
| छन्दसि २६<br>नः१ णः १ | २७. नश्च धातुस्थोरु-षुभ्यः<br>धातुस्थनिमित्तात्, ऊरुशब्दात्, षुशब्दाच्च परः 'नस्' इति शब्दो णकारं लभते, छन्दसि।<br>धातुस्थात् - अग्ने रक्षा णः। शिक्षा णो अस्मिन्।<br>ऊरुशब्दात्- ऊरु णस्कृधि।<br>षुशब्दात्- अभी षु णः सखीनाम्।<br>अस्मदादेशोऽयं नस्शब्दः। | नः २८ |
| नः २७<br>नः १<br>णः १ | २८. उपसर्गादनोत्परः<br>उपसर्गात् परः अनोत्परः नस्शब्दः णकारं लभते रषाभ्यां चेत्सः।<br>नास्ति ओकारः यस्मात्परः सः अनोत्परः।<br>प्र णः शूद्रः।<br>अस्मदादेशोऽयं नस् शब्दः।<br>प्रणसः।<br>अत्र नासिकाया नसादेशः।<br>अनोत्पर इति किम्? प्र नो मुञ्चतम्।<br>अत्र 'उपसर्गाद् बहुलम्' इति पाठान्तरम्। | उपसर्गात् ३४ |

| | | |
|---|---|---|
| उपसर्गात् २८<br>रषाभ्याम् १<br>नः १<br>णः १ | २९. कृत्यचः<br>उपसर्गात् परः कृति यो नकारः अचः परः तस्य णकारो भवति, रषाभ्यां चेत्स नकारः।<br>प्रयाणम्। प्रयायमाणम्। प्रयाणीयम्। प्रहीणम्।<br>अच इति किम्? प्रमग्नः। | कृति ३४<br>अचः ३१ |
| उपसर्गात् २८<br>रषाभ्यां १<br>नः १<br>णः १<br>कृति २९<br>अचः २९ | ३०. णेर्विभाषा<br>उपसर्गात् परः णेः (ण्यन्ताद् विहिते) कृति यो नकारः अचः परः, तस्य णकारो विभाषा भवति, रषाभ्यां चेत्स नकारः।<br>प्रयापणम्, प्रयापनम्।<br>विहितविशेषणं किम्? 'प्रयाप्यमाणम्' इत्यत्र यका व्यवधानेऽपि यथा स्यादिति। | विभाषा ३१ |
| नः१<br>णः१<br>कृति २९<br>अचः २९<br>विभाषा ३० | ३१. हलश्चेजुपधात्<br>उपसर्गात् परः हलः (हलादेः) इजुपधाद् विहिते कृति यो नकारः अचः परः, तस्य णकारो विभाषा भवति, रषाभ्यां चेत्स नकारः।<br>प्रकोपणम्, प्रकोपनम्। | हलः ३२ |
| हलः ३१<br>नः१<br>णः १<br>कृति २९ | ३२. इजादेः सनुमः<br>उपसर्गात्परः इजादेः सनुमः हलन्ताद् विहिते कृति यो नकारस्तस्य णकारो भवति, रषाभ्यां चेत्स नकारः।<br>प्रेङ्खणम्। प्रेङ्गणम्। प्रोम्भणम्। | |
| उपसर्गात् २८<br>रषाभ्यां १ नः१<br>णः १ | ३३. वा निंस-निक्ष-निन्दाम्<br>उपसर्गात् परः निंस-निक्ष-निन्दां यो नकारः तस्य णकारो वा भवति, रषाभ्यां चेत्स नकारः।<br>प्रणिंसनम्, प्रनिंसनम्।<br>प्रणिक्षणम्, प्रनिक्षणम्।<br>प्रणिन्दनम्, प्रनिन्दनम्। | |
| उपसर्गात् २८<br>रषाभ्यां १<br>नः १<br>णः १<br>कृति २९ | ३४. न भा-भू-पू-कमि-गमि-प्यायि-वेपाम्<br>उपसर्गात् परः भा-भू-पू-कमि-गमि-प्यायि- वेपां कृति यो नकारः तस्य णकारो न भवति।<br>प्रभानम्। प्रभवनम्। प्रपवनम्।<br>प्रकमनम्। प्रगमनभ्। प्रप्यायनम्। प्रवेपनम्।<br>इह 'कृत्यचः' इति सूत्रेण प्राप्तिः।<br>(इष्टिः) पूग्रहणेन पूञ्ग्रहणं द्रष्टव्यम्।<br>तेन पूङो हि भवत्येव णत्वम्- प्रवपणं सोमस्येति।<br>(वा०) ण्यन्तानां भादीनामुपसंख्यानं कर्त्तव्यम्।<br>प्रभापनम्। परिभापनम् | न ३६ |

| | | |
|---|---|---|
| नः १<br>णः १<br>न ३४ | ३५. षात्पदान्तात्<br>षात्पदान्ताद् नो णो न भवति।<br>निष्पानम्। दुष्पानम्।<br>अत्र 'कृत्यचः' इति सूत्रेण प्राप्तिः। सर्पिष्पानम्।<br>यजुष्पानम्।<br>अत्र 'वा भावकरणयोः 'इति सूत्रेण प्राप्तिः।<br>पदान्तादिति किम्? कुष्णाति। | |
| नः १<br>णः १<br>न ३४ | ३६. नशेः षान्तस्य<br>नशेः षान्तस्य नो णो न भवति।<br>प्रनष्टः।<br>'उपसर्गादसमासेऽपि इति सूत्रेणात्र प्राप्तिः।<br>षान्तस्येति किम्? प्रणश्यति। | |
| नः १<br>णः १<br>न ३४ | ३७. पदान्तस्य<br>पदान्तस्य नो णो न भवति।<br>वृक्षान्। अरीन्। | |
| नः १<br>णः १<br>न ३४ | ३८. पदव्यवायेऽपि<br>पदव्यवायेऽपि रषाभ्यां नो णो न भवति।<br>माषकुम्भवापेन। चतुरङ्गयोगेन।<br>(वा०) पदव्यवायेऽतद्धित इति वक्तव्यम्।<br>तेन इह प्रतिषेधो न भवति – आर्द्रगोमयेण।<br>शुष्कगोमयेण।<br>'गोश्च पुरीषे' इति मयट्, स्वादौ पूर्वपदमिति गोशब्दः<br>पूर्वपदम्, तेन व्यवायः। | |
| नः १<br>णः १<br>न ३४ | ३९. क्षुभ्नादिषु च<br>'क्षुभ्ना' इत्येवमादिषु शब्देषु रषाभ्यां नो णो न भवति।<br>क्षुभ्नाति।<br>(गणवार्तिकम्) आचार्यादणत्वं च।<br>आचार्यभोगीनः। आचार्यानी।<br>क्षुभ्नादिराकृतिगणः। तेन अविहितलक्षणो णत्वप्रतिषेधः<br>क्षुभ्नादिषु द्रष्टव्यः। | |
| संहितायाम्<br>८.२.१०८ | ४०. स्तोः श्चुना श्चुः<br>स्तोः(सकारतवर्गयोः) श्चुना (शकारचवर्गाभ्यां योगे) श्चुः<br>(शकारचवर्गौ) भवति।<br>स् च तुश्च च स्तु,समाहारद्वन्द्वः। तस्य षष्ठ्येकवचने स्तोः<br>इति रूपम्। सौत्रं पुंस्त्वमत्र। एवमेव शचयोः समासः।<br>वृक्षश्शेते। वृक्षश्चिनोति।<br>अग्निचिच्छेते। आनिचिच्चिनोति। | स्तोः ४२ चुः४४ |

| | | |
|---|---|---|
| स्तोः ४०<br>संहितायाम्<br>८.२.१०८ | ४१. ष्टुना ष्टुः<br>स्तोः(सकारतवर्गयोः) ष्टुना (षकारटवर्गाभ्यां योगे) ष्टुः(षकांटवर्गौ) भवति।<br>वृक्षष्षण्डे। वृक्षष्टीकते।<br>पेष्टा। अग्निचिट्टीकते। | ष्टुः ४३ |
| स्तोः ४०<br>ष्टुः ४१ | ४२. न पदान्ताट्टोरनाम्<br>पदान्ताट्टोः स्तोः ष्टुर्न भवति, नाम् शब्दविषयेऽयं निषेधो न प्रवर्तते।<br>श्वलिट् साये। मधुलिट् तरति।<br>अनामिति किम्? षण्णाम्।<br>(वा०) अनाम्नवतिनगरीणामिति वक्तव्यम्।<br>षण्णाम्। षण्णवतिः। षण्णगर्यः। | न ४४<br>पदान्तात्४५ |
| स्तोः ४०<br>ष्टुः ४१<br>न ४२ | ४३. तोः षि<br>तोः(तवर्गस्य) षि (षकारे परतः) ष्टुर्न भवति।<br>अग्निचित्षण्डे। भवान् षण्डे। | तोः ४४ |
| तोः ४३<br>चुः ४० | ४४. शात्<br>शात् तोः श्चुर्न भवति।<br>प्रश्नः। विश्नः। | |
| पदान्तात् ४२ | ४५. यरोऽनुनासिकेऽनुनासिको वा<br>पदान्तस्य यरोऽनुनासिके परतः अनुनासिको वा भवति।<br>वाङ्नयति, वाग्नयति।<br>पदान्तस्य इत्येव- वेद्मि। क्षुभ्नाति।<br>(वा०) प्रत्यये भाषायां नित्यम्।<br>वाङ्मयम्। त्वङ्मयम्। | यरः ४७ वा४७ |
| यरः ४५<br>वा ४५ | ४६. अचो रहाभ्यां द्वे<br>अचः (पराभ्यां) रहाभ्यां परस्य यरो द्वे वा भवतः।<br>अर्क्कः, अर्कः। ब्रह्म्मा, ब्रह्मा। | अचः ४७<br>द्वे ५२ |
| अचः ४६<br>द्वे ४६<br>वा४५ | ४७. अनचि च<br>अचः (परस्य) यरो द्वे वा भवतः अचि परे तु यरो द्वे न भवतः।<br>दद्ध्यत्र, दध्यत्र। मद्ध्वत्र, मध्वत्र। | |

| यरः ४५<br>द्वे ४६ | ४८. नादिन्याक्रोशे पुत्रस्य<br>आदिनि (आदिन् इतिशब्दे परे) पुत्रस्य यरो द्वे न भवतः आक्रोशे गम्यमाने।<br>'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यपि ग्रहणम्' इति परिभाषया 'आदिनी' इतिशब्दे परेऽपि द्वित्वनिषेधः।<br>पुत्रादिनी त्वमसि पापे।<br>आक्रोशे इति किम्? पुत्रादिनी सर्पिणी।<br>(वा०) यणो मयो द्वे वाच्ये।<br>केचिदत्र 'यणः' इति पञ्चमी 'मयः' इति षष्ठीति व्याचक्षते। तेषाम् उल्क्का, वाल्म्मीक इत्युदाहरणम्।<br>अपरे तु 'यणः' इति षष्ठी 'मयः' इति पञ्चमी, तेषां दध्य्यत्र, मध्व्वत्र इत्युदाहरणम्।<br>(वा०) तत्परे चेति वक्तव्यम्।<br>पुत्रादिन्इतिशब्दे परेऽपि पुत्रशब्दस्य यरो न द्वे भवतः।<br>पुत्रपुत्रादिनी त्वमसि पापे।<br>(वा०) वा हतजग्धपर इति वक्तव्यम्।<br>पुत्त्रहती, पुत्रहती। पुत्रजग्धी। 'अस्वाङ्गपूर्वपदाद् वा' इति वा ङीष्।<br>(वा०) चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्।<br>वत्सः - वथ्सः। क्षीरम् - ख्षीरम्। अप्सराः - अफ्सराः। | न ५२ |
|---|---|---|
| न ४८<br>द्वे ४६ | ४९. शरोऽचि<br>अचि (परतः) शरो द्वे न भवतः।<br>कर्षति। वर्षति। चतुर्षु।<br>'अचो रहाभ्यां द्वे' इति सूत्रेण प्राप्तं द्वित्वं निषिध्यते। | |
| न ४८<br>द्वे ४६ | ५०. त्रिप्रभृतिषु शाकटायनस्य<br>त्रिप्रभृतिषु वर्णेषु संयुक्तेषु द्वित्वं न भवति, शाकटायनाचार्यस्य मतेन।<br>इन्द्रः, इन्न्द्रः। राष्ट्रम्, राष्ष्ट्रम्। | |
| न ४८<br>द्वे ४६ | ५१. सर्वत्र शाकल्यस्य<br>शाकल्याचार्यस्य मतेन सर्वत्र द्वे न भवतः।<br>अर्कः। ब्रह्मा। अपह्नुते। | |
| न ४८<br>द्वे ४६ | ५२. दीर्घादाचार्याणाम्<br>दीर्घादुत्तरस्य यरो द्वे न भवतः आचार्याणां मतेन।<br>दात्रम्। पात्रम्। मूत्रम्। सूत्रम्। | |
| | ५३. झलां जश् झशि<br>झलां जश् भवति झशि।<br>लब्धा। दोग्धा। बोद्धा। | झलाम् ५६<br>जश् ५४ |

| | | |
|---|---|---|
| झलाम् ५३<br>जश् ५३ | **५४. अभ्यासे चर्च**<br>अभ्यासे (वर्तमानानाम्) झलां चर् भवति, चकाराद् जश् च।<br>तत्र झशां जश्, खयां चर्। तत्रापि प्रकृतिजशां जश्, प्रकृतिचरां चर्, आन्तरतम्यात्।<br>झशां जश् - बुभूषति।<br>खयां चर् - चिखनिषति।<br>जशां जश् - जिजनिषते।<br>चरां चर् - चिचीषति। | चर् ५६ |
| झलाम् ५३<br>चर् ५४ | **५५. खरि च**<br>खरि झलां चरः भवन्ति।<br>भेत्ता। युयुत्सते। | |
| झलाम् ५३<br>चर् ५४ | **५६. वावसाने**<br>अवसाने झलां चरो वा भवन्ति।<br>वाक्, वाग्, त्वक्, त्वग्। | वा अवसाने ५७ |
| वा ५६<br>अवसाने५६ | **५७. अणोऽप्रगृह्यस्यानुनासिकः**<br>अवसाने अप्रगृह्यस्याणोऽनुनासिको वा भवति।<br>दधिँ, दधि। मधुँ, मधु। कुमारीँ, कुमारी।<br>अप्रगृह्यस्य किम्? अग्नी। वायू। | |
| | **५८. अनुस्वारस्य ययि परसवर्णः**<br>अनुस्वारस्य ययि परतः परसवर्णो भवति।<br>शङ्किता। उञ्छिता। कुण्डिता। नन्दिता। कम्पिता।<br>उत्तरसूत्रेण पदान्तस्य अनुस्वारस्य विकल्पेन परसवर्णविधानाद् अनेन अपदान्तस्य अनुस्वारस्य परसवर्णो भवति। | अनुस्वारस्य ययि ५९<br>परः६०<br>सवर्णः ६२ |
| अनुस्वारस्य ५८<br>ययि ५८<br>परसवर्णः ५८ | **५९. वा पदान्तस्य**<br>पदान्तस्यानुस्वारस्य ययि परसवर्णो वा भवति।<br>तङ्कथञ्चित्रपक्षण्डयमान्नभः - स्थम्पुरुषोऽवधीत्, तं कथं चित्रपक्षं डयमानं नभःस्थं पुरुषोऽवधीत्। | |
| परसवर्णः ५८ | **६०. तोर्लि**<br>तवर्गस्य लकारे परतः परसवर्णो भवति।<br>अग्निचिल्लुनाति।<br>भवाल्लुँनाति, आन्तरतम्यान्नस्य अनुनासिको लकारः। | |
| सवर्णः ५८ | **६१. उदः स्थास्तम्भोः पूर्वस्य**<br>उदः (परयोः) स्था-स्तम्भोः पूर्वसवर्णो भवति। 'आदेः परस्य' इति सूत्रेण अयं पूर्वसवर्णः स्था-स्तम्भोः सकारस्य भवति।<br>उत्थाता। उत्तम्भिता।<br>अत्राघोषस्य, महाप्राणस्य सस्य तादृश एव पूर्वसवर्णः थकारः, तस्य 'झरो झरि सवर्णे इति सूत्रेण पाक्षिको लोपः। | पूर्वस्य ६२ |

| | | |
|---|---|---|
| पूर्वस्य ६१<br>सवर्णः ५८ | ६२. झयो होऽन्यतरस्याम्<br>झयः (परस्य) हकारस्य पूर्वसवर्णोऽन्यतरस्यां भवति।<br>वाग्घसति, वाग्हसति।<br>अत्र घोषस्य, महाप्राणस्य हस्य तादृशो वर्गचतुर्थ एव पूर्वसवर्णः। | झयः ६३<br>अन्यतरस्याम् ६५ |
| झयः ६२<br>अन्यतरस्याम् ६२ | ६३. शश्छोऽटि<br>झयः परस्य शकारस्य छकारो भवति अटि परतः।<br>वाक्छेते, वाक्शेते।<br>(वा०) छत्वममीति वक्तव्यम्।<br>तच्छ्लोकेन। | |
| अन्यतरस्याम् ६२ | ६४. हलो यमां यमि लोपः<br>हलः (परेषाम्) यमां यमि परतः अन्यतरस्यां लोपो भवति।<br>शय्य्या, शय्या ।<br>आदित्यो देवता अस्य इति आदित्यं हविः, आदित्य्यं हविः।<br>'दित्यदित्यादित्य' इति सूत्रेण ण्य प्रत्ययः। | हलः लोपः ६५ |
| हलः ६४<br>लोपः ६४<br>अन्यतरस्याम् ६२ | ६५. झरो झरि सवर्णे<br>हलः (परस्य) झरो लोपोऽन्यतरस्यां भवति सवर्णे झरि परतः।<br>प्रत्तम्, प्रत्त्तम्, प्रत्त्त्तम्।<br>'प्र दा त' इत्यवस्थायाम् 'अच उपसर्गात्तः' इत्यनेन दाघटकाकारस्य तकारे कृते, चर्त्वे च त्रयः तकाराः, 'अनचि च' इत्यनेन द्वित्वे च कृते चतुर्थोऽपि तकार आगतः। तेषु मध्यमस्य मध्यमयोर्वा लोपो भवत्यनेन। | |
| | ६६. उदात्तादनुदात्तस्य स्वरितः<br>उदात्तात्परस्यानुदात्तस्य स्वरितो भवति।<br>गार्ग्यः। वात्स्यः। पचति। पठति।<br>'गार्ग्यः' 'वात्स्यः' इत्यत्र ञित्वादाद्युदात्तत्वम्, शेषनिघातः, तस्य स्वरितत्वम्।<br>पचति, पठति इत्यत्र शप्तिपौ अनुदात्तौ, पकारस्याकारः धातुस्वरेणोदात्तः। तस्मात्परस्य अनुदात्तस्य शपोऽकारस्य स्वरितत्वम्। | अनुदात्तस्य ६७ |

| | | |
|---|---|---|
| अनुदात्तस्य ६६ | ६७. नोदात्तस्वरितोदयमगार्ग्य-काश्यप-गालवानाम्<br>उदात्तोदयः, स्वरितोदयश्च अनुदात्तः स्वरितो न भवति, न तु गार्ग्य-काश्यपगालवानां मतेन।<br>सूत्रे उदयशब्दः परवाचकः प्रयुक्तः मङ्गलार्थम्।<br>अनेकाचार्यसङ्कीर्तनं पूजार्थम्।<br>उदात्तोदयः - गार्ग्यस्तत्र। 'तत्र' इतिशब्द आद्युदात्त इति तत्परः गार्ग्यशब्दस्य अनुदात्तः यकाराकारः स्वरितो न भवति।<br>स्वरितोदयः - गार्ग्यः क्व। क्वशब्दः स्वरित इति तत्परः गार्ग्यशब्दस्य अनुदात्तः यकाराकारः स्वरितो न भवति।<br>अगार्ग्यकाश्यपगालवानामिति किम्? गार्ग्यस्तत्र। गार्ग्यः क्व।<br>तेषां मतेन हि स्वरितो भवत्येव। | |
| | ६८. अ अ<br>सूत्रे एकः अकारः विवृतः, अपरश्च संवृतः। अतः सूत्रस्यार्थो भवति- विवृतः अकारः संवृतः अकारो भवति।<br>वृक्षः। प्लक्षः।<br>इह शास्त्रे कार्यार्थमकारो विवृतः प्रतिज्ञातः, तस्य तथाभूतस्यैव प्रयोगो मा भूदिति संवृतप्रत्यापत्तिरियं क्रियते।<br>(इष्टिः) दीर्घप्लुतयोश्चानेन विवृतेनाकारेण ग्रहणं नेष्यते।<br>तेन तयोः संवृतो न भवति। | |

श्रीमत्साम्बशिवस्य तथा गुरूणां च सत्प्रसादेन ।
सहयोगात्सुधियामपि सम्पूर्णार्थप्रकाशिका वृत्तिः ।।१।।
वृत्तिमिमां सद्गुरुतो नियतमधीत्य श्रमेण सच्छिष्यः।
मुनित्रयोदितमर्थं लघुना कालेन साधु विज्ञास्यति ।।२।।
हस्तामलकमिवार्थं सूत्रादीनामितः सुविज्ञाय ।
विज्ञाः पाणिनिशास्त्रे सुखं लभन्तामदूष्यवैदुष्यम् ।।३।।

।। इत्यष्टाध्यायीसूत्रार्थप्रकाशिकायामष्टमाध्यायस्य चतुर्थः पादः।।

।। समाप्तश्चायमष्टमाध्यायः।।

।। सिद्धिरस्तु।।

।। श्रीः।।

## ।। अथ गणपाठः।।

### ।। अथ प्रथमोऽध्यायः।।

१.१.२७ **सर्वादीनि सर्वनामानि।**

सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम्। इति सर्वादिः।।

१.१.३७ **स्वरादिनिपातमव्ययम्।**

स्वर् अन्तर् प्रातर्। अन्तोदात्ताः पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् (अन्तिकात्) पृथक्। आद्युदात्ताः ह्यस् श्वस् दिवा रात्रौ सायम् चिरम् मानक् ईषत् (शश्वत्) जोषम् तूष्णीम् बहिस् (अधस्) अवस् समया निकषा स्वयम् मृषा नक्तम् नञ् हेतौ (हे है ) इद्धा अद्धा सामि। अन्तदात्ताः। वत्(५.१.१५) ब्राह्मणवत् क्षत्रियवत् सना सनत् सनात् उपधा तिरस्। आद्युदात्ताः। अन्तरा। अन्तोदात्तः। अन्तरेण (मक्) ज्योक्(योक् नक्) कम् शम्सना सहसा (श्रद्धा अलम् स्वधा वषट् विना नाना स्वस्ति अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मुधा दिष्ट्या वृथा मिथ्या। क्त्वातोसुन्कसुनः। कृन्मकारसंध्यक्षरान्तोऽव्ययीभावश्च। पुरा मिथो मिथस् प्रायस् मुहुस् प्रवाहुकम् प्रवाहिका आर्यहलम् अभीक्ष्णम् सायम् सार्थम् (यत्रम् समम्) नमम्) नमस् हिरुक् तसिलादयस्तद्धित। एधाच्पर्यन्ताः(५.३.७-४६) शस्तसी कृत्वसुच् सुच् आस्थालौ। च्व्यर्थाश्च। (अथ) अम् आम् प्रताम्प्रतान् प्रशान्। आकृतिगणोऽयम्। तेनान्येऽपि। तथाहि 'माङ्श्रम् कामम्(प्रकामम्) भूयस् परम् साक्षात् साचि (सावि) सत्यम् मंक्षु संवत् अवश्यम् सपदि प्रादुस् आविस् अनिशम् नित्यम् नित्यदा सदा अजस्रम् सन्ततम् उषा ओम् भूर् भुवर् झटिति तरसा सुष्ठु कु अञ्जसा अ मिथु (अमिथु) विथक् भाजक् अन्वक् चिराय चिरम् चिररात्राय चिरस्य चिरेण

चिरात् अस्तम् आनुषक् अनुषक् अनुषट् अम्रस् (अभ्यस्) अम्नर् (अम्भर) स्थाने वरम् दुष्ठु बलात् शु अर्वाक् शुदि वदि इत्यादि। तसिलादयः प्राक्पाशपः(६.३.३६) शस्प्रभृतयः प्राक्समासान्तेभ्यः(५.४.४३-६८) मान्तः कृत्वोर्थः। तसिवती। नानाञाविति।। इति स्वरादिः।।

१.४.५७ चादयोऽसत्त्वे।

च वा ह अह एव एवम् नूनम् शश्वत् युगपत् भूयस् सूपत् कूपत् कुवित् नेत् चेत् चण् कच्चित् यत्र तत्र नह हन्त माकिम माकीम् माकिर् नकिम् नकीम् नकिर् आकीम् माङ् नञ् तावत् त्वा त्वै द्वै न्वै रै (रे) श्रौषट् स्वाहा स्वधा ओम् तथा तथाहि खलु किल अथ सुष्टु स्म अ इ उ ऋ लृ ए ऐ ओ औ आदह उञ् उकञ् वेलायाम् मात्रायाम् यथा यत् तत् किम् पुरा वधा (वध्वा) धिक् हाहा हेहै (हहे) पाट् प्याट् आहो उताहो हो अहो नो (नौ) अथे ननु मन्ये मिथ्या असि ब्रूहि तु नु इति इव वत् वात्वन वत (सम् वशम् शिकम् दिकम्) सनुकं छंवट् (छंबट्) शङ्के शुकम् खम् सनात् सनुतर् नहिकम् सत्यम् ऋतम् अद्धा इद्धा नोचेत् नचेत् नहि जातु कथम् कुतःकुत्र अव अनु हा हे (है) अहोस्वित् शम् कम् खम् दिष्टच पशु नट् सह (आनुषट्) आनुषक् अङ्ग फट् ताजक् भाजक् अये अरे वाट्(चाटु) कुम् खुम् घुम् अम् ईम् सीम् सिम् सिम् सि वै। उपसर्ग-विभक्ति-स्वरप्रतिरूपकाश्च निपाताः। आकृतिगणोऽयम्। इति चादयः।।

१.४.५८ प्रादयः।

प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप। इति प्रादयः।।

१.४.६१ ऊर्यादिच्विडाचश्च।

ऊरी उररी तन्थी ताली आताली वेताली धूली धूसी शकला संशकला ध्वंसकला भ्रंसकला गुलुगुधा सजूस् फल फली विक्ली आक्ली आलोष्ठी केवाली केवासी सेवासी पर्याली शेवाली वर्षाली अत्यूमशा वश्मशा मस्मसा मसमसा औषट् श्रौषट् वौषट् वषट् स्वाहा स्वधा बन्धा प्रादुस् श्रत् अविस्। इत्यूर्यादयः।।

१.४.७४ साक्षत्प्रभृतीनि च।

साक्षात् मिथ्या चिन्ता भद्रा रोचना आस्था अमा अद्धा प्राजर्या प्राजरुहा बीजर्या बीजरुहा संसर्या अर्थे लवणम् उष्णम् शीतम् उदकम् आर्द्रम् अग्नौ वशे विकसने प्रसहने प्रतपने प्रादुस् नमस्। आकृतिगणोऽयम्। इति। साक्षात्प्रभृतयः।

।। इति प्रथमोऽध्यायः।।

२.१.१७ **तिष्ठद्गुप्रभृतीनि च।**

तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम् संहृतबुसम् संह्रियमाराबुसम् समभूमि समपदाति सुषमम् विषमम् दुःषमम निःषमम् अपसमम आयतीसमम् (प्रौढम्) पापसमम् पुण्यसमम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिराम् (अपरदक्षिणाम्) संप्रति असंप्रति। इच्प्रत्ययः समासान्तः। इति तिष्ठद्गुप्रभृतयः।।

२.१.४० **सप्तमी शौण्डैः।**

शौण्ड धूर्त कितव व्याड प्रवीण संवीत अन्तर अधि पटु पण्डित कुशल चपल निपुण। इति शौण्डादयः।।

२.१.४८ **पात्रेसमितादयश्च।**

पात्रेसमिताः पात्रेबहुलाः उदुम्बरमशकः उदुम्बरकृमिः कूपकच्छपः अवटकच्छपः कूपमण्डूकः कुम्भमण्डूकः उदपानमण्डूकः नगरकाकः नगरवायसः मातरिपुरुषः पिण्डीशूरः पितरिशूरः गेहेशूरः गेहेनर्दी गेहेक्ष्वेडी गेहेविजिती गेहेव्याडः गेहेमेही गेहेदाही गेहेदृप्तः गेहेधृष्टः गर्भेतृप्तः आखनिकवकः गोष्ठेशूरः गोष्ठेविजिती गोष्ठेक्ष्वेडी गोष्ठेपटु गोष्ठेपण्डितः गोष्ठेप्रगल्भः कर्णेटिरिटिरा कर्णेचुरुचुरा। आकृतिगणोऽयम्। इति पात्रेसमितादयः।।

२.१.५६ **उपमितं व्याघ्रादिभिः सामान्याप्रयोगे।**

व्याघ्र सिंह ऋक्ष ऋषभ चन्दन वृक वृष वराह हस्तिन् तरु कुञ्जर रुरु पृषत् पुण्डरीक पलाश कितव। इति व्याघ्रादयः। आकृतिगणोऽयम्। तेन। मुखपद्मम् मुखकमलम् करकिसलयम् पार्थिवचन्द्रः इत्यादि।

२.१.५९ **श्रेण्यादयः कृतादिभिः।**

श्रेणि एक पूग मुकुन्द राशि निचय विषय निधन पर इन्द्र देव मुण्डभूत श्रमण वदान्य अध्यापक अभिरूपक ब्राह्मण क्षत्रिय (विशिष्ट) पटु पण्डित कुशल चपल निपुण कृपण।। इत्येते श्रेण्यादयः।। (२) कृत मित मत भूत उक्त (युक्त) समाज्ञात समाम्नात समाख्यात संभावित (संसेवित्)

अवधारित अवकल्पित निराकृत उपकृत उपाकृत (दृष्ट कलित दलित उदाहृत विश्रुत उदित)। आकृतिगणोऽयम्। इति कृतादयः।।

२.१.६० **शाकपार्थिवादीनामुपसंख्यानम्।**
शाकपार्थिव कुतुपसौश्रुत अजातौल्वलि। आकृतिगणोऽयम्। कृताकृत भुक्तविभुक्त पीतविपीत गतप्रत्यागत यातानुयात क्रयाक्रयिका पुटापुटिका फलाफलिका मानोन्मानिका। इति शाकपार्थिवादयः।।

२.१.७० **कुमारः श्रमणादिभिः।**
श्रमणा प्रव्रजिता कुलटा गर्भिणी तापसी दासी बन्धकी अध्यापक अभिरूपक पण्डित पटु मृदु कुशल चपल निपुण। इति श्रमणादयः।।

२.१.७२ **मयूरव्यंसकादयश्च।**
मयूरव्यंसक छात्रव्यंसक कम्बोजमुण्ड यवनमुण्ड। छन्दसि। हस्तेगृह्य (हस्तगृह्य) पादेगृह्य (पादगृह्य) लाङ्गूलेगृह्य (लाङ्गूलगृह्य) पुनर्दाय। एहीडादयोऽन्यपदार्थे। एहीडम् एहियवं च एहिवाणिजा क्रिया अपेहिवाणिजा प्रेहिवाणिजा एहिस्वागता अपेहिस्वागता एहिद्वितीया अपेहिद्वितीया प्रेहिद्वितीया एहिकटा अपेहिकटा प्रेहिकटा आहरकटा प्रेहिकर्दमा प्रोहकर्दमा विधमचूडा उद्धमचूडा (उद्धरचूडा) आहरचेला आहरवसना (आ हरसेना) आहरवनिता (आहरविनता) कृन्तविचक्षणा उद्धरोत्सृजा उद्धरावसृजा उद्धमविधमा उत्पचनिपचा उत्पतनिपता उच्चावचम् उच्चनीचम् आचोपचम् आचपराचम् (नखप्रचम्) निश्चप्रचम् अकिंचन स्नात्वाालक पीत्वास्थिरक भुक्त्वासुहित प्रोष्यपापीयान् उत्पत्यपाकला निपत्यरोहिणी निषण्णश्यामा अपेहिप्रघसा एहिविघसा इहपञ्चमी इहद्वितीया। जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति। जहिजोडः। जहिजोडम्। जहिस्तम्बम्। जहिस्तम्बः। (उज्जहिस्तम्बम्)। आख्यातमाख्यातेन क्रियासातत्ये। अश्नीतपिबता पचतमृज्जता खादतमोदता खादतवमता। खादताचमता। आहरनिवपा। आहरनिष्किरा। आवपनिष्किरा। उत्पचविपचा भिन्धिलवणा। कृन्धिविचक्षणा पचलवणा पचप्रकूटा। आकृतिगणोऽयम्। तेन। अकुतोभयः। कान्दिशीकः। कान्देशीकः। आहोपुरुषिका अहमहमिका यदृच्छा

एहिरेयाहिरा उन्मृजावमृजा द्रव्यान्तरम् अवश्यकार्यम्। इति मयूरव्यंसकादयः।।

२.२.९ याजकादिभिश्च।
याजक पूजक परिचारक परिवेषक परिषेचक स्नापक अध्यापक उत्साह उद्वर्तक होतृ भर्तृ रथगणक पत्तिगणक। इति याजकादयः।

२.२.३१ राजदन्तादिषु परम्।
राजदन्तः अग्रेवणम् लिप्तवासितम् नग्नमुषितम् सिक्तसंमृष्टम् मृष्टलुञ्चितम् अवक्लिन्नपक्वम् अर्पितोप्तम् उप्तगाढम् उलूखलमुसलम् तण्डुलकिण्वम् दृषदुपलम् आरड्वायनि। आरग्वायनबन्धकी। चित्ररथवाह्लीकम्। अवन्त्यश्मकम् शूद्रार्यम् स्नातकराजानौ विष्वक्सेनार्जुनौ अक्षिभ्रुवम् दारगवम् शब्दार्थौ धर्मार्थौ कामार्थौ अर्थशब्दौ अर्थधर्मौ अर्थकामौ वैकारिमतम् गाजवाजम्। गोजवाजम्। गोपालधानपूलासम। पूलासकारण्डम्। पूलासकक्कुरण्डम्। स्थूलासम्। स्थूलपूलासम्। उशीरबीजम्। (जिज्ञास्थि) सिञ्जास्थम्। सिञ्जाश्वत्थम्। चित्रस्वाती। भार्यापती दंपती जंपती जायापती पुत्रपती पुत्रपशू केशरश्मश्रू शिरोविजु। शिरोबीजम्। शिरोजानु सर्पिर्मधुनि मधुसर्पिषी (आद्यन्तौ) अन्तादी गृणवृद्धी वृद्धिगुणौ इति राजदन्तादयः।।

२.२.३७ वाहिताग्न्यादिषु।
आहिताग्नि जातपुत्र जातदन्त जातश्मश्रु तैलपीत घृतपीत (मद्यपीत) ऊढभार्य गतार्थ। आकृतिगणोऽयम्। तेन गड्डुकण्ठ अस्युद्यत (अरमुद्यत) दण्डपाणिप्रभृतयोऽपि। इत्याहिताग्न्यादयः।

२.२.३८ कडाराः कर्मधारये।
कडार गडुल खञ्ज खोड काण कुण्ठ खलति गौर वृद्ध भिक्षुक पिङ्ग पिङ्गुल (पिङ्गल) तड तनु (जठर) बधिर मठर कञ्ज बर्बर। इति कडारादयः।।

२.३.१७ नौकाकान्नशुकशृगालवर्जेषु।
नौ काक अन्न शुक शृगाल। इति नावादयः।।

२.३.१८ प्रकृत्यादिभ्य उपसंख्यानम्।

प्रकृति प्राय गोत्र सम विषम द्विद्रोण पञ्चक साहस्र। इति प्रकृत्यादयः।।

२.४.११ गवाश्वप्रभृतीनि च।
गवाश्वम् गवाविकम् गवैडकम् अजाविकम् अजैडकम् कुब्जवामनम् कुब्जकिरातम् पुत्रपौत्रम् श्वचण्डालम् स्त्रीकुमारम् दासीमाणवकम् शाटीपटीरम् शाटीप्रच्छदम् शाटीपट्टिकम् उष्ट्रखरम् उष्ट्रशशम् मूत्रशकृत् मूत्रपुरीषम् यकृन्मेदः मांसशोणितम् दर्भशरम् दर्भपूतीकम् अर्जुनशिरीषम् अर्जुनपुरुषम् तृणोपलम् (तृणोलपम्) दासीदासम् कुटीकुटम् भागवतीभागवतम्। इति गवाश्वप्रभृतीनि।।

२.४.१४ न दधिपयआदीनि।
दधिपयसी सर्पिर्मधुनी मधुसर्पिषी ब्रह्मप्रजापती शिववैश्रवणो स्कन्दविशाखौ परिव्राजककौशिकौ (परिव्राट् कौशिकौ) प्रवर्ग्योपसदौ शुक्लकृष्णौ इध्माबर्हिषी दीक्षातपसी (श्रद्धातपसी मेधातपसी) अध्ययनतपसी उलूखलमुसले आद्यवसाने श्रद्धामेधे ऋक्सामे वाङ्मनसे इति दधिपयआदीनि।।

२.४.३१ अर्धर्चाः पुंसि च।
अर्धर्च गोमय कषाय कार्षपण कुपत कुसप (कुणप) कपाट शङ्ख गूथ यूथ ध्वज कबन्ध पद्म गृह सरक कंस दिवस यूष अन्धकार दण्ड कमण्डलु मण्ड भूत द्वीप द्यूत चक्र धर्म कर्मन् मोदक शतमान यान नख नखर चरण पुच्छ दाडिम हिम रजत सक्तु पिधान सार पात्र घृत सैन्धव औषध आढक चषक द्रोण खलीन पात्रीव षष्टिक वारबाण (वारवारण) प्रोथ कपित्थ (शुष्क) शाल शील शुक्ल (शुल्क) शीधु कवच रेणु (ऋण) कपट शीकर मुसल सुवर्ण वर्ण पूर्व चमस क्षीर कर्ष, आकाश अष्टापद मङ्गल निधन निर्यास जृम्भ वृत्त पुस्त बुस्त क्ष्वेडित शृङ्ग निगड (खल) मूलक मधु मूल स्थूल शराव नाल वप्र विमान मुख प्रग्रीव शूल वज्र कटक कण्टक (कर्पट) शिखर कल्क (वल्कल) नटमस्तक (नाटमस्तक) वलय कुसुम तृण पङ्क कुण्डल किरीट (कुमुद) अर्बुद अङ्कुश तिमिर आश्रय भूषण इक्कस (इष्वास) मुकुल वसन्त तटाक (तडाग) पिटक विटङ्क विडङ्ग पिण्याक माष कोश फलक दिन दैवत

पिनाक समर स्थाणु अनीक उपवास शाक कर्पास (विशाल) चषाल (चखाल) खण्ड दर विटप (रण बल मक) मृणाल हस्त आर्द्र हल (सूत्र) ताण्डव गाण्डीव मण्डप पटह सौध योध पार्श्व शरीर फल (छल) पुर (पुरा) राष्ट्र अम्बर बिम्ब कुट्टिम मण्डल (कुक्कुट) कुडप ककुद खण्डल तोमर तोरण मञ्चक पञ्चक पुङ्ख मध्य (बाल) छाल वल्मीक वर्ष वस्त्र वसु देह उद्यान उद्योग स्नेह स्तेन (स्वन स्वर) संगम निष्क क्षेम शूक क्षत्रपवित्र (यौवन कलह) मालक (पालक) मूषिक (मण्डल वल्कल) कुज (कुञ्ज) विहार लोहित विषाण भवन अरण्य पुलिन दृढ आसन ऐरावत शूर्प तीर्थ लोमन (लोमश) तमाल लोह दण्डक शपथ प्रतिसर दारु धनुस् मान वर्चस्क कूर्च तण्डक मठ सहस्र ओदन प्रवाल शकट अपराह्ण नीड शकल तण्डुल ।इत्यर्धर्चादिः ।।

२.४.५९ **पैलादिभ्यश्च ।**
पैल शालङ्कि सात्यकि सात्यकामि राहवि रावणि औदञ्चि औदव्रजि औदमेघि औदव्यज्रि (आदमज्जि औदमृज्जि) दैवस्थानि पैङ्गलौदायनि राहक्षति भौलिङ्गि राणि औदन्यि औद्राहमानि औज्जिहानि औदशुद्धि तद्राजच्चाणः (तद्राज) आकृतिगणोऽयम् ।। इति पैलादिः ।।

२.४.६१ **न तौल्वलिभ्यः ।**
तौल्वलि धारणि पारणि रावणि दैलीपि दैवति वार्कलि नैवति (नैवकि) दैवमित्रि (दैवमति) दैवयज्ञि चाफट्टकि बैल्वकि वैकि (वैङ्कि) आनुहारति (आनुराहति) पौष्करसादि आनुरोहति आनुति प्रादोहनि नैमिश्रि प्राडाहति बान्धकि वैशीति आसिनासि आहिंसि आसुरी नैमिषि आसिबन्धकि पौष्पि कारेणुपालि वैकर्णि वैरकि वैहति ।इति तौल्वल्यादिः ।।

२.४.६३ **यस्कादिभ्यो गोत्रे ।**
यस्क लह्य द्रुह्य अयस्थूण (अयः स्थूण) तृणकर्ण सदामत्त कम्बलहार बहिर्योग पर्णाढक कर्णाढक पिण्डीजङ्घ वकसस्थ (वकसक्थ) विश्रि कुद्रि अजवस्ति मित्रयु रक्षोमुख जङ्घारथ उत्कास कटुक मथक (मन्थक) पुष्करट् (पुष्करसद्) विषपुट उपरिमेखल क्रोष्टुकमान (क्रोष्टुमान) क्रोष्टुपाद क्रोष्टुमाय शीर्षमाय खरप पदक वर्षुक भलन्दन भडिल भण्डिल भडित । ऐते यस्कादयः ।।

२.४.६७ **न गोपवनादिभ्यः।**
गोपवन शेयु (शिग्रु) बिन्दु भाजन अश्वावतान श्यामाक (श्योनाक ) श्यामक श्यापर्ण। बिदाद्यन्तर्गणोऽयम्। (४.१.१०४) इति गोपवनादिः।।

२.४.६८ **तिककितवादिभ्यो द्वन्द्वे।**
तिककितवाः वङ्खरभण्डीरथाः उपकलमकाः पफकनरकाः पफकनरकाः बकनखगुदपरिणद्धाः उब्जककुभाः लङ्कशान्तमुखाः उत्तरशलङ्कटाः कृष्णाजिनकृष्णसुन्दराः भ्रष्टककपिष्ठलाः अग्निवेशदशेरुकाः। एते तिककितवादयः।।

२.४.६९ **उपाकादिभ्योऽन्यतरस्यामद्वन्द्वे।**
उपक लमक भ्राष्ट्रक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडारक आडारक गडुक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्टक सुपिष्ट (सुपिष्ठ) मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल कठेरणि कुषीतक कशकृत्स्न (काशकृत्स्न) निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक पर्णक जटिरक बधिरक जन्तुक अनुलोप अनुपद प्रतिलोम अपजग्ध प्रतान अनभिहित कमक वराटक लेखाभ्र कमन्दक पिञ्जलक वर्णक मसूरकर्ण मदाघ कवन्तक कमन्तक कदामत्त दामकण्ठ। एते उपकादयः।

।। इति द्वितीयोऽध्यायः।।

## ।। अथ तृतीयोऽध्यायः ।।

३.१.१२ **भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ।**
भृश शीघ्र चपल मन्द पण्डित उत्सुक सुमनस् दुर्मनस् अभिमनस् उन्मनस्, रहस् रोहत् रेहत् संश्वत् तृपत् शश्वत् भ्रमत् वेहत् शुचिस् शुचिवर्चस् अण्डर वर्चस् ओजस् सुरजस् अरजस्। एते भृशादयः।।

३.१.१३ **लोहितादिडाज्भ्यः क्यष् ।**
लोहित चरित नील फेन मद्र हरित दास मन्द। लोहितादिराकृतिगणः।

३.१.१८ **सुखादिभ्यः कर्तृवेदनायाम् ।**
सुख दुःख तृप्त कृच्छ्र अस्त्र आस्त्र अलीक प्रतीप करुण कृपण सोढ। इत्येतानि सुखादीनि।

३.१.२७ **कण्ड्वादिभ्यो यक् ।**
कण्डूञ् मन्तु हृणीङ् वल्गु असु (मनस्) महीङ् लोट् लेट् इरस् इरज् इरञ् उवस् उषस् वेट् मेधा कुषुभ (नमस्) मगध तन्तस् पम्पस् (पपस्) सुख दुःख (भिक्ष चरण चरम अवर) सपर अरर (अरर्) भिषज् भिष्णुज् (अपर आर) इषुध वरण चुरण तुरण भुरण गद्गद एला केला खेला (वेला शेला) लिट् लाट (लेखा लेख) रेखा द्रवस् तिरस् अगद उरस् तरण (तरिण) पयस् संभूयस् सम्बर। आकृतिगणोऽयम्। इति कण्ड्वादिः।।

३.१.१३४ **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।**
नन्दिर्वाशमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम्। नन्दनः वाशनः मदनः दूषणः साधनः वर्धनः शोभनः रोचनः। सहितपिदमः संज्ञायाम्। सहनः तपनः दमनः जल्पनः रमणः दर्पणः संक्रन्दनः संकर्षणः संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलदमनः (शत्रुदमनः) इति नन्द्यादिः।

ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्दी। रक्षश्रवपशां नौ। निरक्षी निश्रावी निवापी निशायी। याचृव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम्। आयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी। अचामचित्तकर्तृकाणम्। अकारी अहारी अविनायी (विशायी

विषायी) विशयी विषयी देशे। विशयी विषयी देशः। अभिभावी भूते। अपराधी उपरोधी परिभवी परिभावी। इति ग्रह्यादिः।।

पच वच वप वद चल पत नदट् भष्ट् प्लवट् चरट् गरट् तरट् चोरट् गाहट् सरट् देवट् (दोषट्) जर (रज) मर (मद) क्षम (क्षप) सेव मेष कोप (कोष) मेध नर्त व्रण दर्श सर्प (दम्भ दर्प) जारभर श्वपच। पचादिराकृतिगणः।।

३.२.५　**कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम।**
मूलविभुज नखमुच काकगुह कुमुद महीध्र कुध्र गिध्र। आकृतिगणोऽयम्। इति मूलविभुजादयः।।

३.२.१५　**पार्श्वादिषूपसंख्यानम्।**
पर्श्व उदर पृष्ठ उत्तान अवमूर्धन। इति पार्श्वादिः।।

३.३.३　**भविष्यति गम्यादयः।**
गमी आगमी भावी प्रस्थायी प्रतिरोधी प्रतियोधी प्रतिबोधी प्रतियायी प्रतियोगी। एते गम्यादयः।।

३.३.१०४　**षिद्भिदादिभ्योऽङ्।**
भिदा विदारणे। छिदा द्वैधीकरणे। विदा। क्षिपा। गुहा गिर्योषध्योः। श्रद्धा मेधा गोधा। आरा शस्त्र्याम्। हारा। कारा बन्धने। क्षिया। तारा ज्योतिषि। धारा प्रपातने। रेखा चूडा पीडा वपा वसा मृजा। क्रपेः संप्रसारणं च कृपा। इति भिदादिः।।

३.३.१०८　**संपदादिभ्यः क्विप्।**
संपद् विपद् आपद् प्रतिपद् परिषद्। एते संपदादयः।।

३.४.७४　**भीमादयोऽपादाने।**
भीम भीष्म भयानक वहचर (वहचरु) प्रस्कन्दन प्रतपन (प्रपतन) समुद्र स्रुव स्रुक् वृष्टि (दृष्टि) रक्षः संकसुक (शङ्कुसुक) मूर्ख खलति। आकृतिगणोऽयम्। इति भीमादिः।।

।। इति तृतीयोऽध्यायः।।

।। अथ चतुर्थोऽध्यायः।।

४.१.४ **अजाद्यतष्टाप्।**
अजा एडका कोकिला चटका अश्वा मूषिका बाला होडा पाका वत्सा मन्दा विलाता पूर्वापिहाणा (पूर्वापहाणा) अपरापहाण। संभस्त्राजिनशणपिण्डेभ्यः फलात्। सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्। शूद्रा चामहत्पूर्वा जातिः। क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा। मध्यमा पुंयोगेऽपि। मूलान्नञः। दंष्ट्रा। एतेऽजादयः।

४.१.१० **न षट्स्वस्रादिभ्यः।**
स्वसृ दुहितृ ननान्दृ यातृ मातृ तिसृ चतसृ। इति स्वस्रादिः।।

४.१.३५ **नित्यं सपत्न्यादिषु।**
समान एक वीर पिण्ड श्व (शिरी) भ्रातृ भद्र पुत्र। दासाच्छन्दसि। इति समानादिः।।

४.१.४१ **षिद्गौरादिभ्यश्च।**
गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य (पुट तूण) द्रुण हरिण कोकण (काकण) पटर उणक (आमल) आमलक कुबल बिम्ब बदर फर्करक (कर्करक) तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल षाण्डश आढक आनन्द आश्वत्थ सृपाट आखक (आपच्चिक) शष्कुल सूर्य (सूर्म) शूर्प सूप यूष (पूष) यूथ सूप मेथ वल्लक धातक सल्लक माल्लक मालत साल्वक वेतस वृक्ष (वृस) अतस (उभय) भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन् अनडुही अनड्वाही। एषणः करणे। देह देहल काकादन गवादन तेजन रजन लवण आद्गाहमानि आद्गाहमानि गौतम (गोतम) (पारक) अयस्थूण (अयःस्थूण) भौरिकि भौलिकि भौलिङ्गि यान मेध आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट शातन (पोतन) पातन पाठन (पानठ) आस्तरण अधिकरण अधिकार अग्रहायणी (आग्रहायणी) प्रत्यवरोहिणी (सेचन) सुमङ्गलात्संज्ञायाम्। अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड(षण्ड) उर्द गुर्द शम सूद औड (आर्द्र) हृद (ह्लद) पाण्ड(भाण्डल) भाण्ड (लोहाण्ड) कदर कन्दर कदल तरुण तलुन कल्माष बृहत् हमत् (सोम) सौधर्म। रोहिणी नक्षत्रे। रेवती नक्षत्रे। विकल निष्कल पुष्कल। कटाच्छ्रोणिवचने। पिप्पल्यादयश्च।

पिप्पली हरितकी (हरीतकी) कोशातकी शमी वरी शरी पृथिवी क्रोष्टु मातामह पितामह। इति गौरादिः।।

४.१.४५ **बह्वादिभ्यश्च।**
बहु पद्धति अञ्चति अङ्कति अहति शकटि (शकति)। शक्तिः शस्त्रे। शारि वारि राति राधि (शाधि) अहि कपि यष्ठि मुनि। इतः प्रण्यङ्गात्। कृदिकारादक्तिनः। सर्वतोऽक्तिन्नर्थादित्येके। चण्ड अराल कृपण कमल विकट विशाल विशङ्कट भरुज ध्वज चन्द्रभागानद्याम् (चन्द्रभागा नद्याम्) कल्याण उदार पुराण अहन् क्रोड नख खुर शिखा बाल शफ गुद। आकृतिगणोऽयम्। तेन भग गल राग इत्यादि। इति बह्वादयः।।

४.१.७३ **शार्ङ्गरवाद्यञो ङीन्।**
शार्ङ्गरव कापुटव गौग्गुलव ब्राह्मण बैद गौतम कामण्डलेय ब्राह्मणकृतेय (आनिचेय) आनिधेय आशोकेय वात्स्यायन मौञ्जायन कक्रैस काप्य (काव्य) शैब्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड। भोगवद्नौरिमतोः संज्ञायां घादिषु (६.३.४३) नित्यं ह्रस्वार्थम्। नृनरयोर्वृद्धिश्च। इति शार्ङ्गरवादिः।।

४.१.८० **क्रौड्यादिभ्यश्च।**
क्रौडि लाडि व्याडि आपिशलि आपक्षिति चौपयत चैपयत (वैटयत) सैकयत बैल्वयत सौधातकि सूत युवत्याम्। भोज क्षत्रिये। यौतकि कौटि भौरिकि भौलिकि (शाल्मलि) शालास्थलि कापिष्ठलि गौकक्ष्य। इति क्रौड्यादिः।।

४.१.८४ **अश्वपत्यादिभ्यश्च।**
अश्वपति (ज्ञानपति) शतपति धनपति गणपति (स्थानपति यज्ञपति) राष्ट्रपति कुलपति गृहपति (पशुपति) धान्यपति धन्वपति (बन्धुपति धर्मपति) सभापति प्राणपति क्षेत्रपति। इत्यश्वपत्यादिः।।

४.१.८६ **उत्सादिभ्योऽञ्।**
उत्स उदपान विकर विनद महानद महानस महाप्राण तरुण तलुन। वष्कयासे। पृथिवी (धेनु) पङ्क्ति पृषदंश भल्लकीय रथंतर मध्यंदिन बृहत् महत् सत्त्वत् कुरु पञ्चाल इन्द्रावसान उष्णिह् ककुभ् सुवर्ण देव ग्रीष्मादच्छन्दसि। इत्युत्सादिः।।

